ननु गृहेवसतः पुरुषस्यरागादयः संभवंत्येव नतुवनेष्विति तत्राह । यइति । यः षड्वैरिणः मनःषष्ठानींद्रियाणि विजिगीषमाणः ( जेतुकामः ) सपूर्वंगृहेषुस्थित्वातेषामत्यंतं निरोधम कुर्वन्नूजेतुंयतेत । क्षीणेष्वरिषुकामंगृहेभ्यन्यत्रवा वि[illegible]रेत् । यतोलोकेऊर्जितारीन्दुर्गाश्रितएवास्येतिजयति । पश्चाद्दुर्गेवान्यत्रवावर्तते । युध्येतेतिपाठेप्रहरेदित्यर्थः १८ इदंचगृह-(-रूप-) दुर्गाश्रयणंप्राकृतानांत्वंतुअब्जनाभस्यहरेरंघ्रिसरोजकोशएवदुर्गंतदाश्रितोसिएव । नि[illegible]तषट्सपत्नश्चतथापिपुरुषेणेश्वरेणातिदिष्टान् दत्तान् भोगान् तावत् भुंक्ष्व पश्चाद्विमुक्तसंगःस न्प्रकृतिंस्वरूपं भजस्व आत्मनिष्ठोभवेत्यर्थः १९ ( इत्युक्तः ) आत्मनस्ततोलघुतयाअल्पतया त[illegible] उवाह ) अंगीचकार । यद्वा आत्मनो यदनुशासनंतदलघुतया गोरवेणबाढंतथाकरिष्यामीति अवनतकंधरः सन् ( बहुमानयुक्तंयथातथा ) जग्राह २० मनुनासंतुष्टेनउपकल्पिता ( [illegible] ) पूजायस्यसः । प्रियव्रतस्ययोगभ्रंशात् नारदस्यच शिष्यनाशात् कुटिलमीक्षणं संभवतितत्तुनास्तीत्याह । अविषमंयथाभवतियोरभिसमीक्षमाणयोः सतोः आत्मनः सम्य[illegible]नं अवाङ्मनसं वाङ्मनसयोरविषयंक्षयं निवासं । पा ठांतरे अवाङ्वाचामगोचरं कथंचिन्मनसः क्षयंविषयं अतः अव्यवहृतं व्यवहारशून्यं ब्रह्मनिवृत्तंप्रवर्तयन् व्यवहाराद्विषण्णः स[illegible] व्यवहारातीतंस्वरूपंचिंतयन्नंतर्हितइत्यर्थः २१ पुत्रं राज्येऽभिषिच्यवनंयास्यामीतिएवंयोमनोरथः सः परेणब्रह्मणैवप्रतिसंधितः संपादितोयस्यसः । नार[illegible]स्यानुमतेनराज्ये स्थापयि[illegible]अतिविषमो दुस्तरोयोविषयविषजलाशयो विष यलक्षणस्य विषस्यहृदइवगृहं तस्य अशादिरूपप्रवृत्तिवासनाभोगेच्छावातस्याउपरतोभूत् २२ यस्यपृष्ठं[illegible]हे कथमरमतेतितत्रोक्तमुत्तरमुपसंहरतिइतिहवावइत्यमेवहिअधिनिवेशितःप्रापितः कर्माधिकारो यस्यसोखिलस्यजगतोबंधध्वंसनः परोनुभावः प्रभावोयस्य ( यद्विषयंज्ञानंवा ) तस्यचरणांघ्रियुगलं तस्यानवरतं अजस्रंध्यानं तदनुभावेन ( तत्सामर्थ्येन ) परिरंधितकषा योदग्धरागादिमलआशयो ( अंतःकरणं ) यस्यअतोऽवदातः शुद्धोपि । महतांब्रह्मादीनामाज्ञापालनेन मानवर्धनो ( अनुशशासपालयामास ) २३

यःषट्सपत्नान्विजिगीषमाणोगृहेषुनिर्विश्ययतेतपूर्वम् ॥ अत्येतिदुर्गाश्रितऊर्जितारीन्क्षीणेषुकामंविचरेद्विपश्चित् १८ त्वंत्वब्जनाभांघ्रिसरोजकोशदुर्गा श्रितोनिर्जितषट्सपत्नः ॥ भुंक्ष्वेहभोगान्पुरुषातिदिष्टान्विमुक्तसंगःप्रकृतिंभजस्व १९ ॥ ॥ श्रीशुकउवाच ॥ ॥ इति समभिहितोमहाभागवतोभगवत स्त्रिभुवनगुरोरनुशासनमात्मनोलघुतयावनतशिरोधरोबाढमितिसबहुमानमुवाह २० [illegible]गवानपिमनुनायथावदुपकल्पित[illegible]पचितिः प्रियव्रतनारदयोरवि षममभिसमीक्षमाणयोरात्मसमवस्थानमवाङ्मनसंक्षयमव्यवहृतंप्रवर्तयन्न[illegible]पिपरेणैवंप्रतिसंधितमनोरथः [illegible]सुरर्षिवरानुमतेनात्मजमखिलध रामंडलस्थितिगुप्तयआस्थाप्यस्वयमतिविषमविषयविषजला[illegible] जगद्बंधध्वंसनपरानुभावस्यभगवतआदिपुरु[illegible]याधिनिवेशितकर्माधिकारोखिल [illegible]र्धनोमहतांमहीतलमनुशशास २३

१८ १९ ॥ ॥ श्रीशुकउवाच ॥ [illegible]

उ[illegible] ये ह्यप्रसिद्धौ । वावेवि[illegible]श्चये ( [illegible]ष्यतीति शंकमानः [illegible] शीलादिभिः उदारान् महतः ( तत्रशीलंस्वभावः वीर्यंप्रभावः ) । दशपुत्रान्जनयामास २४
तानाह । आग्नीध्रः इध्मजिह्वः यज्ञबाहुः [illegible] हिर[illegible] [illegible]चराद्रीमतः कविश्चेति अग्नीनांनामानियेषांते २५ ( ऊर्ध्वरेतसोब्रह्मचर्यव्रतधारिणः )अभ्र
भावात् बाल्यादारभ्य ( आत्मज्ञानेकृत[illegible]सा: ) २६ तस्मिन्नेवपारमहंस्याश्रमएव ( [illegible] ) श्रीमच्चरणारविंदयोरविरतस्मरणेनअविगलितो वृद्धिनीयः
परमोभक्तियोगस्तस्यानुभावेन ( सामर्थ्येन ) विशोधितांतःकरणेअधिगतः प्रतीयमानोयोभगवान्तस्मिन् ( सर्वेषामात्मभूतेतत्पदार्थेप्रत्यगात्मनिनिरुपाधिके ) आत्मनस्त्वंपदार्थ
स्यतादात्म्यंअविशेषणविशेषोदेहाद्युपाधिः तदपोहेन ( सम्यक् ) प्रापुः २७ ( अस्याद्वितीयाध्यस्तिपत्नीसापिप्रयोजकपुत्रप्रसूरित्याह अन्यस्यामिति ) २८ उपशमायनेषुउपशमा
श्रयेषु ( आत्मनिष्ठेषु ) सत्स्वित्यर्थः । दशकोटिभिरेकमर्बुदंएतादृशानिवर्षाणामेकादशार्बुदानिजगतींबुभुजइत्यन्वयः । राज्ञोधर्मपालनविषयभोगप्रभावैर्भाव्यंतत्रानायासेनैवधर्मप.ल
नमाह । अव्याहताः ( अनिवारिताः ) अखिलाः पुरुषकाराःपौरुषाणि यस्मात्तेनसारेणबलेनसंभृतौपूर्णौदोर्दंडौदीर्घौबाहूतयोर्युगलंतेनापीडितआकृष्टोमौर्वीगुणः ( ज्यामंज्ञकगुणः )
तस्यस्तनितंटंकारःतेनैवयुद्धंविनाविरमितानिरस्ताधर्मप्रतिपक्षायेन । विषयभोगातिशयमाह । बर्हिष्मत्याः स्वभार्यायाः अनुदिनमेधमाने-(-वृद्धिंगच्छद्भिः ) प्रमोदादिभिः पराभू
यमानविवेकइव ( विवेकरहितइव ) अतएवविषयासक्तयाआत्मानमनवबुध्यमानइव ( स्तुतोमहामनाः महाबुद्धिः ) बुभुजे । तत्रप्रमोदः पतिदृष्ट्वाहर्षः ततः प्रसारणंअभ्युत्थानादिलो
ला । ततोयौषिण्यंयोषित्स्वभावकृतशृंगारानुभावप्रकाशनंततोव्रीडयाप्रमुषिताः संकोचिताहासावलोकाः [illegible]ारुचिरक्ष्वेल्यादयः सुंदरपरिहासवाक्यादीनितैः । २९

अथचदुहितरंप्रजापतेर्विश्वकर्मणउपयेमेबर्हिष्मतींनामतस्यामुहवाव आत्मजानात्मसमानशीलगुणकर्मरूपवीर्योदारान्दशभावयांबभूवकन्यांचयवीयसीमूर्जस्वतींनाम२४ आग्नीध्रेध्मजिह्वयज्ञबाहुमहावीरहिरण्यरेतोघृतपृष्ठसवनमेधातिथिवीतिहोत्रकवयइतिसर्वएवाग्निनामानः २५ एतेषांकविर्महावीरःसवनइतित्रयआसन्नूर्ध्वरेतसस्तआत्मविद्यायामर्भभावादारभ्यकृतपरिचयाःपारमहंस्यमेवाश्रममभजन् २६ तस्मिन्नुहवाउपशमशीलाःपरमर्षयःसकलजीवनिकायावासस्यभगवतोवासुदेवस्यभीतानांशरणभूतस्यश्रीमच्चरणारविंदाविरतस्मरणाविगलितपरमभक्तियोगानुभावेनपरिभावितांतर्हृदयाधिगतेभगवतिसर्वेषांभूतानामात्मभूतेप्रत्यगात्मन्येवात्मनस्तादात्म्यमविशेषेणसमीयुः २७ अन्यस्यामपिजायायांत्रयःपुत्राआसन्नुत्तमस्तामसोरैवतइतिमन्वंतराधिपतयः ॥ २८ एवमुपशमायनेषुस्वतनयेष्वथजगतीपतिर्जगतीमर्बुदान्येकादशपरिवत्सराणामव्याहताखिलपुरुषकारसारसंभृतदोर्दंडयुगलापीडितमौर्वीगुणस्तनितविरमितधर्मप्रतिपक्षोबर्हिष्मत्याश्चानुदिनमेधमानप्रमोदप्रसरणयौषिण्यव्रीडाप्रमुषितहासावलोकरुचिरक्ष्वेल्यादिभिःपराभूयमानविवेकइवानवबुध्यमानइवमहामनाबुभुजे २९

अथविश्वकर्मणःप्रजापतेः कन्यांबर्हिष्मतींउपयेमे तस्यांआग्नीध्रम् १ इध्मजिह्वं २ यज्ञबाहुम् ४ महावीरं ४ हिरण्यरेतसम् ५ घृतपृष्ठम् ६ सवनम् ७ मेधातिथिं ८ वीतिहोत्रं ९ कविम् १० इतिदशपुत्रान् ऊर्जस्वतीं कन्यांचजनयामास २४ २५ तेषांमध्येकविः १ महावीरः २ सवनः ३ इतित्रयः ऊर्ध्वरेतसः संतः पारमहंस्य माश्रमंअभजन् २६ किंच तेब्रह्मप्रापुः २७ अन्यस्यांभार्यायांप्रियव्रतात् उत्तमः १ तामसः २ रैवतः ३ इतित्रयः पुत्राः तेमन्वंतराधिपतयः आसन् २८ एवंपुत्रानुत्पाद्य एकादशार्बुदवर्षाणिपृथ्वींबुभुजे २९

प्रभावातिशयमाहायावद्वसुधातलंलोकालोकपर्यंतमवभासयति मेरुंप्रदक्षिणीकुर्वन्नादित्यःतस्मिन्नर्धेनैवोपलक्षितंप्रदेशंप्रतपतिप्रकाशयति अर्धेनचावच्छादयतितमसाआवृणोति(यतो मेरुणाव्यवधीयते । तदवच्छादनमनभिनंदन्सूर्यरथमजवेनस्वेनरथेनतूर्णमनुलक्ष्य)द्वितीयः पतंगः सूर्यइवपर्यक्रामत् नचेदमसंभावितंयतोभगवदुपासनोपचितः अतिपुरुषः पुरुषानति क्रांतःप्रभावोयस्य ३० येवैउहअतिप्रसिद्धास्तस्यरथचक्राग्रकृताःपरिखातागर्ताःयतएवयैरेवकृताः ३१ तानाहजंब्विति । तेषांपरिमाणंशृण्वितिशेषः पूर्वस्य ( पूर्वस्यद्वीपस्य ) यद्विस्ता रमानंउत्तरउत्तरस्ततोद्विगुणेनविस्तारमानेनेत्येवंयथासंख्यंसिंधुभ्योबहिः समंततउपक्लृप्तारचिताः ३२ यथासिंधुभ्योबहिरेकैकशोद्वीपाएवंद्वीपानामपिबहिः सिंधवइत्याह । क्षारोदेति । दधिमंडईषन्मथितंदधि । एतेसप्तजलधयःसप्तद्वीपानांएकैकश्येनपरिखाइवाभ्यंतरेतः संवेष्टिताद्वीपाः तैः समानाविस्तारतः बहिर्बहिर्न्यंतः पृथगसंकीर्णतया ३३ (उशनसेकाव्याय) ३४ अहोआश्चर्यराज्ञः सामर्थ्यमिति परीक्षिदभिप्रायज्ञोभगवानबादरायणिराह । नैवमिति । (तस्यहरेरंघ्रिरजसानिषेवितेनेतिशेषः ) जिताः षड्गुणा मनःषष्ठानींद्रियाणिषडूर्मयोवा यैस्तेषामेवंविधपुरुषकारोमाहात्म्यविशेषश्चित्रंन । नासंभावितमित्यर्थः यतोविदूरविगतःअंत्यजोपियोयन्नामयस्योरुक्रमस्यनामसकृदप्युच्चारयेत्सोऽधुनातत्क्षणमेवबंधंसंसारं तत्त्यजमि तिपाठेपिअयमेवार्थः । पाठांतरेतत्त्वंचंडालत्वंजहातिशुद्धोभवतीत्यर्थः ३५ तस्यपराक्रममुपसंहरन्निर्वृतिक्रममाह । सएवमिति । देवर्षिचरणयोरनुशयनमुपसत्तिः तदनुपतितो (तत्प्रा प्तौसत्यामप्राप्तो) गुणविसर्गः राज्यादिप्रपंचः तत्संसर्गेण (तत्संबंधेनअनिर्वृतंसुखरहितं) आत्मानिमन्यमानोनिर्वेदोयस्य ३६

यावदवभासयतिसुरगिरिमनुपरिक्रमन्भगवानादित्योवसुधातलमर्धेनैवप्रतपत्यर्धेनावच्छादयतितदाहिभगवदुपासनोपचितातिपुरुषप्रभावस्तदनभिनंद न्समजवेनरथेनज्योतिर्मयेनरजनीमपिदिनंकरिष्यामीतिसप्तकृत्वस्तरणिमनुपर्यक्रामद्द्वितीयइवपतंगः ३० येवाउहतद्रथचरणनेमिकृतपरिखातास्तेसप्तसिं धवआसन्यतएवकृताःसप्तभुवोद्वीपाः ३१ जंबूप्लक्षशाल्मलिकुशक्रौंचशाकपुष्करसंज्ञास्तेषांपरिमाणंपूर्वस्मात्पूर्वस्मादुत्तरउत्तरोयथासंख्यंद्विगुणमानेन बहिःसमंततउपक्लृप्ताः ३२ क्षारोदेक्षुरसोदसुरोदघृतोदक्षीरोददधिमंडोदशुद्धोदाः सप्तजलधयःसप्तद्वीपपरिखाइवाभ्यंतरद्वीपसमानाएकैकश्येनयथानुपू र्व्यंसप्तस्वपिबहिर्द्वीपेषुपृथक्परितउपकल्पितास्तेषुजंब्वादिषुबर्हिष्मतीपतिरनुव्रतानात्मजानाग्नीध्रेध्मजिह्वयज्ञबाहुहिरण्यरेतोघृतपृष्ठमेधातिथिवीतिहो त्रसंज्ञान्यथासंख्येनैकैकस्मिन्नेकमेवाधिपतिंविदधे ३३ दुहितरंचोर्जस्वतींनामोशनसेप्रायच्छद्यस्यामासीद्देवयानीनामकाव्यसुता ३४ नैवंविधःपुरुष कारउरुक्रमस्यपुंसांतदंघ्रिरजसाजितषड्गुणानाम् ॥ चित्रंविदूरविगतःसकृदाददीतयन्नामधेयमधुनासजहातिबंधम् ३५ सएवमपरिमितबलपराक्रमएक दातुदेवर्षिचरणानुशयनानुपतितगुणविसर्गसंसर्गेणानिर्वृतमिवात्मानंमन्यमानआत्मनिर्वेदइदमाह ३६

किंच भगवान्सूर्यः मेरुं प्रदक्षिणीकुर्वन्रात्रिंदिनविभागंकरोति तांरात्रिमपिदिनंकरिष्यामीतिभगवदुपासनबलः वायुसमवेगेनतेजोमयेनरथेनसप्तवारंतरणिअन्वधावत्द्वितीयः सूर्यइव [illegible] तद्रथचक्राग्रकृतपरिखाः तेसप्तसिंधव.आसन् ३१ तदंतरस्थाःसप्त जंबुः १ प्लक्षः २ शाल्मलिः ३ कुशः ४ क्रौंचः ५ शाकः ६ [illegible] द्विगुणमाने न[illegible] [illegible]सन् ३२ तथाक्षारोदः १ इक्षुरसोदः [illegible] सन् सप्त

यद्व[illegible]

किमाहे

लमलंस्मये हम्रासिद्धौ । वावे[illegible]( [illegible]ष्यतीति शंकमानः स्मासक.याप्ि [illegible] शीलादिभिः उदारान् महतः ( तत्रशीलंस्वभावः वीर्यंप्रभावः) । दशपुत्रानूजनय[illegible]त्ततःअ
तेभ्यः पुत्रेभ्यइमांपृथ्वींविभज्यभुक्तोभोगोयस्यास्तांसहमहाविभूतेसा[illegible]संपत्सहितांमहिर्षींचराज्ञींमृतः [illegible] कविश्चेति अग्नीनांनामानियेषांते २५ ( ऊर्ध्वरेतसोब्रह्मचर्यव्रतधा[illegible]स्वा अनुग
प्यन्वयः हृदिगृहीतोनिश्चितोयोहरिविहारस्तेन अनुभावः त्यागसामर्थ्यंयस्य ३८ तस्येति ( हइतिप्रसिद्धो ) महिमोपनिबंधनश्लोकाः प्रियव्रतस्यपूर्वंसिद्धाः कथ्यंते यथावेदे "तदप्ये
पश्लोकोभवति " इति (तद्वदुक्तिरियम्) । कोनुकोनामकुर्यात् । छायांघ्नन्तमोनिरस्यन् नेमिनिम्नैःरथचक्रधाराकृतगर्तैरित्यर्थः३९भूसंस्थानं भुवोवयवविशेषरूपं द्वीपैः कृ[illegible] द्वीपेवसरि
द्गिरिप्रभृतिभिः । सीमाचकृता । भूतानांनिर्वृत्यैसुखाय अविवादाय । ४० भौमंपातालजं दिव्यंस्वर्गजं मानुषंमर्त्यलोकजंमहित्वंवैभवं यो निरयतुल्यंमेने। पुरुषानुजना विष्णुभक्तास्त
एवप्रियायस्येति । ४१ इतिपंचमस्कंधेटीकायांप्रथमोध्यायः ॥ १ ॥ द्वितीयेप्रोक्तमाग्नीध्रचरित्रंस्त्रैणसंमतम् । पत्न्यांहिपूर्वचित्यांयोनाभिमुख्यानजीजनत् ॥ १ ॥ अस्मिन्वंशे
प्रसिद्धोयमाग्नीध्रः स्त्रैणपुंगवः । विहसन्निवतस्येदंचरितंमुनिरब्रवीत् ॥ २ ॥ जंबूद्वीपमोकोयासांताः प्रजाः पुत्रवत्पालयामास । धर्मावेक्षमाणः धर्ममवेक्षमाणइत्यर्थः १

अहोअसाध्वनुष्ठितंयदभिनिवेशितोहमिंद्रियैरविद्यारचितविषमविषयांधकूपेतदलमलममुष्यावनितायाविनोदमृगंमांधिग्धिगितिगर्हयांचकार ३७ परदे
वताप्रसादाधिगतात्मप्रत्यवमर्शेनानुप्रवृत्तेभ्यःपुत्रेभ्यइमांयथादायंविभज्यभुक्तभोगांचमहिर्षीमृतकमिवसहमहाविभूतिमपहायस्वयंनिहितनिर्वेदोहृदिगृही
तहरिविहारानुभावभगवतोनारदस्यपदवींपुनरेवानुससार ३८ तस्यहवाएतेश्लोकाः ॥ प्रियव्रतकृतंकर्मकोनुकुर्याद्विनेश्वरम् ॥ योनेमिनिम्नैरकरो
च्छायांघ्नन्सप्तवारिधीन् ३९ भूसंस्थानंकृतंयेनसरिद्गिरिवनादिभिः ॥ सीमाचभूतनिर्वृत्यैद्वीपेद्वीपेविभागशः ४० भौमंदिव्यंमानुषंचमहित्वंकर्मयोग
जम् ॥ यश्चक्रेनिरयौपम्यंपुरुषानुजनप्रियः ४१ ॥ इतिश्रीभा०म०पं०स्कंधेप्रियव्रतविजयेप्रथमोध्यायः ॥ १ ॥ ॥ श्रीशुकउवाच ॥ एवंपितरिसं
प्रवृत्तेतदनुशासनेवर्तमानआग्नीध्रोजंबूद्वीपौकसःप्रजाऔरसवद्धर्मावेक्षमाणःपर्यगोपायत् १

अहोअसाधुमयाआचरितम् वनितायां क्रीडामृगंमांधिक्धिक्इतिगर्हयांचकार ३७ एवंनिर्विद्य पुत्रेभ्यः राज्यंविभज्य महिर्षींचत्यक्त्वा नारदोपदिष्टंमार्गंपुनरेवानुससार
३८ प्रियव्रतकृतंकर्मईश्वरंविनाअन्यः कः कुर्यात् यः सप्तसमुद्रान्द्वीपविभागंचचक्रे ३९ भौमंदिव्यंसुखंनिरयवत् मत्वा साधुप्रियः पुनः भगवद्भक्तिं अकरोत् ४०
४१ इतिपंचमेप्रथमः ॥ १ ॥ ॥श्रीशुकउवाच ॥ ॥ एवंपितरिसंप्रवृत्तेसति आग्नीध्रः राजा जंबूद्वीपौकसः प्रजाः पुत्रवत्पालयामास १

पितृलोककामः पुत्रकामः ( सुपुत्रेणपितुः पितृलोकप्राप्तेः । ) सुरवराणांवनितास्तासामाक्रीडाचलोमंदरः तस्यद्रोण्यांआभृतानिसंपादितानिपरिचर्योपकरणानिकुशपुष्पादीनियेन । ( विश्वसृजांपतिंब्रह्माणम् ) २ तदुपलभ्यज्ञात्वा ( आदिपुरुषो ) ब्रह्माअभियापयामाससंभोगार्थं प्रस्थापयामास ३ साचतदाश्रमोपवनमुपवभ्रामेत्यन्वयः रमणीयत्वमेवाह । विविधाश्चनिबिडाश्च ( संघाट्टिताः ) येविटपिनोवृक्षास्तेषां विटपाः शाखास्तेषां निकरास्तैः संश्लिष्टा ( आलिंगिताः ) पुरटलताः स्वर्णवल्लयः तास्वारूढाउपविष्टाः स्थलविहंगमामयूरादयस्तेषांमिथुनैः प्रोच्यमानाभिः श्रुतिभिःउच्चार्यमाणैः षड्जादिस्वरैः प्रतिबोध्यमानायेसलिलकुक्कुटादयस्तैर्विचित्रंयथातथोपकूजिता नादिताः अमलाजलाशयास्तेषुकमलानितेषामाकरं ( उत्पत्तिस्थानरूपं ) उपवनम् ४ सुललितेगमनेयेपदविन्यासास्तैर्गतौविलासोयस्याः चकारस्तस्याश्चेत्येकवाक्यत्वाय । अनुपदं प्रतिपदंक्वणक्वणेतिध्वानंकुर्वतोरुचिरस्यचरणाभरणस्यस्वनं। आमीलितेनयने एवनलिनमुकुलेतयोर्युगलमीषद्विकचय्य किंचिदुन्मील्यव्यच ष्टददर्श ५ तामेवदेवीं मकरध्वजस्यवशमुपनीतःसन्जडवत् ( विवेकशून्यइति ) इमासिद्धंवक्ष्यमाणान् दशश्लोकानुवाच जाड्यानुकरणंचवैदग्ध्येनतद्वशीकारार्थं । ( अन्यथाजडइत्येवब्रूयात् । ) दिविजानांदेवानां मनुजानांचयानिमनांसि नयनानिचतेषामाल्हाददुघैः आल्हादंदुहंतिप्रपूरयंतीतितथातैः गत्यादिभिर्नृणांमनसिकामस्यविवरं प्रवेशद्वारं ( अवकाशंवा ) विदधतीं कुर्वतीं । गतिश्च विहारः व्रीडाच विनययुक्तावलोकश्चसुस्वराण्यक्षराणिच अवयवाश्चनेत्रादयस्तैः ( कथंभूतांताम् ) निजमुखाद्विगलितं ( निःसृतंसरसत्वात् ) अमृतमिवस्वादुआसवइवमादकंचयत्सहासंभाषणंतस्मिन् आमोदोमुखानिःश्वासगंधः तेनमदांधायेमधुकरनिकरास्तैरुपरोधआवरणंतद्भयात्द्रुतः शीघ्रोयः पदविन्यासस्तेनवल्गुसुंदरंस्पंदनंकिंचिच्चलनंस्तनकलशयोः कवरभारे रशनायांचयस्यास्ताम् । ( कथंभूतस्यमकरध्वजस्य ) तस्याअवलोकनेनविवृतावसरस्यदत्तावकाशस्य । ६

सचकदाचित्पितृलोककामःसुरवरवनिताक्रीडाचलद्रोण्यांभगवंतंविश्वसृजांपतिमाभृतपरिचर्योपकरणआत्मैकाग्र्येणतपस्व्याराधयांबभूव २ तदुपलभ्यभगवानादिपुरुषःसदसिगायंतींपूर्वचित्तिंनामाप्सरसमभियापयामास ३ साचतदाश्रमोपवनमतिरमणीयंविविधनिबिडविटपिविटपनिकरसंश्लिष्टपुरटलतारूढस्थलविहंगममिथुनैःप्रोच्यमानश्रुतिभिःप्रतिबोध्यमानसलिलकुक्कुटकारंडवकलहंसादिभिर्विचित्रमुपकूजितामलजलाशयकमलाकरमुपबभ्राम ४ तस्याःसुललितगमनपदविन्यासगतिविलासायाश्चानुपदंखणखणायमानरुचिरचरणाभरणस्वनमुपाकर्ण्यनरदेवकुमारःसमाधियोगेनामीलितनयननलिनमुकुलयुगलमीषद्विकचय्यव्यचष्ट ५ तामेवाविदूरेमधुकरीमिवसुमनसउपजिघ्रंतींदिविजमनुजमनोनयनाह्लाददुघैर्गतिविहारव्रीडाविनयालोकसुस्वराक्षरावयवैर्मनसिनृणांकुसुमायुधस्यविदधतींविवरंनिजमुखविगलितामृतासवसहासभाषणामोदमदांधमधुकरनिकरोपरोधेनद्रुतपदविन्यासेनवल्गुस्पंदनस्तनकलशकबरभाररशनांदेवींतदवलोकनेनविवृतावसरस्यभगवतो[illegible]नीतोजडवदितिहोवाच ६

सः का[illegible]चित् पुत्र[illegible] [illegible]पयांब्रह्माणं अ[illegible]



तस्याः

कात्वंशैलेगिरावस्मिन् किंचिकीर्षसि । मुनि[illegible]यादिपुंस्त्वेन संबोध ..दिजाड्यानुकरणार्थं । हेम[illegible] [illegible] परदेव[illegible]स्यमायासि ( कास्यतकर्या । भुवावालक्ष्याह । हेसुहृत्स
खविज्येनिर्गुणेधनुषी विभर्षि किमात्मनोर्थे । एवैताभ्यां किंकार्यमस्ति । किंवाप्रमत्तान्अजितेंद्रिया नृमृगतुल्यानस्मद्वाश्वः कर्यसेतान्वशीकर्तुंधनुषीधारयसिकिमित्यर्थः । ७ कटाक्षा
वालक्ष्याह । बाणाविमौ । शतपत्रेनेत्रकमलेतेएवपत्राणिचिह्नानिययोः । शांतौविभ्रमेणमंथरौ । पुंखाभ्यांविन[illegible]चरा[illegible]तयोका[illegible]भागस्य पुंखस्थानीयस्याभावात्
अतितिग्मौतीक्ष्णौदंतौ अग्रभागौययोः । तौकस्मैप्रयोक्तुमिच्छसीतिनाविघ्नः । अतोभयादेतावत्प्रार्थयामहे । तवायंविक्रमोस्माकंक्षेमायास्तु । ८ तदंगपरिमललोभेनानुगच्छतोभ्रमरा
नालक्ष्याह । शिष्याइति । अजस्रंसततंयुष्मच्छिखातोविलुलिताः ( युष्माकंकेशपाशात् ) विगलिताः सुमनसामभितोवृष्टीः गलितानिकुसुमानिभजंतीत्यर्थः शुद्धत्वेनोपमा वेदशाखाइ
वेति ९ नूपुरस्वनमाकर्ण्याह । वाचमिति । ( हेब्रह्मन् ) तुभ्यंतवचरणगतपंजरयोः नूपुरयोः तित्तिरीणां अंतर्गतरत्नानांपरंकेवलंवाचं ( शृणवाम ) शृणुमः । कथंभूतां अरूपा अदृष्ट
रूपामुखरा अतिप्रकटातांचतांच पीतंपरिधानवस्त्रं नितंबकांतित्वेनप्रकल्प्याह । कदंबकुसुमस्यरुचिर्दीप्तिः अंकविटंकबिंबे । ( अंकशब्देनसामीप्यान्नितंबोलक्ष्यते ) नितंबस्याविटंकबिंबे
सुंदरमंडले कलब्धा ( कुतःप्राप्तेत्यर्थः ) पाठांतरेअंगेतिसंबोधनम् । मेखलामालक्ष्याह । यस्यामलातपरिधिः ( यस्यांदीप्तौअलातपरिधिः उल्मुकभ्रमणरूपःपरिवेषो ) वर्तते । व
स्त्रंनितंबकांतित्वेन प्रकल्प्य अतोवस्त्रमदृष्ट्वैवपृच्छति । क्वचतेवल्कलमिति १० स्तनावालक्ष्याह । शृंगयोःस्तनयोः । किंसंभृतं किंपूर्णमस्ति । मनोहरं किंचिदस्तीत्येतावत्तुजानामि ।
यतोमध्येकृशोपित्वं कृच्छ्रेण वहसि । यत्रचमे दृशिर्दृष्टिः श्रितासंलग्नास्ति । अन्येदंद्वयंनघटतइतिभावः । स्तनगतं कुंकुममालक्ष्याह । पंकोरुणआरक्तआत्मनस्तवविषाणेस्तनेई
दृक्अत्यपूर्वः । कुतइत्यतआह । येनपंकेन आश्रमं सुरभीकरोषि सुगंधयुक्तंकरोषीति ( हेसुभग सुंदर द्विजेतिसंबोधनंजडत्वात् ) । ११ ( हेसुहृत्तम ) लोकंस्थानम् । यत्रत्योजनः
उरसाइत्थमपूर्वावयवौविभर्ति । मनसउन्नयनौक्षोभकौ । पाठांतरे इत्थंभूतलक्षणेतृतीया । वक्त्रेचबहुअद्भुतं विभर्ति । किंतदाह । रसोमधुरालापः रासोविलासः ताभ्यासहितासु
धाअधरामृतम् आदिशब्दात्स्मितनर्मादि । १२

कात्वंचिकीर्षसिचकिंमुनिवर्यशैलेमायासिकापिभगवत्परदेवतायाः ॥ विज्येबिभर्षिधनुषीसुहृदात्मनोर्थेकिंवामृगान्मृगयसेविपिनेप्रमत्तान् ७ बाणाविमौ
भगवतःशतपत्रपत्रौशांतावपुंखरुचिरावतितिग्मदंतौ ॥ कस्मैयुयुंक्षसिवनेविचरन्नविघ्नःक्षेमायनोजडधियांतवविक्रमोस्तु ८ शिष्याइमेभगवतःपरितः
पठंतिगायंतिसामसरहस्यमजस्रमीशम् ॥ युष्मच्छिखाविलुलिताःसुमनोभिवृष्टीःसर्वेभजंत्यृषिगणाइववेदशाखाः ९ वाचंपरंचरणपंजरतित्तिरीणांब्रह्मन्
रूपमुखरांशृणवामतुभ्यम् ॥ लब्धाकदंबरुचिरंकविटंकबिंबेयस्यामलातपरिधिःक्वचवल्कलंते १० किंसंभृतंरुचिरयोर्द्विजशृंगयोस्तेमध्येकृशोवहसियत्र
दृशिःश्रितामे ॥ पंकोरुणःसुरभिरात्मविषाणईदृग्येनाश्रमंसुभगमेसुरभीकरोषि ११ लोकंप्रदर्शयसुहृत्तमतावकंमेयत्रत्यइत्थमुरसावयवावपूर्वौ ॥ अस्म
द्विधस्यमनउन्नयनौबिभर्तिबह्वद्भुतंसरसरासुधादिवक्त्रे १२

त्वं कासि किं चिकीर्षसि किं देवमायासि मृगतुल्यान् मादृशान् विषयिणः वशीकर्तुं विज्यधनुषी बिभर्षि किम् ७ ८ ९ १० ११ १२

कावातवलोकेआत्मनोदेहस्यवृत्तिर्जीविका । आहारइत्यर्थः अंगहेसखे । अदनाच्चर्वणात् हविरितिलक्षणयातत्संबंधीगंधोवातिआगच्छति । इतितांबूलाभिप्रायम् अदनाद्वहिरंगभातीतिपाठे ममतावद्भोजनाद्वहिर्भूतैव अन्यैववृत्तिर्भातीत्यर्थः । यतस्त्वंविष्णोःकलासि । विष्णुश्चनाश्नाति । "अनश्नन्नन्योअभिचाकशीति"इतिश्रुतेः । विष्णोःकलासीत्यत्रहेतुः तवचक्षौविष्णोरिवानि.मेषोन्मकरौ । अनिमिषौरक्तरूपनेत्रत्वेननिमेषशून्यौउल्लसंतौमकरौतदाकारेकुंडलेययोस्तौ । किंच । तवमुखंसरइवसरइव तदेवाहउद्विग्नंचंचलंमीनयुगलमिवनेत्रद्वयंयस्मिन् । द्विजादंताः तेषांपंक्त्याशोचिः शोभायस्मिन् । सरसितुद्विजाराजहंसादयः । आसन्नो ( निकटवर्ती ) भृंगानिकरइवकेशस्तोमः परिमललुब्धोभ्रमरस्तोमोवायस्मिन् । १३ ( त्वयाकरकमलेनताडितः ) पतंगः कंदुकः भ्रमतः भ्रमाच्चित्तस्यमेअक्षिणीएजयतेचंचलतांनयति ( भ्रमतस्तवेतिवा । पतंगः पक्षिसूर्ययोः । तद्रूपकत्वात्कंदुकोलक्षितः ) वक्रकेशसमूहंमुक्तवंधनंनस्मरसिनसंभावयसिकिमित्यर्थः कष्टः धूर्तः अनिलोवायुर्नीवीं ( वस्त्रबंधं ) हरतिएतच्चनस्मरसिकिम् १४ ( हेतपोधमतपस्यतांतपोघ्नंरूपंसौंदर्यं ) उपलब्धंप्राप्तम् । मह्यंममहेममभित्रमयासहतपश्चर्तुमर्हसि ! किंच । सर्वैभवभावनः संसृतिविस्तारकोब्रह्मामेप्रसीदतियतस्त्वांमार्याकल्पयतीत्यर्थः १५ द्विजदेवेनब्रह्मणादत्तम् ( हेद्विजेतिवा ) दृङ्मनश्च ( यस्मिंस्त्वयि ) लग्नंसत्नापयाति । हेचारुशृंगियतस्तेचित्तंतत्रमामनुव्रतंत्वदधीनंनेतुमर्हसि । सचिव्यस्तवसख्योपिशिवाअनुकूलाः सत्यः मांप्रतिसरंतुअनुवर्ततां । यद्वा एतावत्पर्यंतंयाअत्रमेसचिव्यः सख्यः शिवाः फेरवः ताः प्रतिसरंतु निर्यांतु यद्वा वनवासेसहचर्योहरिण्यः शिवाः कल्याण्यः सत्यः प्रतिसरंतुप्रदक्षिणंगच्छंतु । १६ ( इत्येवंललनायाअनुनयेऽतिविशारदः वशीकारेऽतिकुशलइत्यर्थः ) ग्राम्येषु ( विषयभोगकथासु ) वैदग्ध्यं ( पाटवं ) यस्यास्तयापरिभाषयावाचासमाजयामासपूजयामाससंमुखीचकारेत्यर्थः । ( विबुधमतिनिपुणबुद्धिःअधिकंमानयामास ) १७

कावात्मवृत्तिरदनाद्धविरंगवातिविष्णोःकलास्यनिमिषोन्मकरौचकर्णौ ॥ उद्विग्नमीनयुगलंद्विजपंक्तिशोचिरासन्नभृंगानिकरंसरइन्मुखंते १३ योसौत्वयाकरसरोजहतःपतंगोदिक्षुभ्रमन्भ्रमतएजयतेक्षिणीमे ॥ मुक्तंनतेस्मरसिवक्रजटावरूथंकष्टोनिलोहरतिलंपटएषनीवीम् १४ रूपंतपोधनतपश्चरतांतपोघ्नंह्येतत्तुकेनतपसाभवतोपलब्धम् ॥ चर्तुतपोर्हसिमयासहमित्रमह्यंकिंवाप्रसीदतिसवैभवभावनोमे १५ नत्वांत्यजामिदयितंद्विजदेवदत्तंयस्मिन्मनोदृगपिनोनवियातिलग्नम् ॥ मांचारुशृंग्यर्हसिनेतुमनुव्रतंतेचित्तंयतःप्रतिसरंतुशिवाःसचिव्यः १६ ॥ ॥ श्रीशुकउवाच ॥ ॥ इतिललनानुनयातिविशारदोग्राम्यवैदग्ध्ययापरिभाषयातांविबुधवधूंविबुधमतिरधिसभाजयामास १७

हेसुहृत्तम मे तावकंलोकं दर्शय यत्रत्योजनः उग्गाइत्थं [illegible] १३ १४ १५ १६ तपश्च [illegible] इदंरूपंत्वयाकेनतपसालब्धं हे [illegible] त्र मयासहतपश्चर्तुंत्वमर्ह [illegible] प्सरा तस्य [illegible] बुद्धिशील [illegible] रूपवयःश्रियौदार्येणमोहितासता [illegible] अयुतायुतवर्षाणिभौमस्वर्गभोगान्बुभुजे १७

( रूपंसौदर्यम् [..]स्मिन् किंचिकीर्पसि । मुष्टि बुद्ध्यादीनांद्वंद्वैकयम् । ( औदार्यमहत्वंदाक्षिण्यंवा । तेनपरा[..]कृष्टंमनोयस्याःसा तेनसहबहुकालंस्वस्यो[..]व भोगानात्वाद् तस्यवजं
बूद्वीपपतित्वात्सुलभोदिव्यंभौमंचसुखंबुभुजे ) १८ ( नाभिः किंपुरुषः इरिवर्षः इलावृतः रम्यकः हिरण्मयः [..] भद्राश्वः केतुमालश्चेतिसंज्ञायेषांतान् । सातुतान् प्रतिवर्षम् ) १९
सूत्वाप्रसूय(तद्गृहेपहायपुनर्ब्रह्माणं ) उपतस्थेअभजत् । २० ( अनुग्रहादेव ) औत्पत्तिकेनस्वभावेनसंहनन[..] ( बलभोक्तिः आत्मतुल्यनामानिस्वस्वनामसदृशनामानिजंबूद्वी
पस्यवर्षाणिखंडानि ) २१ कामानां ( अतृप्तः ) भोगैः ( अलंभावमप्राप्तइत्यर्थः ) अधिअधिकंमन्यमानः श्रुतिभिर्वेदोक्तैः कर्मभिःअवारुंधप्राप ( यत्रलोके ) मादयंतेमोदंते ( अने
नयत्रपितृलोकस्तत्रैवाप्सरोलोकश्चेतिध्वनितम् ) २२ ( संपरेतेपरलोकंगतेमेरोर्दुहितृः ) पुत्रीइतिएवंभूताः संज्ञा यासांताः ( मेरुदेव्याद्याः ) परिणीतवंतः २३ ॥ इतिपंचमस्कंधे
टीकायांद्वितीयोध्यायः ॥ २ ॥ ॥ तृतीयेचरितंनाभेःपरंमंगलमीर्यते । यस्ययज्ञेप्रतीतःसन्पुत्रोभूदृषभोहरिः ॥ १ ॥ नाभिराग्नीध्रसुतः अपुत्रयामेरुदेव्याभार्ययासह ( अव
हितात्मासावधानचित्तः ) १

साचततस्तस्यवीरयूथपतेर्बुद्धिशीलरूपवयःश्रियौदार्येणपराक्षिप्तमनास्तेनसहायुतायुतपरिवत्सरोपलक्षणंकालंजंबूद्वीपपतिनाभौमस्वर्गभोगान्बुभुजे
१८ तस्यामुहवाआत्मजान्सराजवरआग्नीध्रोनाभिकिंपुरुषहरिवर्षेलावृतरम्यकहिरण्मयकुरुभद्राश्वकेतुमालसंज्ञान्नवपुत्रानजनयत् १९ सासूत्वाथसुता
न्नवानुवत्सरंगृहएवापहायपूर्वचित्तिर्भूयएवाजंदेवमुपतस्थे २० आग्नीध्रसुतास्तेमातुरनुग्रहादौत्पत्तिकेनैवसंहननबलोपेताःपित्राविभक्ताआत्मतुल्यना
मानियथाभागंजंबूद्वीपवर्षाणिबुभुजुः २१ आग्नीध्रोराजाऽतृप्तःकामानामप्सरसमेवानुदिनमधिमन्यमानस्तस्याःसलोकतांश्रुतिभिरवारुंध यत्रपितरोमाद
यंते २२ संपरेतेपितरिनवभ्रातरोमेरुदुहितॄर्मेरुदेवींप्रतिरूपामुग्रदंष्ट्रींलतांरम्यांश्यामांनारींभद्रांदेववीतिमितिसंज्ञानवोदवहन् २३ इतिश्रीभागवतेम
हापुराणेपंचमस्कंधेआग्नीध्रवर्णनंनामद्वितीयोध्यायः ॥ २ ॥ ॥ श्रीशुकउवाच ॥ ॥ नाभिरपत्यकामोऽप्रजयामेरुदेव्याभगवंतंयज्ञपुरुषमव
हितात्माऽयजत १

१८ १९ तस्यांआग्नीध्रः नाभिः १ किंपुरुषः २ हरिवर्षः ३ इलावृतः ४ रम्यकः ५ हिरण्मयः ६ कुरुः ७ भद्राश्वः ८ केतुमालः ९ इत्येतान् नवपुत्रान् अजनयत्
साप्रतिवर्षंनवपुत्रान्सूत्वातंत्यक्त्वाब्रह्माणंययौ २० तेपुत्राः पित्रायथाविभागंदत्तानि स्वनामभिःख्यातानि जंबुद्वीपवर्षाणिनवबुभुजुः २१ आग्नीध्रोपितस्यांअतृप्तः सन्ता
मेवध्यायन्अतेतल्लोकंप्राप यत्रपितरःमोदंते २२ एवंसंपरेतेपितरिनवभ्रातरःमेरुदुहितॄः मेरुदेवां १ प्रतिरूपां २ उग्रदंष्ट्रीम् ३ लताम् ४ रम्याम् ५ श्यामाम् ६ नारीम् ७
भद्राम् ८ देववीतिं ९ इतिनवउदवहन् २३ इतिपंचमेद्वितीयः ॥ २ ॥ श्रीशुकउवाच ॥ आग्नीध्रपुत्रः नाभिःअपत्यकामः सन् मेरुदेव्यापत्न्यासहयज्ञपुरुषंअयजत् १

 



प्रवर्ग्येषुतत्संज्ञकेषुकर्मसुप्रचरत्सुक्रियमाणेषुसत्स्वित्यर्थः । द्रव्यादयः समयेयोगाउपायास्तेषामुपपत्त्यासंपत्त्यादुरधिगमो दुष्प्रापोपिभागवतेषु(वात्सल्यतया वत्सलतया)कृपालुतया सुप्रतीकः शोभनावयवःसन्नात्मानमाविश्चकार। (दुरधिगमत्वेहेतुः) अपराजितंस्वतंत्रं। (तथापि) निजभक्तानांयेऽभिप्रेतार्थास्तेषां विधित्सया (चिकीर्षया) गृहीतमाकृष्टंहृदयं चित्तंयस्य। (अत्रहेतुः शुद्धभावेनयजतइति कथंभूतमात्मानं) हृदयंगमंसुखकरं। यतोमनोनयनान्यानंदयंतियेऽवयवास्तैरभिरामंसुंदरम् २ अथहेत्यादिनिपातबाहुल्यंवाक्यालंकाराय।आविष्कृतंभुजानांयुगलद्वयं चतुष्टयंयेनतं हिरण्मयंतेजोमयं पुरुषेषुविशिष्यतइतितथापुरुषोत्तममित्यर्थः अर्हणेनअर्घ्येणसहोपतस्थुरभजन्नित्यन्वयः विलसन्श्रीवत्सएवललामंचिह्नं यस्य दरवरः शंखश्रेष्ठः वनरुहंपद्मम् अछूरिचक्रं। अमृतमणिःकौस्तुभः एवमादिभिः उपलक्षितं (विशिष्टम्) ३ स्फुटकिरणाः येप्रवराः ( श्रेष्ठाः। ) मणयो ( रत्नानि ) तन्मयानिमुकुटादीनि अंगानां (शिरःकर्णादीनां) भूषणानि तैर्विभूषितं बहुमाने दृष्टांतःअधना ( दरिद्राः)इवोत्तमधननिधिम् ४ अर्हसीत्यादिनानिगदेनस्तुवंति । हेअर्हत्तमपरिपूर्णावित्वमनुपथानांभृत्यानामस्माकमर्हणंमुहुःस्वयमेव स्वीकर्तुमर्हसि। नतुवयंस्तोतुंशक्ताइत्याहुः नमोनमइत्येतदेवास्माकंसद्भिरुपशिक्षितं। ( नमस्कारमात्रंकुरुतेतिशिष्टैरुपदिष्टम्) तद्रूपस्यदुर्ज्ञेयत्वादित्यर्थः। तदेवाहुः। कोर्हतीति । प्रकृतिगुणानांव्यतिकरः प्रपंचस्तस्मिन्नेवमतिर्यस्य अतएवानीशः प्रकृतिपुरुषयोःपरस्य अतएवेश्वरस्यअर्वाक्तनाभिःत्वामस्पृशंतीभिः प्रपंचांतर्गताभिः नामचरूपंचआकृतिश्चआकारः ताभिः स्वरूपनिरूपणंकर्तुंकोनामपुमानर्हति ( नकोपित्वत्स्वरूपवर्णनेसमर्थइत्यर्थः)५ सद्येतन्मात्रमेवार्हतिनाधिकमित्याहुः सकलजननिकायवृजिनंनिरस्यतीतितथा शिवतमाः ( मंगलतमाः ) प्रवराश्चश्रेष्ठायेगुणगणास्तेषामेकदेशस्तस्यकथनाद्विना अधिकं । ( किमपि ) नार्हति ६

तस्यहवावश्रद्धयाविशुद्धभावेनयजतःप्रवर्ग्येषुप्रचरत्सुद्रव्यदेशकालमंत्रर्त्विग्दक्षिणाविधानयोगोपपत्त्यादुरधिगमोपिभगवान्भागवतवात्सल्यतयासुप्रतीकआत्मानमपराजितंनिजजनाभिप्रेतार्थविधित्सयागृहीतहृदयोहृदयंगमंमनोनयनानंदनावयवाभिराममाविश्चकार२ अथहतमाविष्कृतभुजयुगलद्वयंहिरण्मयंपुरुषविशेषंकपिशकौशेयांबरधरमुरसिविलसच्छ्रीवत्सललामंदरवरवनरुहवनमालाच्छूर्यमृतमणिगदादिभिरुपलक्षितं ३ स्फुटकिरणप्रवरमुकुटकुंडलकटककटिसूत्रहारकेयूरनूपुराद्यंगभूषणविभूषितमृत्विक्सदस्यगृहपतयोऽधनाइवोत्तमधनमुपलभ्यसबहुमानमर्हणेनावनतशीर्षाणउपतस्थुः ४ ॥ ॥ ऋत्विजऊचुः ॥ ॥ अर्हसिमुहुरर्हत्तमार्हणमस्माकमनुपथानांनमोनमइत्येतावत्सदुपशिक्षितंकोऽर्हतिपुमान्प्रकृतिगुणव्यतिकरमतिरनीशईश्वरस्यपरस्यप्रकृतिपुरुषयोरर्वाक्तनाभिर्नामरूपाकृतिभीरूपनिरूपणम् ५ सकलजननिकायवृजिनिरसनशिवतमप्रवरगुणगणैकदेशकथनादृते ६

तत्रयज्ञेश्रद्धयाविशुद्धभावेनसम्यक्यजतः तस्यसतः वात्सल्यात् सर्वालंकृ[illegible] [illegible] [illegible] वह्वाश्चाविष्कृतभुजचतुष्टयंतेजोमयं कौशेयांबरधरं उरसि विलसच्छ्रीवत्सलांछनंशंखादिभिरुपलक्षितंमक[illegible] [illegible]टिसूत्रहारकेयूरनूपुराद्यंग[illegible]णभूषितं[illegible] तपश्चासर्वऋत्विगाद्याः नम्राः संतः तंपूजयित्वातुष्टुवुः ३ ४ हेपूर्ण त्वद्भृत्यानांअस्माकं तवार्हणं नमोनमः इत्य[illegible] इत्यादि[illegible] सद्भिः उपशिक्षितं तवस्वरूपव[illegible] [illegible]भोदायेणमुनीन् अर्हति ५ ६

 

नकेवलंदेहयोगमात्रंअपित्वनर्थांतरंचेत्याह ॰ यदागुणानामिंद्रियाणांईहांचेष्टांअयथामिथ्याआत्मीयानभज्यै ॰ ॥ विपश्चिद्विवेकीसन्नपश्यतिनुपश्यतीतिपाठेअयथाआत्मीयत्वेनेत्यर्थः
तत्रतदासहसागतस्मृतिःस्वरूपस्मृतिशून्यः सन्अज्ञोमूढः मैथुन्यमैथुनसुखप्रधानंगृहंप्राप्यतापान्विंदति ७ ननुयथापयोः स्त्रियामिथुनीभूयसुखमात्रमनुभवतःकुतस्तापाःस्युस्तत्राह। पुंसइ
ति । (तयोः स्त्रीपुंसयोः ) प्रत्येकतयोरेकैकोहृदयग्रंथिरस्त्येव । एवं मिथः परस्परं स्थूलंअन्यंहृदययोर्ग्रंथिंदुर्भेद्यं... कुतस्त्यतआह । अतः अस्मान्मिथुनीभावात्। प्रत्येकंहृदय
ग्रंथिनातुदेहेंद्रियमात्रेऽहंममेतिमोहः । अस्मात्तु ( प्राप्ते )—गृहादिभिर्विषयभूतैर्महान्मोहोभवेदित्यर्थः ८ कदातर्हितस्यनिवृत्तिरितआह । यदाऽस्यजनस्यकर्मभिरनबद्धोदृढोमनोरूपो
हृदयग्रंथिः ( आश्लथेत ) शिथिलोभवेत् । तदास्मान्मिथुनीभावात्निवर्ततेततश्चहेतुमहंकारंत्यक्त्वामुक्तःसन् परंपदंयाति ९ हेतुमतिहायेत्युक्तंतत्रपंचविंशतिसाधनान्याहचतुर्भिः । हं
सेमयिगुरौ भक्तिःसेवा । अनुवृत्तिस्तत्परता । वितततृष्णया ( तृष्णात्यागेनेत्यर्थः ) सर्वत्रलोकांतरेपिव्यसनावगत्यादुःखानुसंधानेन । ईहानिवृत्त्याकाम्यकर्मत्यागेन१०मदर्थैः कर्मभिः
अहमेवदेवोयेषांत-(-र्महद्भिः ) संगात् ( भूतेषुनिर्वैरेणसाम्येनउपशमेनच ) हेपुत्राः देहगेहयोरात्मबुद्धेः अहंममेतिबुद्धेः ( जिहासयाहानेच्छया ) ११ अध्यात्मयोगेनअध्यात्मशा
स्त्राभ्यासेन ( विविक्तसेवयाएकांतसेवनेनप्राणेंद्रियमनसामभिजयेनवशीकरणेन ) सध्यक्सम्यगितिसर्वत्रसंबंधः असंभ्रमादेनकर्तव्यस्यापरित्यागेन । १२ सर्वत्रमद्भावोमद्भावनातत्रवि
चक्षणेननिपुणेनमद्भावनायुक्तेनेत्यर्थः एतादृशेनविज्ञानविराजितेनअनुभवपर्यंतेनज्ञानेन । योगेनसमाधिनाधृत्युद्यमसत्त्वयुक्तः धैर्यप्रयत्नविवेकैर्युक्तः सन्अहंकाराख्यमुपाधिंव्यपोहेतत्यजे
रस्येत् १३ ततःसाधनादुपरमेदित्याह । कर्माण्याशेरतेयस्मिन् ( तादृशंअविद्ययाप्राप्तंहृदयग्रंथिरूपंबंधं ) योगेनउपायेन ( सम्यक्व्यपोह्यसमूलंनिरस्य ) यद्यपिफलेसिद्धेसाधनो
परमः सिद्धएवतथापियावद्देहपातंतदभ्यासशंकावारणायोक्तं ( एवमप्यप्रमत्तः सावधानःसन् ) १४

यदानपश्यत्ययथागुणेहांस्वार्थेप्रमत्तःसहसाविपश्चित् ॥ गतस्मृतिर्विंदतितत्रतापानासाद्यमैथुन्यमगारमज्ञः ७ पुंसःस्त्रियामिथुनीभावमेतंतयोर्मिथोहृद
यग्रंथिमाहुः ॥ अतोगृहक्षेत्रसुताप्तवित्तैर्जनस्यमोहोयमहंममेति ८ यदामनोहृदयग्रंथिरस्यकर्मानुबद्धोदृढआश्लथेत ॥ तदाजनःसंपरिवर्ततेस्मान्मुक्तः
परंयात्यतिहायहेतुम् ९ हंसेगुरौमयिभक्त्यानुवृत्त्यावितृष्णयाद्वंद्वतितिक्षयाच ॥ सर्वत्रजंतोर्व्यसनावगत्याजिज्ञासयातपसेहानिवृत्त्या १० मत्कर्मभिर्म
त्कथयाचनित्यंमद्देवसंगाद्गुणकीर्तनान्मे ॥ निर्वैरसाम्योपशमेनपुत्राजिहासयादेहगेहात्मबुद्धेः ११ अध्यात्मयोगेनविविक्तसेवयाप्राणेंद्रियात्माभिजयेनस
ध्यक् ॥ सच्छ्रद्धयाब्रह्मचर्येणशश्वदसंप्रमादेनयमेनवाचाम् १२ सर्वत्रमद्भावविचक्षणेनज्ञानेनविज्ञानविराजितेन ॥ योगेनधृत्युद्यमसत्त्वयुक्तोलिंगंव्यपो
हेत्कुशलोऽहमाख्यम् १३ कर्माशयंहृदयग्रंथिबंधमविद्ययासादितमप्रमत्तः ॥ अनेनयोगेनयथोपदेशंसम्यग्व्यपोह्योपरमेतयोगात् १४

यदाचप्रमत्तः सन् इंद्रियचेष्टांमिथ्यानपश्यति तदास्वरूपभ्रष्टः सन् मैथुन्यसुखंगृहंप्राप्यतापान्विंदति ७ यदाचअस्यदृढः हृदयग्रंथिः विवेकेनशिथिलोभवति तदास्त्री
पुरुषमिथुनीभावात् निवर्तते ततः अहंकारंहित्वामुक्तसंगः सन् परंपदंयाति ८ ९ अहंकारत्यागेसाधनानि हंसेगुरौमयिभक्त्यासर्वत्रवितृष्णयाद्वंद्वतितिक्षयापरलोके दुःखा
नुसंधानेनआत्मजिज्ञासयातपसाकाम्यकर्मत्यागेन १० मदर्पणकर्मणामत्कथयासाधुसंगेनमद्गुणकीर्तनेनप्राणेंद्रियजयेन सर्वत्रमद्भावनया यागेन च युक्तः सन्अहंकारंव्य
पोह्य ११ १२ १३ साधनात् उपरमेत् १४

( वर्षखंडयेनभरतेनाधिकृतत्वात् भारतमितिनाम्नाकथयंति ) ९ तंभरतमनुकुशावर्ताद्योनवपुत्रानवतेः ( पुत्रेभ्यः ) प्रधानाज्येष्ठाः १० तदनंतरंकविप्रमुखा नवभागवतधर्मप्रदर्शका वसुदेवनारदयोः संवादोयस्मिन् ( भगवतोमहिम्नाउपबृंहितंपूरितं ) उपरिष्टादेकादशेस्कंधे ११ महाशालीनाः अतिविनीताः ( महाश्रोत्रियाः महातोवैदिकाः ब्राह्मणावेदार्थज्ञाति प्रकर्मनिष्ठितत्वेनतच्छब्दवाच्या इतिवा जायंतेया जयंत्याः पुत्राः) १२ ( अनर्थानांजन्मादीनांपरंपरानित्यानिवृत्तायस्मात् । यतः ) केवलः शुद्धो ( यआनंदानुभवस्तद्रूपः ईश्वरोपि ) विपरीतवत् अनीश्वरवत् कर्माणिकुर्वन् ( गृहेषुलोकं ) नियमयत् नियमितवान् । पाठांतरेनितरामरमयत् । कर्मकरणेहेतुः । अनुगतंउत्सन्नं धर्मस्वयमाचरणेन ( अनुष्ठानेन ) अजानतां उपशिक्षयन् ( अनुष्ठापयन् ) कथं धर्मादीनां अवरोधेनसंग्रहेण ( प्रजासंततिः ) आनंदोभोगः । आमृतंमोक्षः । ( अनुष्ठापनेहेतवः समारागद्वेषशून्यः यतउपशांतः तथापिमैत्रः भूत हितेरतः यतः कारुणिकः ) १३ शीर्षण्यः श्रेष्ठः तेनआचरितंतत्तदनुवर्ततेयतः १४ सकलोधर्मोयस्मिन्तत् ब्राह्मंगुह्यंवेदानांरहस्यंयद्यपि स्वनैवविदितंतथापि ( ब्राह्मणैर्दर्शितेनप्रका रेण ) ब्राह्मणानुपृष्ट्वैव ( सामादीन् ) करोतीत्यर्थः । १५ द्रव्यादिभिरुपचितैः ( समृद्धैः प्राथमकल्पिकैः ) यज्ञैरिष्टवान् । तत्रवयोयौवनं "युवैवधर्ममन्विच्छेत" इतिवचनात् । ( श्रद्धाआस्तिक्यबुद्धिः । ) विविधोद्देशाः नानादेवतोद्देशाः यथोपदेशंयथाविधि । ( शतकृत्वः शतवारम् ) १६ ( भगवताईश्वरेण । ) अन्यस्मात्सकाशात् आत्मनःकश्चिदपिकिमपि कथंचनापिनवांछति ( नचकदाचिदन्यदीयमवेक्षतेपीत्यर्थः ) भर्तरिऋषभदेवे ( अनुसवनं ) प्रतिक्षणंउल्लसितस्नेहोद्रेकंविनाअन्यन्नवांछति । अन्यत्रइच्छानुदयेदृष्टांतः । आकाशपुष्पादिकमिवयथाकश्चिदाकाशपुष्पादिकंनेच्छतितद्वत् । १७

येषांखलुमहायोगीभरतोज्येष्ठःश्रेष्ठगुणआसीद्येनेदंवर्षभारतमितिव्यपदिशंति ९ तमनुकुशावर्तइलावर्तोब्रह्मावर्तोमलयःकेतुर्भद्रसेनइंद्रस्पृग्विदर्भःकीकट इतिनवनवतिप्रधानाः १० कविर्हरिरंतरिक्षःप्रबुद्धःपिप्पलायनः ॥ आविर्होत्रोथद्रुमिलश्चमसःकरभाजन इतिभागवतधर्मदर्शना नवमहाभागव तास्तेषांसुचरितंभगवन्महिमोपबृंहितंवसुदेवनारदसंवादमुपशमायनमुपरिष्टाद्वर्णयिष्यामः ११ यवीयांसएकाशीतिर्जायंतेयाःपितुरादेशकरामहाशाली नामहाश्रोत्रियायज्ञशीलाःकर्मविशुद्धाब्राह्मणाबभूवुः १२ भगवानृषभसंज्ञआत्मतंत्रःस्वयंनित्यनिवृत्तानर्थपरम्परःकेवलानंदानुभवईश्वरएवविपरीतवत्कर्मा ण्यारभमाणःकालेनानुगतंधर्ममाचरणेनोपशिक्षयन्नतद्विदांसमउपशांतोमैत्रःकारुणिकोधर्मार्थयशःप्रजानंदामृतावरोधेनगृहेषुलोकंनियमयत् १३ यद्यच्छी र्षण्याचरितंतत्तदनुवर्ततेलोकः १४ यद्यपिस्वविदितंसकलधर्मंब्राह्मंगुह्यंब्राह्मणैर्दर्शितमार्गेणसामादिभिरुपायैर्जनतामनुशशास १५ द्रव्यदेशकालवयः श्रद्धर्त्विग्विविधोद्देशोपचितैःसर्वैरपिक्रतुभिर्यथोपदेशंशतकृत्वइयाज १६ भगवतर्षभेणपरिरक्ष्यमाणएतस्मिन्वर्षेनकश्चनपुरुषोवांछत्यविद्यमानमिवात्म नोन्यस्मात्कथंचनकिमपिकर्हिचिदवेक्षतेभर्तर्यनुसवनंविजृंभितस्नेहातिशयमंतरेण १७

येषांमध्येमहायोगीज्येष्ठः भरतः आसीत् येनेदंवर्षभारतमितिव्यपदिशंति ९ तमनुकुशावर्तः १ इलावर्तः २ ब्रह्मावर्तः ३ मलयः ४ केतुः ५ भद्रसेनः ६ इंद्रस्पृक् ७ विदर्भः ८ कीकट ९ इतिनव नवतिमुख्याः १० कविर्हरिरंतरिक्षःप्रबुद्धःपिप्पलायनः आविर्होत्रोथद्रुमिलश्चमसःकरभाजन इतिभागवताः [illegible] एतद्वृत्तं एकादशेवक्ष्यामः ११ एकाशीतिमिताः कनिष्ठाः ब्राह्मणाः बभूवुः १२ अथभगवानृषभः गृहस्थधर्मंशिक्षयन्स्वयंगृहस्थाश्रमंचकार १३ श्रेष्ठः आचरति तदनु [illegible] अस्मदीयमपिलोकः वर्तते १४ सम [illegible] वैःक्रतुभिः शतवारंईश्वरं इयाज १५ १६ यस्यराज्ये कश्चनपुरुषः आत्मनः अन्यस्मात्किमपि नवांछति नावेक्षते १७

नवाहतात्मनः प्रश्रयचित्तानपि प्रजानुशासनमुपशिक्षयन्निति ह वक्ष्यमाणमुवाच १८ इतिपंचमस्कंधेटीकायांचतुर्थोऽध्यायः ॥ ४ ॥ पंचमे मोक्षधर्मोपदेशैः पुत्रानुशासनम् । उक्तपरमहंस्यं
चतस्यद्वंद्वातितिक्षया ॥ १ ॥ विड्भुजामपि सूकरादीनां येसंतिकष्टकष्टान्दुःखदान् कामान् विषयान् नार्हति तद्योग्योऽयंमनुष्यदेहोनभवति ( हेपुत्रकाः ) दिव्यमुत्कृष्टं ( निवृत्तिल
क्षणं ) येनतपसा ( सत्त्वमंतःकरणम् ) यस्मात्शुद्धात्सत्वात् अनंतं ब्रह्मसुखंभवति १ मोक्षबंधयोर्निदानमाह । महत्सेवामिति । तमसः संसारस्यद्वारंयोषितांयेसंगिनस्तेषांसंगम् । मह
तांलक्षणमाहसार्धेन महांतइति । साधवः सदाचाराः २ मयिईशेकृतंसौहृदमेव ( प्रीतिरेव ) अर्थः पुरुषार्थोयेषाम् । वाशब्देनान्यनिरपेक्षस्यैवास्यलक्षणत्वंदर्शयति । देहंबिभर्ति
विदेहंभरा विषयवार्त्तेव नधर्मविषयायेषुतेषुजनेषु गृहेषुचजायादियुक्तेषु रातिर्मैत्रंधनंवा प्रीतांतरे जायादिमदेषुनप्रीतियुक्ताः ( लोकेजने ) यावदर्थं यावत्प्रयोजनमेवार्थोयेषांते इतिम
ध्यमपदलोपीसमासः । देहनिर्वाहाधिकस्पृहाशून्याइत्यर्थः । ३ कामान्नार्हतीतियदुक्तंतदुपपादयति । नूनमिति । यत्यदाइंद्रियप्रीतयेआपृणोतिव्याप्रियतेतदाप्रमत्तः सन् विकर्मपापं
नूनंकुरुते । यतोविकर्मणः प्राचीनादयंक्लेशदोदेहोजातः । तस्यैवकरणेपुनः साधुनमन्ये । ( असन्नपिनश्वरोपि । ) ४ देहादेर्नश्वरत्वात्कियानयमनर्थ इत्याशंक्याह । पराभवोदेहादि
नास्वरूपाभिभवः अज्ञानकृतः तावद्भवति । ( नजिज्ञासतेनविचारयति । ) तत्रहेतुः यावत्क्रियाः ( व्यापाराः ) स्युः तावदिदंमनोहि ( कर्मात्मकं ) कर्मस्वभावमेवस्यात् । येनक
र्मात्मकेनमनसा ५ उक्तमुपसंहरति एवंपूर्वकृतंकर्मकर्तृभूतं । मनः कर्मभूतंवशंप्रयुंक्तेपुनः पुनः कर्मनिष्ठंकरोति । जीवन्मुक्तकर्मव्यावृत्त्यर्थमाह । अविद्ययेति । अज्ञानेनआत्मानिउपधी
यमानेआच्छाद्यमानेसति । एवंमनः कर्तृ । पुरुषंकर्मवशंप्रयुंक्तेइतिवा । ( तथाचयावन्नप्रीतिः यौ ) ६



सकदाचिदटमानोभगवानृषभोब्रह्मावर्तगतोब्रह्मर्षिप्रवरसभायांप्रजानांनिशामयंतीनामात्मजानवहितात्मनःप्रश्रयप्रणयभरसुयंत्रितानप्युपशिक्षयन्नितिहो
वाच १८ इ०भा०म०पं०ऋषभदेवानुचरितेचतुर्थोऽध्यायः ४ ॥ ॥ ऋषभउवाच ॥ ॥ नायंदेहोदेहभाजांनृलोकेकष्टान्कामानर्हतेविड्भुजांये ॥
तपोदिव्यंपुत्रकायेनसत्त्वंशुध्येद्यस्माद्ब्रह्मसौख्यंत्वनंतम् १ महत्सेवांद्वारमाहुर्विमुक्तेस्तमोद्वारंयोषितांसंगिसंगम् ॥ महांतस्तेसमचित्ताःप्रशांताविमन्यवःसु
हृदःसाधवोये २ येवामयीशेकृतसौहृदार्थाजनेषुदेहंभरवार्त्तिकेषु ॥ गृहेषुजायात्मजरातिमत्सुनप्रीतियुक्तायावदर्थाश्चलोके ३ नूनंप्रमत्तःकुरुतेविकर्मयदिंद्रि
यप्रीतयआपृणोति॥नसाधुमन्येयतआत्मनोयमसन्नपिक्लेशदआसदेहः ४ पराभवस्तावदबोधजातोयावन्नजिज्ञासतआत्मतत्त्वम् ॥ यावत्क्रियास्तावदिदंम
नोवैकर्मात्मकंयेनशरीरबंधः ५ एवंमनःकर्मवशंप्रयुंक्तेअविद्ययात्मन्युपधीयमाने ॥ प्रीतिर्नयावन्मयिवासुदेवेनमुच्यतेदेहयोगेनतावत् ६

सःऋषभःकदाचित्पृथिव्यांभ्रमन्ब्रह्मावर्तगतः सन्ब्रह्मर्षिप्रवरसभायांप्रजानांनिशामयंतीनां ज्ञानिनोपि पुत्रान् प्रजानांअनुशासनार्थं उपाशिक्षयन् इतिहोवाच १८ इतिपं
चमेचतुर्थः४॥ ॥ ऋषभउवाच ॥ ॥ हेपुत्रकाः देहभाजामयंदेहः विड्भुजामिवविषयभोगार्थं न तर्हिदिव्यंतपः कर्तुंयोग्योस्ति येनतपसाअनंतंब्रह्मसुखंभवति १ किंच
विमुक्तेः द्वारंमहत्सेवामाहुःयोषितांसंगिसंगंतमोद्वारमाहुः महतांलक्षणमाह येसमचित्ताः शांताः सर्वसुहृदः विमन्यवः २ एवंभूताः तेमहांतः ३ अयअयंलोकः
यदाइंद्रियप्रीतयेव्याप्रियते तदापापंकरोति तस्मात् दुःखदः देहोभवति ४ यदातु यावत् वासुदेवे प्रीतिं न करोति तावत् देहेन नमुच्यते ५ ६

प्रवर्ग्येषुतत्संज्ञकेषुकर्मसुप्रचरत्सुक्रियमाणेषुसत्स्वित्यर्थः । द्रव्यादयः सम्यग्योगाउपायास्तेषामुपपत्त्यासंपत्त्यादुरधिगमो दुष्प्रापोपिभागवतेषु(वात्सल्यतया वत्सलतया)कृपालुतया सुप्रतीकः शोभनावयवःसन्नात्मानमाविश्चकार। (दुरधिगमत्वेहेतुः) अपराजितंस्वतंत्रं। (तथापि) निजभक्तानांयेऽभिप्रेतार्थास्तेषां विधित्सया (चिकीर्षया) गृहीतमाकृष्टंहृदयं चित्तंयस्य । (अत्रहेतुः शुद्धभावेनयजतइति कथंभूतमात्मानं) हृदयंगमंसुखकरं । यतोमनोनयनान्यानंदयंतियेऽवयवास्तैरभिरामंसुंदरम् २ अथहेत्यादिनिपातबाहुल्यंवाक्यालंकाराय।आविष्कृतंभुजानांयुगलद्वयं चतुष्टयंयेनतं हिरण्मयंतेजोमयं पुरुषेषुविशिष्यतइतितथापुरुषोत्तममित्यर्थः अर्हणेनअर्घ्येणसहोपतस्थुरमजन्नित्यन्वयः विलसन्श्रीवत्सएवललामंचिह्नं यस्य दरवरः शंखश्रेष्ठः वनरुहंपद्मम् अंछूरिचक्रं । अमृतमणिःकौस्तुभः एवमादिभिः उपलक्षितं (विशिष्टम्) ३ स्फुटाकिरणाः येप्रवराः ( श्रेष्ठाः । ) मणयो ( रत्नानि ) तन्मयानिमुकुटादीनि अंगानां (शिरःकर्णादीनां) भूषणानि तैर्विभूषितं बहुमाने दृष्टांतःअधना ( दरिद्रा- )-इवोत्तमधननिधिम् ४ अर्हसीत्यादिनानिगदेनस्तुवंति । हेअर्हत्तमपरिपूर्णापित्वमनुपथानांभृत्यानामस्माकमर्हणंमुहुःस्वयमेव स्वीकर्तुमर्हसि । नतुवयंस्तोतुंशक्ताइत्याहुः नमोनमइत्येतदेवास्माकंसद्भिरुपशिक्षितं । ( नमस्कारमात्रंकुरुतेतिशिष्टैरुपादिष्टम् ) तद्रूपस्यदुर्ज्ञेयत्वादित्यर्थः । तदेवाहुः । कोर्हतीति । प्रकृतिगुणानांव्यतिकरः प्रपंचस्तस्मिन्नेवमतिर्यस्य अतएवानीशः प्रकृतिपुरुषयोःपरस्य अतएवेश्वरस्यअर्वाक्तनाभिःत्वामस्पृशंतीभिः प्रपंचांतर्गताभिः नामचरूपंचआकृतिश्चआकारः ताभिः स्वरूपनिरूपणंकर्तुंकोनामपुमानर्हति ( नकोपित्वत्स्वरूपवर्णनेसमर्थइत्यर्थः )५ सह्येतन्मात्रमेवार्हतिनाधिकमित्याहुः सकलजननिकायवृजिनंनिरस्यतीतितथा शिवतमाः ( मंगलतमाः ) प्रवराश्चश्रेष्ठायेगुणगणास्तेषामेकदेशस्तस्यकथनाद्विनाअधिकं । ( किमपि ) नार्हति ६



तस्यहवावश्रद्धयाविशुद्धभावेनयजतःप्रवर्ग्येषुप्रचरत्सुद्रव्यदेशकालमंत्रर्त्विग्दक्षिणाविधानयोगोपपत्त्यादुरधिगमोपिभगवान्भागवतवात्सल्यतयासुप्रतीकआत्मानमपराजितंनिजजनाभिप्रेतार्थविधित्सयागृहीतहृदयोहृदयंगमंमनोनयनानंदनावयवाभिराममाविश्चकार२ अथहतमाविष्कृतभुजयुगलद्वयंहिरण्मयंपुरुषविशेषंकपिशकौशेयांबरधरमुरसिविलसच्छ्रीवत्सललामंदरवरवनरुहवनमालाच्छूर्यमृतमणिगदादिभिरुपलक्षितं ३ स्फुटकिरणप्रवरमुकुटकुंडलकटककटिसूत्रहारकेयूरनूपुराद्यंगभूषणविभूषितमृत्विक्सदस्यगृहपतयोऽधनाइवोत्तमधनमुपलभ्यसबहुमानमर्हणेनावनतशीर्षाणउपतस्थुः ४ ॥ ॥ ऋत्विजऊचु ॥ ॥ अर्हसिमुहुरर्हत्तमार्हणमस्माकमनुपथानांनमोनमइत्येतावत्सदुपशिक्षितंकोऽर्हतिपुमान्प्रकृतिगुणव्यतिकरमतिरनीशईश्वरस्यपरस्य प्रकृतिपुरुषयोरर्वाक्तनाभिर्नामरूपाकृतिभिरूपनिरूपणम् ५ सकलजननिकायवृजिननिरसनशिवतमप्रवरगुणगणैकदेशकथनादृते ६

तत्रयज्ञेश्रद्धयाविशुद्धभावेनसम्यक्यजतः तस्यसतः वात्सल्यात् सर्वालंकारयुक्तःभगवानआविर्बभूव [illegible] तदाआविष्कृतभुजचतुष्टयंतेजोमयं कौशेयांबरधरं उरसि विलसच्छ्रीवत्सलांछनंशंखादिभिरुपलक्षितंमकुटकुंडलकटकक [illegible] दैरुपहृतंपाकंनतप [illegible] रास तंपूजयित्वानुष्टुवुः ३ ४ हेपूर्ण

नकेवलंदेहेन । तस्यविशेषणद्वयंवरीयसाश्रेष्ठतमेन । बृहंतः श्लोकाः पद्या नेकवीनांयस्मिन्तनच [illegible] इति तयोर्ग्याऽयंमनुष्यदेहोनभवति ( हेपुत्रका [illegible] चतुर्थोध्यायः ॥ ४ ॥ पंचमे मोक्षधर्मोपदेशैः पु [illegible] अयथाआत्मीयत्वेनेत्यर्थः

तत्रतदा [illegible] ःस्वरूपस्मृतिशून्यः सन्अज्ञोमूढंस्वमुंडलंदृष्टियुक्तमकरोत् ) ३ ( सुप्रजस्त्वंस नृष्ट [illegible] द । महत्सेवामिति । तमसः संसारस्यद्वारंयो [illegible] कतस्तापाःस्युस्तत्राह । पुंसइ

ति । (तयोः स्त्रीपुंसयोः ) प्रत्येकतयोरेकैकोहृदयग्रंथिरस्त्येव । एवं मिथः परस्परं स्थूलग्रंथ्यामित्याप्य वि [illegible] वाशब्देन [illegible] न्मिथुनीभावात् । प्रत्येकंहृदय

ग्रंथिनातुदेहेंद्रियमात्रेऽहंममेतिमोहः । अस्मात्तु ( प्राप्ते )–गृहादिभिर्विषयभूतैर्महान्मोहोभवेदित्यर्थः ८ कदेत्यपेक्षायांतस्यानिवृत्तिरितआह । यदाऽस्यजनस्यकर्मभिरनबद्धोदृढोमनोरूपो

हृदयग्रंथिः ( आश्लथेत ) शिथिलोभवेत् । तदास्मान्मिथुनीभावात्निवर्तेततत श्चहेतुमहंकारंत्यक्त्वामुक्तःसन् परंपदंयाति ९ हेतुमतिहायेत्युक्तंतत्रपंचविंशतिसाधनान्याहचतुर्भिः । हं

समयिगुरौ भक्तिःसेवा । अनुवृत्तिस्तत्परता । विगततृष्णया ( तृष्णात्यागेनेत्यर्थः ) सर्वत्रलोकांतरेपिव्यसनावगत्यादुःखानुसंधानेन । ईहानिवृत्त्याकाम्यकर्मत्यागेन १० मदर्थैः कर्मभिः

अहमेवदेवोयेषात-(-र्महद्भिः ) संगात् ( भूतेषुनिर्वैरेणसाम्येनउपशमेनच ) हेपुत्राः देहगेहयोरात्मबुद्धेः अहंममेतिबुद्धेः ( जिहासयाहानेच्छया ) ११ अध्यात्मयोगेनअध्यात्मशा

स्त्राभ्यासेन ( विविक्तसेवयाएकांतसेवनेनप्राणेंद्रियमनसामभिजयेनवशीकरणेन ) सध्यक्सम्यगितिसर्वत्रसंबंधः असंभ्रमादिनकर्तव्यस्यापरित्यागेन । १२ सर्वत्रमद्भावोमद्भावनातत्रवि

चक्षणेननिपुणेनमद्भावनायुक्तेनेत्यर्थः एतादृशेनविज्ञानविराजितेनअनुभवपर्यंतेनज्ञानेन । योगेनसमाधिनाधृत्युद्यमसत्त्वयुक्तः धैर्यप्रयत्नविवेकैर्युक्तः सन्अहंकाराख्यमुपाधिंव्यपोहेतानि

रस्येत् १३ ततःसाधनादुपरमेदित्याह । कर्माण्याशेरतेयस्मिन् ( तादृशंअविद्ययाप्राप्तंहृदयग्रंथिरूपंबंधं ) योगेनउपायेन ( सम्यक्व्यपोह्यसमूलंनिरस्य ) यद्यपिफलेसिद्धेसाधनो

परमः सिद्धएवतथापियावद्देहपातंतदभ्यासशंकावारणायोक्तं ( एवमप्यप्रमत्तः सावधानःसन् ) १४

यदानपश्यत्ययथागुणेहांस्वार्थेप्रमत्तःसहसाविपश्चित् ॥ गतस्मृतिर्विंदतितत्रतापानासाद्यमैथुन्यमगारमज्ञः ७ पुंसःस्त्रियामिथुनीभावमेतंतयोर्मिथोहृद

यग्रंथिमाहुः ॥ अतोगृहक्षेत्रसुताप्तवित्तैर्जनस्यमोहोयमहंममेति ८ यदामनोहृदयग्रंथिरस्यकर्मानुबद्धोदृढआश्लथेत ॥ तदाजनःसंपरिवर्ततेस्मान्मुक्तः

परंयात्यतिहायहेतुम् ९ हंसेगुरौमयिभक्त्यानुवृत्त्यावितृष्णयाद्वंद्वतितिक्षयाच ॥ सर्वत्रजंतोर्व्यसनावगत्याजिज्ञासयातपसेहानिवृत्त्या १० मत्कर्मभिर्म

त्कथयाचनित्यंमद्देवसंगाद्गुणकीर्तनान्मे ॥ निर्वैरसाम्योपशमेनपुत्राजिहासयादेहगेहात्मबुद्धेः ११ अध्यात्मयोगेनविविक्तसेवयाप्राणेंद्रियात्माभिजयेनस

ध्र्यक् ॥ सच्छ्रद्धयाब्रह्मचर्येणशश्वदसंप्रमादेनयमेनवाचाम् १२ सर्वत्रमद्भावविचक्षणेनज्ञानेनविज्ञानविराजितेन ॥ योगेनधृत्युद्यमसत्त्वयुक्तोलिंगंव्यपो

हेत्कुशलोऽहमाख्यम् १३ कर्माशयंहृदयग्रंथिबंधम [illegible] गादेतमप्रमत्तः ॥ अनेनयोगेनयथोपदेशंसम्यग्व्यपोह्यापरमेतयोगात् १४

यदाचप्रमत्तः सन् इंद्रियचेष्टांमिथ्यानपश्यति [illegible] इतिनष्टस्मृतिः सन् मैथुन्यसुखंगृहंप्राप्यतापान्विंदति ७ यदाचअस्यदृढः हृदयग्रंथिः विवेकेनशिथिलोभवति तदास्त्री

पुरुषमिथुनीभावात् निवर्तते ततः अहंकारंहित्वामुक्तसंगः सन् परंपदंयाति ८ ९ अहंकारत्यागेसाधनानि हंसेगुरौमयिभक्त्यासर्वत्रवितृष्णयाद्वंद्वतितिक्षयापरलोके दुःखा

नुसंधानेनआत्मजिज्ञासयातपसाकाम्यकर्मत्यागेन १० मदर्पणकर्मणामत्कथयासाधुसंगेनमद्गुणकीर्तनेनप्राणेंद्रियजयेन सर्वत्रमद्भावनया यागेन च युक्तः सन्अहंकारंव्य

पोह्य ११ १२ १३ साधनात् उपरमेत् १४

इदंघनातिचित्रमित्याहुः । कइति । इहसंसारेतेतवापराजितयामायया अनवसितपदव्या अलक्षितमार्गया अपराजितः कोवै नकोपि ( त्वामेकंविनासर्वोपितयावशीकृतएवेत्यर्थः ) अत स्तयाऽनादृतमतिःकः अतएवाविषयाएवविषंतस्यरयावेगास्तैरनादृताप्रकृतिर्यस्यसकः ( नकोपिसर्वोपिअवृतस्तमावएवेत्यर्थः ) यतोऽनुपासितमहच्चरणः ।। अतस्त्वन्मायामोहितस्य वमाशंसाघटतइत्यर्थः १५ अदभ्रकर्तः हेबहुकार्यकारिन्अल्पीयसेकार्याययत्वंयत्परमात्इहसमाहूतोसि । तत्रप्रजायांअर्थधीः ( पुरुषार्थबुद्धि- ) येषांमंदानांतेषांनोयदेवहेलनं ( देवस्य तव ) अवज्ञानंतत् ( हेदेवदेव ) सर्वान्प्रतितवसाम्येन ( अवैषम्येण ) हेतुनाप्रतिवोढुंसोढुमर्हसि । १६ इतिनिगदेनमंत्रात्मकस्तोत्रेण ( अनिमिषानांदेवानांऋषभोभगवान् ) वर्षध रोभारतवर्षपतिः नाभिः तेनाभिवंदितौ [illegible] चरणौयस्य १७ ( हेऋषयः अवितथगीर्भिः सत्यवचनैः यूयंतुसत्यवचसः । वरस्त्वसुलभः ) असुलभत्वेहेतुः ममाहमेवा भिरूपःसदृशः( नान्यः ) कैवल्यत्वात् । अद्वितीयत्वात् [illegible] शक्ताइत्याहुइवब्राह्मणास्तेषांकुलं । ( तद्वचनंहिमद्वचनमेवेत्यर्थः 'अहोबतानुकंपायांखेदेसंबोधनेपिच" )१८ ( ततः कारणात् ) आग्नी ध्रीयेनाभौ । १९ ( निशामयंत्याःपश्यंत्याः ) पतिंनाभिं २० हेविष्णुदत्त तस्य ( नाभेः ) अवरोधायने अंतःपुरे मेरुदेव्यांशुक्लया ( तन्वा ) शुद्धसत्वमूर्त्याऽवततार । केषांधर्मान् । वातरश नानांदिग्वाससां । पाषंडिव्यावृत्त्यर्थमाह । श्रमणानांतपस्विनां । ऋषीणांज्ञानिनां । ऊर्ध्वमंथिनांनैष्ठिकब्रह्मचारिणाम् । २१ इतिपंचमेतृतीयोध्यायः ॥ ३ ॥ चतुर्थेविक्रमि [illegible] मस्येहितंमहत् । लोकार्थं येनसत्कर्म नैष्कर्म्यंचनिदर्शितं ॥१॥ चतुर्थे शतपुत्रस्यराज्यंतस्योपवर्ण्यते । यस्यराज्येजनःसर्वःसंतोषामृतनिर्वृतः ॥२ ॥ अभिव्यज्यमानानि [illegible] पाने पादतलादिषुवज्रांकुशादीनियस्य । महाविभूतिःसर्वैश्वर्यादिः साम्यादिभिः सह( दिनेदिने )वर्धमानप्रभावं ( तंनाभेः पुत्रं ) प्रकृतयोअमात्यादयः( पृथ्वीतलपालनाय )जगृधुःअभिकांक्षितिस्म १

कोवाइहतेऽपराजितोऽपराजितयामाययाऽनवसितपदव्यानावृतमतिर्विषयविषरयानावृतप्रकृतिरनुपासितमहच्चरणः १५ यदुहवावतवपुनरदभ्रकर्तरिहसमाहूतस्तत्रार्थधियांमंदानांनस्तद्यद्देवहेलनंदेवदेवार्हसिसाम्येनसर्वान्प्रतिवोढुमविदुषाम् १६ ॥ ॥ श्रीशुकउवाच ॥ ॥ इतिनिगदेनाभिष्टूयमानो भगवाननिमिषर्षभोवर्षधराभिवादिताभिवंदितचरणःसदयमिदमाह १७ ॥ ॥ श्रीभगवानुवाच ॥ ॥ अहोबताहमृषयोभवद्भिरवितथगीर्भिर्वरमसुलभमभियाचितोयदमुष्यात्मजोमयासदृशोभूयादितिममाहमेवाभिरूपःकैवल्यादथापिब्रह्मवादो नमृषाभवितुमर्हतिममैवहिमुखंयद्द्विजदेवकुलम् १८ तत आग्नीध्रीयेंऽशकलयाऽवतरिष्याम्यात्मतुल्यमनुपलभमानः १९ ॥ ॥ श्रीशुकउवाच ॥ ॥ इतिनिशामयंत्यामेरुदेव्याःपतिमभिधायांतर्दधेभगवान् २० बर्हिषितस्मिन्नेवविष्णुदत्तभगवान्परमर्षिभिः प्रसादितोनाभेःप्रियचिकीर्षयात दवरोधायनेमेरुदेव्यांधर्मान्दर्शयितुकामोवातरशनानांश्रमणानामृषीणामूर्ध्वमंथिनां शुक्लयातनुवावततार २१ ॥ इतिश्रीभा० म० पं० स्कंधेनाभिचरित्रेतृतीयोध्यायः ॥ ३ ॥ ॥ श्रीशुकउवाच ॥ ॥ अथहतमुत्पत्त्यैवाभिव्यज्यमानभगवल्लक्षणंसाम्योपशमवैराग्यैश्वर्यमहाविभूतिभिरनुदिनमेधमानानुभावंप्रकृतयःप्रज [illegible] ब्राह्मणादेवताश्चावनितलसमवनायाभितरांजगृधुः १

एवंस्तुतः सन् भगवान्उवाच १५ १६ १७ हेऋषयः ब्रह्मवादः मृषाभवितुंनार्हतिअतः अहंके [illegible] वतरिष्यामि १८ १९ इत्युक्त्वाभगवान्अंतर्दधे २० ॥ ७ ॥

ततः नाभेः प्रियचिकीर्षयामेरुदेव्यांदिग्वाससांतपस्विनां [illegible] तायतव [illegible] तपूजा । ॥ ३ ॥ ॥ श्रीशुक [illegible] तपश्च



.हत्वादृषभःइतिनामचकार

वर्ष्मणादेहेन । तस्यविशेषणद्वयंवरीयसाश्रेष्ठतमेन । बृहंतः श्लोकाः यस्या ...कीर्ति... ...नूतनच ...ोकसमानधर्मा मनुष्याकारो

। ( ऋषभःश्रेष्ठः ) २ तस्यवर्षेमंडले । ( अजनामसंज्ञकेस्वमंडलेवृष्टिमुक्तमकरोत् ) ३ ( सुप्रजस्त्वंत .... ...नुरागोयो । निजपुत्रोस्तितंविज्ञा

येनतम् । अतएवमाययास्वपुत्रइतिविलसितामतिर्यस्य ४ आपौरप्रकृति । पौरान्प्रकृतींश्चाभिव्याप्य वि ....त्समामेधाय ( नीतिधर्मशिक्षणार्थंब्राह्मणाधीनंकृत्वेत्य

येत्यर्थः ) कथंभूतोनाभिः । जनपदः जनाः पौरादयः पदंप्रमाणंयस्यसः । आत्मजंधर्ममर्यादारक्षणार्थंमर्या...

र्थः । ) विशालायांबदरिकाश्रमे । प्रसन्नंपरानुद्वेजकम् निपुणंचतीव्रंतेनउपासीनः सेवमानः तन्महिमानंजीवन्मुक्ततामवाप ५ ( हेपांडवेय यस्यनाभेः इमासिद्धमुदाहरंति ) नाभेः

तत्प्रसिद्धंकर्मअनुतदनंतरंकोनुपुमान्चरेतनकोपीत्यर्थः । ६ मंगलैर्ब्राह्मणाभिः पूजिताः संतः ओजसामंत्रबलेन । ७ ( अनुमन्यमानः जानन् ) अन्येषांगृहणायप्रदर्शितोगुरुकुलवासो

येन । ( लब्धदक्षिणैः समावर्तनपूर्वकंगृहाश्रमाय दत्तानुज्ञः ) अनुशिक्षमाणो अनुशिक्षयन्उभयविधंश्रौतस्मार्तलक्षणंकर्मविधिंअभियुंजन् अनुतिष्ठन् (समाम्नायैः कर्मकांडलक्षणैरा

म्नातम् विहितंइंद्रेणदत्तायां ) जयंती (संज्ञायां ) भार्यायां ( लक्षणैरात्मसमानानां ) आत्मजानांशतंजनयामास ८

तस्यहवाइत्थंवर्ष्मणावरीयसाबृहच्छ्लोकेनचौजसाबलेनश्रियायशसावीर्यशौर्याभ्यांचपिताऋषभइतीदंनामचकार २ तस्यहींद्रःस्पर्द्धमानोभगवान्वर्षेनव

वर्षतदवधार्यभगवानृषभदेवोयोगेश्वरः प्रहस्यात्मयोगमाययास्ववर्षमजनाभंनामाभ्यवर्षत् ३ नाभिस्तुयथाभिलषितंसुप्रजस्त्वमवरुध्यातिप्रमोदभरविह्व

लोगद्गदाक्षरयागिरास्वैरंगृहीतनरलोकसधर्मंभगवंतंपुराणपुरुषंमायाविलसितमतिर्वत्सतातेतिसानुरागमुपलालयन्परांनिर्वृतिमुपगतः ४ विदितानुराग

मापौरप्रकृतिजनपदोराजानाभिरात्मजंसमयसेतुरक्षायामभिषिच्यब्राह्मणेषूपनिधायसहमेरुदेव्याविशालायांप्रसन्ननिपुणेनतपसासमाधियोगेननरनारायणा

ख्यंभगवंतंवासुदेवमुपासीनःकालेनतन्महिमानमवाप ५ यस्यहपांडवेयश्लोकावुदाहरंति ॥ कोनुतत्कर्मराजर्षेर्नाभेरन्वाचरेत्पुमान् ॥ अपत्यतामगाद्यस्य

हरिःशुद्धेनकर्मणा ६ ब्रह्मण्योन्यःकुतोनाभेर्विप्रामंगलपूजिताः ॥ यस्यबर्हिषियज्ञेशंदर्शयामासुरोजसा ७ अथहभगवानृषभदेवःस्ववर्षंकर्मक्षेत्रमनुमन्य

मानःप्रदर्शितगुरुकुलवासोलब्धवरैर्गुरुभिरनुज्ञातोगृहमेधिनांधर्माननुशिक्षमाणोजयंत्यामिंद्रदत्तायामुभयलक्षणंकर्मसमाम्नायाम्नातमभियुंजन्नात्मजानामा

त्मसमानानांशतंजनयामास ८

सुयशसावीर्यशौर्यादिगुणैः श्रेष्ठत्वात् तस्यऋषभ इतिनामपिताचक्रे १ तदास्पर्धमानः इंद्रः तस्मिन्वर्षे न ववर्ष तदाऋषभदेवः प्रहस्य स्वयोगबलेनअजनाभे स्ववर्षेवृष्टिं

चकार ३ ४ नाभिः यथाकालेऋषभदेवंराज्येभिषिच्यब्राह्मणेषुउपनिधाय पत्न्यासहबदरिकाश्रमंगत्वा नरनारायणंउपासीनः कालेनमुक्तिं प्राप ५ एवंनाभेः प्रसिद्धंकर्म

कः पुमान्आचरेत् यस्यशुद्धकर्मणाहरिः अपत्यतांप्राप्तः ६ ७ अथभगवान् ऋषभदेव लोकशिक्षार्थंगुरुगृहे ब्रह्मचर्यादिकृत्वा गुर्वनुज्ञया गृहधर्मान् शिक्षयन् इंद्रदत्तक

न्यायां जयंत्यां आत्मसमान् शतपुत्रान् जनयामास ८



अवहितात्मनः संयतचित्तानपिप्रजानुशासनार्थं [illegible] .८ इतिपंचमस्क गारमहुर्मस्यं
यतस्यप्रहृतिविजया ॥ १ ॥ विड्भुजामपिसूकरादीनां येसंविताकष्टाःदुःखदान् कामान् विष [illegible] .८ ( निवृत्तिल
क्षणं ) येनतपसा ( सत्त्वमंतःकरणम् ) यस्मात्शुद्धात्सत्वादनंतं ब्रह्मसुखंभवति १ मोक्षबंधयोर्निद [illegible] षितांयेसंगिनस्तेषांसंगम् । मह
तांलक्षणमाहसार्धेन महांतइति । साधवः सदाचाराः २ मयिईशेकृतंसौहृदमेव ( प्रीतिरेव ) अर्थः पुरुषार्थायेषाम् । वाशब्देनान्यनिरपेक्षस्यैवास्यलक्षणत्वंदर्शयति । देहंबिभर्ती
तिदेहंभराविषयवार्तैव नधर्मविषयायेषुतेषुजनेषु गृहेषुजायादियुक्तेषु रातिर्मैत्रंधनंवा प्रांतांतरे जायादिमदेषुनप्रीतियुक्ताः ( लोकेजने ) यावदर्थं यावत्प्रयोजनमेवार्थोयेषांते इतिम
ध्यमपदलोपीसमासः । देहनिर्वाहाधिकस्पृहाशून्याइत्यर्थः । ३ कामात्राहेतीतियदुक्तंतदुपपादयति । नूनमिति । यत् यदाइंद्रियप्रीतयेआपृणोतिव्याप्रियतेतदाप्रमत्तः सन् विकर्मपापं
नूनंकुरुते । यतोविकर्मणः प्राचीनादयंक्लेशदोदेहोजातः । तस्यैवकरणंपुनः साधुनमन्ये । ( असन्नपिनश्वरोपि । ) ४ देहादेर्नश्वरत्वात्क्रियानयममर्थ इत्याशंक्याह । पराभवोदेहादि
नास्वरूपाभिभवः अज्ञानकृतः तावद्भवति । ( नजिज्ञासतेनविचारयति । ) तत्रहेतुः यावत्क्रियाः ( व्यापाराः ) स्युः तावदिदंमनोहि ( कर्मात्मकं ) कर्मस्वभावमेवस्यात् । येनक
र्मात्मकेनमनसा ५ उक्तमुपसंहरति एवंपूर्वकृतंकर्मकर्तृभूतं । मनः कर्ममूर्तवशंप्रयुंक्तेपुनः पुनः कर्मनिष्ठंकरोति । जीवन्मुक्तकर्मव्यावृत्त्यर्थमाह । अविद्ययेति । अज्ञानेनआत्मनिउपधी
यमानेआच्छाद्यमानेसति । एवंमनः कर्तृ । पुरुषंकर्मवशंप्रयुंक्तेइतिवा । ( तथापयावत्प्रीतिः स्नेहः ) ६

सकदाचिदटमानोभगवानृषभोब्रह्मावर्तगतोब्रह्मर्षिप्रवरसभायांप्रजानांनिशामयंतीनामात्मजानवहितात्मनःप्रश्रयप्रणयभरसुयंत्रितानप्युपशिक्षयन्नितिहो
वाच १८ इ०भा०म०पं०ऋषभदेवानुचरितेचतुर्थोध्यायः ४ ॥ ॥ ऋषभउवाच ॥ ॥ नायंदेहोदेहभाजांनृलोकेकष्टान्कामानर्हतेविड्भुजांये ॥
तपोदिव्यंपुत्रकायेनसत्त्वंशुध्येद्यस्माद्ब्रह्मसौख्यंत्वनंतम् १ महत्सेवांद्वारमाहुर्विमुक्तेस्तमोद्वारंयोषितांसंगिसंगम् ॥ महांतस्तेसमचित्ताःप्रशांताविमन्यवःसु
हृदःसाधवोये २ येवामयीशेकृतसौहृदार्थाजनेषुदेहंभरवार्तिकेषु ॥ गृहेषुजायात्मजरातिमत्सुनप्रीतियुक्तायावदर्थाश्चलोके ३ नूनंप्रमत्तःकुरुतेविकर्मयदिंद्रि
यप्रीतयआपृणोति॥नसाधुमन्येयतआत्मनोयमसन्नपिक्लेशदआसदेहः ४ पराभवस्तावदबोधजातोयावन्नजिज्ञासतआत्मतत्त्वम् ॥ यावत्क्रियास्तावदिदंम
नोवैकर्मात्मकंयेनशरीरबंधः ५ एवंमनःकर्मवशंप्रयुंक्तेअविद्ययात्मन्युपधीयमाने ॥ प्रीतिर्नयावन्मयिवासुदेवेनमुच्यतेदेहयोगेनतावत् ६

सःऋषभःकदाचित्पृथिव्यांभ्रमन्ब्रह्मावर्तगतः सन्ब्रह्मर्षिप्रवरसभायांप्रजानांनिशामयंतीनां ज्ञानिनोपि पुत्रान् प्रजानांअनुशासनार्थं उपशिक्षयन् इतिहोवाच १८ इतिपं
चमेचतुर्थः४॥ ॥ ऋषभउवाच ॥ ॥ हेपुत्रकाः देहभाजामयंदेहः विड्भुजामिवविषयभोगार्थं न तर्हिदिव्यंतपः कर्तुंयोग्योस्ति येनतपसाअनंतंब्रह्मसुखंभवति १ किंच
विमुक्तेः द्वारंमहत्सेवामाहुःयोषितांसंगिसंगंतमोद्वारमाहुः महतांलक्षणमाह येसमचित्ताः शांताः सर्वसुहृदः विमन्यवः २ एवंभूताः तेमहांतः ३ अथअयंलोकः
यदाइंद्रियप्रीतयेव्याप्रियते तदापापंकरोति तस्मात् दुःखदः देहोभवति ४ यदातु यावत् वासुदेवे प्रीतिं न करोति तावत् देहेन नमुच्यते ५ ६

[illegible] भगवानाह । अथेति । अखिलानांलोकपालानांललामोपि[illegible] उपरतः ( निवृत्तः ) [illegible] तिर्यस्मात् [illegible] । [illegible] । [illegible]
[illegible] ऽवधूतवेषभाषादिभिरविलक्षितो भगवत्प्रभावो यस्मिन् सांपरायविधिर्देहत्यागप्रकारस्त ( [illegible] आधाराधेयमर्थं [illegible] अनर्थांतरभावेनात्मे
देन । ( अर्थांतराभावेनअभेदेनेत्यर्थः । ) उपासनाभ्यासस्यार्थमाह असंव्यवहितमिति ६ मनसास्वयंत्यक्तेप्य[illegible] [illegible] रेणदेहःप्रचलन्मनोरथे [illegible] लिंगकोसायमभिमानाभा
सस्तेन । सचजीवन्मुक्तानामविद्यावासनयाभवतीतितत्तोविशेषमाह । योगमायावासनयेति । ( [illegible] पुनःपुन [illegible] कादीन्देशान् [illegible] णकर्णाटकान्सौराष्ट्रादीन्[illegible]
प॰)मतः प्रकृत्यापिवासनया आस्येकृतः अश्मकवलो येन । असंवीतोनग्नः ( उन्माद इवउन्मादेसतिपुमान् यथाचेष्टतेतत् ) ७ ८ अथसमीरवेगेनाविधूतानांकंपितानांवेणूनांसंघर्षणे
नजातउग्रोदावानलस्तद्वनंआलेलिहानः सर्वतोग्रसन् ( तेनदेहेन ) ९ अत्रधूतवेषेणऋषभदेवस्वर्गगतइत्येतस्यसूचकमाह । यस्यकिलअश्रुपातीतमनुचरितंवद्देशवासिभ्यउपाकर्ण्य
अर्हन्नितिनामयस्यसराजास्वयंतत्रउपशिक्ष्यशिक्षित्वाकुपथश्चासौपाषंडश्चतंनिजमनीषयासंप्रवर्तयि ष्यतइत्यन्वयःतत्रहेतुः । कलावित्यादि । भवितव्येनप्राणिनांपूर्वसंचितपापफलेन
१० येनप्रवर्तकेन । अर्हता । मनुजेष्वपसदानिकृष्टाः स्वविधिर्भा ( वर्णाश्रमाचारप्रवर्तकेनवेदेन ) नियोगः ( प्रवर्तना ) यस्मिन् शौचचारित्रेतद्विहीनाः देवावज्ञारूपाण्यस्नानादी
निकुव्रतानिगृहाना वेदादीनां विदूषकाभविष्यंति । केशोल्लुंचनं ( केशानामपमर्षणम् ) ११

अथैवमखिललोकपाललामोपिलक्षणैर्जडवदवधूतवेषभाषाचरितैरविलक्षितभगवत्प्रभावोयोगिनांसांपरायविधिमनुशिक्षयन्स्वकलेवरंजिहासुरात्मन्या
त्मानमसंव्यवहितमनर्थांतरभावेनान्वीक्षमाणउपरतानुवृत्तिरुपरराम ६ तस्यहवाएवंमुक्तलिंगस्यभगवतऋषभस्ययोगमायावासनयादेहइमांजगतीम
भिमानाभासेनसंक्रममाणः ७कोंकवेंककुटकान्दक्षिणकर्णाटकान्देशान्यदृच्छयोपगतःकुटकाचलोपवनआस्यकृताश्मकवलउन्मादइवमुक्तमूर्धजोऽसंवीतएव
विचचार ८ अथसमीरवेगविधूतवेणुविघर्षणजातोग्रदावानलस्तद्वनमालेलिहानःसहतेनददाह ९ यस्यकिलानुचरितमुपाकर्ण्यकोंकवेंककुटकानांराजाऽर्ह
न्नामोपशिक्ष्यकलावधर्मउत्कृष्यमाणेभवितव्येनविमोहितःस्वधर्मपथमकुतोभयमपहायकुपथपाषंडमसमंजसंनिजमनीषयामंदःसंप्रवर्तयिष्यते १० येनहवा
वकलौमनुजापसदादेवमायामोहिताः स्वविधिनियोगशौचचारित्रविहीनादेवहेलनान्यपव्रतानिनिजनिजेच्छयागृह्णानाअस्नानानाचमनाशौचकेशोल्लुंचना
दीनिकलिनाऽधर्मबहुलेनोपहतधियोब्रह्मब्राह्मणयज्ञपुरुषलोकविदूषकाःप्रायेणभविष्यंति ११

अथसर्वलोकपालश्रेष्ठः भगवान्ऋषभदेवः जडवत्अवधूतवेषचरितैः अलक्षितस्वभावःयोगिनां देहत्यागप्रकारंदर्शयन् स्वकलेवरंजिहासुः कोंकवेंककुटकान्दक्षिणक
र्णाटकान्यदृच्छयाप्राप्तः सन् कुटकाचलोपवने आस्येकृताश्मकवलः उन्मत्तइवमुक्तकेशः नग्नइवविचचार ६ ७ ८ अथसमीरवेगेनवेणुविघर्षणजाताग्निः तद्वनंसर्वतो
ग्रसन्ऋषभेनसहवनं ददाह ९ अथऋषभाचरितं श्रुत्वा तद्देशानांअर्हन्नामराजास्वधर्मं अपहायकुपथपाखंडंस्वबुद्ध्याप्रवर्तयिष्यति १० येनपाखंडेन तद्देशीयाः जनाः
वेदब्राह्मणयज्ञादिविदूषकाः भविष्यंति ११

[illegible] ... विकुंठमत्वाद्वियमातिस्तुतिरेवेत्याशंक्याह । हेराजन् भक्तानां पांडवा
[illegible] निर्मिता । किंबहुनाकचकदाचित् दौत्यप्रेषणे पांडवानां किंकरोपिआज्ञानुवर्ती अस्तुनामैवं । (२
[illegible] मेयथाभक्तियोगमयम् । १९ वर्णितमृषभावतारंनमस्करोति । नित्यमनुभूतंयन्निजंरूपंसएवलाभः तेननिवृत्तातृष्
द्धिर्यस्यतस्यजनस्यकरुणयानिर्भयमात्मस्वरूपंयआख्यातवान्तस्मैनमः २० ॥ इतिपंचमस्कंधेटीकायांषष्ठोध्याय·
नमतः प्रस्तूयतेऽद्भुतम् ॥ १ ॥ सप्तमेभरतोराज्येचिरयज्ञैर्हरिंयजन् । आरब्धकर्मनिर्वाणेहरिक्षेत्रेऽभजद्धरिम् ॥ २ ॥ (२

[illegible] स्मातस्तदनुज्ञा । [illegible] । [illegible]
आचाराधेयमर्थं भजतां [illegible]
रेणदेहःप्रचलन्मनोरथेनश्रेयसिविषये चिरंसुप्ता
कादीन्देशान् यान्नमीरितम् । अष्टमेभरताख्या
८ अथसमीरवे संकल्पेनेवराज्यादौनियुक्तः ( अ

भिषिक्तइतिवा । "संचिताचर्यायामभिषेचने"इत्युत्पलमालायामभिधानात् (तदा) यऋषभस्यानुशासनमाज्ञातत्परः पंचजनीं [illegible] पुत्रीं परिणीतवान्) १ आत्मनोऽनुरूपान्
भूतादिरहंकारइवभूतसूक्ष्माणि ( शब्दादीनिपंच) संततिबुद्धौदृष्टांतः २ ( पूर्वंअजनामसंज्ञमपियतआरभ्य ) भारतमिति ( अभिदधते ) स्वनाम्नास्यख्यापकत्वेन ( भरतस्य ) धर्मो
द्यतिशयः सूचितः ३ बहुवित्सर्वज्ञः ( उरुवत्सलतयामहताप्रेम्णेनपालयामास । ) ४ यज्ञाअयूपाःक्रतवः सयूपाः तद्रूपं ( भगवंतं ) उच्चावचैर्महद्भिरल्पैश्चक्रतुभिःकर्मभिः श्रद्धयाईजेच
तानेवाह आहृता स्वाधिकारेणात्मसात्कृताः येग्निहोत्रादयस्तेषां प्रकृतिविकृतिभिः अग्निहोत्रादयोद्विविधाः सकलांगयुक्ताः प्रकृतयः विकलांगाविकृतयइतितैर्द्विविधैरपीष्ट्वानित्य
र्थः अनुसवनमित्यंतं वा चातुर्होत्रविधिनेत्यंतंवा मध्यं ( सर्वारोहोतारोयत्रतेनविधिना ) ५

राजन्पतिर्गुरुरलंभवतांयदूनांदैवंप्रियःकुलपतिःक्वचकिंकरोवः ॥ अस्त्वेवमंगभगवान्भजतांमुकुंदोमुक्तिंददातिकर्हिचित्स्मनभक्तियोगम् १९ नित्यानुभूत
निजलाभनिवृत्ततृष्णःश्रेयस्यतद्रचनयाचिरसुप्तबुद्धेः ॥ लोकस्ययःकरुणयाऽभयमात्मलोकमाख्यान्नमोभगवतेऋषभायतस्मै २० ॥ इतिश्रीमद्भागवते
म०पंचमस्कंधेऋषभदेवानुचरितेषष्ठोध्यायः ॥ ६ ॥ श्रीशुकउवाच ॥ भरतस्तुमहाभागवतोयदाभगवताऽवनितलपरिपालनायसंचिंतितस्तदनुशास
नपरःपंचजनींविश्वरूपदुहितरमुपयेमे १ तस्यामुहवाआत्मजान्कार्त्स्न्येनानुरूपानात्मनःपंचजनयामासभूतादिरिवभूतसूक्ष्माणि २ सुमतिंराष्ट्रभृतंसु
दर्शनमावरणंधूम्रकेतुमितिअजनाभंनामैतद्वर्षंभारतमितियतआरभ्यव्यपदिशंति ३ सबहुविन्महीपतिःपितृपितामहवदुरुवत्सलतयास्वेस्वेकर्मणिवर्तमा
नाःप्रजाःस्वधर्ममनुवर्तमानःपर्यपालयत् ४ ईजेचभगवंतंयज्ञक्रतुरूपंक्रतुभिरुच्चावचैःश्रद्धयाहृताग्निहोत्रदर्शपूर्णमासचातुर्मास्यपशुसोमानांप्रकृतिविकृ
तिभिरनुसवनंचातुर्होत्रविधिना ५

१९ यःऋषभः करुणयालोकस्यआत्मस्वरूपमाख्यातवान् तस्मैनमोस्तु २० ॥ इतिपंचमेषष्ठः ॥ ६ ॥ श्रीशुकउवाच ॥ भरतस्तुमहाभागवतः यदास्वपित्रा ऋषभेणपृथ्वी
पालनाय नियुक्तः तदा तदाज्ञापरोभूत्वा पंचजनीं विश्वरूपदुहितरं उपयेमे १ तस्यां सुमतिं १ राष्ट्रभृतं २ सुदर्शनं ३ आवरणं ४ धूम्रकेतुं ५ इतिपंचपुत्रान् जनयामास २
किंचयस्यनाम्नापूर्वंअजनाभवर्षंतद्भारतमितिव्यपदिशंति ३ एवंभूतो राजा भरतः स्वधर्मनिष्ठाः प्रजाः पितृवत् पालयामास ४ यज्ञेश्वरंहरिं सर्वैः क्रतुभिः निष्कामत्वेनईजे ५

( अत्र ) आश्रमसंस्थानामित्युभयतः उपर्यधश्चनाभिराकारविशेषोयेषांतैः ...चक्रैः शिलाभिश्चमतैश्चक्रैश्चक्रनदीभि... त्रीकरोति १० एकलः एकः आराधनंसमीहमानः
तुलसिकांबुभिःविविक्तःशुद्धः अतएवउपरतोविषयाभिलाषोयस्य । उपभृतः संवृद्धउपशमोयस्य ११ प्रवर्धमानानुरागस्यभ हृदयंतस्मिन्शैथिल्यमनुग्रहोयस्य । आत्मनि
हेउद्भिद्यमानंरोमपुलककुलंरोमांचवृंदंयस्य । ककारः समासांतः औत्कंठ्यात्प्रवृत्तेनप्रणयबाष्पेणप्रेमाश्रुणानिरुद्धे नयस्यसः एवंकर्तुमशक्तस्तामपिभगवत्सपर्यांनसस्मा
रेत्यन्वयः तत्रहेतुः निजरमणस्यस्वप्रेमदातुर्येअरुणेचरणारविंदेतयोरनुध्यानेनपरिचितः समृद्धोभक्तियोगस्तेनपरि... ः परमाह्लादः परमानंदोयस्मिन्गंभीरहृदयह्रदेत
स्मिन्अवगाढानिमग्नाधिषणायस्य १२ धृतानिभगवद्व्रतानि ( भगवत्परिचर्यानियमा ) येनसभगवंतंसूर्यमंडलेऽभ्युपतिष्ठन् ... चेत्यन्वयः । कीदृशः । एण्याहरिण्याअजिनमैणेयंत
देववासस्तेनअनुसवनाभिषेकेनार्द्राःकपिशाश्चयाः कुटिलाजटास्तासांकलापेनचविरोचमानः सूर्यप्रकाशिकयाऋचा । हिरण्मयं "ध्येयःसदासवितृमंडलमध्यवर्ती" इत्यादिनोक्तं ( सूर्यवि
बे ) उज्जिहानेउद्गच्छतिसतिसकारांतपाठेसप्रेतावत्पचाद्यच् । ... सएव १३ ( परोइत्येतदंतमव्ययंपरमित्यर्थेअथोइतिवत् ) परोरजः रजसःप्रकृतेः परं शुद्धसत्त्वात्मकंसवितुर्देव
स्यसूर्यस्यभर्गः स्वरूपभूततेजः जातवेदोधनंकर्मफलंयस्मात्तत्कर्मफलदमित्यर्थः अत्रहेतुः यत्मनसैव ( संकल्पेनैव ) इदंविश्वंजजानससर्ज पुनश्चअदः सृष्टंविश्वमंतर्यामिरूपेणप्र
विश्यप्राणं ( अभि ) कांसंतंहंसंजीवंसुरेतसाचिच्छक्त्याविचष्टेपश्यतिपालयतीत्यर्थः । नृषुसीदतिवर्तमानातिष्ठतीतिनृषत्बुद्धिः तस्याः रिंगि रिंगमानंतिरातीतिनृषद्रिंगिरा । "धाडं
दासि" इत्यमिपूर्वरूपत्वाभावः । तद्भर्गंवयं शरणंव्रजामः १४ ॥ ॥ इतिश्रीभागवतेमहा०पंचमस्कंधेटीकायांसप्तमोऽध्यायः ॥ ७ ॥ ॥ ७ ॥

यत्राश्रमपदान्युभयतोनाभिभिर्दृषच्चक्रैश्चक्रनदीनामसरित्प्रवरासर्वतःपवित्रीकरोति १० तस्मिन्वावकिलसएकलःपुलहाश्रमोपवनेविविधकुसुमकिसलय
तुलसिकांबुभिःकंदमूलफलोपहारैश्चसमीहमानोभगवतआराधनंविविक्तउपरतविषयाभिलाषउपभृतोपशमःपरांनिर्वृतिमवाप ११ तयेत्थमविरतपुरु
षपरिचर्ययाभगवतिप्रवर्द्धमानानुरागभरद्रुतहृदयशैथिल्यः प्रहर्षवेगेनात्मन्युद्भिद्यमानरोमपुलककुलकऔत्कंठ्यप्रवृत्तप्रणयबाष्पनिरुद्धावलोकनयनएवं
निजरमणारुणचरणारविंदानुध्यानपरिचितभक्तियोगेनपरिप्लुतपरमाह्लादगंभीरहृदयह्रदावगाढधिषणस्तामपिक्रियमाणांभगवत्सपर्यांनसस्मार १२ इत्थं
धृतभगवद्व्रतऐणेयाजिनवाससाऽनुसवनाभिषेकार्द्रकपिशकुटिलजटाकलापेनचविरोचमानः सूर्यर्चाभगवंतंहिरण्मयंपुरुषमुज्जिहानेसूर्यमंडलेऽभ्युपतिष्ठन्ने
तदुहोवाच १३ परोरजःसवितुर्जातवेदोदेवस्यभर्गोमनसेदंजजान ॥ सुरेतसादःपुनराविश्यचष्टेहंसंगृध्राणंनृषद्रिंगिरामिमः १४ ॥ ॥ इतिश्रीभा०
म०पं०भरतचरित्रेभगवत्परिचर्यायांसप्तमोऽध्यायः ॥ ॥ ७ ॥ ॥ ७ ॥

यत्राश्रमेउभयतःशालग्रामशिलाभिः चक्रनदीगंडकीसरित्श्रेष्ठासर्वतःपवित्रीकरोति १० तत्राश्रमेविविधकुसुमकिसलयतुलसिकांबुभिः कंदमूलफलोपहारैश्चभगवत्पूजांकु
र्वन्भरतः परांनिर्वृतिमवाप ११ एवंअखंडपूजाभक्तियोगेन शिथिलहृदयः परमानंदमग्नः सन् क्रियमाणांपूजामपिनसस्मार १२ इत्थं धृतभगवद्व्रतः ऐणेयाजिनवा
साःअनुसवनाभिषेकार्द्रकापिशकुटिलजटाकलापः सन् सूर्येउदितेसति हिरण्मयं पुरुषं उपतिष्ठन् एतदुवाच १३ सूर्यस्यसर्वकर्मफलदंजगदुत्पत्तिस्थितिसंहारकरंतेजःप्र
तिवयंशरणंव्रजामः १४ ॥ इतिपंचमेसप्तमः ॥ ७ ॥

अष्टधेभजतोविष्णुंतस्यकर्मांतरायतः । एणरक्षाप्रसक्तस्यजावमेणत्वमीर्यते॥१॥कृपयापिकृतः संगः पतनायैवयोगिनःइतिप्रदर्शयन्नाहभरतस्यैणपोषणम्॥२॥नैयामिकंनित्यंनैमित्तिकवि
धिप्राप्तंआवश्यकंअर्थप्राप्तंमूत्रोत्सर्गादि । ( अत्रक्रमोऽविवक्षितः । अभिषेकः स्नानं ) कृतमभिषेकादिकंयेन । ब्रह्माक्षरंप्रणवंजपन्उदकांतेनद्यास्तीरे १ जलाशयाभ्याशं नद्याः समी
पे २ पेपीयमानेअत्यासक्तयापीयमानेसतितावदेवतत्क्षणेवअविदूरेणसन्निधौमृगपतेः सिंहस्यउन्नादोमहानादः उद्गतः ३प्रकृत्यास्वभावतएवविक्लवाव्याकुलासुतरांतुसिंहभयस्याभिनिवे
शेनअभिनिविष्टत्वेनव्यग्रंव्याकुलंहृदयंयस्याः पारिप्लवदृष्टिः परिभ्रांतनेत्रानगतातृषातृड्यस्याः उच्चक्रामनदीमुल्लंघितवती ४ अंतर्वत्न्यागार्भिण्याः उरुभयेनस्थानाद्विचालितोयोनेर्निर्गतः
सन् गर्भः स्रोतसिप्रवाहेनिपतितः ५ प्रसवोगर्भपातः उत्सर्पणमुल्लंघनं भयं ( सिंहात् खेदोगर्भनाशात् ) तैस्तैरातुरापीडिता ( स्वगणेनचरहितएकाकिनीसती ) दर्यांगिरिगुहायांह
रिणवधूः पपातअथानंतरं ( एव ) मृताच ६ एणकुणकं हरिणबालकं स्रोतसानीयमाने अपविद्धंबंधुभिस्त्यक्तंइतिएतैः करुणत्वादिहेतुभिः याऽनुकंपा तयाऽनयत् ७ कृतोनिजः स्वी
यइत्यभिमानोयेन । पोषणंतृणादिना । पालनंवृकादिभ्योरक्षणम् । प्रीणनंकंडूयनादिना । लालनं चुंबनादिना । एतैर्यदनुध्यानमासक्तिस्तेन आत्मनोनियमाः स्नानादयः यमाअहिं
सादयस्तत्सहिताः । ईश्वरपरिचर्यादयश्चप्रत्यहमेकैकशोवियुज्यमानाः संतः कतिपयेनाहर्गणेनसर्वेउत्सन्नाबभूवुः ८

॥ श्रीशुकउवाच ॥ ॥ एकदातुमहानद्यांकृताभिषेकनैयामिकावश्यकोब्रह्माक्षरमभिगृणानोमुहूर्तत्रयमुदकांतउपविवेश १ तत्रतदाराजन्हरिणीपिपासया
जलाशयाभ्याशमेकैवोपजगाम २ तयापेपीयमानउदकेतावदेवाविदूरेणनदतोमृगपतेरुन्नादोलोकभयंकरउदपतत् ३ तमुपश्रुत्यसामृगवधूः प्रकृतिविक्ल
वाचकितनिरीक्षणासुतरामपिहरिभयाभिनिवेशव्यग्रहृदयापारिप्लवदृष्टिरगततृषाभयात्सहसैवोच्चक्राम ४तस्याउत्पतंत्याअंतर्वत्न्याउरुभयावगलितोयोनि
निर्गतोगर्भःस्रोतसिनिपपात ५ तत्प्रसवोत्सर्पणभयखेदातुरास्वगणेनवियुज्यमानाकस्यांचिद्दर्यांकृष्णसारसतीनिपपातअथचममार ६ तंत्वेणकुणकंकृपणं
स्रोतसाऽनूह्यमानमभिवीक्ष्यापविद्धंबंधुरिवानुकंपयाराजर्षिर्भरतआदायमृतमातरमित्याश्रमपदमनयत् ७ तस्यहवाएणकुणकेउच्चैरेतस्मिन्कृतनिजाभिमा
नस्याहरहस्तत्पोषणपालनलालनप्रीणनानुध्यानेनात्मनियमाःसहयमाःपुरुषपरिचर्यादयएकैकशःकतिपयेन [illegible] केनवियुज्यमानाःकिलसर्वएवोदवसन् ८

॥ ॥ श्रीशुकउवाच ॥ ॥ एकदागंडकयांकृताभिषेकनैयामिकावश्यकः ब्रह्माक्षरंगृणन्मुहूर्तत्रयंनद्यास्तीरेउप [illegible] न्हरि [illegible] गर्भिणीहरिणी पिपासयाजलस
मीपेआजगाम तयापेपीयमाने उदके तदैवसमीपेसिंहस्यभयंकरः शब्दः अभूत् २ साहरिणी सिंहभये [illegible] अस्मिन्सूर्येस्तमितेसंश्रितवती ३ तदाअंतर्व
त्न्याः तस्याःउड्डाणसमये योनिनिर्गतः गर्भः प्रवाहेनिपपात तदुःखेनआतुरासतीकस्यांचित्पर्वतदर्यां [illegible] १ हाविषिदूषितेसातिमयोकंपव [illegible] उह्यमानं
वीक्ष्यराजर्षिःभरतः मृतमातरमिति अनुकंपयास्वाश्रममानयत् ९ [illegible] स्वीयमित्यभिमानेन [illegible] तपश्च [illegible] सलः सन्पालयतिकिम् २४ ... बभूवुः ८

आसक्तिंप्रपंचयतिअहोइत्यादिनाइतिकृतानुषंगइत्येतत्पर्यंतेन । ( वं... त्रद । ) ईश्वररथचरणः कालचक्रं [illegible] समूहः सुहृदोमित्रा
[illegible]कोभ्रातृभ्यस्तेभ्यो ) विश्रांजितः माइतिमांशरणंप्रापितः मामेव[illegible]तापित्रादिवृद्धत्वाउपेयायप्राप्तः यौथि [illegible] बांप्रश्यतीविद्वांसदुष्ट
[illegible] । (शरणागतोपेक्षायांदोषंचजानतामयानुष्ठेयम् । ) ९ वदेव[illegible] । नूनंहीति । ( एवंविधार्थेशरणागतर [illegible] ब्कित्वैव । मृगजहुनामृगा
पत्येनसह स्नेहेनानुबद्धंहृदयंयेनसः ११ स्नेहानुबंधमेवप्रपंचयति कुश[illegible]समित्यादिनास्वभयतीत्यंतेन । सालावृका [illegible] तेनसहवनंसमाविशाति १२ अ
तिशयितः प्रणयभरोयस्यतद्धृदयंयस्यसः ( विषक्तंक्षणमात्रंस्थितमित्यर्थः । ) १३ क्रियायांदेवपूजादिलक्षणायां ( [illegible] वउत्थाय ) सवर्षपतिर्भरतः ( एनं
पश्यतितदेव ) प्रकृतिस्थेनस्वस्थेनस्तात्भूयात् १४ अन्यद[illegible]शंकालेसकरुणं यथाभवत्येवमनुशोचन् इतिहोवाचेत्यन्[illegible]यौत्सुक्येन । हरिणबालविरहेण विह्वले
हृदयेसंतापोयस्य । कश्मलंमोहं (अभिरंभितः) प्रापितः स[illegible] अपीतिसंभावनायां बतेत्यनुकंपायां । अहोइतिखेदे । शठकिरातयोरिववंचनपरा क्रूराचमतिर्यस्य । अकृतसुकृतस्य
निर्भाग्यस्यममतच्छाठ्यादिकमपराधजातमगणयन्नचिंतय[illegible] ष्यतिकिं । तदचिंतनेहेतुः आत्मप्रत्ययेनस्वचित्तशुद्ध्याकृतविश्वासः सन् । सुजनइवसज्जनोयथानगणयतितद्वत् १६

अहोबतायंहरिणकुणकः कृपणईश्वररथचरणपरि[illegible]णस्वगणसुहृद्बंधुभ्यःपरिवर्जितः शरणंचमोपसादितोमामेवमातापितरौभ्रातृज्ञातीन्यौथिकांश्चैवो
पेयायनान्यंकंचनवेदमय्यातिविस्रब्धश्चात एवमयामत्परायणस्यपोषणपालनप्रीणनलालनमनसूयुनाऽनुष्ठेयंशरण्योपेक्षादोषविदुषा ९ नूनंह्यार्याःसाध
वउपशमशीलाः कृपणसुहृदएवंविधार्थेस्वार्थानपिगुरुतरानुपेक्षंते १० इतिकृतानुषंगआसनशयनाटनस्थानाशनादिषुसहमृगजहुनास्नेहानुबद्धहृदयआ
सीत् ११ कुशकुसुमसमित्पलाशफलमूलोदकान्याहरिष्यमाणोवृकसालावृकादिभ्योभयमाशंसमानोयदासहहरिणकुणकेनवनंसमाविशाति १२ पथिषुचमु
ग्धभावेनतत्रतत्रविषक्तमतिप्रणयभरहृदयःकार्पण्यात्स्कंधेनोद्वहतिएवमुत्संगेउरसिचाधायोपलालयन्मुदंपरमामवाप १३ क्रियायांनिर्वर्त्यमानायामंत
रालेप्युत्थायोत्थाययदैनमभिचक्षीततर्हिवावसवर्षपतिःप्रकृतिस्थेनमनसा तस्माआशिषआशास्तेस्वस्तिस्ताद्वत्सतेसर्वतइति १४ अन्यदाभृशमुद्विग्नम
नानष्टद्रविणइवकृपणःसकरुणमतितर्षेणहरिणकुणकविरहविह्वलहृदयसंतापस्तमेवानुशोचन्किलकश्मलंमहदभिरंभितइतिहोवाच १५ अपिबतसवैकृपण
एणबालकोमृतहरिणीसुतोऽहोममानार्यस्यशठकिरातमतेरकृतसुकृतस्यकृतविश्रंभआत्मप्रत्ययेनतदविगणयन्सुजनइवागमिष्यतिकिम् १६

नूनंआर्याःकृपणसुहृदःएवंविधार्थेस्वार्थानपिउपेक्षंते अयंहरिणबालः मामेवमातापित्रादिवुद्ध्याप्राप्तः अतोवश्यंमयाअस्यपोषणादिकार्यम् ९ एवंतस्मिन्अतिस्नेहार्थानु
बद्धमनाःआसीत् १० ११ कदाचित्कुशकुसुमाद्याहरिष्यमाणः वृकादिभ्योभयंशंकमानः भवति तदामृगेणसहवनंविशाति १२ पथिमुग्धभावेनस्कंधेनउद्वहति ए
वंउत्संगेनिधायलालयन्परमांमुदंप्राप १३ कदाचित् हेवत्सतेस्वस्तिभूयात्एवमाशीः ददाति १४ एवंतस्मिन्आसक्ते सति सः हरिणबालकः किंचित् प्रौढः सन् पला
य्यगतः तदाहरिणवियोगेनमोहंप्राप्तः सन्इति होवाच १५ अयंएणबालकः निर्भाग्यस्यममशाठ्यादिकंनगणयन् एष्यतिकिम् १६

(क्षेमेणसुखेन) शष्पाणिकोमलतृणानि (खादंतंदेवेनरक्षितम्) १७ नैकचरोयूथचरः सूकरादिः यद्वा एकएवचरतियः क्रूरस्वभावोव्याघ्रादिर्नभक्षयतिकिम् १८ सकललोकस्यक्षेमोयस्मा
त्सउदयोयस्यसः त्रयीवेदत्रयमात्मास्वरूपं यस्यससूर्योनिम्लोचतिअस्तंयाति ।(अद्यापि) मृगवध्वान्यासोनिक्षेपभूतः १९ हरिणएवराजकुमारः आगत्य ( अकृतपुण्यमपि ) मांअपि
॥१५॥ स्वित्सुखयिष्यतीत्यन्वयः । किंकुर्वन् विविधैरुचिरैर्दर्शनीयैर्निजैर्मृगदारकविनोदैः स्वीयानांखेदमपनुदन् २० संभवतिचैतादित्याह । क्ष्वेलिकायांक्रीडायांमृषायः समाधिस्तेनामीलिते ॥ ८ ॥
ईषन्निमीलितेदृशौयेनतंमांप्रेमसंरंभेणप्रणयकोपेनपृषत्जलबिंदुः तद्वदपरुषेणमृदुनाविषाणाग्रेणलुठतिसंघट्टयति २१ आसादितंनिहितंहविर्यस्मिन्तस्मिन्बर्हिषिदर्भेदंताकर्षणादिना
चापलेनदूषितेसति । दूषित्वेतिपाठेबर्हिषिविषयेदूषणंकृत्वेत्यर्थः । मयाधिक्षिप्तः सन् तत्क्षणमेवोपरतक्रीडोनिश्चलआस्ते २२ इतिबहुधाप्रलप्योत्थायबहिर्निर्गत्यतत्खुरखातभूभागो
पलंभसंभ्रांतहृदयआह किंवेति । अरेअहोअनयाक्षित्याकिंवातपआचरितम् । तपस्विन्यासभाग्यया । यत्यस्मादियंसविनयस्यकृष्णसारतनयस्यमृगबालस्यतनुतराः सूक्ष्माः सुभगा
श्चसुंदराः शिवतमाः सुखकराश्चाखरा ( मृदवश्च ) खुरायेषुतेषांपदानांतत्रतत्रांकितानांपंक्तिभिः द्रविणंधनंमृगलक्षणंतेनराहितस्यअतएवातुरस्यदुःखितस्यममद्रविणमार्गंसूचयंतीसती
स्वात्मानंचताभिः कृतमंडनंद्विजानांयज्ञभूमिंकरोति "यस्मिन्देशेमृगःकृष्णस्तस्मिन्धर्मान्निबोधत" इति स्मृतेः२३ तावदुदितेचंद्रेमृगचिह्नंदृष्ट्वास्वमृगत्वंसंभावयन्नाह।अपिस्विदिति २४

अपिक्षेमेणास्मिन्नाश्रमोपवनेशष्पाणिचरंतंदेवगुप्तंद्रक्ष्यामि १७ अपिचनवृकःसालावृकोऽन्यतमोवानेकचरएकचरोवाभक्षयाति १८ निम्लोचातिहभग
वान्सकलजगत्क्षेमोदयस्त्रय्यात्माऽद्यापिममनमृगवधून्यासआगच्छति १९ अपिस्विदकृतसुकृतमागस्यमांसुखायिष्यातिहरिणराजकुमारोविविधरुचिरदर्श
नीयनिजमृगदारकविनोदैरसंतोषंस्वानामपनुदन् २० क्ष्वेलिकायांमांमृषासमाधिनाऽऽमीलितदृशंप्रेमसंरंभेणचकितचकितआगत्यपृषदपरुषविषाणाग्रे
णलुठति२१आसादितहविषिबर्हिषिदूषितेमयोपयखेदानोतभीतःसपद्युपरतरासऋषिकुमारवदवहितकरणकलापआस्ते २२ किंवाअरेआचारितंतपस्तप
स्विन्याऽनयायदियमवनिः सविनयकृष्णसारतनयतनुतरसुभगशिवतमाखरखुरपदपंक्तिभिर्द्रविणविधुरातुरस्यकृपणस्यममद्रविणपदवींसूचयंत्यात्मानंच
सर्वतःकृतकौतुकंद्विजानांस्वर्गापवर्गकामानांदेवयनांकरोति २३ अपिस्विदसौभगवानुडुपतिरेनंमृगपतिभयान्मृतमातरंमृगबालकंस्वाश्रमपरिभ्रष्टमनु
कंपयाकृपणजनवत्सलःपरिपाति ॥ २४ ॥

किंच अस्मिन्आश्रमेकोमलतृणानिचरंतंदेवगुप्तं द्रक्ष्यामिकिम् १७ अपिच एनंवृकादयः नभक्षयिष्यंति [illegible] तदाआवे [illegible] अस्मिन्सूर्येस्तमितेयाति अयंमेमृगवधून्यासः
एष्यतिकिम् १९ किंच हरिणराजकुमारःआगत्यमांसुखयिष्यतिकिम् २० अहोक्रीडायांमामृदुविषाणा [illegible] इदरू [illegible] हविषिदूषितेसतिमयाअधिक्षिप्तः सन्निश्च ॥१५॥
लःआस्ते २२ इतिबहुधाप्रलप्यतावत्उदितेचंद्रेमृगं [illegible] २३ अहोअसौचंद्र [illegible] तपश्च [illegible] सलः सन्पालयतिकिम् २४

चंद्ररश्मिस्पर्शसुखंप्राप्याह । किंवेतिसंभावनायाम् । आत्मजविश्लेषणज्वरस्तापः सएवदावदहनः तस्यज्वालाभिरुपतप्यमाना हृदयरूपास्थलनलिनीयस्य । अन्वस्थंपद्मंतापंसोढुंसमर्थमि तिस्थलग्रहणम् । उपसृतोलब्धोमृगीतनयोयेनतंमांचंद्रः स्वयतिशांतिंगमयति । कैःशिशिरवच्छांतंचमय्यनुरागेणगुणितंच आवर्तितंपुनःपुनःस्रवत्यन्निजवदनसलिलंतदेवामृतमयाग मस्तयः किरणास्तैः । लोकेहिमंत्रवादिनोवदनसलिलस्तापंशमयंतीतिप्रसिद्धम् । उपसृत्यमृगीतनयइतिपाठेमनोरथांतरमेतत् । उपसृत्यमृगीतनयः उक्तविधैर्गभस्तिभिः किंवामां स्वधयिष्यतीति । शेषंसमानम् २५ ( एवमघटमानेन सिद्धिमगच्छतामनोरथेन मृगाशालक्षणेन आकुलंहृदयंयस्यसः ) मृगदारकवदाभासमानेन । ( नायंमृगदारकः किंतुतद्रूपे णस्वारब्धकर्मैवफलितमित्यर्थः तेन ) भगवदाराधनलक्षणात् कर्मणश्च्यवि ... धकर्मत्वेहेतुः । कथमित्यादि । इतरथा ( प्रारब्धकर्माभावे ) साक्षात्स्वपुत्रवत्कथमासंगः स्यात् । ( मोक्षस्याविघ्नत्वेनहेतुना ) पूर्वपरित्यक्ताहुस्त्यजाऔरसाधेनतस्य ... णविघ्नेन विहतंयोगारंभणंयस्य ( तस्य ) आत्मानमविगणयतः आत्मचिंतामकुर्वतः तावदे वतीव्रवेगः कालोमृत्युमयश्चदुस्तर आपद्यत २६ लोकंदेहंमृगेणसहितं विसृज्यप्राकृतइवमृगशरीरमवाप कथंभूतः कलेवरंमृतमनुनमृतानविनष्टा पूर्वजन्मानुस्मृतिर्यस्य २७ ( भगव दाराधनस्यसमीहा अनुष्ठानंतत्सामर्थ्येन । आहस्वाचिते २८

किंवाऽत्मजविश्लेषज्वरदवदहनशिखाभिरुपतप्यमानहृदयस्थलनलिनींकंमामुपसृतमृगीतनयंशिशिरशांतानुरागगुणितनिजवदनसलिलामृतमयगभस्ति भिः स्वधयतीतिच २५ ॥ ॥ श्रीशुकउवाच ॥ ॥ एवमघटमानमनोरथाकुलहृदयोमृगदारकाभासेनस्वारब्धकर्मणायोगारंभणतोविभ्रंशितः सयोगता पसोभगवदाराधनलक्षणाचकथमितरथाजात्यंतरएणकुणकआसंगः साक्षान्निःश्रेयसप्रतिपक्षतयाप्राक्परित्यक्तदुस्त्यजहृदयाभिजातस्यतस्यैवमंतरायवि हतयोगारंभणस्यराजर्षेर्भरतस्यतावन्मृगार्भकपोषणपालनप्रीणनलालनानुषंगेणाऽविगणयतआत्मानमहिरिवाखुबिलंदुरतिक्रमः कालःकरालरभसआपद्य त २६ तदानीमपिपार्श्ववर्तिनमात्मजमिवानुशोचंतमभिवीक्षमाणोमृगएवाभिनिवेशितमनाविसृज्यलोकमिमंसहमृगेणकलेवरंमृतमनुनमृतजन्मानुस्मृतिरि तरवन्मृगशरीरमवाप २७ तत्रापिहवाआत्मनोमृगत्वकारणंभगवदाराधनसमीहाऽनुभावेनानुस्मृत्यभृशमनुतप्यमानआह २८

२५ एवंअघटमाननमनोरथाकुलहृदयः स्वारब्धकर्मणांभगवदाराधनलक्षणात्कर्मणः भ्रंशितःअन्यथाजात्यंतरेकथंसंगःस्यात् एवं तस्यपोषणपालनादिना आ त्मचिंतां अकुर्वतःभरतस्यसःकालःप्राप्तः २६ तदानीमपि आत्मजमिवपार्श्ववर्तिनंशोचंतंवीक्ष्यमृगेएवआवेशितमनाः मनुष्यदेहंहित्वामृगशरीरं आप पूर्वजन्मा नुस्मृतिः तस्यभगवदाराधनात् आसीत् २७ एवमात्मनः मृगरूपप्राप्तिकारणं ज्ञा. त्वा तप्यमानो भरतः आह २८

अहोकष्टं धीराणांमार्गात्भ्रष्टोहम् । भ्रंशमेवाह यद्यतः विमुक्ताः समस्ताः संगा येन । विविक्तं शुद्धंजनरहितंवापुण्यसाधनभूतंपुण्यरूपंवाअरण्यं शरणं ( आश्रयो ) यस्य आत्मवतो धीरस्यममनः सर्वेषांभूतानामात्मनिवासुदेवेसमावेशितं समाहितंचनिश्चलं सत् आरा... दराद्वसुस्रावगलितंनिःसृतं । केनसमावेशितंतदाह । तस्यानुश्रवणादिष्वभियोगेन अभिनिवेशेनअशून्याः सकलायामायस्मिन् तेनकालेन २९ निगूढोऽनाविष्कृतो निर्वेदोयेन । शालवृक्षोपलक्षितग्रामं कालंजरात् यत्रहरिणजन्मप्राप्तं तस्मात्पर्वतात् ३० आत्मैवसहचरो यस्यसएकाकी । ( वर्तमानोवृत्तिंकुर्वाणः ) कालप्रतीक्षायाएवप्रपंचः मृगत्वनिमित्तेति ( मृगत्वनिमित्तस्यप्रारब्धस्यावसानंचिंतयन् ) तीर्थोदकेनक्लिन्नमार्द्रम् । अर्धोदकस्थमित्यर्थः ३१ ॥ इतिपंचमस्कंधेटीकायामष्टमोध्यायः ॥ ८ ॥ नवमेजडविप्रत्वेतस्यरागाद्यभावतः । भद्रकालीपशुत्वेपिनिर्विकारत्वमीर्यते ॥ १ ॥ पितुःप्राप्तात्मविज्ञानोभरतोमृगतांगतः । प्रारब्धकर्मवेगेनतदंतेजडविप्रताम् ॥ २ ॥ ( आंगिरसां ) आंगिरसगोत्रजानां ( प्रवरस्य ) श्रेष्ठस्यशमादियुक्तस्य ( तपः कृच्छ्रादि । ) त्यागोऽतिथ्यादिभ्योऽन्नदानादिःविद्याकर्मविद्या । आत्मज्ञानंदेहादिव्यतिरिक्तभोक्त्रात्मज्ञानं आनंदोधर्मसंपत्तिजः । आत्मनासदृशाः श्रुतादयोगुणायेषांते सोदर्याः समानोदराः ( एकस्यामातुरुदरजातत्वात् । ) नवपुत्राबभूवुः । यवीयस्यांकनिष्ठायांच मिथुनंस्त्रीपुरुषयुग्मम् १ उत्सृष्टंमृगशरीरंयेनतम् ( चरमशरीरेणअंत्यदेहेन ) । २

अहोकष्टंभ्रष्टोऽहमात्मवतामनुपथाद्यद्विमुक्तसमस्तसंगस्यविविक्तपुण्यारण्यशरणस्यात्मवतआत्मनिसर्वेषामात्मनांभगवतिवासुदेवेतदनुश्रवणमननसंकीर्तनाराधनानुस्मरणाभियोगेनाशून्यसकलयामेनकालेनसमावेशितम् समाहितंकार्त्स्न्येनमनस्तत्पुनर्ममाबुधस्यारान्मृगसुतमनुपरिसुस्राव २९ इत्येवंनिगूढनिर्वेदोविसृज्यमृगीमातरंपुनर्भगवत्क्षेत्रमुपशमशीलमुनिगणदयितंशालग्रामंपुलस्त्यपुलहाश्रमंकालंजरात्प्रत्याजगाम ३० तस्मिन्नपिकालंप्रतीक्षमाणः संगाच्चभृशमुद्विग्नआत्मसहचरः शुष्कपर्णतृणवीरुधावर्तमानोमृगत्वनिमित्तावसानमेवगणयन्मृगशरीरंतीर्थोदकक्लिन्नमुत्ससर्ज ३१ इतिश्रीभागवतेमहापुराणेपंचमस्कंधेभरतचरितेऽष्टमोऽध्यायः ८ ॥ ॥ श्रीशुकउवाच ॥ ॥ अथकस्यचिद्द्विजवरस्यांगिरःप्रवरस्यशमदमतपःस्वाध्यायाध्ययनत्यागसंतोषतितिक्षाप्रश्रयविद्याऽनसूयात्मज्ञानानंदयुक्तस्यात्मसदृशश्रुतशीलाचाररूपौदार्यगुणानवसोदर्याअंगजाबभूवुर्मिथुनंचयवीयस्यांभार्यायाम् १ यस्तुतत्रपुमांस्तंपरमभागवतंराजर्षिप्रवरंभरतमुत्सृष्टमृगशरीरंचरमशरीरेणाविप्रत्वंगतमाहुः २

अहोकष्टंभ्रष्टोहंमृगसंगेनभगवदाराधनादित्यादिजातनिर्वेदः मृगीमातरं विसृज्य पुनः कालंजरात् पुलस्त्याश्रममाजगाम २९ ३० तस्मिन्नपिकालंप्रतीक्षमाणः संगात् भीतः एकएवशुष्कपर्णादिभक्षयन् कालेनमृगशरीरंतीर्थोदकक्लिन्नंउत्ससर्ज ३१ ॥ इतिपंचमेअष्टमः ॥ ८ ॥ श्रीशुकउवाच ॥ अथकस्यचित्अंगिरःप्रवरस्यअत्मज्ञानानंदयुक्तस्यद्विजस्यनवपुत्राः बभूवुः कनिष्ठभार्यायांमिथुनंचजातम् १ यःतत्र पुमान् तं परमभागवतंभरतं त्यक्तमृगशरीरं चरमेणशरीरेणविप्रत्वंगतमित्याहुः २

तत्रापिस्वजनाद्यन्यसंगादतिशयेनउद्विजमानोबिभ्यत् आत्मनोभ्रंशमाशंकमानश्च आत्मानमुन्मत्तादिरूपेणलोकस्यदर्शयामासेत्यन्वयः किंकुर्वन् । कर्मबंधस्यनाशकंश्रवणंस्मरण गुणानांविवरणंकथनंचयस्यतथाभूतंभगवतश्चरणारविंदयुगलंमनसाविशेषेणधारयन् । प्रतिघातशंकायांहेतुः अनुस्मृतास्वीयपूर्वजन्मनामावलिः परंपरायेनसः ३ पुत्रस्नेहेअनुबद्धंमनो यस्य ( स विप्रः । ) जडस्यगार्हस्थ्यानधिकारात्समावर्तनातानेवसंस्कारानविदधानः तमुपनीयउपनीतस्यचपुनः शौचादीनतस्यानभिप्रेतानपिशिक्षितवान् । तत्रहेतुः । अनुशिष्टेन हिभाव्यं पितुःसकाशात्पुत्रेणेति ४ सोपिचपितुः शिक्षानिर्बंधनिवृत्तये ( यत्पित्राशिक्षितंतत् ) असध्रीचीनमसमीचीनमिवकरोतिस्म । ( अन्यथाचरतिस्मेत्यर्थः इवशब्देनज्ञानिनः कामचारेणनदोषायेतिसूचितम् ) उपाकरणवेदव्रताद्यनंतरंश्रावणादिमासेषुवेदानध्यापयिष्यन् आदौतावत् व्याहृतिभिःसहप्रणवशिरःसहितांत्रिपदीं(ग्रीष्मवसंतसंबंधिनः) चैत्रादिचतु रोमासान्अधीयानमप्यसमवेतरूपं ( असमंजसरूपं ) यथाभवत्येवंग्राहयामास । ( चैत्रादिमासचतुष्टयपर्यंत- )-मधीतमपिस्वरानुपूर्व्यादियुक्तंव्याहृत्याद्यपितस्यनागतमित्यर्थः ५ ( आत्ममूतेस्वतनुजेअनुरागेणावेशितंचित्तंयेन । शौचादीनियान्यौपकुर्वाणकस्यसावधिब्रह्मचर्यव्रतः कर्माणितेनानभियुक्तानिअनादृतान्यपितंपुत्रंप्रत्यनुशास्यापिअप्राप्तपुत्रपांडित्य मनोरथः स्वयंकालेनोपसंहृतः कालवशान्मृतइत्यर्थः अनुशासननिर्बंधेपुनः तमेवहेतुमाह । अनुशिष्टेनभाव्यंपुत्रेणेत्यमनुअयोग्यआग्रहोयस्य ६ सपत्न्यैसमर्प्यअनुसंस्थयाअनुमरणेन (सहगमनविधिनेत्यर्थः)सप्तम्यंतपाठेप्ययमेवार्थः७("त्रयाअग्निष्टोमेनस्वर्गकामोयजेत" इत्यादौयांपर्यवसितामविद्यां नतुब्रह्मविद्यायांतं)न्यवृत्संत निवर्तितुमैच्छन्निवृत्ताइत्यर्थः ८

तत्रापिस्वजनसंगाद्भृशमुद्विजमानोभगवतः कर्मबंधविध्वंसनश्रवणस्मरणगुणविवरणचरणारविंदयुगलंमनसाविदधदात्मनः प्रतिघातमाशंकमानोभगव दनुग्रहेणानुस्मृतस्वपूर्वजन्मावलिरात्मानमुन्मत्तजडांधबधिरस्वरूपेणदर्शयामासलोकस्य ३ तस्यापिहवाआत्मजस्यविप्रःपुत्रस्नेहानुबद्धमनाआसमावर्त नात्संस्कारान्यथोपदेशंविदधानउपनीतस्यचपुनःशौचाचमनादीन्कर्मनियमानभिप्रेतानपिसमशिक्षयत्अनुशिष्टेनहिभाव्यंपितुःपुत्रेणेति ४ सचापित दुहपितृसन्निधावेवासध्रीचीनमिवस्मकरोतिछंदांस्यध्यापयिष्यन्सहव्याहृतिभिः सप्रणवशिरस्त्रिपदींसावित्रींग्रैष्मवासंतिकान्मासानधीयानमप्यसमवेतरूपं ग्राहयामास ५ एवंस्वतनुजआत्मन्यनुरागावेशिताचित्तःशौचाध्ययनव्रतनियमगुर्वनलशुश्रूषणाद्यौपकुर्वाणककर्माण्यनभियुक्तान्यपिसमनुशिष्टेनभाव्यमि त्यसदाग्रहः पुत्रमनुशास्यस्वयंतावदनधिगतमनोरथः कालेनाप्रमत्तेनस्वयंगृहएवप्रमत्तउपसंहृतः ६ अथयवीयसीद्विजसतीस्वगर्भजातंमिथुनंसपत्न्या उपन्यस्यस्वयमनुसंस्थयापतिलोकमगात् ७ पितर्युपरतेभ्रातरएनमतत्प्रभावविदस्त्रय्यांविद्यायामेवपर्यवसितमतयोनपरविद्यायांजडमातरितिभ्रातु रनुशासननिर्बंधान्न्यवृत्संत ८

तत्रापिस्वजनसंगाद्भीतः सन् भगवच्चरणांबुजंध्यायन् उन्मत्तजडांधइवलोकस्यआत्मानंदर्शयामास ३ पितातस्यउपनयनांनान् संस्कारान् कृत्वा पुनः वेदान्अध्यापयि ष्यन् सः चतुरोमासान् सावित्रींअधीयमानमपिपुत्रंअप्राप्तमिवअपश्यत् ४ ५ एवंअनधिगतमनोरथः तस्यपिताकालेनमृतः ६ ततः पत्नीसपत्न्यांमिथुनंन्यस्यपतिलोकं अ गात् ७ एवंपितरिमृतेसति नवभ्रातरः अतत्प्रभावविदः अयंजडइतिनिश्चयंचक्रुः ८

यदाऽभिभाष्यमाणः ( संबोध्यमानः ) तदातदनुरूपाणि ( उन्मत्तादिवचनानुकूलवचनानि हेउन्मत्तेत्यादीनि ) प्रभाषते । मूल्यमंतरेणबलात्कर्मकार्यतेसाविष्टिः । वेतनंमूल्यं । ( यदृच्छास्वैरिता । ) विष्ट्यादिभिरुपसादितंअन्नंअभ्यवहराति परं भुंक्तेकेवलं । नात्विंद्रियप्रीतिनिमित्तं । ( नजिह्वादींद्रियतृप्तयेइत्यर्थः ) अत्रहेतुद्वयमाह । नित्यंसदानिवृत्तंनिमित्तंयस्मात् उत्पादकशून्यः स्वसिद्धः अभिव्यंजकशून्यः विशुद्धः एवंभूतः केवलोयोनुभवः सएवानंदरूपः स्वात्मातस्यलाभः एवंभूतोहामितिज्ञानंतस्याधिगमः प्राप्तिरास्तियस्य । द्वंद्वानिसन्मानावमानादीनि तद्धेतुकयोः सुखदुःखयोरकृतदहाभिमानः तस्मान्नेंद्रियप्रीतिनिमित्तमभ्यवहरतीत्यर्थः ९ अतएवशीतोष्णादिष्वनावृतांगः विचचारेत्यन्वयः कीदृशः पीनःपुष्टः संहननांगः संहन्यंतेनिविडीभवंतिस्मअंगानियस्य । कठिनावयवइत्यर्थः । स्थंडिलसंवेशनंभूमिशयनम् । अनुन्मर्दनम्उन्मर्दनाभावःअमज्जनंस्नानाभावः तैर्यद्रजःतेनाप्रकटं ब्रह्मवर्चसंब्राह्मंतेजोयस्य । यथारजसामहामणिरनभिव्यक्ततेजाभवाति कुत्सितेनपटेनावृताकटिर्यस्य । उरुमषिणाअतिमलिनेन । नतस्वतस्तंजानंतियेतैर्जनैरवमतः सन् १० यदातुपरेभ्यः कर्ममूल्येनाहारमपेक्षमाणो भवति तदाकेदारकर्मणि शालिक्षेत्रेकर्दमविलोडनादौ आहारप्रलोभनेननियुक्तः सन् तदपिकरोति । किंतुअत्रकर्दमस्यप्रक्षेपेक्षेत्रंसमंभवेत्इतउद्धरणे विषमंस्यात् इत्यादिनवेद । भ्रातृभिर्दत्तान् कणादीनप्यमृतवद्भुंक्ते । कणाश्चूर्णतंडुलाः पिण्याकंतैलयंत्रोद्धृतंतिलकिट्टम् । फलीकरणंतुषः । कुल्माषाः कीटदष्टामाषाः स्थालीपुरीषंस्थालीलग्नंदग्धान्नम् । ११ ॥ तस्यरागादिराहित्यमलौल्यंचैवमीरितम् । अथान्यच्चरितंप्राहचित्रंमृत्यावसंभ्रमम् ॥१॥ वृषलपतिः शूद्रसामंतश्चोरराजः आलभतआलब्धुंप्रवृत्तः १२

सचप्राकृतैर्द्विपदपशुभिरुन्मत्तजडबधिरेत्यभिभाष्यमाणोयदातदनुरूपाणिप्रभाषतेकर्माणिचसकार्यमाणःपरेच्छयाकरोतिविष्टितोवेतनतोवायाच्ञयायदृच्छयावोपसादितमल्पंबहुमिष्टंकदन्नंवाऽभ्यवहरतिपरंनेंद्रियप्रीतिनिमित्तम् ॥ नित्यनिवृत्तनिमित्तस्वसिद्धविशुद्धानुभवानंदस्वात्मलाभाधिगमः सुखदुःखयोर्द्वंद्वनिमित्तयोरसंभावितदेहाभिमानः ९ शीतोष्णवातवर्षेषुवृषइवानावृतांगः पीनः संहननांगः स्थंडिलसंवेशनानुन्मर्दनामज्जनरजसामहामणिरिवानभिव्यक्तब्रह्मवर्चसः कुपटावृतकटिरुपवीतेनोरुमषिणाद्विजातिरितिब्रह्मबंधुरितिसंज्ञयाऽतज्ज्ञजनावमतोविचचार १० यदातुपरतआहारंकर्मवेतनतईहमानः स्वभ्रातृभिरपिकेदारकर्मणिनिरूपितस्तदपिकरोतिकिंतुनसमंविषमंन्यूनमधिकमितिवेद कणपिण्याकफलीकरणकुल्माषस्थालीपुरीषादीन्यप्यमृतवदभ्यवहरति ११ अथकदाचित्कश्चिद्वृषलपतिर्भद्रकाल्यैपुरुषपशुमालभतापत्यकामः १२

सचद्विपदपशुभिः यदाभिभाष्यमाणः तदातदनुरूपाणिप्रभाषतेकिंचयाच्ञयापरेच्छयावाप्राप्तंबहुअल्पंमिष्टान्नंकदन्नंवाभुंक्ते निरभिमानः ९ कुपटावृतकटिः उरुमषिणोपवीतेनब्रह्मबंधुरितिसंज्ञया अज्ञैः अवमतः सन् विचचार १० यदाभ्रातृभिः केदारकर्मणिआहारप्रलोभेननियुक्तः सन् तदपिकरोतितथापिअत्रकर्दमस्य प्रक्षेपे इदं क्षेत्रं समंभवेत् इतः उद्धरणेविषमंस्यात् इतिनवेद किंच भ्रातृभिः दत्तकणपिण्याकतुषकीटदष्टमाषदग्धान्नादिकं भक्षयति ११ अथकदाचिच्चोरराजः अपत्यकामः सन्भद्रकाल्यै पुरुषपशुमालब्धुंप्रवृत्तः १२

दैवाद्बंधनविमुक्तस्य ( अर्थात्पलायितस्यतस्य ) पशोः ( पदवींमार्गंपरिधावंतःपरितःशोधयंतइत्यर्थः तस्यवृषलपतेरनुचराः ) तमसाऽऽवृतायां निशितत्रापिनिशीथसमयेअर्धरात्राव सरे आकस्मिकोदैवनिर्मितोविधिः प्रकारःतेन (अंगिरःप्रवरस्यसुतमपश्यन्) वीरासनेनऊर्ध्वावस्थानेन ( क्षेत्राणिसंरक्षमाणंपालयंतम् । ) १३ अवमृश्यज्ञात्वा ( रशनयारज्ज्वा ) १४ पणयश्चोराः ( स्वविधिनास्वागमोक्तमार्गेण । ) अहतेननूतनेन । उपस्कृतमलंकृतम् । ( किसलयःपल्लवः अंकुरोयवादीनाम् । ) वैशससंस्थयाहिंसाविधानेनगीतादिघोषेणसह १५ वृषलराजस्यपणिः पुरोहितत्वेनवर्तमानश्चोरः ( असृगासवेनरक्तरूपेणमद्येन । ) तदभिमंत्रितंभद्रकालीमंत्राभिमंत्रितम् १६ धनमदएवरजस्तेनोत्सिक्तंत्यक्तमर्यादं मनोयेषां भ गवत्कलायुक्तंवीराणांब्राह्मणानांकुलंतुच्छीकृत्य यथेच्छं वर्तमानानां ( अतिदारुणं ब्रह्मर्षिसुतस्यालंभनरूपं ) यत्कर्मतदुपलभ्य (सहसातत्क्षणम् ) देवीउच्चचाट प्रतिमांत्यक्त्वाबहि र्निर्गता । कथंभूतं तदालंभनम् । सूनायामपि ( अननुमतं । ) आपत्काले अनुज्ञातायामपिहिंसायामननुज्ञातम् । ( सर्वप्राणिहिंसका अपिब्राह्मणहिंसां नानुमन्यंतेहि । ) भद्रकाली त्यंतामिदंगद्यं १७

तस्यहदैवमुक्तस्यपशोः पदवींतदनुचराः परिधावंतोनिशिनिशीथसमयेतमसावृतायामनधिगतपशवआकस्मिकेनविधिनाकेदारान्वीरासनेनमृगवराहा दिभ्यः संरक्षमाणमंगिरःप्रवरसुतमपश्यन् १३ अथतएनमनवद्यलक्षणमवमृश्यस्वभर्तृकर्मनिष्पत्तिंमन्यमानाबध्वारशनयाचंडिकागृहमुपानिन्युर्मुदावि कसितवदनाः १४ अथपणयस्तंस्वविधिनाऽभिषिच्याहतेनवाससाऽऽच्छाद्यभूषणालेपस्रक्तिलकादिभिरुपस्कृतंभुक्तवंतंधूपदीपमाल्यलाजकिसलयां कुरफलोपहारोपेतयावैशससंस्थयामहतागीतस्तुतिमृदंगपणवघोषेणचपुरुषपशुंभद्रकाल्याः पुरतउपवेशयामासुः १५ अथवृषलराजपणिः पुरुषप शोरसृगासवेनदेवींभद्रकालींयक्ष्यमाणस्तदभिमंत्रितमसिमतिकरालनिशितमुपाददे १६ इतितेषांवृषलानांरजस्तमःप्रकृतीनां धनमदरजउत्सिक्तम नसांभगवत्कलावीरकुलंकदर्थीकृत्योत्पथेनस्वैरंविहरतांहिंसाविहाराणांकर्मातिदारुणंयद्ब्रह्मभूतस्यसाक्षाद्ब्रह्मर्षिसुतस्यनिर्वैरस्यसर्वभूतसुहृदः सूनायाम प्यननुमतमालंभनंतदुपलभ्यब्रह्मतेजसाऽतिदुर्विषहेणदंदह्यमानेनवपुषासहसोच्चचाटसैवदेवीभद्रकाली १७

ततःबलिदानकालेपलायितस्यपशोः पदवींगवेषयंतः तद्दूताः अर्धरात्रसमयेतं अप्राप्य अकस्मात्क्षेत्ररक्षणेस्थितंजडभरतं लब्ध्वा १३ रशनयातंबध्वा हर्षेणचंडिकागृहंनि न्युः १४ अथपणयः तंस्वविधिनाअभिषिच्यवस्त्रभूषणलेपस्रक्तिलकादिभिः उपस्कृतं भुक्तवंतंमहापूजयापूजितायाः भद्रकाल्याः अग्रेउपवेशयामासुः १५ अथचो रराजपुरोहितः पुरुषपशोः रक्तेनभद्रकालीं यक्ष्यमाणः निशितं खड्गंआददे १६ इतितेषांदुष्टानां अतिदारुणं कर्मदृष्ट्वा ब्रह्मभूतस्यब्राह्मणस्य वधं अयोग्यं मन्यमाना तेजोमयेनवपुषा सहसैव प्रतिमां हित्वा बहिर्निर्गता भद्रकाली १७

अमर्षोऽपराधासहनंरोपश्चवपुपोदाहनं तयोरावेशस्तस्यरभसेन बेगेन विलसितः उत्तंभितः भृकुटिलक्षणोविटपःशाखा कुटिलादंष्ट्राश्च अरुणानीक्षणानिच तेषामाटोपःसंभ्रमस्तेनातिभयानकंवदनंयस्याः इदंजगत् हंतुकामेवमहांतमट्टहासंकुर्वतीततःस्थानादुत्पत्य विवृक्णानि छिन्नानिशीर्षाणियेषां ( तेषांकंठात् ) गणेनपरिवारेणसह ( अतिपानेनयोमदस्तेन विह्वलासतीजगौ ) शिरांस्येवकंदुकानितेषांलीलयाचिक्रीडेव १८ ननुकथंदेव्याराधकानामेवं विपरीतंफलं तत्राह । एवमेवेति । महत्सुअभिचाररूपोऽतिक्रमः अपराधः ( साकल्येनआत्मनेकर्त्रेफलतिनत्वीपदपिपरस्मै ) १९ ननु संभावितमिदं एवंयन्मरणेप्यव्याकुलत्वंमारकेषुचक्रोधाभावइत्यादि । तत्राह नवाइति । ( स्वशिरश्छेदनेआपतितेप्यसंभ्रम इतियत् एतद्भागवतपरमहंसानांअद्भुतंनवेत्यन्वयः हेविष्णुदत्तेतिसंबोधनेनसंप्रति निश्चितेपिमरणेसंभ्रमरहितोगर्भेविष्णुनापरिरक्षितोभवानेवात्रदृष्टांत इति सूचितम् )विमुक्तोदेहाद्यात्ममात्रलक्षणः सुहृदोहृदयग्रंथिर्यैः । सर्वसत्त्वानां ( सर्वेषांभूतानां ) सुहृदआत्मानश्चयेतेषां । नचतेषांदहाद्यभिमानसद्भावेपिमरणादिभयमस्तीत्याह साक्षाद्भगवताऽभितोरक्ष्यमाणानाम् । केन । आनिमिषःकालःसएवअरिः ( सुदर्शनाख्यं ) चक्रंतेनवरायुधेनतैस्तैर्भावैश्चअंतर्यामितयाप्रवर्त्यमानैर्भद्रकाल्यादिरूपैः नकुतश्चिदपि भयंयस्मिन् (तत्शरणंगतानां ) भागवतानां भगवदुपासकानां परमहंसानाम् ( ज्ञानिनाम् ) २० ॥ ॥ इतिपंचमस्कंधेटीकायांनवमोध्यायः ॥ ९ ॥ ॥ छ ॥ ॥ दशमेक्षिपताराज्ञाशिबिकास्त्वांवहन्मुनिः । स्वदुर्वादानुवादेनविज्ञायाद्भुमसादितः ॥ १ ॥ एवंभूताविकारित्वमज्ञसर्वज्ञयोः समम् । इतिसर्वज्ञतासिद्धचैरहूगणकथेरणम् ॥ २ ॥ रहूगणोनामसिंधुसौवीरदेशयोः राजातत्त्वजिज्ञासुः कपिलाश्रमंयदागच्छतिस्मतदायद्वृत्तंतदाह अथेति । इक्षुमत्यानद्यास्तीरे तेषांशिबिकावाहानां कुलस्यनाथेन ( दैवेनोपसादितः प्रापितः तदानींदृष्टः ) एषगौरिवखरइवचभारंवोढुंसमर्थइतिधियापूर्वंयेकेचन विष्टयाबलात्गृहीतास्तैःसह प्रसभंबलात् गृहीतः सन्अतदर्हो ( वहनायोग्यो-)-पिसमहानुभावः शिबिकामुवाहेत्यन्वयः १

भृशममर्षरोषावेशरभसविलसितभ्रुकुटिविटपकुटिलदंष्ट्रारुणेक्षणाटोपातिभयानकवदनाहंतुकामेवेदंमहाट्टहासमतिसंरंभेणविमुंचंतीततउत्पत्यपापीयसांदुष्टानांतेनैवासिनाविवृक्णशीर्ष्णांगलात्स्रवंतममृगासवमत्युष्णंसहगणेनानिपीयातिपानमदविह्वलोच्चैस्तरांस्वपार्षदैःसहजगौननर्तचविजहारचशिरःकंदुकलीलया १८ एवमेवखलुमहदभिचारातिक्रमः कार्त्स्न्येनात्मनेफलति १९ नवाएतद्विष्णुदत्तमहदद्भुतंयदसंभ्रमः स्वशिरश्छेदनआपातितेऽपिविमुक्तदेहाद्यात्मभावसुदृढहृदयग्रंथीनांसर्वसत्त्वसुहृदात्मनांनिर्वैराणांसाक्षाद्भगवताऽनिमिषारिवरायुधेनाप्रमत्तेनतैस्तैर्भावैः परिरक्ष्यमाणानांतत्पादमूलमकुतश्चिद्भयमुपसृतानांभागवतपरमहंसानाम् २० इतिश्रीभा०म०पं०जडभरतचरितेनवमोऽध्यायः ९ ॥ ॥ श्रीशुकउवाच ॥ ॥ अथसिंधुसौवीरपतेरहूगणस्यव्रजतइक्षुमत्यास्तटेतत्कुलपतिनाशिबिकावाहपुरुषान्वेषणसमयेदैवेनोपसादितः सद्विजवरउपलब्धएषपीवायुवासंहननांगोगोखरवद्धुरंवोढुमलमितिपूर्वविष्टिगृहीतैःसह गृहीतः प्रसभमतदर्हउवाहशिबिकांसमहानुभावः १

तद्धस्तात्खड्गंप्रगृह्य महानादंकृत्वा पापिष्ठानांसर्वचोराणांशिरांसिछित्वा तेषामत्युष्णं असृक्स्वगणैः सहपीत्वातेषांमस्तकैः स्वपार्षदैः सह कंदुकलीलयाविजहार १८ एवमेवखलुमहदभिचाररूपातिक्रमः कार्त्स्न्येनात्मनेफलति १९ तस्मात् निर्भयं विष्णुपदंआश्रितानांकः हंतुंसमर्थोभवेत् २० ॥ इतिपंचमेनवमः ॥ ९ ॥ श्रीशुकउवाच ॥ अथसिंधुसौवीरपतेः तत्त्वजिज्ञासयाकपिलाश्रमंगच्छतः रहूगणस्यइक्षुमत्याः तीरे शिबिकावाहपुरुषान्वेषणसमयेदैवेनप्राप्तः सः द्विजवरः एषपीवा गोखरवत् ॥१८॥
धुरंवोढुं अलमिति पूर्वविष्टिगृहीतैः सह धृतः सन् शिबिकां उवाह १

( जंतुमात्र- ) हिंसापरिहारार्थं इषुमात्रप्रदेशावलोकस्यानुपश्चात्यागतिः तस्याहेतुभूतायाः पुरुषाणांगतिर्नसम्यगाहिताएकरूपानाभूत् ( अधिवहतोवोढॄन् ) २ ( ईश्वरस्यस्वामिनो वचः ) अतः सोपालंभंसाक्षेपं सामदानभेददंडेषुउपायेषुचतुर्थाच्छंकितचित्ताः ३ ( नप्रमत्ता अनवधानाः ) भवान्नियमानुपथास्त्वदाज्ञानुवर्तिनः । ( नियुक्तोपिसाधुगच्छेतिआज्ञप्तोपिद्रुतं अस्मद्गत्यनुगुणं ) नपारयामः नशक्नुमः ४ कृपणानांवचो निशम्यसांसर्गिकः संसर्गनिमित्तः एकस्यापिदोषः सर्वेषामेवभवितुमर्हतीति निश्चित्य रहूगणआहेत्यन्वयः कथंभूतः उपासितावृद्धायेनसोपि निसर्गेणबलात्कृतस्वभावेनपरवशः कृतः सन् ( अतएवोत्थितमन्युः ) । कथंभूतंप्रत्याह । नस्पष्टं ब्रह्मतेजोयस्मिन्तंभस्मनाछन्नमग्निमिवस्थितम् । ( रजोगुणेनावृतामतिर्यस्यसः ) ५ भ्रातरितिसंबोधनमाक्षेपाभिप्रायम् व्यक्तंनिश्चितम् उरुअधिकं परिश्रांतोसीत्यादीनि विपरीतार्थानि षड्वाक्यानि । ऊढिवान् प्रापितवान् तत्रापिसुचिरं ( दीर्घकालं ) । नसंहननांगोदृढांगः । ) जरसाचवृद्धत्वेन ( पीडितः ) संघट्टिनः सहचराः बहुयथाभवत्येवं विप्रलब्धोपिवक्रोक्त्योपहसितोपितूष्णीमुवाहेत्यन्वयः । तूष्णींभावेहेतुः । अविद्ययारचिताद्रव्यादयोयस्मिन् तस्मिन्स्वचरमकलेवरे अनध्यारोपितो मिथ्याप्रत्ययोयेन ।( अनात्मन्यात्मेतिप्रत्ययोमिथ्याप्रत्ययः )तत्रद्रव्याणिमहाभूतानि । गुणाइंद्रियाणि कर्माणिपुण्यपापानि । आशयोंऽतःकरणं । यतोब्रह्मभूतः ६ मां ( कदर्थीकृत्य ) अनादृत्यभर्तुः स्वामिनोमम शासनमाज्ञामतिक्रामसि । चिकित्सांशास्तिं दंडपाणिर्यमोयथाजनस्य मूढस्यशास्तिंकरोतितथा । स्वांप्रकृतिंअप्रमत्तताम् ७

यदाहिद्विजवरस्येषुमात्रावलोकानुगतेर्नसमाहितापुरुषगतिस्तदाविषमगतांस्वशिबिकांरहूगणउपधार्यपुरुषानधिवहतआहहेवोढारःसाध्वतिक्रमतकिमितिविषममुह्यतेयानमिति २ अथतईश्वरवचःसोपालंभमुपाकर्ण्योपायतुर्यायाच्छंकितमनसस्तंविज्ञापयांबभूवुः ३ नवयंनरदेवप्रमत्ताभवन्नियमानुपथाःसाध्वेववहामःअयमधुनैवनियुक्तोपिनद्रुतंव्रजतिनानेनसहवोढुमुहवयंपारयामइति ४ सांसर्गिकोदोषएवनूनमेकस्यापिसर्वेषांसांसर्गिकाणांभवितुमर्हतीतिनिश्चित्यनिशम्यकृपणवचोराजारहूगणउपासितवृद्धोपिनिसर्गेणबलात्कृतईषदुत्थितमन्युरविस्पष्टब्रह्मतेजसंजातवेदसमिवरजसावृतमतिराह ५ अहोकष्टंभ्रातर्व्यक्तमुरुपरिश्रांतोदीर्घमध्वानमेकएवऊहिवान्सुचिरंनातिपीवानसंहननांगोजरसाचोपद्रुतोभवान्सखेनोएवापरएतेसंघट्टिनइतिबहुविप्रलब्धोऽप्यविद्ययाविहितद्रव्यगुणकर्माशयस्वचरमकलेवरेऽवस्तुनिसंस्थानविशेषेहंममेत्यनध्यारोपितमिथ्याप्रत्ययोब्रह्मभूतस्तूष्णींशिबिकांपूर्ववदुवाह ६ अथपुनःस्वशिबिकायांविषमगतायांप्रकुपितउवाचरहूगणःकिमिदमरेत्वंजीवन्मृतोमांकदर्थीकृत्यभर्तृशासनमतिचरसिप्रमत्तस्यचतेकरोमिचिकित्सांदंडपाणिरिवजनतायायथाप्रकृतिंस्वांभजिष्यसइति ७

यदाद्विजस्यइतस्ततः शुद्धभूम्यवलोकनेनगच्छतः सतः किंचित्विषमतां शिबिकां उपधार्य रहूगणआह हे वोढारः साधु गच्छत तेऊचुः २ ३ हेनरदेव वयं साध्वेव वहामः अयं न ४ इति श्रुत्वा राजा एकस्य दोषः सर्वेषांसंसर्गिणांभवितुमर्हतीतिनिश्चित्य उत्थितमन्युः सन् तमाह ५ हेभ्रातःत्वंनिश्चितं श्रांतः यतः दीर्घमार्गं त्वंएकएवप्रापितवान् त्वंनातिपीवा वृद्धत्वेन उपद्रुतोसि तच्छ्रुत्वापिपूर्ववत् शिबिकां उवाह ६ पुनः विषमगतायां शिबिकायां प्रकुपितः रहूगणः उवाच अरेकिमिदंत्वंजीवन्मृतः मांकदर्थीकृत्य चरसि अतः यमइव ते चिकित्सांकरोमि ७

अबद्धमनन्वितं । नरदेवोहमित्यभिमानोयस्यतम् । अनुविद्धेनसंगुणितेन । तिरस्कृतःअशेषःसंपूर्णोभगवतः प्रियोनिकेत आश्रयोयेनतम् । यद्वा अशेषाणांभगवत्प्रियाणां निकेतः । सर्वेषांभूतानांसुहृत्चआत्माच । योगेश्वराणांचर्याजडादिवदाचरणं तस्यांचात्यंतंव्युत्पन्नापरिचिता मतिर्यस्यसः तंस्मयमानइवहसन्निवेतिमुखप्रसत्तिद्योत्यतेविगतस्मयो विगतगर्वः ८ तत्रवक्रोक्त्यायदुक्तंत्वंनश्रांतःनचदीर्घमध्वानमागतइतितत्रोत्तरमाह । त्वयायदुदितं उक्तंश्रमादिनास्तीतिबुद्ध्या । तद्व्यक्तंस्फुटम् तत्तथैव । अविप्रलब्धंविप्रलंभोनभवति तदेवाह हेवीर यदिभारोनामकश्चित्स्यात् सचभर्तुर्वोढुर्देहस्यर्यादिस्यात् सचमेयदिप्रसक्तः स्यात् तर्हीदानीं भारस्यसत्त्वात् विप्रलंभः स्यात् । नत्वेतदस्ति ( वस्तुतो) भारस्यवोढुश्चानिरूप्यत्वात् ममचतत्संबंधाभावात् । तथागंतुरधिगम्यंप्राप्यंकिंचित् अध्वावायदिस्यात् अद्धेतिपाठेसाक्षात्परमार्थतः । तच्चमेयदिस्यादित्यादियोज्यम् । यच्चोक्तंनातिपीवेतितत्राह । चेतनबुद्धिश्यत्वंपीवेतिप्रवादोविदांविदुषांनभवति । किंतुमूर्खाणाम् । यतोयंप्रवादोराशौभूतसंघेदेहे नात्मनि । देहएवपीनोनाहमित्यर्थ ९ एतत्प्रपंचयति स्थौल्यमिति । कलिः कलहः । अहंकारेणमदश्च । देहेनसह तदभिमानेनजातस्याहिभवंति । ममतुनिरभिमानस्यनसंति । यद्वा देहेजातेयोजातस्तस्यैवतानि ममतुतत्रनजातस्यनसंतीति १० यच्चोक्तंजीवन्मृतोसीतितत्राप्याह । जीवन्मृतत्वंनकेवलंमम किंतु विकृतस्य सर्वस्यापि परिणामिनो दृष्टम् यद्यस्माद्विकृतंप्रतिक्षणमाद्यंतवत् । ( जीवनंप्राणयोगेनचेष्टावत्त्वंमृतत्वंप्राणराहित्येनचेष्टाराहित्यम् एतद्विकृतस्यैवदेहस्यदृष्टंआद्यंतवत्त्वात् । नतुचैतन्यस्यमम विकाराभावेनाद्यंतवत्त्वा योगादित्यर्थः) यदुक्तंभर्तुःशासनमतिचरसीतितत्राह । स्वंचस्वाम्यंचतयोर्भावः सत्ताहेईज्य यत्रप क्षेध्रुवः यदिव्यवस्थितःस्यादित्यर्थः तर्हिविधिर्नियोगः कृत्यंकर्मतयोर्योगः ध्रुवउच्यतेउचितोभवति । ‘उचसमवाय’इतिधातुः । यदितुतवराज्यभ्रंशोममचराज्यंस्यात्तदासर्वमेतद्विपरीतंस्यादित्यर्थः ११ ननुयावद्राजाहं तावत्तवस्वामीभवाम्येवेतिचेत् तत्राह । विशेषोराजभृत्यादिभेदः तद्बुद्धेर्विवरं अवकाशं व्यवहारादन्यंनपश्यामि । ( नाममात्रादन्यन्नपश्यामि “वाचारंभणंविकारोनामधेयं” इत्यादिश्रुतेरित्यर्थः । ) मनाक्ईषदपि । अथापितवाथमभिमानोदृढश्चेत्तर्हि ब्रूहिकिंतेकरवामेति १२

एवंबह्वबद्धमपिभाषमाणंनरदेवाभिमानंरजसातमसानुविद्धेनमदेनातिरस्कृताशेषभगवत्प्रियनिकेतंपंडितमानिनंसभगवान्ब्राह्मणोब्रह्मभूतःसर्वभूतसुहृदात्मायोगेश्वरचर्यायांनातिव्युत्पन्नमतिःस्मयमानइवविगतस्मयइदमाह ८ ॥ ॥ ब्राह्मणउवाच ॥ ॥त्वयोदितंव्यक्तमविप्रलब्धंभर्तुःसमेस्याद्यादेवीरभारः ॥ गंतुर्यदिस्यादधिगम्यमध्वापीवेतिराशौनविदांप्रवादः ९ स्थौल्यंकार्श्यंव्याधयआधयश्चक्षुत्तृड्भयंकलिरिच्छाजराच ॥ निद्रारतिर्मन्युरहंमदःशुचोदेहेनजातस्याहिमेनसंति १० जीवन्मृतत्वंनियमेनराजन्नाद्यंतवद्यद्विकृतस्यदृष्टम् ॥ स्वस्वाम्यभावोध्रुवईड्ययत्रतर्ह्युच्यतेसौविधिकृत्ययोगः ११ विशेषबुद्धेर्विवरंमनाक्चपश्यामयन्नव्यवहारतोन्यत् ॥ कईश्वरस्तत्रकिमीशितव्यंतथापिराजन्करवामकिंते १२

इत्यादि श्रुत्वा ब्राह्मणःयोगेश्वरचर्यायां पूर्णः सन् उवाच ८ ९ हेराजन् त्वयोदितं स्फुटम् स्थौल्यकार्श्यादिजीवन्मृतत्वादि देहस्यैव मे न उन्मत्तवत् स्वस्वरूपं प्राप्तस्यमे भक्ताशिक्षितेन पिष्टपेषणवत् व्यर्थं किम् १० ११ १२

यन्नूक्तंप्रमत्तस्यक्तेचिकित्सांकरोमि यथास्वांप्रकृतिंमजिष्यसइतितत्राह । उन्मत्तादिवद्वर्तमानस्यवस्तुतः स्वसंस्थांब्रह्मभावंगतस्य भवताकृतेन चिकित्सितेनदंडेनाशिक्षितेनवाकियानर्थः मुक्तस्यार्थानर्थयोरसंभवात् । यदिपुनरहंनमुक्तः किंतुप्रमत्तस्तब्धएव । (स्तब्धश्चासौप्रमत्तश्चेतिकर्मधारयः) तथापिममशिक्षादिकं (पिष्टपेषः) पिष्टस्यैवपेषणंतथातद्वद्व्यर्थमित्यर्थः नहि जडस्वभावः शिक्षयापिपटूकर्तुंशक्यतइति १३ अनुवादरूपयापरिभाषयाभाषणेन ( प्रत्युदीर्य ) प्रत्युत्तरंदत्त्वा । उपरतं अनात्म्येदेहात्मत्वेनिमित्तं अविद्यायस्य । आरब्धंआरब्धफलंकर्मव्यपनयन्क्षपयन् १४ हेपांडवेय सम्यक्ययाश्रद्धातदैवतत्त्वजिज्ञासायांप्राप्तोधिकारोयेन । यथादर्शपूर्णमासाधिकृतस्यैव गोदोहनेनपशुकामस्यापःप्रणयेदितिगुणफलसंबंधेप्य धिकारः एवंसात्त्विकश्रद्धायामधिकृतस्यैवास्यामधिकारइत्यर्थः ( अहंकारस्यसाक्षिणश्चान्योन्यतादात्म्यंहृदयग्रंथिस्तं विमोचयतीतितथा ) बहुयोगग्रंथसंमतंद्विजस्यतद्वचः श्रुत्वा विगतोनृपदेवोधिराजोहमितिगर्वोयस्य १५ द्विजानांमध्येकतमः । यतः सूत्रमुपवीतंबिभर्षि । यद्वा दत्तात्रेयादीनांमध्येकतमोवधूतः । ( योगींद्रःकस्यवंशजातोसि । कुत्रत्यः कस्मिन्देशेविद्यमानः ) इहापि ( अस्मिन्नपिदेशे ) कस्माद्धेतोः प्राप्तः । नोऽस्माकंक्षेमायचेत्प्राप्तः तर्हिशुक्लःकपिलोमुनिर्नासिनभवसिकिंवेतिवितर्के १६ किमनयाचिंतया शिबिकांतावद्वहामीतिचेत्अतआह । वित्तपः कुबेरः ( तस्याख्रात् ) १७ यस्मादृशंशंकेतस्मात्कस्त्वमित्यादिप्रश्नानामुत्तरंब्रूहि निगूढंपिहितं विज्ञानरूपंवीर्यंप्रभावोयेन । अपारः अनंतमहिमा । तत्रहेतुः नोमनसापिभेत्तुंवेदितुंनक्षमंनशक्यम् । किंभेत्तुमित्यपेक्षायामाह । तेवचांसीति । यद्वा मनसायुक्ताः सूक्ष्मदृष्टयोपिभेत्तुंनक्षमंतेशक्नुवंति ( नोस्माकंकावार्तेत्यर्थः यद्वा मनसापिभेत्तुंनोऽस्माकंनक्षमंतेनशक्यानीत्यन्वयः । योगेअध्यात्मविषयेग्रथितानिसंबद्धानि ) १८

उन्मत्तमत्तजडवत्स्वसंस्थांगतस्यमेवीरचिकित्सितेन ॥ अर्थःकियान्भवताशिक्षितेनस्तब्धप्रमत्तस्यचपिष्टपेषः १३ ॥ ॥ श्रीशुकउवाच ॥ ॥ एतावदनुवादपरिभाषयाप्रत्युदीर्यमुनिवरउपशमशीलउपरतानात्म्यनिमित्तउपभोगेनकर्मारब्धंव्यपनयन्राजयानमपितथोवाह १४ सचापिपांडवेयसिंधुसौवीरपतिस्तत्त्वजिज्ञासायांसम्यक्श्रद्धयाऽधिकृताधिकारस्तद्धृदयग्रंथिविमोचनंद्विजवचआश्रुत्यबहुयोगग्रंथसंमतंत्वरयाऽवरुह्यशिरसापादमूलमुपसृतःक्षमापयन्विगतनृपदेवस्मयउवाच १५ कस्त्वंनिगूढश्चरसिद्विजानांबिभर्षिसूत्रंकतमोऽवधूतः ॥ कस्यासिकुत्रत्यइहापिकस्मात्क्षेमायनश्चेदसिनोतशुक्लः १६ नाहंविशंकेसुरराजवज्रान्नत्र्यक्षशूलान्नयमस्यदंडात् ॥ नाग्न्यर्कसोमानिलवित्तपास्त्राच्छंकेभृशंब्रह्मकुलावमानात् १७ तद्ब्रूह्यसंगोजडवन्निगूढविज्ञानवीर्योविचरस्यपारः ॥ वचांसियोगग्रथितानिसाधोनननःक्षमंतेमनसापिभेत्तुम् १८

१३ ॥ ॥ श्रीशुकउवाच ॥ ॥ इत्युक्त्वा प्रारब्धक्षयंकुर्वन्राजयानमपि उवाह १४ सः रहूगणः तद्धृदयग्रंथिभेदकंद्विजवचः श्रुत्वा त्वरया अवरुह्य शिरसापादमूलं प्राप्तः क्षमापयन् विगतगर्वः उवाच १५ हेब्रह्मन् दत्तात्रेयादीनांमध्ये त्वंकतमः अवधूतोसि १६ नाहंविशंके सुरराजवज्रात् तथा यमस्यदंडात् यथा ब्रह्मकुलावमानात् १७ किंच अज्ञाननाशार्थं कपिलंप्रतिगच्छतामयात्वंदृष्टः १८

स्वस्यज्ञानार्थितांदर्शयति अहंचेति । इहसंसारेयत् अरणं शरणंतत्किमितिप्रष्टुंप्रवृत्तोस्मि ( ज्ञानकलया ) ज्ञानशक्त्याऽवतीर्णंकपिल-( संज्ञंहरिम् ) १९ सएवभवान् किंस्विदेवं विचरति । गृहाविष्टः कथंविचक्षीतपश्येत् । २० एवंब्रह्मस्वरूपंपृष्ट्वातदुक्तोत्तराण्याक्षिपति । तत्रयदुक्तंममश्रमोनास्तीति तत्राह दृष्टइति । आत्मनोमे ( भर्तुर्गंतुः कर्मतः श्रमोदृष्टः वे सर्वानुभवसिद्धश्चेत्यर्थः तमहंभर्तुर्गंतुर्भवतः ) अनुमन्ये अनुमिमे अनुमानंचैवं । भवान्भारोद्वहनादिनाश्रांतः कर्तृत्वात् । यःकर्तासश्राम्यति । यथाहंयुद्धादिकर्तेति । नन्विदं व्यवहार मात्रंनतुसत्यं तदुक्तंव्यवहारतोन्यंनपश्यामेतितत्राह यथेति । व्यवहारमार्गः प्रपंचः समूलः सप्रमाणकश्चेत्तः । यथायथावत् । असताघटादिनाउदकानयनादे(र्जलाहरणादे)रभावात् एवंप्रयोगः प्रपंचः सत्यः अर्थक्रियाकारित्वात् यः पुनरसत्यः नासावर्थक्रियाकारी । यथामिथ्याघटादिरिति २१ यदुक्तं ( स्थौल्यंकार्श्यमित्यादिना ) उपाधिधर्माःस्थौल्यादयोमेनत स्तुतः संतीतितत्रौपाधिकत्वेपि सत्यत्वंकिंनस्यादित्याह । स्थाल्याअग्निनातापात् तन्मध्यवर्तिनः क्षीरस्यतापः तस्यतापात् तंडुलानां बहिर्भागस्यततस्तद्गर्भस्यच रंधिःपाकः । न चात्रकिंचिन्मिथ्या । एवंदेहादिभिःसंनिकर्षात्संबंधात् तन्निमित्ता संसृतिः । पुरुषस्यभवति । अत्रतःप्राणाः आशयोमनः । अनुरोधात् उपाधिधर्मानुवृत्तेः । तथाहि । निदाघादिना देहेतप्ते इंद्रियाणांतापः ततःप्राणस्यततोमनसः इत्येवंयथायथमूह्यम् २२ यदुक्तंस्वस्वाम्यभावोऽध्रुवइतितत्राह । शास्तेति । अध्रुवत्वेपियदायोनृपतिः सप्रजानांशास्तागोप्ताच । यच्चो क्तंस्तब्धादेःशिक्षापिष्टपेषइतितत्राह । योऽच्युतस्यकिंकरःसपिष्टंन पिनष्टि । निष्फलंनकरोति स्तब्धत्वाद्यनपगमेपिशास्तुरीश्वराज्ञासंपादनेनैव सफलत्वात् । तदाह । स्वधर्म रूपमच्युताराधनंकुर्वन्यस्मादघौघंजहाति २३ यस्मादेवंममत्वदुक्तंविपरीतं प्रतिभाति । ततस्मात् नरदेवाभिमानमदेन तुच्छीकृताः तिरस्कृताः सत्तमा भवादृशा येनतस्यमे मैत्री दृशं स्नेहयुक्तांदृष्टिंकृपीष्टकरोतु सतामवज्ञारूपंपापंयथातरे तरिष्यामीत्यर्थः २४ ननुममावज्ञाकृतविकाराभावात् कुतःपापंतत्राह नेति । यद्यपि तवविक्रियानास्ति । वि श्वस्यसुहृच्चासौसखाचतस्य । अत सर्वत्रसाम्येनस्वदेहेविगताभिमानस्य । तथापि स्वकृतान्महतांअवमानात् मादृशोविनंक्ष्यति अदूरात्क्षिप्रं । अपिशूलपाणिः शूलपाणिरि वातिसमर्थोपीत्यर्थः २५ ॥ ॥ इतिपंचमस्कंधेटीकायांदशमोध्यायः ॥ १० ॥

अहंचयोगेश्वरमात्मतत्त्वविदांमुनीनांपरमंगुरुंवैः ॥ प्रष्टुंप्रवृतः किमिहारणंतत्साक्षाद्धरिंज्ञानकलावतीर्णम् १९ सवैभवाँल्लोकनिरीक्षणार्थमव्यक्तलिंगोवि चरत्यपिस्वित् ॥ योगेश्वराणांगतिमंधबुद्धिः कथंविचक्षीतगृहानुबंधः २० दृष्टः श्रमः कर्मतआत्मनोवैभर्तुर्गंतुर्भवतश्चानुमन्ये ॥ यथाऽसतोदानयना द्यभावात्समूलइष्टोव्यवहारमार्गः २१ स्थाल्यग्नितापात्पयसोभितापस्तत्तापतस्तंडुलगर्भरंधिः ॥ देहेंद्रियास्वाशयसन्निकर्षात्तत्संसृतिःपुरुषस्यानुरो धात् २२ शास्ताभिगोप्तानृपतिः प्रजानांयः किंकरोवैनपिनष्टिपेषम् ॥ स्वधर्ममाराधनमच्युतस्ययदीहमानोविजहात्यघौघम् २३ तन्मेभवान्नरदेवा भिमानमदेनतुच्छीकृतसत्तमस्य ॥ कृषीष्टमैत्रीदृशमार्तबंधोयथातरेसदवध्यानमंहः २४ नविक्रियाविश्वसुहृत्सखस्यसाम्येनवीताभिमतेस्तवापि ॥ मद्द ॥२०॥ द्विमानात्स्वकृताद्धिमादृङ्नंक्ष्यत्यदूरादपिशूलपाणिः २५ ॥ इतिश्रीभागवतेमहापुराणेपंचमस्कंधेदशमोध्यायः ॥ १० ॥ ॥ छ ॥

१९ २० २१ २२ २३ अतः भवान् राजइतिअभिमानेनतुच्छीकृतसत्तमस्य मे कृपांकुरु यथाअहं अज्ञानात् तरिष्यामितथाक्रियताम् २४ २५ इतिपंचमेदशमः ॥ १० ॥

एकादशेथनंवश्टोरहूगणमहीभृना। उपादिशत्परंज्ञानंसयोगीतिनिगद्यते ॥ १ ॥ अकोविदः अविद्वानपित्वंकोविदानां ( विदुषां ) वादा उद्ग्रहणिकास्ततुल्यान्वादानेववदसि (नतुविचारंकरोषि) अयोअंतः अत्यंतं विदुषांमध्येश्रेष्ठोनभवसिकुतःहियस्मात्त्वं स्वामिभृत्यादिलौकिकव्यवहारं त्वंसत्यमात्थएतंसूरयस्तत्त्वज्ञास्तत्त्वविचारेणसहनवदंतिकिंत्वविचारसुंदरं वदंतिअतोनसत्यः १ (ननुतर्हिकथं) वैदिकानां (व्यवहारः संगच्छतामित्याशंक्य) वैदिकोपि कर्मव्यवहारोनसत्यइत्याह । तथैवेति उरवोगार्हगृहसंबंधिनोमेधायज्ञाःतेषांवितानोविस्तारः तद्विषयासुविद्यासुउरुअधिकं विजृंभितविलसितास्तेषुवेदवादेषुतत्त्ववादः सुनिश्चितंनचकास्तिनप्रकाशते । तथाचश्रुतिः "नेहनानास्तिकिंचन"इत्यादि । शुद्धोहिंसादिशून्यः साधूरागादिशून्यश्च । प्रायेणेति ईश्वरार्पितकर्मणांपरमार्थफलत्वाभिप्रायेणोक्तम् २ ननुश्रुतवेदांतस्यापिपुंसः कर्मसुप्रवृत्तःकथमसत्यतातत्राह नेति साक्षाद्यथावत् तत्त्वज्ञानाय(वरीयसीः) वरीयस्यांपिवेदांतवाचः तस्यनसम्यगासन्नबभूवुः (तस्यकस्य) स्वप्नेयानिर्वृतिस्तया स्वप्नदृष्टांतेनदृश्यत्वादिहेतुना ( गृहमेधिसौख्यं) स्वयमेवहेयत्वेनानुमितंयस्यनस्यात् ३ एवंप्रपंचस्यसत्यत्वं तदुक्तंनिराकृत्यसंसारस्यापितदुक्तांसत्यतांनिराकर्तुं तस्यमनोनिमित्ततामाह । यावदित्यादिनायावदध्यायसमाप्ति। मनोयावद्रजआदिभिर्गुणैरनुरुद्धंवशीकृतंभवति तावत्तन्मनो निरंकुशंसत् पुरुषस्यकुशलंधर्मं इतरमधर्मंवाआतनोति । कैः । चेतोभिर्ज्ञानेंद्रियैः । आकूतिभिः कर्मेंद्रियैश्च । ४ ततश्चधर्माधर्मवासनायुक्तं ( तन्मनः ) तद्देवानेकदेहादिवैचित्र्यं करोतीत्याह । सइतिपुंस्त्वमात्मशब्दविशेषणत्वेन । तन्मनइत्यर्थः(वासनात्मा) वासनायुक्तआत्मोपाधित्वादात्मा अतोविषयैरुपरक्तोऽनुविद्धः अतोगुणप्रवाहःगुणैरितस्ततश्चाल्यमानः अतएवविकृतः कामादिपरिणामवान् । षोडशात्माषोडशकलासुभूतेंद्रियरूपासुमुख्यः। पृथङ्नामभिःसहपृथग्रूपभेदंदेवतिर्यगादिरूपंबिभ्रत् अंतर्बहिष्ट्वंउत्कृष्टत्वंनिकृष्टत्वंचपुरैस्तैरेवदेहैः हेतुभूतैस्तनोति । नामभिरित्यत्ररेफलोपेदीर्घाभावआर्षः । ५ फलंचतदनुरूपंकरोतीत्याह । दुःखंसुखंव्यतिरिक्तंचमोहं तीव्रंदुर्निवारं कालप्राप्तंफलं सर्वतोव्यनक्ति। सृजति।ननुजडःकथंसृजतितत्राह।स्वदेहिनमालिंग्य।आलिंगनेकारणमाह।माययारचितःअंतरात्माजीवोपाधिः। उपाधितामाह।संसृतिचक्रेकूटयतिछलयतीतितथा।यथाग्रामकूटकइति। ६

॥ ब्राह्मणउवाच ॥ ॥ अकोविदः कोविदवादवादानवदस्यथोनातिविदांवरिष्ठः ॥ नसूरयोहिव्यवहारमेतंतत्त्वावमर्शेनसहामनंति १ तथैवराजन्नुरुगार्हमेधवितानविद्योरुविजृंभितेषु ॥ नवेदवादेषुहितत्त्ववादः प्रायेणशुद्धोनुचकास्तिसाधुः २ नतस्यतत्त्वग्रहणायसाक्षाद्वरीयसीरपिवाचः समासन् ॥ स्वप्नेनिरुक्त्यागृहमेधिसौख्यंनयस्यहेयानुमितंस्वयंस्यात् ३ यावन्मनोरजसापूरुषस्यसत्त्वेनवातमसावानुरुद्धम् ॥ चेतोभिराकूतिभिरातनोतिनिरंकुशंकुशलंचेतरंवा ४ सवासनात्माविषयोपरक्तोगुणप्रवाहोविकृतः षोडशात्मा ॥ बिभ्रत्पृथङ्नामभिरूपभेदमंतर्बहिष्ट्वंचपुरैस्तनोति ५ दुःखंसुखंव्यतिरिक्तंचतीव्रंकालोपपन्नंफलमाव्यनक्ति ॥ आलिंग्यमायारचितांतरात्मास्वदेहिनंसंसृतिचक्रकूटः ६

॥ ॥ ब्राह्मणउवाच ॥ ॥ हेराजन् त्वमविद्वानपि ज्ञानीव वादान् वदसिअतः त्वंविदांमध्येश्रेष्ठोनभवसि यस्मात् लौकिकव्यवहारंत्वंसत्यं आत्थ ज्ञानिनस्तुमिथ्यात्वेनजानंति १ हेराजन्कर्मार्जितान् लोकानपि तथैव यावत्पुरुषस्यमनः सुखदुःखात्मकं कर्म दशेंद्रियैः तनोति तावत्तन्मनःविषयोपरक्तंसत् गुणप्रवाहेणदेहान् उत्पादयति २ ३ ४ ५ सुखंदुःखंचसृजति ६

एवमयंमनोनिबंधनः संसारः जीवेफलतीत्याह । तावानिति । ( यावानुक्तस्तावानयं ) अविःप्रकाशमानः सदाक्षेत्रज्ञस्यसाक्ष्यः दृश्योभवति स्थूलसूक्ष्मः जाग्रत्स्वप्नस्वरूपः । मनसः संसारहेतुत्वमुपसंहरन् मोक्षस्यापितदेवकारणमित्याह । तस्मादिति अदोमनः लिंगकारणं गुणत्वंगुणाभिमानित्वं अगुणत्वंतद्राहित्यंतदेवपरमवरंचतस्य ७ कथमेकमेव विलक्षणयोः कारणं अवस्थाभेदादित्याह । गुणेति । ( गुणानुरक्तं विषयाभिनिविष्टं । व्यसनायसंसाराय । ) नैर्गुण्यंनिर्गुणं ( क्षेमायमोक्षाय ) अथोइति कात्स्न्र्येन । दृष्टांतेनस्फुटयति । यथेति ( घृतयुक्तांवर्ति ) अन्यदा घृतवर्तिक्षयेस्वंपदं शुक्लभास्वररूपं महाभूतात्मत्वंवा ( भजति । तथागुणकर्मानुबद्धगुणैः रजआदिभिःकर्मभिश्चपूर्वसंचितैर्वशीकृतं वृत्तीःश्रयते ) अन्यत्रअन्यदा (तत्त्वंश्रयते) ८ वृत्तीर्दर्शयति । एकादशवृत्तयआसन् । आकूतयः क्रियाकाराः पंच । धियश्चज्ञानाकाराः पंच । अभिमानश्चैकइति । हेवीर(मात्राणिकर्माणिपुरंचशरीरमित्येकादशतासांवृत्तीनां) भूमीर्विषयान् (वदंति)९(मात्राणीत्यादिनोक्तान्विषयानेवाह । गंधादयः पंचज्ञानेंद्रियद्वाराधीवृत्तीनांविषयाः तत्रआकृतिः रूपं श्रवणं श्रवःशब्दः । विसर्गादयःपंचकर्मेंद्रियद्वाराकर्माकारवृत्तीनांविषयाः ( तत्र) रतिः संभोगः आर्तिर्गतिः ( शिल्पोहस्तव्यापारः ) पुरस्याभिमानविषयत्वप्रकारमाह । एकादशंपुरं ( ममेति )स्वीक्रियतइति स्वीकरणंअयमर्थः । शरीरमभिमानस्य नज्ञेयतयागंधादिवद्विषयः । नापिकार्यतया विसर्गादिवत् । किंतुममेतिभोगायतनत्वेनस्वीकार्यतया विषयइति । एकेतुवैशेषिकनामेवपुरंममत्वाभिमानविषयः नतुमूढानांअतोमूढदृष्ट्या अहंअहंकारंद्वादशंवृत्त्यंतरमाहुः । तस्यचपुरमेवशय्यासंज्ञंद्वादशंविषयमाहुः । तत्रहिजीवोऽहंकारेणशेते यतः पुरीशयनात्पुरुषइत्युच्यते १० तासांवृत्तीनामवांतरभेदानंत्यमाह । द्रव्याणिविषयाः । स्वभावः परिणामहेतुः । आशयः संस्कारः । कर्मअदृष्टं । कालः क्षोभकः । तैर्निमित्तभूतैः । प्रथमंशतशः ततः सहस्रशः ततःकोटिशः स्युः । नतुमिथःस्युः नचस्वतः किंतुक्षेत्रज्ञतः परमेश्वरात् । तस्यचानंतशक्तित्वादनंताःस्युरित्यर्थः । यद्वा तासांमिथ्यात्वमनेनोच्यते । कोटिशोभवंतिअतस्ताः क्षेत्रज्ञतएवस्युः तत्सत्तयैवसत्तांलभेरन् । ( रज्जुसत्तयासर्पधारया । ) नतुमिथोनचस्वतइति । यद्वा क्षेत्रज्ञोजीवस्तस्मान्नस्युः तस्याविकारित्वात् नमिथः इतरेतराश्रयापत्तेः । नस्वतः आत्माश्रयत्वापत्तेः । अतोमिथ्याभूताएवेति ११

तावानयंव्यवहारःसदाविःक्षेत्रज्ञसाक्ष्योभवतिस्थूलसूक्ष्मः॥तस्मान्मनोलिंगमदोवदंतिगुणागुणत्वस्यपरावरस्य ७ गुणानुरक्तंव्यसनायजंतोःक्षेमायनैर्गुण्यमथोमनः स्यात् ॥ यथाप्रदीपोघृतवर्तिमश्नन्शिखाःसधूमाभजतिह्यन्यदास्वम् ॥ पदंतथागुणकर्मानुबद्धंवृत्तीर्मनः श्रयतेन्यत्रतत्त्वम् ८ एकादशासन्मनसोहिवृत्तयआकूतयः पंचधियोऽभिमानः ॥ मात्राणिकर्माणिपुरंचतासांवदंतिहैकादशवीरभूमीः ९ गंधाकृतिःस्पर्शरसश्रवांसिविसर्गरत्यर्त्यभिजल्पशिल्पाः ॥ एकादशंस्वीकरणंममेतिशय्यामहंद्वादशमेकआहुः १० द्रव्यस्वभावाशयकर्मकालैरेकादशामीमनसोविकाराः ॥ सहस्रशः शतशः कोटिशश्च क्षेत्रज्ञतोनमिथोनस्वतः स्युः ११

७ तस्मात्जंतोः मनः गुणानुरक्तं व्यसनायभवति निर्गुणंक्षेमाय यथादीपः घृतवर्तिमश्नन् सधूमाः शिखाः भजति घृतक्षयेस्वंरूपंभजतितद्वत् ८ किंच दशेंद्रियाणि एकादशंमनः द्वादशंअहंकारः एतैः युक्ताः मायारचिताः कोटिशः देहाः ईश्वरात् भवंति इदंसर्वंमायाकृतं हेनरेंद्र देही यावत् एतांमायां विधूय आत्मतत्त्वं न वेद तावत् इह भ्रमति ९ १० ११

तदेवंश्लोकत्रयेणगुणकर्मानुबद्धंमनोवृत्तीः श्रयतइतियदुक्तंतत्प्रपंचितम् । अन्यदातत्त्वंश्रयतइतियदुक्तंतदेवतत्त्वमाह । क्षेत्रज्ञइति । जीवस्यजीवोपाधेः अविशुद्धकर्तुर्मनसः ( विभूतीरेताः ) नित्याःप्रवाहरूपेणाविच्छिन्नाः जाग्रत्स्वप्नयोराविर्भूताः पश्यति क्वापिसुषुप्तौतिरोभूताः पश्यति अवस्थात्रयसाक्षीक्षेत्रज्ञः आत्मातत्त्वमित्यर्थः १२ क्षेत्रज्ञोद्विविधः त्वंपदार्थोजीवः तत्पदार्थईश्वरश्च । तत्राद्योनिरूपितः इदानींतत्प्राप्यमीश्वरंनिरूपयति । क्षेत्रज्ञआत्माव्यापी । पुराणोजगत्कारणभूतःपुरुषः पूर्णः । साक्षादपरोक्षः । सचस्वयंज्योतिः ( स्वप्रकाशः ) नतुज्ञानस्य विषयत्वेनाश्रयत्वेनवाऽपरोक्षःअजःजन्मादिशून्यः । परेषांब्रह्मादीनामपीशः नारंजीवसमूहः सअयनंयस्यानियंतुः भगवान्ऐश्वर्यादिषड्गुणवान् । वासुदेवः सर्वभूतानामाश्रयः । स्वाधीनयामायया आत्मनिजीवेअवधीयमानःअवस्थाप्यमानः कर्मकर्तरिप्रयोगः तन्नियंतृत्वेनवर्तमानइत्यर्थः । १३ एतत्सदृष्टांतमाह । यथेति । आत्मस्वरूपेण प्राणरूपेण ( स्थिरचराणामंतर्निविष्टस्तेषां ) ईशेत नियमयति । ( अधीगर्थेतिकर्मणिषष्ठी । एवं ) इदंविश्वं ( अनुप्रविष्टस्तस्येष्टे ) १४ तदेवमात्मनः शुद्धत्वं संसारस्यचमिथ्यात्वंप्रदर्श्येदानीं तन्निवृत्तिमाह । ( नयावदिति ) तनुभृद्देहीवयुनोदयेनज्ञानोत्पत्त्यायावन्मायां विधूयआत्मतत्त्वंनवेदतावदिहभ्रमति । ( जिताः षडिंद्रियशत्रवः कामादयोवायेन । विमुक्तसंगः विषयवासनारहितः ) १५ यावच्चविषयानुरक्तंमनएवानर्थहेतुरितिनवेदतावन्निर्वेदाभावात्परिभ्रमत्येवेत्याह नेति । आत्मनोलिंगमुपाधिभूतंमनः संसारतापानामावपनंक्षेत्रंयावन्नवेदतावद्भ्रमतीत्यनुषंगः । तापावपनत्वेहेतुः । यन्मनः ( जनस्य ) शोकाद्यनुबंधंममतांच ( तद्धेतुभूतां ) विधत्ते १६ ततस्मात् ( एनंमनोरूपं ) भ्रातृव्यंशत्रुंअध्येधितंसंप्रवृद्धं स्वयंव्यलीकं मिथ्याभूतं तथाप्यात्मानंमुष्णातीतितथातं गुरोर्हरेर्हरिस्तस्यचरणोपासनमेवअस्त्रंयस्यतथाभूतःमन्जहिघातय १७ ॥ इतिपंचमस्कंधेटीकायामेकादशोध्यायः ॥ ११ ॥ द्वादशेपुनरापृष्टः संदेहेनमहीभृता । सयोगीसर्वसंदेहाननुपानुदद्वितीर्यते ॥ १ ॥ कारणभीश्वररतस्दैवलोकसंरक्षणार्थो विग्रहोदेहोयस्य । स्वरूपेणपरमानंदप्रकाशेनतुच्छीकृतोविग्रहोयेन । हेअवधूतयोगेश्वर।द्विजबंधोर्मलिनद्विजस्यलिंगेनवेषेण निगूढोनित्यानुभवोयेनतस्मैनमः १

क्षेत्रज्ञएतामनसोविभूतीर्जीवस्यमायारचितस्यनित्याः ॥ आविर्हिताःक्वापितिरोहिताश्चशुद्धोविचष्टेह्यविशुद्धकर्तुः १२ क्षेत्रज्ञआत्मापुरुषःपुराणःसाक्षात्स्वयंज्योतिरजःपरेशः ॥ नारायणोभगवान्वासुदेवःस्वमाययात्मन्यवधीयमानः १३ यथाऽनिलःस्थावरजंगमानामात्मस्वरूपेणनिविष्टईशेत् ॥एवंपरोभगवान्वासुदेवःक्षेत्रज्ञआत्मेदमनुप्रविष्टः १४नयावदेतांतनुभृन्नरेंद्रविधूयमायांवयुनोदयेन ॥ विमुक्तसंगोजितषट्सपत्नोवेदात्मतत्त्वंभ्रमतीहतावत् १५ न यावदेतन्मनआत्मलिंगंसंसारतापावपनंजनस्य ॥ यच्छोकमोहामयरागलोभवैरानुबंधंममतांविधत्ते १६ भ्रातृव्यमेनंतददभ्रवीर्यमुपेक्षयाध्येधितमप्रमत्तः ॥ गुरोर्हरेश्चरणोपासनास्त्रोजहिव्यलीकंस्वयमात्ममोषम् १७ ॥ इतिश्रीभा०म०पंच०ब्राह्मणरहूगणसंवादेएकादशोध्यायः ॥ ११ ॥ रहूगणउवाच ॥ नमोनमःकारणविग्रहायस्वरूपतुच्छीकृतविग्रहाय ॥ नमोऽवधूतद्विजबंधुलिंगनिगूढनित्यानुभवायतुभ्यम् १

१२ १३ १४ किंचआत्मनः उपाधिभूतंसंसारतापानां क्षेत्रं इदंमन इतियावत् जीवोनवेद तावत् भ्रमति १५ १६ तस्मात् हेरहूगण एनं आत्ममोषं मनोरूपं शत्रुंगुरोः हरेः चरणोपासनास्त्रः सन् घातय १७ इतिपंचमेएकादशः ॥ ११ ॥ ॥ रहूगणउवाच ॥ ॥ हेभगवन् कारणविग्रहाय नमः हेअवधूत द्विजलिंगाय निगूढनित्यानुभवाय ते ईश्वररूपाय नमः १

विशेषतः प्रवृत्तद्वाक्यमभिनंदन् ( प्रकाशयति ) ज्वरएवामयोरोगस्तेनार्तस्ययथासत् स्वादुअगदंऔषधम् । यथाचनिदाघेनदग्धस्यसंतप्तस्याहिमांभः शीतलमुदकंगंगोदकंवा तथाहे ब्रह्मन् कुत्सितेदेहेयोमानोऽहंकारः सएवाहिः सर्पस्तेन विशेषणदष्टादृष्टिर्विवेकलक्षणायस्य तस्यमे तवेदंवचः अमृततुल्यमौषधम् २ ममसंशयार्थं संशयविषय-( मूत ) मर्थं पश्चात्प्रक्ष्यामि । अधुनातावत्त्वदुक्तंवचः अध्यात्मयोगेन ( आत्मज्ञानयोगेन ) ग्रथितम् ( अतो ) दुर्बोधम् ( तत ) सुबोधं यथाभवत्येवंव्याख्याहि कौतूहलं ( अभिलाषः ) तद्युक्तंचेतोयस्यतस्यमम ३ त्वयोदितंव्यक्तमविप्रलब्धमित्यादिनाभारवाहनादिक्रियाचतत्फलं च श्रमादिप्रत्यक्षादिभिर्दृश्यमानंज्ञायमानं सत्अबाधितमितिव्यवहारमात्रमूलं । यद्वा सतः अबाधितंस्यव्यवहारस्यमूलंकारणमपि ( तत ) नह्यंजसातत्त्वविमर्शनायक्षममिति भवानददाह अमुष्मिन्नर्थेममनोभ्रमति ( अस्यवचनस्यार्थोयमेवेति स्थितिंनलभते )४ अबाधितत्वमसिद्धमित्याह ( अयमिति ) हेपार्थिव यः पार्थिवोविकारः सएवकस्यहेतोः कस्माच्चित्कारणात्पृथिव्यांचलन् अयंभारवाहकादिर्जनोनामप्रसिद्धः यस्तुनचलतिस पाषाणादिरित्येतावानेवभेदः । तस्यजडत्वात् ( पाषाणादेरिव ) नभारः श्रमश्च । किंचभवेदेवंयदिश्रमस्याश्रयोनिरूप्येतनत्वेतदस्ति । अन्वयव्यतिरेकेणश्रमास्पदस्यावयविनोऽनिरूपणादित्याशयेनाह तस्यापिपृथिवीविकारस्यापि अंघ्र्योःअधिउपरिगुल्फौ ( तयोरुपरिजंघेएवंजान्वादयः अधिशब्दोत्रउपर्युपर्यर्थवाचकः ) उरसःसलोपआर्षः ( शिरोधरा ग्रीवा ) ५ ( अंसेधिअंसोपरि दारुविकारः ) शिबिकायामप्यवयवीनास्तितत्वयप्यपिनास्ति । तदाह । सौवीरराजइत्यपदेशोनाममात्रंयस्य सपार्थिवोविकारएवास्ते राजेतिसंविदार्षः यस्मिन् भवान् निरूढात्माभिमानःसिंधुषुराजास्मीतिदुर्मदेनअंधः सन् ६ शोच्यान् ( अधिकष्टदीनान्अनेकक्लेशयुक्तान्दरिद्रान् ) इमान् ( वाहकान् ) विष्ट्यानिगृह्णन् ( त्वंनिरनुग्रहोसि ) निष्कृपोवर्तसे । अतोमिथ्यैवगोप्तास्मीतिश्लाघमानोमहतासभासुनशोभसेयतोधृष्टः ७ नचोत्तरोत्तरावयवभारः पूर्वपूर्वावयवानांभवेदितिवाच्यं तेषामप्यनिरूपणादित्याशयेनाह । यदेति ! निष्ठांनाशंप्रभवमुत्पत्तिं ( चपृथिव्यामेव ) विदामविद्मः ततदाक्षितेरन्यस्यविकारस्याभावात् नाममात्रादन्यद्व्यवहारस्यमूलं कारणं अर्थक्रिययासादित्यनुमेयंअस्तिचेत् निरूप्यतां । तथाचश्रुतिः' वाचारंभणंविकारोनामधेयंमृत्तिकेत्येवसत्यम्' इति ८

ज्वरामयार्तस्ययथाऽगदंसन्निदाघदग्धस्ययथाहिमांभः ॥ कुदेहमानाहिविदष्टदृष्टेर्ब्रह्मन्वचस्तेऽमृतमौषधंमे २ तस्माद्भवंतंममसंशयार्थंप्रक्ष्यामिपश्चादधुनासुबोधम् ॥ अध्यात्मयोगग्रथितंतवोक्तमाख्याहिकौतूहलचेतसोमे ३ यदाहयोगेश्वरदृश्यमानंक्रियाफलंसद्व्यवहारमूलम् ॥ नह्यंजसातत्त्वविमर्शनायभवानमुष्मिन्भ्रमतेमनोमे ४ ॥ ॥ ब्राह्मणउवाच ॥ ॥ अयंजनोनामचलन्पृथिव्यांयःपार्थिवःपार्थिवकस्यहेतोः ॥ तस्यापिचांघ्र्योरधिगुल्फजंघाजानूरुमध्योरशिरोधरांसाः ५ अंसेऽधिदार्वीशिबिकाचयस्यांसौवीरराजेत्यपदेशआस्ते ॥ यस्मिन्भवानरूढनिजाभिमानोराजास्मिसिंधुष्विति दुर्मदांधः ६ शोच्यानिमांस्त्वमधिकष्टदीनान्विष्ट्यानिगृह्णन्निरनुग्रहोसि ॥ जनस्यगोप्ताऽस्मिविकत्थमानोनशोभसेवृद्धसभासुधृष्टः ७ यदाक्षितावेव चराचरस्यविदामनिष्ठांप्रभवंचनित्यम् ॥ तन्नामतोन्यद्व्यवहारमूलंनिरूप्यतांसक्रिययाऽनुमेयम् ८

अहोरोगार्तस्ययथासाधु औषधं उष्णतप्तस्य यथागंगोदकं तथा देहाभिमान एव सर्पः तेनदष्टस्यमेतववचः अमृततुल्यं औषधं भवति २ अतः अध्यात्मयोगग्रंथितंदुर्बोधंतवोक्तं मेयथासुबोधंस्यात् तथाआख्याहि ३ ४॥ब्राह्मणउवाच ॥ हे पार्थिव अयंजनो नामपृथिव्यांचलन्सर्वोपिपृथ्वीविकारः यथानामभेदेन अंघ्रिगुल्फजंघाजानुऊरु उरः अंसाः ५ अंसेदार्वीशिबिकातस्यांअहंराजाजनस्यगोप्ताअस्मि ६ इतित्वंकत्थमानः ज्ञानिनांसमूहेधृष्टः त्वंनशोभसे ७ कुतः चराचरस्यप्रभवःनाशश्चेतिपृथिव्यामेव ८

तर्हिक्षितेः सत्यतास्यात्तत्राह । एवंक्षितिशब्दस्यापिवृत्तं वर्तनं अर्थं विनैवनिरुक्तम् । यद्वा क्षितिशब्दस्य ( क्षितिरित्यभिधानस्य ) वृत्तं ( वर्तनं ) यस्मिन्तदपिमिथ्यात्वेन निरुक्तमित्यर्थः । कुतः असत्सुसूक्ष्मेषुपरमाणुषुस्वकारणभूतेषुनिधानात्लयात् । अतःपरमाणुव्यतिरेकेणक्षितिर्नास्त्येवेत्यर्थः परमाणवस्तर्हिसत्याः स्युस्तत्राह तेमनसाकार्यानुपपत्त्यावादिभिः कल्पिताः कल्पनाबीजमाह । येषांसमूहेनविशेषःकृतः। तेषांसमूहः क्षितिबुद्ध्यालंबनामित्यर्थः । अवयविनोनिरस्तत्वात्समूहग्रहणम् । तथापिसत्याःस्युःन । अविद्यया प्रपंचस्यभगवन्मायाविलसितत्वादज्ञानेनकल्पिताः । ( रज्ज्वज्ञानेनकल्पितः सर्पइवमिथ्येत्यर्थः ) ९ एवमन्यदपिकृशत्वादिधर्मकं बुद्ध्याप्रतीतं द्वितीयं द्वैतं द्रव्यादिनाम्नाउपलक्षितयाऽजयामाययाकृतमवेहि । तत्रकृशंह्रस्वं । स्थूलंतत्प्रतियोगि । अणुबृहतोः पृथगुपादानात् असत्कारणं सत्कार्यम् । जीवं चेतनं अजीवं जडम् १० तर्हिकिंसत्यंतदाह ज्ञानंसत्यम् । व्यावहारिकसत्यत्वंव्यावर्तयति । परमार्थं । वृत्तिज्ञानव्यवच्छेदार्थानिषड्विशेषणानि । विशुद्धं ततुआविद्यकं । एकं ततुनानारूपं । अनंतरंत्ववाहिः बाह्याभ्यंतरशून्यं ततुविपरीतं । ब्रह्मपरिपूर्णं ततुपरिच्छिन्नं । प्रत्यक् ( आत्मरूपं ) ततुविषयाकारं । प्रशांतं निर्विकारं ( ततुसविकारं ) तदेवंस्वरूपज्ञानंसत्यमित्युक्तं । कीदृशंतत्षडैश्वर्यादिषड्गुणत्वेनभगवच्छब्दः संज्ञायस्य । यच्चज्ञानंवासुदेवंवदंति ११ एतत्प्राप्तिस्तुमहत्सेवांविनानभवतीत्याह । हेरहूगण एतद्ज्ञानंतपसापुरुषोनयाति । इज्ययावैदिककर्मणा । निर्वपणात् अन्नादिसंविभागेन । गृहाद्वातन्निमित्तपरोपकारेण छंदसावेदाभ्यासेन । जलाग्न्यादिभिरुपासितैः १२ महत्सेवायास्तत्प्राप्त्युपायतामाह यत्रयेषुमहत्सु ( उत्तमश्लोकस्यहरेर्गुणानुवादः ) ग्राम्यकथानां ( विषयवार्तानां ) विघातोयस्मात् । ( तत्रप्रस्तुतोसौनिषेव्यमाणोमतिंसतीं विषयवासनारहिताम् । ) १३ विषयसंगस्तुयोगभ्रंशकरइतिवदन् कस्त्वंनिगूढश्चरसीतिप्रश्नस्योत्तरमाह । अहमितिद्वाभ्याम् । ( दृष्टंराज्यादिश्रुतंस्वर्गादितयोरभ्यासंगस्तत्संबंधः । ) विमुक्तोदृष्टश्रुतसंगनिमित्तोबंधोयेन । हतोऽर्थः प्रयोजनंयस्य १४ श्रीकृष्णार्चनं भ्रष्टमप्युद्धरतीत्याह । सेति । जनसंगाद्विशंकमानः अविवृतः अप्रकटः १५

एवंनिरुक्तंक्षितिशब्दवृत्तमसन्निधानात्परमाणवोये ॥ अविद्ययामनसाकल्पितास्तेयेषांसमूहेनकृतोविशेषः ९ एवंकृशंस्थूलमणुर्बृहद्यदसच्चसज्जीवमजीवमन्यत् ॥ द्रव्यस्वभावाशयकालकर्मनाम्नाऽजयाऽवेहिकृतंद्वितीयम् १० ज्ञानंविशुद्धंपरमार्थमेकमनंतरंत्ववहिर्ब्रह्मसत्यम् ॥ प्रत्यक्प्रशांतंभगवच्छब्दसंज्ञं यद्वासुदेवंकवयोवदंति ११ रहूगणैतत्तपसानयातिनचेज्ययानिर्वपणाद्गृहाद्वा ॥ नच्छंदसानैवजलाग्निसूर्यैर्विनामहत्पादरजोभिषेकम् १२ यत्रोत्तमश्लोकगुणानुवादःप्रस्तूयतेग्राम्यकथाविघातः॥निषेव्यमाणोनुदिनंमुमुक्षोर्मतिंसतींयच्छतिवासुदेवे १३ अहंपुराभरतोनामराजाविमुक्तदृष्टश्रुतसंगबंधः॥आराधनंभगवतईहमानोमृगोऽभवंमृगसंगाद्धतार्थः १४ सामांस्मृतिर्मृगदेहेपिवीरकृष्णार्चनप्रभवानोजहाति ॥ अथोअहंजनसंगादसंगोविशंकमानोऽविवृतश्चरामि १५

सापृथ्वी परमाणुरूपा ते परमाणवः भगवन्माययाकल्पिताः ९ एवं कृशस्थूलादिद्रव्यस्वभावादि सर्वं प्रपंचजातं भेदरूपं कृतमस्ति १० तस्मात् इदं व्यवहाररूपं सर्वंमिथ्या सत्यंतु ज्ञानं भगवच्छब्दसंज्ञम् यद्वासुदेवमिति कवयो वदंति ११ हेरहूगण एतत् ज्ञानं पुरुषः तपसा यज्ञैः वेदाभ्यासादिनाचनप्राप्नोति ततुमहत्संगेनप्राप्यते १२ ततः अकिंचनाभक्तिः भवति १३ हेराजन् पुरा अहं भरतो नाम राजा आसम् ईश्वराराधनं ईहमानः मृगसंगात् मृगः अभवम् १४ मृगदेहेपिकृष्णार्चनप्रभावात् मत्स्मृतिर्नगता अतः अहं जनसंगात् विशंकमानः अप्रकटः चरामि १५

( यतोदुष्टसंगाद्दुर्गतिःयस्मात् ) असंगैर्महद्भिः यः सुसंगः तेनजातंज्ञानमेवअसिः खड्गस्तेनछिन्नमोहः सन्अध्वनः संसार मार्गस्य अतिशयितंश्रेष्ठंपारंहरिं याति यद्वा पारमति अतिक्रम्यहरिंयाति । " अतिरतिक्रमणेच " इतिकर्मप्रवचनीयत्वाद्द्वितीया । तस्यहरेरीहानां ( चरितानां ) कथनस्मृतिभ्यांलब्धास्मृतिर्येनसः १६ ॥ इतिपंचमस्कंधेटीकायांद्वादशोध्यायः ॥ १२ ॥ त्रयोदशेऽविरक्तायत्वयातत्त्वनिरूपणम् । इतिवैराग्यदार्ढ्यायभवाटव्युपवर्ण्यते ॥ १ ॥ अध्वनः पारमित्युक्तं तमेवाध्वानं प्रसिद्धमार्गरूपकेण वैराग्यायप्रपंचयति दुरत्यये दुस्तरेअध्वनिप्रवृत्तिमार्गेरजस्तमःसत्त्वैः विभक्तानिकर्माणिकार्यतयापश्यतीतितथासएवप्रसिद्धः सार्थोजीवसमूहः अर्थपरः सुखार्थः सन्यथावणिक्सार्थो अर्थार्जनायगच्छन् अटवींयातितद्वत् ( भवाटवीं संसारविपिनंयाति । शर्मसुखंनलभते ) १ अस्याध्यायस्यव्याख्यानरूपउत्तराध्यायोस्तितथापिसुखप्रतिपत्तये किंचिद्व्याख्यायते । यस्यांभवाटव्यां इमेइंद्रियनामानः षड्दस्यवः चोराः कुत्सितोनायकः नेतासारथिर्बुद्धिलक्षणोयस्यतंसार्थं विलुंपंति । तस्यधर्मधनमुपभोगेनमुष्णंतीत्यर्थः । गोमायवः सृगालतुल्यादारापत्यादयः त्वंमेभर्तापितेत्येवं प्रविश्यप्रमत्तंसार्थिकं सार्थेस्थितंहरंतिइतस्ततआकर्षंति । उरणंमेषम् २ वीरुधोलताः तृणानिचगुल्मानिचलतादिजालानिप्रभूतः ( बहुलैः ) एतैः गह्वरेदुःप्रवेशक्षेत्रे । कठोरैस्तीव्रैर्दंशैर्मक्षिकाविशेषैर्मशकैश्चयथाकश्चिदुपद्रुतोभवति । एवंकामकर्मादिभिर्गह्वरेगृहाश्रमेवर्तमानोदुर्जनैरुपद्रुतोभवतीत्यर्थः । गंधर्वपुरवदघटमानमेवदेहादिकं प्रकर्षेणसत्यमेवेदमितिपश्यति क्वचित्क्वचित्क्वापिक्वापिआशुरयः अतिवेगउल्मुकाकारोग्रः पिशाचः तत्तुल्यं सुवर्णमुपादेयत्वेनप्रपश्यतीत्यर्थः ३ निवासादिषुआत्मास्वभावो ( अभिनिवेशो ) यस्याः साबुद्धिर्यस्यसः । ततस्ततोधावतीत्युभयत्रतावानेवार्थः । वात्याचक्रवातः तस्यामुत्थितः पांसुस्तेनधूम्रादिशः रजस्वलेरजोव्याप्ते अक्षिणीयस्यसयथानजानातितथावात्येवभ्रमयंती यास्त्रीतस्यामुद्भवैः रागादिभिः अप्रकाशमानादिग्देवताः कर्मसाक्षिभूतानजानातीत्यर्थः ४

**तस्मान्नरोऽसंगसुसंगजातज्ञानासिनेहैवविवृक्णमोहः ॥ हरिंतदीहाकथनस्मृतिभ्यांलब्धस्मृतिर्यात्यतिपारमध्वनः १६ इतिश्रीभा०म०पंचमस्कंधेब्राह्मणरहूगणसंवादेद्वादशोध्यायः ॥ १२ ॥ ॥ ॥ ब्राह्मणउवाच ॥ ॥ दुरत्ययेऽध्वन्यजयानिवेशितोरजस्तमःसत्त्वविभक्तकर्मदृक् ॥ सएषसार्थोऽर्थपरःपरिभ्रमन्भवाटवींयातिनशर्मविंदति १ यस्यामिमेषण्नरदेवदस्यवःसार्थंविलुंपंतिकुनायकंबलात् ॥ गोमायवोयत्रहरंतिसार्थिकंप्रमत्तमाविश्ययथोरणंवृकाः २ प्रभूतवीरुत्तृणगुल्मगह्वरेकठोरदंशैर्मशकैरुपद्रुतः ॥ क्वचित्तुगंधर्वपुरंप्रपश्यतिक्वचित्क्वचिच्चाशुरयोल्मुकग्रहम् ३ निवासतोयद्रविणात्मबुद्धिस्ततस्ततोधावतिभोअटव्याम् ॥ क्वचिच्चवात्योत्थितपांसुधूम्रादिशोनजानातिरजस्वलाक्षः ४**

तस्मात् नरः सत्संगलब्धज्ञानासिना छिन्नमोहः जन्ममरणादिरूपसंसारमार्गस्य पारंयाति १६ ॥ इतिपंचमेद्वादशः ॥ १२ ॥ ॥ ॥ ब्राह्मणउवाच ॥ ॥ हेरहूगणअयं जीवसमूहः अजया दुरत्यये अध्वनि निवेशितःसुखार्थेच्छयाभवाटवींयाति १ यस्यांभवाटव्यांषट्दस्यवः बलात्सार्थस्यधनंमुष्णंति किंच यस्यां सृगालाइवदाराःप्रमत्तंसार्थिकंहरति यथावृकाः मेषम् २ तत्रदंशैः मशकैः उपद्रुतः क्वचित्गंधर्वपुरंपश्यति क्वचित्पिशाचंपश्यति ३ भयात् अटव्यां इतस्ततो धावति कदाचित् दिशः नजानाति ४

अदृश्यानां झिल्लीनां भृंगारिकासंज्ञानां कीटविशेषाणां स्वनैः कर्णयोः शूलोव्यथायस्य । उलूकाघूकास्तेषां वाग्भिर्व्यथितोंऽतरात्मामनोयस्य । अत्रचपरोक्षमप्रियवक्तारोझिल्लीतु
ल्याः प्रत्यक्षमप्रियवक्तारोघूकतुल्याः येषां ( कारस्करबिभीतकादीनां ) छायापिपापहेतुस्ते अपुण्यवृक्षास्तत्तुल्यानधार्मिकान् सेवते । मरीचितोयानीतिनिष्फलत्वेन विज्ञातानपिविष
यान् । ५ वितोयासुसरित्सुपतितस्यगात्रभंगात्सद्योदुःखंभवतिनचोदकलाभः तद्वादिहचपरत्रचदुःखदान्पाषंडानभियाति । आलषते दायादादिभ्योन्नादिवांछाति । ( निरंधोनिर
न्नः ) उभयत्रापिसएवार्थः । दावंदावाग्नितुल्यं दुःखदंगृहं प्राप्यशोकाग्निनातप्तोनिर्विद्यतेविषीदति । तत्रचयक्षराक्षसतुल्यैः राजाभिः हृतं असुवत्प्रेष्ठं धनंयस्यमानिर्विद्यते ६ अ
न्यैः शूरैर्हृतं स्वंवित्तंयस्य । निर्विण्णंविषण्णं चेतोयस्य । कश्मलंमूर्छांगंधर्वपुरीमवमनोरथोपगतपितृपुत्रादिसमाजं प्रविष्टः सन् । ( निर्वृतवत्सुखीव ) ७ ( शर्करासूक्ष्मप्रस्तरः ) ।
कंटकादिविद्धांघ्रिरिवविघ्नैरभिभूतः सन्नगतुल्यंमहत्कर्मआरूढं कर्तुमिच्छुर्विमनाइवआस्ते । पदेपदेक्षणेक्षणेअभ्यंतरेणवह्निनाजाठरेणाग्निना ( क्षुधापीडितोजनायकुटुंबाय ) ८ अ
जगराहिनानिद्रारूपेणगिलितः किमपिनवेत्तिविपिनेत्यक्तःशवइव । दंदशूकैः ( भुजंगैः ) हिंस्रैर्दुर्जनैर्दष्टः पीडितः अंधोलुप्तविवेकः अंधकूपमोहेपतितः तामिस्रेदुःखेशेतेलीयते ९ क्षुद्र
रसान्परयोषादीन् विचिन्वन् गवेषयन् तन्मक्षिकाभिर्योषादिस्वामिभिः विमानः अवज्ञातः ताडितः सन् व्यथितोभवति । यदिकथंचित्तत्रातिक्लेशेनप्रतिलब्धमानः प्राप्तयोषादिर्भव
तितदावलात् अन्येऽपहरंति । तान्यदाऽभियुंक्तेतदाततोप्यन्येहरंति । १० यत्किंचित्अत्यल्पमपिमिथोविपणन् व्यवहरन् क्रयादिनागृह्णन् वित्तशाठ्यात् धनवंचनात् ११

अदृश्यझिल्लीस्वनकर्णशूलउलूकवाग्भिर्व्यथितांतरात्मा ॥ अपुण्यवृक्षाञ्छ्रयतेक्षुधार्दितोमरीचितोयान्यभिधावतिक्वचित् ५ क्वचिद्वितोयाःसरितो
भियातिपरस्परंचालषतेनिरंधः ॥ आसाद्यदावंक्वचिदग्नितप्तोनिर्विद्यतेक्वचयक्षैर्हृतासुः ६ शूरैर्हृतस्वःक्वचनिर्विण्णचेताःशोचन्विमुह्यन्नुपयाति
कश्मलम् ॥ क्वचिच्चगंधर्वपुरप्रविष्टःप्रमोदतेनिर्वृतवन्मुहूर्तम् ७ चलन्क्वचित्कंटकशर्करांघ्रिर्नगारुरुक्षुर्विमनाइवास्ते ॥ पदेपदेभ्यंतरवह्निनार्दितःकौटुं
बिकःक्रुध्यतिवैजनाय ८ क्वचिन्निगीर्णोऽजगराहिनाजनोनावैतिकिंचिद्विपिनेऽपविद्धः ॥ दष्टःस्मशेतेक्वचदंदशूकैरंधोऽधकूपेपतितस्तमिस्रे ९ कर्हिस्म
चित्क्षुद्ररसान्विचिन्वंस्तन्मक्षिकाभिर्व्यथितोविमानः ॥ तत्रातिकृच्छ्रात्प्रतिलब्धमानोबलाद्विलुंपंत्यथतंततोन्ये १० क्वचिच्चशीतातपवातवर्षप्रतिक्रियां
कर्तुमनीशआस्ते ॥ क्वचिन्मिथोविपणन्यच्चकिंचिद्विद्वेषमृच्छत्युतवित्तशाठ्यात् ११

क्वचित् उलूकवाग्भिः व्यथितमनाः क्षुधार्दितः सन् मृगजलानि अभिधावति ५ क्वचित्वितोयाःसरितोभियातिक्वचित् दावंप्राप्यआग्नितप्तः सन् विषीदति ६ क्व
चित् शूरैः हृतधनः शोचन्सन् मुर्च्छांउपयाति क्वचित् गंधर्वपुरंप्रविश्यमोदते ७ क्वचित्कंटकादिभिः विद्धांघ्रिः सन् नगारुरुक्षुः विमनाइव आस्ते क्षणेक्षणे जठरा
ग्निनादग्धः सन् स्वजनायक्रुध्यति ८ क्वचित् अजगरसर्पेणगिलितः सन् किंचिन्नावैतिक्वचित् दंदशूकैःदष्टः सन्अधकुपेपतति ९ क्षुद्ररसान्विचिन्वन्सन्मक्षिकाभिः
ताडितः व्यथितोभवति १० क्वचित् शीतातपवातवर्षप्रतिक्रियांकर्तुमनीशः आस्ते क्वचित् मिथोव्यवहरन्वित्तशाठ्यात्द्वेषंऋच्छति ११

शय्यादिहीनः । आस्यतेस्मिन्नित्यासनं कंबलादि । स्थीयतेत्रेतिस्थानं गृहं । विहरंत्यनेनेतिविहारो यानादि । याचमानोपियदापरात्परस्मादप्राप्तकामस्तदापरकीये वस्तुनिदृष्टि रभिलाषोयस्यसोऽवमानंप्राप्नोति १२ एवमन्योन्यंवित्तव्यतिषंगेणवनविनिमयेन विवृद्धोवैरानुबंधोयस्यतथाविधोपिपरस्परंविवहन् विवाहादिसंबंधंकुर्वन् उरुभिः कृच्छ्रैः श्रमैः वित्त बाधैरुपसर्गैश्चद्वेषादिभिर्विपन्नोमृतप्रायोभवति १३ दुरत्ययत्वमध्वनोदर्शयति । तांस्तान्विपन्नान्मृतान् विहाय जातंजातंपरिगृह्यविहरन्यतः प्रस्थितः तंप्रतिनावर्तते हेवीरअध्वनः पारंयोयोगस्तंचनोपैति । अत्रसार्थे कश्चिदतिसमर्थोपि १४ तदेवाह । मनस्विनः शूराः निर्जितादिग्गजेंद्रायैः ममेयंभूर्ममेयमिति भुविनिमित्तभूतायां बद्धवैरैस्तैन्यस्तदंडः संन्यासी यद्विष्णोःपदमभियातितन्नव्रजंति १५ सिंहावलोकनेनपुनर्भवाटवींभेवानुवर्तयति । प्रसज्जतिआसक्तिंकरोति । कीदृशः लतानांभुजाः शाखाः तद्वत्सुकुमारायेस्त्रीणांभुजास्तदाश्रयः स न्नतदाश्रया अव्यक्तपदा अस्फुटाक्षराः कलभाषिणोयेद्विजाः पक्षिणः तत्तुल्येषुस्त्रीसंगप्रसक्तेष्वपत्येषुस्पृहायस्यतादृशोभूत्वा हरिचक्रं सिंहसमूहः तत्तुल्यात्कालचक्रनिमित्ताज्जन्ममरणा देःत्रसन्नतत्परिहाराय कैश्चित्प्रलोभितो बकादिवद्वंचकैः क्षुद्रैः क्रूरैश्चपाषंडैः सहसख्यंकरोति तेषुप्रविशति १६ तैर्वंचितस्तत्रफलाभावंज्ञात्वाहंसानांब्राह्मणानांकुलंपुनः प्रविशन्तेषांशी लंप्रायश्चित्तपूर्वकं पुनरुपनयनाद्याचारं अरोचयन् अप्रियंपश्यन् वानरतुल्यान् भ्रष्टाचारान् शूद्रप्रायानुपैति । तज्जातिरासेनवानरजातिक्रीडया स्त्रियामिथुनीभूय परस्परमु खोद्वीक्षणेनविस्मृतोजीवितावधिर्मरणकालोयेन १७

क्वचित्क्वचित्क्षीणधनस्तुतस्मिञ्छय्यासनस्थानविहारहीनः ॥ याचन्परादप्रतिलब्धकामःपारक्यदृष्टिर्लभतेऽवमानम् १२ अन्योन्यवित्तव्यतिषंगवृद्धवैरानुबंधोविवहन्मिथश्च ॥ अध्वन्यमुष्मिन्नुरुकृच्छ्रवित्तबाधोपसर्गैर्विहरन्विपन्नः १३ तांस्तान्विपन्नान्सहितत्रतत्रविहायजातंपरिगृह्यसार्थः ॥ आवर्ततेऽद्यापिनकश्चिदत्रवीराध्वनःपारमुपैतियोगम् १४ मनस्विनोनिर्जितदिग्गजेंद्रा ममेतिसर्वेभुविबद्धवैराः ॥ मृधेशयीरन्नतुतद्व्रजंतियन्न्यस्तदंडोगतवैरो भियाति १५ प्रसज्जतिक्वापिलताभुजाश्रयस्तदाश्रयाव्यक्तपदद्विजस्पृहः ॥ क्वचित्कदाचिद्धरिचक्रतस्त्रसन्सख्यंविधत्तेबककंकगृध्रैः १६ तैर्वंचितोहंसकु लंसमाविशन्नरोचयञ्छीलमुपैतिवानरान् ॥ तज्जातिरासेनसुनिर्वृतेंद्रियःपरस्परोद्वीक्षणविस्मृतावधिः १७

क्वचित् क्षीणधनः शय्यासनादिहीनः सन् अन्यंपुरुषंयाचित्वा तत् शय्यादिअप्राप्य अवमानं प्राप्नोति १२ एवंबहुभिः श्रमैः उपसर्गैश्चविपन्नः सन् मृतप्रायोभवति १३ किंचसः मृतान् तत्रतत्र हित्वाजातंजातं परिगृह्य विहरन्सन्अद्यापिनावर्तते १४ किंच एतेभुविममेयंभूरितिबद्धवैराः संतः युद्धेम्रियंते नतुविष्णुपदंव्रजंति १५ अथ पुनः भवाटवींवर्णयति अयंसार्थः क्वचित् सिंहसंघात् त्रसन् बककंकगृध्रैः सहसख्यंकरोति १६ ततः तैर्वंचितः सन्हंसकुलं प्रविशति तत्रापितच्छीलं अरोचयन् वान रानुपैति ततः तज्जातिक्रीडयाविस्मृतजीवितावधिर्भवति १७

( द्रुमेषु ) द्रुमवत्केवलदृष्टार्थेषुगृहेषु ( रंस्यन्सुतेषुदारेषुचाभिगषो ) व्यवायदीनः सुरतेच्छयाकृपणः ( मनोरथानुसारेणसुरतासंभवेतदिच्छयादैन्यंकुर्वन्नित्यर्थः ) एवंस्वस्यबंधनंप्राप्तं तस्मिन्विवशः परिहर्तुमशक्तः पाठांतरेतुवनेसंसारेचरन्नित्यर्थः । गिरिकंदरवत् अतिभयानकेरोगादिदुःखेपतन् कंदरस्थगजतुल्यान्मृत्योर्भीतः सन् वल्लीतुल्यंप्राचीनं कर्मावलंब्यात्र स्थितोभवति १८ ( अतआपदः कथंचिद्विमुक्तः स्वर्गगतः पुनः ) सार्थंप्रविशति । यथापूर्वं प्रवृत्तिमार्गे रमते । ( एवंप्रवृत्तौरममाणः संसारएवभ्रमन्स्वमार्गमद्यापिकश्चन ) नवेद परमपुरुषार्थं ( हेअरिंदमेत्यनेनजितेंद्रियस्यतवास्तिमुक्त्यधिकारइतिसूचितम् ) १९ त्वमपिअध्वनिनिवेशितइत्यनुषंगः । अतोस्याध्वनः पारमतितर । असज्जितात्माविषयेष्वनभिनिवेशितचित्तः सन् । हरिसेवयाशितंतीक्ष्णीकृतं ( ज्ञानखड्गं । आदायतेनास्याध्वनः पारमतितर । संन्यस्तदंडःत्यक्तप्रवृत्तिमार्गइत्यर्थः ) । २० अखिलजन्मसुशोभनंनृजन्मैवपरंश्रेष्ठम् येभ्योदेवादिजन्मभ्यः । तैरपिकिं । अमुष्मिन्स्वर्गेपिजन्मभिः किं । नाकिंचित् । यत् येषुजन्मसुयत्रस्वर्गेवावोमहात्मनां समागमः प्रचुरोनभवति । हृषीकेशस्ययशसाकृतःशोधितआत्मायैस्तेषाम् २१ संततमुपासितैःतेषांमहतांपदाब्जरेणुभिः हतमंहोयस्यतस्याधोक्षजे निर्मलाभक्तिर्भवतीतिनैवाद्भुतम् । यस्यतवमुहूर्तमात्रभवात्समागममात्रादपिदुस्तर्केण ( दृष्टःश्रमःकर्मतआत्मनइत्यादिनोक्तेन ) बद्धमूलोपिममअविवेकोनष्टः । २२ ब्रह्मविदः केनरूपेणविचरंतीत्यज्ञानात् सर्वान्नमस्यति नमइति । येअवधूतः क्रीडारतत्वादश्रद्धेयधीरेषास्तानप्यभिव्याप्यसर्वेभ्योनमइत्यर्थः । स्वदृष्टांतेनराज्ञां ( श्रीमदांधत्वात्-)महदवज्ञां संभाव्याह राज्ञां शिवमस्त्विति । २३ उत्तरामातायस्यहेउत्तरामातः ( परीक्षित् ) विगणयतः नगणयतः ( परमकारुणिकतया ) अवमंतर्यपिपरमकरुणाकरत्वेनेत्यर्थः सिंधुपतये ( रहूगणाय ) आत्मसतत्त्वं ( आत्मतत्त्वमित्यर्थः ) उपदिश्य निभृताः शांताः करणानामिंद्रियाणामूर्मयोयस्मिन्सआशयोयस्य । ( परोऽनुभावः सामर्थ्यंयस्य ) २४

द्रुमेषुरंस्यन्सुतदारवत्सलोव्यवायदीनोविवशःस्वबंधने ॥ क्वचित्प्रमादाद्गिरिकंदरेपतन्वल्लींगृहीत्वागजभीतआस्थितः १८ अतःकथंचित्सविमुक्तआपदः पुनश्चसार्थंप्रविशत्यरिंदम ॥ अध्वन्यमुष्मिन्नजयानिवेशितोभ्रमन्जनोद्यापिनवेदकश्चन १९ रहूगणत्वमपिह्यध्वनोस्यसंन्यस्तदंडःकृतभूतमैत्रः ॥ असज्जितात्माहरिसेवयाशितज्ञानासिमादायतरातिपारम् २० ॥ राजोवाच ॥ अहोनृजन्माखिलजन्मशोभनंकिंजन्मभिस्त्वपरैरप्यमुष्मिन् ॥ नयद्धृषीकेशयशस्कृतात्मनांमहात्मनांवःप्रचुरःसमागमः २१ नह्यद्भुतंत्वच्चरणाब्जरेणुभिर्हतांहसोभक्तिरधोक्षजेऽमला ॥ मौहूर्तिकाद्यस्यसमागमात्रमेदुस्तर्कमूलोपहतोऽविवेकः २२ नमोमहद्भ्योस्तुनमःशिशुभ्योनमोयुवभ्योनमआवटुभ्यः ॥ येब्राह्मणागामवधूतलिंगाश्चरंतितेभ्यःशिवमस्तुराज्ञाम् २३ ॥ ॥ श्रीशुकउवाच ॥ ॥ इत्येवमुत्तरामातःसवैब्रह्मर्षिसुतः सिंधुपतयआत्मसतत्त्वंविगणयतः परानुभावः परमकारुणिकतयोपदिश्यरहूगणेनसकरुणमभिवंदितचरणआपूर्णार्णवइवनिभृतकरणोर्म्याशयोधरणिमिमांविचचार २४

एवं अमुष्मिन्मार्गेभ्रमन्अद्यापि कश्चन न वेद हेरहूगणत्वमपिसर्वभूतमैत्रः न्यस्तदंडः सन् हरिसेवयातीक्ष्णंज्ञानासिंगृहीत्वा अस्य अध्वनः पारंयाहि १८ १९ २० ॥ रहूगणउवाच ॥ ॥ अहोअखिलजन्मसु मध्येनृजन्मैवश्रेष्ठंकिंदेवादिजन्मना नृजन्मनातुसत्समागमोभवति २१ तेनभगवच्चरणे अमलाभक्तिः उत्पद्यते अहोतवमुहूर्तमात्रसंगात्ममअविवेकोगतः २२ किंच ब्रह्मविदः केनरूपेण विचरंति इत्यज्ञानात् सर्वान्नमस्याति महद्भ्यः शिशुभ्यः युवभ्यः वटुभ्यः नमः येअवधूतलिंगाः ब्राह्मणाः तेभ्यः नमः राज्ञांशिवमस्तु २३ ॥ श्रीशुकउवाच ॥ एवंसःजडभरतः करुणया रहूगणाय तत्वं उपदिश्य तेन वंदितचरणः पृथ्वींविचचार २४

भा० पं० सुजनात्तस्मात् सम्यगवगतं ( ज्ञातं ) परमात्मसतत्त्वं ( भगवत्स्वरूपं ) येनतथाभूतःसन् तदानीमेव ( अविद्ययाअज्ञानेनकल्पितां ) देहेआत्ममतिंचविससर्ज । हेनृपभगवद.श्रितो अ०
भरतःतदाश्रितोयोरहूगणस्तस्यानुभावः सद्योदेहाहंकारत्यागः २५ पारोक्ष्येणवणिक्सार्थरूपकेणआर्याणां विवेकिनां मनीषयैवदस्युस्थानीयानींद्रियाणि गोमायुस्थानीयान्यपत्या
॥२९॥ दीनिइत्येवंकल्पितविषयः अव्युत्पन्नस्यतुलोकस्यजनस्यसम्यक्अधिगमो ( यस्यतथा) भवतिअतः तदेवमवाध्वरूपकमेतत् समवेतानुकूल्येनप्रस्तुतस्यतदनुरूपार्थोपकल्पनेनकथ्यताम् ॥१४॥
२६ इतिपंचमस्कंधेटीकायांत्रयोदशोऽध्यायः १३ ॥ चतुर्दशेभवारण्यरूपकस्य ाकृतिःकृता । प्रस्तुवेतस्यगोमायुमशकाद्यर्थकल्पनम् ॥१॥यःपरीक्षितापृष्टःसश्रीशुकउवाच सहेतिसूतोक्तिः
दुरत्ययेध्वन्यजयानिवेशितइतियदुक्तंतदेवनिवेशनप्रकारकथनेनप्रपंचयति एषप्रसिद्धोजीवलोकः अयंविष्णोर्माययाअसुगमेध्वन्यापतितोभवाटवींगतःसन् हरिरूपस्यगुराश्चरणारविंद
येमधुकराः सेवकास्तेषां अनुपदवींतैरनुष्ठितं भक्तिमार्गं अद्यापिनावरुंधेनसंप्राप्नोतीत्यन्वयः मायायाः स्वकार्यद्वारेणसंसारमार्गेपातहेतुत्वमाह देहात्ममानिनां सत्त्वादिगुणविशेषैर्विक
ल्पितानिविभक्तानियानिकुशलाकुशलविमिश्रकर्माणितैर्विनिर्मिताभिर्विविधदेहावलीभिः वियोगसंयोगादिर्योऽनादिः संसारः तदनुभवस्यद्वारभूतेनषडिंद्रियवर्गेण तस्मिन् संसाररूपेदुर्ग
मार्गवत् असुगमे ( दुर्गमे ) अध्वनि ( मार्गे ) आपतितः यथावणिजांसार्थः समूहः अर्थार्जनपरःस्वदेहनिष्पादितानां कर्मणां फलद्वारेणानुभवोयस्यविफलाश्चबहुप्रतियोगाः बहुविघ्ना
श्चईहाश्चेष्टायस्यसः । तस्यां संसाराटव्यां येतापास्तेषां उपशमनींनाशनीम् यस्यामित्यादिव्याचष्टे । यस्यांभवाटव्याम् १

सौवीरपतिरपिसुजनसमवगतपरात्मसतत्त्वआत्मन्यविद्याध्यारोपितांदेहात्ममतिंचविससर्ज ॥ एवंहिनृपभगवदाश्रिताश्रितानुभावः २९ ॥ राजोवाच ॥
योहवाइहबहुविदामहाभागवतत्वयाभिहितःपारोक्ष्येणवचसाजीवलोकभवाध्वासह्यार्यमनीषयाकल्पितविषयोनांजसाऽव्युत्पन्नलोकसमधिगमः ॥ अथतदे
वैतद्दुरवगमंसमवेतानुकूल्येननिर्दिश्यतामिति २६ इतिश्रीभागवतेमहा०पंच०त्रयोदशोऽध्यायः १३ ॥ सहोवाच ॥ यएषदेहात्ममानिनांसत्त्वादिगुण
विशेषविकल्पितकुशलाकुशलसमवहारविनिर्मितविविधदेहावलीभिर्वियोगसंयोगाद्यनादिसंसारानुभवस्यद्वारभूतेनषडिंद्रियवर्गेणतस्मिन्दुर्गाध्ववदसुगमेऽ
ध्वन्यापतितईश्वरस्यभगवतोविष्णोर्वशवर्तिन्यामाययाजीवलोकोयंयथावणिक्सार्थोऽर्थपरःस्वदेहनिष्पादितकर्मानुभवःश्मशानवदशिवतमायांसंसाराट
व्यांगतोनाद्यापिविफलबहुप्रतियोगेहस्तत्तापोपशमनींहरिगुरुचरणारविंदमधुकरानुपदवीमवरुंधेयस्यामुहवाएतेषडिंद्रियनामानःकर्मणादस्यवएवते १

सौवीरपतिरपिसाधुसंगात् लब्धतत्त्वज्ञानः अज्ञानेनआत्मनिअध्यारोपितां देहात्मबुद्धिं विससर्ज एवं हेनृपभगवदाश्रितानुभावः अस्ति २५ ॥ परीक्षिदुवाच ॥ हे ॥२५॥
शुकत्वयालोकस्यसंसारमार्गःपारोक्ष्येणकथितःसः सर्वेषांबोधाय प्रत्यक्षेणनिर्दिश्यताम् २६ ॥ ॥ इतिपंचमेत्रयोदशः ॥ १३ ॥ ॥ श्रीशुकउवाच ॥ ॥ यएषः
जीवलोकःविष्णोर्माययाभवाटवींगतःसन् भगवद्भक्तैरनुष्ठितंसंसारतापोपशमनंभक्तिमार्गं अद्यापिनप्राप्नोति यस्यां भवाटव्यामेतेषडिंद्रियनामानः कर्मणादस्यवएवसंति १

दस्तुतुल्यंतेषां कर्मदर्शयति । तद्यथेति । धर्मौपयिकं धर्मकारणं । तमेवस्वाभिप्रेतं धर्ममाह । साक्षादिति । तंतुसांपरायेपरलोकार्थमुदाहरंति । तद्धर्म्यंधर्मार्हधनं । दर्शनाद्याः पंच ज्ञानेंद्रियाणांवृत्तयः । संकल्पव्यवसायावंतःकरणस्य । एतैर्गृहे योग्राम्यउपभोगः तेनकुनाथस्यकुबुद्धेराजितात्मनोविलुंपंति । यथा चोराः कुपालकस्यअनवहितात्मनः सार्थस्यधनंहरंतित द्वत् २ गोमायवोयत्रेत्येतद्व्याचष्टे।(अथचेति )अथचेत्यर्थांतरोपन्यासे। कर्मणाउत्कृष्टाः सृगालाश्चकदर्यस्यातिलुब्धस्य( उदासीनस्यापिकुटुंबभवानाम्नादारापत्यादयः मेषमिवामिषतःपश्य तः सतोपिसंरक्ष्यमाणंहरंति ) ३ प्रभूतवीरुत्तृणगुल्मगह्वरइत्येतद्व्याचष्टे । यथाहीति । नदग्धानि ( गुल्मादीनां ) बीजानियस्मिन् । यद्यस्मात्योयमावसथआश्रमएषकामानांकरं डः यथाकर्पूरभाजनेकर्पूरक्षयेपिपरिमलोनक्षीयते । एवमत्र वासनानामक्षीणत्वान्नकर्माण्युत्सीदंतीत्यर्थः ४ दंशमशकतुल्यैरपसदैर्नीचैः शलभादिभिश्चउपरुध्यमानः पीड्यमानोबहिः प्राणोवित्तंयस्य । तथाविधोपस्मिन्नध्वनि परिभ्रमन् अविद्यादिभिरुपरक्तेनमनसागंधर्वपुरतुल्यमघटमानंनरलोकं सत्यतयामिथ्यादृष्टिरनुपश्यति । ( भ्रांतदृष्टिः सन् नाममात्रमपिदे हं वस्तुतयाजानातीत्यर्थः । ) ५ प्रपश्यतीतिप्रशब्दसूचितमर्थांतरंदर्शयति । तत्रचगंधर्वपुरे क्वचिदातपोदकं मृगतृष्णाजलं तत्तुल्यान् विषयानुपधावतीति ६

तद्यथापुरुषस्यधनंयत्किंचित्साक्षाद्धर्मौपयिकंबहुकृच्छ्राधिगतंसाक्षात्परमपुरुषाराधनलक्षणोयोऽसौधर्मस्तंतुसांपरायउदाहरंतितद्धर्म्यंधनंदर्शनश्रवणास्वादनावघ्राणसंकल्पव्यवसायगृहग्राम्योपभोगेनकुनाथस्याजितात्मनोयथासार्थस्यतथाऽजितात्मनोविलुंपंति २ अथचयत्रकौटुंबिकादारापत्यादयोनाम्नाकर्मणावृकसृगालाएवअनिच्छतोपिकदर्यस्यकुटुंबिनउरणकवत्संरक्ष्यमाणंमिषतोपिहरंति ३ यथाह्यनुवत्सरंकृष्यमाणमप्यदग्धबीजंक्षेत्रंपुनरेवावपनकालेगुल्मतृणवीरुद्भिर्गह्वरमिवभवति ॥ एवमेवगृहाश्रमःकर्मक्षेत्रंयस्मिन्नहिकर्माण्युत्सीदंतियदयंकामकरंडएषआवसथः ४ तत्रगतोदंशमशकसमापसदैर्मनुजैःशलभशकुंततस्करमूषकादिभिरुपरुध्यमानबहिःप्राणःक्वचित्परिवर्तमानोऽस्मिन्नध्वन्यविद्याकामकर्मभिरुपरक्तमनसानुपपन्नार्थनरलोकंगंधर्वनगरमुपपन्नमितिमिथ्यादृष्टिरनुपश्यति ५ क्वचिदातपोदकनिभान्विषयानुपधावतिपानभोजनव्यवायादिव्यसनलोलुपः ६

तद्यथापुरुषस्ययत्किंचिद्भगवदाराधनलक्षणं धर्मकारणं धनं तत् दर्शनस्पर्शनश्रवणास्वादनावघ्राणैः विषयभोगेन हरंति २ अथचदारापत्यादयः कर्मणाइवसृगालाएव लुब्धस्यकुटुंबिनः सर्वस्वंहरंति ३ यथाक्षेत्रंकृष्यमाणमपिगुल्मतृणादिभिर्गह्वरंभवति एवमेषगृहाश्रमःकर्मक्षेत्रं यस्मिन्कर्माणिनोत्सीदंति ४ अत्रवासनानां अक्षीणत्वात्तत्र गतःसन्दंशमशकतुल्यैःनीचमनुष्यैःपीड्यमानःअविद्यादिभिरुपरक्तेनमनसागंधर्वपुरतुल्यंनरलोकंसत्यतयामिथ्यादृष्टिःसन्अनुपश्यति ५ क्वचित्मृगजलतुल्यान्विषयान् व्यसनलुब्धःसन्अनुधावति ६

क्वचित्क्वचिच्चाशुरयोल्मुकग्रहमित्येतद्व्याचष्टे । क्वचिच्चाशेषाणांदोषाणांनिषदनंस्थानं पुरीषविशेषं अग्नेर्विष्ठाम । तस्यपुरीषस्यैवलोहितोवर्णो यस्यरजोगुणस्यतेननिर्मितातादृशयाम तिर्यस्यसःसुवर्णमुपादातुमिच्छति अग्निकामेनकातरःपरवशः उल्मुकसदृशंपिशाचं ( ज्वलदुल्मुकनिभंपिशाचविशेषमिव ) शीतातुरोह्यरण्येऽग्निवज्ज्वाज्वल्यमानंततस्तत्रोधावन्मुल्मुक पिशाचमग्निबुद्ध्याऽनुधाति । नतुतंप्राप्नोति कथंचित्प्राप्तश्चेत्तर्हि तेनभक्षितः सन् म्रियतएवंसुवर्णमनुधावन्नपीत्यर्थः । ७ निवासतोयद्रविणेत्येतद्व्याचष्ट । अथेति । निवासादिष्वनेके ष्वात्मनउपजीव्येषु अभिनिवेशोयस्य ८ क्वचिच्चवात्योत्थितेत्येतद्व्याचष्टे । क्वचिद्वेति । आरोहंअंकं । तस्मिन् कालेयद्रजः रागस्तेनस्वदृष्ट्यावरकेणरजन्यांरात्रौभूताइव । ह्रस्वपाठे रजनीभूतस्तमोमयइवातीवरजसाच्छन्नमतिः अतएवरजोव्याप्तचक्षुरिवदिक्षुस्थितामर्यादातिक्रमसाक्षिभूतादेवतानजानाति ९ अनुपादेयमेवोपादेयतयागृह्णातीतिप्रक्रमसानात्यादुत्तर श्लोकचतुर्थपादंप्रथमंव्याचष्टे । क्वचित्सकृदिति । क्वचिदातपोदकनिभानीत्यत्रमिथ्याविषयेषुलंपटत्वमुक्तम् । निवासतोयेत्यत्रतद र्जनप्रयासउक्तः । अत्रतुत्राधितेष्वपिपुनः प्रवृत्तिरुच्य तइत्यपौनरुक्त्यं । स्वयमेवसकृदवगतं विषयाणांवैतथ्यं विफलत्वंयेन । पराभिध्यानेनदेहाभिनिवेशेन विभ्रंशितास्मृतिर्यस्य तयैवविभ्रंशितयास्मृत्यैव स्मृतिभ्रंशादेवेत्यर्थः १० अदृश्य झिल्लीस्वनेत्येतद्व्याचष्टे । क्वचिदुलूकेति । अतिपरुषोऽतिकठिनोरभसउत्साहस्तेनाटोपः संभ्रमोयथाभवत्येवंरिपूणांराजकुलस्यचनिर्भर्त्सितेन अतिव्यथितंकर्णमूलंहृदयंचयस्य ११ अ पुण्यवृक्षानित्येतव्द्याचष्टे सयदेति । दुग्धमुपभुक्तं पूर्वसुकृतं येन तदा । कारस्करोविषतिंदुःतत्प्रमुखाये अपुण्यद्रुमास्तथाविषालताश्चविषोदपानाश्चविषकूपास्तत्तुल्यान् दृष्टश्रु तप्रयोजनशून्यधनान् ( अतिकृपणानधार्मिकान् ) १२ क्वचिद्वितोयाः सरिदित्येतव्द्याचष्टे । एकदाकाचिदसतांप्रसंगात् निकृतावंचितामतिर्यस्यसः । निरुदकनदीगर्तपाते यथात्स्यः शिरःस्फुटतिपश्चादपिचतद्वेदनाऽनुवर्ततएवमिहपरत्रचदुःखदम् १३

क्वचिच्चाशेषदोषनिषदनंपुरीषविशेषंतद्वर्णगुणनिर्मितमतिःसुवर्णमुपादित्सत्यग्निकामकातरइवोल्मुकपिशाचम् ७ अथकदाचिन्निवासपानीयद्रविणाद्यने कात्मोपजीवनाभिनिवेशएतस्यांसंसाराटव्यामितस्ततःपरिधावति ८ क्वचिच्चवात्यौपम्ययाप्रमदयारोहमारोपितस्तत्कालरजसारजनीभूताइवासाधुमर्या दोरजस्वलाक्षोदिग्देवताअतिरजस्वलमतिर्नविजानाति ९ क्वचित्सकृदवगतविषयवैतथ्यःस्वयंपराभिध्यानेनविभ्रंशितस्मृतिस्तयैवमरीचितोयप्रायां स्तानेवाभिधावति १० क्वचिदुलूकझिल्लीस्वनवदतिपरुषरभसाटोपंप्रत्यक्षंपरोक्षंवारिपुराजकुलनिर्भर्त्सितेनातिव्यथितकर्णमूलहृदयः ११ सयदा दुग्धपूर्वसुकृतस्तदाकारस्करकाकतुंडाद्यपुण्यद्रुमलताविषोदपानवदुभयार्थशून्यद्रविणान्जीवन्मृतान्स्वयंजीवन्म्रियमाणउपधावति १२ एकदाऽसत्प्रसं गान्निकृतमतिर्व्युदकस्रोतस्स्खलनवदुभयतोऽपिदुःखदंपाषंडमभियाति १३

क्वचित् अशेषदोषस्थानंसुवर्णं उपादातुंइच्छति अग्निकामेनउल्मुकपिशाचमिवअग्निबुध्यानुधावतिननुतंप्राप्नोति कथंचित्प्राप्तश्चेत्तर्हितेनभक्षितः सन्म्रियतेएवंसुवर्णमनु धावन्नपि ७ कदाचित् निवासतोयद्रविणादिष्वभिनिविष्टः एतस्यां संसाराटव्यां इतस्ततःपरिधावति ८ कदाचित् वात्यातुल्ययास्त्रिया उत्संगं आरोपितः रजस्वलाक्षः सन् दिग्देवताः नजानाति ९ क्वचित् देहाभिनिवेशेनभ्रंशितमतिःमरीचितोयप्रायान् विषयान् अभिधावति १० क्वचित् उलूकझिल्लीस्वनवत् रिपूणांराजकुलस्यच निर्भ र्त्सितेनव्यथितकर्णमूलहृदयो भवति ११ क्वचित् अपुण्यवृक्षलताविषोदकपानतुल्यान् जीवन्मृतान् उपधावति १२ क्वचित् असतांप्रसंगात् वंचितमतिःनिरुदकनदी गर्तपाततुल्यं इहपरत्रचदुःखदंपाखंडमभियाति १३

परस्परं चालयतेनिरंयइत्येतद्याचष्टे । यदात्विति । अंधः अन्नंनोपनमतिनोपतिष्ठतितदा हिपितृपुत्राणां बर्हिः कुशः तद्वतः पितृसंबंधि पुत्रसंबंधिवाकुशादितृणमात्रमपियेषुपश्यति तान् ( पितृपुत्रान्वा ) भक्षयति ( अन्नार्थं ) बाधतेइत्यर्थः पितृपुत्रबर्हिष्मानितितुपाठः सुगमः १४ आसाद्यदाववमित्येतव्द्याचष्टेक्वचिदासाद्येति । (प्रियार्थविधुरं प्रियविषयरहितं दुःख रूपोत्तरफलं । निर्वेदं वैराग्यम्) १५ क्वचयक्षैर्हृतासुरित्येतव्द्याचष्टे । क्वचित्कालेनविषमितं प्रतिकूलतांनीतं यद्राजकुलं तदेवरक्षस्तेनापहृताः प्रियतमधनरूपाअसवोयस्य । विगतानि जीवलक्षणानिहर्षादीनियस्य । गूर्हृतस्वइत्यप्यनेनैवव्याख्यातम् । १६ क्वचिच्चगंधर्वपुरं प्रविष्टइत्येतव्द्याचष्टे । कदाचिन्मनोरथप्राप्तं पितृ-( पितामहादि) असदेव ( असत्यमेव ) सदितिमत्वा ( स्वप्नसुखतुल्यंसुखं ) पूर्वं गंधर्वपुरवदघटमानदर्शनमुक्तं । इदानींतन्निमित्तसुखासक्तिरुच्यतइतिभेदः १७ चलन् क्वचिदित्येतव्द्याचष्टे । क्वचिद्गृहाश्रमेयाः कर्मचोदनाः ( अग्निष्टोमेनयजेतेत्याद्याः ) तासामतिभरोऽतिविस्तारः सएवगिरिस्तमारुरुक्षन् तदंतंगंतुमिच्छन् ( लोकः स्वर्गादिस्तव्द्यसनेनतदासक्त्याकर्शितं मनोयस्य ) १८ पदेपदेभ्यंतरवह्नि नेतिव्याचष्टे । क्वचिच्चदुःसहेनेति । ( गृहीतसारः आत्तबलः अशक्तइत्यर्थः ) १९ क्वचिन्निगीर्णइत्येतद्याचष्टे । सएवेति । ( अपविद्धःउत्सृष्टः ) २० दष्टःस्मशेतइतिव्याचष्टे कदाचि दिति । मानोगर्वएवदंष्ट्रापरपीडाकरत्वात् भग्नामानदंष्ट्रायस्य अतएवनलब्धोनिद्रायाः क्षणोऽपियेन २१ कर्हिस्मचित्क्षुद्ररसानित्येतव्द्याचष्टे । कर्हिस्मचित्काममधुलवानिति । यदानिहतोभवति तदासद्यएवनिरयेपतति । २२

यदातुपरबाधयांऽधआत्मनेनोपनमतितदाहिपितृपुत्रबर्हिष्मतःपितृपुत्रान्वासखलुभक्षयति १४ क्वचिदासाद्यगृहंदाववत्प्रियार्थविधुरंअसुखोदर्कंशोकाग्निनादह्यमानोभृशंनिर्वेदमुपगच्छति १५ क्वचित्कालविषमितराजकुलरक्षसाऽपहृतप्रियतमधनासुःप्रमृतकइवविगतजीवलक्षणआस्ते १६ कदाचिन्मनोरथोपगतपितृपितामहाद्यसत्सदितिस्वप्ननिर्वृतिलक्षणमनुभवति १७ क्वचिद्गृहाश्रमकर्मचोदनातिभरगिरिमारुरुक्षमाणोलोकव्यसनकर्शितमनाःकंटकशर्कराक्षेत्रंप्रविशन्निवसीदति १८ क्वचिच्चदुःसहेनकायाभ्यंतरवह्निनागृहीतसारःस्वकुटुंबायक्रुध्यति १९ सएवपुनर्निद्राजगरगृहीतोऽधेतमसिमग्नःशून्यारण्यइवशेतेनान्यत्किंचनवेदशवइवापविद्धः २० कदाचिद्भग्नमानदंष्ट्रोदुर्जनदंदशूकैरलब्धनिद्राक्षणोव्यथितहृदयेनानुक्षीयमाणविज्ञानोंऽधकूपेंऽधवत्पतति २१ कर्हिस्मचित्काममधुलवान्विचिन्वन्यदापरदारपरद्रव्याण्यवरुंधानोराज्ञास्वामिभिर्वानिहतःपतत्यपारेनिरये २२

यदाआत्मने अन्नं नोपतिष्ठति तदापितृपुत्रान्बाधते १४ क्वचित्दावतुल्यं गृहमासाद्य शोकाग्निनादह्यमानः निर्वेदमुपगच्छति १५ क्वचित् कालेनप्रतिकूलतांनीतंयद्राजकूलंतदेवरक्षः तेनापहृताः प्रियतमधनरूपाः प्राणाःयस्यस मृतकइव आस्ते १६ क्वचित् मनोरथप्राप्तं पित्रादि असत् सदितिमत्वा अनुभवति १७ क्वचित् गृहाश्रमेयाः कर्मचोदनास्तासामतिविस्तारएव गिरिः तंआरुरुक्षन्कंटकशर्कराक्षेत्रं प्रविष्टइवसीदति १८ क्वचित् दुःसहेनकायाभ्यंतरवह्निनागृहीतसारःस्वकुटुंबायक्रुध्यति १९ सएवपुनः निद्राजगरगृहीतः शून्यारण्यइवशेते नान्यत् किंचनवेद २० कदाचित् दुर्जनदंदशूकैर्भग्नगर्वदंष्ट्रःअंधकूपेंधवत्पतति २१ क्वचित् काममधुलवान्विचिन्वन्यदा परदारपरद्रव्याणि अवरुंधानः भवतितदाराज्ञास्वामिभिर्वानिहतः सन् निरयेपतति २२

प्रसंगात्प्रवृत्तस्यकर्मणः संसारहेतुत्वं स्फुटयति अथचेति । यस्मादेव ( स्यात् ) अथतस्मात् अनंतरमेवउभयथाइहचपरत्रचअस्मिन् प्रवृतिमार्गेसंसारस्यावपनं जन्मनांक्षेत्रं कर्मोदाहरंति २३ तत्रातिकृच्छ्रं प्रतिलब्धमानइत्येतद्व्याचष्टे । मुक्तइति । यदि ( कथंचित् प्राप्तविषयः) बंधान्मुक्तोभवति तर्हितत:सकाशात् ( कश्चित् ) अन्योहरतितस्मादप्यन्यः ( कश्चित् ) नत्वसौभोक्तुंलभतइत्यर्थः २४ कश्चिच्चशीतातपेत्येतद्व्याचष्टे क्वचिच्चेति शीतादयोनेकाआधिदैविक्यायायादशादुःखावस्थास्तासां २५ क्वचिन्मिथइत्येतद्व्याचष्टे । क्वचिन्मिथो ( वाणिज्यवृत्त्या ) यत्किंचिद्धनं व्यवहरन् काकिणिकामात्रंविंशतिकपर्दकमात्रं ततोपिन्यूनं वायत्किंचिदपहरतिअथविद्वेषमेति २६ अध्वन्यमुष्मिन्नुरुकृच्छ्रवित्तबाधो पसर्गैरित्युक्तानुपसर्गान् प्रपंचयति । अध्वन्यमुष्मिन्इमेउरुकृच्छ्रवित्तबाधादयः तथासुखदुःखादयश्च तत्रमात्सर्यं परसंपत्त्यसहनं ईर्ष्यापरगुणमात्रासहनम् २७ व्युत्क्रमैःपुनरुक्तैश्च नानापाठैस्ततः परं । दुर्गमोपिभवाध्वायं संप्रदायेनतीर्यते ॥ १ ॥ तत्रप्रसज्जतिकापीत्यादिना सिंहावलोकनन्यायेन उक्तमर्थमपकृष्यक्रमेणव्याचष्टे । कापिदेवमाययेति ( देवस्यवि ष्णोर्मायामोहनीशक्तिस्तद्रूपया । ) प्रस्कन्नंअपगतं विवेकविज्ञानंयस्य । यस्याः स्त्रियाविहारगृहं क्रीडागृहंतदारंभे ( तदुद्यमे ) आकुलंहृदयंयस्य । अनेनप्रसज्जतीतिव्याख्यातम् । तदाश्रयेत्यादिव्याचष्टे । तस्याआश्रयेअवसक्ताः संलग्नाः सुतादुहितरश्चकलत्रंचसैवस्त्री तेषां भाषितादिभिरपहृतंहृदयंयस्य । ( अपारेअपरिमिते ) प्रहिणोतिप्रक्षिपति ( यतोनजितआत्मामनोयेन ) २८

अथचतस्मादुभयथापिहिकर्मास्मिन्नात्मनःसंसारावपनमुदाहरंति २३ मुक्तस्ततोयदिबंधाद्देवदत्तउपाच्छिनतितस्मादपिविष्णुमित्रइत्यनवस्थितिः २४ क्वचिच्चशीतवाताद्यनेकाधिदैविकभौतिकात्मीयानांदशानांप्रतिनिवारणेअकल्पोदुरंतचिंतयाविषण्णआस्ते २५ क्वचिन्मिथोव्यवहरन्यत्किंचिद्धनमन्येभ्यो वाकाकिणिकामात्रमपहरन्यत्किंचिद्वाविद्वेषमेतिवित्तशाठ्यात् २६ अध्वन्यमुष्मिन्निमउपसर्गास्तथासुखदुःखरागद्वेषभयाभिमानप्रमादोन्मादशोकमोह लोभमात्सर्येर्ष्यावमानक्षुत्पिपासाधिव्याधिजन्मजरामरणादयः २७ क्वापिदेवमाययास्त्रियाभुजलतोपगूढःप्रस्कन्नविवेकविज्ञानोयद्विहारगृहारंभाकुलहृदय स्तदाश्रयावसक्तसुतदुहितृकलत्रभाषितावलोकविचेष्टितापहृतहृदयआत्मानमजितात्माऽपारेंधेतमसिप्रहिणोति २८

तस्मात् प्रवृत्तिमार्गेआत्मनः जन्मक्षेत्रं कर्म उदाहरंति २३ यदिबंधात् मुक्तोभवति तर्हितस्मात् देवदत्तोहरतितस्मात् विष्णुमित्रः २४ क्वचित् शीतवाताद्यनेकाधिदैविका दिदुःखानांनिवारणेअकल्पोदुरंतचिंतयाविषण्णः आस्ते २५ क्वचित्मिथःव्यवहरन् यत्किंचिद्धनं अन्येभ्यः काकिणिकामात्रं ततोन्यूनंवाअपहरन् विद्वेषंएति २६ अमु ष्मिन्अध्वनिइमे सुखदुःखरागद्वेषभयाभिमानप्रमादोन्मादशोकलोभमोहमात्सर्येर्ष्यावमानक्षुत्पिपासाधिव्याधिजन्ममरणादयः उपसर्गाःसंति २७ क्वापिदेवमाययास्त्रियाभु जलतोपगूढः गतविवेकविज्ञानः सुतदुहितृकलत्रभाषितादिभिः अपहृतहृदयःआत्मानं अपारेंधेतमसिप्रक्षिपति २८

क्वचित्कदाचिद्धरिचक्रतस्त्रसन्नित्येतद्व्याचष्टे । कदाचिदीश्वरस्येति परमाण्वादिः द्विपरार्धोऽपवर्गोंतः तदेवोपलक्षणंयस्य तस्मात् कालोपलक्षणादिति पृथक्पदत्वेनपाठेकालस्वरूपा दित्यर्थः ( सूर्योहियावताकालेनपरमाणुदेशमत्येतिसकालः परपाणुः । ब्रह्मणोवर्षशतंद्विपरार्धः एतादृशात् । तथा)रंहसाशीघ्रेणपरिवर्तितेनपरिभ्रमणेनवयसाबाल्यादिंक्रमेण ब्रह्माण मभिव्याप्यतृणस्तंबआदिः(येषांतानि) भूतानिहरतः (एतादृशात् ) चक्रात्सकाशात् वित्रस्तहृदयः सन् पाषंडदेवताआभिमुख्येनधत्ते (भजतइत्यर्थः। ) इत्यन्वयः। (पुनः कथंभूताच्च क्रात् ) अनिमिषतः निमेषमकुर्वतः अप्रमत्तादित्यर्थ। ( कीदृशानांभूतानां ) मिषतांप्रतिकर्तुमशक्तानामित्यर्थः । कर्माणिषठ्यः । कालचक्रं निजंनित्यमायुधंयस्यतं। ( केनभजते। ) सांकेत्येनमूलप्रमाणशून्येनपाषंडागमेन । ( आर्यसमयपरिहृता आर्यसिद्धांतैरनंगीकृताः ) २९ तैर्वंचितइत्येतद्व्याचष्टे । यदात्विति । आत्मना ( स्वयमेव ) वंचितैरुरुअधिकंवंचितः सन् तेषां ब्राह्मणानायच्छीलं उपनयनादितदरोचयन् ( अपथ्यंमन्वानः ) शूद्रवद्वर्तते । निगमाचारेअशुद्धितः। ( निगमोक्ताचारे ) स्वस्यशुद्ध्यभावात् ( अनाधिकारात् ) यस्यशूद्र स्यकेवलंमिथुनीभावः ( स्त्रीपुंसभावः ) कुटुंबभरणंचव्यापारोनाग्निहोत्रादिः ( ब्राह्मणानांशीलंतुश्रुतिस्मृत्युक्तकर्मानुष्ठानेनयज्ञपुरुषस्य आराधनरूपमेव )३०तज्जातिरासेनेत्यादिव्याचष्टे तत्रापिनिरवरोधः प्रतिबंधरहितः स्वैरेणस्वेच्छयाक्रीडन् विस्मृतमृत्युकालः सन् ३१ द्रुमेषुरंस्यन्नित्येतद्व्याचष्टे । क्वचिद्द्रुमवदिति । व्यवायक्षणः मिथुनभावोत्सवोभवति ३२ क्वचित्प्रमादादित्येतव्द्याचष्टे । एवमध्वनिसुखदुःखाद्यवरुंधानोगिरिकंदरप्रायेतमसिरोगाद्यापदिपततीतिशेषः । ३३

कदाचिदीश्वरस्यभगवतोविष्णोश्चक्रात्परमाण्वादिद्विपरार्धापवर्गात्कालोपलक्षणात्परिवर्तितेनवयसारंहसाहरत आब्रह्मतृणस्तंबादीनांभूतानामनिमिष तोमिषतांवित्रस्तहृदयस्तमेवेश्वरंकालचक्रनिजायुधंसाक्षाद्भगवंतंयज्ञपुरुषमनादृत्यपाषंडदेवताःकंकगृध्रबकवटप्राया आर्यसमयपरिहृताःसांकेत्येनाभिध त्ते२९यदातुपाषंडिभिरात्मवंचितैस्तैरुरुवंचितोब्रह्मकुलंसमावसंस्तेषांशीलमुपनयनादिश्रौतस्मार्तकर्मानुष्ठानेनभगवतोयज्ञपुरुषस्यआराधनमेवतदरोच यञ्छूद्रकुलंभजतेनिगमाचारेऽशुद्धितोयस्यमिथुनीभावःकुटुंबभरणंयथावानरजातेः ३० तत्रापिनिरवरोधःस्वैरेणविहरन्नतिकृपणबुद्धिरन्योन्यमुखनिरी क्षणादिनाग्राम्यकर्मणैवविस्मृतकालावधिः ३१ क्वचिद्द्रुमवदैहिकार्थेषुगृहेषुरंस्यन्यथावानरःसुतदारवत्सलोव्यवायक्षणः ३२ एवमध्वन्यवरुंधानो मृत्युगजभयात्तमसिगिरिकंदरप्राये ३३

क्वचित् भगवतः विष्णोः कालचक्रात्त्रस्तहृदयः तमेवईश्वरंयज्ञपुरुषं अनादृत्यकंकगृध्रबकतुल्याःपाखंडदेवताः आभिमुख्येन धत्ते २९ यदापाखंडिभिर्वंचितः तदाब्र ह्मकुलंसमावसन् तेषांशीलंश्रौतादिकर्मानुष्ठानेनभगवदाराधनमेवतत् अरोचयन् शूद्रकुलंभजते यस्य शूद्रस्यमिथुनीभावः उदरभरणंचव्यापारः३० तत्रापिप्रतिबंधरहितः स्वे च्छयाक्रीडन्सन्अन्योन्यमुखनिरीक्षणादिना विस्मृतकालावधिर्भवति ३१ क्वचित् द्रुमवत्ऐहिकार्थेपुरंस्यन्वानरवत् मिथुनोत्सवोभवति ३२ एवं अध्वनि अवरुंधानः मृत्युगजभयात् गिरिकंदरप्राये रोगाद्यापदि पतति ३३

क्वचिच्छीत वातेत्यादिपूर्वस्मादधिकोक्तिःरोगाद्यापादिपतितःसन् शीतादिभिः क्लिश्यन्नास्तइत्यर्थः ३४ तदेवं सिंहावलोकनन्यायेनोक्तमर्थं यथास्थानमपकृष्यव्याख्यायक्रमस्थमनुवर्त यितुं पूर्वोक्तमेवानुवदतिक्वचिन्मिथइति वित्तशाठ्येनकदाचिद्यत्किंचिद्धनमुपयाति३५क्वचित्क्वचित्क्षीणधनस्त्वितिव्याचष्टे क्वचित्क्षीणधनइति । अप्रतिलब्धंयन्मनोरथेनोपगतंवांछितं तस्यादानेस्वीकारेऽनिश्चितमतिःसन्३६अन्योन्यवित्तव्यतिषंगेनेत्येतद्व्याचष्टे । एवं ( वित्तव्यतिषंगेनाविनिमयेनाविवृद्धोवैरानुबंधोवैरपरंपरायस्यएवंभूतोपिउद्वहतिविवाहादिसंबंधंकरो तिअथअनंतरं ) अपवहतित्यजति ३७ अध्वन्यमुष्मिन्नित्यादिव्याचष्टेएतस्मिन्निति ।( यत्र यः) आपन्नआपदंप्राप्तोविपन्नोवाविनष्टस्तमितरस्तत्रविसृज्यनह्यमानः बध्यमानः साधुवर्जितः साधुव्यतिरिक्तः (एषनरलोकसंघः यतः सकाशादारब्धः यमस्यसंसारस्यपारं कथयंति तमद्याप्यापिनावर्तते)३८अनावृत्तौ हेतुमाह यदिदमिति ( योगानुशासनं योग शास्त्रं नावगच्छंति । यंयोगंन्यस्तदंडाः संन्यासिनः )३९ मनस्विनइत्यादिव्याचष्टेयदपीति । येराजर्षयस्तेपिनावरुंधतेकिंतुपरं केवलं मृधे(रणभूमौ)शयीरन् (अस्यांपृथिव्याम्)४० प्रसज्जतीत्यादिगिरिकंदरइत्यंतं अपकृष्यव्याख्यातं ग्रंथमतिक्रम्यवल्लींगृहीत्वेत्यादिग्रंथंव्याचष्टे । कर्मवल्लीमिति । एवमुपरिस्वर्गगतोपिनरलोकसार्थमुपयाति ( क्षीणेपुण्येमर्त्यलोकं पुनरायातीत्यर्थः। )४१ तदेवं भरतोक्तिव्याख्यायतच्चरितसंग्रहश्लोकानाह । तस्येदंकर्मश्लोकैरुपगायंति । आर्षभस्यऋषभपुत्रस्य अन्योनृपःअनुवर्त्मनार्हतिवर्त्मानुगंतुंनशक्नोति ४२

क्वचिच्छीतवाताद्यनेकदैविकभौतिकात्मीयानांदुःखानांप्रतिनिवारणेअकल्पोदुरंतविषण्णआस्ते ३४ क्वचिन्मिथोव्यवहरन्यत्किंचिद्धनमुपयातिवित्तशा ठ्येन३५क्वचित्क्षीणधनःशय्यासनाद्युपभोगविहीनोयावदप्रतिलब्धमनोरथोपगतादानेऽवसितमतिस्ततस्ततोऽवमानादीनिजनादभिलभते ३६एवंवित्त व्यतिषंगविवृद्धवैरानुबंधोपिपूर्ववासनयामिथउद्वहत्यथापवहति ३७एतस्मिन्संसाराध्वनिनानाक्लेशोपसर्गबाधितःआपन्नविपन्नोयस्तमुहवावेतरस्तत्रविसृ ज्यजातंजातमुपादायशोचन्मुह्यन्बिभ्यद्विवदन्क्रंदन्संहृष्यन्गायन्नह्यमानःसाधुवर्जितोनैवावर्ततेऽद्यापियतआरब्धएषनरलोकसार्थोयमध्वनःपारमुपदि शंति ३८यदिदंयोगानुशासनंनवाएतदवरुंधतेयंन्यस्तदंडामुनयउपशमशीलाउपरतात्मानःसमवगच्छंति ३९ यदपिदिगिभजयिनोयज्विनोयेवैराजर्षयः किंतुपरंमृधेशयीरन्अस्यामेवममेयमितिकृतवैरानुबंधायांविसृज्यस्वयमुपसंहृताः४० कर्मवल्लीमवलंब्यततआपदःकथंचिन्नरकाद्विमुक्तःपुनरप्येवंसंसाराध्व निवर्तमानोनरलोकसार्थमुपयातिएवमुपरिगतोपि४१तस्येदमुपगायंति॥आर्षभस्येहराजर्षेर्मनसापिमहात्मनः॥नानुवर्त्मार्हतिनृपोमक्षिकेवगरुत्मतः ४२

क्वचित् शीतवाताद्यनेकाधिदैविकादिदुःखानांनिवारणेअसमर्थः सन्विषयविषण्णः आस्ते ३४ ३५ क्वचित् क्षीणधनः शय्यासनाद्युपभोगविहीनः वांछितादानेनिश्चितम तिः सन्ततस्ततः जनात्अवमानादीन्लभते ३६ ३७ एतस्मिन्संसाराध्वनि यः आपदंप्राप्तः मृतोवा तं विसृज्य जातंजातंस्वीकृत्यशोचन् मुह्यन् क्रंदन् संहृष्यन् अपिअद्यापिनावर्तते ३८ तत्रहेतुः एतद्योगानुश[illegible]न्जानंति मुनयस्तुसमवगच्छंति ३९ एवंस्वर्गतोपिनरलोकसार्थमेवोपयाति ४० ४१ हेराजन् ऋषभदेवपुत्रस्य भरतस्यमार्गमन्यः कोपिनृपः गंतुंनशक्नोति केः गरुत्मतः मार्गंमक्षिकेव ४२

तत्रहेतुमाह यइति । सुहृद्राज्ययोर्द्वंद्वैक्यम् । यःहृदिस्पृशोमनोहरान् अतोदुस्त्यजान् दारादीन् योविष्ठामिव जहौ तस्यार्षभस्येतिसंबंधः । त्यागेहेतुः । उत्तमश्लोकेलालसालंपटत्वं यस्य ४३ तस्यैवंविषयत्यागोनचित्रमित्याह । यएवंभूतोसौनृपः स क्षित्यादीन् नैच्छदितियत्तदुचितम् । ( सुरवरैरपिस्पृहणीयां ) सदयावलोकां भरतस्यदयायथा भवतिएवमवलोको यस्याइतिपरिजनावलोकः श्रियामुपचर्यते । यतोमधुद्विषः सेवायामनुरक्तं मनोयेषांतेषां महतांअभवोमोक्षोपिफल्गुःतुच्छएव । ( किंपुनः क्षितिसुतादि । ) ४४ तस्यसेवानुरागमेवाह। यज्ञायेति । यज्ञरूपायधर्मपतयेयज्ञादिधर्मफलदात्रेविधौनैपुण्यंयस्यतस्मै । ( 'यद्यदाचरतिश्रेष्ठ' इतिन्यायेन ) धर्मानुष्ठात्रे योगोष्टांगः तस्मै । सांख्यंज्ञानंतच्छिरः प्रधानंफलं यस्ययोगस्यतस्मै । प्रकृतीश्वरायमायानियंत्रे । अतएवनारं जीवसमूहः सोयनमाश्रयोयस्यतस्मैसर्वजीवनियंत्रे एवंकर्मज्ञानदेवताकांडैः प्रतिपादितायहरयेनमइत्युदारंउच्चैर्यः सम्यगुच्चारितवान् । मृगत्वंमृगदेहमपिहास्यन् त्यक्ष्यन्सन्यएवंभूतः तस्यतदुचितमितिवा । तस्यानुवर्त्मनार्हतीतिवासंबंधः । ४५ भरतचरितश्रवणादिफलमाह । इदमिति । भागवतैः सभाजिताः स्तुताः अवदाताः शुद्धागुणाः कर्माणिचयस्यतस्य भरतस्यानुचरितंयोनुशृणोतिसआत्मनएवसकाशात्सर्वाआशिषआशास्तेस्वतएवप्राप्नोतिनतुकांचिदप्याशिषंपरस्मादपेक्षतेइत्यर्थः । ( कथंभूतंचरितंस्वस्त्ययनमित्यादि ) ४६ इतिपंचमस्कंधेचतुर्दशोऽध्यायः ॥ १४ ॥ एवमष्टभिरध्यायैर्भरतस्योक्तमीहितम् । ततः पंचदशेतस्यकीर्त्यंतेवंशजानृपाः ॥ १ ॥ ऋषभपदवींजीवन्मुक्तमार्गं अनुवर्तमानंदृष्ट्वेतिशेषः । यद्वायंसुमतिंअनार्याः पामराः पाषंडिनोअवेदसमाम्नातां देवतांकल्पयिष्यंतिबुद्धोयंसाक्षादवतीर्णइतिमंस्यंतइत्यर्थः । १

योदुस्त्यजान्दारसुतान्सुहृद्राज्यंहृदिस्पृशः॥जहौयुवैवमलवदुत्तमश्लोकलालसः ४३योदुस्त्यजान्क्षितिसुतस्वजनार्थदारान्प्रार्थ्यांश्रियंसुरवरैःसदयावलोकाम् ॥ नैच्छन्नृपस्तदुचितंमहतांमधुद्विट्सेवानुरक्तमनसामभवोपिफल्गुः४४यज्ञायधर्मपतयेविधिनैपुणाययोगायसांख्यशिरसेप्रकृतीश्वराय॥नारायणायहरयेनमइत्युदारंहास्यन्मृगत्वमपियःसमुदाजहार ४५ इदंभागवतसभाजितावदातगुणकर्मणोराजर्षेर्भरतस्यानुचरितंस्वस्त्ययनमायुष्यंधन्यंयशस्यंस्वर्ग्यापवर्ग्यंचानुशृणोत्याख्यास्यत्यभिनंदतिचसर्वाएवाशिषआत्मनआशास्तेनकांचनपरतइति ४६ इतिश्रीभा०महा०पंच०भरतोपाख्यानेब्राह्मणरहूगणसंवादेचतुर्दशोध्यायः १४ ॥ ॥ श्रीशुकउवाच ॥ ॥ भरतस्यात्मजःसुमतिर्नामाभिहितोयमुहवावकेचित्पाषंडिनऋषभपदवीमनुवर्तमानंचानार्याअवेदसमाम्नातांदेवतांस्वमनीषयापापीयस्याकलौकल्पयिष्यंति १

यः युवापिदारसुतसुहृद्राज्यादिजहौ ४३ किंच यः क्षितिसुतस्वजनार्थं दारादीन् नैच्छत् तत्तस्य उचितमेव यतः हरिसेवानुरक्तमनसांमहतां मोक्षोपितुच्छएवकिंपुनरेते ४४ यः भरतः मृगदेहमपित्यक्ष्यन् यज्ञायनारायणायहरयेनमइत्युच्चैः सम्यगुच्चारितवान् ४५ इदंभागवतैःसत्कृतशुद्धगुणकर्मणः भरतस्यस्वस्त्ययनं आयुष्यं धन्यं यशस्यं स्वर्ग्यापवर्ग्यं अनुचरितंयः शृणोतिश्रावयति अभिनंदति सः सर्वाः आशिषः प्राप्नोति ४६ ॥ इतिपंचमेचतुर्दशः ॥ १४ ॥ ॥ ॥ श्रीशुकउवाच ॥ भरतस्यात्मजः सुमतिर्नामा यंसुमतिं ऋषभपदवीमनुवर्तमानं दृष्ट्वा केचित्पाखंडिनः बुद्धोयं अवतीर्ण इति मंस्यंते पाखंडमार्गंच कलौकल्पयिष्यंति १

( तस्मात्सुमतेर्वृद्धसेनाख्यायांस्त्रियाम्)२( आसुर्यांपत्न्यां)तत्तनयः देवताजितः पुत्रः (देवद्युम्नाख्यः ततोदेवद्युम्नात् उपजातः संभूतः)३आत्मविद्यांबहुम्यआख्याय तद्व्याख्यानेनवे स्वयंसंशुद्धो ( महापुरुषंअंतर्यामिणं ) अनुसस्मार अपरोक्षतयानुभूतवान् । प्रतिहर्ताप्रस्तोताउद्गातेतित्रयोयज्ञनिपुणाः सूनवआसन् । अजभूमानौजातौ ४ हृदयजः पुत्रः । ( नक्ता द्रत्याः पुत्रः गयनामाजायत । ) जगतोरिरक्षिषयागृहीतंसत्त्वंयेनतस्यविष्णोः कलाअंशः सन् ५ महापुरुषत्वमाहसत्वेइति । धर्मस्तस्यद्विविधः अभिषिक्तत्वात्प्रजापालनादिरेकः गृहस्थत्वादिज्यादिश्चापरः । द्विविधोपिभगवतिसर्वात्मनार्पितः सन्परमार्थलक्षण ( एव ) तेनपरिभाविताससंस्कृताअतिशुद्धामतिर्यस्य अतएवोपरतमनात्म्यं देहाद्यहंभावोयस्मिन् तस्मिन्नात्मनिचित्तेस्वयमेवोपलभ्यमाने ब्रह्मण्यात्मानुभवोयस्यतादृशोपिनिरभिमानएवअवनिमजूगुपत्पालयामास ६ कर्मभिर्गयंकः प्रतियाति अनुकरोतिनकोपि । यथागयेनयज्ञादिकर्मकृतं तथानकोपिकर्तुंसमर्थइत्यर्थः । अत्रहेतुः । यज्वादिरूपाभगवत्कलांगयमृतेअन्यः ( कोयज्वादिरूपोभवति । अत्र) कइत्यनुषंगः ( यज्वाविधिनेष्टवान् ) अभिमानीसर्वतोमानास्पदंमनस्वीतिवा । समागतासंप्राप्ताश्रीर्येनयमितिवा । सतांसदसःसभाया पतिःसतांसेवकः । यद्वा यज्वादिरूपोपिभगवत्कलांऋतेगयंकोन्यः प्रतियातीत्यन्वयः । ७

तस्माद्वृद्धसेनायांदेवताजिन्नामपुत्रोऽभवत् २ अथासुर्यांतत्तनयोदेवद्युम्नस्ततोधेनुमत्यांसुतःपरमेष्ठीतस्यसुवर्चलायांप्रतीहउपजातः ३ यआत्मविद्यामाख्यायस्वयंसंशुद्धोमहापुरुषमनुसस्मार ॥ प्रतीहात्सुवर्चलायांप्रतिहर्त्रादयस्त्रयआसन्निज्याकोविदाःसूनवःप्रतिहर्तुःस्तुत्यामजभूमानावजनिषाताम् ४ भूम्नऋषिकुल्यायामुद्गीथस्ततःप्रस्तावोदेवकुल्यायांप्रस्तावान्नियुत्सायांहृदयजआसीद्विभुःविभोरत्यांचपृथुषेणस्तस्मान्नक्तआकूत्यांजज्ञेनक्ताद्द्रुतिपुत्रोगयोराजर्षिप्रवरउदारश्रवाअजायतसाक्षाद्भगवतोविष्णोर्जगद्रिरक्षिषयागृहीतसत्त्वस्यकलात्मवत्त्वादिलक्षणेनमहापुरुषतांप्राप्तः ५ सवैस्वधर्मेणप्रजापालनपोषणप्रीणनोपलालनानुशासनलक्षणेनेज्यादिनाचभगवतिमहापुरुषेपरावरेब्रह्मणिसर्वात्मनार्पितपरमार्थलक्षणेनब्रह्मविच्चरणानुसेवयापादितभगवद्भक्तियोगेनचाभीक्ष्णशःपरिभावितातिशुद्धमतिरुपरतानात्म्यआत्मनिस्वयमुपलभ्यमानब्रह्मात्मानुभवोपिनिरभिमानएवावनिमजूगुपत्तस्येमांगाथांपांडवेयपुराविदउपगायंति ६ गयंनृपःकःप्रतियातिकर्मभिर्यज्वाभिमानीबहुविद्धर्मगोप्ता ॥ समागतश्रीःसदसस्पतिःसतांसत्सेवकोन्योभगवत्कलामृते ७

तस्मात्सुमतेःवृद्धसेनायां देवताजिन्नामपुत्रः १ तस्मात् आसुर्यां देवद्युम्नः तस्मात् धेनुमत्यांपरमेष्ठी ततः सुवर्चलायांप्रतीहः २ तस्मात्प्रतीहात् सुवर्चलायां प्रतिहर्ता १ प्रस्तोता २ उद्गाता ३ इतित्रयः पुत्राःआसन् प्रतिहर्तुः स्तुत्यां अजभूमानौ जातौ ४ भूम्नः ऋषिकुल्यायां उद्गीथः तस्माद्देवकुल्यायांप्रस्तावः तस्मान्नियुत्सायांवे भुर्विभोः रत्यां पृथुषेणः तस्मात्आकूत्यांनक्तः तस्माद्द्रुत्यां गयोनामभगवदंशः सः महापुरुषताप्राप्तः ५ सः भगवतिसमर्पितेनप्रजापालनेज्यादिधर्मेणभक्त्याचशुद्धमतिः निराभिमानएवअवनिं पालयामास ६ कर्मभिः गयं कःअनुकरोति नकोपि ७

सतीः सत्यः । सत्याआशिषोयासांताः दक्षकन्याः श्रद्धामैत्रीदयेत्याद्याः । निराशिषोनिष्कामस्यापियस्यराज्ञः प्रजानामाशिषः कामान् धरा दुदुहे । तस्यगुणाएववत्सस्तेन स्नुतं (प्रस्नुतं) ऊधः (स्तनौ) यस्याः पृथिव्याः । यच्छन्दानां तंगयंकः प्रतियातीत्यनेनसंबंधः ८ छंदांसिवेदाः तद्विहितकर्माणिच (यस्य कामनाः) दुदूहुः दुदुहुः युधिप्रत्यंचिताःबाणैः प्रतिपूजिताः नृपाः गयस्य बलिं (करं) आजन्हुरर्पयामासुः धर्मेण पालनेन दक्षिणादिभिश्चयदाप्रत्यंचिता विप्रास्तदा परेत्य लोकांतरे (उपकारकं ) आशिषां ( पुण्यफलानां ) षष्ठमंशमाजन्हुः ।''पुण्यषड्भागमादत्ते न्यायेनपरिपालयन्''इतिस्मृतेः ९ उरुसोमपीथे बहुसोमपानेअध्वरे मघोनिइंद्रे माद्यतिमदं प्राप्नुवति सति श्रद्धया विशुद्धो योऽचलो भक्तियोगः तेन समर्पितमिज्याफलं ( भगवान् ) जहार अर्हणमिवप्रत्यक्षतः स्वीकृतवानित्यर्थः १० यस्यभगवतः प्रीणनात् देवादीनां द्वंद्वैक्यं ( देवतिर्यगादि ) सद्यः प्रीतिं गच्छेत् सविश्वजीवःसर्वांतर्यामीस्वयं ( प्रीतः ) प्रीतिरूपएवबर्हिषियज्ञेगयस्य हस्फुटंप्रीतिमगात्तृप्तोस्मीतिप्रत्यक्षंप्रीतिमाविष्कृतवानित्यर्थः ११ ( अजनिष्टजातः ) १२ ( ततः सम्राजः सकाशात् । मधोः )सुमनसिस्त्रियां ( जज्ञातेजातौ । शतजिन्नामापुत्रः प्रवरोज्येष्ठोयस्मात्तत् ) १३ कीर्त्याअतिशयेनअलमकरोत्भूषितवान् ॥ १४ ॥ इतिपंचमस्कंधेपंचदशोऽध्यायः ॥ १५ ॥

यमभ्यर्षिचन्परयामुदासतीःसत्याशिपोदक्षकन्याःसरिद्भिः ॥ यस्यप्रजानांदुदुहेधराऽऽशिषोनिराशिषोगुणवत्सस्नुतोधाः ८ छंदांस्यकामस्यचयस्यकामान्दुदूहुराजन्हुरथोबलिंनृपाः ॥ प्रत्यंचितायुधिधर्मेणविप्रायदाशिषांषष्ठमंशंपरेत्य ९ यस्याध्वरेभगवानध्वरात्मामघोनिमाद्यत्युरुसोमपीथे ॥ श्रद्धाविशुद्धाचलभक्तियोगसमर्पितेज्याफलमाजहार १० यत्प्रीणनाद्बर्हिषिदेवतिर्यङ्मनुष्यवीरुत्तृणमाविरिंच्यात् ॥ प्रीयेतसद्यःसहविश्वजीवःप्रीतःस्वयंप्रीतिमगाद्गयस्य ११ गयाद्गयंत्यांचित्ररथःसुगतिरवरोधनइतित्रयः पुत्राबभूवुः चित्ररथादूर्णायांसम्राडजनिष्ठ १२ ततउत्कलायांमरीचिर्मरीचेर्बिंदुमत्यांबिंदुमानुदपद्यततस्मात्सरघायांमधुनामाऽभवत् मधोःसुमनासिवीरव्रतस्ततोभोजायांमंथुप्रमंथूजज्ञाते मंथोःसत्यायांभौवनस्ततोदूषणायांत्वष्टाऽजानेष्टत्वष्टुर्विरोचनायांविरजःविरजस्यशतजित्प्रवरंपुत्रशतंकन्याचाविषूच्यांकिलजातम् १३ तत्रायंश्लोकः ॥ प्रैयव्रतंवंशमिमंविरजश्चरमोद्भवः ॥ अकरोदत्यलंकीर्त्याविष्णुःसुरगणंयथा १४ इतिश्रीभागवतेमहा॰पंचमस्कंधेप्रियव्रतवंशानुकीर्तनंनामपंचदशोध्यायः ॥ १५ ॥ ॥ छ ॥ ॥ छ ॥

यंदक्षकन्याः अभ्यषिंचन् धरा यस्य प्रजानां कामान् दुदुहे ८ युधिबाणैः पूजिताःनृपाः यस्यबलिंअर्पयामासुः ९ यस्ययज्ञे भगवान्यज्ञेशः भक्तियोगेन समर्पितं इज्याफलं अर्हणमिवप्रत्यक्षतः स्वीकृतवान् १० ११ तस्माद्गयंत्यांचित्ररथः सुगतिः अवरोधनः इतित्रयः चित्ररथात् ऊर्णायांसम्राट् १२ ततः उत्कलायांमरीचिः ततःबिंदुमत्यां बिंदुमान् ततः सरघायांमधुः ततः सुमनस्यांवीरव्रतः ततः भोजायांमंथुप्रमंथू मंथोः सत्यायांभौवनः ततः दूषणायां त्वष्टा ततः विरोचनायांविरजः ततः विषूच्यां शतजित्प्रवरं पुत्रशतं कन्याचएका जाता १३ प्रैयव्रतमिमंवंशं विरजश्चरमोद्भवः अकरोदत्यलंकीर्त्याविष्णुः सुरगणंयथा १४ इतिपंचमेपंचदशः ॥ १५ ॥ ॥ छ ॥

 पूर्वोक्तंद्वीपसिंध्वादिमानंहस्त्वंस्वरूपतः । स्पष्टंप्रवक्तुमारब्धापंचाध्यायीततः परम् ॥ १ ॥ षोडशेधस्तथाचोर्ध्वंपरितः सन्निवेशतः । मेरोःस्थितिर्महीकंजकर्णिकाचोपवर्ण्यते ॥ २ ॥ प्रि 
यव्रतचरित्रोक्तौयोक्ताद्वीपादिकल्पना । तद्विशेषविजिज्ञासुःकथांतेपरिपृच्छति ॥ ३ ॥उक्तइति । किंपर्यंतमुक्तस्तदाह । यावदादित्यस्तपति । यत्रचासौशुक्लकृष्णपक्षयोः नक्षत्रगणैः स
 हचंद्रमावादृश्यतेतावत् १ यतः येभ्यः सिंधुभ्यः एतस्याभुवः ( जंबुद्वीपादिसप्तद्वीपविशेषाणांविकल्पः कल्पना ) सूचितः संक्षेपतोदर्शितः । ( विजिज्ञासामि विशेषेणज्ञातुमिच्छामि 
२ जिज्ञासायाः फलमाह । भगवतइति ( क्षमंयोग्यम् । ततस्मात्कारणाद्धेगुरोएतत्स्थूलरूपम् ) ३ भगवतोयामायागुणविभूतिः तस्याः काष्ठांअंतं ( मनसाज्ञातुंवचसावक्तुंवाविबु
धायुषापिपुरुषोनालंनशक्नोतिकिंपुनरस्मदायुषा । प्राधान्येनसंक्षेपेणेत्यर्थः ) रूपंसंनिवेशः लक्षणंचिह्नम् । ४ कुवलयंभूमंडलंतदेवकमलंतस्यकोशाः सप्तद्वीपाः तेष्वभ्यंतरः कोशः प्रथ
मोजंबूद्वीपः नियुतयोजनविशालः लक्षयोजनविस्तीर्णः ५ नवयोजनसहस्रमायामोत्रविस्तारः । एतच्चभद्राश्वकेतुमालव्यतिरेकेणद्रष्टव्यम् । तयोश्चतुस्त्रिंशद्योजनसहस्रायामत्वात्
। केचित्तुनीलनिषधयोः संलग्नाग्रयोः समुद्रप्रवेशमंगीकृत्यतयोरपिसंकुचितत्वेन नवसहस्रायामत्वंसंपादयंति । संनिवेशश्चवायुनोक्तः । “धनुर्वत्संस्थितेज्ञेयेद्वेवर्षेदक्षिणोत्तरे । दीर्घाणि
तत्रचत्वारि चतुरस्रमिलावृतं”इति । ६ नाभ्यांमध्ये । द्वीपस्यआयामोलक्षयोजनप्रमाणम् । तावान्समुन्नाहउच्छ्रायोयस्य । ७

॥ ॥ राजोवाच ॥ ॥ उक्तस्त्वयाभूमंडलायामविशेषोयावदादित्यस्तपतियत्रचासौज्योतिषांगणैश्चंद्रमावासहदृश्यते १ तत्रापिप्रियव्रतरथचरण
परिखातैःसप्तद्वीपविशेषाविकल्पस्त्वयाभगवन्खलुसूचितः ॥ एतदेवाखिलमहंमानतोलक्षणतश्चसर्वंविजिज्ञासामि २ भगवतोगुणमयेस्थूलरूपआवे
शितंमनोह्यगुणेपिसूक्ष्मतमआत्मज्योतिषिपरेब्रह्मणिभगवतिवासुदेवाख्येक्षममावेशितुंतदुहैतत्गुरोऽर्हस्यनुवर्णयितुमिति ३ ॥ ॥ ऋषिरुवाच ॥ ॥
नवैमहाराजभगवतोमायागुणविभूतेःकाष्ठांमनसावचसावाऽधिगंतुमलंविबुधायुषापिपुरुषस्तस्मात्प्राधान्येनैवभूगोलकविशेषंनामरूपमानलक्षणतोव्या
ख्यास्यामः ४ योवायंद्वीपःकुवलयकमलकोशाभ्यंतरकोशोनियुतयोजनविशालः समवर्तुलोयथापुष्करपत्रम् ५ यस्मिन्नववर्षाणिनवयोजनसहस्रायामा
न्यष्टभिर्मर्यादागिरिभिःसुविभक्तानिभवंति ६ एषांमध्येइलावृतंनामाभ्यंतरवर्षंयस्यनाभ्यामवस्थितःसर्वतःसौवर्णःकुलगिरिराजोमेरुर्द्वीपायामसमु
न्नाहःकर्णिकाभूतःकुवलयकमलस्य ७

राजोवाच ॥ हे शुक त्वया पूर्वं प्रियव्रतचरिते भूमंडलायामविशेषः उक्तः कियत्पर्यंतमुक्तः तदाह यावत् आदित्यःतपति तथा नक्षत्रगणैः सहचंद्रमाः दृश्यते तावत्
१ तत्रापि हेभगवन् प्रियव्रतरथचरणपरिखातैः सप्तसिंधवउपक्लृप्ताः येभ्यः एतस्याः भुवः सप्तद्वीपविशेषः त्वया संक्षेपतो दर्शितः एतत् सर्वमहंमानतः लक्षणतश्चज्ञा
तुमिच्छामि २ यतः भगवतः स्थूलरूपे आवेशितंमनः सूक्ष्मरूपे आवेशितुंक्षमंभवति तस्मात् हेगुरो एतद्वर्णयितुमर्हसि ३ ॥ ॥ श्रीशुकउवाच ॥ हेमहाराजमायागु 
णविभूतेः भगवतः अंतं पुरुषः विबुधायुषापिप्राप्तुंनसमर्थः अतः प्राधान्येनभूगोलविशेषंनामलक्षणतो व्याख्यास्यामः ४ योवाअयंजंबुद्वीपः लक्षयोजनविशालः समः
वर्तुलः वलयाकारः एतत्परिमाणेनक्षारोदेन वेष्टितः ५ अत्रनववर्षाणि नवसहस्रयोजनायामानि अत्रमर्यादाचलाः अष्टौ ६ मध्येइलावृतं तस्यनाभ्यां लक्षयोजनो
च्छ्रायःकर्णिकाकारः सौवर्णः मेरुः स्थितः ७

मूलेषोडशयोजनसहस्रंविततः तावताषोडशयोजनसहस्रमानेन ( भूमिमध्येप्रविष्टः ) चतुरशीतियोजनसहस्रमानेनचबहिर्दृश्यतेएवंलक्षयोजनोन्नाहः । उत्तरोत्तरेणेलावृतम् । इलावृतस्योत्तरोत्तरतः । ( उत्तरेणेत्येनवंतंतद्योगे'एनपे'तिद्वितीया ) क्रमेणनीलादयस्त्रयोमर्यादागिरयः । प्रागायताः पूर्वतोदीर्घाः क्षारोदएवावधिर्येषांतें । द्विसहस्रयोजनविस्तीर्णाः दशांशादीषदधिकोयोंशस्तेनदैर्घ्यएवह्रसंति । नतूच्चत्वेपृथुत्वेवा । यथोक्तंविष्णुपुराणे । "लक्षप्रमाणौद्वौमध्येदशहीनास्तथापरे"इति । एतच्चस्थूलदृष्टयैवोक्तम् । तयोरपियथावन्मध्यमत्वाभावेनलक्षप्रमाणत्वाभावात् ८ ( एवं दक्षिणेनेलावृतं इलावृतस्य दक्षिणतः ) अयुतयोजन उत्सेध उच्छ्रायोयेषां अयंचोत्सेधोनीलादीनामपिद्रष्टव्यः नीलादिपृथुत्वं चैषामपि द्रष्टव्यं । यथासंख्यं मर्यादागिरय इतिशेषः ९ ( तथैवेलावृतस्य पश्चिमतः पूर्वतश्च । ) आनीलनिषधायतौ । उत्तरतो नीलपर्यंतं दक्षिणतो निषधपर्यंतंचदीर्घौ पप्रथतुः विस्तीर्णौ भवतः १० तावेवकेतुमालभद्राश्वयोर्वर्षयोः सीमानंकुर्वाते ११ नन्वेवंसति पूर्वापररेखायामिलावृतवेष्टितो मेरुर्मध्ये ततः पूर्वापरतो गिरिद्वयं वर्षद्वयंच नातः किंचिदस्ति । दक्षिणोत्तररेखायांतु तथैवेलावृतवेष्टितो मध्येमेरुः उभयतस्त्रीणित्रीणिवर्षाणि गिरयश्चषट् तत्कथंसर्वतोलक्षप्रमाणत्वं जंबूद्वीपस्य । उच्यते मेरोःषोडशसहस्राणि सर्वतः स्थितत्वादिलावृतस्याष्टादश अन्येषांषण्णां चतुःपंचाशत् । गिरीणांषण्णा द्वादशेत्येवं दक्षिणोत्तररेखायां तावल्लक्षं पूर्वापररेखायामपिसमेरोरिलावृतस्य चतुस्त्रिंशत् । गिर्योश्चत्वारि । शेषाणिद्विषष्टिसहस्राणि । पूर्वापरवर्षयोरासमुद्रंदैर्घ्यंद्रष्टव्यानि अतोन विरोधः । अयुतयोजनप्रमाणौ विस्तारोन्नाहौयेषां । विस्तीर्णमूर्ध्नोमेरोरवष्टंभत्वात्पूर्वपश्चिमौ गिरी दक्षिणोत्तरविस्तारा । दक्षिणोत्तरौच पूर्वापरविस्तारौ द्रष्टव्यौ सर्वतो दशयोजनसहस्रविस्तारागीकारेत्विलावृतलोपात् पूर्वेणेलावृतमुपप्लावयतीत्यादिविरोधः स्यात् १२

मूर्धनिद्वात्रिंशत्सहस्रयोजनविततोमूलेषोडशसहस्रंतावतांऽतर्भूम्यांप्रविष्टःउत्तरोत्तरेणेलावृतंनीलःश्वेतःशृंगवानिति त्रयोरम्यकहिरण्मयकुरूणांवर्षाणांमर्यादागिरयःप्रागायताउभयतःक्षारोदावधयोद्विसहस्रपृथवएकैकशःपूर्वस्मात्पूर्वस्मादुत्तरउत्तरोदशांशाधिकांशेनदैर्घ्यएवह्रसंति ८ एवंदक्षिणेनेलावृतं निषधोहेमकूटोहिमालयइतिप्रागायतायथानीलादयः अयुतयोजनोत्सेधा हरिवर्षकिंपुरुषभारतानांयथासंख्यम् ९ तथैवेलावृतमपरेणपूर्वेणचमाल्यवद्गंधमादनावानीलनिषधायतौद्विसहस्रंपप्रथतुः १० केतुमालभद्राश्वयोःसीमानंविदधाते ११ मंदरोमेरुमंदरःसुपार्श्वःकुमुदइत्ययुतयोजनविस्तारोन्नाहामेरोश्चतुर्दिशमवष्टंभगिरयउपक्लृप्ताः १२

सःमूर्धनि द्वात्रिंशत्सहस्रयोजनविततः मूलेषोडशसहस्रयोजनविततः अंतर्भूम्यां षोडशसहस्रयोजनैः प्रविष्टः भूमेरुपरि चतुरशीतिसहस्रयोजनप्रमाणः इलावृत्तस्यउत्तरोत्तरतः नीलः श्वेतः शृंगवान् इतित्रयः पर्वताःएतेरम्यकहिरण्मयकुरुवर्षाणांमर्यादाचलाः अयुतयोजनोन्नाःद्विसहस्रयोजनविततः ८ एवंदक्षिणतः निषधः हेमकूटः हिमालयः हरिवर्षकिंपुरुषभारतानांसीमाचलाःएतेसमुद्रावधयः प्रमाणंपूर्ववत् ९ इलावृतस्य पूर्वे गंधमादनः भद्राश्ववर्षस्य मर्यादागिरिः पश्चिमे माल्यवान् केतुमालवर्षस्यसीमाचलः १० ११ मेरोःचतुर्दिक्षु मंदरसुमंदरसुपार्श्वकुमुदाः ४ अवष्टंभपर्वताः दशसहस्रयोजनविस्तारोन्नाहाः १२

आधिसहस्रमेकादशशतानिउन्नाहोयेषां यावत्प्रमाणं विटपविततिर्येषां । शतयोजनं परिणाहो विस्तारोयेषाम् १३ ( पयश्चमधुच इक्षुरसश्चमृष्टंचशुद्धंजलं येषुते । ) यदुपस्पर्शिनः य त्सेविनः १४ ( देवोद्यानानि देवानां क्रीडावनानि । ) १५ ( येषुउद्यानेषु अमरश्रेष्ठाः ) ललामो भूषणं सुरललनानांभूषणभूताः श्रेष्ठाः याः स्त्रियः तासांयूथस्यपतयः सह संभूय ( ताभिः स्त्रीभिः सहिताइत्यर्थः ) येषु विहरंतिक्रीडंति १६ एकादशशतयोजनमुत्तुंगोयो देवचूतस्तस्याशिरसः सकाशात् ( अमृतकल्पानि अमृतवत्स्वादूनि ) फलप्रमाणमुक्तं वायुपुराणे । " अरत्नीनांशतान्यष्टावेकषष्ट्यधिकानिच । फलप्रमाणमाख्यातमृषिभिस्तत्त्वदर्शिभिः " इति १७ अतिमधुरश्चासौस्वतः सुरभिश्चसुगंधिश्च नचअन्येषांगंधैरावासितः । एतादृशो बहुलश्चारुणश्चरसः सएवउदमुदकंतेन । १८ यदुपजोषणात्यस्यरसस्यसेवनात् । ( यक्षयोषितां अवयवेषुसौगंध्यंविद्यते अतोऽवयवस्पर्शमात्रेणसुगंधोवायुः अनुवासयतिसुरभीकरोति ) १९ अनस्थिप्रायाणां अतिसूक्ष्मबीजानांयत्रनिपतिततश्चारभ्य आत्मनोदक्षिणतः सर्वंमिलावृतंव्याप्यवहतीत्यर्थः । २० तावत्सर्वतः रोधसोस्तटयोः । ( अनुविध्यमानाप्रतिहन्यमाना ) २१ २२

॥२१॥ ॥१६॥

चतुर्ष्वेतेषुचूतजंबूकदंबन्यग्रोधाश्चत्वारः पादपप्रवराः पर्वतकेतवइवअधिसहस्रयोजनोन्नाहास्तावद्विटपविततयः शतयोजनपरिणाहाः १३ ह्रदाश्चत्वारः पयोमध्विक्षुरसमृष्टजलायदुपस्पर्शिनउपदेवगणायोगैश्वर्याणिस्वाभाविकानि भरतर्षभधारयंति १४ देवोद्यानानिचभवंतिचत्वारिनंदनंचैत्ररथंवैभ्राजकं सर्वतोभद्रमिति १५ येष्वमरपरिवृढाः सहसुरललनाललामयूथपतयउपदेवगणैरुपगीयमानमहिमानःकिलविहरंति १६ मंदारोत्संगएकादशशतयोजनोत्तुंगदेवचूतशिरसोगिरिशिखरस्थूलानिफलान्यमृतकल्पानिपतंति १७ तेषांविशीर्यमाणानामतिमधुरसुरभिसुगंधिबहुलारुणरसोदेनारुणोदानाम नदीमंदरगिरिशिखरान्निपतंतीपूर्वेणेलावृतमुपप्लावयति १८ यदुपजोषणाद्भवान्याअनुचरीणांपुण्यजनवधूनामवयवस्पर्शसुगंधवातोदशयोजनंसमंतादनुवासयति १९ एवंजंबूफलानामत्युच्चनिपातविशीर्णानामनस्थिप्रायाणामिभकायनिभानांरसेनजंबूनामनदीमेरुमंदरशिखरादयुतयोजनादवनितलेनिपतंतीदक्षिणेनात्मानंयावदिलावृतमुपस्यंदयति २० तावदुभयोरपिरोधसोर्यामृत्तिकारसेनानुविध्यमानावाय्वर्कसंयोगविपाकेनसदामरलोकाभरणंजांबूनदंनामसुवर्णंभवति २१ यदुहवावविबुधादयः सहयुवतिभिर्मुकुटकटककटिसूत्राद्याभरणरूपेणखलुधारयंति २२

येषुचतुर्षु उपरिचूतजंबुकदंबवटाः एकादशशतयोजनोच्छ्रायाः शतयोजनविस्ताराः संति १३ तत्रह्रदाः चत्वारः पयोमध्विक्षुरसमृष्टजलाःसंति १४ तत्रदेवोद्यानानि नंदनं १ चैत्ररथं २ वैभ्राजकं ३ सर्वतोभद्रमिति ४ १५ एषुदेवादयःस्त्रीभिः सहाविहरंति १६ मंदरोत्सगे आम्रवृक्षस्य शिरसः गिरिशिखरवत्स्थूलानि फलानिपतंति १७ तद्रसेनअरुणोदानामनदी पूर्वेणइलावृतं उपप्लावयति १८ यस्याःजलपानतः पार्वतादासीनां देहगंधः दशयोजनानि अनुवासयति १९ एवंमेरुमंदरोत्संगेजंबुवृक्षः तस्मात् इभकायसमानिफलानिपतंति तद्रसेनजंबूनाम नदी दक्षिणेनइलावृतं व्याप्यवहति २० तत्तटस्यमृत्तिका जांबूनदंसुवर्णंस्यात् २१ तत्सुवर्णं विबुधादयः स्त्रीभिःसह अलंकाररूपेणधारयंति २२

॥२१॥

( तस्य कोटरेभ्यस्तद्गतविवरेभ्यः ) आयामोत्रव्यामः । सच 'व्यामोबाह्वोः सकरयोस्तत योस्तिर्यगंतरं' इत्युक्तलक्षणः । पंचव्यामं परिणाहः स्थौल्यं यासामित्यर्थः । केचित्तुपंचव्याम परिणाहइत्येवपठंति २३ (यामधुधाराउपभुंजतेतेषांमुखतोनिर्गतोवायुः शतयोजनंदेशंसुरभीकरोति ) २४ नीचीना अधोमुखाः ( शतवल्शःशतशाखः । अन्नादीत्यादिशब्दादन्येपि खाद्याविशेषाः अभरणादयइत्यादिशब्दात्सौवर्णभाजनादयःपदार्थविशेषाग्राह्याः तेसर्वेपिकुमुदाग्रात्पतंतः कामदुघानदाभूत्वाइलावृतस्योत्तरतस्तंकुमुदमुपयोजयंतिउपयोगिनंकुर्वंती स्यर्थः । कुमुदः पयआदिभिस्तत्रोपयोगीभवतीतिभावः ) २५ ( उपयोगमेवाह । यानिति । यान्नदविशेषान्सेवमानानां वलिः संकुचितत्वक् । पलितं केशादौजरसाशौक्ल्यम् । क्लमोग्लानिः आमयोरोगः उपसर्गाः द्वेषमत्सरादयः ) २६ ( कर्णिकाभूतस्यमेरोः केसरभूताः ) २७ चतुर्दिक्षुमेरुमूलाद्योजनसहस्रंत्यक्त्वाभेःपरितः परिघयइवजठरदेवकूटादयस्तिष्ठं तिअतःअष्टादशयोजनसहस्रंप्रमाणमत्रोक्तं ! "वैष्णवादिपुराणेषुपरिमाणादियत्पुनः । अन्यथावर्णितंतत्तुकल्पभेदाद्यपेक्षया।" द्विसहस्रंपृथुवतुंगौच २८ ( अयुतयोजनसाहस्रीं अयुतयोजनान्यायानिसहस्राणितत्प्रमाणमस्याइत्यर्थः । शातकौंभीं सुवर्णमयीं आत्मयोनेर्विरिंच्यस्य ) २९

यस्तुमहाकदंबस्सुपार्श्वनिरूढोयास्तस्यकोटरेभ्योविनिःसृताःपंचायामपरिणाहाःपंचमधुधाराः सुपार्श्वशिखरात्पतंत्योऽपरेणात्मानामिलावृतमनुमोदयंति २३ याह्युपभुंजानानांमुखनिर्वासितोवायुःसमंताच्छतयोजनमनुवासयति २४ एवंकुमुदनिरूढोयःशतवल्शोनामवटस्तस्यस्कंधेभ्योनीचीनाःपयोदधि मधुघृतगुडान्नाद्यंबरशय्यासनाभरणादयः सर्वएवकामदुघानदाःकुमुदाग्रात्पतंतस्तमुत्तरेणेलावृतमुपयोजयंति २५ यानुपजुषाणानांनकदाचिदपिप्रजानां वलीपलितक्लमस्वेददौर्गंध्यजरामयमृत्युशीतोष्णवैवर्ण्योपसर्गादयस्तापविशेषाभवंति । यावज्जीवंसुखंनिरतिशयमेव २६ कुरंगकुररकुसुंभवैकंकत्रिकूटशि शिरपतंगरुचकनिषधशितिवासकपिलशंखवैदूर्यजारुधिहंसर्षभनागकालंजरनारदादयोविंशतिगिरयो मेरोःकर्णिकायाइवकेसरभूतामूलदेशेपरितउपक्लृप्ताः २७ जठरदेवकूटौमेरुंपूर्वेणाष्टादशयोजनसहस्रमुदगायतौद्विसहस्रंपृथुतुंगौभवतःएवमपरेणपवनपारियात्रौदक्षिणेनकैलासकरवीरौप्रागायतौएवमुत्तरतस्त्रि शृंगमकरौअष्टभिरेतैःपरिस्तृतोग्निरिवपरितश्चकास्तिकांचनगिरिः २८ मेरोर्मूर्धनिभगवतआत्मयोनेर्मध्यतउपक्लृप्तांपुरीमयुतयोजनसाहस्रींसमचतुरस्रां शातकौंभींवदंति २९

एवं पश्चिमेसुपार्श्वपर्वतेकदंबकोटरेभ्यः निःसृताः पंचमधुधाराः पश्चिमेनइलावृतं वर्षं यांति २३ यद्रससेवितानांमुखवायुः शतयोजनं सुवासयति २४ एवंकुमुदे वटस्य स्कंधेभ्यःदधिमधुघृतपयोगुडान्नांबरशय्यासनाभरणादयः सर्वे एवंकामदुघाः नदाः पतंतः संतः उत्तरेण इलावृतं प्लावयंति २५ नदसेविनांवलीपलितक्लमस्वेदादयोन भवंति २६ एवंकुरंगकुररकुसुंभाः ३ वैकंकः ४ त्रिकूटः ५ शिशिरः ६ पतंगः ७ रुचकः ८ निषधः ९ शितिवासः १० कपिलः ११ शंखः १२ वैदूर्यः १३ जारुधिः १४ हंसः १५ ऋषभः १६ नागः १७ कालंजरः १८ नारदः १९ आदिः २० एतेपर्वताःमेरोर्मूलेरचिताः २७ मेरोः परितः अष्टौपर्वताः जठरदेवकूटौपूर्वस्याम् पवनपारियात्रौ पश्चिमतः केलासकरवीरौ दक्षिणतः त्रिशृंगमकरौउत्तरतः एवंभूतोमेरुश्चकास्ति २८ मेरोः मूर्धनिमध्येसौवर्णीदशसहस्रयोजनाचतुरस्राब्रह्मपुरी २९

यथादिशंप्राच्यादिदिक्षु । यथारूपंइंद्रादिवर्णानतिक्रमेण । ( आत्मयोनेःपुर्याः ) तुरीयमानेनसार्धद्विसहस्रप्रमाणेन । नामानिपुराणांतरात्ज्ञातव्यानि । यथोक्तं । "मेरोनवपुराणि स्युर्मनोवत्यमरावती । तेजोवतीसंयमिनीतथाकृष्णांगनापरा । श्रद्धावतीगंधवतीतथाचान्यामहोदया । यशोवतीचब्रह्मेंद्रवह्न्यादीनांयथाक्रमं" इति ३० इतिपंचमस्कंधेटीकायांषोडशोध्यायः॥१६॥ ततः सप्तदशेगंगागमनंतच्चतुर्दशम् । इलावृतेचरुद्रेणसंकर्षणानिषेवणम्॥१॥यज्ञलिंगस्य । बलेर्यज्ञेलिंगंत्रिविक्रममूर्तिर्यस्यतस्यविष्णोर्विक्रमतःदक्षिणेनपदाभुवंक्रांत्वावामपादमुत्क्षिपतः वामपादांगुष्ठनखेननिर्भिन्नं ऊर्ध्वमुपरिभागोयस्यांडकटाहस्यतस्यविवरेण अंतःप्रविष्टा या बाह्यजलधारासादिवोमूर्धन्यवततारेत्यन्वयः। तस्य ( विष्णोर्यत् ) चरणपंकजंतस्यावनेजनेनक्षालनेन अरुणंतद्रक्तंकुंकुमंतदेवकिंजल्कं ( यद्वा अरुणवर्णैकिंजल्कंकिंजल्कस्थानीयानितद्रतानिरजांसि )। तैरुपरंजिता । अतएवाखिलस्यजगतोऽघमलापहं ( पापमलनाशकं ) उपस्पर्शनंयस्याः तथाप्यमलातन्मलसंगशून्या । साक्षाद्भगवत्पदीतियदनुपलक्षितं जाह्नवीभागीरथीत्याद्युपलक्षणांतररहितं वचोनामतेनाभिधीयमाना । तस्मिन्समयेभगवत्पदीत्येवनामपश्चान्नामांतराणिजातानीत्यर्थः १ कोसौदिवोमूर्धातमाह । यदिति । किंतद्विष्णुपदंतदाहयत्रेति । वीरव्रतः दृढसंकल्पः ( उत्तानपादस्यपुत्रोध्रुवः ) अस्मत्कुलदेवतायाहरेश्चरणारविंदोदकमितिहेतोर्यः परमादरस्तेन यांजलधारांशिरसाबिभर्तीत्यन्वयः । कथंभूतःसन् प्रतिक्षणं वर्धमानेनभगवद्भक्तियोगेनदृढमत्यंतं क्लिद्यमानमंतर्हृदयं यस्य अतएव औत्कंठ्येनविवशाभ्यामीलितंयल्लोचनयुगलंतदेवकुड्मलंताभ्यां विगलितममलंबाष्पंतस्यकलयासहअभिव्यज्यमानेरोमपुलकानांकुलंयस्य । ( अत्र कुलकोधुनेति भाव्यं तदभावआर्षत्वादुपपद्यते ) २

**तामनुपरितोलोकपालानामष्टानांयथादिशंयथारूपंतुरीयमानेनपुरोष्टावुपक्लृप्ताः३०इतिश्रीभाग॰म॰पंचमस्कंधेभुवनकोशवर्णनंनामषोडशोध्यायः॥१६**
**॥ श्रीशुकउवाच ॥ ॥ तत्रभगवतःसाक्षाद्यज्ञलिंगस्यविष्णोर्विक्रमतोवामपादांगुष्ठनखनिर्भिन्नोर्ध्वांडकटाहविवरेणांतःप्रविष्टायाबाह्यजलधारातच्चरणपंकजावनेजनारुणकिंजल्कोपरंजिताखिलजगदघमलापहोपस्पर्शनामलासाक्षाद्भगवत्पदीत्यनुपलक्षितवचोभिधीयमानातिमहताकालेनयुगसहस्रोपलक्षणेनदिवोमूर्धन्यवततार १ यत्तद्विष्णुपदमाहुः । यत्रहवाववीरव्रतऔत्तानपादिःपरमभागवतोऽस्मत्कुलदेवताचरणारविंदोदकमितियामनुसवनमुत्कृष्यमाणभगवद्भक्तियोगेनदृढंक्लिद्यमानांतर्हृदयऔत्कंठ्यविवशामीलितलोचनयुगलकुड्मलविगलितामलबाष्पकलयाभिव्यज्यमानरोमपुलककुलकअधुनापिपरमादरेणशिरसाबिभर्ति २**

तामनुपरितः अष्टौलोकपालानांपुर्यः सार्धद्विसहस्रयोजनमिताःसंति ३० इतिपंचमेषोडशः॥१६॥ श्रीशुकउवाच ॥ अथविष्णोः श्रीवामनस्य वामपादांगुष्ठनखनिर्भिन्नोर्ध्वांडकटाहविवरेणांतःप्रविष्टा या बाह्यजलधाराभगवच्चरणस्पर्शात्सर्वपापहरासाबहुकालेनध्रुवमंडलेअवततार १ यांभगवत्पदीत्याहुः अहोध्रुवोपिपरमभागवतोभगवद्भक्तियोगेन क्लिद्यमानांतर्हृदयःसन् अस्मत्कुलदेवताचरणारविंदोदकमिति यां गंगां शिरसा बिभर्ति २ ॥३२॥

ततःसप्तऋष्यस्तस्यागंगायाःप्रभावाभिज्ञाः संतो यांजटाजूटैरुद्वहंतीत्यन्वयः। एतावत्येवनातोऽधिकास्तीत्यभिप्रायवंतः भगवतिसंततंभक्तियोगलाभैनैवोपेक्षिताअन्येपुरुषार्थाआत्मज्ञानंचयैः। कामिवंकइवधारयंति । प्रत्यक्षंमुक्तिमिव तामागतांमुमुक्षवोजनाइवेति ३ ततोऽनेकसहस्रकोटीनांअसंख्यानांविमानानांअनीकैः ( समुहैः ) संकुलेन ( व्याप्तेन ) देवयानेनआकाशमार्गेणावतरंती । सप्तऋषिभ्योर्वागेवप्रायशःकर्मिणांगतिरितितोर्वागेवसंकुलत्वमुक्तं आवार्यआप्लाव्यमेरुमूर्धस्थेब्रह्मसदनेनिपतति ४ अभिस्पंदंतीअभितोगच्छंती ( नदनदीपतिंसमुद्रं । चतुर्णांभिदानांक्रमेणनामान्याह सितेति ) ५ केसराचलानांमेरुसमानोच्छ्रायस्त्वात्प्रथमंतेषामादिशिखरेषुमुख्यशृंगेपुपततिततस्तेभ्योऽधोऽधःप्रस्रवंतीसती ( गंधमादनस्यमस्तकेषुपतित्वाभद्राश्वस्यमध्यात्क्षारसमुद्रंप्रविशति ) ६ एवंमाल्यवच्छिखरात्केतुमालवर्षाभिमुखंनिष्पतंतीचक्षुस्संज्ञा ७ गिरिशिखरादितिकुमुदशिखरादुच्चलितानीलशिखरंततउच्चलिताश्वेतशिखरंतदप्यतिहायशृंगवतः शिखरादधः स्रवंती ( उत्तरान्कुरून् अभितःस्पंदमाना ) ८ ( ब्रह्मसदनस्यदक्षिणतः बहूनिगिरिशिखराण्यतिक्रम्यहेमकूटाद्धिमकुटं ततो ) अतिरभसतररंहसाअस्खलिततीव्रतरवेगेन ( भुवंयांती भारतंवर्षमभिदक्षिणस्यांसमुद्रमभिविशति ) ९ बहुशोबहुविधामेर्वादिगिरीणांदुहितरः तत्प्रसूताः १०

ततः सप्तऋषयस्तत्प्रभावाभिज्ञाइयंननुतपसआत्यंतिकीसिद्धिरेतावतीभगवतिसर्वात्मनिवासुदेवेऽनुपरतभक्तियोगलाभेनैवोपेक्षितान्यार्थात्मगतयोमुक्तिमिवागतांमुमुक्षवइवसबहुमानमद्यापिजटाजूटैरुद्वहंति ३ ततोनेकसहस्रकोटिविमानानीकसंकुलदेवयानेनावतरंतींदुमंडलमावार्यब्रह्मसदनेनिपतति ४ तत्रचतुर्धाभिद्यमानाचतुर्भिर्नामभिश्चतुर्दिशमभिस्पंदंतीनदनदीपतिमेवाभिनिविशतिसीतालकनंदाचक्षुर्भद्रेति ५ सीतातुब्रह्मसदनात्केसराचलादिशिखरेभ्योऽधोधःप्रस्रवंतीगंधमादनमूर्धसुपतित्वाअंतरेणभद्राश्ववर्षंप्राच्यांदिशिक्षारसमुद्रमभिप्रविशति ६ एवंमाल्यवच्छिखरान्निष्पतंतीततोऽनुपरतवेगाकेतुमालमभिचक्षुःप्रतीच्यांदिशिसरित्पतिंप्रविशति ७ भद्राचोत्तरमोमेरुशिरसोनिपतितागिरिशिखराद्गिरिशिखरमतिहायशृंगवतःशृंगादवस्पंदमानाउत्तरांस्तुकुरूनभितउदीच्यांदिशिजलधिमभिप्रविशति ८ तथैवालकनंदादक्षिणेनब्रह्मसदनाद्बहूनिगिरिकूटान्यतिक्रम्यहेमकूटाद्धिमकूटादतिरभसतररंहसाभुवंयांतीभारतमभिवर्षंदक्षिणस्यांदिशिजलधिमभिप्रविशति यस्यांस्नानार्थंचागच्छतःपुंसःपदेपदेऽश्वमेधराजसूयादीनांफलंनदुर्लभमिति ९ अन्येचनदान्यश्चवर्षेवर्षेसंतिबहुशोमेर्वादिगिरिदुहितरःशतशः १०

ततः सप्तर्षयःतत्प्रभावाभिज्ञाः भगवति वासुदेवेसंततभक्तियोगलाभेन उपेक्षितान्यपुरुषार्थाः संतः मुक्तिमिवागतांयांअद्यापि जटाजूटैः बिभ्रति ३ ततः साचंद्रमंडलं आप्लाव्य ब्रह्मसदनेपतितासतीचतुर्धाअभूत् सीता अलकनंदा चक्षुर्भद्राइति ४ ५ तत्रसीताब्रह्मसदनात्केसराचलादिपर्वतेभ्यःअधोधः पतंती गंधमादनमूर्धनिपतित्वाभद्राश्ववर्षंगत्वापूर्वसमुद्रंप्रविशति ६ एवंचक्षुः माल्यवच्छिखरात्पतंती केतुमालवर्षंगत्वापश्चिमसमुद्रंप्रविशति ७ भद्राचब्रह्मसदनात्पतिता कुरूनूगत्वा उत्तरसमुद्रंप्रविशति ८ एवंअलकनंदाब्रह्मसदनात्पतंती भारतंगत्वा दक्षिणसमुद्रं प्रविशति यस्यांस्नानार्थं गच्छतः पुंसः पदेपदे अश्वमेधराजसूयादीनां फलंनदुर्लभमिति ९ अन्येचनदान्यश्चवर्षेवर्षेसंति बहुशः मेर्वादिगिरिदुहितरश्शतशः १०

तत्रजन्महेतुत्वंमहदादिद्वारेणप्रपंचयति । यस्यगुणनिमित्तोविग्रहोमहान्‌नामअसीत्‌ । विज्ञानंसत्त्वंधिष्ण्यंआश्रयोयस्यतः । तरयचितरूपत्वेनसत्त्वप्रधानत्वात्‌ । सएवाकिलावि‍दशोवा
सुदेवाभेदविवक्षया । भगवानजोब्रह्मा यत्संभवः यस्माद्ब्रह्मणः संभूतः अहंरुद्रः त्रिवृता त्रिगुणेनस्वतेजसास्वविभूतिरूपेण अहंकारेणवैकारिकंदेवतावर्गतामसंभूतवर्गम्‌ ऐंद्रियंइंद्रियवर्ग
चसृजेसृजामि २२ किंच । एतेवयंमहदादयः सर्वेयस्यानुग्रहात्‌इदंब्रह्मांडंसृजामः । कथंभूताः । यस्यमहात्मनोवशेस्थिताः संतः । यतः सूत्रेणक्रियाशक्त्यायंत्रिताः प्रोता शकुंताः
पक्षिणइवलौकिकेनसूत्रेणवद्धाः । वयमित्युक्तंतानेवाह । महान्‌अहंकारश्चवैकृतादयः पूर्वोक्तादेवताश्च २३ ( अथ ) स्थितिलयहेतुत्वंदर्शयन्‌प्रणमति । येनानिर्मितांएतांमायामेवायं
जनः अंजसावेद नतुतन्निस्तारगेयोगमुपायंकार्हिचिदपिवेदेति । ( तत्रहेतुः गुणानांशब्दादिविषयाणांरजआदीनांवासृष्टयामोहितः ) इतिस्थितिहेतुत्वंदर्शितम्‌ । कीदृशींमायाम्‌ ।
कर्माण्येव ( विहितनिषिद्धानि ) पर्वाणिग्रंथयः तानिनयातिप्रापयति ( पुरुषमिति ) तथाताम्‌ । प्रलयहेतुत्वमाह । विलीयतेस्मिन्निति विलयः उदेत्यस्मादितिउदयः । विलयश्चोद
यश्चात्मास्वरूपंयस्यतस्मैनमः ॥२४॥ इतिपंचमस्कंधेटीकायांसप्तदशोध्यायः ॥१७॥ अष्टादशेततोमेरोः पूर्वादिक्रमतस्त्रिषु ॥ त्रिषुचोत्तरवर्षेषुसेव्यसेवकवर्णनम्‌ ॥१॥ भद्रश्रवावर्षपतिः
तस्यकुलपतयः सेवकमुख्याश्च ( समाधिनाध्यानेन ) १ भद्रश्रवसऊचुरितिप्राणभृतउपदधातीतिवत्‌गुणलक्षणयातद्योगात्‌गुणिषुलिंगसमवायन्यायेनबहुवचनम्‌ २ अयंजनोनिपन्नापि
पश्यन्नपिप्रंतंहिसंतंनपश्यति । ( स्वमृत्युं ) नालोचयतीत्यर्थः । भगवद्विचेष्टितमेतत्‌ । तच्चविचित्रं । अदर्शनेलिंगम्‌ । पुत्रंबालंपितरंचवृद्धंमृतंनिर्हृत्यदग्ध्वास्वयंतदुभयधनैर्जिजीवि
षतिजीवितुमिच्छति । जिजीविषुरितिपाठांतरेतुच्छंदःसामंजस्यं । किंधर्मार्थं । न । यर्हियतः असत्‌तुच्छंविषयसुखंसेवितुंविकर्मपापमेवध्यायन्‌ ( चिंतयन्‌ ) ३ नन्वविद्वान्नपश्यति
किमत्रचित्रंतत्राह । नश्वरंवदंतिस्मशास्त्रतः । पश्यंतिचसमाधौ । हेअजतथापिमाययामुह्यंति।एतच्चतवकृत्यंचेष्टितंसुविस्मितंअतिचित्रं । अतःशास्त्रादिश्रमंविहायतंत्वामजंनतोस्मि ४

यस्याद्यआसीद्गुणविग्रहोमहान्विज्ञानधिष्ण्योभगवानजःकिल ॥ यत्संभवोहंत्रिवृतास्वतेजसावैकारिकंतामसमैंद्रियंसृजे २२ एतेवयंयस्यवशेमहात्मनः
स्थिताःशकुंताइवसूत्रयंत्रिताः ॥ महानहंवैकृवतामसेंद्रियाःसृजामसर्वेयदनुग्रहादिदम्‌ २३ यन्निर्मितांकर्ह्यपिकर्मपर्वणींमायांजनोयंगुणसर्गमोहितः ॥ नवे
दनिस्तारणयोगमंजसातस्मैनमस्तेविलयोदयात्मने २४ इतिश्रीभागवतेमहापुराणेपंचमस्कंधेसप्तदशोध्यायः ॥ १७ ॥ ॥ ॥ श्रीशुकउवाच ॥ तथा
चभद्रश्रवानामधर्मसुतस्तत्कुलपतयःपुरुषाभद्राश्ववर्षेसाक्षाद्भगवतोवासुदेवस्यप्रियांतनूंधर्ममयींहयशीर्षाभिधानांपरमेणसमाधिनासंनिधाप्येदमभिगृणंत
उपधावंति १ ॥ भद्रश्रवसऊचुः ॥ ॥ ॐनमोभगवतेधर्मायात्मविशोधनायनमइति २ अहोविचित्रंभगवद्विचेष्टितंघ्नंतंजनोयंहिमिषन्नपश्यति ॥ ध्या
यन्नसद्यर्हिविकर्मसेवितुंनिर्हृत्यपुत्रंपितरंजिजीविषति ३ वदंतिविश्वंकवयःस्मनश्वरंपश्यंतिचाध्यात्मविदोविपश्चितः ॥ तथापिमुह्यंतितवाजमाययासुवि
स्मितंकृत्यमजंनतोस्मितम्‌ ४



२२ २३ २४ इतिपंचमेसप्तदशः ॥ १७ ॥ ॥ ॥ श्रीशुकउवाच ॥ ॥ तथाचभद्राश्ववर्षेभद्रश्रवानामधर्मसुतः भगवतः हयग्रीवमूर्तिंसेवते १ ॐनमोभगवतेधर्मायेत्या
दि २ अहोभगवद्विचेष्टितंविचित्रम्‌ ३ ४

इदमपरं चित्रवत्प्रतीयमानमपि त्वयिनचित्रमित्याह १ विश्वोद्भवादिकर्म अकर्तुरपि अपगताआवृत्व आवरणं यस्मात् तादृशस्यापितेअंगीकृतंत्वेदेन त्वयितन्नचित्रम् । यतः मायया
सर्वात्मनिकार्यस्यकारणेस्रष्टारिकर्मयुक्तम् । वस्तुतःसर्वव्यतिरिक्तोनिरुपाधावनावृतत्वं अकर्तृत्वंचयुक्तम् ५ परमेश्वरत्वेनस्तुत्वा प्रस्तुतावतारचरितमाह वेदानिति । तमसादैत्यरूपेणाति
रस्कृतान्अपनीतान् नाचतुरंगश्चनृतुरंगौतद्रूपोविग्रहोयस्यसः ( अभियाचतेप्रार्थनांकुर्वते ) कवयेब्रह्मणेतदर्थं ( प्रत्याददेत स्मैतेनमः ) अवितथेहितायसत्यसंकल्पाय ( तेनमइति )६
उत्तरत्रप्रह्लादचरित्रे । महापुरुषस्यगुणानां ( शांत्यादीनां ) भाजनआश्रयः । दैत्यदानवकुलस्यतीर्थीकरणम् ( पावित्र्येहेतुः ) शीलमाचरितंयस्य । अव्यवधानः फलसंकल्पेनव्यवधा
नशून्यश्चासावनन्यश्चाव्यभिचारीयोभक्तियोगस्तेनउपास्तेसेवते ७ ( तेजसांसूर्यादीनां-) अपितेजसे (“यदादित्यगतंतेज”इत्यादि स्मृतेः । ) आविराविः । अतिप्रकटोभव वीप्सावा ।
कर्माशयान्कर्मवासनाः कर्माश्रयानितिपाठेरागादीन् रंधयनिर्दह । भूयिष्ठाःभूयाः ८ विश्वस्यस्वस्तिप्रार्थनेखलस्यापितद्भवेत् । तच्चसाधुपीडांविनानस्यात् । अन्योन्यमर्मगलंध्यायतां
चभूतानांअन्योन्यघातंविना (अभीष्टं) नभवेत् । इत्याशंक्याह । खलःप्रसीदतुक्रौर्यंत्यजतु । भूतानिचमिथःशिवमेवध्यायंतु । तेषांमनश्चभद्रं उपशमादिकंभजतु । नोऽस्माकमपिमतिः
अपिशब्दात् भूतानांचमतिः अहैतुकीनिष्कामासती । ९ नःसंगःक्वापिमास्यात् । यदिकथंचित्स्यात् तर्हिअगारादिषुमास्यादत्र । किंतुभगवत्प्रियेष्वेवस्यात् ।अगारादिसंगेदोषमाह ।
यइति ( प्राणवृत्त्याप्राणधारणमात्रनिर्वाहकवृत्त्यापरितुष्टःआत्मवान् वशीकृतमनाः अदूराच्छीघ्रंसिध्यतिकृतकृत्योभवति । ) इंद्रियप्रियोगृहाद्यासक्तः १० भगवत्प्रियसंगगुणमाह ।
येषांभगवत्प्रियाणांसंगात्लब्धंमुकुन्दविक्रमंश्रुतिभिः श्रवणादिभिःसंस्पृशतांसेवमानानापुंसामंतर्गतोयोहरिर्मानसंमलंहरति । कथंभूतंविक्रमंनिजंअसाधारणं वीर्यवैभवंप्रभावातिशयोयस्यतीर्थंतु गंगादि मुहुः संस्पृशतांअंगजं मलंकेवलंहराति । तान्भगवत्प्रियान्कोवैनसेवेतेत्यन्वयः ११

विश्वोद्भवस्थाननिरोधकर्मतेह्यकर्तुरंगीकृतमप्यपावृतः । युक्तंनचित्रंत्वयिकार्यकारणेसर्वात्मनिव्यतिरिक्तेचवस्तुतः ५ वेदान्युगांतेतमसातिरस्कृतान्
रसातलाद्योनृतुरंगविग्रहः । प्रत्याददेवैकवयेऽभियाचतेतस्मैनमस्तेऽवितथेहितायते इति ६ हरिवर्षेचापिभगवान्नरहरिरूपेणास्ते । तद्रूपग्रहणनिमित्तमु
त्तरत्राभिधास्ये । तद्दयितंरूपंमहापुरुषगुणभाजनोमहाभागवतोदैत्यदानवकुलतीर्थीकरणशीलाचरितःप्रह्लादोऽव्यवधानानन्यभक्तियोगेनसहतद्वर्षपुरुषैरु
पास्तेइदंचोदाहरति७ ॐनमोभगवतेनरसिंहायनमस्तेजस्तेजसेआविराविर्भववज्रनखवज्रदंष्ट्रकर्माशयानंरधयरंधयतमोग्रसग्रसस्वाहाअभयमभयमात्मनिभू
यिष्ठाःॐक्ष्रौम् ८ स्वस्त्यस्तुविश्वस्यखलःप्रसीदतांध्यायंतुभूतानिशिवंमिथोधिया ॥ मनश्चभद्रंभजतादधोक्षजआवेश्यतांनोमतिरप्यहैतुकी ९ माऽ
गारदारात्मजवित्तबंधुपुसंगोयादिस्यातभगवत्प्रियेषुनः । यःप्राणवृत्त्यापरितुष्टआत्मवान्सिध्यत्यदूरान्नतथेंद्रियप्रियः १० यत्संगलब्धंनिजवीर्यवैभवंतीर्थंमु
हुःसंस्पृशतांहिमानसम् ॥ हरत्यजोऽतःश्रुतिभिर्गतोंगजंकोवैनसेवेतमुकुंदविक्रमम् ११

५ युगांतेवेदान् दैत्येननीतान् रसातलात् आनीय ब्रह्मणे ददौ तस्मै सत्यसंकल्पाय ते नमइत्यादिस्तुतिंकरोति ६ अथहरिवर्षे भगवान्नरहरिरूपेणास्ते तंप्रह्लादःतद्वर्षपुरुषैःसहउपास्ते ॐनमोभगवतेनृसिंहायेत्यादिमंत्रंजपति ७ ८ विश्वस्यस्वस्ति अस्तु नः मतिः अधोक्षजे प्राविशताम् ९ नः संगः भगवत्प्रियेषुभवतु १० तस्मात् नृसिंहपादंभजत इतिस्तुतिं करोति ११

मानसमलापगमफलमाह । यस्येति । अकिंचनानिष्कामा । मनःशुद्धोहरेर्भक्तिर्भवति । ततश्चतत्प्रसादेसतिसर्वेदेवाः सर्वैर्गुणैर्धर्मज्ञानादिभिः सहतत्रसम्यगासते नित्यंवसंति गृहाद्या
सक्तस्यतुहरिभक्त्यसंभवात्कुतोमहतांगुणाज्ञानवैराग्यादयोभवंति । असति विषयसुखेमनारथेनबहिर्धावतः १२ ननुहरिविमुखस्यगृहाद्यासक्तस्यापिलोकेमहत्त्वंदृश्यते । सत्यंदृश्यतेत
त्तूपहासास्पदमितिसहेतुकमाह । हरिर्हीति । यथाझषाणांमीनानांईप्सितंपरमप्रियंतोयमेवआत्मातेनविनाजीवनाभावात् ( तथाहरिर्हिशरीरिणांसाक्षादात्मा । तंहित्वा ) महानाति
प्रसिद्धोऽपिगृहेयदिसज्जतेतदा ( गृहेप्रसक्तनां ) दंपतीनांमिथुनानांशूद्रादिष्वपिप्रसिद्धंवयसैवकेवलंयन्महत्त्वंतदेवतस्यभवतिनतुज्ञानादिना । मिथुनेषुपूज्यमानेषुस्त्रीभ्यः पुंसांवयसामह
त्त्वंबालमिथुनेभ्यश्च ( शूद्रादिषु ) वृद्धमिथुनानां ( वयसा ) महत्त्वंयथातथेत्यर्थः १३ ( उपसंहरतितस्मादिति) यस्मादेवंतस्माद्गृहंहित्वाऽकुतोभयंनृसिंहपादंभजतेत्यसुरान्प्रत्युक्तिः ।
कीदृशंगृहम् । रजस्तृष्णा । रागोऽभिनिवेशः (स्पृहाइच्छा । आधिश्चिंता) रजआदीनांमूलंकारणम् । अतएवसंसृतीनांजन्ममरणादीनांचक्रवालंमंडलंआवृत्तिछेदोयस्मात् १४ केतुमा
लेपिकामदेवस्वरूपेणआस्तेइतिशेषः । किमर्थमास्तेअतआह । लक्ष्म्याइति । प्रजापतिः संवत्सरः । " संवत्सरोवैप्रजापतिः" इतिश्रुतेः । तस्यदुहितरोराज्यभिमानिन्योदेवताः ।
पुत्रादिवसाभिमानिनोदेवाः । तेषांचतद्वर्षपतीनांप्रियचिकीर्षया । पुरुषायुषावर्षशतेनयान्यहोरात्राणितैःपरिसंख्यानंगणनायेषांषट्त्रिंशत्सहस्राणामित्यर्थः यासांदुहितॄणांमहापुरु
षस्य ( हरः ) महास्त्रंचक्रंतस्यतेजसा ( उद्वेजितंमनोयासांतासांगर्भाः व्यसवोगतप्राणाः ) १५ रमांरमयन्स्वीयानींद्रियाणिरमयते । केनसाधनेनरमयन्तदाह । अतीवसुललितया
गत्यायोविलासस्तेनविलसितोरुचिरोहासलेशोमंदस्मितंतत्सहितोऽवलोकएवलीलातयाकिंचिदुत्तंभितंउत्तुंगितंसुंदरंयद्भ्रूमंडलंतेनसुभगंवदनारविंदंतस्यश्रिया १६ ( संवत्सरस्यरात्रि
षुप्रजापतेर्दुहितृभिः रात्र्यधिष्ठात्रीभिरुपेता अहःसु तासां ) तद्भर्तृभिर्दिवसाधिष्ठातृभिरुपेता १७ सर्वैर्गुणविशेषैः श्रेष्ठवस्तुभिर्विलक्षितोलक्षीकृतआत्मायस्य । आकूतीनांक्रियाणां
चित्तीनांज्ञानानांचेतसांसंकल्पाध्यवसायादीनांविशेषाणांतत्तद्विषयाणां । षोडशकलाअंशाएकादशेंद्रियपंचविषयलक्षणायस्य छंदोमयायवेदोक्तकर्मप्राप्याय अन्नमयायअन्नोपष्टम्भ
त्वात् अमृतमयायपरमानंदाविष्कारित्वात् । सर्वमयायसर्वविषयत्वात्सहसओजसेबलायतद्धेतुत्वात् । ( उभयत्रअंतर्बहिश्च ) १८

यस्यास्तिभक्तिर्भगवत्यकिंचनासर्वैर्गुणैस्तत्रसमासतेसुराः ॥हरावभक्तस्यकुतोमहद्गुणामनोरथेनासतिधावतोबहिः १२हरिर्हिसाक्षाद्भगवान्शरीरिणामात्मा
झषाणामिवतोयमीप्सितम् ॥ हित्वामहांस्तंयदिसज्जतेगृहेतदामहत्त्वंवयसादंपतीनाम् १३ तस्माद्रजोरागविषादमन्युमानस्पृहाभयदैन्याधिमूलम् ॥
हित्वागृहंसंसृतिचक्रवालंनृसिंहपादंभजताकुतोभयमिति १४ केतुमालेपिभगवान्कामदेवस्वरूपेणलक्ष्म्याःप्रियचिकीर्षयाप्रजापतेर्दुहितॄणांपुत्राणांतद्वर्षप
तीनांपुरुषायुषाहोरात्रपरिसंख्यानानांयासांगर्भामहापुरुषमहास्त्रतेजसोद्वेजितमनसांविध्वस्ताव्यसवःसंवत्सरांतेविनिपतंति १५ अतीवसुललितगति
विलासविलसितरुचिरहासलेशावलोकलीलयाकिंचिदुत्तंभितसुंदरभ्रूमंडलसुभगवदनारविंदश्रियारमांरमयन्निंद्रियाणिरमयते १६तद्भगवतोमायामयंरूपंप
रमसमाधियोगेनरमादेवीसंवत्सरस्यरात्रिषुप्रजापतेर्दुहितृभिरुपेताऽहस्सुचतद्भर्तृभिरुपास्तेइदंचोदाहरति १७ ॐह्रांह्रींह्रूंॐनमोभगवतेहृषीकेशायसर्व
गुणविशेषैर्विलक्षितात्मनेआकूतीनांचित्तीनांचेतसांविशेषाणांचाधिपतयेषोडशकलायछंदोमयायान्नमयायामृतमयायसर्वमयायसहसेओजसेबलायकांता
यकामायनमस्तेउभयत्रभूयात् १८

१२ १३ १४ केतुमाले भगवान् कामदेवरूपेण आस्ते तंरमादेवी उपास्ते १५ १६ १७ ॐह्रांह्रींह्रूं ॐनमो भगवते हृषीकेशायेत्यादिमंत्रंजपति १८

त्वत्कामेनैवत्वत्सेवकत्वादहंकृतार्थास्मि । अन्यकामनयातुत्वामर्चयंत्योनपरिपूर्णमनोरथाः स्युरित्याह । स्त्रियइति । स्वतएवहृषीकाणामीश्वरंपतिसंतंत्वामाराध्य याःस्त्रियोऽन्यंपतिंप्रार्थयंति पतिकामानांहिकामदेवाराधनंव्रतेषुप्रसिद्धं तासामपत्यादीनितेपतयोनपातुंशक्ताः १९ अतस्तेपतयएवनभवंतीत्याह । सवाइतिसचेत्वंभूतः पतिर्भर्तानेकएव । नान्यः ( यतःस्वयमकुतोभयः सन्भयातुरंपाति ) योभवान्आत्मलाभात्परमधिकंनमन्यतेइतरथाअन्याधीनसुखस्य ( पुंसो ) नस्वतंत्रता । स्वतंत्रनानात्वेचमंडलेश्वराणामिवमिथोभयंस्यादित्यर्थः २० किंच । निष्कामभजनेअप्रार्थिताएवसर्वकामाभवंति । सकामभजनेतुकामितमात्रंअनित्यंचेत्याह । यास्त्रीतस्यउक्तलक्षणस्यतेपादसरोरुहस्यार्हणंपूजामेवनितरांकामयेत नफलांतरं साअखिलेषुकामेषुलंपटा । सर्वान्कामान्प्राप्नोतीत्यर्थः ईप्सितमीप्सितः अभीप्सितंफलांतरमामुभपेक्षिन्रः सन्अर्चितश्चेत्तर्हितदेवकंरासिदशासि । किंच । यत्यतः फलभोगानंतरंभग्नायाश्चायाचितोर्थोयस्याः साप्रतप्यतेदुःखंप्राप्नोति तादृशमेवतद्दासिनतुनित्यम् २१ ननुममार्हणेकुतः सर्वकामप्राप्तिः यतस्त्वमेवहिकामार्थिभिः सेव्यसेअतआह । मत्प्राप्तयेब्रह्मादयस्तपस्तप्यंतेकुर्वंति । कथंभूताः ऐंद्रियेसुखेधीर्येषांते । अलुक्समासः । तथापिभवत्पादपरायणाद्दतेत्वच्चरणोपासकंविनामांनविंदंतिमत्कटाक्षविलसिताविभूतीर्नलभंतइत्यर्थः। यतस्त्वय्येवहृदयंयस्याः साऽहं । त्वत्परतंत्रत्वात्त्वदनुवर्तितमेवत्रिलोकयामिनान्यमित्यर्थः ( हेअजितस्वतंत्र) २२ इदानींकृपांप्रार्थयतेसत्त्वमिति । यद्भजनंविनानकश्चित्पुरुषार्थःसत्त्वं त्वदितित्वयायत्करांबुजंसात्वतांभक्तानां शीर्ष्णिअधायिकृपयान्यस्तं । तन्ममापिशीर्ष्णिनिधेहीतिशेषः । कथंभूतंवंदितंसर्वकामवर्षित्वेनसद्भिः स्तुतं । नचमयितवानादरः । यतः हेवरेण्यवरणीयमांवक्षसिलक्ष्मविभर्षि । अहोचित्रमेतत् मयिकेवलमादरमात्रंभक्तेषुतुपरमाकृपा । अतईश्वरस्यतवयत्माययाईहितंतत्कोवितर्कयितुंसमर्थः २३ ( मनोःवैवस्वतस्य) २४ सत्त्वायसत्वप्रधानायमुख्यतमायप्राणायसूत्रात्मने २५ उरुःस्वनोवेदात्मकोनादोयस्य यइदंविश्वंब्राह्मणादिनाम्नाविधिनिषेधालंबनभूतेनवशेअनयत्नियमितवान्सत्वमीश्वरः । तथाचश्रुतिः । "तस्यवाक्तंतिर्नामानिदामानि"इति २६

स्त्रियोव्रतैस्त्वाहृषिकेश्वरंस्वतोह्याराध्यलोकेपतिमाशासतेन्यम् ॥ तासांनतेवैपरिपांत्यपत्यंप्रियंधनायूंषियतोऽस्वतंत्राः १९ सवैपतिःस्यादकुतोभयःस्वयंसमंततःपातिभयातुरंजनम् ॥ सएकएवेतरथामिथोभयंनैवात्मलाभादधिमन्यतेपरम् २० यातस्यतेपादसरोरुहार्हणंनिकामयेत्साखिलकामलंपटा ॥ तदेवरासीप्सितमीप्सितोर्चितोयद्भग्नयाच्ञाभगवन्प्रतप्यते २१ मत्प्राप्तयेऽजेशसुरासुरादयस्तप्यंतउग्रंतपऐंद्रियेधियः ॥ ऋतेभवत्पादपरायणान्नमांविंदंत्यहंत्वद्धृदयायतोजित २२ सत्वंममाप्यच्युतशीर्ष्णिवंदितंकरांबुजंयत्त्वदधायिसात्वताम् ॥ बिभर्षिमांलक्ष्मवरेण्यमायया कईश्वरस्येहितमूहितुंविभुरिति २३ रम्यकेचभगवतःप्रियतमंमात्स्यमवताररूपंतद्वर्षपुरुषस्यमनोःप्राक्प्रदर्शितंसइदानीमपिमहताभक्तियोगेनाराधयतीदंचोदाहरति २४ ॐनमोभगवतेमुख्यतमायनमःसत्त्वायप्राणायौजसेसहसेबलायमहामत्स्यायनमइति २५ अंतर्बहिश्चाखिललोकपालकैरदृष्टरूपोविचरस्युरुस्वनः ॥ सईश्वरस्त्वंयइदंवशेऽनयन्नाम्नायथादारुमयींनरःस्त्रियम् २६

स्त्रियःत्वांव्रतैः आराध्यअन्यंपतिं प्रार्थयंति तत् व्यर्थम् १९ २० यतःअकुतोभयंभवति सएवपतिः प्रार्थ्यः एवंभूतस्त्वमेवासि हेईश्वरतवइच्छांज्ञातुंकः समर्थः इत्यादिस्तौति २१ २२ २३ रम्यकवर्षेमत्स्यरूपेणभगवान् आस्तेतं वैवस्वतमनुः आराधयति २४ ॐनमो भगवते मुख्यतमायेत्यादिजपति २५ भगवान्युगांतार्णवेइमां पृथ्वीं मयासहअपात् तस्मैमत्स्यायनमइत्यादिस्तौति २६

नन्विंद्रादयोवशंनयंति लोकपालत्वात् । कुतोहं । तत्राह । यमिति । मत्सरएवज्वरोयेषांते यं ( त्वां ) हित्वा ( पृथग्वासमेत्यवायतंतोपि ) द्विपदश्चतुष्पदःसरीसृपंजंगमंस्थाणुस्थावरं चयदत्रदृश्यतेतत्किंचिदपिपातुंनशक्ताः सःत्वमेवप्राणरूपेणपालकईश्वरश्चेत्यर्थः तथाचश्रुतिः"ताअहिंसंताइमुवयमस्म्यहमुक्थमस्मि"इत्यादि । २७ अवतारचरित्रमाह । भवानिद मांक्षोणीमयामनुनासहमत्स्यसहितांधृत्वेत्यध्याहारःऊर्मिमालावतिप्रलयार्णवेओजसा ( उरुअधिकं ) क्रमतेविचरति । यद्वापातुमित्यस्यानुषंगः । क्षोणींपातुंक्रमतेउत्सहतेइत्यर्थः । यतः अजः । कीदृशीं । ओषधीनांवीरुधांचलतादीनांनिधिंआश्रयभूताम् ( तत्सहितामित्यर्थः ) तस्मैनमः जगतोयः प्राणगणस्तस्यात्मनेनियंत्रे २८ तत्प्रियतमांतांप्रियतमाम् २९ अकूपारायकूर्माय । सर्वःसंपूर्णः सत्त्वगुणः ( शुद्धसत्त्वं ) विशेषणंयस्य । नउपलक्षितंस्थानंयस्यवारिचरत्वात् । वर्ष्मणेवर्षीयसेकालानवच्छिन्नाय । भूम्नेसर्वगताय अवस्थानायआधाराय ३० निजमाययार्पितंप्रकाशितमेतदर्थस्वरूपंदृश्यंपृथिव्यादि यस्यैवरूपं । यतः पृथङ्नास्ति । कथंभूतं बहुभिः रूपैरूपितंनिरूपितं । यस्यचसंख्यानास्ति । कुतः अयथामिथ्यात्वोपलंभनात् । नहिमरीचिजलमेतावदितिसंख्यातुंशक्यते । अव्यपदेशरूपिणेअनिरुक्तप्रपंचाकाराय ३१ बहुरूपत्वंदर्शयंस्तस्येश्वरादव्यतिरेकमाह । जरायुजेति । द्वीपग्रहर्क्षमित्यभिधेयस्त्वमेवैकः नत्वव्यतिरेकोस्ति । " सर्वंखल्विदंब्रह्म " इत्यादिश्रुतेरित्यर्थः । ३२ सप्रपंचतामनूद्यतन्निरासेनप्रणमतियस्मिन्निति । असंख्येयाअनंताविशेषायेषांतानिनामानिरूपाण्याकृतयश्चजातयोयस्यतादृशेयस्मिन्त्वयिकविभिः कपिलादिभिरियंचतुर्विंशत्यादिसंख्याकल्पितासतीयथातत्त्वदृशयेनतत्त्वज्ञानेन अपनीयतेतस्मैतसांख्यसिद्धांतरूपायनमः परमार्थज्ञानरूपायेतिवा ( यद्वाअसंख्येयाविशेषाव्यावर्तकधर्माः असंख्येयानिनामानिनारायणादीनिरूपाणिचशुक्लादीनि यस्यास्तादृशीआकृतिर्विग्रहोयस्यतथाविधेयस्मिन्त्वयि) ३३ एषाभूः ( कुरुभिस्तत्रत्यैः पुरुषैः सह ) उपधावतिहेत्यन्वयः ( उपनिषदंमंत्रंआवर्तयतिजपति ) ३४

**यंलोकपालाःकिलमत्सरज्वराहित्वायतंतोपिपृथक्समेत्यच ॥ पातुंनशेकुर्द्विपदश्चतुष्पदःसरीसृपंस्थाणुयदत्रदृश्यते २७ भवान्युगांतार्णवऊर्मिमालिनिक्षोणीमिमामोषधिवीरुधांनिधिम् ॥ मयासहोरुक्रमतेजओजसातस्मैजगत्प्राणगणात्मनेनमइति २८ हिरण्मयेपिभगवान्निवसतिकूर्मतनुंबिभ्राणस्तस्यतत्प्रियतमांतनुमर्यमासहवर्षपुरुषैःपितृगणाधिपतिरुपधावति ॥ मंत्रमिमंचानुजपति२९ ओंनमोभगवतेअकूपारायसर्वसत्त्वगुणविशेषणायनोपलक्षितस्थानाय नमोवर्ष्मणेनमोभूम्नेनमोनमोवस्थानायनमस्ते३० यद्रूपमेतन्निजमाययार्पितमर्थस्वरूपंबहुरूपरूपितम् ॥संख्यानयस्यास्त्ययथोपलंभनात्तस्मैनमस्तेव्यपदेशरूपिणे३१ जरायुजंस्वेदजमंडजोद्भिदंचराचरंदेवर्षिपितृभूतमैंद्रियम् ॥ द्यौःखंक्षितिःशैलसरित्समुद्रद्वीपग्रहर्क्षेत्यभिधेयएकः३२ यस्मिन्नसंख्येयविशेषनामरूपाकृतौकविभिःकल्पितेयम् ॥ संख्याययातत्त्वदृशाऽपनीयतेतस्मैनमःसांख्यनिदर्शनायतइति ३३ उत्तरेषुचकुरुषुभगवान्यज्ञपुरुषःकृतवराहरूपआस्तेतंतुदेवीहैषाभूःसहकुरुभिरस्खलितभक्तियोगेनोपधावतिइमांचपरमामुपनिषदमावर्तयति ३४**

२७ २८ तथाहिरण्मयवर्षे भगवान् कूर्मरूपेण आस्ते तंपितृगणाधिपतिः अर्यमाउपास्ते २९ ३० ओंनमो भगवते अकूपारायेत्यादिमंत्रंजपति ३१ इदंसर्वंचराचरं ब्रह्मांडसहितं त्वव्यतिरिक्तंनास्ति ३२ यस्मिन् त्वयिकविभिः इदंनामरूपंभेदेनबहुधाकल्पितम् तत्त्वदृष्टयाएकमेव एवंभूतायसांख्यनिदर्शनायते नमइत्यादि स्तौति ३३ तथा उत्तरेषु कुरुषु भगवान् वराहरूपेण आस्ते तं पृथ्वीदेवी भक्त्या उपधावति ३४

मंत्रैस्तत्त्वेनर्लिग्यतइतितथातस्मै । यज्ञा अयूपाः क्रतवः सयूपाः तद्रूपाय । अतएवमहांतोऽध्वराअवयवभूतायस्य । कर्मणाशुक्लायशुद्धाय । यज्ञानुष्ठात्रे । त्रियुगाय कृतयुगे यज्ञाभावा त् । यद्वा । कलियुगेछन्नत्वात् ३५ कवयोविद्वांसः विपश्चितोनिपुणाः गुणेषुदेहेंद्रियादिषुमथ्नंतिविविचिन्वंतिमथ्नाविवेकसाधनेनमनसा । क्रियार्थैः कर्मभिस्तत्फलैश्चगूढंअप्रकाशमानं दिदृक्षवः । एवंमंथनेईरितःप्रकटितः आत्मस्वरूपंयस्यतस्मैनमः ३६ मथनमेवदर्शयन्नाह । द्रव्यंविषयः क्रियाइंद्रियव्यापारः हेतुर्देवता अयनंदेहः ईशः कालः कर्ताअहंकारः एतैर्मा यायागुणैः कार्यैरुपलक्षणैर्वस्तुनावस्तुत्वेननिरीक्षितोयआत्मातस्मै । अन्वीक्षयाविचारेणअंगैर्यमनियमादिभिः अतिशयात्मानिश्चयवतीबुद्धिर्येषांतैः निरस्तामायानिमित्ताआकृतिर्य स्मात्तस्मै ३७ तदेवंनिर्गुणरूपेणनत्वापरमेश्वररूपेणप्रणमति करोतीति । यस्येक्षितुः ( सर्गादावालोचयितुः परमेश्वरस्यईप्सितं ) जीवार्थमिष्टअत्यंतानिच्छायामीक्षणायोगात् । स्वार्थंतुनेप्सितम् ( एतादृशम् ) विश्वस्थित्यादिस्वगुणैर्मायाकरोति । तस्याः जडत्वेपीश्वरसंनिधानात्प्रवृत्तिंदृष्टांतेनाह । यथाअयोलोहंग्रावणोअयस्कांतात्निमित्तात्भ्रमतितदाप्रपं तदाभिमुख्यंसत् । गुणानांकर्मणांजीवादृष्टानांचसाक्षिणेतस्मैनमः । ३८ अवतारचरितमाह प्रमथ्येति । योजगतामादिः कारणभूतः सूकरः मांपृथ्वींअग्रदंष्ट्रदंष्ट्राग्रेकृत्वा ( निधाय ) रसातलादारभ्यउदन्वतः प्रलयार्णवात्इभोगजइवनिरगात् । ततश्चप्रतिगजतुल्यंदैत्यंप्रमथ्य यः क्रीडन्नास्थितः तंविभुंप्रणतास्मीत्यन्वयः ३९ । ॥ इतिपंचमस्कंधटीकायांअष्टादशो ध्यायः ॥ १८ ॥ ॥ छ ॥ ॥ ऊनविंशेकिंपुरुषेभारतेचोपवर्ण्यते ॥ सेव्यसेवकभावश्चभारतश्रैष्ठ्यमेवच ॥ १ ॥ १ भर्ताचासौभगवांश्चतस्यकथां २

ॐनमोभगवतेमंत्रतत्त्वलिंगाययज्ञक्रतवेमहाध्वरावयवायमहापुरुषायनमःकर्मशुक्लायात्रियुगायनमस्ते ३५ यस्यस्वरूपंकवयोविपश्चितोगुणेषुदारुष्विवजा तवेदसम् ॥ मथ्नंतिमथ्नामनसादिदृक्षवोगूढंक्रियार्थैर्नमईरितात्मने ३६ द्रव्यक्रियाहेत्वयनेशकर्तृभिर्मायागुणैर्वस्तुनिरीक्षितात्मने ॥ अन्वीक्षयांगातिशया त्मबुद्धिभिर्निरस्तमायाकृतयेनमोनमः ३७ करोतिविश्वस्थितिसंयमोदयंयस्येप्सितंनेप्सितमीक्षितुर्गुणैः ॥ मायायथाऽयोभ्रमतेतदाश्रयंग्राव्णोनमस्तेगुणक र्मसाक्षिणे ३८ प्रमथ्यदैत्यंप्रतिवारणंमृधेयोमांरसायाजगदादिसूकरः ॥ कृत्वाग्रदंष्ट्रेनिरगादुदन्वतःक्रीडन्निवेभःप्रणतास्मितंविभुमिति ३९ ॥ इतिश्री भा०म०पं०भुवनकोशवर्णनंनामाष्टादशोध्यायः ॥ १८ ॥ ॥ श्रीशुकउवाच ॥ ॥ किंपुरुषेवर्षेभगवंतमादिपुरुषंलक्ष्मणाग्रजंसीताभिरामं श्रीरामंतच्चरणसन्निकर्षाभिरतःपरमभागवतोहनुमान्सहकिंपुरुषैरविरतभक्तिरुपास्ते १ आर्ष्टिषेणेनसहगंधर्वैरनुगीयमानांपरमकल्याणींभर्तृभगवत्कथां समुपशृणोतिस्वयंचेदंगायति २

ॐनमो भगवते मंत्रतत्वलिंगाययज्ञक्रतवेनमइत्यादिजपति यस्यतव स्वरूपं कवयः अग्निरिवमथित्वा जानंति ३६ ३७ ३८ किंच युद्धे हिरण्याक्षंमथित्वामांदंष्ट्राग्रे धृत्वारसातलात्यः निरगात् तंविभुं प्रणतास्मि ३९ इतिपंचमेऽष्टादशः ॥ १८ ॥ ॥ श्रीशुकउवाच ॥ ॥ अथकिंपुरुषेवर्षे भगवान् श्रीरामचंद्ररूपेणास्ते तं हनुमानुपास्ते १ ॐनमो भगवते उत्तमश्लोकायेत्यादिजपति २

।णिश्रेष्ठानिलक्षणानिशीलंव्रतंचयस्मिन् । उपाशिक्षितात्मनेसंयतचित्ताय । उपासितोऽनुसृतोलोकोयेन । साधुवादःसाधुत्वप्रसिद्धिः तस्यनिकषणायनिकषाश्मवन्निर्धारस्थाना
आयासीम्नेइत्यर्थः ३ श्रीरामंपरमार्थरूपेणप्रणमति । यदेकंवेदांतेषुप्रसिद्धंतत्त्वंतत्प्रपद्ये । कथंभूतम् । विशुद्धश्चासावनुभवश्चसएवमात्रास्वरूपंयस्य । विशुद्धत्वेहेतुः प्रशांतं
यपरम्ः स्वतेजसास्वरूपप्रकाशेनध्वस्ताःगुणानांविविधाजाग्रदाद्यवस्थायस्मिन् अनुभवमात्रत्वेहेतुः प्रत्यक्दृश्यादन्यत्तत्कुतः अनामरूपं ननुत्वस्तुतएवंभूतस्यापिजीवस्योक्तसर्ववि
तत्रेहःदृश्यतेतत्राह । अहंकाराभावान्नतथाविपरीत्यमित्यर्थः ननुश्रीरामस्यरूपंनैवंप्रतीयतेतत्राह । सुधियापुंसाउपलभ्यतइत्युपलंभनंशुद्धचित्तेनपुरुषेणब्रह्मत्वेनैवोपलभ्यतइत्यर्थः ४
पर्यर्तर्हिदशरथपुत्रत्वंतत्राह । विभोर्मर्त्यावतारस्तुरक्षसोरावणस्यवधायतस्यमनुष्यादन्यतोऽवध्यत्वात्नकेवलमेतावत् । किंतुइहसंसारेस्त्रीसंगादिकृतंदुःखंदुर्वारमितिमर्त्यानांशिक्ष
णंचशिक्षार्थमपीत्यर्थः । अन्यथास्वेस्वरूपेरममाणस्यजगदात्मनः सीताविरहकृतानिव्यसनानीतियत्तत्कुतः स्यात् । ५ विषयासक्त्यभावेनव्यसनानर्हत्वमुपपादयति । नवैसभग
वान्त्रिलोक्यांकापिसक्तः यतआत्मवतांधीराणामात्मासुहृत्तमश्चअतोनस्त्रीकृतंकश्मलंमोहंप्राप्नुयात् । नलक्ष्मणंचेति। देवदूतेनश्रीरामंसंमंत्रयताविज्ञापितं ‘अत्रागतस्त्वयावध्यः’इति
तदेवद्वारिस्थितंलक्ष्मणंदुर्वाससमागतंविज्ञापयितुंप्रविष्टंहंतुंप्रद्युतोवसिष्ठवाक्यात्तत्याजतच्चनयुज्येतेत्यर्थः ६ अतः श्रीरामएवसर्वैः सेव्यइतिवक्तुंनतस्यतोषहेतुः सत्कुलजन्मादि किंतु
भक्तिरेवेत्याह । नजन्मेति । महतः पुरुषाज्जन्म । महतः श्रीरामस्येतिवा । सौभगंसौंदर्यंआकृतिर्जातिः । यद्यस्मात्तैर्जन्मादिभिर्विसृष्टानृत्यक्तानपिनो(ऽस्मान्)वनचरान्बतअहोल
क्ष्मणस्याग्रजोपिसखित्वेकृतवान् । ७ तस्मात्सुरोवाअन्योवाय: कोपिश्रीराममेवसर्वप्रकारेणभजेत् सुकृतज्ञं ( सुतरांकृतमितिजानातीतितथातम् ) अल्पीयस्यपिमजनेबहुमानिन
( मनुष्याकारं य) उत्तरान्कोशलान्अयोध्यावासिनः ( दिवंस्वर्गंवैकुंठमित्यर्थः ) ८ उपचितैः ऊर्द्धधर्मादिभिरात्मोपलभ्यतेयेनतत्तपश्चरति । तत्रोपशमः इंद्रियाणांसंयमः ।
उपरमोनिरहंकारता । आत्मवतां ( वशीकृतमनसां ) अनुग्रहाय न स्वार्थं ईश्वरत्वात् ९

ॐनमोभगवतेउत्तमश्लोकायनमआर्यलक्षणशीलव्रतायनमउपाशिक्षितात्मनेउपासितलोकायनमःसाधुवादनिकषणायनमोब्रह्मण्यदेवायमहापुरुषायमहारा
जायनमइति ३ यत्तद्विशुद्धानुभवमात्रमेकंस्वतेजसाध्वस्तगुणव्यवस्थम्॥ प्रत्यक्प्रशांतंसुधियोपलंभनंह्यनामरूपंनिरहंप्रपद्ये ४ मर्त्यावतारस्त्विहमर्त्य
शिक्षणंरक्षोवधायैवनकेवलंविभोः ॥ कुतोन्यथास्याद्रमतःस्वआत्मनःसीताकृतानिव्यसनानीश्वरस्य ५ नवैसआत्मात्मवतांसुहृत्तमःसक्तस्त्रिलोक्यांभग
वान्वासुदेवः ॥ नस्त्रीकृतंकश्मलमश्नुवीतनलक्ष्मणंचापिविहातुमर्हति ६ नजन्मनूनंमहतोनसौभगंनवाङ्नबुद्धिर्नाकृतिस्तोषहेतुः ॥ तैर्यद्विसृष्टानपिनो
वनौकसश्चकारसख्येबतलक्ष्मणाग्रजः ७ सुरोऽसुरोवाप्यथवानरोनरःसर्वात्मनायःसुकृतज्ञमुत्तमम् ॥ भजेतरामंमनुजाकृतिंहरिंयउत्तराननयत्कोशला
न्दिवमिति ८ भारतेपिवर्षेभगवान्नरनारायणाख्यआकल्पांतमुपचितधर्मज्ञानवैराग्यैश्वर्योपशमोपरमात्मोपलंभनमनुग्रहायात्मवतामनुकंपयातपोऽ
व्यक्तगतिश्चरति ९

३ यत् एकंवेदांतेषु प्रसिद्धं अनामरूपं तत्त्वं अहं प्रपद्ये ४ ५ ६ ७ किंच अयोध्यावासिनः जनान् यःस्वर्गंनिनाय तं मनुजाकृतिं रामं भजे इत्यादिस्तौति ८
तथाभारतेऽपिवर्षे भगवान् नरनारायणाख्यः आस्ते आत्मवतां अनुग्रहाय तपश्चरति ९

( सांख्ययोगाभ्यांज्ञानतत्साधनाभ्याम् ) भगवदनुभावउपवर्ण्यतेयेनपं चरात्रेणतत्सावर्णेर्मनोरुपदेक्ष्यन्नुउपसरति सेवते १० उपरतानात्म्यायनिरहंकाराय ( अकिंचनानिष्कामभक्ता
पवर्गीयस्यऋषिश्रेष्ठाय) ११ असक्तश्चासौविविक्तश्चसाक्षीचतस्मैनमः असक्तत्वंदर्शयति । अस्यविश्वस्यसर्गादिषुकर्तापियोनबध्यतेअहंकर्तेतिनमन्यते । विविक्तत्वमाह । देहगतो
पिदैहिकैः क्षुत्पिपासादिभिर्योनहन्यतेनाभिभूयते । साक्षित्वमाह । यस्यद्रष्टुरपिसतोदृष्टिगुणैर्दृश्यैर्नदूष्यते नाविक्रियते १२ योगकौशलंनिरूपयन्योगंप्रार्थयतेइदामितित्रिभिः । हेयोगे
श्वरहिरण्यगर्भोयत्योगनैपुणजगाद तदिदमेव । किंतत् जन्मप्रभृतिभक्त्या अंतकालेपुमांस्त्वयिमनोधारयेदितियत् कथंभूतः सन् । उज्झितं ( त्यक्तं ) दुष्कलेवरंतदभिमानोयेन १३
अन्यथातस्यशास्त्राभ्यासादिश्रमोऽनर्थइत्याह । ऐहिकामुष्मिककामेषुलंपटोमूर्खः सुतादिषुयोगक्षेमंचिंतयन्कुत्सितस्यकलेवरस्यअत्ययान्मृत्योः शंकतेतथाविद्वानपिसन्यः शंकेततस्य
यत्नःशास्त्रश्रवणादिः श्रमएव(केवलम्) १४ यस्माद्विदुषोपीयमेवदशा ततस्मात्हेप्रभो अधोक्षजत्वमेवनोऽस्मभ्यंयोगंविधेहि कीदृशंत्वायेस्वभावंसहजवासनारूपंयेनयोगेनवयंत्वन्मा
यया नःकुकलेवरेअर्पितांअहंममतांशीघ्रंभिद्यात्यजेम । सुदुर्भिदांउपायांतरैःसर्वथात्यक्तुमशक्याम् १५ इलावृतवदस्मिन्नपिवर्षेसरितः शैलाश्चसंति । नितंबप्रभवाःतटेभ्यः संभूताः १६

तंभगवान्नारदोवर्णाश्रमवतीभिर्भारतीभिःप्रजाभिर्भगवत्प्रोक्ताभ्यांसांख्ययोगाभ्यांभगवदनुभावोपवर्णनंसावर्णेरुपदेक्ष्यमाणःपरमभक्तिभावेनोपसरतिइदंचा
भिगृणाति १० ॐ नमोभगवतेउपशमशीलायोपरतानात्म्यायनमोऽकिंचनवित्तायऋषिऋषभायनरनारायणायपरमहंसपरमगुरवेआत्मारामायाधिपत
येनमोनमइति ११ गायतिचेदं ॥ कर्तास्यसर्गादिषुयोनबध्यतेनहन्यतेदेहगतोपिदैहिकैः ॥ द्रष्टुर्नदृग्यस्यगुणैर्विदूष्यतेतस्मैनमोऽसक्तविविक्तसाक्षिणे १२
इदंहियोगेश्वरयोगनैपुणंहिरण्यगर्भोभगवान्जगादयत् ॥ यदंतकालेत्वयिनिर्गुणेमनोभक्त्यादधीतोज्झितदुष्कलेवरः १३ यथैहिकामुष्मिककामलंपटःसुते
षुदारेषुधनेषुचिंतयन् ॥ शंकेतविद्वान्कुकलेवरात्ययाद्यस्तस्ययत्नःश्रमएवकेवलम् १४ तन्नःप्रभोत्वंकुकलेवरार्पितांत्वन्माययाहंममतामधोक्षज ॥ भिंद्याम
येनाशुवयंसुदुर्भिदांविधेहियोगंत्वयिनःस्वभावमिति १५ भारतेप्यस्मिन्वर्षेसरिच्छैलाःसंतिबहवोमलयोमंगलप्रस्थोमैनाकस्त्रिकूटऋषभःकूटकःकोल्लकः
सह्योदेवगिरिर्ऋष्यमूकःश्रीशैलोवेंकटोमहेंद्रोवारिधारोविंध्यः शुक्तिमानृक्षगिरिःपारियात्रोद्रोणश्चित्रकूटोगोवर्धनोरैवतकःककुभोनीलोगोकामुखइंद्रकीलः
कामगिरिरितिचान्येचशतसहस्रशःशैलास्तेषांनितंबप्रभवानदानद्यश्चसंत्यसंख्याताः १६

तंभगवान्नारदः भारतीभिः प्रजाभिः सहसेवते १० ॐनमो भगवते उपशमशीलायेत्यादिजपति ११ यःविश्वस्य सर्गादिषुकर्तापि अहंकर्ता इति न मन्यते किंच
देहगतोपि क्षुधादिभिर्न हन्यते तस्मैनमः १२ हेप्रभोत्वयि नः योगंविधेहीत्यादि स्तौति १३ १४ १५ अस्मिन्वर्षे बहवः सरिच्छैलाः संति ते च मलयः १ मंगलप्रस्थः
२ मैनाकः ३ त्रिकूटः ४ ऋषभः ५ कूटकः ६ कोल्लकः ७ सह्यः ८ देवगिरिः ९ ऋष्यमूकः १० श्रीशैलः ११ वेंकटः १२ महेंद्रः १३ वारिधारः १४ विंध्यः
१५ शुक्तिमान् १६ ऋष्यगिरिः १७ पारियात्रः १८ द्रोणः १९ चित्रकूटः २० गोवर्धनः २१ रैवतकः २२ ककुभः २३ नीलः २४ गोकामुखः २५ इंद्रकीलः
२६ कामगिरिरिति २७ अन्येशतशः सहस्रशः शैलाः तेषांनितंबप्रभवाःनदाः नद्यश्चअसंख्याताः १६

आत्मनाचदेहेनाप्युपस्पृशंति १७ १८ लब्धंजन्मयैस्तैः पुरुषैः सात्त्विकादिनास्वकृतेनकर्मणादिव्यादिगतयआत्मनोविधीयंतेसाध्यंतेहियस्मात्सर्वाएवगतयः कर्मानुसारेणसर्वेषांभ
वंति । यस्यवर्णस्ययद्विधानंमोक्षप्रकारः संन्यासवमस्थत्वादि तदनतिक्रमेणास्मिन्नेववर्षेनृणांअपवर्गश्चमोक्षोभवति । एतच्चकर्मादिबहुसाधनसंभवाभिप्रायेणोक्तं नत्वन्यत्रापवर्गाभावे
न । तदुपर्यपिबादरायणःसंभवादिति देवानामपिमोक्षस्यसूत्रितत्वात् । १९ अपवर्गस्वरूपमाह योसाविति । अनात्म्ये आत्मनिभवमात्म्यंरागादितद्राहितेअनिरुक्तेवाचामगोचरेअ
निलयनेअनाधारेअनन्यनिमित्तोअहैतुकोभक्तियोगएवलक्षणंस्वरूपंयस्य । कथंभवति । नानागतीनांनिमित्तंयोअविद्याग्रंथिः तस्यरंधनंछेदनंतद्द्वारेणमहापुरुषपुरुषाः विष्णुभक्ताः तैः
प्रकटः संयोगोयदाभवतितदा २० एतदेवमानुष्यमेवसर्वपुरुषार्थसाधनंमायंति । ( अहो ) अमीषांप्राभिरित्यर्थः उतस्वित् अथवास्वयमेवसाधनंविनैवहरिरेषांप्रसन्नोभूत् । एवंभूतस्य
पुण्यस्यदुष्करत्वात् । भारताजिरेभारतप्रांगणे । नः केवलंस्पृहैवयत्रतत्नृषुजन्ममुकुंदसेवोपयोगि यैर्लब्धम् २१ स्पृहामेवाह किमित्यादिसप्तभिः । दुष्करैः (प्रयाससाध्यैः)क्रत्वादिभिः
नःफल्गुनातुच्छेनद्युजयेनस्वर्गप्राप्त्याकिं । नकिंचिदपिफलमित्यर्थः । कुतः । यत्रनारायणपादपंकजस्मृतिर्नभवति । प्रत्युत अतिशयितादिंद्रियाणामुत्सवात्भोगात्प्रमुष्टाभूत् २२

एतासामपोभारत्यःप्रजानामभिरेवपुनंतीनामात्मनाचोपस्पृशंति १७ चंद्रवशाताम्रपर्णीअवटोदाकृतमालावैहायसीकावेरीवेणीपयस्विनीशर्करावर्तातुंग
भद्राकृष्णावेणाभीमरथीगोदावरीनिर्विंध्यापयोष्णीतापीरेवासुरसानर्मदाचर्मण्वतीसिंधुरंधःशोणश्चनदौमहानदीवेदस्मृतिर्ऋषिकुल्यात्रिसामाकौशिकीमं
दाकिनीयमुनासरस्वतीदृषद्वतीगोमतीसरयूरोधस्वतीसत्यवतीसुषोमाशतद्रूश्चंद्रभागामरुद्वृधावितस्ताअसिक्नीविश्वेतिमहानद्यः १८अस्मिन्नेववर्षेपुरुषैर्ल
ब्धजन्मभिःशुक्ललोहितकृष्णवर्णेनस्वारब्धेनकर्मणादिव्यमानुषनारकगतयोबह्व्यआत्मनआनुपूर्व्येणसर्वाह्येवसर्वेषांविधीयंतेयथावर्णविधानमपवर्गश्चापि
भवति १९ योसौभगवतिसर्वभूतात्मन्यनात्म्येऽनिरुक्तेनिलयनेपरमात्मनिवासुदेवेऽनन्यनिमित्तभक्तियोगलक्षणोनानागतिनिमित्ताविद्याग्रंथिरंधनद्वारे
णयदाहिमहापुरुषपुरुषप्रसंगः २० एतदेवहिदेवागायंति अहोअमीषांकिमकारिशोभनंप्रसन्नएषांस्विदुतस्वयंहरिः ॥ यैर्जन्मलब्धंनृषुभारताजिरेमुकुंदसे
वौपयिकंस्पृहाहिनः २१ किंदुष्करैर्नःक्रतुभिस्तपोव्रतैर्दानादिभिर्वाद्युजयेनफल्गुना ॥ नयत्रनारायणपादपंकजस्मृतिःप्रमुष्टातिशयेंद्रियोत्सवात् २२

तत्रमहानद्यः चंद्रवशा १ ताम्रपर्णी २ अवटोदा ३ कृतमाला ४ वैहायसी ५ कावेरी ६ वेणी ७ पयस्विनी ८ शर्करावर्ता ९ तुंगभद्रा १० कृष्णा ११ वेणा १२ भीमरथी
१३ गोदावरी १४ निर्विंध्या १५ पयोष्णी १६ तापी १७ रेवा १८ सुरसा १९ नर्मदा २० चर्मण्वती २१ सिंधुः अंधशोणौनदौ २२ महानदी २३ वेदस्मृती २४ ऋषिकुल्या
२५ त्रिसामा २६ कौशिकी २७ मंदाकिनी २८ यमुना २९ सरस्वती ३० दृषद्वती ३१ गोमती ३२ शरयू ३३ रोधस्वती ३४ सत्यवती ३५ सुषोमा ३६ शतद्रूः ३७ ॥३८॥
चंद्रभागा ३८ मरुद्वृधा ३९ वितस्ता ४० असिक्नी ४१ विश्वा ४२ इतिमहानद्यः १७ १८ अस्मिन्वर्षेजनैः कृतकर्मणादिव्यमानुषनारकगतयोमोक्षश्च भवति १९ २०
स्वर्गेदेवाः एतद्गायंति अहोएभिर्जनैः किंसुकृतंकृतं एषां हरिः स्वयंप्रसन्नोभवति २१ नः दुष्करैः क्रतुतपआदिभिः किम् यत्रनारायणपादस्मृतिर्नः न २२

( कल्पायुषांयत्स्थानंमहर्लोकादितज्जयात् अत्रकल्पायुःशब्देनमहरादिलोकस्थाउच्यंते । यद्वा कल्पायुषां नः स्थानजयातस्वर्गजयात् ) क्षणमल्पमेवायुर्येषांतेषाम् ( भारतभुवां योजयः सवरंश्रेष्ठइत्यर्थः । ) श्रेष्ठत्वेहेतुः मर्त्येनापिदेहेनक्षणेनैवकालेनकृतंकर्मसंन्यस्यहरेः पदंसम्यग्यांति ( कल्पायुषांनिकृष्टत्वेहेतुः पुनर्भवादिति ) २३ अतः यत्रवैकुंठकथामृतनद्योनसंतितदाश्रयाः कथापगाश्रयाः महांउत्सवाःनृत्याद्युत्सवायेषुतादृशायज्ञेशस्यमखाश्चपूजारूपाः समुरेशस्यब्रह्मणोपिलोकोनसेव्यताम् २४ अमुमुक्षून्नरान् निंदतिप्राप्ताइति । ज्ञानंचतदर्थाः क्रियाश्चतदर्थानिद्रव्याणिचतेषांकलापेनसंभृतांपूर्णां ( नृजातिंनृजन्मइहभारते ) अपुनर्भवायमोक्षाय । वनौकाइववनौकसः पक्षिणोयथालुब्धकान्मुक्ताअपिपुनर्यदितस्मिन्नेववृक्षेप्रवृत्ताविहरंतितार्हियथाबध्यंतेतद्वत् २५ अहोभारतवासिनांभाग्यमित्याहुः । येरिति । अग्नयेजुष्टंनिर्वपामिइंद्रायजुष्टंनिर्वपामिइत्येवंभागशः बर्हिषियज्ञेनिरुप्तंदत्तंयत्कृतम् । कथं । विधिनाप्रकारेणमंत्रेणचवस्तुतश्चरुपुरोडाशादिभेदेनइष्टंदेवतामुद्दिश्यत्यक्तं । निरुप्तंच ममेदमितिस्वीकृत्यत्यागानंतरमश्नातीत्यर्थः ( विधिमंत्राणामिंद्रादिविषयत्वेनसिद्धत्वात्कथंहरिर्गृह्णातीत्युच्यतेतत्राह । नामभिरिति ) इंद्रादिनामभिः पृथगाहुतः आहूतोपिआशिषांप्रभुः ( स्वयंएकः ) स्वयंपूर्णोपिहरि-(र्गृह्णातियतः श्रद्धयानिरुप्तं । तथाचस्मृतिः । 'येप्यन्यदेवताभक्तायजंतेश्रद्धयान्विताः । तेपिमामेवकौंतेययजंति'इत्यादि ) २६ तत्रापिनिष्कामाः कृतार्थाइत्याहुः सत्यमिति प्रार्थितःसन्नर्थितंददातीतिसत्यंअथापिपरमार्थदोनभवत्येव । यद्यस्माद्यतोदत्तादनंतरंपुनरप्यर्थिताभवतिननुनार्थितश्चेत्किमपिनदद्यादित्याशंक्याह । अनिच्छतांनिष्कामानांतुइच्छानांपिधानंआच्छादकं सर्वकामपरिपूरकंनिजपादपल्लवंस्वयमेवसंपादयाति २७ स्विष्टस्यसम्यग्यजनस्य सूक्तस्यप्रवचनस्यकृतस्यअन्यस्यापिकर्मणः स्वर्गसुखादुपभुक्तादवशेषितंशोभनंपुण्यंयदिकिंचिदस्तितेन आजनाभेभारतेवर्षे नोऽस्माकंजन्मस्यात् । कीदृशंस्मृतिमत् हरिरेवसेव्यइत्यनुसंधानयुक्तम् । यतोहरिर्भजतां शंसुखंतनोति २८ २९

कल्पायुषांस्थानजयात्पुनर्भवात्क्षणायुषांभारतभूजयोवरम् ॥ क्षणेनमर्त्येनकृतंमनास्विनःसंन्यस्यसंयांत्यभयंपदंहरेः २३ नयत्रवैकुंठकथासुधापगानसाधवोभागवतास्तदाश्रयाः ॥ नयत्रयज्ञेशमखामहोत्सवाःसुरेशलोकोपिनवैससेव्यताम् २४ प्राप्तानृजातिंत्विहयेचजंतवोज्ञानक्रियाद्रव्यकलापसंभृताम् ॥ नवैयतेरन्नपुनर्भवायतेभूयोवनौकाइवयांतिबंधनम् २५यैःश्रद्धयाबर्हिषिभागशोहविर्निरुप्तमिष्टंविधिमंत्रवस्तुतः ॥ एकःपृथङ्नामभिराहुतोमुदागृह्णातिपूर्णःस्वयमाशिषांप्रभुः २६ सत्यंदिशत्यर्थितमर्थितोनृणांनैवार्थदोयत्पुनरर्थितायतः ॥ स्वयंविधत्तेभजतामनिच्छतामिच्छापिधानंनिजपादपल्लवम् २७ यद्यत्रनःस्वर्गसुखावशेषितंस्विष्टस्यसूक्तस्यकृतस्यशोभनम् ॥ तेनाजनाभेस्मृतिमज्जन्मनःस्याद्वर्षेहरिर्यद्भजतांशंतनोति २८ ॥ ॥ श्रीशुकउवाच ॥ जंबूद्वीपस्यचराजन्नुपद्वीपानष्टौहैकउपदिशंतिसगरात्मजैरश्वान्वेषणइमांमहींपरितोनिखनद्भिरुपकल्पितान् २९

कल्पायुषामपिपुनर्भवात् भारतेवर्षेतत्क्षणायुषोवरम् यतः क्षणात्सर्वंत्यक्त्वाहरेःपदंयांति २३ अयंइंद्रलोकोपिनसेव्यताम् कुतः यत्रविष्णुकथान २४ भारतेनृजातिंप्राप्य येमोक्षाय नयतेरन् ते बंधनंयांति २५ नः स्वर्गसुखावशेषितं पुण्यंचेत् तर्हिभारते खंडे जन्मास्तु यत्रहरिःभजतांशंतनोति २६ २७ २८ ॥ ॥ श्रीशुकउवाच ॥ हेराजन्जंबूद्वीपस्य अष्टौ उपद्वीपानि सगरात्मजैः अश्वान्वेषणेपृथ्वींखनद्भिः कल्पितानि २९

३० ( हेभारतोत्तमपारीक्षित ) ३१ इतिपंचमस्कंधेटीकायांएकोनविंशोऽध्यायः ॥ १९ ॥ विंशेप्लक्षादिषड्द्वीपस्थितिमाहसहार्णवैः । लोकालोकस्थितिंचांतर्बहिर्भागादिमानतः ॥ १ ॥
( प्रमाणमियत्ता । लक्षणंचिह्नं । संस्थानंसन्निवेशः ) १ तावताक्षारोदयोजनविस्तारेणपरिक्षिप्तः परितोवेष्टितः । ( यथामेरुर्जंबूद्वीपेनपरिवेष्टितस्तथा । एवंलवणोदधिरपिद्विलक्षवि
स्तारेणप्लक्षद्वीपेनपरिक्षिप्तः परिवेष्टितः । यत्रद्वीपे प्लक्षोवृक्षविशेषउत्थितः । जंबूप्रमाणः अधिसहस्रयोजनप्रमाणः ) उपास्तेतिष्ठति । आकलय्यसमर्प्य २ अभिज्ञाताः प्रसिद्धाः
सप्तैव । अन्येपर्वतानद्यश्चसहस्रशः संतीत्यर्थः । मानसोत्तरस्यमंडलाकारत्वोक्तेरेतेषुप्लक्षादिषड्द्वीपेषुवर्षाद्रयस्तिर्यग्रेखाकाराउभयतोऽब्धिस्पृशइतिगम्यते अन्यथासप्तभिः
सप्तवर्षविभागासंभवात् । वैष्णवेवर्षाणांपूर्वादिक्रमोक्तेश्च । ३ ( सेतुशैलामर्यादागिरयः ) जलोपस्पर्शनेनविधूतंरजस्तमश्चयेषाम् । हंसादयोब्राह्मणादिस्थानीयाः वर्णाः । विबुधो
पमंसंदर्शनंक्लमस्वेदादिरहितंरूपंप्रजननंअपत्योत्पादनंचयेषाम् ४

तद्यथास्वर्णप्रस्थश्चंद्रशुक्लआवर्तनोरमणकोमंदरहरिणःपांचजन्यःसिंहलोलंकेति ३० एवंतवभारतोत्तमजंबूद्वीपवर्षविभागोयथोपदेशमुपवर्णितइति ३१
इतिश्री भा०म०पं०स्कंधेजंबूद्वीपवर्णनंनामएकोनविंशतितमोध्यायः ॥ १९ ॥ श्रीशुकउवाच ॥ ॥ अतःपरंप्लक्षादीनांप्रमाणलक्षणसंस्थानतोवर्षवि
भागउपवर्ण्यते १ जंबूद्वीपोयंयावत्प्रमाणविस्तारस्तावताक्षारोदधिनापरिवेष्टितोयथामेरुर्जंब्वाख्येनलवणोदधिरपिततोद्विगुणविशालेनप्लक्षाख्येनपरि
क्षिप्तोयथापरिखाबाह्योपवनेनप्लक्षोजंबूप्रमाणोद्वीपाख्याकरोहिरण्मयउत्थितोयत्राग्निरुपास्तेसप्तजिह्वस्तस्याधिपतिः प्रियव्रतात्मजइध्मजिह्वः स्वंद्वीपं
सप्तवर्षाणिविभज्यसप्तवर्षनामभ्यआत्मजेभ्यआकलय्यस्वयमात्मयोगेनोपरराम २ शिवंयशस्यंसुभद्रंशांतंक्षेममममृतमभयमितिवर्षाणितेषुगिरयोनद्यश्च
सप्तैवाभिज्ञाताः ३ मणिकूटोवज्रकूटइंद्रसेनोज्योतिष्मान्सुपर्णोहिरण्यष्ठीवोमेघमालइतिसेतुशैलाः अरुणानृम्णांगिरसीसावित्रीसुप्रभाताऋतंभरासत्यं
भराइतिमहानद्यःयासांजलोपस्पर्शनाविधूतरजस्तमसोहंसपतंगोर्ध्वायनसत्यांगसंज्ञाश्चत्वारोवर्णाः सहस्रायुषोविबुधोपमसंदर्शनप्रजननाः स्वर्गद्वारंत्रय्या
विद्ययाभगवंतंत्रयीमयंसूर्यमात्मानंयजंते ४

यथा स्वर्णप्रस्थः १ चंद्रशुक्लः २ आवर्तनः ३ रमणकः ४ मंदरहरिणः ५ पांचजन्यः ६ सिंहलः ७ लंकेति ८ ३० एवंतव हेभारतोत्तम जंबूद्वीपवर्षविभागोयथोपदे
शंउपवर्णितइति ३१ इतिपंचमेएकोनविंशः ॥ १९ ॥ श्रीशुकउवाच ॥ अतःपरं प्लक्षादिद्वीपानां प्रमाणलक्षणसंस्थानतो वर्षविभागः उपवर्ण्यते १ जंबूद्वीपोयं
लक्षयोजनपरिमाणः तावताक्षारोदधिनापरिवेष्टितः एवंपूर्वस्मात्उत्तराद्विगुणाः अतःपरंद्विलक्षयोजनमितोप्लक्षद्वीपः तावन्मानेनइक्षुरसोदेनवेष्टितः तत्रापिद्वीपाख्याकर
जंबूप्रमाणः प्लक्षः अस्ति तत्रहिरण्मयः अग्निः तिष्ठतितस्य अधिपतिःप्रियव्रतपुत्रः इध्मजिह्वः सःस्वद्वीपवर्षाणि सप्तधाविभज्यवर्षनामभ्यः पुत्रेभ्यः अदात् स्वयंचयोगेन
उपरराम २ वर्षपुत्रनामानि शिवं यशस्यं सुभद्रं शांतं क्षेमं अमृतं अभयमितिवर्षाणितेषुवर्षेषुगिरयःनद्यश्चसप्तैव ३ मणिकूटः वज्रकूटः इंद्रसेनः ज्योतिष्मान् सुपर्णः
हिरण्यष्ठीवः मेघमालः इतिसप्तगिरयः अरुणा नृम्णा आंगिरसी सावित्री सुप्रभाता ऋतंभरा सत्यंभरा एवंसप्तमहानद्यः यासांजलस्पर्शेनविधूतरजस्तमसः हंसः पतंगः
ऊर्ध्वायनः सत्यांगः एतेचत्वारोवर्णाः सहस्रायुषः तेत्रय्याविद्ययासूर्यरूपंहरिंभजंते ४

विगीताअपिद्वीपमंत्राव्याख्यायंते । प्रत्नस्य पुराणपुरुषस्यविष्णोर्यद्रूपंतंसूर्यंईमहिशरणंव्रजेम । कथंभूतम् । सत्यादानामात्मानंअधिष्ठातारम् । तत्रसत्यमनुष्ठीयमानोधर्मः ऋतंप्रमी यमाणोधर्मः । ब्रह्मणः तद्बोधकस्यवेदस्यअमृतस्यशुभफलस्य मृत्योः अशुभफलस्य ५ ( इंद्रियंइंद्रियपाटवं । ओजआदयः सामर्थ्यविशेषाः । औत्पत्तिकीसहजासर्वेषामविशेषेणसाधा रण्येन ) ६ ( यथाप्लक्षद्वीपः स्वसमानेनावृतस्तथाशाल्मलोपिद्वीपः सुरोदेन परिवृंक्तेपरितोबहिरस्तीत्यर्थः ) ७ ' सुपर्णोसिगरुत्मान्त्रिवृत्तेशिरः'इत्यादिश्रुतेः । छंदोभिः स्तावयव मूर्तैः श्रीविष्णुंस्तौतीतिछंदस्तुत्तस्य ( पतत्रिराजस्य ) गरुडस्यनिलयंस्थानम् । साशाल्मली ( तस्य ) द्वीपस्यहूतयेव्यपदेशाय ( यत्रशाल्मलीसमुत्पन्नावर्ततेसद्वीपः शाल्मलइ ति ) ८ ९ १० ( तेषांसुतानानामानीवनामानियेषांतानि । वेदेनयजंतेवेदपाठेनोपासते ) ११ स्वगोभिः स्वरश्मिभिः अंधः अन्नं । सोमो नः राजाअस्तुआभिमुख्येनभवतु ह्रस्वपाठेत्वविवक्षयासंध्यभावः १२ एवंसुरोदाद्बहिर्घृतोदेनावृतः कुशद्वीपइत्यन्वयः । ( देवकृतईश्वरेणविहितः पूर्वः शाल्मलोयथासुरोदेनावृतस्तथा ) स्वशष्पाणि ( स्वबालतृणा नि ) निजकोमलशिखाः ( इत्यर्थः ) तेषांरोचिषा १३ १४

प्रत्नस्यविष्णोरूपंयत्सत्यस्यर्तस्यब्रह्मणःअमृतस्यचमृत्योश्चसूर्यमात्मानमीमहीति ५प्लक्षादिषुपंचसुपुरुषाणामायुरिंद्रियमोज सहोबलंबुद्धिर्विक्रमइतिचस वेषामौत्पत्तिकीसिद्धिरविशेषेणवर्तते ६ प्लक्षःस्वसमानेनेक्षुरसोदेनावृतोयथातथाद्वीपोपिशाल्मलोद्विगुणविशालःसमानेनसुरोदेनावृतःपरिवृंक्ते ७ यत्रह वैशाल्मलीप्लक्षायामायस्यांवाविकिलनिलयमाहुर्भगवतश्छंदःस्तुतःपतत्रिराजस्यसाद्वीपहूतयेउपलक्ष्यते ८ तद्द्वीपाधिपतिःप्रियव्रतात्मजोयज्ञबाहुःस्वसु तेभ्यःसप्तभ्यस्तन्नामानिसप्तवर्षाणिव्यभजत्सुरोचनंसौमनस्यंरमणकंदेववर्षंपारिभद्रमाप्यायनमविज्ञातमिति ९तेषुवर्षाद्रयोनद्यश्चसप्तैवाभिज्ञाताःस्वरसः शतशृंगोवामदेवःकुंदोमुकुंदःपुष्पवर्षःसहस्रश्रुतिरिति अनुमतिःसिनीवालीसरस्वतीकुहूरजनीनंदाराकेति १०तद्वर्षपुरुषाःश्रुतधरवीर्यधरवसुंधरेषंधरसंज्ञाभ गवंतंवेदमयंसोममात्मानंवेदेनयजंते ११स्वगोभिःपितृदेवेभ्योविभजन्कृष्णशुक्लयोः॥प्रजानांसर्वासांराजांधःसोमोनआस्त्विति १२एवंसुरोदाद्बहिस्तद्विगुणः समानेनावृतोघृतोदेनयथापूर्वःकुशद्वीपोयस्मिन्कुशस्तंबोदेवकृतस्तद्द्वीपाख्याकरोज्वलनइवापरःस्वशष्परोचिषादिशोविराजयति १३ तद्द्वीपपतिःप्रैय व्रतोराजन्हिरण्यरेतोनामस्वंद्वीपंसप्तभ्यःस्वपुत्रेभ्योयथाभागंविभज्यस्वयंतपआतिष्ठतवसुवसुदानदृढरुचिनाभिगुप्तस्तुत्यव्रतविविक्तवामदेवनामभ्यः १४

५ प्लक्षादिपुपंचसुपुरुषाणांआयुः इंद्रियंओजः सहः बलंप्राक्रमः सर्वेषांऔत्पत्तिकीसिद्धिर्वर्तते ६अतः परंशाल्मलोद्वीपः पूर्वस्मात् द्विगुणः तावन्मानेनसुरोदेनवेष्टितः ७ यत्रशाल्मलीवृक्षोस्ति द्वीपाख्याकरः यस्मिन् गरुडनिलयमाहुः ८ तद्द्वीपपतिः प्रियव्रतपुत्रोयज्ञबाहुः स्वंद्वीपंसप्तधाकृत्वा पुत्रेभ्यः अदात् सुरोचनं सौमनस्यं रमणकं देववर्षं पारिभद्रं आप्यायनं अविज्ञातं ७ । ९ । तत्रपर्वताः स्वरसः शतशृंगः वामदेवः कुंदः कुमुदः पुष्पवर्षः सहस्रश्रुतिः ७ नद्यश्चसप्त अनुमतिः सिनीवाली सरस्वती कुहूः रजनी नंदा राकेति ७ । १० तद्वर्षपुरुषाः श्रुतधरः वीर्यधरः वसुंधरः इषंधरः भगवंतंसोमंवेदेनयजंते ११ १२ ततः कुशद्वीपः अष्टलक्षयोजनः तावता घृतोदेन आवृतः तत्रद्वीपाख्याकरः कुशस्तंबोस्ति १३ यत्रद्वीपपतिः प्रियव्रतपुत्रोहिरण्यरेताः स्वंद्वीपंसप्तधा कृत्वा पुत्रेभ्यः अदात् वसुः १ वसुदानः २ दृढरुचिः ३ नाभिगुप्तः ४ स्तुत्यव्रतः ५ विभक्तः ६ वामदेवः ७ इति १४

१५ १६ हेजातवेदस्त्वंसाक्षात्परस्यब्रह्मणोहरेर्हव्यवाट्असि ( हविर्नेतासि ) अतः ( पुरुषस्यहरेरंगभूतानाम् ) देवानांयज्ञेनपुरुषमेवयज । अंगानांनाम्नादत्तम् ( हविः पुरुषाय )
अंगिनेसमर्पयेत्यर्थः १७ उपक्लृप्तोवेष्टितः यथाकुशद्वीपोघृतोदेनवृतः १८ गुहस्यकार्तिकेयस्यप्रहरणेन ( शक्त्याख्येन ) आयुधेनउन्माथिताः ( पीडिताः ) नितंबाः कुंजानिच
( लतादिपिहितोदराणिस्थलानि ) यस्य १९ ( रिक्थादान्पुत्रान् ) स्वयंभगवान्ज्ञानी । परमकल्याणंयशोयस्यतस्य । २० २१ आपोमयंअम्मयंदेवम् २२ हेआपः
पुरुषवीर्याः ईश्वराल्लब्धसामर्थ्याः स्थमवथ । अतएवभूर्भुवः स्वः त्रैलोक्यंपुनंत्यः ताः भवत्योनोऽस्माकंस्पृशतांस्पर्शनंकुर्वतां ( आचमनादिनासेवमानानाम् ) मुत्रः
शरीराणिपुनंतुयत्तआत्मनास्वरूपेणैवअमीवघ्नीः पापहंत्र्यः २३

तेषांवर्षेषुसीमागिरयोनद्यश्चाभिज्ञाताःसप्तसप्तैवचक्रश्चतुःशृंगःकपिलश्चित्रकूटोदेवानीकऊर्ध्वरोमाद्रविणइतिरसकुल्यामधुकुल्यामित्रविंदाश्रुतविंदादेवग
र्भाघृतच्युतामंत्रमालेति १९ यासांपयोभिःकुशद्वीपौकसःकुशलकोविदाभियुक्तकुलकसंज्ञाभगवंतंजातवेदस्वरूपिणंकर्मकौशलेनयजंते १६ परस्यब्रह्मणः
साक्षाज्जातवेदोसिहव्यवाट् ॥ देवानांपुरुषांगानांयज्ञेनपुरुषंयजेति १७ तथाघृतोदाद्बहिःक्रौंचद्वीपोद्विगुणःस्वसमानेनक्षीरोदेनपरितउपक्लृप्तोवृतोयथा
कुशद्वीपोघृतोदेन ॥ यस्मिन्क्रौंचोनामपर्वतराजोद्वीपनामनिर्वर्तकआस्ते १८ योसौगुहप्रहरणोन्मथितनितंबकुंजोपिक्षीरोदेनासिच्यमानोभगवतावरु
णेनाभिगुप्तोविभयोबभूव १९ तस्मिन्नपिप्रैय्यव्रतोघृतपृष्ठोनामाधिपतिःस्वेद्वीपेवर्षाणिसप्तविभज्यतेषुपुत्रनामसुसप्तरिक्थादान्वर्षपान्निवेश्यस्वयंभगवा
न्भगवतःपरमकल्याणयशसआत्मभूतस्यहरेश्चरणारविंदमुपजगाम २० आमोमधुरुहोमेघपृष्ठःसुधामाभ्राजिष्ठोलोहितार्णोवनस्पतिरितिघृतपृष्ठसुतास्ते
षांवर्षगिरयःसप्तसप्तैवनद्यश्चाभिख्याताःशुक्लोवर्धमानोभोजनउपबर्हिणोनंदोनंदनःसर्वतोभद्रइतिअभयाअमृतौघाआर्यकातीर्थवतीवृत्तिरूपवतीपवित्रवती
शुक्लेति २१ यासामंभःपवित्रममलमुपयुंजानाःपुरुषऋषभद्रविणदेवकसंज्ञावर्षपुरुषाआपोमयंदेवमपांपूर्णेनांजलिनायजंते २२ आपःपुरुषवीर्याःस्थपुनं
तीर्भूर्भुवःसुवः ॥ तानः पुनीताममीवघ्नीःस्पृशतामात्मनाभुवइति २३

तत्रसीमाचलाः सप्त चक्रः १ चतुःशृंगः २ कपिलः ३ चित्रकूटः ४ देवानीकः ५ ऊर्ध्वरोमा ६ द्रविणः ७ इति नद्यः रसकुल्या १ मधुकुल्या २ मित्रविंदा ३
श्रुतविंदा ४ देवगर्भा ५ घृतच्युता ६ मंत्रमाला ७ इति १९ तत्रवर्णाःकुशः १ कोविदः २ अभियुक्तः ३ कुलकसंज्ञइति एतेअग्निरूपंदेवंयजंते १६ १७ ततः
षोडशलक्षयोजनः क्रौंचद्वीपः तावताक्षीरोदेन आवृतः यत्रक्रौंचपर्वतोद्वीपाख्याकरोऽस्ति १८ १९ तत्रापिप्रियव्रतपुत्रः घृतपृष्ठः स्वंद्वीपंसप्तधा विभज्य पुत्रेभ्यः अदात्
२० आमः १ मधुरुहः २ मेघपृष्ठः ३ सुधामा ४ भ्राजिष्ठः ५ वनस्पतिः ६ लोहितार्णः ७ इति तत्रसीमाचलाः ७ शुक्लः १ वर्धमानः २ भोजनः ३ उपबर्हिणः
४ नंदः ५ नंदनः ६ सर्वतोभद्रः ७ इति नद्यः ७ अभया १ अमृतौघा २ आर्यका ३ तीर्थवती ४ रूपवती ५ पवित्रवती ६ शुक्लाइति ७ । २१ तत्रवर्णाः ४
पुरुषः १ ऋषभः २ द्रविणः ३ देवकः ४ इति तेचसदावरुणं देवंअंजलिनायजंते २२ २३

दध्नोमंडरसः सएवोदकंयस्य ( तेनपरीतः आवृतः ) यस्यवर्णान्यंतः खरस्पर्शानिर्वाहिमृदुस्पर्शानिसशाकोनामवृक्षविशेषः ( स्वद्वीपस्याख्याकरः ) २४ ( पुत्रनामानिपुत्रनामसदृश नामानि ) २५ २६ २७ आत्मकेतुभिः प्राणादिवृत्तिभिः ( स्फुटंदृश्यमानमिदमित्यर्थः । यद्वा यद्वशेवर्तमानान्नः अस्मान्पातु ) २८ ज्वलनशिखावत् अमलानांकनकपत्राणामयुता नामयुतानियस्यतत् ( देवानामहोरात्राभ्यांउत्तरदक्षिणायनाभ्यामित्यर्थः ) २९ ( भगवत्कर्मशीलः भगवद्भक्तिनिष्ठः ) ३० ३१

एवंपुरस्तात्क्षीरोदात्परित उपवेशितः शाकद्वीपोद्वात्रिंशल्लक्षयोजनायामः समानेनचदधिमंडोदेनपरीतोयस्मिन्शाकोनाममहीरुहः स्वक्षेत्रव्यपदेशकोय स्यहमहासुरभिगंधस्तंद्वीपमनुवासयति २४ तस्यापिप्रैयव्रतएवाधिपतिर्नाम्नामेधातिथिःसोपिविभज्यसप्तवर्षाणिपुत्रनामानितेषुस्वात्मजान्पुरोजवम नोजवपवमानधूम्रानीकचित्ररेफबहुरूपविश्वधारसंज्ञान्निधाप्याधिपतीन्स्वयंभगवत्यनंतआवेशितमतिस्तपोवनंप्रविवेश २५ एतेषांवर्षमर्यादागिरयोनद्य श्चसप्तसप्तैवईशानउरुशृंगोबलभद्रःशतकेसरःसहस्रस्रोतोदेवपालोमहानसइतिअनघाऽऽयुर्दाउभयस्पृष्टिरपराजितापंचपदीसहस्रश्रुतिर्निजधृतिरिति २६ तद्वर्षपुरुषाऋतव्रतसत्यव्रतदानव्रतानुव्रतनामानोभगवंतंवाय्वात्मकंप्राणायामविधूतरजस्तमसःपरमसमाधिनायजंते२७ अंतःप्रविश्यभूतानियोबिभर्त्या त्मकेतुभिः॥अंतर्यामीश्वरःसाक्षात्पातुनोयद्वशेस्फुटम् २८ एवमेवदधिमंडोदात्परतःपुष्करद्वीपस्ततोद्विगुणायामःसमंततउपकल्पितःसमानेनस्वादूदके नसमुद्रेणबहिरावृतोयस्मिन्बृहत्पुष्करंज्वलनशिखामलकनकपत्रायुतायुतंभगवतःकमलासनस्याध्यासनंपरिकल्पितम् २९ तद्द्वीपमध्येमानसोत्तरनामै कएवार्वाचीनपराचीनवर्षयोर्मर्यादाचलोऽयुतयोजनोच्छ्रायायामोयत्रतुचतसृषुदिक्षुचत्वारिपुराणिलोकपालानामिंद्रादीनांयदुपरिष्टात्सूर्यरथस्यमेरुंपरिभ्र मतःसंवत्सरात्मकंचक्रंदेवानामहोरात्राभ्यांपरिभ्रमति ३० तद्द्वीपस्याप्यधिपतिःप्रैयव्रतोवीतिहोत्रोनामैतस्यात्मजौरमणकधातकिनामानौवर्षपतीनि युज्यस्वयंपूर्वजवद्भगवत्कर्मशीलएवास्ते ३१

ततः शाकद्वीपःद्वात्रिंशल्लक्षयोजनः तावन्मानेनदधिमंडोदेन आवृतः यत्रशाकवृक्षः द्वीपाख्याकरोस्ति २४ तत्रापिप्रियव्रतपुत्रोमेधातिथिः स्वंद्वीपंसप्तधा कृत्वा पुत्रेभ्यः अदात् पुरोजवः १ मनोजवः २ पवमानः ३ धूम्रानीकः ४ चित्ररेफः ५ बहुरूपः ६ विश्वधारः ७ इति ॥ २५ ॥ तत्रसीमापर्वताः सप्त ईशानः १ उरुशृंगः २ बलभद्रः ३ शतकेसरः ४ सहस्रस्रोतः ५ देवपालः ६ महानसइति नद्यः अनघा १ आयुर्दा २ उभयस्पृष्टिः ३ अपराजिता ४ पंचपदी ५ सहस्रस्रुतिः ६ निज धृतिः ७ इति २६ तद्वर्षपुरुषाः ऋतव्रतः १ सत्यव्रतः २ दानव्रतः ३ अनुव्रतः ४ वाय्वात्मकंभगवंतं समाधिनायजंते २७ २८ ततःपुष्करद्वीपः चतुःषष्टिलक्षयोज नः तावतास्वादुजलोदेनावृतः तत्रबृहत्पुष्करं कमलासनस्य आसनं परिकल्पितं तद्द्वीपमध्ये मानसोत्तरनामाएकः शैलः अयुतयोजनोच्छ्रायः यत्रचतुर्दिक्षु इंद्रादीनां चतस्रः पुर्यःसंति तदुपरिसूर्यरथचक्रंभ्रमति ३० यत्रप्रियव्रतपुत्रोवीतिहोत्रःस्वंद्वीपंद्विधाविभज्यरमणकधातकिनामभ्यां पुत्राभ्यांददौ स्वयंचभगवत्कर्मशीलः आस्ते ३१

भा०पं० ब्रह्मरूपिणंकमलामनमूर्तिसकर्मकेनवज्ञमालोकयादिसाधनसहितेन ३१ कर्ममयंकर्मफलरूपम् । ब्रह्मलिंग्यतेयस्मात् ( तत्ब्रह्मलिंगंब्रह्मबोधकम् ) एकस्मिन्नेवपरमेश्वे(पंतोनि(थे)
स्यतत्अतएववस्तुनो ( अद्वयम् ) अद्वैतम् ( ब्रह्म ) ३३ ततः शुद्धोदात्परस्तात्लोकः सूर्याद्यालोकवानूदेशः अलोकस्तद्राहितः तयोरंतरालेमध्येतयोर्विभागकमित्यर्थः । ३४
॥४१॥ ततः परस्तादित्युक्तंतदेवविकियता अंतरेणेत्यपेक्षायां तदंतर्वर्तिनींभूमिमाह । यावन्मानसोत्तरमेर्वोरंतरं सार्धसप्तलक्षोत्तरसार्धकोटिपरिमितं तावतीभूः शुद्धोदात्परतोस्ति । तत्रचप्राणि अ०
नोपिसंति ततः काचनीभूमिरन्यास्तीत्यर्थः साचैकोनचत्वारिंशल्लक्षोत्तरकोटयष्टकपरिमिताज्ञेया (अर्धपुष्करद्वीपेन सह शुद्धोदःपण्णवतिलक्षाणि)एवंहिसतिमेरुलोकालोकयोरंतरंसार्ध
द्वादशकोटिपरिमितंवक्ष्यमाणमुपपन्नंभवति । एतदेवशैवतंत्रेषूकं 'कोटिद्वयंत्रिपंचाशल्लक्षाणिचततःपरं । पंचाशच्चसहस्राणिसप्तद्वीपाःससागराः। ततोहेममयीभूमिर्दशकोटयोवरानने। ॥२०॥
देवानांक्रीडनार्थायलोकालोकस्ततःपरं' इतिअत्रचदशकोटित्वंपूर्वोक्तमू(म्)यासहद्रष्टव्यम् । सर्वसत्त्वपरिहृतेतिदेवव्यतिरेकेणेतिविज्ञेयं देवानांक्रीडनार्थायेत्युक्तत्वात् ( प्रहितःप्रक्षिप्तः )
३५ ( लोकालोकइतिसमाख्याअन्वर्थसंज्ञाअनेनाहि अवस्थाप्यते ) ३६ ( सलोकालोकाचलः ) लोकत्रयस्यांतेपरितोमर्यादारूपोविहितः यस्मात्प्रतिबंधकात्सूर्यआदिर्येषां । ध्रुवोप
वर्गांतायेषांआवितन्वानाः समंतात्प्रकाशयंतः ( पराचीनाभवितुंनोत्सहंते ) परतोगंतुंनशक्नुवंतितावदुन्नहनमुत्सेधः तदनुरूपआयामश्चविस्तारोयस्य । ध्रुवादप्युच्छ्रितत्वात्त्रिलो
कीमर्यादाभूतइत्यर्थः ३७ ( संस्थास्वरूपास्थितिः तयाचविचिंतितः ) सोयंलोकालोकाचलः तुरीयभागः चतुर्थांशः सार्धद्वादशकोटयः मेरोरेकत ( अलोकालोक ) इतिद्रष्टव्यम्
३८ आशासुदिक्षु येअधिनिवेशिताः (स्थापिता) तेआसते ३९

तद्वर्षपुरुषाभगवंतंब्रह्मरूपिणंसकर्मकेनकर्मणाऽराधयंतीदंचोदाहरंति ३२ यत्तत्कर्ममयंलिंगंब्रह्मलिंगंजनोर्चयेत् ॥ एकांतमद्वयंशांतंतस्मैभगवतेनमइति
३३ ॥ ऋषिरुवाच॥ततःपरस्ताल्लोकालोकनामाचलोलोकालोकयोरंतरालेपरितउपक्षिप्तः३४ यावन्मानसोत्तरमेर्वोरंतरंतावतीभूमिःकांचन्यन्यादर्शतलो
पमायस्यांप्रहितःपदार्थोनकथंचित्पुनःप्रत्युपलभ्यतेतस्मात्सर्वसत्त्वपरिहृतासीत् ३५लोकालोकइतिसमाख्यायदनेनाचलेनलोकालोकस्यांतर्वर्तिनावस्था
प्यते ३६सलोकत्रयांतेपरितईश्वरेणविहितोयस्मात्सूर्यादीनांध्रुवापवर्गाणांज्योतिर्गणानांगभस्तयोर्वाचीनास्त्रींल्लोकानावितन्वानानकदाचित्पराचीनाभवि
तुमुत्सहंतेतावदुन्नहनायामः ३७एतावाँल्लोकविन्यासोमानलक्षणसंस्थाभिर्विचिंतितःकविभिःसतुपंचाशत्कोटिगणितस्यभूगोलस्यतुरीयभागोयंलोकालोका
चलः३८ तदुपरिष्टाच्चतसृष्वाशास्वात्मयोनिनाखिलजगद्गुरुणाऽधिनिवेशितायेद्विरदपतयऋषभःपुष्करचूडावामनोपराजितइतिसकललोकस्थितिहेतवः३९

तत्रपुरुषाः ब्रह्मरूपंदेवंयजंते ३२ ३३ ॥ श्रीशुकउवाच ॥ ततःशुद्धोदात्परतः लोकालोकपर्वतः अस्ति ३४ यावन्मानसोत्तरमेर्वोरंतरंएकाकोटिः सप्तलक्षाणि ताव
तीभूमिः शुद्धोदात्परास्ति तत्रप्राणिनोपिसंतिततः आदर्शतलो[illegible]अन्यास्तिसाच एकोनचत्वारिंशत्लक्षोत्तरकोट[illegible]ष्टकमिताप्राणिवर्जिताचज्ञेया ३५ ततःलोका
लोकपर्वतः सःलोकत्रयस्यमर्यादारूपः ईश्वरेणविहितः [illegible] वनस्पा[illegible]दिज्योतिर्गणानांगभस्तयः अर्वाचीनाः ध्रुवपदादपिउच्छ्रितः ३६ ३७ तचमेरोः एकतः सा ॥४१॥
र्धद्वादशकोटिमितः अन्यतश्चतावान् ३८ तदुपरि [illegible] नइति एतेलोकस्थितिहेतवः संति ३९

गजानां स्वविभूतीनांस्वांशभूतानांमहेंद्रादीनांचविविधवीर्योपबृंहणायसकललोकस्वस्तयेचभगवान्तस्मिन् तइत्यन्वयः । किंकुर्वन् आत्मनः स्वस्ययद्विशुद्धंसत्त्वं तत्संधार
ः आविष्कुर्वन् । कीदृशंधर्मज्ञानादीन्यष्टमहासिद्धयश्चोपलक्षणं यस्यतत् । दोर्दंडैरुपलक्षितः सन् महाविभूतेः परमैश्वर्यस्य पतित्वादेकयैवमूर्त्या ( सर्वलोककल्याणाय )
समंतादास्ते ४० नन्वंतर्यामिणा अंतस्थेनैव सर्वं कर्तुं शक्यं किंतस्यबाहिःसमंतादवस्थानेनेत्याशंक्यतस्यार्थं स्वयमेवव्याचष्टे। आत्मने —— यया विरचिता या विविधालोकयात्रा
तस्या गोपीथायरक्षणाय एषभगवान्एवंभूतविभूतिभिः सहआकल्पंप्रलयपर्यंतं वेपंगतः लीलयाप्राप्तः इतिसमंतादास्तेइत्यस्यार्थः ४१ यामेरुलोकालोकयोरंतर्विस्तारएतेन लोका
लोकाचलाद्बहिर्यत्अलोकपरिमाणं ( तद्व्याख्यातम् । तद्धि ) मेरोरेकतः सार्धद्वादशकोट्यः । ततोलोकालोकात्अलोकाद्वापरस्तात् विशुद्धांद्विजपुत्रानयने अर्जुनस्य श्रीकृष्णेन
प्रदर्शिताम् ४२ विस्तरेणोक्तं ब्रह्मांडमानं सर्वतोपिनिरूपयति । अंडमध्यगतः किंतन्मध्यं तदाह ।द्यावाभूम्योः पूर्वोत्तरकपालयोर्यदंतरंमध्यस्थानं ।सर्वतः पंचविंशतिकोट्यःस्युः४३
अंडमध्यावस्थानेकारणंतन्नामनिर्वचनेनाह मृतेअचेतनेएषसूर्योविराजरूपेणयस्मात —— स्मान्मार्तंडइतियद्यस्माद्धिरण्यांडसमुद्भवस्तस्माद्धिरण्यगर्भइतिचव्यपदेशः । यद्वायद्य
थाहिरण्यांडसमुद्भवोविरिंच्योहिरण्यगर्भउच्यतेतथेति ) ४४ किंचसूर्येणैवविभज्यंतेदिशः खंअंतरिक्षंभिदाअन्योपिविभागः स्वर्गापवर्गौभोगमोक्षदेशौरसौकांसिअतलादीनि । ४५
उपासनार्थमाह । देवादीनांसूर्यआत्मदृगीश्वरः नेत्राधिष्ठाताच ४६ ॥ ॥ इतिपंचमस्कंधेटीकायां विंशोध्यायः ॥ ॥ २० ॥

तेषांस्वविभूतीनांलोकपालानांचविविधवीर्योपबृंहणायभगवान्परममहापुरुषोमहाविभूतिपतिरंतर्याम्यात्मनोविशुद्धसत्त्वंधर्मज्ञानवैराग्यैश्वर्याद्यष्टमहासि
द्ध्युपलक्षणंविष्वक्सेनादिभिःस्वपार्षदप्रवरैःपरिवारितोनिजवरायुधोपशोभितैर्निजभुजदंडैःसंधारयमाणस्तस्मिन्गिरिवरेसमंतात्सकललोकस्वस्तयआ
स्ते ४० आकल्पमेवंवेपंगतएषभगवानात्मयोगमाययाविरचितविविधलोकयात्रागोपीथायेत्यर्थः ४१ योंतर्विस्तारएतेनह्यलोकपरिमाणंचव्याख्यातंयद्ब
हिर्लोकालोकाचलात्ततःपरस्ताद्योगेश्वरगतिंविशुद्धामुदाहरंति ४२ अंडमध्यगतःसूर्योद्यावाभूम्योर्यदंतरम् ॥सूर्यांडगोलयोर्मध्येकोट्यःस्युःपंचविंशतिः
४३ मृतेंडएषएतस्मिन्यदभूत्ततोमार्तंडइतिव्यपदेशःहिरण्यगर्भइतियद्धिरण्यांडसमुद्भवः ४४ सूर्येणहिविभज्यतेदिशःखंद्यौर्महीभिदा ॥ स्वर्गापवर्गौनरका
रसौकांसिचसर्वशः ४५ देवतिर्यङ्मनुष्याणांसरीसृपसवीरुधाम् ॥ सर्वजीवनिकायानांसूर्यआत्मादृगीश्वरः ४६ इतिश्रीभागवतेमहापुराणेपंचमस्कंधेभुव
नकोशवर्णनेसमुद्रद्वीपवर्षसन्निवेशपरिमाणलक्षणोविंशतितमोध्यायः ॥ २० ॥

तस्मिन्पर्वतेलोकरक्षणाय आकल्पं भगवान् आस्ते ४० एतेनह्यलोकपरिमाणंचव्याख्यातम् ततः लोकालोकात् अलोकाद्वापरतः योगेश्वराणांविशुद्धांगतिंद्विजपुत्रानय
नेर्जुनस्यश्रीकृष्णेनदर्शितामुदाहरंति ४१ ४२ अंडमध्यगतः सूर्यो द्यावाभूम्योर्यदंतरम् सूर्यांडगोलयोर्मध्येकोट्यः स्युःपंचविंशतिः ४३ ४४ सूर्येणहिविभज्यंतेदिशः
खंद्यौर्महीभिदा स्वर्गापवर्गनरकारसौकांसिचसर्वशः ४५ देवतिर्यङ्मनुष्याणांसरीसृपखगवीरुधाम् सर्वजीवनिकायानांसूर्यआत्मादृगीश्वरः ४६ इतिपंचमेविंशः ॥२० ॥

एवमध्यायविंशत्याभूमर्यादानिरूपिता । अतः परंद्युमर्यादापालनंत्रिभिरुच्यते ॥ १ ॥ एकविंशेरवेः कालचक्रेणभ्रमतोन्वहम् । स्वगत्याराशिसंचारैर्लोकयात्रानिरूप्यते ॥२॥ एतावा
नाविस्तारेणकोट्यः पंचाशत् । उत्सेधेनपंचविंशतिः ( संनिवेशः । विन्यासविस्तारइत्यर्थः ) १ द्विदलयोर्मध्येयथैकस्यमानेनअपरस्यमानमुपदिशंतेतद्वत् नेअंतरेणतयोर्मध्येतदुभय
संधितंताभ्यामुभयतः संलग्नम् २ उदगयनादिसंज्ञाभिर्मंदाक्षिप्रसमगतिभिर्यथाकालमारोहणादिस्थानेष्वारोहणाद्यभिपद्यमानोमकरादिष्वहोरात्राणिदीर्घह्रस्वसमानानिविधत्ते ३
तत्प्रपंचयतियदेति । अत्यंतवैषम्याभावात्समानानीत्युक्तं । सर्वथासाम्यंत्वेकस्यैवाहोरात्रस्य । यद्यपिवृषभमिथुनयोरेवाह्नांवृद्धिः कर्कटादिषुह्रासः तथापिरात्र्यपेक्षयाऽधिकत्वाद्वर्धंत
इत्युक्तं । एवंरात्रिवृद्धावपिदिनापेक्षयाह्रसंतीत्युक्तम् । मासिमास्येकैकाघटिकेतिस्थूलदृष्ट्योक्तम् ( सौक्ष्म्यंतुगणितग्रंथोक्तचरसाधनेनतत्तद्देशेपृथक्पृथग्द्रष्टव्यम् ) वृद्धिह्रासयोः प्रति
मासम् ( प्रतिदेशं ) वैषम्या ( न्नसर्वथैकरूप्यम् ) ४ विपर्ययाणीतिअहानिन्यूनानिरात्रयोऽधिकाइत्यर्थः ५ तद्वृद्धिह्रासकालमाह यावदिति ६ एवंमंदादिगतिभिः नवकोटयइतिमेरो
रुभयतोमानसोत्तरस्यातिविस्तारेणपंचदशलक्षाधिककोटिद्वयपरिमितेनेदंपरिमंडलमानमुन्नेयम् । एवंपंचदशभिर्घटिकाभिरित्यादिष्वपित्रैराशिकगणितेनतत्तन्मानमुन्नेयम् । अत्रापे
क्षितोविशेषः पुराणांतरादवगंतव्यः । तत्रारोहणादिस्थानानिवायुपुराणेदर्शितानि । "सर्वग्रहाणांत्रीण्येवस्थानानिद्विजसत्तमाः । स्थानंजरद्गवंमध्यंतथैरावतमुत्तरम् । वैश्वानरंदक्षि

॥ श्रीशुकउवाच ॥ ॥एतावानेवभूवलयस्यसंनिवेशःप्रमाणलक्षणतोव्याख्यातःएतेनहिदिवोमंडलमानंतद्विदउपदिशंति १ यथाद्विदलयोर्निष्पावादीनां
तेअंतरेणांतरिक्षंतदुभयसंधितम् २ यन्मध्यगतोभगवांस्तपतांपतिस्तपनआतपेनत्रिलोकींप्रतपत्यवभासयत्यात्मभासासएषउदगयनदक्षिणायनवैषुवत
संज्ञाभिर्मांद्यशैघ्र्यसमानाभिर्गतिभिरारोहणावरोहणसमानस्थानेषुयथासवनमभिपद्यमानोमकरादिषुराशिष्वहोरात्राणिदीर्घह्रस्वसमानानिविधत्ते ३ यदामे
षतुलयोर्वर्ततेतदाहोरात्राणिसमानानिभवंतियदावृषभादिषुपंचसुचराशिषुचरतितदाहान्येववर्द्धंतेह्रसतिचमासिमास्येकैकाघटिकारात्रिषु ४ यदावृश्चिका
दिषुपंचसुवर्ततेतदाहोरात्राणिविपर्ययाणिभवंति ५ यावद्दक्षिणायनमहानिवर्द्धंतेयावदुदगयनंरात्रयः ६ एवंनवकोटयएकंपंचाशल्लक्षाणियोजनानांमानसो
त्तरगिरिपरिवर्तनस्योपदिशंति ॥ तस्मिन्नैंद्रींपुरींपूर्वस्मान्मेरोर्देवधानींनामदक्षिणतोयाम्यांसंयमनींनामपश्चाद्वारुणींनिम्लोचनींनामउत्तरतःसौम्यां
विभावरींनामतासूदयमध्याह्नास्तमयनिशीथानीतिभूतानांप्रवृत्तिनिवृत्तिनिमित्तानिसमयविशेषेणमेरोश्चतुर्दिशम् ७

श्रीशुकउवाच ॥ एतावानेवभूवलयस्यसंनिवेशोव्याख्यातः एतेनहि दिवोमंडलमानंतद्विदः उपदिशंति १ यथाद्विदलयोः निष्पावादीनांतदुभयसंधितंअंतरिक्षंज्ञेयम् २
अंडमध्यगतः सूर्यः त्रिलोकीं अवभासयति तपतिच सः सौम्ययाम्यायनविषुवसंज्ञाभिः मांद्यशैघ्र्यसमानाभिःगतिभिः उच्चनीचसमस्थानेषुप्राप्तःसन् मकरादिषुराशिषु
अहोरात्राणिदीर्घह्रस्वसमानतयाविधत्ते ३ तत्रयदावृषभादिषु पंचराशिषुचरति तदाअह्नानिवर्धंते ह्रसतिचमासिमासिएकैकाघटिकारात्रिषु ४ यदावृश्चिकादिपंचसुचरति ॥४२॥
तदाअह्नानिन्यूनानि रात्रयोऽधिकाः भवंति ५ यदामेषतुलयोर्वर्ततेतदादिनरात्रयःसमानाभवंति ६ किंचमेरोः पूर्वतः मानसोत्तरपर्वतेदेवधानीनामऐंद्रीपुरीवर्तते दक्षिणतो
याम्यासंयमनी पश्चात्वारुणी निम्लोचनी उत्तरतः [illegible] उदयमध्यान्हास्तमयनिशीथानि उपदिशंति ७

मतेऽनिर्दिष्टमिहतत्त्वतः" इति तदेवमध्यमोत्तरदक्षिणमार्गत्रयंप्रत्येकंवीथीत्रयेणात्रिधाभिद्यते त्रिभिस्त्रिभिरश्विन्यादिनक्षत्रैः नागेभैरावतीवीथ्याख्यं(?)रावतीचेत्युत्तरमार्गवीथीत्रयम् । आर्ष भीगोवीथीजारद्गवीचेतिवैष्णवतेमध्यममार्गवीथीत्रयम् । अजवीथीमृगवीथीवैश्वानरीचेतिदक्षिणमार्गेवीथीत्रयम् । तदप्युक्तंतत्रैव । "अश्विनीकृत्तिकायाम्यानागवीथीतिशब्दिता । रोहि ण्यार्द्रामृगशिरोगजवीथ्यभिधीयते । पुष्याश्लेषातथादित्यावीथीचैरावतीस्मृता । एतास्तुवीथयस्तिस्रउत्तरोमार्गउच्यते । तथाद्वेचापिफल्गुन्यौमघाचैवार्षभीमता । हस्ताश्चित्रातथा स्वातीगोवीथीतितुशब्दिता । ज्येष्ठाविशाखानुराधावीथीजारद्गवीमता । एतास्तुवीथयस्तिस्रोमध्यमोमार्गउच्यते । मूलाषाढोत्तराषाढाअजवीथ्यभिशब्दिता । श्रवणंचधनिष्ठाचमार्गो शतभिषक्तथा । वैश्वानरीभाद्रपदेरेवतीचैवकीर्तिता । एतास्तुवीथयस्तिस्रोदक्षिणोमार्गउच्यते" इति अत्रयाम्याभरणी । आदित्याअदितिदेवताकापुनर्वसुः ( शतभिषक्शततारा ) मार्गोमृगवीथीत्यर्थः एवंस्थितेउत्तरायणेध्रुवेणयुगाक्षकोटिनिबद्धवायुपाशद्वयाकर्षणेरथस्यारोहणम् । तदाभ्यंतरमंडलप्रवेशोगतिमांद्यंचेतिदिनवृद्धिः रात्रिह्रासश्च । दक्षिणायनेचपाश प्रेरणादवरोहणंबहिर्मंडलप्रवेशोगतिशैघ्र्यंचेत्यहोरात्रयोर्विपर्ययः । विषुवतेतुपाशसाम्यात्समावस्थानेमध्यमंडलप्रवेशोगतिसाम्यंचेत्यहोरात्रयोःसाम्यमिति तथाचपुराणांतरम् । "आ कृष्येतेयदातौतुध्रुवेणसमधिष्ठितौ । तदाभ्यंतरतः सूर्योभ्रमतेमंडलानितु । ध्रुवेणमुच्यमानेनपुनारश्मियुगेनतु । तथैवबाह्यतः सूर्योभ्रमतेमंडलानिच" इति तदेतदुक्तंयदामेषतुलयोरित्या दिना । उदयास्तादिकंवक्तुमाह । तस्मिन्मानसोत्तरेमेरोः पूर्वतः ऐंद्रींपुरींउपदिशंतीत्यनुषंगः । तासुपुरीषुउदयादीन्युपदिशंति । चतुर्दिशमित्युक्तेयेमेरोर्दक्षिणेदेशेतेषामैंद्रीमारभ्य पूर्वादयः । येपश्चिमेतेषांयाम्यामारभ्य । येउत्तरेतेषांवारुणीमारभ्य । येपूर्वेतेषांसौम्यामारभ्य ७ तत्रत्यानांमेरुस्थानां (सर्वदामध्याह्नसमयएवेत्यर्थः) सव्येनेति । नक्षत्राभिमुखतयास्वगत्या मेरुंवामतःकुर्वन्नपिप्रदक्षिणावर्तप्रवाहाख्यवायुभ्राम्यमाणज्योतिश्चक्रवशात्प्रत्यहंदक्षिणतः करोति । अतश्चक्रगतिवशात्अतिदूरतोभूमंडलप्रस्येवदर्शनमुदयः । आकाशमारूढस्यैवदर्श नंमध्याह्नः भूमिप्रविष्टस्येवादर्शनमस्तमयः ततोतिदूरगमनेनिशीथइति । समुद्रतीरस्थदृष्ट्याच "अद्भ्योवाएषप्रातरुदेत्यपःसायंप्रविशतीति" श्रुतिव्यवहारोनवस्तुतः । तदुक्तंविष्णवे 'उदयास्तमयेचैवसर्वकालंतुसंमुखे । दिशास्वशेषासुतथामैत्रेयाविदिशासुच येर्यत्रदृश्यतेभास्वान्सतेषामुदयः स्मृतः । तिरोभावंचयत्रैतितत्रैवास्तमनंरवेः । नैवास्तमनमर्कस्यनोदयः सर्व दासतः । उदयास्तमनाख्येहिदर्शनादर्शनेरवेः । शक्रादीनांपुरेतिष्ठन्स्पृशत्येषपुरत्रयम् । विकर्णौद्वौविकर्णस्थस्त्रीन्कोणान्द्वेपुरेतथा' इति अतएवतत्रैवोक्तम् । 'तस्मादिश्युत्तरस्यांविदि वारात्रिस्तदेवहि । सर्वेषांद्वीपवर्षाणांमेरुरुत्तरतःस्थितः" इति । यतोयत्रच यः पश्यतिसैवतस्यप्राचीतस्यवामतोमेरुस्तिष्ठतीति ८ यथोक्तमुदयास्तमनाद्यनियमंदर्शयतियत्रोदेतीत्यादि ना स्यंदेनस्वेदोद्गमेन । प्रस्वापयतिनिशीथंकरोति ( यत्रमध्याह्नस्तत्समानसूत्रनिपातेऽर्धरात्रइत्यर्थः । ) येतंसमनुपश्येरन्प्रस्वापसमानसूत्रस्थाः ( तेपितत्रगतंनपश्यंतितदानिशी थमनुभवंतीत्यर्थः ) ९ साधिकानिपंचविंशतिसहस्राधिकानि ( देवधान्याः निर्गत्यसंयमनीं प्रवेक्ष्यन् पंचदशघटीभिः पादोनाष्टत्रिंशल्लक्षोत्तरकोटिद्वयमतिक्रामतीत्यर्थः । एवंचतुर्गु णितान्येतानिएकपंचाशल्लक्षाधिकनवकोटिसंख्यानीतिज्ञातव्यं ) १०

तत्रत्यानांदिवसमध्यंगतएवसदादित्यस्तपतिसव्येनाचलंदक्षिणेनकरोति ८ यत्रोदेतितस्यहसमानसूत्रनिपातेनिम्लोचति ॥ यत्रक्वचनस्यंदेनाभितप तितस्यहैषसमानसूत्रनिपातेप्रस्वापयतितत्रगतंनपश्यंतियेतंसमनुपश्येरन् ९ यदाचैंद्र्याःपुर्याःप्रचलतिपंचदशघटिकाभिर्याम्यांसपादकोटिद्वयंयोजना नांसार्धद्वादशलक्षाणिसाधिकानिचोपयाति १०

मेरुस्थानांतुसदैवमध्याह्नः किंचनक्षत्राभिमुखतयास्वगत्यामेरुंवामतः

कुर्वन्नपिचक्रगतिवशात् प्रत्यहंदक्षिणतः करोति ८ यत्रोदेति तस्यसमानसूत्रनिपाते अस्तंयाति ९ यत्रमध्याह्नंकरोति तत्समानसूत्रनिपातेनिशीथं करोति १०

भा०पं० सहवासहैव । यद्यपिवस्तुतः सूर्यस्यापिनक्षत्रैः सहैवोदयास्तमयौतथापितस्यतत्साहित्यादर्शनात्सोमादीनामेवतत्साहित्यमुक्तम् ११ त्रयीमयइत्याद्युपासनार्थमुक्तम् १२ द्वादशमासा अ०
अरायस्य । षड्ऋतवोनेमयोयस्य त्रीणिचातुर्मास्यानिनाभयोयस्य ( मानसोत्तरे ) कृतइतरभागोयस्य । ( यत्रेतरभागेरविरथचक्रंप्रोतम् ) मानसोत्तरगिरौलग्नार्वाडुपरिवायुबद्धभूमा
॥४३॥ वितिद्रष्टव्यम् । चक्रंवा तावदुच्छ्रितमितिमंतव्यम् । अन्यथाऽयुतमात्रोच्छ्रायत्वान्मानसोत्तरस्यमेरोश्चतुरशीत्युच्छ्रायत्वादक्षस्यसाम्यानुपपत्तेः १३ तस्मिन्नक्षेचक्रप्रांतेकृतमूलः निब ॥२१॥
द्धपूर्वभागःप्रथमाक्षोमेरुमानसोत्तरायतः सार्धसप्तलक्षाधिकसार्धकोटिप्रमाणः तस्यतुर्यमानेनसार्धसप्तत्रिंशत्सहस्राधिकैकोनचत्वारिंशल्लक्षमानेनध्रुवेकृतः वायुपाशेननिबद्धउपरिभागो
यस्य १४ नीडउपवेशस्थानं गायत्र्यादिछंदोनामानः अरुणेनयोजिताः संतोदेवंवहंति १५ पुरस्तात्स्थितोपिपश्चात्प्रत्यङ्मुखआस्ते यद्वा यत्सूर्यस्यपुरस्तात्तत्तस्यैवपश्चिमत्वात्तश्चा
दित्युक्तं । ( यद्वा सवितुः पुरस्तादश्वानांपश्चात् ) अश्वस्थानंचवायुनोक्तं । "सप्ताश्वरूपच्छंदांसिवहंतेवामतोरवेः । चक्रपक्षनिबद्धानिचक्रेचाक्षःसमाहितः" इति १६ सूक्तवा
कायसुभाषिताय १७

एवंततोवारुणींसौम्यामैंद्रींचपुनस्तथाऽन्येचग्रहाःसोमादयोनक्षत्रैःसहज्योतिश्चक्रेसमभ्युद्यंतिसहवानिम्लोचंति ११ एवंमुहुर्तेनचतुस्त्रिंशल्लक्षयोजनान्य ष्टशताधिकानिसौरोरथस्त्रयीमयोऽसौचतसृषुपरिवर्ततेपुरीषु १२ यस्यैकंचक्रंद्वादशारंषण्नेमित्रिणाभिसंवत्सरात्मकंसमामनंतितस्याक्षोमेरोर्मूर्द्धनिकृतो मानसोत्तरेकृतेतरभागोयत्रप्रोतंरविरथचक्रंतैलयंत्रचक्रवद्भ्रमन्मानसोत्तरगिरौपरिभ्रमति १३ तस्मिन्नक्षेकृतमूलोद्वितीयोऽक्षस्तुर्यमानेनसंमितस्तैलयंत्रा क्षवद्ध्रुवेकृतोपरिभागः १४ रथनीडस्तुषट्त्रिंशल्लक्षयोजनायतस्तत्तुरीयभागविशालस्तावात्रविरथयुगोयत्रहयाश्छंदोनामानः सप्तारुणयोजितावहं तिदेवमादित्यम् १५ पुरस्तात्सवितुररुणःपश्चाच्चनियुक्तःसौत्येकर्मणिकिलास्ते १६ तथावालखिल्याऋषयोऽङ्गुष्ठपर्वमात्राः षष्टिसहस्राणिपुरतः सूर्यंसूक्तवाकायनियुक्ताःसंस्तुवंति १७

यदाइंद्रपुर्यः प्रचलति सूर्यः तदापंचदशघटिकाभिः संयमनींपादोनत्रयोदशलक्षयोजनाधिकसपादकोटिद्वयंयोजनानि याति १३, ७७, ५१, १०७ एवंवारुणींसौम्या
मैंद्रींच तथान्येसोमादिग्रहाः नक्षत्रैः सहज्योतिश्चक्रेउद्यंतिनिम्लोचंति ११ एवंसूर्यरथः मुहूर्तेन अष्टशताधिकचतुस्त्रिंशल्लक्षयोजनानिचतसृषुपुरीषुपरिवर्तते १२ यस्यैकं
चक्रंसंवत्सरात्मकंसमामनंति तस्यरथस्यअक्षः मेरुमूर्धनिकृतोत्तरभागः मानसोत्तरेकृतेतरभागः यत्रप्रोतंरविरथचक्रंतैलयंत्रवत् मानसोत्तरगिरौपरिभ्रमति १३ तस्मिन्नक्षे
कृतमूलः द्वितीयोक्षः सार्धसप्तत्रिंशत्सहस्राधिकैकोनचत्वारिंशल्लक्षयोजनसंमिततैलयंत्राक्षवत् ध्रुवेकृतोपरिभागः अस्ति १४ रथनीडस्तुषट्त्रिंशल्लक्षयो ॥४१॥
जनायतः नवलक्षयोजनविशालः तावान्रविरथयुगः यत्रसप्ताश्वाः छंदोनामानः सूर्यंवहंति १५ यत्ररथेअरुणः सारथिः आस्ते १६ तथावालखिल्याः ऋषयः
षष्टिसहस्रमिताः सूर्यंस्तुवंति १७

एकैकशश्चतुर्दश । द्वंद्वशः सप्तगणाः संतोमासिमास्युपासतइत्यन्वयः ( तत्रग्रामण्योयक्षाः । गंधर्वाश्चअप्सरसश्च । एतेषांपृथक्त्वंभेदंचद्वादशे वक्ष्यति सूतः ) १८ गव्यूतिः क्रोशद्वयं सगव्यूत्युत्तरं यथाभवतितथा ( भुंक्ते ) १९ इतिपंचमस्कंधेटीकायामेकविंशोध्यायः ॥ २१ ॥ द्वाविंशेसोमशुक्रादेःस्थानमाहोत्तरोत्तरं । तत्तद्गत्यनुसारेणइष्टानिष्टेतथानृणाम् ॥१॥ राशीनांअभिमुखंचअप्रदक्षिणंचोपवर्णितं सव्येनचलन्दक्षिणेनकरोतीतिविवदता । अमुष्यवयंकथमनुमीमहि अनुमिमीमहिएतत्कथंज्ञास्यामोविरुद्धत्वादित्यर्थः १ ( योराज्ञापृष्टः सशुकउवाच यथेति ) चक्रवशाद्व्यतिरेका स्वतश्चगतिरन्येतिगतिद्वयमविरुद्धमितिपरिहारार्थः । तत्तत्कालनियमेनकर्मणांविशुद्धेः साद्गुण्यस्यनिमित्तभूतमात्मानं विभज्य विजिज्ञास्यमानः वितर्क्यमाणः यथोपजोषं यथाकर्मभोगं ऋतुगुणान् शीतोष्णादीन् ३ वर्णाश्रमाचारानुवर्तिनः पुरुषास्त्रय्याम्नातैःकर्मभिरिंद्रादिरूपं योगवितानैश्च ध्यानादिभिरंतर्यामिरूपंपूजयंतः ४

तथाऽन्येचऋषयोगंधर्वाप्सरसोनागाग्रामण्योयातुधानादेवाइत्येकैकगणाःसप्तचतुर्दश मासिमासिभगवंतंसूर्यमात्मानंनानानामानंपृथङ्नानानामानःपृथक्कर्मभिर्द्वंद्वशउपासते १८ लक्षोत्तरंसार्द्धनवकोटियोजनपरिमंडलंभूवलयस्यक्षणेनसगव्यूत्युत्तरंद्विसहस्रयोजनानिसभुंक्ते १९ ॥ इतिश्रीभा०म०पं०ज्योतिश्चक्रसूर्यरथमंडलवर्णनंनामैकविंशतितमोऽध्यायः ॥ २१ ॥ ॥ राजोवाच ॥ यदेतद्भगवत आदित्यस्यमेरुंध्रुवंचप्रदक्षिणेनपरिक्रामतोराशीनामभिमुखंप्रचलितंचाप्रदक्षिणंभगवतोपवर्णितममुष्यवयंकथमनुमीमहीति १ ॥ सहोवाच ॥ यथाकुलालचक्रेणभ्रमतासहभ्रमतांतदाश्रयाणांपिपीलिकादीनांगतिरन्यैवप्रदेशांतरेष्वप्युपलभ्यमानत्वादेवंनक्षत्रराशिभिरुपलक्षितेनकालचक्रेणध्रुवंमेरुंचप्रदक्षिणेनपरिधावतासहपरिधावमानानांतदाश्रयाणांसूर्यादीनांग्रहाणांगतिरन्यैवनक्षत्रांतरेचोपलभ्यमानत्वात् २ सएषभगवानादिपुरुषएवसाक्षान्नारायणोलोकानांस्वस्तयआत्मानंत्रयीमयंकर्मविशुद्धिनिमित्तंकविभिरपिचवेदेनविजिज्ञास्यमानोद्वादशधाविभज्यषट्सुवसंतादिषुऋतुषुयथोपजोषमृतुगुणान्विदधाति ३ तमेतमिहपुरुषास्त्रय्याविद्ययावर्णाश्रमाचारानुपथाउच्चावचैः कर्मभिराम्नातैर्योगवितानैश्चश्रद्धयायजंतोऽञ्जसाश्रेयः समधिगच्छंति ४

तथान्येमुनिगंधर्वाप्सरसोनागाग्रामण्योयातुधानाः देवाः प्रतिमासिसूर्यंउपासते १८ एवंएकपंचाशल्लक्षाधिकनवकोटियोजनंभूवलयस्य मंडलं तस्यमंडलस्यदक्षिणेनसः सूर्यः गव्यूत्युत्तरद्विसहस्रयोजनानिभुंक्ते १९ इतिपंचमेएकविंशः ॥ २१ ॥ ॥ ॥ राजोवाच ॥ ॥ यदेतद्भगवतः आदित्यस्यमेरुंध्रुवंचप्रदक्षिणंपरिक्रामतः राशीनामभिमुखंअप्रदक्षिणं चलितमुपवर्णितंतद्वयंकथंजानीमः ॥ १ ॥ सहोवाच ॥ यथाकुलालचक्रेणभ्रमतासह भ्रमतांपिपीलिकादीनां अन्यैवगतिः एवंकालचक्रेणभ्रमतां तदाश्रयाणांसूर्यादीनांगतिः अन्यैव २ सएवनारायणः वेदरूपः द्वादशधाभूत्वा लोकानांस्वस्तये ऋतुगुणान् विदधाति ३ जनाः तं त्रय्याविद्ययावर्णाश्रमाचारपराः यजंतः श्रेयांसि प्राप्नुवंति ४

सएवस्वगत्यामासादिव्यवहारकारणमित्याह । सएषलोकानामात्मायावापृथिव्योरंतरेणमध्येयन्नभोवलयमंतरिक्षं तस्यमध्येयत्कालचक्रंतद्गतः राशिभिर्मेषादिभिः संज्ञायेषां । चैत्रादिसंज्ञानुचांद्रमासानां । मासमाह पक्षद्वयंमासइतिचांद्रेणमानेन । सपादंमहानक्षत्रद्वयंसौरेण । दिवानक्तंच अहोरात्रमितिपित्र्येण । षष्ठमंशंराशिद्वयम् । ५ ६ मंडलाभ्यां सहभुंजीत । सह साहि सूर्यः यदाशुक्लप्रतिपदि संक्रांतिर्भवतितदासौरचांद्रयोर्मासयोर्युगपदुपक्रमोभवतिससंवत्सरः । ततःसौरमानेनषडदिनानिवर्धंतेचांद्रमानेनषड्दिनानिह्रसंती तिद्वादशदिनव्यवधानादुभयोरग्रपश्चाद्भावोभवति एवंपंचवर्षाणिगच्छंति । तन्मध्येद्वौमलमासौभवतः पुनः षष्ठःसंवत्सरोभवति । तदेवमवांतरभेदेन संवत्सरादिपंचकं समामनं ति ७ सोमादीनामपिस्थानंकार्यंचाह । एवंचंद्रमाइति । अर्कगभस्तिभ्यः मंडलरूपेभ्यः सपादर्क्षाभ्यांसपाददिनद्वयेन ८ सर्वेषांजीवनिवहानांप्राणःअन्नमयत्वादमृतमयत्वाच्च अत एवजीवनहेतुत्वाज्जीवश्च ९ तदेवाह यएषइति । १० दक्षिणेनैवनतुतेषांपृथगन्या गतिरस्तीत्यर्थः । कालायने कालचक्रे उत्तराषाढाश्रवणसंधौअभिजिन्नक्षत्रंफलविशेषेण पृथक्क ल्पितंतेनसह । तथाचश्रुतिः । अभिजिन्नामनक्षत्रंउपरिष्टदाषाढानांअधस्ताच्छ्रोणायाइत्यादि ११

अथसएषआत्मालोकानांद्यावापृथिव्योरंतरेणनभोवलयस्यकालचक्रगतोद्वादशमासान्भुंक्तेराशिसंज्ञान्संवत्सरावयवान्मासःपक्षद्वयंदिवानक्तंचेतिसपादर्क्ष द्वयमुपदिशंतियावताषष्ठमंशंभुंजीतसवैऋतुरित्युपदिश्यतेसंवत्सरावयवः ५ अथचयावताऽर्द्धेननभोवीथ्यांप्रचरतितंकालमयनमाचक्षते ६ अथच यावन्नभोमंडलंसहद्यावापृथिव्योर्मंडलाभ्यांकात्स्न्र्येनसहभुंजीततंकालंसंवत्सरंपरिवत्सरमिडावत्सरमनुवत्सरंवत्सरमितिभानोर्मांद्यशैघ्यसमगतिभिः समा मनंति ७ एवंचंद्रमाअर्कगभस्तिभ्यउपरिष्टाल्लक्षयोजनतउपलभ्यमानोऽर्कस्यसंवत्सरभुक्तिंपक्षाभ्यांमासभुक्तिंसपादर्क्षाभ्यांदिनेनैवपक्षभुक्तिमग्रचारी द्रुततरगमनोभुंक्ते ८अथचापूर्यमाणाभिश्चकलाभिःअमराणांक्षीयमाणाभिश्चकलाभिःपितॄणामहोरात्राणिपूर्वपक्षापरपक्षाभ्यांवितन्वानःसर्वजीवनिवहप्राणो जीवश्चएकमेकंनक्षत्रंत्रिंशतामुहूर्तैर्भुंक्ते ९यएषषोडशकलःपुरुषोभगवान्मनोमयोऽन्नमयोऽमृतमयोदेवपितृमनुष्यभूतपशुपक्षिसरीसृपवीरुधांप्राणाप्यायन शीलत्वात्सर्वमयइतिवर्णयंति १०ततउपरिष्टात् त्रिलक्षयोजनतोनक्षत्राणिमेरुंदक्षिणेनैवकालायनईश्वरयोजितानिसहाभिजिताऽष्टाविंशतिः ११

सचद्यावापृथिवीमध्यस्थकालचक्रगतः सूर्यः यावताद्वादशमासान् भुंक्ते पक्षद्वयंमासः चांद्रमानेनसपादमहानक्षत्रद्वयंसौरेण अहोरात्रंपित्र्येणेति उपदिशंति यावताषष्ठ मंशंभुंजीतसऋतुः ५ यावता अर्धंभुंक्ते तदयनं ६ यावतानभोमंडलं कात्स्न्र्येनभुंजीत तंकालंसंवत्सरं परिवत्सरंइडावत्सरं अनुवत्सरंवत्सरमित्याहुः ७ ततः सूर्योपरि चंद्रमाः लक्षयोजनतः उपलभ्यमानः अर्कस्यवत्सरभुक्तिं पक्षाभ्यांमासभुक्तिं सपादर्क्षाभ्यां दिनेनैवपक्षभुक्तिं द्रुततरगमनोभुंक्ते ८ अथ आपूर्यमाणकलाभिः अमरा णांक्षीयमाणाभिःपितृणां अहोरात्राणि करोति ९ यएषभगवान् अन्नमयोऽमृतमयः देवादिपिपीलिकांतानां आप्यायनशीलत्वात्सर्वमयइतिवर्णयंति १० तदु परि त्रिलक्षयोजनांतरेनक्षत्राणि ११ ॥४४॥

उशना शुक्रः पुरतः सूर्येणभोक्ष्यमाणे नक्षत्रे । पश्चात् भुक्तनक्षत्रे । सहैवभुज्यमाने चारेणक्रमस्थनक्षत्राद्यतिक्रमेणवृष्टेर्विं ... भात्प्रहात्तपुपशमयतीतितथा १२ बुधो व्याख्यातः पुरतः पश्चात्सहैववाचरतीति । किंचिद्विशेषंचाहततइत्यादिना । ( व्यतिरिच्येत ) व्यतिरिक्तोभवेत् । अभ्रप्रायंमेघबाहुल्यं । आशंसतेसूचयति १३ ( यदिनवक्रेण वक्रगत्याऽभिवर्ततेतर्हित्रिभिस्त्रिभिः पक्षैरेकैकराशिमनुभुंक्ते ) । अघशंसोदुःखसूचकः १४ यदिनवक्रःस्यात्तर्हि परिवत्सरम् ( द्वादशमासान् ) १५ ( सर्वानेवराशीन्स्तुतावद्भिरनुवत्सरैः त्रिंशद्वर्षैः ) १६ ( येशंकल्याणमेवानुभावयंतः विष्णोःपरमंपदंध्रुवलोकम् ) १७ ॥ ॥ इतिपंचमस्कंधटीकायांद्वाविंशोऽध्यायः ॥ २२ ॥ ॥ त्रयोविंशेध्रुवस्थानंज्योतिश्चक्राश्रयं ततः । शिशुमारस्वरूपेणहरेश्चस्थितिरुच्यते ॥ १ ॥ ( तस्मादृषिलोकात् ) यत्तत्प्रसिद्धंविष्णोःपदंयत्रध्रुवउपास्तेतिष्ठतीत्यन्वयः । ( सर्वेपि ) समकालमेवयुज्यंतेइतितथातैर्नक्षत्ररूपैः ( आजीव्यआश्रयइत्यर्थः अनुभावःपराक्रमउपवर्णितोगतस्कंधे ) १

ततउपरिष्टादुशनाद्विलक्षयोजनतउपलभ्यतेपुरतःपश्चात्सहैवचार्कस्यशैघ्र्यमांद्यसाम्याभिर्गतिभिरर्कवच्चरतिलोकानांनित्यदानुकूलएवप्रायेणवर्षयन्चारेणानुमीयतसवृष्टिविष्टंभग्रहोपशमः १२ उशनसाबुधोव्याख्यातःततउपरिष्टाद्विलक्षयोजनतोबुधःसोमसुतउपलभ्यमानःप्रायेणशुभकृद्यदाऽर्काद्व्यतिरिच्येततदातिवाताभ्रप्रायानावृष्ट्यादिभयमाशंसते १३ अतऊर्ध्वमंगारकोपियोजनलक्षद्वितयउपलभ्यमानस्त्रिभिस्त्रिभिःपक्षैरेकैकशोराशीन्द्वादशानुभुंक्तेयदिनवक्रेणाभिवर्ततेप्रायेणाशुभग्रहोऽघशंसः १४ ततउपरिष्टाद्विलक्षयोजनांतरगतोभगवान्बृहस्पतिरेकैकस्मिन्राशौपरिवत्सरंचरतियदिनवक्रः स्यात्प्रायेणानुकूलोब्राह्मणकुलस्य १५ ततउपरिष्टाद्योजनलक्षद्वयात्प्रतीयमानःशनैश्चरएकैकस्मिन्राशौत्रिंशन्मासान्विलंबमानःसर्वानेवानुपर्येतितावद्भिरनुवत्सरैःप्रायेणहिसर्वेषामशांतिकरः १६ ततउत्तरस्मादृषयएकादशलक्षयोजनांतरउपलभ्यंतेयएवलोकानांशमनुभावयंतोभगवतोविष्णोर्यत्परमंपदंप्रदक्षिणंप्रक्रमंति १७ ॥ ॥ इतिश्रीभा०म०पंचमस्कंधेज्योतिश्चक्रवर्णनंनामद्वाविंशतितमोऽध्यायः ॥ २२ ॥ ॥ श्रीशुकउवाच ॥ अथतस्मात्परतस्त्रयोदशलक्षयोजनांतरतोयत्तद्विष्णोःपरमंपदमभिवदंति ॥ यत्रहमहाभागवतोध्रुवऔत्तानपादिरग्निनेंद्रेणप्रजापतिनाकश्यपेनधर्मेणचसमकालयुग्भिःसबहुमानंदक्षिणतः क्रियमाणइदानीमपिकल्पजीविनामाजीव्यउपास्तेतस्येहानुभावउपवर्णितः १

ततउपरि द्विलक्षयोजनेशुक्रः उपलभ्यते सः अर्कस्याग्रेपश्चात्सहैववाचरति लोकानांनित्यदाअनुकूलः १२ ततः उपरिष्टात् द्विलक्षयोजनेबुधः प्रायः शुभकृत् यदा अर्कात् वियुज्येततदा अनावृष्ट्यादि भयंसूचयते १३ तत उपरिष्टात्द्विलक्षयोजने अंगारकः प्रायोदुःखदः १४ तत उपरिष्टात् द्विलक्षयोजने भगवान्बृहस्पतिः प्रायेण अनुकूलो ब्राह्मणकुलस्य एकैकस्मिन् राशौयदिनवक्रः तर्हिवत्सरंचरति १५ ततः द्विलक्षयोजनेशनैश्चरः प्रतिराशौत्रिंशन्मासान्भुंके प्रायः सर्वेषां अशांतिकरः १६ तत उपरि एकादशलक्षयोजनांतरसप्तर्षयः लोकानांशमिच्छतः भगवतः विष्णोः परंपदं प्रदक्षिणं प्रक्रमंति १७ इतिपंचमेद्वाविंशः ॥ २२ ॥ ॥ श्रीशुक उवाच ॥ ॥ अथतस्मात्परतः त्रयोदशलक्षयोजनांतरोविष्णोः परमंपदंवदंति यत्रमहाभागवतःध्रुवोस्ति तदनुभावः पूर्वउक्तः १

( आजीव्यत्वमेवदर्शयतिसहीति । सम्भवः । अनिमिषेणउन्मीलितलोचनेनअप्रमत्तेनेत्यर्थः ) खलेनिखातस्तंभविशेषोमेढीस्तंभःतत्रबद्धाधान्याक्रमणपशवःबलीवर्दाः ( यथास्थानंवि
हितस्थानमनतिक्रम्य मंडलानिमेढीमभितःस्थानानि ) २ ( एतस्मिन्कालचक्रेअंतर्योगेन बहिर्योगेनचआयोजिताः स्थापिताः ध्रुवमेवाश्रित्यपरिचंक्रमंतिपुनःपुनर्भ्रमंति । नन्वेतेकथं
चिद्गुविपतेयुरिति तत्राह । यथेति । ) कर्मसारथिः सहायोयेषामम् ३ ईश्वराधारत्वात्पतनशंकैव नोचितेति वक्तुंमतांतरमाह केचिदिति । ज्योतिरनीकंज्योतिश्चक्रं योगधारणायां
स्थितमितिशेषः ४ लांगूलेअग्रादधोभागे । उदगयनानिअभिजिदादीनिपुनर्वस्वंतानिचतुर्दशदक्षिणपार्श्वे । दक्षिणायनानितुपुष्यादीन्युत्तराषाढांतानिचतुर्दशवामपार्श्वे ५

सहिसर्वेषांज्योतिर्गणानांग्रहनक्षत्रादीनामनिमेषेणाव्यक्तरंहसाभगवताकालेनभ्राम्यमाणानांस्थाणुरिवावष्टंभईश्वरेणविहितःशश्वदवभासते यथामे
ढीस्तंभआक्रमणपशवःसंयोजितास्त्रिभिःसवनैर्यथास्थानंमंडलानिचरंति २ एवंभगणाग्रहादयएतस्मिन्नंतर्बहिर्योगेनकालचक्रआयोजिताध्रुवमेवाव
लंब्यवायुनोदीर्यमाणाआकल्पांतंपरिचंक्रमंति ॥ नभसियथामेघाः श्येनादयोवायुवशाः कर्मसारथयःपरिवर्तंते एवंज्योतिर्गणाःप्रकृतिपुरुषसंयोगानु
गृहीताःकर्मनिर्मितगतयोभुविनपतंति ३ केचिदेतज्ज्योतिरनीकंशिशुमारसंस्थानेनभगवतोवासुदेवस्ययोगधारणायामनुवर्णयंति ४ यस्यपुच्छाग्रेऽ
वाक्शिरसःकुंडलीभूतदेहस्यध्रुवउपकल्पितः तस्यलांगूलेप्रजापतिरग्निरिंद्रोधर्मइति पुच्छमूलेधाताविधाताचकट्यांसप्तर्षयस्तस्यदक्षिणावर्तकुंडलीभू
तशरीरस्ययान्युदगयनानिदक्षिणपार्श्वेतुनक्षत्राण्युपकल्पयन्तिदक्षिणायनानितुसव्येयथाशिशुमारस्यकुंडलाभोगसन्निवेशस्यपार्श्वयोरुभयोरप्यवयवाः
समसंख्याभवंति पृष्ठेत्वजवीथी आकाशगंगाचोदरतः ॥ ५ ॥

चक्रेणभ्राम्यमाणानांग्रहनक्षत्रादीनांस्थाणुरिव आश्रयोस्ति २ यथाचमेढीस्तंभेयोजिताः पशवःतथाएते ग्रहनक्षत्रादयः कालचक्रयोजिताः वायुनाप्रेर्यमाणाःतंपरिभ्रमंति
यथाचनभसिवायुवशाः मेघाःपक्षिणश्चपरिवर्तंते एवंप्रकृतिपुरुषानुगृहीताः ज्योतिर्गणाः कर्मनिर्मितगतयः भुविनपतंति ३ केचित् एतत् ज्योतिश्चक्रं शिशुमारसंस्थाने ॥४९॥
नवासुदेवस्ययोगधारणायांस्थितमिति अनुवर्णयंति ४ यस्यअवाक्शिरसः कुंडलीभूतदेहस्य पुच्छाग्रेध्रुवः तदधः प्रजापतिधर्माग्नींद्राश्च पुच्छमूलेधाताविधाताच क
ट्यांसप्तर्षयः दक्षिणपार्श्वेअभिजिदादीनि नक्षत्राणि १४ वामपार्श्वेपुष्यादीनि १४ पृष्ठेअजवीथी उदरेआकाशगंगा —

तदेकस्यावयवविशेषेणविभज्य दर्शयति । पुनर्वसुपुष्यावित्यादिना । पुनर्वसुरुदगयनांत्यंनक्षत्रं । पुष्योदक्षिणायनस्याद्यं(श्रोण्योःकट्योः) आर्द्राश्लेषेतयोर्निरंतरे । अभिजिदुत्तराषाढेउत्तरदक्षिणायनयोराद्यंतनक्षत्रे । श्रवण पूर्वाषाढेतुतयोरुत्तरपूर्वे । धनिष्ठामूलंचतयोरप्युत्तरपूर्वे । मघादीन्यष्टान्यनुराधांतानिदक्षिणायनान्यष्टतानिवामपार्श्ववंक्रिषुवामपार्श्वास्थिषु । मृगशीर्षादीनिप्रातिलोम्येनपूर्वाभाद्रपदांतानियान्युदगयन नक्षत्राण्यष्टतानिदक्षिणपार्श्वास्थिषु । शतभिषाज्येष्ठेउत्तरदक्षिणायनयोः येअवशिष्टेतेस्कंधयोर्न्यसेत् ६ यमोनक्षत्ररूपः तथा नारायणोऽश्विनौच । ककुदिगलपृष्ठशृंगे ७ ज्योतिषांलोकायाश्रयायकालायनाचकालचक्ररूपायनमोऽभिधीमहीतिमंत्रेणोपतिष्ठेत ८ मंत्रकृतांपूर्वोक्तंमंत्रंजपताम् ९ इतिपंचमस्कंधे टीकायां त्रयोविंशोध्यायः ॥ २३ ॥ एवंत्रिभिर्ध्रुवमर्यादापालनंवर्णितंतथा ॥ अधोभुवनमर्यादापालनंत्रिभिरुच्यते ॥ १ ॥ चतुर्विंशेरवेर्वाक्स्वर्भान्वादिस्थितिक्रमात् । अतलादिबिलस्वर्गमर्यादाःसप्तवर्णिताः॥ २ ॥ सूर्यमारभ्यध्रुवांतसंनिवेशंनिरूप्यइदानींसूर्यादधस्तान्निरूपयतिअधस्तादिति । स्वर्भानुः राहुः अलमतलेभ्रंसिंहिकायाः पुत्रः १

पुनर्वसुपुष्यौदक्षिणवामयोः श्रोण्योरार्द्राश्लेषेचदक्षिणवामयोःपश्चिमयोः पादयोरभिजिदुत्तराषाढे दक्षिणवामयोर्नासिकयोर्यथासंख्यंश्रवणपूर्वाषाढेदक्षिणवामयोर्लोचनयोर्धनिष्ठामूलंचदक्षिणवामयोःकर्णयोः मघादीन्यष्टनक्षत्राणिदक्षिणायनानिवामपार्श्ववंक्रिषुयुंजीत तथैवमृगशीर्षादीन्युदगयनानिदक्षिणपार्श्ववंक्रिषुप्रातिलोम्येनप्रयुंजीतशतभिषाज्येष्ठेस्कंधयोर्दक्षिणवामयोर्न्यसेत् ६ उत्तराहनावगस्तिरधराहनौयमोमुखेचांगारकःशनैश्चरउपस्थेबृहस्पतिःककुदिवक्षस्यादित्योहृदयेनारायणोमनसिचंद्रोनाभ्यामुशनास्तनयोरश्विनौ बुधःप्राणापानयोराहुर्गलेकेतवः सर्वांगेषु रोमसुसर्वेतारागणाः ७ एतदुहैवभगवतोविष्णोःसर्वदेवतामयंरूपमहरहः संध्यायांप्रयतोवाग्यतोनिरीक्षमाणउपतिष्ठेत । नमोज्योतिर्लोकायकालायनायानिमिषांपतयेमहापुरुषायाभिधीमहीति ८ ग्रहर्क्षतारामयमाधिदैविकंपापापहंमंत्रकृतांत्रिकालम् ॥ नमस्यतःस्मरतोवात्रिकालंनश्येततत्कालजमाशुपापम् ९ इतिश्रीभा०म०पं०शिशुमारसंस्थानवर्णनंनामत्रयोविंशोध्यायः ॥ २३ ॥ ॥ ॥ श्रीशुकउवाच ॥ ॥ अधस्तात्सवितुर्योजनायुतेस्वर्भानुर्नक्षत्रवच्चरतीत्येकेयोऽसावमरत्वंग्रहत्वंचाऽलभतभगवदनुकंपयास्वयमसुरापसदःसैंहिकेयोह्यतदर्हःतस्यताताजन्मकर्माणिचोपरिष्टाद्वक्ष्यामः १

पुनर्वसुपुष्यौ दक्षिणवामश्रोण्योः आर्द्राश्लेषेपश्चिमदक्षिणवामपादयोः अभिजिदुत्तराषाढेदक्षिणवामयोः नासिकयोः श्रवणपूर्वाषाढेदक्षिणवामनेत्रयोः धनिष्ठामूलेदक्षिणवामकर्णयोः मघादीनिअष्टवामपार्श्वास्थिषुतथैवमृगशीर्षादीनिअष्टदक्षिणवामपार्श्ववंकिषुप्रातिलोम्येन युंजीत शतभिषाज्येष्ठेदक्षिणवामयोः स्कंधयोः ६ उत्तराहनौ अगस्तिः अधराहनौनक्षत्ररूपोयमः मुखेमंगलः उपस्थेशनिः ककुदिबृहस्पतिः वक्षसिसूर्यः हृदयेनारायणः मनसिचंद्रः नाभ्यांशुक्रः स्तनयोः अश्विनौ प्राणापानयोर्बुधः गलेराहुः सर्वांगेषुकेतवः रोमसुसर्वेतारागणाः ७ एतत् भगवतः सर्वदेवतामयंरूपं अहरहः संध्यायांवाग्यतः निरीक्षन् उपतिष्ठेत नमोज्योतिर्लोकायकालायनमोऽनिमिषांपतयेमहापुरुषायधीमहीति ८ ग्रहर्क्षतारामयमाधिदैविकंपापापहंमंत्रकृतांत्रिकालम् नमस्यतःस्मरतोवात्रिकालंनश्येततत्कालजमाशुपापम् ९ ॥ इतिपंचमेत्रयोविंशः ॥ २३ ॥
॥ श्रीशुकउवाच ॥ ॥ अधस्तात्सवितुः अयुतयोजनेराहुः योसौभगवदनुग्रहात् अमरत्वं ग्रहत्वंच लेभे १

ग्रहणंवक्तुमाह । यददः प्रतपतस्तरणेर्मंडलं ( योजनायुतंतस्यविस्तारः) अमृतपानेमध्यप्रवेशेनतयोः (सूर्याचंद्रमसोः)व्यवधानंकरोतीतितथा । अतएवैताभ्यांसूचितत्वाद्वैरमनुबध्नाती तितथा (अतएवपर्वणितावभिधावति) २ (उभयत्रापिसूर्याचंद्रमसोरपि) भागवतंचक्रंपरिभ्रमत्अभिअभिमुखंमुहूर्तमवस्थितःसन् (दुर्विषहेणतत्तेजसाउद्विजमानआराद्दूरादेव )इत्येवमंत रातदवस्थानंउपरागंवदंति । तत्रचक्रजुवक्रस्थितिभ्यांअर्धग्राससर्वग्रासौनतुग्रासोस्तिवस्तुतोदूरांतरत्वात्३तावन्मात्रेयोजनायुते४अंतरिक्षंग्रहहीनंतस्यावधिमाह ।यावद्वायुःप्रवातीति तीव्रोवातीत्यर्थः । तस्याप्यवधिमाह यावन्मेघाइति ५ पृथिव्याउपरिभूर्लोकावधिमाह । यावदितियावद्धंसादयः पार्थिवात्रिकाराः ६ योजनायुतांतरेणप्रत्येकमुच्छ्रिताः आयामोयः ( अंड-) कटाहस्यतावद्विस्तारेणोपक्लृप्ताः ७ सामान्येनविवराणिवर्णयतिएतेष्वित्यादिना अथातलइत्यतः प्राक्तनेनग्रंथेन । एतेषुदैत्यादयोनिवसंतीत्यन्वयः । ( काद्रवेयाः सर्पाः ) कथंभूतेषु । अधिकः कामभोगश्चऐश्वर्यानंदश्चविभूतिश्चसंपत्तिः । ( स्वर्गापेक्षयाअधिककामभोगादिभिः ) सुसमृद्धाभवनादयोयेषु ( तेषु । तत्रआक्रीडामिथुनक्रीडायोग्यउद्यान विशेषः । आसमंताद्विहारोयत्रसआविहारःस्थलविशेषः ) कथंभूताः-(ते)नित्यंप्रमुदिता अनुरक्ताः कलत्रादयोयेषां ( ते ईश्वरप्रसादात् ) नप्रतिहतः ( अखंडितः ) कामोयेषांते । माययाविनोदोयेषां ( तमायाविनइत्यर्थः ) ८

यददस्तरणेर्मंडलंप्रतपतस्तद्विस्तरतोयोजनायुतमाचक्षतेद्वादशसहस्रंसोमस्यत्रयोदशसहस्रंराहोर्यःपर्वणितद्व्यवधानकृद्वैरानुबंधः सूर्याचंद्रमसावभिधा वति २तन्निशम्योभयत्रापिभगवतारक्षणायप्रयुक्तंसुदर्शनंनामभागवतंदयितमस्त्रंतत्तेजसादुर्विषहेणमुहुः परिवर्तमानमभ्यवस्थितोमुहूर्तमुद्विजमानश्चकित हृदयआरादेवनिवर्ततेतदुपरागमितिवदंतिलोकाः ३ ततोऽधस्तात्सिद्धचारणविद्याधराणांसदनानितावन्मात्रएव४ततोऽधस्ताद्यक्षरक्षःपिशाचप्रेतभूतग णानांविहाराजिरमंतरिक्षंयावद्वायुःप्रवातियावन्मेघाउपलभ्यंते५ ततोऽधस्ताच्छतयोजनांतरइयंपृथिवीयावद्धंसभासश्येनसुपर्णादयःप्रतत्रिप्रवराउत्पतं तीति ६ उपवर्णितंभूमेर्यथासंनिवेशावस्थानमवनेरप्यधस्तात्सप्तभूविवराएकैकशोयोजनायुतांतरेणायामविस्तारेणोपक्लृप्ताःअतलंवितलंसुतलंतलातलंम हातलंरसातलंपातालमिति ७ एतेषुहिबिलस्वर्गेषुस्वर्गादप्यधिककामभोगैश्वर्यानंदविभूतिभिः सुसमृद्धभवनोद्यानाक्रीडविहारेषुदैत्यदानवकाद्रवेयानि त्यप्रमुदितानुरक्तकलत्रापत्यबंधुसुहृदनुचरागृहपतयईश्वरादप्यप्रतिहतकामामायाविनोदा निवसंति ८

अथसूर्यमंडलं योजनायुतमाचक्षते द्वादशसहस्रं सोमस्य त्रयोदशसहस्रंराहोः यःपर्वणिपर्वणिपूर्ववैरेण सूर्याचंद्रमसोधावति २ तद्रक्षणार्थं भगवत्प्रयुक्तचक्रतेजसाभीतः सन्निवर्तते तत् उपरागइतिलोकाः वदंति ३ ततोऽधस्तात्सिद्धचारणादीनांस्थानानि ४ ततोधस्तात् यक्षरक्षःपिशाचादीनांक्रीडास्थानमंतरिक्षं यावन्मेघाः उपलभ्यंते यावद्वायुर्वाति ५ ततोधः शतयोजनांतरे इयंपृथ्वी तदुपरियावत्हंसश्येनादिपक्षिणउत्पतंति तावत्भूर्लोकः ६ भूमेः सन्निवेशावस्थानं एतत् वर्णितम् अथभूमेः अधस्ता त्सप्तभूविवराणि एकैकशः अयुतयोजनांतरेण आयामविस्तारेण उपक्लृप्तानि तद्यथा अतलं वितलं सुतलं महातलं रसातलं तलातलं पातालानिति ७ एतेषु बिलस्वर्गे षुस्वर्गादप्यधिककामभोगैश्वर्यानंदविभूतिभिः सुसमृद्धभवनोद्यानाक्रीडाविहारेषु दैत्यदानवकाद्रवेयाः नित्यप्रमुदिताः निवसंति ८

किंच हेमहाराज येषु ( मायाविना ) मयेननिर्मिताः पुरः चकासतीत्यन्वयः । कथंभूताः । नानायेमणिप्रवरास्तेषांप्रवेकामुख्यास्तैर्वि[illegible] वि[illegible]वनादिभिः तथाविवरेश्वराणां ( बिलस्वामिनां ) गृहोत्तमैश्चसमलंकृताः ( तत्रचैत्यंदेवालयः आयतनानिस्थानविशेषाः ) कीदृशैर्गृहोत्तमैः नागाश्चअसुराश्च मिथुनभूताः पारावतादयश्चतैराकीर्णाः ( व्याप्ताः ) कृत्रिमाः (कारुनिर्मिता)भूमयोयेषुतैः पाठांतरेनानास्त्रनत्वंमिथुनविशेषणम् ९ उद्यानानिचअतितरांअमरलोकश्रियमतिशयितानियेषुचकासतीत्यन्वयः । काभिः । श्रीभिः । केषां । कुसुमफलस्तबकाश्चसुभगकिसलयानिचतैरवनताःरुचिराविटपायेषांविटपिनांवृक्षाणांलतानामंगैरालिंगितानांश्रीभिः ( शोभाभिः ) तथासमिथुनाश्चक्रवाकामिथुनसहितायेविविधाविहंगमास्तद्युक्तानांजलाशयानांचश्रीभिः । कीदृशानांअमलैर्जलैः पूर्णानां । पुनरपिकैरतिशयितानिउद्यानानि । झषकुलोल्लंघनेनक्षुभितंयज्जलाशयानांनीरंतस्मिन्यानिनीरजादीनितेषांवनेषुकृतंनिकेतनं ( निलयो ) यैस्तेषांअर्थात्पक्षिणांएकोऽखंडोयोविहारः तेनाकुलाश्चतेमधुराश्चविविधस्वनादयः तैर्येइंद्रियोत्सवास्तैश्च । यद्वा समिथुनेत्यादेरुत्तरेणैवसंबंधःमनइंद्रियानंदिभिरितिस्वनादीनांविशेषणम् । तत्रनीरजंसामान्येनकमलंलोहितंशतपत्रंतद्विशेषः १० अहो रात्रादिभिर्यद्भयंतन्नोपलक्ष्यतेसूर्याद्यभावात् ११ ( महांतोयेअहिप्रवरासर्पश्रेष्ठास्तेषांशिरस्थितानिरत्नानि ) १२ ( दिव्यौषधीनांरसैः रसायनैः भिषग्राचितादिरसविशेषैः आधयोमनोदुःखानि ) । क्लमः श्रमः । ग्लानिरनुत्साहः ( पलितंकेशादाशौक्ल्यं ) १३ कल्याणानांमंगलरूपाणां ( कुतश्चित्निमित्तात् १४ यस्मिन्भगवत्तेजसिप्रविष्टेपुंसवनानिगर्भाः । 'आचतुर्थाद्भवेत्स्रावः पातः पंचमषष्ठयोः' इतिस्रावपातौज्ञेयौ १५

येषुमहाराज मयेनमायाविनाविनिर्मिताःपुरोनानामणिप्रवरप्रवेकविरचितविचित्रभवनप्राकारगोपुरसभाचैत्यचत्वरायतनादिभिर्नागासुरमिथुनपारावतशुकसारिकाकीर्णकृत्रिमभूमिभिर्विवरेश्वरगृहोत्तमैः समलंकृताश्चकासति ९ उद्यानानिचातितरांमनइंद्रियानंदिभिः कुसुमफलस्तबकसुभगकिसलयावनतरुचिरविटपविटपिनांलतांऽगालिंगितानांश्रीभिः समिथुनविविधविहंगमजलाशयानाममलजलपूर्णानांझषकुलोल्लंघनक्षुभितनीरनीरजकुमुदकुवलयकह्लारनीलोत्पललोहितशतपत्रादिवनेषुकृतनिकेतनानामेकविहाराकुलमधुरविविधस्वनादिभिरिंद्रियोत्सवैरमरलोकश्रियमतिशयितानि १० यत्रहवावनभयमहोरात्रादिभिः कालविभागैरुपलक्ष्यते ११ यत्रहिमहाहिप्रवराशिरोमणयः सर्वतमः प्रबाधंते १२ नवाएतेषुवसतांदिव्यौषधिरसरसायनान्नपानस्नानादिभिराधयोव्याधयोवलीपलितजरादयश्चदेहवैवर्ण्यदौर्गंध्यस्वेदक्लमग्लानिरितिवयोऽवस्थाश्चभवंति १३ नहितेषांकल्याणानांप्रभवतिकुतश्चनमृत्युर्विनाभगवतेजसश्चक्रापदेशात् १४ यस्मिन्प्रविष्टेऽसुरवधूनांप्रायःपुंसवनानिभयादेवस्रवंतिपतंतिच १५

९ १० यत्रमयेननिर्मिताः संपदः स्वर्गलोकश्रियं अतिशायिताः यत्र अहोरात्रादिभयंचनास्ति ११ यत्रसर्पशिरोमणयः सर्वे तमः प्रबाधंते १२ यत्ररोगाद्याःवयोवस्थाश्च न १३ तत्रत्यानांआधिव्याधयः मृत्युश्चनभवति १४ विनासुदर्शनात् यस्मिंश्चक्रेप्रविष्टे असुरवधूनांगर्भाः स्रवंति पतंतिच १५

सवर्णेपुरुषेरताः स्वैरिण्यः । कामिन्यस्त्वसवर्णेपि । तत्राप्यतिचंचलाः पुंश्चल्यः । बि लायनं । बिलस्थानं । साधयित्वा संभोगसमर्थंकृत्वा स्वेयेअसाधारणाविलासाःतत्पूर्वकोऽवलोकः तेनानुरागयुक्तंयत्स्मितंतेनसंलापो ( मिथोभाषणं ) उपगूहनमालिंगनंचतदादिभिः यस्मिन्हाटकाख्येरसेउपयुक्तेसेविते १६ भवयोर्भवस्यभवान्याश्च( यद्वीर्यरूपंजलं) चित्रभानुरग्निः (वायुनासमिध्यमानः पिबति) अथतेननिष्ठ्यूतंफूत्कृत्य त्यक्तं । असुरेंद्राणामवरोधेषुअंतःपुरेषुपुरुषीभिःस्त्रीभिः १७ सुतलेबलिरधुनाप्यास्तइत्यन्वयः । कथंभूतः । महेंद्रस्यप्रियंकर्तुमिच्छताभगवताप्रथमंपराक्षिप्तंअपहृतंलोकत्रयंयस्यसपुनर्भगवतोऽनुकंपयैवतत्रप्रवेशितःसन् । कीदृशेन ( तेन ) योऽदितेःसकाशात्भूत्वाप्रकटीभूयबटुवामनरूपेण ( बटुरूपह्रस्वाकारेण) लब्धकायः ( गृहीतमूर्तिर्बभूव ) तेन १८ केचित्तरसुतलराज्यंभूमिदानफलंमन्यंतेतान्निराकरोति नोएवैतादिति यद्बिलनिलयेवितरस्थानेऐश्वर्यंएतत्भूमिदानस्यसाक्षात्कारःफलंनभवत्येव । कुतइत्यपेक्षायांएवंभूतस्यदानस्यसाक्षादपवर्गहेतुत्वादित्याह । यत्तत्प्रसिद्धंदानंतस्य । तदेवाह भगवतिअशेषजीवनिकायानां ( समग्रजीवसमूहानां ) जीवभूतश्चासावात्मभूतश्च । सर्वजीवनियंताचासावात्मारामश्चेत्यर्थः । तस्मिन्संप्रतिपादितस्य ( समर्पितस्य ) । कथंभूततीर्थतमेजगद्गुरौउपपन्नेअवसरप्राप्तेयुकेवा १९

अथातलेमयपुत्रोऽसुरोबलोनिवसति येनहवाइहसृष्टाः षण्णवतिर्मायाः काश्चनाद्यापिमायाविनोधारयंति यस्यचजृंभमाणस्यमुखतस्त्रयस्त्रीगणाउदपद्यंतस्वैरिण्यःकामिन्यः पुंश्चल्यइतियावैबिलायनंप्रविष्टंपुरुषंरसेनहाटकाख्येनसाधयित्वास्वविलासावलोकनानुरागस्मितसंलापोपगूहनादिभिःस्वैरंकिलरमयंतियस्मिन्नुपयुक्तेपुरुषईश्वरोऽहंसिद्धोऽहमित्ययुतमहागजबलमात्मानमभिमन्यमानःकत्थतेमदांधइव १६ ततोऽधस्ताद्वितलेहरोभगवान्हाटकेश्वरःस्वपार्षदभूतगणावृतः प्रजापतिसर्गोपबृंहणायभवोभवान्यासहमिथुनीभूतआस्तेयतः प्रवृत्तासरित्प्रवराहाटकीनामभवयोर्वीर्येणयत्रचित्रभानुर्मातरिश्वनासमिध्यमानओजसापिबतितन्निष्ठ्युतंहाटकाख्यंसुवर्णंभूषणेनासुरेंद्रावरोधेषुपुरुषाः सहपुरुषीभिर्धारयंति १७ ततोऽधस्तात्सुतलउदारश्रवाः पुण्यश्लोकोविरोचनात्मजोबलिर्भगवतामहेंद्रस्यप्रियंचिकीर्षमाणेनादितेर्लब्धकायोभूत्वाबटुवामनरूपेणपराक्षिप्तलोकत्रयोभगवदनुकंपयैवपुनः प्रवेशितइंद्रादिष्वविद्यमानयासुसमृद्ध्याश्रियाऽभिजुष्टः स्वधर्मेणाराधयंस्तमेवभगवंतमाराधनीयमपगतसाध्वसआस्तेऽधुनाऽपि १८ नोएवैतत्साक्षात्कारोभूमिदानस्ययत्तद्भगवत्यशेषजीवनिकायानांजीवभूतात्मभूते परमात्मनिवासुदेवेतीर्थतमेपात्रउपपन्नेपरयाश्रद्धयापरमादरसमाहितमनसासंप्रतिपादितस्यसाक्षादपवर्गद्वारस्ययद्बिलनिलयैश्वर्यम् १९

अथ अतले मयपुत्रः बलोनिवसति यस्यजृंभमाणस्यमुखतः त्रयः स्त्रीगणाः उत्पन्नाः स्वैरिण्यः कामिन्यः पुंश्चल्यइति ताः विलायनं प्रविष्टं पुरुषंहाटकाख्यरसेनभोगसमर्थंकृत्वारमयंति १६ ततः अधस्तात् वितले हाटकेश्वरः भवान्यासह आस्ते तयोर्वीर्यतः प्रवृत्ताहाटकीनामनदी तद्रेतोदकंअग्निः वायुनाइद्धः सन्पिबति तेनफूत्कृत्यत्यक्तंतत्हाटकाख्यं सुवर्णंभवति तत् पुरुषाः स्त्रीभिःसहधारयंति १७ ततोधः सुतलेपुण्यश्लोकः विरोचनात्मजः श्रीवामनेनहृतलोकत्रयः श्रियाभिजुष्टः स्वधर्मेण हरिंआराधयन्सन्बलिः आस्ते १८ एतत् ऐश्वर्यंभूदानस्य फलं नभवति वासुदेवे पात्रे उपपन्नेसति प्रतिपादितस्य तस्[illegible]त् १९

किंच । यस्यनामक्षुतादिषुविवशोपिसकृदपिगृणन्कर्मबंधंविधुनोति । कथंभूतम् ( कर्मबंधनं ) यस्यप्रतिबाधनं ( नाशं ) [illegible] न्यथैवोपलभंते ( उपायांतरेण ) यन्निवृत्त्यर्थं योगसांख्यादीन्महाक्लेशाननुभवंति ( मुमुक्षवः ) तंकर्मबंधं ( यन्नामोच्चारमात्रेण ) त्यजतीत्यर्थः २० तत्तस्मिन्भगवतां भक्तानां ज्ञानिनांच यथायथं आत्मदेज्ञानदेहरो आत्मत मेव ( प्रियतमे ) समर्पितस्यभूमिदानस्यनतत्फलमितिपूर्वेणैवसंबंधः २१ किंच । नेदं भगवदनुकंपाफलमपि । किंतुएकांतभक्तस्यतस्यांतरायमात्रमित्याह । नेति । भगवान् अमुष्यअमुं ( बलिं ) नैवानुगृहीतवान् । तत्रहेतुः । यदुतेति । आत्मन ईश्वरस्यानुस्मृतिं मुष्णातीतितथा। तदुक्तं "वासुदेवेमनो यस्यजपहोमार्चनादिषु । तस्यांतरायोमैत्रेयदेवेंद्रत्वादिकं फलं " इति २२ तस्यैकांतभक्तिं सप्रपंचामाह । यत्तत्अतिप्रसिद्धं इति वक्ष्यमाणसूत्राचेहन्यम्वयः । कथंभूतः अनधिगतः अन्यउपायोयेन तेनभगवता याच्ञाछलेनअपहृतं स्वशरीरमात्रावशेषितं लोकत्रयंयस्य । सम्यक्प्रतिमुक्तोबद्धः । अपविद्धः प्रक्षिप्तोपिसन् २३ बतेतिखेदेभगवान्विद्वानपियोसाविंद्रः यस्यैकांतेनबृहस्पतिः सचिवः सहायः यतो मंत्रार्थवृतः सोपिपुरुषार्थेपुनानिष्णातः ननिपुणः यतः ( यः ) उपेंद्रेण ( वामनेन ) द्वारभूतेनतं उपेंद्रंविहायआत्मानं मांलोकत्रयमयाचत तंमंत्रप्रदंबृहस्पतिमतिहायेतिवा । तस्मिन्प्रसन्ने सएववरणीयो नलोकत्रयं यतस्तदादितुच्छमित्याह । अतिगंभीरंअनंतं वयोयस्यतस्यकालस्यावयवरूपं यन्मन्वंतरं तेनपरिवृत्तंविपर्यस्तंलोकत्रयमिदंकियत् २४ प्रह्लादस्त्वेकएवार्थेनिष्णात इत्याह यस्यानुदास्यमिति । स्वपितरि उपरतेमृतेसति स्वपित्र्यंपदं भगवतादीयमानमपि भगवतः खलुपरमन्यदितिकृत्वानतुजग्राहेत्यर्थः २५ ननुत्वमतिवीरः कुतस्तमेव बहुमन्यसेतत्राह । तस्यानुपथं अनुवर्त्मअमृजिता अक्षीणाः कषायारागादयो यस्य परिहीणो भगवदनुग्रहोयस्य सकोवाउपगंतुमिच्छतीति २६

यस्यहवावक्षुत्पतनप्रस्खलनादिषुविवशः सकृन्नामाभिगृणन्पुरुषः कर्मबंधनमंजसाविधुनोतियस्यहैवप्रतिबाधनंमुमुक्षवोऽन्यथैवोपलभंते २० तद्भगवतामात्मवतांसर्वेषामात्मन्यात्मदआत्मतयैव २१ नवैभगवान्नूनममुष्यानुजग्राहयदुतपुनरात्मानुस्मृतिमोषणंमायामयभोगैश्वर्यमेवातनुतेति २२ यत्तद्भगवताऽनधिगतान्योपायेनयाच्ञाच्छलेनापहृतस्वशरीरावशेषितलोकत्रयोवरुणपाशैश्चसंप्रतिमुक्तोगिरिदर्यांचापविद्धइतिहोवाच २३ नूनंबतायंभगवानर्थेपुनर्निष्णातोयोऽसाविंद्रोयस्यसचिवोमंत्रायवृतएकांततोबृहस्पतिस्तमतिहायस्वयमुपेंद्रेणात्मानमयाचतात्मनश्चाशिषोनोएवतदास्यमतिगंभीरवयसःकालस्यमन्वंतरपरिवृत्तंकियल्लोकत्रयमिदम् २४ यस्यानुदास्यमेवास्मत्पितामहःकिलववेनतुस्वपित्र्यंयदुताकुतोभयंपदंदीयमानंभगवतः परमितिभगवतोपरतेखलुस्वपितरि २५ तस्यमहानुभावस्यानुपथममृजितकषायःकोवास्मद्विधःपरिहीणभगवदनुग्रहउपजिगमिषतीति २६

पुरुषः यस्यसकृन्नामगृणन्कर्मबंधंधुनोति २० तस्मिन्हरौसमर्पितस्यभूदानस्य नेदंफलं २१ भगवान्अमुंबलिंनैवानुगृहीतवान् यतः भगवत्स्मृतिमोषणंऐश्वर्यमेवातनुत २२ २३ २४ २५ २६

अथशुकोक्तिः । नन्वेवंभूतश्चेद्बलिः तर्हि तस्यैव चरितंविस्तरेण कथ्यतांतत्राह तस्यबलेरनुचरितमुत्तरस्मात् उपरिष्टात् अष्टमे विस्तरिष्यते । यस्यद्वार्यवतिष्ठते निजजनेष्वनुकंपितंकृतार्द्रकंपंहृदयंयस्य । द्वारपालकर्म दर्शयति येनश्रीनारायणेनबलेर्द्वारिविशन् दशकंधरो ( रावणः ) उच्चाटितः केनपदा तत्राप्यंगुष्ठेनैव २७ यथाहरिणास्वभक्तोबालेः सुतले निहितः सुखमास्ते । एवं महादेवभक्तोपिमयस्तलातलेसुखमास्तइत्याह । ततइति । लब्धंपदंस्थानंयेन महीयतेपूज्यते २८ ( काद्रवेयाणां कद्रूसुतानां ) नैकशिरसां अनेकफणानांगणोस्ति । एतत्प्रपंचयति कुहकेति महाभोगवंतोमहाकायाः । पुरुषवाहात्हरेर्वाहनात् ( गरुडात्सततंउद्विजमाना बिभ्यतः ) २९ ( पणयोदैत्यादानवाः । निवातकवचाःकालकन्यापुत्राः कालेयाः ) विबुधप्रत्यनीकाः देवशत्रवः ( उत्पत्त्यैवमहौजसोमहाबलाःमहत्साहसंबलात्कारोस्तियेषांते ) सकलेष्वपिलोकेषु अनुभावः ( सामर्थ्यं ) यस्यतस्यैवहरेस्तेजसानुदर्शनेनप्रतिहतोबलावलेपोवीर्यमदोयेषांतेबिलेशयाः सर्पाइवइंद्रदूत्याप्रयुक्ताभिर्मंत्रवर्णाभिर्मंत्ररूपाभिर्वाग्भिः । एवंहिवैदिकमाख्यानं । पणिभिरसुरैर्निगूढांगामन्वेष्टुंसरमांदेवशुनीमिंद्रेणप्रहितांसंधिमिच्छंतःपणयः प्राहुः "किमिच्छंतीसरमे" त्यादि । साचसंधिमनिच्छंतींद्रस्तुतिपूर्वकंतान्प्रतिपरुषमाह । "हताइंद्रेणपणयःशयध्वं"इत्यादि । तेचतच्छ्रुत्वाबिभ्यतीति३० महाभोगिनोमहाफणाः महान्अमर्षः क्रोधोयेषां । पंचादिसंख्यानिशीर्षाणियेषां । शीर्ष्णामितिवक्तव्येशीर्षाणामित्यार्षः ३१ इतिपंचमस्कंधेटीकायांचतुर्विंशोध्यायः॥२४॥

अथतस्यानुचरितमुत्तरस्माद्विस्तरिष्यते यस्यभगवान्स्वयमखिलजगद्गुरुर्नारायणोद्वारिगदापाणिरवतिष्ठते निजजनानुकंपितहृदयोयेनांगुष्ठेनपदादशकंधरोयोजनायुतंदिग्विजयउच्चाटितः २७ ततोऽधस्तात्तलातलेमयोनामदानवेंद्रस्त्रिपुराधिपतिर्भगवतापुरारिणात्रिलोकीशंचिकीर्षुणानिर्दग्धस्वपुरत्रयस्तत्प्रसादाल्लब्धपदोमायाविनामाचार्योमहादेवेनपरिरक्षितोविगतसुदर्शनभयोमह[illegible] २८ ततोऽधस्तान्महातलेकाद्रवेयाणांसर्पाणांनैकशिरसांक्रोधवशोनामगणःकुहकतक्षककालियसुषेणादिप्रधानामहाभोगवंतःपतत्रिराजाधिपतेःपुरु[illegible]हादनवरतमुद्विजमानाः स्वकलत्रापत्यसुहृत्कुटुंबसंगेनक्वचित्प्रमत्ताविहरंति २९ ततोऽधस्ताद्रसातलेदैतेयादानवाःपणयोनामनिवातकवचाः का[illegible]हिरण्यपुरवासिनइतिविबुधप्रत्यनीकाउत्पत्त्यामहौजसोमहासाहसिनोभगवतःसकललोकानुभावस्यहरेरेवतेजसाप्रतिहतबलावलेपाबिलेशयाइववसंतिये[illegible]रमयेंद्रदूत्या[illegible]मंत्रवर्णाभिरिंद्राद्बिभ्यति ३० ततोऽधस्तात्पातालेनागलोकपतयोवासुकिप्रमुखाः शंखकुलिकमहाशंखश्वेतधनंजयधृतराष्ट्रशंखचूडकंबलाश्वत[illegible]तादयोमहाभोगिनोमहामर्षानिवसंतियेषामुहवैपंचसप्तदशशतसहस्रशीर्षाणांफणासुविरचितामहामणयोरोचिष्णवःपातालविवरतिमिरनिकरंस्वरो[illegible]विधमंति ३१ इतिश्रीभागवतेमहापुराणेपंचमस्कंधेराहादिस्थितिबिलस्वर्गमर्यादानिरूपणंनामचतुर्विंशतितमोऽध्यायः ॥ २४ ॥ ॥

अथबलेश्चरितं अष्टमस्कंधेविस्तरिष्यते यस्यद्वारि नारायणः गदापाणिः अवतिष्ठते येन दशकंध.. पादांगुष्ठेनउच्चाटितः २७ ततोधः तलातलेमहादेवेनरक्षितः गतसुदर्शनभयः मयोनामदानवः आस्ते २८ ततोधः महातले कद्रूतनयसर्पाणांक्रोधवशोनामगणः गरुडात् उद्विग्नमनाः क्वचित्प्रमत्ताः संतःकलत्रादिसंगेनाविहरंति २९ ततोधः रसातलेदैतेयाः दानवाः पणयः निवातकवचाः [illegible] रमया इंद्रदूत्याउक्ताभिर्वाग्भिः इंद्राद्बिभ्यति ३० ततोधः पातालेनागाः वासुकिशंखकुलिकादयः निवसंति तेषांअनेकफणासुस्थिताः मणयः अंध[illegible] इतिपंचमस्कंधेचतुर्विंशः ॥ ॥ २४ ॥ ॥

पंचविंशेततोषस्तःदाहशेषस्यसंस्थितिं ॥ संजिहीर्षोरिदंकालेयत्ररुद्रसमुद्भवः ॥ १ ॥ तस्यपातालस्य ( मूलदशेत्रिंशद्योजनसहस्रा मस्तैविरा अवधानयत्रस्मिन् ) कोसावनंतःसात्व तीयाःसात्वततंत्रानिष्ठाचतुर्व्यूहोपासनेयंसंकर्षणमित्याचक्षते । तथाख्यानेहेतुः । द्रष्टृदृश्ययोः सम्यक्कर्षणं एकीकरणंयेन । तत्कुतः । अहमित्यभिमानोलक्षणंचिह्नंयस्यअधिष्ठातुस्तं अहंकाराधिष्ठानेनदृग्दृश्ययोःसंकर्षणात्आधिष्ठाता संकर्षणइत्यर्थः १ अनंतत्वमाह । यस्येदमितियच्छब्दानां सएषभगवाननंतइत्युत्तरेणान्वयः ( सिद्धार्थःसर्षपः ) २ तामसत्वमाह । य स्येदंविश्वमुपसंहर्तुमिच्छत :अमर्षेणविरचिते ( रुचिरे ) रुचिरीकृतेकुटिलीकृतेभ्रमंत्यौभ्रुवौतयोर्मध्ये ( शूलं ) उत्तंभयन्नुन्नमयन् ( एकादशव्यूहः एकादशधाविभक्तरूपविशेषःरुद्रउ त्थितः ) ३ सुभगत्वमाह। यस्यांघ्रिकमलयुगलेअरुणाविशदानखाएवमणयस्तेषांखंड समूहस्तस्यमंडलेषु परिस्फुरतांकुंडलानां प्रभयामंडितानिगंडस्थलानियेषुतानि ४ ( आशिषःका मनाः ) चारुणि ( रुचिरे )अंगवलये ( कुंडलाकारदेहे ) विलसिताश्वतेविशदाश्वानिर्मलाः विपुलाश्वधवलाश्वसुभगाश्वसुंदरारुचिराश्व ( मनोहराः ) भुजाएवरजतस्तंभास्तेषु अगु रुचंदनकुंकुमानां पंकएवानुलेपः तेनावलिंपमानास्तेषां ( भुजानां ) अभिमर्शनेनउन्मथितहृदयेमकरध्वजस्यावेशेनरुचिरंचललितंचस्मितंयासांताः । तस्यानंतस्यअनुरागेणचमदेनचमु दितंचतत्मदेन विघूर्णितेप्रचालितेच आईषदरुणकरुणावलोकयुक्तेनयनेयस्मिनतद्वदनारविंदंविलोकयंति ५ अमर्षोऽसहनं रोषःक्रोधःउपसंहृतस्तयोर्वेगोयेन ६

॥ श्रीशुकउवाच ॥ ॥ तस्यमूलदेशेत्रिंशद्योजनसहस्रांतरआस्तेयावैकलाभगवतस्तामसीसमाख्याताऽनंतइतिसात्वतीयाद्रष्टृदृश्ययोःसंकर्षणमह मित्यभिमानलक्षणंयंसंकर्षणमित्याचक्षते १ यस्येदंक्षितिमंडलंभगवतोऽनंतमूर्तेःसहस्रशिरसएकस्मिन्नेवशीर्षणिध्रियमाणंसिद्धार्थइवलक्ष्यते २ यस्यहवाइदंकालेनोपसंजिहीर्षतोऽमर्षविरचितरुचिरभ्रमद्भ्रुवोरंतरेणसांकर्षणोनामरुद्रएकादशव्यूहस्त्र्यक्षस्त्रिशिखंशूलमुत्तंभयन्नुदतिष्ठत् ३ यस्यांघ्रि कमलयुगलारुणविशदनखमणिखंडमंडलेष्वहिपतयःसहसात्वतर्षभैरेकांतभक्तियोगेनावनमंतः स्ववदनानिपरिस्फुरत्कुंडलप्रभामंडितगंडस्थलान्यतिमनो हराणिप्रमुदितमनसःखलुविलोकयंति ४यस्यैवहिनागराजकुमार्यआशिषआशासानाश्चार्वंगवलयविलसितविशदविपुलधवलसुभगरुचिरभुजरजतस्तंभेष्व गुरुचंदनकुंकुमपंकानुलेपेनावलिंपमानास्तदभिमर्शनोन्मथितहृदयमकरध्वजावेशरुचिरललितस्मितास्तदनुरागमदमुदितमदविघूर्णितारुणकरुणाऽवलो कनयनवदनारविंदंसव्रीडंकिलविलोकयंति ५ सएवभगवाननंतोऽनंतगुणार्णवआदिदेवउपसंहृतामर्षरोषवेगोलोकानांस्वस्तयआस्ते ६

॥ ॥ श्रीशुकउवाच ॥ अथपातलस्यमूलप्रदेशे त्रिंशद्योजनसहस्रांतरेभगवत्कला अनंतः आस्ते यंचतुर्व्यूहोपासनेसंकर्षणमित्याचक्षते सात्वताः १ अस्यमूर्धनिइदं भूमंडलं सर्षपइव लक्ष्यते २ इदंसंहर्तुः यस्यभ्रूमध्यतः सांकर्षणोनामरुद्रः त्र्यक्षःत्रिशूलंउत्तंभयन् उदतिष्ठत् ३ यस्यांघ्रिकमलनखमंडलेषुनमंतोनागपतयः स्ववदनानि विलोकयंति ४ किंच नागराजकुमार्यः यस्यवदनारविंदंसव्रीडंपश्यंति ५ सः अनंतः संहृतरोषः सन् लोकस्वस्तये आस्ते ६

उपासनार्थमाह । सुरादिभिर्ध्यायमानः चिंत्यमानः अनवरतं मदेनामुदितश्चासौविकृतविह्वललोचनश्च । सुललितेन वचनामृतेनस्वपार्षदान्विबुधयूथपानांपतींश्चाप्यायमानः हर्षयन् नीलिवासस्सीयस्य । एकमेवकुंडलंयस्य । हलस्यककुदिपृष्ठेकृतः न्यस्तः सुभगश्चसुंदरश्च ( चारुः ) भुजोयेन । उदारालीलायस्यसः नपरिम्लानोरागः कांतिर्यस्याः तस्या नवतुलसिकाया आमोदमध्वासवेनसुरभिमधुरसेनमाद्यतांमधुकराणांयेव्राताः तेषांमधुरगीतेनश्रीर्यस्याः तां वनमालां ( वारणेंद्रऐरावतः कांचनीं ) कक्षां वरत्रामिव । ७ ( योऽनुश्रुतोध्यायमानश्चिंत्यमानोतएवांतर्हृदयंगतोमुमुक्षूणामनादिकालमारभ्यकर्मसंस्कारैर्ग्रथितंत्रिगुणात्मकंहृदयग्रंथिरूपमहंकारंनिर्भिनत्तिसमूलंछिनत्तितस्यानुभावान् ) संश्लोकयामासवर्णयामास ८ ॥२५॥
॥४१॥ अस्यजगतउत्पत्त्यादिहेतवोगुणायस्येक्षयाकल्पाः स्वस्वकार्यसमर्थाआसन् । अस्यतद्रूपंध्रुवंअनंतंअकृतंअनादि । तत्रहेतुः यदेकमेवसत् आत्मन्आत्मनिनानाकार्यप्रपंचंअधात्तस्यब्रह्मरूपस्यवर्त्मतत्त्वंजनः कथमुहवेदनैववेदेत्यर्थः ९ तर्हिकथमसौमुमुक्षुभिःसेव्यतेतत्राह । मूर्तिमिति । यत्रेदंसदसत् ( कार्यकारणात्मकंजगत् ) विभातिसः नोऽस्माकंभक्तानांबहुकृपयासंशुद्धंसत्त्वंमूर्तिंबभार । स्वजनानांमनांसिआदातुंवशीकर्तुंकृतां यस्यलीलांमृगपतिः सिंहःआददेअशिक्षत् । यतः उदाराणिवीर्याणियस्य । तस्मादन्यंमुमुक्षुःकमाश्रयेदित्युत्तरेणान्वयः । यद्वाकृपयेत्यत्रहेतुः । यद्यस्मात्स्वजनानांमनांस्यादातुंलीलामाददे मृगपतिरिवोदारवीर्यः यद्वामृग्यंतइतिमृगाः कामप्रदास्तेषांपतिर्मुख्यः । १० किंचआस्तांतस्यकृपयावपुर्धारणं । तद्भजनंवा । तन्नामौदार्यमेवातिचित्रमित्याह । यस्यनामयदिपतितोमहापातक्यपिअनुकीर्तयेत्तर्हिसंशुध्येदितिकिंमुवक्तव्यंयतोऽसावेवनृणामशेषमंहः सद्योहंति । कथंअनुकीर्तयेत् अन्यतः श्रुतंवाऽकस्माद्वाआर्तोवासन्प्रलंभनाद्वापरिहासात् । तस्मात्शेषात्संकर्षणादन्यम् ११

ध्यायमानःसुरासुरोरगसिद्धगंधर्वविद्याधरमुनिगणैरनवरतमदमुदितविकृतविह्वललोचनःसुललितमुखरिकाऽमृतेनाप्यायमानः स्वपार्षदविबुधयूथपतीन
परिम्लानरागनवतुलसिकामोदमध्वासवेनमाद्यन्मधुकर[illegible] [illegible]धुरगीतश्रियंवैजयंतींस्वांवनमालां नीलवासाएककुंडलोहलककुदिकृतसुभगसुंदरभुजो भग
वान्माहेंद्रोवारणेंद्रइवकांचनींकक्षामुदारलीलो[illegible]र्वि ७ [illegible]षएवमनुश्रुतोध्यायमानोमुमुक्षूणामनादिकालकर्मवासनाग्रथितमविद्यामयं हृदयग्रंथिंसत्त्वरज
स्तमोमयमंतर्हृदयंगतआशुनिर्भिनत्तितस्या[illegible]भावान्भ[illegible] [illegible]स्वायंभुवोनारदःसहतुंबुरुणासभायांब्रह्मणःसंश्लोकयामास ८ उत्पत्तिस्थितिलयहेतवोऽस्यक
ल्पाःसत्त्वाद्याःप्रकृतिगुणायदीक्षयासन् ॥ यद्रूपंध्रु[illegible] [illegible]यदेकमात्मन्नानाऽधात्कथमुहवेदतस्यवर्त्म ९ मूर्त्तिंनःपुरुकृपयाबभारसत्त्वंसंशुद्धंसदसदिदंवि
भातियत्र ॥ यल्लीलांमृगपतिराददेऽनवद्यामादातुंस्वजनमनांस्युदारवीर्यः[illegible] १० यन्नामश्रुतमनुकीर्त्तयेदकस्मादार्त्तोवायदिपतितःप्रलंभनाद्वा॥ हंत्यंहःस
द्योनृणामशेषमन्यंकंशेषाद्भगवतआश्रयेन्मुमुक्षुः ११ [illegible] ॥४१॥

सच सुरादिभिः ध्यायमानः नीलवासाः [illegible] कद्रवेयस[illegible] अपरिम्लानकांत्याः नवतुलसिकायाः सुरभिमधुरसेनमाद्यन्मधुकराणांमधुरगीतेनशोभितांस्वांवनमा
[illegible]विभर्ति ७ तस्यानुभावान् [illegible] : सं[illegible] चस्य [illegible] ८ ९ १० यन्नामश्रुतंअनुकीर्तितंसत् नृणांअंहः [illegible] ११ [illegible]किशंखकुलकाय
[illegible]तिप्रपंचस्य[illegible]

गिर्यादिसहितंभूगोलंसत्त्वानिप्राणिनः ( यस्यमूर्धनिअणु [illegible] र्पितं [illegible] अनिमितविक्र [illegible] मितवीर्यस्यवीर्याणिआनंत्यात् ) सहस्राणिजिह्वापकोगणयेत् १२ दुरंतवीर्यंबलं स्वगुणा अनुभावश्चयस्यसचरसायामूमेर्मूलेस्थितः । तिष्ठति । आत्मतंत्रः आत्माधारः १३ उक्तस्यलोकविभागस्योपयोगंवदनुपसंहरति । एतात्येवेहकामान्कामयमानैर्नृभिः उपगंतव्याइत्यन्वयः १४ तस्यप्रपंचः एतावत्यःविपाकगतयः फलभूतागतयः ताःव्याचख्येयथाख्यातवानस्मि १५ ॥ इतिपंचमस्कंधेटीकायांपंचविंशोध्यायः॥ २५ ॥ षाड्विंशेतुततोधस्तान्नरकस्थितिरुच्यते । पापिनोयत्रदत्त्वांतेयमदूतैर्यथायथम्॥१॥एवंभोगतयउच्चावचाविसदृशाइतिभोगवैचित्र्यमुक्तंतदेतत्कुतइतिपृच्छति । महर्षइति १ कर्मणःसमानत्वेपिश्रद्धावैचित्र्यात्फलवैचित्र्यमितिपरिहरति । त्रिगुणत्वादिति । सात्त्विक्याश्रद्धयाकर्तुः सुखित्वं । राजस्यासुखित्वंदुःखित्वंच । तामस्यादुःखित्वंमूढत्वंच । तत्रापितामसश्रद्धानांतारतम्यात्सुखादितारतम्यंसर्वेषामित्यर्थः २ प्रतिषिद्धंप्रतिषेधः सएवलक्षणंप्रमाणंयस्य अधर्मस्यकर्तुःश्रद्धावैसादृश्यंतमसस्तारतम्यात् तत्रापिकारणंदर्शयन्नाह । याअनाद्यविद्ययाकृतानांकामानांविषयकामनानांसृतयो (गतयः)नरकाःतासां(सृतीनांमध्ये)अथेदानींप्राचुर्येणप्राधान्येनताअनुवर्णयिष्यामइत्यन्वयः३किंभूमावेवदेशविशेषाःत्रिलोक्याब्रह्मांडाद्बहिर्वाआवरणेषुमध्येअंतरालेवाभूमिव्यतिरिक्ते४

मूर्धन्यर्पितमणुवत्सहस्रमूर्ध्नोभूगोलंसगिरिसरित्समुद्रसत्त्वम् ॥ आनंत्यादनिमितविक्रमस्यभूम्नःकोवीर्याण्यधिगणयेत्सहस्रजिह्वः १२ एवंप्रभावोभगवाननंतोदुरंतवीर्योरुगुणानुभावः ॥ मूलेरसायाःस्थितआत्मतंत्रोयोलीलयाक्ष्मांस्थितयेबिभर्ति १३ एताह्येवेहनृभिरुपगंतव्यागतयोयथाकर्मविनिर्मितायथोपदेशमनुवर्णिताःकामान्कामयमानैः १४ एतावतीर्हिराजन्पुंसःप्रवृत्तिलक्षणस्यधर्मस्यविपाकगतयउच्चावचाविसदृशायथाप्रश्नंव्याचख्ये किमन्यत्कथयाम इति १५ इतिश्रीभा०म०पंच० भूविवरविध्युपवर्णनंनामपंचविंशतितमोऽध्यायः ॥ २५ ॥ ॥ राजोवाच ॥ ॥ महर्षएतद्वैचित्र्यंलोकस्यकथमिति १ ऋषिरुवाच[1] ॥ त्रिगुणत्वात्कर्तुःश्रद्धयाकर्मगतयःपृथग्विधाःसर्वाएवसर्वस्यतारतम्येनभवंति २ अथेदानींप्रतिषिद्धलक्षणस्याधर्मस्यतथैवकर्तुःश्रद्धायाःवैसादृश्यात्कर्मफलंविसदृशंभवतियाह्यनाद्यविद्ययाकृतकामानांतत्परिणामलक्षणाःसृतयःसहस्रशःप्रवृत्तास्तासांप्राचुर्येणानुवर्णयिष्यामः ३ राजोवाच ॥ नरकानामभगवन्किंदेशविशेषाअथवाबहिस्त्रिलोक्याआहोस्विदंतरालइति ४

यस्यमूर्धनिअर्पितोभूगोलः अणुवद्भाति तस्यवीर्याणिसहस्रजिह्वोपिकः गणयेत् १२ एवंप्रभावःअनंतः रसायाः मूलेस्थितः सन् स्थितयेक्ष्मांबिभर्ति १३ हेराजन्एवंएतायथाकर्मविनिर्मिताः गतयःतथावर्णिताः १४ किमन्यत्कथयामः १५ ॥ इतिपंचमेपंचविंशः २५ ॥ ॥ राजोवाच ॥ ॥ हेमहर्षेएतत्लोकस्यवैचित्र्यंकथम् १ ॥ श्रीशुकउवाच ॥ ॥ कर्तुःत्रिगुणत्वात्श्रद्धयाभिन्नाएवकर्मगतयः सर्वाएवसर्वेषांश्रद्धातारतम्येनभवंति २ अविद्याकृतकामपरिणामलक्षणाःसृतयःसहस्रशःप्रवृत्ताःताःवर्णयिष्यामः ३ ॥ ॥ राजोवाच ॥ ॥ हेभगवन् नरकानामकिंदेशविशेषाःत्रिलोक्याःबहिः अंतराले वा संति तत्कथ्यताम् ४ ॥

---

१ अत्रश्रीशुकउवाचेतिलिखितपुस्तकेपाठः ।

[illegible] ( [illegible] ) सहस्रजिह्वोपिकोगणयेत् १२ दुरंतवीर्यबलं यस्य उ लो [illegible] रसायामूलेस्थितः । किमिति । आत्मतंत्रः [illegible] १३ उक्तस्यलोकविभागस्योपयोगं वदन्नुपसंहरति । एतास्वेवेहकामान्कामयमानैर्भूमिः [illegible]
[illegible] १४ तत्प्रपंचः एतावत्यः विपाकगतयः फलभूतागतयः ताःयथाप्रश्नंव्याख्यातवानस्मि १५ ॥ इतिपंचमस्कंधेटीकायांपंचविंशोध्यायः॥ २५ ॥ षड्विंशेतुततोधस्तान्नरक
स्थितिरुच्यते । प्रापिनोयत्रदत्त्वंतेयमदूतैर्यथायथम्॥१॥पुंसोगतयउच्चावचाविसदृशाइतिभोगवैचित्र्यमुक्तंतदेतत्कुतइतिपृच्छति । महर्षइति १ कर्मणः समानत्वेपिश्रद्धावैचित्र्यात्फलवै
चित्र्यमितिपरिहरति । त्रिगुणत्वादिति । सात्त्विक्याश्रद्धयाकर्तुः सुखित्वं । राजस्यासुखित्वंदुःखित्वंच । तामस्यादुःखित्वंमूढत्वंच । तत्रापितासांश्रद्धानांतारतम्यात्सुखादितारतम्यंसर्वेषा
मित्यर्थः २ प्रतिषिद्धंप्रतिषेधः सएवलक्षणंप्रमाणंयस्य अधर्मस्यकर्तुः श्रद्धावैसादृश्यंतमसस्तारतम्यात् तत्रापिकारणंदर्शयन्नाह । याअनाद्यविद्ययाकृतान् कामानांविषयकामनानांसृतयो
(गतयः)नरकाःतासां(सृतीनांमध्ये)अथेदानींप्राचुर्येणप्राधान्येनताअनुवर्णयिष्यामइत्यन्वयः३ किंभूमावेवदेशविशेषाः त्रिलोक्याब्रह्मांडाद्बहिर्वा आवरणेषुमध्ये अंतराले वा भूम्यधस्तादिति ४

मूर्धन्यर्पितमणुवत्सहस्रमूर्ध्नोभूगोलंसगिरिसरित्समुद्रसत्त्वम् ॥ आनंत्यादनिमितविक्रमस्यभूम्नःकोवीर्याण्यधिगणयेत्सहस्रजिह्वः १२ एवंप्रभावोभगवाननंतोदुरंतवीर्योरुगुणानुभावः ॥ मूलेरसायाःस्थितआत्मतंत्रोयोलीलयाक्ष्मांस्थितयेबिभर्ति १३ एताह्येवेहनृभिरुपगंतव्यागतयोयथाकर्मविनिर्मितायथोपदेशमनुवर्णिताःकामान्कामयमानैः १४ एतावतीर्हिराजन्पुंसःप्रवृत्तिलक्षणस्यधर्मस्यविपाकगतयउच्चावचाविसदृशायथाप्रश्नंव्याचख्ये किमन्यत्कथयाम इति १५ इतिश्रीभा०म०पंच० भूविवरविध्युपवर्णनंनामपंचविंशतितमोऽध्यायः ॥ २५ ॥ ॥ राजोवाच ॥ ॥ महर्षएतद्वैचित्र्यंलोकस्यकथमिति १ ऋषिरुवाच ॥ त्रिगुणत्वात्कर्तुःश्रद्धयाकर्मगतयःपृथग्विधाःसर्वाएवसर्वस्यतारतम्येनभवंति २ अथेदानींप्रतिषिद्धलक्षणस्याधर्मस्यतथैवकर्तुःश्रद्धायावैसादृश्यात्कर्मफलंविसदृशंभवतियाह्यनाद्यविद्ययाकृतकामानांतत्परिणामलक्षणाःसृतयःसहस्रशःप्रवृत्तास्तासांप्राचुर्येणानुवर्णयिष्यामः ३ राजोवाच ॥ नरकानामभगवन्किंदेशविशेषाअथवाबहिस्त्रिलोक्याआहोस्विदंतरालइति ४

यस्यमूर्धनिअर्पितोभूगोलः अणुवद्भाति तस्यवीर्याणिसहस्रजिह्वोपिकः गणयेत् १२ एवंप्रभावःअनंतः रसायाः मूलेस्थितः सन् स्थितयेक्ष्मांबिभर्ति १३ हेराजन्एवंएता यथाकर्मविनिर्मिताः गतयःतथावर्णिताः १४ किमन्यत्कथयामः १५ ॥ इतिपंचमेपंचविंशः २५ ॥ ॥ राजोवाच ॥ ॥ हेमहर्षेएतत्लोकस्यवैचित्र्यंकथम् १ ॥ श्रीशुकउवाच ॥ ॥ कर्तुःत्रिगुणत्वात्श्रद्धयाभिन्नाएवकर्मगतयः सर्वाएवसर्वेषांश्रद्धातारतम्येनभवंति २ अविद्याकृतकामपरिणामलक्षणाःसृतयःसहस्रशःप्रवृत्ताःताः वर्णयिष्यामः ३ ॥ ॥ राजोवाच ॥ ॥ हेभगवन् नरकानामकिंदेशविशेषाःत्रिलोक्याःबहिः अंतराले वा संति तत्कथ्यताम् ४ ॥

---

१ अत्रश्रीशुकउवाचेतिलिखितपुस्तकेपाठः ।

( अंतरालएवत्रिजगत्याः । तर्हिकस्यांदिशितु । दक्षिणस्यां । क्वतर्हि । भूमेरधउपरिष्टादंडजलाशयस्यगर्भोदकस्य । त्रिलोकीगर्भोदकयोर्मध्येइत्यर्थः । यस्यां दिशि । गोत्राणांवंशजानाम् ) ५ ( स्वविषयंस्वदेशं । यथाकर्मावद्यं ) कर्मदोषमनतिक्रम्यदोषमेवदमपापफलंदंडंकरोति ( तत्कृतमवद्यमेवदंडरूपंपरिणतंकरोतीत्यर्थः । तत्रहेतुः ) नउल्लंघितंभगवच्छासनंयेन ६ मतांतरेणाष्टाविंशतिमाहकिंचेति ७ पापभेदेनचतन्नरकयातनाभेदंप्रपंचयति । तत्रयस्त्वित्यादिना । यातनास्तीव्रवेदनास्ताभिः यात्यमानः पीड्यमानः ( कश्मलंमहद्दुःखं । एकदाएकस्मिन्कालेऽपयाति । कदाचिन्नोपयाति । यद्वा ) एकदैवतदैव ( कश्मललक्षणेप्वेत्यर्थः । तमिस्रप्रायेप्रायेणनिविडांधकाररूपे । मूर्छयाबुद्धिनाशात्)। ८ ( एवमेवनिपात्यतेयः ) पुरुषंपतिंवंचयित्वा ( उपयुंक्तेउपभुंक्ते । वृश्च्यमानमूलः छिद्यमानशिफः तथानिपात्यमानोदेहीनष्टमतिरंधश्चभवति। तस्मादंधत्वापादकांधकारयोगात्) ९

ऋषिरुवाच ॥ अंतरालएवत्रिजगत्यास्तुदिशिदक्षिणस्यामधस्ताद्भूमेरुपरिष्टाद्दंडजलाशयाद्यस्यामग्निष्वात्तादयःपितृगणादिशिस्वानांगोत्राणांपरमेणसमाधिनासत्याएवाशिषआशासानानिवसंति ५ यत्रहवावभगवान्पितृराजोवैवस्वतःस्वविषयंप्रापितेषुस्वपुरुषैर्जंतुषुसंपरेतेषुयथाकर्मावद्यंदोषमेवानुल्लंघितभगवच्छासनःसगणोदमंधारयति ६ तत्रहैकेनरकानेकविंशतिगणयंतिअथतांस्तेराजन्नामरूपलक्षणतोऽनुक्रमिष्यामःतामिस्रोंधतामिस्रोरौरवोमहारौरवःकुंभीपाकःकालसूत्रमसिपत्रवनंसूकरमुखमंधकूपःकृमिभोजनःसंदंशस्तप्तसूर्मिर्वज्रकंटकशाल्मलीवैतरणीपूयोदःप्राणरोधोविशसनंलालाभक्षः सारमेयादनमवीचिरयःपानमितिकिंचक्षारकर्दमोरक्षोगणभोजनःशूलप्रोतोदंदशूकोऽवटनिरोधनःपर्यावर्तनःसूचीमुखमित्यष्टाविंशतिनरकाविविधयातनाभूमयः ७ तत्रयस्तुपरवित्तापत्यकलत्राण्यपहरतिसहिकालपाशबद्धोयमपुरुषैरतिभयानकैस्तामिस्रेनरकेबलान्निपात्यतेअनशनानुदपानदंडताडनसंतर्जनादिभिर्यातनाभिर्यात्यमानोजंतुर्यत्रकश्मलमासादितएकदैवमूर्च्छामुपयातितामिस्रप्राये ८ एवमेवांधतामिस्रेयस्तुवंचयित्वापुरुषंदारादीनुपयुंक्तेयत्रशरीरीनिपात्यमानोयातनास्थोवेदनयानष्टमतिर्नष्टदृष्टिश्चभवतियथावनस्पतिर्वृश्च्यमानमूलस्तस्मादंधतामिस्रंतमुपदिशंति ९

॥ श्रीशुकउवाच ॥ ॥ जगत्याअंतरालेदिशिदाक्षिणस्यांभूमेः अधस्तात्जलादुपरिनरकाः संति ५ यत्रभगवान्पितृराजोयमः मृतजंतूनांकर्मानुरूपंदंडंकुर्वन्नास्ते ६ अथतान्शृणु तामिस्रं १ अंधतामिस्रं २ रौरवः ३ महारौरवः ४ कुंभीपाकः ५ कालसूत्रम् ६ असिपत्रवनम् ७ सूकरमुखम् ८ अंधकूपः ९ कृमिभोजनः १० संदंशः ११ तप्तसूर्मिः १२ वज्रकंटकशाल्मली १३ वैतरणी १४ पूयोदः १५ प्राणरोधः १६ विशसनम् १७ लालाभक्षः १८ सारमेयादनम् १९ अवीचिः २० अयःपानम् २१ क्षारकर्दमः २२ रक्षोगणभोजनः २३ शूलप्रोतः २४ दंदशूकः २५ अवटनिरोधनः २६ पर्यावर्तनः २७ सूचीमुखम् २८ इतिनरकाःसंति ७ यःपरवित्तापत्यकलत्राणिहरतिसः दूतैः पाशबद्धः तामिस्रनरकेनिपात्यते अनशनानुपादनताडनादिभिः पीड्यमानः कश्मलंयाति ८ यस्तुपुरुषंवंचयित्वादारादीनुपभुंक्तेसः [illegible] यानष्टमतिर्नष्टदृष्टिश्चभवति ९

एतच्छरीरमहमिति इदंधनादिममेतिचमत्वाकेवलंस्वकुटुंबमेवप्रपुष्णातितेनाशुभेन ( निरततितत्कुटुंबंविहाय ) १० रुरवोभूत्वेतिकर्माण्येव...रिणामिप्रेप्येत्यर्थः । अतिक्रूरस्यभारुंगाख्यसत्वस्यापदेशःसंज्ञा ११ क्रव्येणनिमित्तेनमांसार्थमित्यर्थः १२ ( प्राणंतीतितथातान् ) प्राणतःसजीवान् उपरंधयतिपचतिअपकरुणंनिष्कृपं ( पुरुषादैःरक्षोभिरपिविगर्हितंधिक्कृतमित्यर्थः ) १३ ( तप्ते ) स्थले ( धान्यादिशोषणस्थानीये ) समेदेशे ( अधस्तादग्निः उपर्यर्कः ताभ्यां । नकेवलंपित्रादिध्रुक्पशुहिंसकोप्येवमित्याहयावंतीति ) १४ ( अनापदीतिविशेषणात् आपदिकंचनानुग्रहंसूचयति । तालवनस्यतालवृक्षसमूहस्यअसिनानिशितैःपत्रैः उभयतोधारैः धाराशब्देननिशितप्रांतभागउच्यते ) स्वधर्महास्वधर्मत्यागी १५ (अदंड्येदंडनार्हेशरीरदंडंताडनादिरूपं । यथेक्षुदंडोयंत्रेतथातत्रबलाढ्यैर्विनिष्पीड्यमानांगः ) स्वनयन्रुदन्कश्मलंमोहमुपगतोभवति । अदृष्टदोषाः ( अदंड्याः ) तेनेहोपरुद्धाःसंतोयथाकश्मलमुपगतास्तद्वत् ( अमुत्रामी ) १६

यस्त्विहवाएतदहमितिममेदमितिभूतद्रोहेणकेवलंस्वकुटुंबमेवानुदिनंप्रपुष्णातिसतदिहविहायस्वयमेवतदशुभेनरौरवेनिपतति १० येत्विहयथैवामुनाविहिंसिताजंतवःपरत्रयमयातनामुपगतंतएवरुरवोभूत्वातथातमेवविहिंसंतितस्माद्रौरवमित्याहुःरुरुरितिसर्पादतिक्रूरसत्त्वस्यापदेशः ११ एवमेवमहारौरवोयत्रनिपतितंपुरुषंक्रव्यादानामरुरवस्तंक्रव्येणघातयंतियःकेवलंदेहंभरः १२ यस्त्विहवाउग्रःपशून्पक्षिणोवाप्राणतउपरंधयतितमपकरुणंपुरुषादैरपिविगर्हितममुत्रयमानुचराःकुंभीपाकेतप्ततैलेउपरंधयंति १३ यस्त्विहपितृविप्रब्रह्मध्रुक्सकालसूत्रसंज्ञकेनरकेअयुतयोजनपरिमंडलेताम्रमयेतप्तखलेउपर्यधस्तादग्न्यर्काभ्यामतितप्यमानेऽभिनिवेशितःक्षुत्पिपासाभ्यांचदह्यमानांतर्बहिःशरीरआस्तेशेतेचेष्टतेअवतिष्ठतिपरिधावतिचयावंतिपशुरोमाणितावद्वर्षसहस्राणि १४ यस्त्विहवैनिजवेदपथादनापद्यपगतःपाखंडंचोपगतस्तमसिपत्रवनंप्रवेश्यकशयाप्रहरंतितत्रहासावितस्ततोधावमानउभयतोधारैस्तालवनासिपत्रैश्छिद्यमानसर्वांगोहाहतोऽस्मीतिपरमयावेदनयामूर्छितःपदेपदेनिपततिस्वधर्महापाखंडानुगतंफलंभुंक्ते १५ यस्त्विहवैराजाराजपुरुषोवाअदंड्येदंडंप्रणयतिब्राह्मणेवाशरीरदंडंसपापीयान्नरकेऽमुत्रसूकरमुखेनिपतति तत्रातिबलैर्विनिष्पिष्यमाणावयवोयथैवेहेक्षुखंडआर्तस्वरेणस्वनयन्क्वचिन्मूर्छितःकश्मलमुपगतोयथैवेहादृष्टदोषाउपरुद्धाः १६

यस्तुममेदंअहमितिमत्वाभूतद्रोहेणस्वकुटुंबमेवपुष्णातिसः रौरवेनिपतति १० यथायेनविहिंसिताजंतवः तेएवपरत्ररुरवोभूत्वातंखादंति ११ यः केवलंदेहंभरः सः महारौरवेनिपतति तत्रक्रव्यादानामरुरवः तन्मांसंखादंति १२ यस्तुपशून्पक्षिणोवा प्राणैःसहरंधयतितंअमुत्रदूताः तप्ततैलेकुंभीपाकेरंधयंति १३ यश्चपितृविप्रध्रुक्तःतत्रनाम्नमयेदेशेकालसूत्राख्येपतति तत्रक्षुत्पिपासाभ्यांअंतर्दह्यमानः पशुरोमसंख्यासहस्रवर्षाणि आस्ते १४ यस्तुनिजवेदमार्गंत्यक्त्वापाखंडं आश्रितः तंअसिपत्रवनं प्रवेश्य कशयाप्रहरंति तत्रअसिपत्रैः छिद्यमानसर्वांगः हाहतोस्मीति वेदनयामूर्छितः पदेपदेनिपतति स्वधर्महापाखंडमार्गफलंभुंक्ते १५ यस्तुराजाराजपुरुषोवा अदंड्येदंडंब्राह्मणेवाशरीरदंडंकरोतिसः सूकरमुखेनिपतति तत्रइक्षुदंडवत् निष्पिष्यमाणावयवः क्वचिन्मूर्छितः कश्मलंयाति १६

ईश्वरेणकल्पितामनुष्यरक्तपानादिलक्षणावृत्तिर्येषांमत्कुणादीनां नविविक्ताविज्ञातापरव्यथायैरविवेकिभिस्तेषां पुरुषेणब्राह्मणादिभावेनविधिनिषेधपूर्वकंउपकल्पितावृत्तिर्यस्य विविक्ता विज्ञातापरव्यथायेनविवेकिना ( एवंभूतोपिपीडामाचरति । अभिद्रुग्धाहिंसिता । विहतानिद्रारूपानिर्वृतिः स्वास्थ्यंयस्य । नलब्धमवस्थानंयेनतमसिपरिक्रामति ( यथाकुत्सितेदेहे) १७ यत्किंचनभक्ष्यादिकंउपनतंप्राप्तं ... अंविभज्यनिर्मिताः पंचयज्ञायेन । अतएववायसैः संस्तुतःसमत्वेनवर्णितः कृमिभोजनःकृमीनेवभुंजानः ( यावदिति । यावत्तत्पातकंभोक्तव्यं तावत्पर्यंतमित्यर्थः । यद्वा ) यावंतिभोजनानितत्कृमिकुंडंतावंतिवर्षाणि । अप्रत्तंअसंविभक्तंअप्रहुतंवाऽस्तीतितथामः । अनिर्वेशंअकृतप्रायश्चित्तम् १८ निष्कुषंतिछिंदंति १९ तिग्म यातनयासूर्म्याप्रतिमया २० सर्वाभिगमः पश्वाद्युपगंता २१ अपाखंडाःसत्कुलीनाः संतः । द्वितीयांतपाठेसेतुविशेषणं ( धर्मसेतून्धर्ममर्यादाःयेभिंदंतितेवैतरण्यांनद्यांनिपतंति ) नदींविशिनष्टि ( विण्मूत्रेति । तस्यांउह्यमानाः यादोगणैस्तत्रत्यैर्जंतुभिः । आत्मनादेहेनअसुभिश्चप्राणैः नवियुज्यमानाअम्रियमाणाइत्यर्थः । स्वाघेनस्वपापेनपीड्यंते ) २२

यस्त्विहवैभूतानामीश्वरोपकल्पितवृत्तीनामविविक्तपरव्यथानांस्वयंपुरुषोपकल्पितवृत्तिर्विविक्तपरव्यथोव्यथामाचरतिसपरत्रांधकूपेतदभिद्रोहेणनिपततितत्रहासौतैर्जंतुभिःपशुमृगपक्षिसरीसृपैर्मशकयूकामत्कुणमक्षिकादिभिर्येकेचाभिद्रुग्धास्तैः सर्वतोभिद्रुह्यमाणस्तमसिविहतनिद्रानिर्वृतिरलब्धावस्थानःपरिक्रामतियथाकुशरीरेजीवः १७ यस्त्विहवाअसंविभज्याश्नातियत्किंचनोपनतमनिर्मितपंचयज्ञोवायससंस्तुतःसपरत्रकृमिभोजनेनरकाधमेनिपततितत्रशतसहस्रयोजनेकृमिकुंडेकृमिभूतःस्वयंकृमिभिरेवभक्ष्यमाणःकृमिभोजनोयावत्तदप्रत्ताप्रहुतादोऽनिर्वेशमात्मानंयातयते १८ यस्त्विहवैस्तेयेनबलाद्वाहिरण्यरत्नादीनिब्राह्मणस्यवाऽपहरत्यन्यस्यवाऽनापदिपुरुषस्तममुत्रराजन्यमपुरुषाअयस्मयैरग्निपिंडैःसंदंशैस्त्वचिनिष्कुषंति १९ यस्त्विहवाअगम्यांस्त्रियमगम्यंवापुरुषंयोषिदभिगच्छतितावमुत्रकशयाताडयंतस्तिग्मयासूर्म्यालोहमय्यापुरुषमालिंगयंतिस्त्रियंचपुरुषरूपयासूर्म्या २० यस्त्विहवैसर्वाभिगमस्तममुत्रनिरयेवर्तमानंवज्रकंटकशाल्मलीमारोप्यनिष्कर्षंति २१ येत्विहवैराजन्याराजपुरुषावाअपाखंडाधर्मसेतून्भिंदंतितेसंपरेत्यवैतरण्यांनिपतंतिभिन्नमर्यादास्तस्यांनिरयपरिखाभूतायांनद्यांयादोगणैरितस्ततोभक्ष्यमाणाआत्मनानवियुज्यमानाश्चासुभिरुह्यमानाःस्वाघेनकर्मपाकमनुस्मरंतोविण्मूत्रपूयशोणितकेशनखास्थिमेदोमांसवसावाहिन्यामुपतप्यंते २२

यस्तुभूतानांईश्वरकल्पितवृत्तीनांव्यथांकरोतिसः अंधकूपेपतति तत्रतैः पशुपक्षिमृगसरीसृपमशकमत्कुणमशकादिभिः पीड्यमानः दुःखंप्राप्नोति १७ यस्तुअकृतपंचमहायज्ञः असंविभज्यअश्नातिसः कृमिकुंडेकृमिभूतः कृमिभिर्भक्ष्यमाणः कृमिभोजनस्तिष्ठति १८ यस्तुस्तेयेनबलाद्वाविप्रस्य अन्यस्यवाहिरण्यरत्नादीनिहरति सः संदंशेपतितितत्रलोहमयैः तप्तैः संदंशैः त्वचिछिंदंति १९ यस्तुअगम्यांस्त्रियंस्त्रीवाअगम्यंपुरुषंगच्छति तौकशयाताडितौतप्तसूर्मिनरके तप्तलोहमय्याप्रतिमया आलिंगयंति २० यस्तुपश्वादिषुगमनंकरोति तंवज्रकंटकशाल्मलींआरोप्यनिष्कर्षंति २१ येतुराजन्याः राजपुरुषावाधर्ममार्गान्भिंदंति तेविण्मूत्रपूयशोणितकेशनखास्थिमेदोमांसवाहिन्यांवैतरिण्यांउपतप्यंते २२

पशुचर्यास्वेच्छाचारं ( तेपूयादिभिरापूर्णेअर्णवइवगंभीरेपूयोदसंज्ञेनरकेनिपतंतितद्देवपूयादि ) २३ अतीर्थेविहितादन्यत्र । विध्यंतीतिप्राणनिरोधो ( नरको ) दर्शितः २४ ( येदंभार्थयज्ञेषुनतुविहितेषु ) निरयपतयोयमपुरुषाः ( यातयित्वापीडयित्वा विशसंविहिंसंति ) २५ लालाभक्षमाह । यस्त्विहेति । रेतःपाययति रेतःपानंकारयति ( तत्रहेतुः काममोहितः ) २६ ( सार्थान्संघान्भटाराजपुरुषाः ) यमदूतायेश्वानः ( ते ) सरभसंससंभ्रमम् २७ द्रव्यविनिमयेक्रयविक्रयादौ । निरवकाशेनिरालंबे । अवीचिशब्दार्थमाह । यत्रेति वीचिस्तरंगः तद्रहितत्वादवीचिः । २८ योविप्रस्तत्कलत्रंवासुरांपिबति । अन्योपिव्रतस्थःसन् राजन्योवैश्योवासोमपीथः कृतसोमपानइत्यन्वयः । तयोःसोमपाननिषेधेपिसोमस्थानेफलचमसविधानात् तथाचश्रुतिः । ' न्यग्रोधस्तिभीराहृत्यताःसंपिष्यदधन्युपमृज्यतमस्मैभक्षंसंप्रयच्छेन्नसोमं" इति २९ ( वरीयसोबहुमानयोग्यान्) सपूर्वमपिमृतकएवसन्मृत्वा ३०

येत्विहवैवृषलीपतयोनष्टशौचाचारानियमास्त्यक्तलज्जाःपशुचर्यांचरंतितेचापिप्रेत्यपूयविण्मूत्रश्लेष्ममलापूर्णार्णवेनिपतंतितदेवातिबीभत्सितमश्नंति २३ येत्विहवैश्वगर्दभपतयोब्राह्मणादयोमृगयाविहाराअतीर्थेचमृगान्निघ्नंतितानपिसंपरेताँल्लक्ष्यभूतान्यमपुरुषाइषुभिर्विध्यंति २४ येत्विहवैदांभिकादंभयज्ञेषुपशून्विशसंतितानमुष्मिँल्लोकेवैशसेनरकेपतितान्निरयपतयोयातयित्वाविशसंति २५ यस्त्विहवैसवर्णांभार्यांद्विजोरेतःपाययतिकाममोहितस्तंपापकृतममुत्ररेतःकुल्यायांपातयित्वारेतःसंपाययंति २६ येत्विहवैदस्यवोऽग्निदागरदाग्रामान्सार्थान्वाविलुंपंतिराजानोराजभटावातांश्चापिहिपरेत्ययमदूतावज्रदंष्ट्राःश्वानःसप्तशतानिविंशतिश्चसरभसंखादंति २७ यस्त्विहवाअनृतंवदतिसाक्ष्येद्रव्यविनिमयेदानेवाकथंचित्सवैप्रेत्यनरकेऽवीचिमत्यधःशिरानिरवकाशेयोजनशतोच्छ्रायाद्गिरिमूर्ध्नःसंपात्यतेयत्रजलमिवस्थलमश्मपृष्ठमवभासतेतदवीचिमत्तिलशोविशीर्यमाणशरीरोनम्रियमाणःपुनरारोपितोनिपतति २८ यस्त्विहवैविप्रोराजन्योवैश्योवासोमपीथस्तत्कलत्रंवासुरांव्रतस्थोऽपिवापिबतिप्रमादतस्तेषांनिरयंनीतानामुरसिपदाक्रम्यास्येवह्निनाद्रवमाणंकार्ष्णायसंनिषिंचंति २९ अथचयस्त्विहवाआत्मसंभावनेनस्वयमधमोजन्मतपोविद्याचारवर्णाश्रमवतोवरीयसोनबहुमन्येतसमृतकएवमृत्वाक्षारकर्दमेनिरयेऽवाक्शिरानिपातितोदुरंतायातनाह्यश्नुते ३०

येत्विहवृषलीपतयः नष्टशौचाचाराः तेविण्मूत्रश्लेष्ममलपूर्णार्णवेपतंति तदेवबीभत्सितं अश्नंति २३ येत्विह श्वगर्दभरतयः मृगयाविहाराः अतीर्थेमृगान्घ्नंतितान्परेतान्प्राणरोधेइषुभिर्विध्यंति २४ येदांभिकाः दंभयज्ञेषुपशून्विशसंतितान्वैशसेनरकेदूताः घातयंति २५ यस्तुअसवर्णांभार्यांद्विजोरेतः पाययतितंलालाभक्षेनरकेनिपात्यरेतःपाययंति २६ येतुदस्युरूपाः राजानोभटावाअग्निदाः गरदाः ग्रामादीन्लुंठंति तान्वज्रदंष्ट्राः श्वानः ७२० खादंति २७ यस्तुसाक्ष्ये अनृतंवदतिसः अवीचिनरकेयोजनशतोच्छ्रायाद्गिरिमूर्ध्नः अधःशिराः निपात्यते २८ यः विप्रोराजन्योवैश्योवातत्कलत्रंवाप्रमादतःसुरांपिबति तान्अयःपाननरकेनिपात्यतेषांमुखेवह्निनाद्रवीभूतंलोहरसंनिषिंचंति २९ यः आत्मसंभावनेन जन्मतपोविद्यावर्णाश्रमवतः श्रेष्ठान् न बहुमन्यते सः क्षारकर्दमेअवाक्शिरानिपतति यातनाः भुंक्ते ३०

पुरुषस्यमेधेनहिंसया भैरवादीन्यजंते । याश्चस्त्रियः नरमांसंभक्षयंति ( तांस्ते ) कामरूपारक्षोगणाभूत्वायथेहतेपुरुषादाःसंतःपूर्वमनृत्यंततद्वत ( सौनिकाःपशुघातिनइवअवदायखंड यित्वा ) ३१ वैश्रंभकैः विश्वासोपायैः उपविश्रंभय्य विश्वास्य ( क्रीडनकतयाक्रीडोपकरणतयापीडयंति ) ३२ ( दंदशूकाःसर्पाः ) बिलेशयान्मूषकान् ( हेनृप ) ३३ ( अंधावटोअं धकारयुक्तोगर्तः कुसूलंव्रीहिस्थापनयोग्योगर्तविशेषः ) सगरेण सविषेण । तेष्वेवअवटादिष्वेव ३४ अतिथयोअज्ञातपूर्वाः अभ्यागता ज्ञातपूर्वाःतान् ( क्रोधयुक्तोदग्धुमिच्छुरिव ) पापेन वक्रीकृतेन ३५ आढ्योहमित्यभिमतिः(-र्यस्यसः ) धनगर्वितः । अहंकृतिःअहंकारस्वरूपः श्रेष्ठोहमितिमानी । तिर्यक्प्रेक्षणंयस्य सर्वतः गुर्वादेरपियनंचोरयिष्यंतीतिविशंकमानः ( न कमपिविश्वसन्नित्यर्थः । ) परिशुष्यमाणंहृदयंवदनंचयस्य ( निर्वृतिसौख्यं ) अनवगतः अप्राप्तः ( ग्रहइवब्रह्मराक्षसइव ) तस्यार्थस्योत्पादनादिभिः ( वर्धनसंरक्षणैः ) शमलं ( अघं ) गृह्णातीतितथापरिवयंतिसूत्रप्रोतंकुर्वंति ३६

येत्विहवैपुरुषाःपुरुषमेधेनयजंतेयाश्चस्त्रियोनृपशून्खादंतितांश्चतेपशवइवनिहतायमसदनेयातयंतोरक्षोगणाःसौनिकाइवस्वधितिनावदायासृक्पिबंतिनृत्यंतिचगायंतिचहृष्यमाणायथेहपुरुषादाः ३१ येत्विहवाअनागसोऽरण्येग्रामेवावैश्रंभकैरुपसृतानुपविश्रंभय्यजिजीविषून्शूलसूत्रादिषूपप्रोतान्क्रीडनकतयायातयंतितेऽपिचप्रेत्ययमयातनासुशूलादिषुप्रोतात्मानःक्षुत्तृड्भ्यांचाऽभिहताःकंकवटादिभिश्चेतस्ततस्तिग्मतुंडैराहन्यमानाआत्मशमलंस्मरंति ३२ येत्विहवैभूतान्युद्वेजयंतिनराउल्बणस्वभावायथादंदशूकास्तेपिप्रेत्यनरकेदंदशूकाख्येनिपतंतियत्रनृपदंदशूकाः पंचमुखाः सप्तमुखाउपसृत्यग्रसंतियथाबिलेशयान् ३३ येत्विहवाअंधावटकुसूलगुहादिषुभूतानिनिरुंधंतितथामुत्रतेष्वेवोपवेश्यसगरेणवह्निनाधूमेननिरुंधंति ३४ यस्त्विहवाअतिथीनभ्यागतान्वागृहपतिरसकृदुपगतमन्युर्दिधक्षुरिवपापेनचक्षुषानिरीक्षतेतस्यचाऽपिनिरयेपापदृष्टेरक्षिणीवज्रतुंडागृध्राःकंककाकवटादयःप्रसह्योरुबलादुत्पाटयंति ३५ यस्त्विहवाआढ्याभिमतिरहंकृतिस्तिर्यक्प्रेक्षणः सर्वतोऽभिविशंकीअर्थव्ययनाशचिंतयापरिशुष्यमाणहृदयवदनोनिर्वृतिमनवगतोग्रहइवार्थमभिरक्षतिसचापिप्रेत्यतदुत्पादनोत्कर्षणसंरक्षणशमलग्रहःसूचीमुखेनरकेनिपततियत्रहवित्तग्रहंपापपुरुषंधर्मराजपुरुषावायकाइवसर्वतोऽगेषुसूत्रैःपरिवयंति ३६

येत्विहपुरुषाः पुरुषमेधेनभैरवादीन् यजंतेयाः कामरूपाः स्त्रियः नृपशून्खादंति तान् इहतैर्हताः पशवः तेरक्षोगणभोजने रक्षोगणाःभूत्वा शस्त्रेणछित्वातद्रक्तंपिबंतिनृत्यंतिच ३१ येत्विहवा अनागसः पशून्अरण्येग्रामेवाविश्वस्यशूलसूत्रादिषुप्रोतान्घातयंति तेप्रेत्यशूलादिषुप्रोताः तिग्मतुंडैःकंकवटादिभिः हन्यमानाआत्मशमलंस्मरंति ३२ येतुभूतान्उद्वेजयंति तेदंदशूकेनिपतंति ३३ येतुगुहादिषुभूतानिरुंधंतितान्अवटानिरोधेसगरेणवह्निनाधूमेननिरुंधंति ३४ यः अतिथीन्पापचक्षुषानिरीक्षते तस्य अक्षिणीवज्रतुंडाः गृध्राःकंककाकवटादयः पर्यावर्तननरकेबलात्उत्पाटयंति ३५ यःधनगर्वितः मानी तिर्यक्प्रेक्षणः द्रव्यनाशाचिंतयाशुष्यद्वदनहृदयः गृहइव अर्थरक्षतिसः प्रेत्य सूचीमुखे नरके पतति यत्र दूताः तं अंगेषु सूत्रैः बध्नंति ३६ ॥५२॥

इतरत्रस्वर्गादौ इहमर्त्यलोकेपुनर्भवेपुनर्जन्मानिमित्तम् । उभयोर्धर्माधर्मयोः शेषाभ्यां ३७ आदावेवद्वितीयस्कंधेवैश्वानरं यातीत्यादिना । ( चतुर्दशधाचतुर्दशभुवनात्मकः यद्भगवतः स्थविष्ठंरूपंभूद्वीपादिअनुवर्णितंतच्च आदृतः सन्सः ) उपगेयंउपनिषदांरूपं ( तुरीयंअग्राह्यं अवाङ्मनसगोचरमपि ) श्रद्धाभक्तिभ्यांविशुद्धाबुद्धिर्यस्य ३८ यथायथावत्श्रुत्वा ( स्थूलेरूपेधारणया।निर्जितमात्मानंमनःसूक्ष्मेरूपेशनैर्नयेत् । ) ३९ ( भागणोज्योतिर्गणः तल्लोकस्यचसंस्थास्थितिर्मयागीतावर्णिता । हेनृप । ) कथंभूतासंस्था । सकलानांजीवनिकायानांधामआश्रयभूतम् ( अद्भुतंईश्वरस्यस्थूलं ) वपुः ४० पंचमस्कंधसंबंधिपदभावार्थदीपनैः । प्रीयतांपरमानंदनृहरिर्बालभाषितैः । १ ॥ इतिश्रीभागवतेमहापुराणेश्रीधरस्वामिविरचितायांपंचमस्कंधटीकायां षड्विंशतितमोध्यायः ॥ २६ ॥ ( यदिहश्रीधराचार्यैः सुगमत्वादुपेक्षितम् ॥ बालानांबोधसिध्यैतद्व्याचचक्षेमहेश्वरः ॥ १ ॥ ) ॥ छ ॥ ॥ छ

एवंविधानरकायमालयेसंतिशतशः सहस्रशस्तेषुसर्वेषुचसर्वएवाधर्मवर्तिनोयेकेचिदिहोदिताअनुदिताश्चावनिपतेपर्यायेणविशंतितथैवधर्मानुवर्तिनइतरत्रइहतुपुनर्भवेतउभयशेषाभ्यांनिविशंति ३७ निवृत्तिलक्षणमार्गआदावेवव्याख्यातः एतावानेवांडकोशोयश्चतुर्दशधापुराणेषुविकल्पितउपगीयतेयत्तद्भगवतोनारायणस्यसाक्षान्महापुरुषस्यस्थविष्ठंरूपमात्ममायागुणमयमनुवर्णितमादृतःपठतिशृणोतिश्रावयतिसउपगेयंभगवतः परमात्मनोऽग्राह्यमपिश्रद्धभक्तिविशुद्धबुद्धिर्वेद ३८ श्रुत्वास्थूलंयथासूक्ष्मंरूपंभगवतोयातिः ॥ स्थूलेनिर्जितमात्मानंशनैःसूक्ष्मंधियानयेदिति ३९ भूद्वीपवर्षसरिदद्रिनभःसमुद्रपातालदिङ्नरकभागणलोकसंस्था ॥ गीतामयातवनृपाद्भुतमीश्वरस्यस्थूलंवपुःसकलजीवनिकायधाम ४० इतिश्रीभागवतेमहापुराणेपारमहंस्यांसंहितायांपंचमस्कंधेनरकानुवर्णनंनामषड्विंशतितमोऽध्याय ॥ २६ ॥ ॥ श्रीकृष्णार्पणमस्तु ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥

एवंविधाः नरकाः यमालयेसंतिसहस्रशः तेषुअधर्मवर्तिनः यथाकर्मणाविशंति धर्मानुवर्तिनः तुस्वर्गादौ मर्त्यलोकेधर्माधर्मशेषाभ्यांविशंति ३७ एतावानेवअंडकोशः पुराणेषुचतुर्दशधाविकल्पेनगीयते ३८ एतत् भगवतः नारायणस्यस्थूलंमायामयंरूपंयःआदरेणपठतिशृणोतिश्रावयतिसः भक्त्याविशुद्धबुद्धिः अग्राह्यमपितत्त्ववेत्ति यतिः भगवतः स्थूलेरूपेनिर्जितंमनः धियाशनैः सूक्ष्मेरूपेनयेत् ३९ हेनृपभूद्वीपवर्षसरिदद्रिनभःसमुद्रपातालदिङ्नरकभागणलोकसंस्थाइयंमयातवगीताएव ईश्वरस्यइदंस्थूलंरूपंतेअनुवर्णितम् ४० ॥ ॥ इतिपंचमस्कंधेचूर्णिकायांषड्विंशोऽध्यायः ॥ ॥ २६ ॥ ॥ ॥ ॥ अयंस्कंधःसमाप्तः ॥ ॥ ॥ श्रीकृष्णार्पणंभूयात् ॥

गजम्॥९॥६

॥ अथ सटीक-सचूर्णिक-श्रीमद्भागवते षष्ठस्कंधः प्रारभ्यते ॥

॥ श्रीर्जयतितराम् ॥ पुण्यारण्येनृसिंहैकनामसिंहोविराजते । यन्नादतःपलायंतेमहाकल्मषकुंजराः ॥१॥ त्रिसर्गसंभवान्जीवान्स्वमर्यादासुसंयतान् ॥ विष्णुःपात्यखिलैरूपैरित्येवंपंचमे
स्थितम्॥२॥ अध्यायैकोनविंशत्यापष्ठेपोषणमुच्यते । अतिलंघितमर्यादभक्तरक्षणलक्षणम्॥३॥ अजामिलोमनुष्येषुमहापापोयथाऽवितः । विश्वरूपादिघातीचतथादेवेषुवासवः॥४॥ अ
जामिलस्यभक्तत्वंविष्णुदूतैर्निरूपितम् । संकेततश्चतन्नामपुत्रस्नेहानुषंगजम्॥५॥इंद्रोपिभगवद्भक्तःसख्यनोपेंद्रसेवकः । तदधीनसुरैश्वर्यशत्रुनिर्जयजीवितः॥६॥तत्रादौत्रिभिरध्यायैरजामि
लकथोच्यते।विश्वरूपकथापादैरिंद्रदोषोक्तयेततः॥७॥इंद्रस्यैवतुदोषोत्थवृत्राख्यानंततोऽष्टभिः।द्वाभ्यांचमरुदाख्यानमेवंप्रकरणक्रमः॥८॥तत्रादौप्रथमेविष्णोर्दूतैःपातकिमोचने।तत्पाप
ख्यापनायोक्तंयाम्यैर्धर्मादिलक्षणम्॥९॥अथपष्ठस्कंधोव्याख्यास्यते(तत्र)पूर्वोक्तानुवादपूर्वकंनिरंतरोक्तनरकपरिहारोपायंपृच्छतिनिवृत्तिमार्गइतिषड्भिः। आदौद्वितीयस्कंधेवैश्वानरंयाती
त्यादिना।भगवतात्वया यथायथावत् । यत्रयेनमार्गेण।क्रमेणयोगोऽर्चिरादिमा प्तिस्तेनोपलब्धोयोब्रह्मातेनसहअसंसृतिर्मोक्षोभवति।“ब्रह्मणासहतेसर्वेसंप्राप्तेप्रतिसंचरे । परस्यांतेकृतात्मा
नः प्रविशंतिपरंपदं” इतिवचनात् । १ त्रैगुण्यंस्वर्गादिसुखंतद्देवाविषयःप्राप्यंयस्य । नलीनाप्रकृतिर्यस्यतस्यपुंसःपुनःपुनर्गणसर्गःभोगार्थदेहारंभरूपः सच(प्रवृत्तिलक्षणो )मार्गःकथितस्तृ
तीये ‘ दक्षिणेनपथार्यम्णः पितृलोकंव्रजंतिते’इत्यादिना २ अनुवर्णितानिरंतराध्याये । व्याख्याताः चतुर्थस्यादौ ( मन्वंतरश्चव्याख्यातः ) यतः यस्मिन् ( आद्यः स्वायंभु
वः ) ३ । ४ । ( पंचमे ) द्वीपादीन् भागतो लक्षणतो मानतश्चधरामंडलस्यसंस्थानंज्योतिषां विवराणांच । इदंसंस्थानंविभुर्यथाऽसृजत्तथाव्याख्यातमित्यर्थः ५ नानाउग्रयातनाये
पुतान्नरकान्यथायेनोपायेननेयात्नगच्छेत् । तन्मेअधुनाव्याख्यातुमर्हसि ६ तत्रतावन्मन्वाद्युक्तंप्रायश्चित्तंविनानरकादुर्निवाराइत्याह । नचेदितिद्वाभ्यां । मनउक्तिपाणिभिःमनो
वाक्कायैः कृतस्यांहसोदोषस्यतैरेवइहैवापचितिंप्रायश्चित्तंनकुर्याच्चेत्तर्हिपुरुषः प्रेत्यमृत्वानरकान्ध्रुवमुपैति । मेमयायेभवतः कीर्तिताः तिग्मादारुणायातनायेषु ७ यस्मादेवंतस्मात्पाप
स्यनिष्कृतौप्रायश्चित्तेयतेतकदा मृत्योः पुरैवतत्रापिअविपद्यताअम्रियमाणेनआत्मनादेहेन । यद्वाअविपत्तिर्विपत्तिरहितोयावत् । यतात्मना संयतेनमनसा । तत्रापिआशु ( शीघ्रं )
अन्यथा“अतीवचिरकालेतुद्विगुणंव्रतमर्हति”इतिद्वैगुण्यापत्तेः तत्रचपापस्यमहत्वमल्पत्वंचावेक्ष्यतदनुरूपेप्रायश्चित्तेयतेतरुजांरोगाणांनिदानवित्यथावैद्यस्तदनुरूपंचिकित्सेवतद्वत् ८

श्रीः ॥ राजोवाच॥निवृत्तिमार्गःकथितआदौभगवतायथा॥क्रमयोगोपलब्धेनब्रह्मणायदसंसृतिः १ प्रवृत्तिलक्षणश्चैवत्रैगुण्यविषयोमुने ॥ योसावलीनप्रकृते
र्गुणसर्गःपुनःपुनः२अधर्मलक्षणानानानरकाश्चानुवर्णिताः॥मन्वंतरश्चव्याख्यातआद्यःस्वायंभुवोयतः ३प्रियव्रतोत्तानपदोर्वंशस्तच्चरितानिच ॥द्वीपवर्षस
मुद्राद्रिनद्युद्यानवनस्पतीन् ४ धरामंडलसंस्थानंभागलक्षणमानतः ॥ ज्योतिषांविवराणांचयथेदमसृजद्विभुः ५ अधुनेहमहाभागयथैवनरकान्नरः॥ नानो
ग्रयातनान्नेयात्तन्मेव्याख्यातुमर्हसि ६ ॥ श्रीशुकउवाच ॥ नचेदिहैवापचितिंयथांहसःकृतस्यकुर्यान्मनउक्तिपाणिभिः ॥ ध्रुवंसवैप्रेत्यनरकानुपैतियेकीर्ति
तामेभवतस्तिग्मयातनाः ७ तस्मात्पुरैवाश्विहपापनिष्कृतौयतेतमृत्योरविपद्यतात्मना ॥ दोषस्यदृष्ट्वागुरुलाघवंयथाभिषक्चिकित्सेतरुजांनिदानवित् ८

श्रीगणेशायनमः ॥ श्रीमत्कुलदेवतायैनमः ॥ अथपष्ठस्कंधव्याख्या ॥ ॥ राजोवाच ॥ ॥ हेभगवन् त्वयानिवृत्तिमार्गश्चकथितः १ २ अधर्मलक्षणाः नरकाश्च ३ स्वायंभु
वमन्वंतरंप्रियव्रतोत्तानपदोर्वंशः ४ धरामंडलसंस्थानंचज्योतिषांविवराणांचस्थितिरुक्तासाश्रुता ५ इदानींनरः नरकान् येन नग च्छेत् तद्वक्तुमर्हसि ६ ॥ श्रीशुकउच ॥
हेनृपइह मनउक्तिपाणिभिः कृतस्यअंहसः मन्वाद्युक्तं प्रायश्चित्तं यदिनकुर्यात् तर्हिप्रेत्य नरकान्याति ७ तस्मात् पापानिष्कृतौ मृत्योः पूर्वमेव यतेत ८

अप्रचोदयतिद्वाभ्याम । दृष्टंराजदंडादि। श्रुतंनरकपातादि । ताभ्यामात्मनःपापमहितंजानन्नपिभूयःप्रायश्चित्तानंतरंकरोति अथो अतःकारणाद्वादशाब्दादिकथंप्रायश्चित्तं तेनसमूल
दोषस्यानिवृत्तेः निवृत्तस्यापुनश्चपापप्ररोहा गादितिभावः ९ किंच । क्वचित्कदाचित् अभद्रात्पापान्निवर्ततेक्वचित्तदेवपुनराचरति । यथाकुंजरः स्नातोपिरजोभिरात्मानंमलिनीकरो
ति तथापापस्यदुर्निवारत्त्वेननरकपातस्यावश्यंभावित्वात्प्रायश्चित्तंव्यर्थमितिमन्ये१०।रिहरति । कर्मणाकृच्छ्रादि-(लक्षणेन)प्रायश्चित्तेन कर्मणःपापस्यनिर्हारोनाशःआत्यंतिकःसमूलो
नहीष्यते । अविद्वानधिकारीयस्मिंस्तस्यभावस्तत्त्वंतस्मात् अतोऽविद्यायानाशाभावान्नष्टेपितस्मिन्पापेतत्संस्कारेणपापांतरस्यपुनःपुनःप्ररोहोभवत्येव । किंतर्हिमुख्यंप्रायश्चित्तंतदाह
प्रायश्चित्तंतुविमर्शनंज्ञानम् ११ तत्तुनित्यमप्रमत्तः शनैर्लभतेनान्यइतिसदृष्टांतमाह नेति पथ्यमेवान्नमश्नतः पुरुषान् यथाव्याधयोनबाधंते । तथा नियमादिकर्ताक्षेमायतत्त्वज्ञानाय
(कल्पते) समर्थोभवति १२ एतदेवविशदयतिद्वाभ्यां तपसाएकाग्र्येण । "मनसश्चेंद्रियाणांच ऐकाग्र्यंपरमंतपः" इतिस्मृतेः । ब्रह्मचर्येणाष्टांगेन तदुक्तं "स्मरणंकीर्तनंकेलिःप्रेक्ष
णंगुह्यभाषणं । संकल्पोऽध्यवसायश्चक्रियानिर्वृतिरेवच । एतन्मैथुनमष्टांगंप्रवदंतिमनीषिणः । विपरीतंब्रह्मचर्यमेतदेवाष्टलक्षणं"इति । शमोमनसोनियमनं । दमोबाह्येंद्रियाणां ।
त्यागोदानं यमोऽहिंसादिःनियमोजपादिः १३ १४ अस्यापिदुष्करत्वान्मुख्यमेवान्यत्प्रायश्चित्तमाह केचिदिति । केचिदित्यनेनएवंभूताभक्तिप्रधानाविरलाइतिदर्शयति ।
केवलयातपआदिनिरपेक्षया । वासुदेवपरायणाइतिनाधिकारिविशेषणमेतत् । किंत्वन्येषामश्रद्धयातत्राप्रवृत्तेरर्थात्तेष्वेवपर्यवसानादनुवादमात्रं १५ एतच्चज्ञानमार्गादपि ।
श्रेष्ठमित्याहनतथापूयेतशुध्येत । यथातत्पुरुषनिषेवयाकृष्णेऽर्पिताः प्राणायेन १६

राजोवाच ॥ दृष्टश्रुताभ्यांयत्पापंजानन्नप्यात्मनोऽहितम् ॥ करोतिभूयोविवशःप्रायश्चित्तमथोकथम् ९ क्वचिन्निवर्ततेभद्रात्क्वचिच्चरतितत्पुनः ॥ प्राय
श्चित्तमतोऽपार्थंमन्येकुंजरशौचवत् १० ॥ श्रीबादरायणिरुवाच ॥ कर्मणाकर्मनिर्हारोनह्यात्यंतिकइष्यते ॥ अविद्वदधिकारित्वात्प्रायश्चित्तंविमर्शनम् ११
नाश्नतःपथ्यमेवान्नंव्याधयोभिभवंतिहि ॥ एवंनियमकृद्राजन्शनैःक्षेमायकल्पते १२ तपसाब्रह्मचर्येणशमेनचदमेनच ॥ त्यागेनसत्यशौचाभ्यांयमेन
नियमेनच १३ देहवाग्बुद्धिजंधीराधर्मज्ञाःश्रद्धयान्विताः ॥ क्षिपंत्यघंमहदपिवेणुगुल्ममिवानलः १४ केचित्केवलयाभक्त्यावासुदेवपरायणाः ॥ अघंधुन्वं
तिकार्त्स्न्येननीहारमिवभास्करः १५ नतथाह्यघवान्राजन्पूयेततपआदिभिः ॥ यथाकृष्णार्पितप्राणस्तत्पूरुषनिषेवया १६

॥ राजोवाच ॥ जनः दृष्टश्रुताभ्यांराजदंडनरकपाताभ्यांआत्मनःअहितंपापंजानन्नपिप्रायश्चित्तानंतरंपापंकरोतिअतःद्वादशाब्दादिप्रायश्चित्तंकथम् ९ किंचकदाचित्
पापात्निवर्तते क्वचित् तदेवपुनराचरति तस्यप्रायश्चित्तंकुंजरशौचवत्तद्व्यर्थंभवति १० ॥ ॥ श्रीशुकउवाच ॥ ॥ कृच्छ्रादिकर्मणापापनाशः समूलोनभवति संस्कारेणतु
नः पापांतरस्यप्ररोहोभवत्येव किंतर्हि मुख्यंप्रायश्चित्तं ज्ञानं ११ तत्तुशनैर्लभते पथ्यमेवअश्नतःपुरुषान् यथाव्याधयोनबाधंते तथानियमादिकर्ताशनैःतत्त्वज्ञानायसमर्थोभव
ति १२ तपसाब्रह्मचर्येणशमेनदमेनत्यागेनसत्यशौचाभ्यां यमनियमाभ्यांच १३ धर्मज्ञाः देहवाक्बुद्धिजंपापंनाशयंति १४ केचित्केवलयाभक्त्याअघंधुन्वंति १५ यथा
कृष्णार्पितप्राणःसाधुसेवयाच अघवान् यथा पूयेत तथा तपआदिभिर्न १६

तत्रहेतुः । सध्रीचीनः समीचीनः अयंपंथाभक्तिमार्गःयतःक्षेमः । क्षेमत्वेहेतुः । नकुतश्चिद्विघ्नादेर्भयंयत्र । तदेवाह।सुशीलाःकृपालवः साधवोनिष्कामायत्रयस्मिन्मार्गे(भागवताः)धर्मानि ष्ठाअहोनज्ञाममार्गेइवासहायतानिमित्तभयंनापिकर्ममार्गवन्मत्सरादियुक्तेभ्योभयामिति भावः १७ भक्तेरन्यनिरपेक्षत्वमुक्तं कृच्छ्रादीनितुभक्तिंविनानशोधयंतीत्याह । प्रायश्चित्तानीति महतामप्यशोधकत्वेदृष्टांतमाह । सुराकुंभमापगानद्यइवेति १८ भक्तिः स्वलापिगुणाद्यैवेत्याह । सकृदिति । तस्यगुणेषुरागमात्रमस्तिननुज्ञानंयस्यतन्मनः । ( अत्रापिशब्दःप्रत्येकं योजनीयः। सकृदपिकिंपुनरभ्यासेन । मनःसंशयात्मकमप्यंतःकरणंकिंपुनर्निश्चयात्मिकाबुद्धिः । पादारविंदयोरपिकिंपुनःसमग्रमूर्तौ । निवेशितंबलादपि किंपुनःस्वतोनिविष्टं । तद्गुणे ष्वपिरागि किंपुनस्तत्स्वरूपेयैरिहेतिसामान्यवाचिभ्यांसर्वनामभ्यांमनोनिवेशनेजातिदेशविशेषानपेक्षेतिगम्यते । यैः कैश्चिदपिइहक्वापिनिवेशितंतेभक्तायमादीन्स्वप्नेपिनपश्यंति) । तावतैवचीर्णनिष्कृतंप्रायश्चित्तं यैः १९ इममर्थमितिहासेनोपपादयतिअत्रचेति मेमत्तः २० कान्यकुब्जपुरेदास्याःपतिर्नाम्नाऽजामिलइति । २१ बंदीग्रहेण अक्षैश्चद्यूतेन कैतवैर्वंचनादि भिश्चवृत्तिंजीविकां । बिभ्रत्पुष्णन् । यातयामासपीडयामास । २२ आयुषःसंबंधीमहान्कालोऽत्यगात् । सक्रियानित्यपेक्षायामाह । अष्टाशीत्यासंख्ययायुक्ताः समाः संवत्सराः २३ प्रवयसोवृद्धस्य ( अवमः कनिष्ठः । नाम्नानारायणः पित्रोर्भृशंदयितश्च ) २४ ( कलभाषिणिअस्फुटमधुरभाषणशीले ) बद्धंहृदयंयेन । जरठोवृद्धः । २५ ( यदास्वयंभुंजानस्तदातं भोजयन्एवंप्रपिबन्पाययन्खादन्खादयंश्चेति । ) एतच्चतदुपलालनादिश्रीनारायणनामोच्चारमाहात्म्येनतद्भक्तिरेवाभूदितिसिद्धांतोपयोगित्वेनापिद्रष्टव्यं २६

सध्रीचीनोह्ययंलोकेपंथाःक्षेमोऽकुतोभयः ॥ सुशीलाःसाधवोयत्रनारायणपरायणाः १७ प्रायश्चित्तानिचीर्णानिनारायणपराङ्मुखम् ॥नानिष्पुनंतिराजें द्रसुराकुंभमिवापगाः १८ सकृन्मनःकृष्णपदारविंदयोर्निवेशितंतद्गुणरागियैरिह ॥ नतेयमंपाशभृतश्चतद्भटान्स्वप्नेपिपश्यंतिहिचीर्णनिष्कृताः १९ अत्रचोदाहरंतीममितिहासंपुरातनम् ॥ दूतानांविष्णुयमयोःसंवादस्तंनिबोधमे २० कान्यकुब्जेद्विजःकश्चिद्दासीपतिरजामिलः ॥ नाम्नानष्टसदाचारोदा स्याःसंसर्गदूषितः २१ बंद्यक्षकैतवैश्चौर्यैर्गर्हितांवृत्तिमास्थितः ॥ बिभ्रत्कुटुंबमशुचिर्यातयामासदेहिनः २२ एवंनिवसतस्तस्यलालयानस्यतत्सुतान् ॥ कालोत्यगान्महान्राजन्नष्टाशीत्याऽयुषःसमाः२३तस्यप्रवयसःपुत्रादशतेषांतुयोऽवमः॥बालोनारायणोनाम्नापित्रोश्चदयितोभृशम्२४सबद्धहृदयस्तस्मिन्न र्भकेकलभाषिणि ॥ निरीक्षमाणस्तल्लीलांमुमुदेजरठोभृशम् २५ भुंजानःप्रपिबन्खादन्बालकस्नेहयंत्रितः ॥ भोजयन्पाययन्मूढोनवेदागतमंतकम् २६

१७ आचरितानि प्रायश्चित्तानिनारायणपराङ्मुखंननिष्पुनंति आपगाः सुराकुंभमिव १८ यैःयैःकृष्णपादारविंदयोःसकृन्मनःनिवेशितंतेपूताः संतः यमंतद्भटांश्चनपश्यं ति १९ अत्रविष्णुयमयोर्दूतानां संवादरूपं इतिहासंशृणु २० कान्यकुब्जेनगरे अजामिलनामा कश्चिद्द्विजः दासीपतिः नष्टसदाचारः दासीसंसर्गदूषितः आसीत् २१ गर्ह्यवृत्त्यासः कुटुंबंअबिभ्रत् २२ एवंतस्याः सुतान् लालयतः सतः अष्टाशीतिसमाभिःमितःकालः अगमत् २३ तस्यदशपुत्राआसन् तेषु कनिष्ठः नारायणोनाम आ सीत् २४ स्वयंजरठःसन् तंस्नेहेन लालयन् प्राप्तं अंतकं नवेद २५ २६

२७ वक्राणिविकटानितुंडानिमुखानियेषांतान्ऊर्ध्वाणिरोमाणियेषांतान् २८ प्लावितेनप्लुतत्वंनीतेन ( आजुहावएहीत्याकारितवान् ) २९ हरिकीर्तनं निशाम्य ( सहसाऽकस्मात्) आ
पतन् ( प्रापाः ) यतस्तद्भर्तुर्नाम ३० ( अंतर्हृदयात्हृदयमध्यात् । यमप्रेष्यान्यमदूतान् ) ३१ ( वैवस्वतस्ययमस्य ) पुरःसराभृत्याः ३२ अस्यनयनंनिषेधथ ३३ वयंयुष्मान्नजानीम
इतिकोपानकार्यः यतोलौकिकाद्भुतरूपायूयमित्याहुः सर्वइतिसार्धाभ्यां । लसंत्यः पुष्करमालाः संतियेषां ३४ नूत्नंनवंवयोयेषांते ( तरुणा इत्यर्थः ) निषंगइषुधिः धनुर्निषंगादिभिः
श्रीः शोभायेषांते ३५ विगतंतिमिरंआलोकश्चान्यस्यप्रकाशोयासुतथाभूतादिशःकुर्वतः । भवतामेतदनुचितमित्याहुः किमर्थमिति ३६ अहोदंड्यादंड्यादिज्ञानशून्याएतेचोराएवास्म
द्प्रियाधर्मराजस्यकिंकराइत्यनृतंवदंतीतिविस्मयेनप्रहस्यतान्प्रत्यूचुः । मेघस्येवनिर्ह्रादोध्वनिर्यस्यास्तया ३७ तत्वंस्वरूपं लक्षणंप्रमाणं ३८ कथंस्वित्केनप्रकारेण । ( अस्यदंडस्य)
स्थानंविषयः । कारिणः कर्मिणः । नृणामितिमराएवनपश्वादयः । तेष्वपिकतिचिदेवेत्यर्थः ३९

सएवंवर्तमानोज्ञोमृत्युकालउपस्थिते ॥ मतिंचकारतनयेबालेनारायणाह्वये २७ सपाशहस्तांस्त्रीन्दृष्ट्वापुरुषान्भृशदारुणान् ॥ वक्रतुंडानूर्ध्वरोम्णआ
त्मानंनेतुमागतान् २८ दूरेक्रीडनकासक्तंपुत्रंनारायणाह्वयम् ॥ प्लावितेनस्वरेणोच्चैराजुहावाकुलेंद्रियः २९ निशम्यम्रियमाणस्यब्रुवतोहरिकीर्तनम् ॥
भर्तुर्नाममहाराजपार्षदाःसहसाऽपतन् ३० विकर्षतोंऽतर्हृदयाद्दासीपतिमजामिलम् ॥ यमप्रेष्यान्विष्णुदूतावारयामासुरोजसा ३१ ऊचुर्निषेधितास्तांस्ते
वैवस्वतपुरःसराः ॥ केयूयंप्रतिषेद्धारोधर्मराजस्यशासनम् ३२ कस्यवाकुतआयाताःकस्मादस्यनिषेधथ ॥ किंदेवाउपदेवावायूयंकिंसिद्धसत्तमाः ३३
सर्वेपद्मपलाशाक्षाःपीतकौशेयवाससः ॥ किरीटिनःकुंडलिनोलसत्पुष्करमालिनः ३४ सर्वेचनूत्नवयसः सर्वेचारुचतुर्भुजाः ॥ धनुर्निषंगासिगदाशंखचक्रां
बुजश्रियः ३५ दिशोवितिमिरालोकाःकुर्वंतःस्वेनरोचिषा ॥ किमर्थंधर्मपालस्यकिंकरान्नोनिषेधथ ३६ इत्युक्तेयमदूतैस्तेवासुदेवोक्तकारिणः ॥ तान्प्र
त्यूचुःप्रहस्येदंमेघनिर्ह्रादयागिरा ३७ विष्णुदूताऊचुः ॥ यूयंवैधर्मराजस्ययदिनिर्देशकारिणः ॥ ब्रूतधर्मस्यनस्तत्त्वंयच्चधर्मस्यलक्षणम् ३८ कथंस्वि
द्ध्रियतेदंडःकिंवास्यस्थानमीप्सितम् ॥ दंड्याःकिंकारिणःसर्वेआहोस्वित्कतिचिन्नृणाम् ३९

एवंमृत्युकालेउपस्थितेसोतपाशहस्तान्त्रीन्पुरुषान्दृष्ट्वाभीतःसन्उच्चैःनारायणइतितं आजुहाव २७ २८ २९ तदाम्रियमाणस्यहरिकीर्तनंनिशम्यविष्णुपार्षदाःएत्य ३०
दासीपतिं अजामिलं विकर्षतः यमदूतान्ओजसा वारयांमासुः ३१ तदायमदूताःसायुधान्विष्णुरूपधरान्दृष्ट्वा तान्ऊचुःयूयंधर्मराजस्यशासनंप्रतिषेद्धारः केयूयं ३२
किंदेवाः उपदेवाः वा सिद्धावा ३३ यतः सर्वेपद्मपत्राक्षाः चतुर्भुजाःपीतवाससः किरीटिनः कुंडलिनः कमलमालिनः ३४ तरुणाः धनुर्निषंगादिधारिणःसंतःयमदू
तान्नःकिमर्थंनिषेधथ ३५ ३६ ॥ श्रीशुकउवाच ॥ यमदूतैः एवमुक्त विष्णुदूता ऊचुः ३७ यूयं धर्मराजस्य यदि निर्देशकारिणः तर्हि धर्मस्य तत्त्वं ब्रूत ३९

वेदेनप्रणिहितोविहितोधर्मः वेदप्रमाणकइत्यर्थःअनेनयोवेदप्रमाणकः सधर्मः योधर्मः सवेदप्रमाणकइतिस्वरूपंप्रमाणंचोक्तं यथाहजैमिनिः"चोदनालक्षणोर्थोधर्मः"इति।व्याख्यातंचभट्टैः"द्वयमेकेनसूत्रेणश्रुत्यर्थाभ्यांनिरूप्यते" इति । अदृष्टस्याप्यधर्मस्यस्वरूपंलक्षणंचदंडस्थानकथनायाहुः । तद्विपर्ययः योवेदनिषिद्धः सोऽधर्मः । निषेधश्चतस्मिन्प्रमाणमित्यर्थः । वेदस्यप्रामाण्येहेतुः । वेदोनारायणादुद्भूतोऽतः सएवसाक्षादित्युपचारःस्वयंभूरितिचानिःश्वासमात्रेणस्वयमेवभवतीति।तथाचश्रुतिः।"अस्यमहतोभूतस्यनिःश्वसितमेतद्यदृग्वेदः"इति४० कोसौनारायणस्तत्राहुः । येनस्वधाम्निस्वस्वरूपेअमीभावाः प्राणिनः गुणाः शांतत्वादयः नामानिब्राह्मणइत्यादीनि । क्रियाश्चाध्ययनाद्याः रूपाणिवर्णाश्रमादयः । तैर्विभाव्यंतेविविच्यंतेयथातथंयथावत् सनारायणः ४१ तथाप्यधर्मोनेनकृतइतिकुतोज्ञायतेतत्राहुः । सूर्यइति ( मरुद्वायुः ) अहनीअहश्चरात्रिश्च । कंउदकं । कुः पृथ्वी ( धर्मोयमः ) देह्यस्यजीवस्य । यथाहुः । "आदित्यचंद्रावनिलोऽनलश्चद्यौर्भूमिरापोहृदयंमनश्च । अहश्चरात्रिश्चउभेचसंध्येधर्मश्चजानातिनरस्यवृत्तं" इति ४२ स्थानमाहुः । एतैर्निमित्तभूतैर्विज्ञातः । दंड्यानाहुः । सर्वइति ( कारिणः कर्मिणः ) ४३ विपरीतानिअभद्राणिचकर्मिणांसंभवंति । यतस्तेषांगुणसंयोगोस्ति । यदिकश्चिदकर्तास्यात् तर्हितस्याभद्राणिनस्युः । नत्वेतदस्तीत्याहुः । नहिदेहवानकर्मकृदस्तीति । अतः सर्वेकर्मिणः कर्मिणांचपापस्यावश्यंभावित्वात् तेसर्वेक्रमानुरोधेनदंडमर्हंतीत्यर्थः ४४ कथंस्विद्ध्रियते दंडइत्यस्योत्तरं येनेति । धर्मोवेति दृष्टांतः अधर्मानुसारेणदंडोधर्मानुसारेणसुखवदित्यर्थः ४५ नकेवलंसूर्यादयएवज्ञापकाः किंत्वर्थापत्तिरपीत्याहुः । यथेति । हेदेवप्रवराः इहजन्मनिशांतघोरमूढत्वेनसुखिदुःखिमिश्रत्वेनधार्मिकत्वादिनात्रैविध्यभूतेषुयथोपलभ्यतेतथान्यत्रजन्मांतरेऽनुमीयतेत्रैविध्यान्यथानुपपत्त्याकल्प्यते ४६ वर्तमानजन्मनापूर्वापरजन्मधर्माधर्मज्ञानंभवतीतिसदृष्टांतमाहुः वर्तमानो वसंतादिकालः अन्ययोर्भूतभविष्ययोर्वसंतयोर्गुणाः पुष्पफलादयः तेषामभिज्ञापकोयथा एवमेतज्जन्म अन्ययोर्भूतभाविजन्मनोर्धर्माधर्मौनिदर्शयतीतितथा ४७

॥ यमदूताऊचुः ॥ वेदप्रणिहितोधर्मोह्यधर्मस्तद्विपर्ययः ॥ वेदोनारायणःसाक्षात्स्वयंभूरितिशुश्रुम ४० येनस्वधाम्न्यमीभावारजःसत्त्वतमोमयाः ॥ गुणनामक्रियारूपैर्विभाव्यंतेयथातथम् ४१ सूर्योग्निःखंमरुद्देवःसोमःसंध्याहनीदिशः ॥ कंकुःकालोधर्मइतिह्येतेदैह्यस्यसाक्षिणः ४२ एतैरधर्मोऽभिज्ञातः स्थानंदंडस्ययुज्यते ॥ सर्वेकर्मानुरोधेनदंडमर्हंतिकारिणः ४३ संभवंतिहिभद्राणिविपरीतानिचानघाः ॥ कारिणांगुणसंगोस्तिदेहवान्ह्यकर्मकृत् ४४ येनयावान्यथाधर्मोऽधर्मोवेहसमीहितः॥ सएवतत्फलंभुंक्तेतथातावदमुत्रवै ४५ यथेहदेवप्रवरास्त्रैविध्यमुपलभ्यते ॥ भूतेषुगुणवैचित्र्यात्तथान्यत्रानुमीयते ४६ वर्तमानोऽन्ययोःकालोगुणाभिज्ञापकोयथा ॥ एवंजन्मान्ययोरेतद्धर्माधर्मनिदर्शनम् ४७

यमदूताऊचुः ॥ वेदप्रणीतोयः सः धर्मः तद्विपर्ययः अधर्मः वेदः साक्षान्नारायणइति शुश्रुम ३९ ४० ४१ सूर्यः १ अग्निः २ खं ३ मरुत् ४ गावः ५ सोमः ६ संध्या ७ अहः ८ रात्रिः ९ दिशः १० कं ११ कुः १२ कालः १३ धर्मः १४ एते देहिनःसाक्षिणोभवंति एतैःअधर्मःविज्ञातःयथाकर्मतदनुरूपंदंडंसर्वेजीवाः अर्हंति इत्यादि ४२ ४३ ४४ ४५ ४६ ४७

अयंचधर्माधर्मज्ञानप्रकारोन्येषाम् । धर्मराजस्तुमनसैवसर्वंपश्यतीत्याहुः । पुरेसंयमिन्यांस्थितएवदेवोयमः देहेस्थितोऽतर्यामीवाजीवस्यपूर्वरूपंधर्माधर्मादियुक्तंविशेषेणपश्यति । अनु अनंतरमपूर्वंरूपंमीमांसतेयद्यस्यानुरूपंतद्विचारयतियतोसौभगवानजः ४८ जीवस्त्वीश्वरेणउपस्थापितंवर्तमानंदेहंपश्यतिनतुपूर्वमपरंचेत्याहुः । अज्ञः अविद्योपाधिर्जीवस्तुव्यक्तमेव प्राचीनकर्माभिव्यक्तंवर्तमानमेवदेहाद्युपास्तेअहमितिमन्यते । पूर्वमपरंवानवेद । अत्रहेतुःनष्टाजन्मनास्मृतिर्यस्य । अत्रदृष्टांतःतमसानिद्रयायुक्तोयथास्वप्नेभिव्यक्तमेवदेहाद्युपास्तेनतुजाग्रद्देहादि । पूर्वस्वप्नादिगतंवातद्वदित्यर्थः ४९ एवंभूतस्यजीवस्यसंसारंप्रपंचयतिपंचभिःश्लोकैः । पंचभिःकर्मेंद्रियैःस्वार्थाउपादानादीन्कुरुते तथापंचभिर्ज्ञानेंद्रियैःपंचशब्दादीन्वेद । षोडशेनमनसासहसप्तदशः षोडशोपाध्यंतर्गतोपिस्वयंत्वेकएवसर्वेंद्रियविषयप्रतिसंधानात् त्रीन्ज्ञानकर्मेंद्रियमनोविषयान्प्राप्नोति ५० तदेतल्लिंगशरीरंशक्तित्रयंगुणत्रयकार्यंमहदनादि पुंसिजीवे अन्वनुसंसृतिंधत्ते ५१ नेच्छन्अनिच्छन्नपि ( नजितः षण्णांकामादीनांवर्गोयेनसः ) अनेनैवलिंगेनकर्माणिकार्यते । कोशकारः कीटविशेष । मुह्यतिनिर्गमोपायंनजानाति ५२ कार्यतइत्यत्रानुभवंप्रमाणयतिनहीति । गुणैर्गुणकार्यरागादिभिः स्वाभाविकैः पूर्वकर्मसंस्कारोद्भूतैः ५३ कर्मवशेनचतदनुरूपोदेहोभवतीत्याह । लब्ध्वेति अव्यक्तंअदृष्टंनिमित्तंलब्ध्वातदनुरूपंव्यक्ताव्यक्तंस्थूलंसूक्ष्मंचशरीरंभवति । यथायोनिमातृसदृशं यथाबीजंपितृसदृशं स्वभावोवासना । शुक्रशोणितयोः सर्वत्रैकत्वेपिकर्मवासनयामातृसदृशः पितृसदृशश्चदेहो भवतीत्यर्थः ५४ संसारचक्रमुपसंहरंतो मुक्तिप्रकारमाहुः । एषइति । ईशसंगात्परमेश्वरभजनात् ५५ तदेवंसामान्यतो धर्मादिनिर्णयमुक्त्वा प्रस्तुतस्याजामिलस्याधर्मप्रपंचयंतो दंड्यत्वमाहुः अयंहीतियावदध्यायसमाप्ति । तत्रद्वाभ्यांतत्पूर्ववृत्तांतानुवादोऽन्यायातिरेकप्रदर्शनार्थं । शीलंसुस्वभावः वृत्तंसदाचारः गुणाः क्षमादयः तेषामालयोयं ( अजामिलः ) ५६ निरहंकृतोनिरहंकारः ५७ ततः आवृत्तः वनात्परावृत्तः ५८ भुजिष्ययाभोगस्त्रियादास्या मैरेयंमधु पैष्टीसुरांपीत्वामदेनआघूर्णितेभ्रांतेनेत्रेयस्याः ५९

मनसैवपुरेदेवःपूर्वरूपंविपश्यति ॥ अनुमीमांसतेऽपूर्वंमनसाभगवानजः ४८ यथाज्ञस्तमसायुक्तउपास्तेव्यक्तमेवहि ॥ नवेदपूर्वमपरंनष्टजन्मस्मृतिस्तथा ४९ पंचभिःकुरुतेस्वार्थान्पंचवेदाथपंचभिः ॥ एकस्तुषोडशेनत्रीन्स्वयंसप्तदशोऽश्नुते ५० तदेतत्षोडशकलंलिंगंशक्तित्रयंमहत् ॥धत्तेनुसंसृतिंपुंसिहर्षशोकभयार्तिदाम् ५१ देह्यज्ञोऽजितषड्वर्गोनेच्छन्कर्माणिकार्यते ॥कोशकारइवात्मानंकर्मणाच्छाद्यमुह्यति ५२ नहिकश्चित्क्षणमपिजातुतिष्ठत्यकर्मकृत् ॥कार्यतेह्यवशःकर्मगुणैःस्वाभाविकैर्बलात् ५३लब्ध्वानिमित्तमव्यक्तंव्यक्ताव्यक्तंभवत्युत ॥ यथायोनियथाबीजंस्वभावेनबलीयसा ५४ एषप्रकृतिसंगेनपुरुषस्यविपर्ययः ॥ आसीत्सएवनचिरादीशसंगाद्विलीयते ५५ अयंहिश्रुतिसंपन्नःशीलवृत्तगुणालयः ॥ धृतव्रतोमृदुर्दांतःसत्यवान्मंत्रविच्छुचिः ५६ गुर्वग्न्यतिथिवृद्धानांशुश्रूषुर्निरहंकृतः ॥ सर्वभूतसुहृत्साधुर्मितवागनसूयकः ५७ एकदासौवनंयातःपितृसंदेशकृद्द्विजः ॥ आदायततआवृत्तःफलपुष्पसमित्कुशान् ५८ ददर्शकामिनंकंचिच्छूद्रंसहभुजिष्यया ॥ पीत्वाचमधुमैरेयंमदाघूर्णितनेत्रया ५९

४८ ४९ ५० ५१ ५२ ५३ ५४ ५५ अयंअजामिलोतिशुचिः सन् ५६ ५७ पित्राज्ञयावनंगत्वाफलपुष्पसमित्कुशानादायपरावृत्तः ५८ मार्गेकंचिन्मद्यपानेनमत्तया दास्या नग्नया क्रीडंतं शूद्रं ददर्श ५९

विशेषेणश्लथंतीनीवीयस्याः ( अनयासह ) व्यपेतं स्वाचाराद्भ्रष्टम् ६० कामेनकामोद्दीपकेनतदंगरागेणहारिद्रादिनालिप्तेन ।( बाहुनापरिरंभितामालिंगिताम् )६१सत्त्वंधैर्यं श्रुतंज्ञानं तद्ब
लेनस्तंभयन्नपिमदनकंपितंमनःसमाधातुंनशक्तोभूत् ६२ तद्दर्शनमेवनिमित्तंयस्यस्मरव्याजस्यग्रहस्यतेनग्रस्तः विचेतनो गतस्मृतिः ६३ यावतासमग्रेण ६४ लंभितांपरिणीताम् ६५
६६ अघरूपमायुर्यस्यमलमेवतदीयमन्नादिकमत्तीतिमलात् ६७ अकृतनिर्वेशंअकृतप्रायश्चित्तम् अस्यैवचाहितार्थेनेष्यामइत्याहुःयत्रेति ६८ इतिषष्ठस्कंधेटीकायांप्रथमोध्यायः ॥ १ ॥
द्वितीयेवैष्णवैर्याम्यान्नाममाहात्म्यमद्भुतम् । श्रावयित्वाद्विजोविष्णोर्लोकंनीतइतीर्यते ॥ १ ॥ नयकोविदाःन्यायनिपुणाः १ धर्मदृशांसभामधर्मः स्पृशति । तदाह । यत्रसभायांयैः
धर्मदृग्भिः । तेषांतांसभां २ पितरः पितृवत्पालकाः शास्तारोअनुशिक्षकाः । वैषम्यमदंड्यदंडनम् ३ ए तत्प्रवर्तितमधर्ममन्येपिकरिष्यतीतिमहत्कष्टमभूदित्याहुःयद्यदितिश्रेयान्श्रेष्ठः ४
विश्वस्तघातादपीत्याहुः । यस्येतिद्वाभ्यां ( अंकेउत्संगे ) निर्वृतोनिश्चिंतः ५ तद्विश्वासेननितरामर्पितश्चात्मायेनतं । विश्रंभणीयः विश्वसनीयः सघृणः (सकरुण )श्चेत् ६

मत्तयाविश्लथन्नीव्याव्यपेतंनिरपत्रपम् ॥ क्रीडंतमनुगायंतंहसंतमनयांऽतिके ६० दृष्ट्वातांकामलिप्तेनबाहुनापरिरंभिताम् ॥ जगामहृच्छयवशंसहसैवविमो
हितः ६१ स्तंभयन्नात्मनात्मानंयावत्सत्त्वंयथाश्रुतम् ॥ नशशाकसमाधातुंमनोमदनवेपितम् ६२ तन्निमित्तस्मरव्याजग्रहग्रस्तोविचेतनः ॥ तामेवमनसाध्यायन्
स्वधर्माद्विररामह ६३ तामेवतोषयामासपित्र्येणार्थेनयावता ॥ ग्राम्यैर्मनोरमैःकामैःप्रसीदेतयथातथा ६४ विप्रांस्वभार्यामप्रौढांकुले महतिलंभिताम् ॥ विससर्
जाचिरात्पापःस्वैरिण्यापांगविद्धधीः ६५ यतस्ततश्चोपनिन्येन्यायतोऽन्यायतोधनम् ॥ बभारास्याःकुटुंबिन्याःकुटुंबंमंदधीरयम् ६६ यदसौशास्त्रमुल्लं
घ्यस्वैरचार्यविगर्हितः ॥ अवर्ततचिरंकालमघायुरशुचिर्मलात् ६७ ततएनंदंडपाणेःसकाशंकृतकिल्बिषम् ॥ नेष्यामोऽकृतनिर्वेशंयत्रदंडेनशुद्ध्यति ६८ इति
श्रीभा०प०प्रथमोध्यायः ॥ १ ॥ श्रीशुकउवाच ॥ एवंतेभगवद्दूतायमदूताभिभाषितम् ॥ उपधार्याथतान्राजन्प्रत्याहुर्नयकोविदाः १ विष्णुदूताऊचुः ॥ अहोकष्टंध
र्मदृशामधर्मःस्पृशतेसभाम् ॥ यत्रादंड्येष्वपापेषुदंडोयैर्ध्रियतेवृथा २ प्रजानांपितरोयेचशास्तारःसाधवःसमाः ॥ यदिस्यात्तेषुवैषम्यंकंयांतिशरणंप्रजाः ३ यद्य
दाचरतिश्रेयानितरस्तत्तदीहते ॥ सयत्प्रमाणंकुरुतेलोकस्तदनुवर्तते ४ यस्यांकेशिरआधायलोकःस्वपितिनिर्वृतः ॥ स्वयंधर्ममधर्मंवानहिवेदयथापशुः ५ सक
थंन्यर्पितात्मानंकृतमैत्रमचेतनम् ॥ विश्रंभणीयोभूतानांसघृणोद्रोग्धुमर्हति ६

तांदृष्ट्वाआत्मानंस्तंभयन्नपिकामवशंगतः ६१ मदनवेपितंमनःनियमितुंनशक्तोभूत् ६२ ततःपित्र्येणार्थेनतांवशंआनीयसतीं स्वभार्यांत्यक्त्वातयासहरेमे ६३ ६४ ६५
६६ ६७ सयन्नितत्याजअसौशास्त्रंउल्लंघ्यपापंकृतवान् ततः एनंदंडपाणेःसकाशंनेष्यामः यत्रदंडेन शुद्ध्यति ६८ इतिषष्ठस्कंधेप्रथमोध्यायः १ ॥ श्रीशुकउवाच ॥ एवंते
भगवद्दूताः यमदूतवाक्यंउपधार्य तानाहुः १ ॥ ॥ विष्णुदूताऊचुः ॥ ॥ अहोकष्टंधर्मदृशांसभांअधर्मः स्पृशति यत्रनिष्पापेषुवृथादंडः ध्रियते २ ये प्रजानां पितृवत्
पालकाः तेषुयदिवैषम्यंस्यात् तर्हिप्रजाः कंशरणंयास्यंति ३ यद्यदाचरति श्रेयानितरस्तत्तदीहते सयत्प्रमाणंकुरुतेलोकस्तदनुवर्तते ४ लोकःयस्यांके शिरः आधाय
स्वस्थःस्वपिति धर्माधर्मंनवेद यथा पशुः ५ सःकथंद्रोग्धुमर्हति ६

नन्वम्यपापिनोदंडे किमर्थमाक्रोशः ।कयतेतत्राहुः अयंहीति । यद्यस्माद्विवशोपिहरेर्नामव्याजहारउच्चारितवान् नकेवलंप्रायश्चित्तमात्रंहरेर्नामअपितुस्वस्त्ययनं मोक्षसाधनमपि । "सकृदुच्चरितंयेनहरिरित्यक्षरद्वयम् । बद्धः परिकरस्तेनमोक्षायगमनंप्रति" इतिस्मृतेः ७ ननुकर्मसाद्गुण्यकरंहरेर्नामेतियुक्तं । "यस्यस्मृत्याचनामोक्त्यातपोयज्ञक्रियादिषु । न्यूनंसंपूर्णतांयातिसद्योवंदेतमच्युतं" इत्यादिवचनात् । स्वातंत्र्येणत्वघनिवर्तकंहरेर्नामकथंस्यात्तत्राहुः । एतेनैवेति अघोनःअघवतःमघवच्छंदवद्रूपं । यत्आइतिच्छेदः । आईपत्आभासमात्रंचतुरक्षरंयन्नामजगाद एतेनैवकेवलेनचतुरक्षरमित्यनेनाधिक्यंचदर्शितम् । कथंजगाद नारायण आयआगच्छइत्येवंविक्रोशरूपेणपुत्राह्वानेन । अयंभावः । कर्मांगत्वेपिहरिनाम्नःखादिरत्वादिवत् (खादिरोयूपोभवति । खादिरंवीर्यकामस्य । इत्यत्रयथाएकस्यैवखादिरत्वस्यक्रत्वर्थत्वं वीर्यलक्षणपुरुषार्थत्वंचतद्वत्)संयोगपृथक्त्वेनप्रायश्चित्तार्थत्वंयुक्तमेव । तथाहि । "अवशेनापियन्नाम्निकीर्तिते सर्वपातकैः । पुमान्विमुच्यतेसद्यः सिंहत्रस्तैर्मृगैरिव"इत्यादिभिः पुराणेषुतावत्सहस्रशोनाम्नः स्वातंत्र्यमवगम्यते । नचतेर्थवादाइतिशंकनीयं विधिशेषत्वाभावात् (यथावायव्यंश्वेतमालभेतभूतिकामइतिविधिस्तच्छेषत्वंवायुर्वैक्षेपिष्ठादेवतेत्यर्थवादस्य तथात्रापिविधिशेषत्वेनभाव्यंतदभावात्इत्यर्थः ) नचविध्यश्रवणादन्यशेषताकल्पनीया । "यदाग्नेयोष्टाकपालोभवति"इत्यादिवदप्राप्तार्थत्वेनुविध्यनुपपत्तिः यथारागतःप्राप्तेभोजनादौ प्राप्तार्थत्वेनविधिकल्पनोपपत्तेः । मंत्रेषुच। "मर्ताअमर्त्यस्यते भूरिनाममनामहे । विप्रासोजातवेदसः । आस्यजानंतोनामचिद्विविक्तन" ( मर्ताःमर्त्याःमरणधर्माणोविप्रासोविप्रास्तेवयं अमर्त्यस्यजातवेदसस्तेनामभूरितपोदानादिसर्वधर्मेभ्योऽधिकंमनामहेमन्यामहइत्यर्थः आअस्येतिछेदः अस्यविष्णोः आसम्यक्प्रकारेणनामयूयंविवक्तनकीर्तयतकिंकुर्वंतः चित्कचित्जानंतः नाममाहात्म्यज्ञानवंतइत्यर्थः ) इत्यादिषुनाम्नस्तपोदानादिसर्वधर्माधिक्यमवगम्यते । उपपादितंचमंत्रार्थवादानामपिस्वार्थेप्रामाण्यंदेवताधिकरणे । तस्माच्छ्रीनारायणनामाभासमात्रेणैवसर्वाघनिष्कृतंकृतंस्यादिति ८ ननुकामकृतानांबहुमहापातकानांसहस्रशआवर्तितानांद्वादशाब्दादिकोटिभिरप्यनिवर्त्यानांकथमिदमेकमेवप्रायश्चित्तंतत्राहुः स्तेनइतिद्वाभ्याम् ९ सुनिष्कृतंश्रेष्ठंप्रायश्चित्तमिदमेव । तत्रहेतुः । ( नामव्याहरणंनामोच्चारणम् ) यतोनामव्याहरणात्तद्विषयानामोच्चारकपुरुषविषयामदीयोयंमयासर्वतोरक्षणीयइतिविष्णोर्मतिर्भवति १० श्रेष्ठत्वमेवोपपादयंतिनेतिद्वाभ्याम् । ब्रह्मवादिभिर्मन्वादिभिरुक्तैर्व्रतादिभिर्निष्कृतैःप्रायश्चित्तैस्तथानशुध्यति । उदाहृतैरुच्चारितैर्यथानामपदैरित्यनेननमामीत्यादिक्रियायोगोपिनापेक्षितइतिदर्शितम् । किंच । तन्नामपदोच्चारणंउत्तमश्लोकस्यतद्गुणानांचोपलंभकंज्ञापकंभवति । नतुकृच्छ्रचांद्रायणादिवत्पापनिवृत्तिमात्रेपक्षीणमित्यर्थः ११

अयंहिकृतनिर्वेशोजन्मकोटचंहसामपि॥यद्व्याजहारविवशोनामस्वस्त्ययनंहरेः ७ एतेनैवह्यघोनोऽस्यकृतंस्यादघनिष्कृतम्॥यदानारायणायेतिजगादचतुरक्षरं८स्तेनःसुरापोमित्रध्रुग्ब्रह्महागुरुतल्पगः ॥स्त्रीराजपितृगोहंतायेचपातकिनोपरे९सर्वेषामप्यघवतामिदमेवसुनिष्कृतम् ॥नामव्याहरणंविष्णोर्यतस्तद्विषयामतिः१० ननिष्कृतैरुदितैर्ब्रह्मवादिभिस्तथाविशुद्धत्यघवान्व्रतादिभिः ॥ यथाहरेर्नामपदैरुदाहृतैस्तदुत्तमश्लोकगुणोपलंभकम् ११

अयंतुजन्मकोटचंहसांकृतनिर्वेशःयदाविवशःसन् ७ हरेः नामव्याजहारएतेनैवअस्यपातकंदग्धं यदानारायणेतिजगाद ८ अहो स्तेनःसुरापोमित्रध्रुक्ब्रह्महागुरुतल्पगः स्त्रीराजपितृगोहंतायेचपातकिनोपरे ९ सर्वेषांअघवतांइदमेवश्रेष्ठंप्रायश्चित्तं किंतत् विष्णोर्नामोच्चारणमिति १० यथाहरेर्नाम्नाशुध्यतितथाप्रायश्चित्तैर्न ११

नैकांतिकंनात्यंतशोधकम् । तन्निष्कृतम् । यस्मिन्कृतेपिअसत्पथेपापमार्गे । मनोधावतिचेत् । कर्मणांपापानांनिर्हारंआत्यंतिकंनाशमिच्छतांहरेर्गुणानुवादएवप्रायश्चित्तम् । यतोसौ
खलुसत्त्वभावनः चित्तशोधकः १२ अथतस्मादेनंपाअपमार्गेगनयत । कृतमशेषाणा मघानांनिष्कृतंयेन । यद्यस्मात्समग्रहीत्संपूर्णमुच्चारितवान् । नामैकदेशेनाप्यलमितिभावः । म्रिय
माणइत्यनेनपुनः पापांतरासंभवउक्तः नतुतत्कालत्वमेवविवक्षितम् । तदानींकृच्छ्रादिविधिवन्नामोच्चारणविधेरप्यसंभवात् । नचविधिंविनाकाकतालीयनामोच्चारणंपापहरमितिप्रमाण
मस्ति १३ नन्वयंपुत्रनामाग्रहीत्ननुभगवन्नामतत्राहुः सांकेत्यंपुत्रादौसंकेतितम् । पारिहास्यंपरिहासेनकृतम् । स्तोभंगीतालापपूरणार्थंकृतम् । हेलनंकिंविष्णुनेतिसावज्ञमपिचवैकुंठना
मोच्चारणम् १४ ननुनायंसंकल्पपूर्वकंवैकुंठनामाग्रहीत् । किंतुपुत्रस्नेहपरवशःसन् । तत्राहुः । पतितइति । अवशेनापियोहरिरित्याहसयातनांनार्हति । पुमानित्यनेन नात्रवर्णाश्रमा
दिनियमइत्युक्तम् । अवशत्वमेवाह । पतितः प्रासादादिभ्यः स्खलितोमार्गे । भग्नोभग्नगात्रः । संदष्टः सर्पादिभिः । तप्तोज्वरादिना । आहतोदंडादिना १५ ननुमहतःपापस्यमहदेव
प्रायश्चित्तंयुक्तंनत्वल्पंनामग्रहणमात्रं पापतारतम्येनकृच्छ्रादितारतम्यवत्तत्राहुर्द्वाभ्याम् । गुरूणांपापानांगुरूणिप्रायश्चित्तानिलघूनिलघूनांचतारतम्यंज्ञात्वामन्वादिभिरुक्तानि । अत
स्तत्रतथैवव्यवस्था । हरिनाम्नस्तुनेयंव्यवस्थोक्ता"विष्णोः स्मरणमात्रेणमुच्यतेसर्वपातकैः"इति वचनात् नचसुराबिंदुपानेमहापातकत्वस्मरणवत् नाम्नस्तत्प्रायश्चित्तत्वस्मरणस्यायमति
भारः ।१६ किंच तैस्तपोदानादिभिस्तान्यघान्येवपूयंतेनश्यंति।अधर्माज्जातंमलिनंतुतस्यपापकर्तुर्हृदयं यद्वा तेषांअघानांहृदयंसूक्ष्मंरूपंसंस्काराख्यंनशुद्ध्यति।तदपीशांघ्रिसेवयाकीर्तना
दिनाशुद्ध्यतीत्यर्थः । अयंभावः । महांत्यपिपापानिसकृदुच्चारितेनैवनाम्नानश्यंति । सकृत्प्रवर्तितेनदीपेनैवगाढध्वांतानि । तदावृत्त्यातुपापांतरस्यानुत्पत्तिः दीपधारणयेवतमोंतरस्य ।
ततश्ववासनाक्षयात्हृदयशुद्धिः एतदर्थमेवतत्रतत्रावृत्तिविधानम् "पापक्षयश्चभवतिस्मरतांतमहर्निशं" इत्यादिषु । तदेवात्राप्युक्तम् । "गुणानुवादः खलुसत्त्वभावनः" "तदपीशांघ्रिसे
वया" इतिच अतोस्यहरिनाम्नैवसर्वपापक्षयः । वासनाक्षयस्तुमहापुरुषदर्शनादिभिरिति १७ तथापिपापप्रायश्चित्तमिदमितिज्ञात्वानोच्चारितमितिचेत्तत्राहुः । अज्ञानादिति । बालके
नाज्ञानादपिप्रक्षिप्तोग्निर्यथाकाष्ठराशिंदहतितद्वत् १८

नैकांतिकंतद्धिकृतेपिनिष्कृतेमनःपुनर्धावतिचेदसत्पथे ॥ तत्कर्मनिर्हारमभीप्सतांहरेर्गुणानुवादःखलुसत्त्वभावनः १२ अथैनंमापनयतकृताशेषाघनिष्कृ
तम् ॥ यदसौभगवन्नामम्रियमाणःसमग्रहीत् १३ सांकेत्यंपारिहास्यंवास्तोभंहेलनमेववा ॥ वैकुंठनामग्रहणमशेषाघहरंविदुः १४ पतितःस्खलितोभग्नःसं
दष्टस्तप्तआहतः॥हरिरित्यवशेनाहपुमान्नार्हतियातनाम् १५गुरूणांचलघूनांचगुरूणिचलघूनिच॥प्रायश्चित्तानिपापानांज्ञात्वोक्तानिमहर्षिभिः १६तैस्ता
न्यघानिपूयंतेतपोदानजपादिभिः॥नाधर्मजंतद्धृदयंतदपीशांघ्रिसेवया १७अज्ञानादथवाज्ञानादुत्तमश्लोकनामयत्॥संकीर्तितमघंपुंसोदहेदेधोयथानलः १८

अतःकृतप्रायश्चित्तंएनंमानयत १२ १३ यदसौम्रियमाणःभगवन्नामअग्रहीत् सांकेत्यंपारिहास्यंवास्तोभंहेलनमेववावैकुंठनामग्रहणंअशेषाघहरंविदुः १४ पतितः स्खलितो
भग्नः संदष्टः तप्तः यः पुमानहरिरितिआह सः यातनांनार्हति १५ किंच गुरूणांलघूनांचपापानांगुरूणिलघूनिचप्रायश्चित्तानिमन्वादिभिरुक्तानि १६ तैस्तपादिभिस्ता
न्येवाघानिनश्यंति नवासना सातु हरिकीर्तनादिनानश्यति १७ अज्ञानात् ज्ञानाद्वा कीर्तितं हरिनाम पुंसः अघं दहेत् एधोग्निरिव १८

भा०प० नन्विदमपिपर्दनुपदिष्टंश्रद्धाहीनंचकथं॥यश्चित्संस्यात्तत्राहुः । यथेति । अगदमौषधंवीर्यवत्तममितिवक्तव्येवीर्ये ।ममित्यु कंयदृच्छयाश्रद्धादिहीनंउपभुक्तंभक्षितंपर्यन्मुखादजानतोपिस्व अ०
गुणमारोग्यंकुर्यात् मंत्रोपिनामात्मकस्तथास्वकार्यंकुर्यादेव । नाहिवस्तुशक्तिः श्रद्धादिकमपेक्षतइत्यर्थः । तदुक्तंविष्णुधर्मेषु । " हरिर्हरतिपापानिदुष्टचित्तैरपिस्मृतः । अनिच्छयापिसं
॥५॥ स्पृष्टोदहत्येवहिपावकः" इति १९ तंविप्रंअनुमुचन् मोचयामासुः ।२० प्रत्युदितानिराकृताःसंतः । पात्वागत्यायमराज्ञियमराजाययथावत्कथयामासुः । २१ दर्शनेनउत्सवोयस्य ( प्रकृतिं
गतःस्वस्थः । ) २२ विवक्षुंवक्तुमिच्छंतंज्ञात्वा ( तस्यपश्यतःसतः ) २३ त्रैविद्यंवेदत्रयप्रतिपाद्यंगुणाश्रयंयमदूतानांधर्मंतथाशुद्धंनिर्गुणंभागवतंभगवत्प्रणीतंविष्णुदूतानांचधर्मंआकर्ण्य ॥ २ ॥
भक्तिमानासीदित्युत्तरस्यानुषंगः २४ २५ अनुतापंप्रपंचयति । अहोइतिचतुर्भिः । येनआत्मनामयावृषल्यांपुत्रतयाजायमानेनब्रह्मब्राह्मणजातिःविप्लावितंनाशितम् २६ दुष्कृतंदोषक
र्तारंकुलस्यकज्जलंकलंकम् २७ नास्त्यन्योबंधुःपुत्रादिर्ययोस्तौतपस्विनौसंतप्तोअधुनावत्क्षणमेव । ( नीचवत्कृतघ्नेनेव ) २८ २९ इदानींतस्यविमर्शपूर्वकंमोक्षक्रममाह । किमिदमि
त्यष्टभिः । साक्षात्प्रत्यक्षंइहजाग्रतैवदृष्टम् ३० येमांव्यमोचयन्तेचक्वगताः ३१ यद्यप्यहमस्मिन्जन्मनिदुर्भगः पापीयान्अथापिजन्मांतरेनूनंपुण्यवानित्याह । विबुधोत्तमदर्शनइति
निमित्तसप्तमी । तेषांदर्शनार्थपूर्वेणमंगलेनमहतापुण्येनभवितव्यं येनदर्शमेन ३२

थथाऽगदंवीर्यतममुपभुक्तंयदृच्छया ॥ अजानतोप्यात्मगुणंकुर्यान्मंत्रोप्युदाहृतः १९ ॥ श्रीशुकउवाच ॥ तएवंसुविनिर्णीयधर्मंभागवतंनृप ॥तंयाम्यपा
शान्निर्मुच्यविप्रंमृत्योरमूमुचन् २० इतिप्रत्युदितायाम्यादूतायात्वायमांतिके ॥ यमराज्ञेयथासर्वमाचचक्षुररिंदम २१ द्विजःपाशाद्विनिर्मुक्तोगतभीःप्रकृ
तिंगतः ॥ ववंदेशिरसाविष्णोःकिंकरान्दर्शनोत्सवः २२ तंविवक्षुमभिप्रेत्यमहापुरुषकिंकराः ॥ सहसापश्यतस्तस्यतत्रांतर्दधिरेनघ २३ अजामिलोऽप्य
थाकर्ण्यदूतानांयमकृष्णयोः ॥ धर्मंभागवतंशुद्धंत्रैविद्यंचगुणाश्रयम् २४ भक्तिमान्भगवत्याशुमाहात्म्यश्रवणाद्धरेः ॥ अनुतापोमहानासीत्स्मरतोऽशुभमा
त्मनः २५ अहोमेपरमंकष्टमभूदविजितात्मनः ॥ येनविप्लावितंब्रह्मवृषल्यांजायतात्मना २६ धिग्मांविगर्हितंसद्भिर्दुष्कृतंकुलकज्जलम् ॥हित्वाबालांसतीं
योऽहंसुरापामसतीमगाम् २७ वृद्धावनाथौपितरौनान्यबंधूतपस्विनौ ॥ अहोमयाऽधुनात्यक्तावकृतज्ञेननीचवत् २८ सोहंव्यक्तंपतिष्यामिनरकेभृशदारु
णे ॥धर्मघ्नाः कामिनोयत्रविंदंतियमयातनाः २९ किमिदंस्वप्नआहोस्वित्साक्षाद्दृष्टमिहाद्भुतम् ॥ क्वयाताअद्यतेयेमांव्यकर्षन्पाशपाणयः ३० अथतेक्वगता
सिद्धाश्चत्वारश्चारुदर्शनाः ॥ व्यमोचयन्नीयमानंबद्ध्वापाशैरधोभुवः ३१ अथापिमेदुर्भगस्यविबुधोत्तमदर्शने ॥ भवितव्यंमंगलेनयेनात्मामेप्रसीदति३२

यथाऔषधंभक्षितंसत् आरोग्यंकरोति एवंनामात्मकः मंत्रोपि १९ ॥ ॥ श्रीशुकउवाच ॥ ॥ तेएवंभगवद्धर्मनिर्णीयविप्रंयाम्यपाशान्निर्मुच्यमृत्योः मोचयामासुः
तदायमदूताः स्वस्थानंगत्वायमायसर्वंन्यवेदयन् द्विजः पाशान्मुक्तः विष्णुदूतान्ववंदे २२ तंवक्तुमिच्छंतंज्ञात्वातेअंतर्दधिरे २३ अजामिलःतयोः संवादंश्रुत्वा २४ आ
त्मनः अशुभंस्मरन् पश्चात्तापयुक्तः भगवतिभक्तिमान्सन्स्वात्मानंनिनिंद . २५ अहोअहंसतींस्त्रींअनथौपितरौस्वधर्माचरणंचहित्वा २६ सुरापांअसतींअगां अतः ॥ ५ ॥
मांधिक् २७ २८ अस्तुसोहंनरकेपतिष्यामि २९ मयाकिं स्वप्नोदृष्टः अहोयेमांव्यकर्षन्तेक्वगताः ३० येचमांव्यमोचयन्तेसिद्धाः क्वगताः ३१ दुर्भगस्य
मेमंगलंभाविअतः हरेर्नामजिह्वयायातं ३२

अन्यथापूर्वपुण्यंविना । कथंभूतंवैकुंठनाम । गृह्यतेवशीक्रियते ( वैकुंठो-)अनेनेतिग्रहणं ३३ ब्रह्मघ्नोविप्रत्वनाशकः ३४ ( यतिष्यामियत्नंकरिष्यामि ) ३५ अविद्याकामकर्मजंअवस्थात्र यात्मकं ) ३६ । ३७ अमिथ्याभूतेऽर्थे ( परमात्मनि ) धीर्यस्यतथाभूतः सन्देहादौममाहमितिमतिंहित्वा ( तस्यभगवतःकीर्तनादिभिः शुद्धंरागादिरहितम् ) मनः(-तस्मिन् ) धास्ये ( समाहितंकरिष्यामि ) ३८ मुक्तंसर्वमनुबंधनंपुत्रादिस्नेहोयेनसः ३९ ( सोऽजामिलः तस्मिन्गंगाद्वारे देवसदनेदेवालये ) प्रत्याहृतइंद्रियग्रामोयेन ( सः जीवात्मनिमनोयुयोज ) ४० ततोगुणेभ्यआत्मानंवियुज्यविशोध्यआत्मसमाधिनाचित्तैकाग्र्येणभगवतोधाम्निरूपे ( अनुभूत्यात्मकेब्रह्मणियुयुजे ) ४१ तस्मिन्भगवद्धाम्निउपरतानिश्चलाधीर्यस्यसः तस्मिन्कालेऽद्राक्षीदितिवा । पुरःपुरतः आवितश्चप्रागुपलब्धानेवतानुपलभ्यप्रत्यभिज्ञायववंदे ४२ ४३ ४४ उपसंहरति एवमितिद्वाभ्याम् । विप्लाविताः सर्वेधर्मायेन । हतंव्रतंस्वदारनियमादियस्य ४५ कर्मनिबंधस्यपापमूलस्यकृंतनंछेदकमतःपरंनास्ति कस्मात्परम् । तीर्थपदस्यानुकीर्तनात् । तत्रहेतुः । यत्यतोनुकीर्तनात्ततोनुकीर्तनादन्यथामायाश्चिचांतरैः रजस्तमोभ्यांकलिलंमलिनमेवातिष्ठतियत्तन्मनः कर्मसुपुनर्नसज्जते ४६

अन्यथाम्रियमाणस्यनाशुचेर्वृषलीपतेः ॥ वैकुंठनामग्रहणंजिह्वावक्तुमिहार्हति ३३ कचाहंकितवःपापोब्रह्मघ्नोनिरपत्रपः ॥ कचनारायणेत्येतद्भगवन्नाममंगलम् ३४ सोहंतथायतिष्यामियतचित्तेंद्रियानिलः ॥ यथानभूयआत्मानमंधेतमसिमज्जये ३५ विमुच्यतमिमंबंधमविद्याकामकर्मजम् ॥ सर्वभूतसुहृच्छांतोमैत्रःकरुणआत्मवान् ३६ मोचयेग्रस्तमात्मानंयोषिन्मय्यात्ममायया ॥ विक्रीडितोययैवाहंक्रीडामृगइवाधमः ३७ ममाहमितिदेहादौहित्वाऽमिथ्यार्थधीर्मतिम् ॥ धास्येमनोभगवतिशुद्धंतत्कीर्तनादिभिः ३८ ॥ श्रीशुकउवाच ॥ इतिजातसुनिर्वेदःक्षणसंगेनसाधुषु ॥ गंगाद्वारमुपेयायमुक्तसर्वानुबंधनः ३९ सतस्मिन्देवसदनआसीनोयोगमाश्रितः ॥ प्रत्याहृतेंद्रियग्रामोयुयोजमनआत्मनि ४० ततोगुणेभ्यआत्मानंवियुज्यात्मसमाधिना ॥ युयुजेभगवद्धाम्निब्रह्मण्यनुभवात्मनि ४१ यर्ह्युपारतधीस्तस्मिन्नद्राक्षीत्पुरुषान्पुरः ॥ उपलभ्योपलब्धान्प्राग्ववंदेशिरसाद्विजः ४२ हित्वाकलेवरंतीर्थेगंगायांदर्शनादनु ॥ सद्यःस्वरूपंजगृहेभगवत्पार्श्ववर्तिनाम् ४३ साकंविहायसाविप्रोमहापुरुषकिंकरैः ॥ हैमंविमानमारुह्यययौयत्रश्रियःपतिः ४४ एवंसविप्लावितसर्वधर्मादास्याःपतिःपतितोगर्ह्यकर्मणा ॥ निपात्यमानोनिरयेहतव्रतः सद्योविमुक्तोभगवन्नामगृह्णन् ४५ नातःपरंकर्मनिबंधकृंतनंमुमुक्षतांतीर्थपदानुकीर्तनात् ॥ नयत्पुनःकर्मसुसज्जतेमनोरजस्तमोभ्यांकलिलंततोन्यथा ४६

३३ ३४ ३५ ३६ ३७ सोहंममाहमितिमायाबंधंहित्वातत्कीर्तनादिभिः शुद्धंमनः भगवति धास्ये ३८ ३९ ॥ ॥ श्रीशुकउवाच ॥ ॥ एवंसाधूनांक्षणसंगेनजातनिर्वेदः सन्गंगाद्वारंगत्वादेवसदनेआसीनः आत्मनिमनःयुयुजे ४० ४१ ततः कालेनउपरतधीः सन् पुनः विष्णुदूतान् अद्राक्षीत्ननामच ४२ ततः गंगायां कलेवरं हित्वा विष्णुदूतस्वरूपंप्राप्तः सन् ४३ तैःसहविमानंआरुह्य भगवत्समीपंययौ ४४ एवंसर्वधर्मत्यक्तोपि विष्णुनामगृणन् मुक्तः ४५ अतः मुमुक्षूणां विष्णुकीर्तनादन्यत् बंधकृंतनं न ४६

४७नचेक्षितोभवति४८म्रियमाणःअवशत्वनश्रद्धाविहीनोपि४९इतिश्रीभागव०म०टीकायांषष्ठस्कंधेद्वितीयोध्यायः ॥२॥तृतीयेतुयमेनापिवैष्णवोत्कर्षवर्णनैः।सांत्वयित्वास्वदूतास्तेवैष्णवे किंकरीकृताः॥१॥विष्णुदूतैर्निर्णीतंशा धंयममुखेनद्रढयितुंतृतीयाध्यायारंभः।तत्रयदुक्तंयमराज्ञेयथासर्वमाचचक्षुरिति।ततःकिंतत्रवृत्तमितिपृच्छातिनिशम्येति।मुरारेर्नैदेशिकैःकिंकरैः ए वंविहतान् अतएवहता आज्ञायस्य। यस्यवशवर्तीअयजनः सोपितान्प्रतिकिमाह १ अत्याश्चर्यमेतदित्याह। यमस्येति। हेऋषेयमस्यदंडभंगः कुतश्चनकस्माच्चिदपिश्रुतपूर्वोनासीत् एतत्एतस्मिन्नर्थे। यद्वा नश्रुतपूर्वः एततयमदूतनिराकरणंचासीत्। अतःसर्वस्यापिलोकस्यसंशयोवर्ततेतंत्वत्तोन्योनछिनत्तीतिमोनिश्चितं(निश्चयः)अतःकथयेतिशेषः२ भगवतःपुरुषैः प्रतिहतउद्यमोयेषांतेयाम्याः पुरुषाः ३ कतिसंतीतिआक्षेपोक्तिः। त्रैविध्यंत्रिविधं स्वार्थेष्यञ् यथाभवतितथाकर्मकुर्वतः तदर्थंचकर्मफलस्याभिव्यक्तिहेतवः कतिसंतीति ४ संतुबहवःको बाधस्तत्राहुः। यदीति। मृत्युर्दुःखं अमृतंसुखम्। तेषांविप्रतिपत्तौतेउभेकस्यस्यातां। नकस्यापि परस्परविरोधेनोभयोरपिप्रतिबंधात्। ऐकमत्येतुकस्यचनस्यातां एकःसुखंकर्तुमिच्छ तिदुःखंचान्यः ऐकमत्येचतयोःपरस्परकार्यानुमोदमेनोभयोरपिप्राप्तिः कस्यवातेउभेअपिनस्यातामित्यर्थः ५ ननुबहूनांकर्मिणांव्यवस्थया बहवः शास्तारोभवंतुतथासतिनायंदोषः स्यात्तत्राहुः बहूनांकर्मिणांव्यवस्थायाः शास्तृबहुत्वेशास्तृत्वंस्यात्घटेत किंतु तदायत्तसर्वशास्तरिमुख्यशास्तृत्वंतदेकदेशेउपचारमात्रमेवस्यात्। यथाचक्रवर्तिनएवमुख्यंशास्तृत्वंमंड लवर्तिनामुपचारमात्रंनिरंकुशत्वाभावात् ६ यस्मादेवंशास्तृबहुत्वंनघटतेअतस्त्वमेकएवशास्ता। शुभाशुभेविविनक्तीतितथा ७ विप्रलंभितावंचितालंघितेत्यर्थः ८

**यएवंपरमंगुह्यमितिहासमघापहम्॥ शृणुयाच्छ्रद्धयायुक्तोयश्चभक्त्यानुकीर्तयेत् ४७ नवैसनरकंयातिनेक्षितोयमकिंकरैः ॥ यद्यप्यमंगलोमर्त्योविष्णुलोकेम हीयते ४८ म्रियमाणोहरेर्नामगृणन्पुत्रोपचारितम् ॥ अजामिलोप्यगाद्धामकिंपुनःश्रद्धयागृणन् ४९ ॥ ॥ इतिश्रीभागवतेम०षष्ठस्कंधेद्वितीयो ध्यायः ॥२॥ राजोवाच ॥ निशम्यदेवःस्वभटोपवर्णितंप्रत्याहकिंतान्प्रतिधर्मराजः॥ एवंहताज्ञोविहतान्मुरारेर्नैदेशिकैर्यस्यवशेजनोयम् १ यमस्यदेव स्यनदंडभंगःकुतश्चनर्षेश्रुतपूर्वआसीत् ॥ एतन्मुनेवृश्चतिलोकसंशयंनहित्वदन्यइतिमेविनिश्चितम् २ ॥ श्रीशुकउवाच ॥ भगवत्पुरुषैराजन्याम्याः प्रतिहतोद्यमाः॥पतिंविज्ञापयामासुर्यमंसंयमिनीपतिम् ३ ॥ यमदूताऊचुः ॥ कतिसंतीहशास्तारोजीवलोकस्यवैप्रभो ॥ त्रैविध्यंकुर्वतःकर्मफलाभि व्यक्तिहेतवः ४ यदिस्युर्बहवोलोकेशास्तारोदंडधारिणः ॥ कस्यस्यातांनवाकस्यमृत्युश्चामृतमेववा ५ किंतुशास्तृबहुत्वेस्याद्बहूनामिहकर्मिणाम् ॥ शास्तृत्वमुपचारोहियथामंडलवर्तिनाम् ६ अतस्त्वमेकोभूतानांसेश्वराणामधीश्वरः ॥ शास्तादंडधरोनृणांशुभाशुभविवेचनः ७ तस्यतेविहितोदंडो नलोकेवर्ततेऽधुना ॥ चतुर्भिरद्भुतैःसिद्धैराज्ञातेविप्रलंभिता ८**

यःइमंइतिहासंशृणुयात्कीर्तयेत्सः विष्णुलोकेमहीयते ४७ ४८ म्रियमाणोहरेर्नामगृणन्पुत्रोपचारितं अजामिलोप्यगाद्धामकिंपुनःश्रद्धयागृणन् ४९ ॥ ॥ इतिषष्ठे द्वितीयः ॥ २ ॥ राजोवाच ॥ धर्मराजः स्वदूतवर्णितंनिशम्य तान्प्रतिकिमाह १ हेऋषेयमस्यदंडभंगः कुतश्चपूर्वंनश्रुतः एतत् लोकसंशयंछिंधि २ ॥ श्रीशुकवाच ॥ हेराजन् भगवद्दूतैः याम्याः प्रतिहतोद्यमाः संतः यमंविज्ञापयामासुः ३ यमदूताऊचुः ॥ हेप्रभोजीवलोकस्यशास्तारः कतिसंति ४ सेश्वराणांभूतानांशास्तात्वमेवएको सि ५ ६ ७ इदानीं चतुर्भिः सिद्धैः तव दंडभंगः कृतः ते आज्ञा च लंघिता ८

तदेवाहुःनीयमानामिति ( यातनागृहान्नरकान् ) ९ तेत्वतः यदिनोऽस्माकंक्षमंहितंमन्यसे अन्यथाऽज्ञानतस्तदवज्ञानेतवाप्यनर्थःस्यात् । अतक्यौहितेषांप्रभावः । यतोनारायणायेति
केवलमभिहितेमाभयंकुर्वंतिवदंतः शीघ्रमागताः । १० प्रजाःसंयमयतीतितथा ११ मत्तोऽन्योजगतस्तस्थुषश्चपरोऽधीश्वरोस्ति । अहंतु जंगमानामेवतत्रापिपापिनामेवतत्किंकरःसन्
ईश्वरःसतुसर्वेश्वरः । कोसौ । यत्रयस्मिन्विश्वमोतंप्रोतंच । ऊर्ध्वतिर्यक्तंतुषुपटवद्यस्यत्वंशेभ्योब्रह्मविष्णुरुद्रेभ्योऽस्यस्थित्यादयोभवंतियस्यचवशेलोकोवर्ततेनसिनासिकायां ( ओतव
द ) प्रोतबलीवर्दवत् १२ एतत्प्रपंचयति । ब्राह्मणइत्यादिनामभिः( वर्णाश्रमादिनियमैरित्यर्थः ) वाचिनिजायां (वाचितन्त्र्यांजनंयोबध्नाति) तंत्यांदामन्यांजनान्योबध्नातिदामभिर्गाः
बलीवर्दानिव । तइमे जीवा नामभिस्तदनुरूपकर्मभिश्चनिबंधैर्बद्धाः संतएवयस्मैबलिं ( करभारं ) वहंतियदधीनाः कर्मकुर्वंतीत्यर्थः १३ यस्यचलीलादुर्विभाव्येत्याह । अहमितिद्वा
भ्याम् । १४ नस्पृष्टंरजस्तमश्चयैस्ते ( सत्त्वप्रधानाअपि ) ईहितंअभिप्रेतंचेष्टितंवानविदुः तत्रहेतुःस्पृष्टमाया माययास्पृष्टाः ततस्तेभ्योन्येनविदुरितिकिंपुनर्वक्तव्यम् १५ तन्मायामो
हितत्वान्नजानंतीत्युक्तम् । अविषयत्वाच्चतस्येत्याह यमिति । गोभिरिंद्रियैः हृदाचित्तेन । नविचक्षत न पश्यंति । ( इंद्रियादीनिनतद्दर्शनसाधनानीत्यर्थः । ) "यद्वाचानभ्युदितंयेन्म
नोनमनुते"इत्यादिश्रुतेः । आत्मनाजीवानांआत्मानंद्रष्टारं आकृतयोरूपाणिचक्षुर्यथाकर्मभूतंनजानंतितितःपरमाकृतीनांप्रकाशकम् ।नहिप्रमाताप्रमाणस्यविषयइतिभावः। एवंभूतःपर
मेश्वरोस्तीतिपूर्वेणैवसंबंधः१६भवत्वेवंभूतोन्यःपरमेश्वरःये पुनरस्मान्निर्भर्त्स्यपापिनंरक्षितवंतस्तेकेतानाहद्वाभ्याम् तस्येति।तस्यैवरूपंगुणाःप्रभावादयःस्वभावोभक्तवात्सल्यादिर्येषांते १७

नीयमानंतवादेशादस्माभिर्यातनागृहान् ॥ व्यमोचयन्पातकिनंछित्वापाशान्प्रसह्यते ९ तांस्तेवेदितुमिच्छामोयदिनोमन्यसेक्षमम् ॥ नारायणेत्यभि
हितेमाभैरित्यायुर्द्रुतम् १० ॥ श्रीशुकउवाच ॥ इतिदेवःसआपृष्टःप्रजासंयमनोयमः ॥ प्रीतःस्वदूतान्प्रत्याहस्मरन्पादांबुजंहरेः ११ ॥ यमउवाच॥
परोमदन्योजगतस्तस्थुषश्चओतंप्रोतंपटवद्यत्रविश्वम् ॥ यदंशतोऽस्यस्थितिजन्मनाशानस्योतवद्यस्यवशेचलोकः १२ योनामभिर्वाचिजनंनिजायांब
ध्नातितंत्यामिवदामभिर्गाः । यस्मैबलिंतइमेनामकर्मनिबंधबद्धाश्चकितावहंति १३ अहंमहेंद्रोनिर्ऋतिःप्रचेताःसोमोग्निरीशःपवनोर्कोविरिंच्यः ॥ आ
दित्यविश्वेवसवोथसाध्यामरुद्गणारुद्रगणाःससिद्धाः १४ अन्येचयेविश्वसृजोऽमरेशाभृग्वादयोऽस्पृष्टरजस्तमस्काः ॥ यस्येहितंनविदुःस्पृष्टमायाःसत्त्व
प्रधानाअपिकिंततोन्ये १५ यंवैनगोभिर्मनसासुभिर्वाहृदागिरावाऽसुभृतोविचक्षते ॥ आत्मानमंतर्हृदिसंतमात्मनांचक्षुर्यथैवाकृतयस्ततःपरम् १६
तस्यात्मतंत्रस्यहरेरधीशितुःपरस्यमायाधिपतेर्महात्मनः ॥ प्रायेणदूताइहवैमनोहराश्चरंतितद्रूपगुणस्वभावाः १७

अस्माभिःतवाज्ञयानरकान्नीयमानंपापाकिनं ते पाशान्छित्वाव्यमोचयन्९ तेके इदंत्वत्तः ज्ञातुं इच्छामः येनारायणइतिउक्तेसति भयंमाकुरुइतिनदंतः शीघ्रंआगताः१०
श्रीशुकउवाच॥इतिदूतैःपृष्टःसतःयमःहरिपदांबुजं स्मरन्तानआह ११ हेदूताःजगतः तस्थुषश्चमत्तः परःअधीश्वरोस्ति १२ यस्यअंशेभ्यः अस्यस्थित्यादयोभवंति १३
किंच अहं महेंद्रःनिर्ऋतिःप्रचेताःसोमःअग्निःईशःपवनःअर्कःविरिंचिःएवमादयःसर्वे यस्येच्छां नविदुः १४ १५ तस्यहरेःदूताः तद्रूपाःसंतः हरिभक्तान् रक्षंति १६ १७

विष्णोर्मूर्तानिभूत्यादुर्दर्शानिद्रष्टुमशक्यानिलिंगानिरूपाणियेषांतानितद्भक्तिमतो विष्णुभक्तान्परेभ्यः शत्रुभ्यः मत्तोमत्सकाशात् सर्वतोऽग्न्यादिभ्यश्चरक्षंति १८ ननुविष्णुभक्ताश्चेत्
कथमधर्मपक्षपातंकृतवंतस्तत्राहधर्ममिति । ऋषयोभृग्वादयः १९ ननुकेपिचेन्नजानं तितस्त्वसत्त्वेकिंप्रमाणंतत्राह । स्वयंभूरिति । कुमारः सनत्कुमारः ( मनुः स्वायंभुवः । वैयासकिः शु
कः । ) वयमित्यात्मानमेवभागवतत्त्वलाभाद्गुमन्यमानोनिर्दिशति २० हेभटाः २१ तमेवधर्ममाहएतावानिति २२ नचात्रप्रमाणंवक्तव्यंदृष्टत्वादित्याह । नामोच्चारणेति । येनैवकेवले
नमकृदुच्चारितेन २३ ननुनामाभासेनकथंसर्वपापक्षयः स्यात् । श्रद्धाभक्त्यावृत्त्यादेरपिविधानात् । तथाहि । "सायंप्रातर्गृणन्भक्त्यादुःखग्रामाद्विमुच्यते" इति "अनुदिनमिदमादरे
ण शृण्वन्निति । श्रवणंकीर्तनंध्यानंहरेरद्भुतकर्मणः । जन्मकर्मगुणानांचतदर्थेऽखिलचेष्टितं" इत्याद्यस्मिन्नेवपुराणे तत्रतत्रपठ्यते । पुराणांतरेच । "पापक्षयश्चभवतिस्मरतांतमहर्निश
म्" इति । अत्रैवच "तस्मात्संकीर्तनं विष्णोर्जगन्मंगलमंहसां । महतामपिकौरव्यविद्ध्यैकांतिकनिष्कृतं" इत्यादिना सम्यक्कीर्तनादेवाघनिष्कृतंमन्यते । किंच । तथासतिमन्वादयो द्वा
दशाब्दादीनि ( किमिति ) स्मरेयुः । तस्मादिदमनुपपन्नमेवतत्राह । एतावतेति । भगवतोगुणानांकर्मणांनाम्नांच सम्यक्कीर्तनमितियत् एतावतापुंसामघनिर्हरणायपापक्षयमात्रायअ
लंउपयोगोनास्ति । अलंशब्दोत्रवारणे । यथाहामरसिंहः । "अलंभूषणपर्याप्तिशक्तिवारणवाचकं" इति । उपयोगाभावमेवाह । अजामिलोमहापातक्यपिनारायणेति विक्रुश्यनतुस
म्यक्कीर्तयित्वातत्पुत्रंविक्रुश्यनतुहरिं अयवान्अशुचिरपि म्रियमाणोऽस्वस्थचित्तोपिमुक्तिमवापनत्ववनिर्हरणमात्रं । अतो नामाभासेनापिसर्वपापक्षयइत्येवतत्त्वम् । आवृत्तिश्रद्धादि
विधयस्तुपापवासनाक्षयार्था इत्युक्तमेव । हेरर्गुणानुवादःखलुसत्त्वभावनइत्यत्र २४

भूतानिविष्णोःसुरपूजितानिदुर्दर्शलिंगानिमहाद्भुतानि ॥ रक्षंतितद्भक्तिमतःपरेभ्योमत्तश्चमर्त्यानथसर्वतश्च १८ धर्मंतुसाक्षाद्भगवत्प्रणीतंनवैविदुर्ऋषयो
नापिदेवाः ॥ नसिद्धमुख्याअसुरामनुष्याःकुतश्चविद्याधरचारणादयः १९ स्वयंभूर्नारदःशंभुःकुमारःकपिलोमनुः ॥ प्रह्लादोजनकोभीष्मोबलिर्वैयास
किर्वयम् २० द्वादशैतेविजानीमोधर्मंभागवतंभटाः ॥ गुह्यंविशुद्धंदुर्बोधंयज्ज्ञात्वाऽमृतमश्नुते २१ एतावानेवलोकेस्मिन्पुंसांधर्मःपरःस्मृतः ॥ भक्तियो
गोभगवतितन्नामग्रहणादिभिः २२ नामोच्चारणमाहात्म्यंहरेःपश्यतपुत्रकाः ॥ अजामिलोपियेनैवमृत्युपाशादमुच्यत २३ एतावतालमघनिर्हरणायपुं
सांसंकीर्तनंभगवतोगुणकर्मनाम्नाम् ॥ विक्रुश्यपुत्रमघवान्यदजामिलोपिनारायणेतिम्रियमाणइयायमुक्तिम् २४

साक्षाद्भगवत्प्रणीतंधर्मंदेवादयोनविदुः १८ १९ तस्यसत्त्वेकिं प्रमाणंवाच्यं स्वयंभूर्नारदःशंभुःकुमारःकपिलोमनुः प्रह्लादोजनकोभीष्मोबलिर्वैयासकिर्वयम् २० हेदूताः
एतेवयंद्वादशभगवद्धर्मंजानीमःयंज्ञात्वाअमृतंअश्नुते २१ २२ हेपुत्रकाःहरेः नामोच्चारणमाहात्म्यंपश्यतअजामिलोपियन्नाम्नामुक्तः २३ भगवतःगुणकर्मनाम्नांकीर्तनमि
तियत् एतावता पुंसां पापक्षयाय अलम् अजामिलोपि नारायणइति पुत्रं विक्रुश्य अशुचिरपि मुक्तिं प्राप २४

ननूक्तं व्यर्थवर्हिद्वादशाब्दादिस्मरणमितितत्राह प्रायेणेति । महाजनोमन्वादिः मृतसंजीवनौषधिमजानंतोवैद्यारोगनिर्हरणाय त्रिकटुकानिंबादीनिस्मरंति । तथास्वयंभूशंभुप्रमुखद्वाद शव्यतिरेकेणायंमहाजनोऽतिगुह्यमिदमज्ञात्वाद्वादशाब्दादिकंस्मरतीति किंचमायायादेव्या अलंमोहितमतिः अयंजनः मधुमधुरं यथाभवत्येवंपुष्पिताय पुष्पस्थानी यैरर्थवादैर्मनोहरा यां त्रय्यांजडीकृता अभिनिविष्टामतिर्यस्य अतोमहत्येवकर्मणिश्रद्धयायुज्यमानोनाल्पेप्रवर्तते । दृश्यतेहिप्राकृतस्यलोकस्यमहतिमंत्रादौश्रद्धाऽल्पेष्वश्रद्धा तस्मादस्यग्राहकोनास्ती तितैर्नोक्तम् । यद्वा स्वाधीनः सिंहोस्त्येतावताश्वसृगालादिनिवारणायतंयथानप्रयुंजते । तथातितुच्छत्वात्पापस्यमतनिरसनायपरमंमंगलंहरेर्नामनस्मरंति । यद्वा नाममाहात्म्यज्ञानेसर्व मुक्तिप्रसंगादित्येवमादिक् । ग्रंथविस्तरभयात्तुनातिप्रपंच्यते २५ भावयोगं भक्तियोगम् अमीषांपातकंनस्यादेव यदिस्यात्तदुरुगायस्यभगवतोवादःकीर्तनम् २६ तदेवंधर्मतत्त्वंनिर्णीयमृत्यान नुशास्ति तइति । येभगवंतंप्रपन्नाः तेदेवैःसिद्धैश्चपरिगीतपवित्रगाथाः वर्णितपवित्रकथाः अतस्तान्नोपसीदततत्समीपमपिनगच्छत । वयंनप्रभवाम वयःकालोपिनप्रभवति २७ केतर्हि दंडार्थमानेयाइत्यत्राह तानिति द्वाभ्याम् । असतः दुष्टान् तानेवाह । मुकुंदपादारविंदयोर्योमकरंदरूपोरसस्तस्माद्विमुखान् । कथंभूतात् । निष्किंचनैरमलैः ( परमहंसकुलैःसनका दिभिः ) अजस्रंजुष्टात् । असतांज्ञापकमाह । निरयवर्त्मनिस्वधर्मशून्येगृहेबद्धातृष्णायैस्तान् २८ किंच जिह्वेत्यादि । यद्येषांजिह्वेत्याद्यन्वयः । नकृतंविष्णुकृत्यंभगवद्व्रतंयैः २९ दिति । अयंभावः । नः स्वपुरुषैरस्मदीयत्वेनस्थितैः स्वीयैरेवपुरुषैःयद्यस्मादमत् अन्यायंकृतंततस्मात्त्वयमेवक्षम्यतांसहता ।स्वा नास्वीयानांनोअस्माकंनविदुषा भगवंतंक्षमापयति तदिति । अयंभावः । नः स्वपुरुषैरस्मदीयत्वेनस्थितैः अज्ञानाअहोगरीयसिमितास्मिन्नक्षांतिर्युक्तैव । महइतिपाठेस्वीयानांमाहात्म्यमविदुषा नः क्षमाकरोत्वित्यर्थः । ( भूम्नेमहतेपुरुषायतस्मैनमः ) ३० तस्मादित्यादिशुकोक्तिः । जगतोपि मंगलरूपं ( महतामप्यंहसांऐकांतिकविष्कृतिंनितांतप्रायश्चित्तंविद्धि ) ३१

प्रायेणवेदतदिदंनमहाजनोयंदेव्याविमोहितमतिर्बतमाययाऽलम् ॥ त्रय्यांजडीकृतमतिर्मधुपुष्पितायांवैतानिकेमहतिकर्मणियुज्यमानः २५ एवंविमृश्य सुधियोभगवत्यनंतेसर्वात्मनाविदधतेखलुभावयोगम् ॥ तेमेनदंडमर्हंत्यथयद्यमीषांस्यात्पातकंतदपिहंत्युरुगायवादः २६ तेदेवसिद्धपरिगीतपवित्रगा थायेसाधवःसमदृशोभगवत्प्रपन्नाः ॥ तान्नोपसीदतहरेर्गदयाभिगुप्तांस्तेषांवयंनचवयःप्रभवामदंडे २७ तानानयध्वमसतोविमुखान्मुकुंदपादारविंदमकरंद रसादजस्रम् ॥ निष्किंचनैःपरमहंसकुलैरसंगैर्जुष्टाद्गृहेनिरयवर्त्मनिबद्धतृष्णान् २८ जिह्वानवक्तिभगवद्गुणनामधेयंचेतश्चनस्मरतितच्चरणारविंदम् ॥ कृष्णायनोनमतियच्छिरएकदापितानानयध्वमसतोऽकृतविष्णुकृत्यान् २९ तत्क्षम्यतांसभगवान्पुरुषःपुराणोनारायणःस्वपुरुषैर्यदसत्कृतंनः ॥ स्वाना महोनविदुषांरचितांजलीनांक्षांतिर्गरीयसिनमःपुरुषायभूम्ने ३० तस्मात्संकीर्तनंविष्णोर्जगन्मंगलमंहसाम् ॥ महतामपिकौरव्यविद्ध्यैकांतिकनिष्कृतिम् ३१

येभगवतिभक्तियोगंकुर्वंति ते मेदंडं नार्हंति येचभगवतंप्रपन्नाःतेहरेःगदयारक्षिताःतेषांदंडेवयंनप्रभवाम कालोपिनसमर्थः २५ २६ २७ येतुमुकुंदपादारविंदविमुखाःतान् आनयध्वम् २८ किंच येषांजिह्वाभगवद्गुणनामधेयंनवक्ति चेतश्चरणकमलंनस्मरति शिरःकृष्णायननमतितान् आनयध्वम् २९ अस्मद्दूतैःयत् अन्यायंकृतंतत्भगवान् क्ष म्यतांतस्मैपुरुषायनमः ३० ॥ श्रीशुकउवाच ॥ हेनृप विष्णोःकीर्तनं महत्पातकानामपि नाशकं प्रायश्चित्तं विद्धि ३१

ऐकांतिकत्वमेवाह । शृण्वतामिति । ( आत्मांऽतःकरणं ) व्रतादिभिस्तथानशुद्धयेत् ३२ एतदुपपादयति । कृष्णांघ्रिपद्मयोर्मधुलेढि आस्वादयतीतितथा । मधुलिहतातितुच्छत्वेनविसृष्टायेमायागुणाविषयास्तेषुपुनर्नरमते । अन्यस्तुतन्मध्वास्वादरहितः अतएवकामाभिभूतःसन्नात्मनोरजः प्रमार्ष्टुमपिकर्मैवप्रायश्चित्तरूपमीहेत । यतः कर्मणः पुनरपिरजःपापंस्यादेव। कुंजरशौचवत् सम्यक्शोधकत्वाभावात् ३३ नैवविस्मितधियोबभूवुः । किंतुसत्यमुक्तमित्येवमेनिरे । ततः प्रभृतिशंकमानाअस्मान्नेवपहन्यादितिशंकांवहन्तस्तद्दृष्टुमपिबिभ्यतिस्म । पाठांतरेतुविस्मितधियोजाताः । तेचततःप्रभृतिबिभ्यतिस्मेत्यर्थः ३४ कुंभसंभवोऽगस्त्योमलयेपर्वतेआसीनोऽव्यग्रोहरिमर्चयन् पुनःपुनःविश्वासार्थंहरेः पादौस्पृशन्नित्यर्थः ३५॥ ॥ इतिषष्ठेतृतीयोध्यायः ॥ ३ ॥ चतुर्थादित्रिभिर्विश्वरूपजन्मविवक्षया । प्रचेतःसुतदक्षस्यवंशस्तावत्प्रतन्यते ॥ १ ॥ चतुर्थेतुप्रजासृष्ट्यैदक्षेणाराधनंहरेः । तपसाहंसगुह्याख्यस्तोत्रेणचनिरूप्यते ॥ २ ॥ प्रसक्तानुप्रसक्तेनस्वायंभुवसुतान्वयं । नामप्रभावमाकर्ण्यवंशव्यासंवुभुत्सते ॥ ३ ॥ देवासुरेतिद्वाभ्यां । सामासिकः संक्षिप्तः । यः प्रोक्तस्तृतीयस्कंधे १ व्यासंविस्तारं तेत्वत्तःययाशक्त्यायथाससर्जतांशक्तिंतंचप्रकारंज्ञातुमिच्छामि । अनुसर्गमनुवृत्तंसर्गम् २ ( हेमुनिसत्तमाः )३ दक्षादिरूपेणससर्जेतिवक्तुंदक्षजन्मप्रकारमाह। यदेति।प्राचीनबर्हिषःपुत्राः ( प्रचेतःसंज्ञकाः ) यदासमुद्रमध्यादुन्मग्नाः निर्गतास्तदागांपृथ्वीं द्रुमैर्वृतांददृशुः । नारदोपदेशतः प्राचीनबर्हिषोनिवृत्त्याअराजकेनतत्कृषिशाद्यभावात् ४ तपसादीपितोमन्युर्येषांतेषां ( तद्दिधक्षया )द्रुमाणांदग्धुमिच्छया ५

शृण्वतांगृणतांवीर्याण्युद्दामानिहरेर्मुहुः ॥ यथासुजातयाभक्त्याशुध्येन्नात्माव्रतादिभिः ३२ कृष्णांघ्रिपद्ममधुलिट्नपुनर्विसृष्टमायागुणेषुरमतेवृजिनावहेषु ॥ अन्यस्तुकामहतआत्मरजःप्रमार्ष्टुमीहेतकर्मयतएवरजःपुनःस्यात् ३३ इत्थंस्वभर्तृगदितंभगवन्महित्वंसंस्मृत्यविस्मितधियोयमकिंकरास्ते ॥ नैवाच्युताश्रयजनंप्रतिशंकमानाद्रष्टुंचबिभ्यतिततःप्रभृतिस्मराजन् ३४ इतिहासमिमंगुह्यंभगवान्कुंभसंभवः ॥ कथयामासमलयआसीनोहरिमर्चयन् ३५ ॥ इतिश्रीभागवतेमहा० षष्ठस्कंधेतृतीयोध्यायः ॥ ३ ॥ राजोवाच ॥ देवासुरनृणांसर्गोनागानांमृगपक्षिणाम् ॥ सामासिकस्त्वयाप्रोक्तोयस्तुस्वायंभुवेऽन्तरे १ तस्यैवव्यासमिच्छामिज्ञातुंतेभगवन्यथा ॥ अनुसर्गंययाशक्त्यासससर्जभगवान्परः २ सूतउवाच ॥ इतिसंप्रश्नमाकर्ण्यराजर्षेर्बादरायणिः ॥ प्रतिनंद्यमहायोगीजगादमुनिसत्तमाः ३ श्रीशुकउवाच ॥ यदाप्रचेतसःपुत्रादशप्राचीनबर्हिषः ॥ अंतःसमुद्रादुन्मग्नाददृशुर्गांद्रुमैर्वृताम् ४ द्रुमेभ्यःक्रुध्यमानास्तेतपोदीपितमन्यवः ॥ मुखतोवायुमग्निंचससृजुस्तद्दिधक्षया ५

यथाभक्त्यामनःशुध्येत्तथाव्रतादिभिर्न ३२ भगवद्भक्तःवृजिनावहेषुविषयेषुपुनःनरमते ३ ३ तच्चरणकंजास्वादरहितःकामहतःपुमान्आत्मनःपापंप्रमार्ष्टुंकर्मैवप्रायश्चित्तरूपंईहते कर्मणापुनरपिपापंस्यादेवइत्थंयमगदितंश्रुत्वा ततः प्रभृतिदूताःअच्युताश्रयंजनंद्रष्टुंविभ्यतिस्म ३४ इमंइतिहासंमलयेआसीनःभगवान्अगस्त्यःहरिंअर्चयन्कथयामास ३५ इतिषष्ठेतृतीयः ॥ ३ ॥ राजोवाच॥ देवासुरनृणांनागानांमृगपक्षिणांसर्गः त्वयासमासेनस्वायंभुवेमन्वंतरेउक्तः १ तस्यविस्तारंश्रोतुमिच्छामि२ ३ श्रीशुकउवाचयदादश प्रचेतसः अंतःसमुद्रात्निर्गताः संतः द्रुमैर्व्याप्तांपृथ्वीं ददृशुः ४ तदाद्रुमान् दग्धुं मुखतः वायुं अग्निं च ससृजुः ५

ताभ्यांवाय्वग्निभ्यांदह्यमानांस्तान् द्रुमान्वनस्पतीनांराजासोमउवाच । माद्रुमेभ्यइतिनवभिः ६ हेमहाभागाः विवर्धयिषवोविशेषेणवर्धयितुमिच्छवो ( यूयंद्रुमेभ्योद्रोग्धुंमार्हथ ) ७ प्रजापतीन।७द्रक्ष्यभोज्यदाहोऽनुचितइत्याह अहोइतित्रिभिः ( वनस्पतीनद्रुमान् ओषधीर्व्रीह्यादिकाः ) ऊर्जंभक्ष्यंइषंअन्नं ८ ( प्रसंगात्अन्नप्रकारमेवाह । अन्नमितितत्रअचरादुमादयः फलपत्रादिनाचरमात्रस्यान्नमित्यर्थः ) ९ ( पित्राप्राचीनबर्हिषादेवदेवेनब्रह्मणा अन्वादिष्टाआज्ञप्ताः ) १० पित्रादिभिर्जुष्टंसतांमार्गमुपशमम् ११ प्रजानांपतिरेवबंधुः अतस्तज्जीविकानाशोनकर्तव्यइतिदृष्टांतपंचकेनाह तोकानांबालानांमातापितरौ । अज्ञानांज्ञानदोबुधएवसुहृत्१२ ईश्वराधिष्ठानत्वाच्चभूतद्रोहोनयुक्तइत्याह । अंतर्देहेष्विति्वोयुष्माभिः ( अतः सर्वतस्यभगवतोधिष्ण्यंस्थानं ) १३ आकाशाद्देहेसमुत्पतितंआकस्मिकमित्यर्थः ( उल्बणंप्रव्यक्तं ) आत्मविचारेणयोनियच्छेत् ( सत्वैर्गुण्यमतीत्यवर्तते ) १४ खिलानांशेषाणांवः युष्माकंचशिवमस्तु । वृक्षरक्षणार्थंतदीयांकन्यांददाति । वार्क्षीवृक्षैःपालिता १५ आमंत्र्यसांत्वयित्वा आप्सरसीम् अप्सरसःप्रम्लोचायाःसुताम् १६ ( तेभ्यः प्रचेतोभ्यः अतोयंप्राचेतसःकिल ) १७ दुहितृवत्सलइतितस्यकन्यावंशएवेत्युक्तं ममतः १८

ताभ्यांनिर्दह्यमानांस्तानुपलभ्यकुरूद्वह ॥ राजोवाचमहान्सोमोमन्युंप्रशमयन्निव ६ माद्रुमेभ्योमहाभागादीनेभ्योद्रोग्धुमर्हथ ॥ विवर्धयिषवोयूयंप्रजानांपतयःस्मृताः ७ अहोप्रजापतिपतिर्भगवान्हरिरव्ययः ॥ वनस्पतीनोषधीश्चससर्जोर्जमिषंविभुः ८ अन्नंचराणामचराह्यपदः पादचारिणाम् ॥ अहस्ताहस्तयुक्तानांद्विपदांचचतुष्पदः ९ यूयंचपित्रान्वादिष्टादेवदेवेनचानघाः ॥ प्रजासर्गायहिकथंवृक्षान्निर्दग्धुमर्हथ १० आतिष्ठतसतांमार्गंकोपंयच्छतदीपितम् ॥ पित्रापितामहेनापिजुष्टंवःप्रपितामहैः ११ तोकानांपितरौबंधूदृशःपक्ष्मस्त्रियाःपति ॥ पतिःप्रजानांभिक्षूणांगृह्यज्ञानांबुधःसुहृत् १२ अंतर्देहेषुभूतानामात्मास्तेहरिरीश्वरः ॥सर्वंतद्धिष्ण्यमीक्षध्वमेवंवस्तोषितोह्यसौ १३ यःसमुत्पतितंदेहआकाशान्मन्युमुल्बणम् ॥ आत्मजिज्ञासयायच्छेत्सगुणानतिवर्तते १४ अलंदग्धैर्द्रुमैर्दीनैःखिलानांशिवमस्तुवः ॥ वार्क्षीह्येषावराकन्यापत्नीत्वेप्रतिगृह्यताम् १५ इत्यामंत्र्यवरारोहांकन्यामाप्सरसींनृप ॥ सोमोराजाययौदत्त्वातेधर्मेणोपयेमिरे १६ तेभ्यस्तस्यांसमभवद्दक्षःप्राचेतसःकिल ॥ यस्यप्रजाविसर्गेणलोकाआपूरितास्त्रयः १७ यथाससर्जभूतानिदक्षोदुहितृवत्सलः ॥ रेतसामनसाचैवतन्ममावहितःशृणु १८

तदावृक्षान्दह्यमानानदृष्ट्वासोमःएत्यतान्उवाच ६ हेमहाभागाःयूयंप्रजानांपतयःप्रजावृद्धिकर्तारःस्थ अतःद्रुमान्दग्धुंयोग्याःन ७ अहोहरिः वनस्पतीन्ओषधीश्चप्रजानां अन्नंससर्ज ८ यूयंचप्रजासर्गायपित्राआदिष्टाःसंतःकथंवृक्षान्दग्धुमर्हथ ९ १० अतः सतांमार्गंआतिष्ठत ११ कोपंयच्छत किंचहरिःभूतानां अंतर्देहेषुआस्तेसर्वतद्धिष्ण्यं ईक्षध्वम् १२ १३ एवंकृतभगवान्तुष्टोभविष्यति १४ दग्धैःद्रुमैःअलम्शेषाणांयुष्माकंचशिवंअस्तु एषाप्रम्लोचायाः कन्यावार्क्षीनाम पत्नीत्वेप्रतिगृह्यतां १५ इत्यामंत्र्य तां दत्त्वा सोमःययौ तेधर्मेण तांउपयेमिरे १६ तेभ्यः तस्यां दक्षः अभवत् १७ सः दक्षः पूर्वंदेवासुरमनुष्यादीन् मनसैवअसृजत् १८

प्रजापतिर्दक्षः १९ अबृंहितंअसमृद्धं विंध्यस्यपादान्समीपेस्थितपर्वतान् २० २१ हंसगुह्याख्येनस्तोत्रेण कस्यदक्षस्य २२ परायमयांनमायनमोदधेनमनं करोमि । परत्वेहेतुः अवितथा अनुभूतिः चिच्छक्तिर्यस्य । अतोगुणत्रयाभासोजीवोनिमित्तंमायाच तयोर्बंधवेनियंत्रे एवमपिगुणेषुतत्त्वबुद्धिर्येषांतैर्जीवैरदृष्टंधामस्वरूपंयस्य । तत्रहेतुः । निवृत्तंमानं यस्मात् । पाठांतरेनिवृत्तमानमवधिश्चयस्मात् । तर्हितस्यकथंसिद्धिस्तत्राह । स्वयंभुवेस्वप्रकाशाय २३ अदृष्टधामत्वंदर्शयन्नाह । नेति । पुरुषः सखाजीवः अस्मिन्पुरे देहेवसन्नपिअत्रैवसंवसतः सख्युर्यस्यसख्यंकरणप्रवर्तकत्वादिकम् नावैतिनजानातितस्मै कुतः व्यक्तदृष्टेः प्रपंचद्रष्टुः । नहिद्रष्टादृश्योभवतीति । प्रथमांतपाठे व्यक्तेप्रपंचेएवदृष्टिर्यस्यसः । गुणोविषयोगुणिनो विषयिणइंद्रियादेः सख्यंप्रकाशकत्वं यथानवेत्तितद्वत् २४ ननुगुणोजडत्वान्नजानातु जीवःसचेतनः किमितिनजानाति अत्राह देहइति । देहश्चासवःप्राणा अक्षाणींद्रियाणिमनश्चांतःकरणंभूतानिचमात्राश्च तन्मात्राणिआत्मानम् स्वं अन्यं दृश्यंतयोः परंदेवतावर्गंचनविदुः । पुमान्जीवस्तुसर्वमेतत्त्रयंवेद गुणांश्चतन्मूलभूतान् ( त्रीन् ) वेदतज्ज्ञोपिसन्यंसर्वज्ञंनवेदतम् अनंतंईडेस्तौमि २५ अदृष्टधामत्वमुक्त्वास्वप्रकाशत्वमाह । ( यदेति ) यदामनसउपरामः समाधिः नतुसुषुप्ताविवलयः नचजाग्रत्स्वप्नयोरिवविक्षेपःतदाह। नामरूपेरूप्यतेयेन तत्तथा । तस्योपरामेहेतुःदृष्टंदर्शनंस्मृतिश्चतयोःसंप्रमोषात्नाशात् । तदायःकेवलेनस्वरूपज्ञानेन प्रतीयतेतस्मैहंसायशुद्धाय शुचिशुद्धंमनः सद्मप्रतीतिस्थानंयस्यतस्मैनमः २६ एवंभूतः केषांप्रतीयतेइत्यपेक्षायामाह।मनीषिणइतिद्वाभ्याम् विवेकिनोयंनिष्कर्षंतिविच्यध्यायंति।सःनिर्वाणसुखानुभूतिः ममप्रसीदतामितिद्वयोरन्वयः।एवंनिष्कर्षतांप्रतीयतेइतिभावः।किमितिनिष्कर्षंतिस्वशक्तिभिर्गूढं अप्रकाशमानं कतिभिः नवभिःपुनश्चत्रिवृद्भिःत्रिगुणाभिःसप्तविंशत्युपाधिभिःगूढं अष्टाविंशंनिष्कर्षंतीत्यर्थः( सप्तविंशत्युपाधयस्तु पुरुषस्त्रयोगुणामहदहंकारौपंचमहाभूतानिदशेंद्रियाणिमनः पंचतन्मात्राश्चेतिप्रसिद्धाः यद्वानवभिः प्रकृतिपुरुषमहदहंकारपंचतन्मात्ररूपाभिस्त्रिवृद्भिस्त्रिगुणात्मिकाभिः चकारात्षोडशविकाररूपाभिश्च । कथंभूतंनिष्कर्षंति।मनीषया अंतर्हृदिसंनिवेशितंनिश्चलीकृतंपांचदश्यंपंचदशसामिधेनीमंत्रैःप्रकाश्यं अलौकिकंवह्निमिव अहंकारास्पदादात्मनोन्यंपरमात्मानंनिष्कर्षंतीत्यर्थः २७

मनसैवासृजत्पूर्वंप्रजापतिरिमाः प्रजाः ॥ देवासुरमनुष्यादीन्नभःस्थलजलौकसः १९ तमबृंहितमालोक्यप्रजासर्गंप्रजापतिः ॥ विंध्यपादानुपव्रज्य सोऽचरद्दुष्करंतपः २० तत्राघमर्षणंनामतीर्थंपापहरंपरम् ॥ उपस्पृश्यानुसवनंतपसातोषयद्धरिम् २१ अस्तौषीद्धंसगुह्येनभगवंतमधोक्षजम् ॥ तुभ्यंतदभिधास्यामिकस्यातुष्यद्यतोहरिः २२ प्रजापतिरुवाच ॥ नमःपरायावितथानुभूतयेगुणत्रयाभासनिमित्तबंधवे ॥ अदृष्टधाम्नेगुणतत्त्वबुद्धिभिर्निवृत्तमानायदधेस्वयंभुवे २३ नयस्यसख्यंपुरुषोऽवैतिसख्युःसखावसन्संवसतःपुरेऽस्मिन् ॥ गुणोयथागुणिनोव्यक्तदृष्टेस्तस्मैमहेशायनमस्करोमि २४ देहोऽसवोक्षामनवोभूतमात्रानात्मानमन्यंचविदुःपरंयत् ॥ सर्वपुमान्वेदगुणांश्चतज्ज्ञोनवेदसर्वज्ञमनंतमीडे २५ यदोपरामोमनसोनामरूपरूपस्यदृष्टस्मृतिसंप्रमोषात् ॥ यईयतेकेवलयास्वसंस्थयाहंसायतस्मैशुचिसद्मनेनमः २६ मनीषिणोंतर्हृदिसंनिवेशितंस्वशक्तिभिर्नवभिश्चत्रिवृद्भिः ॥ वह्निंयथादारुणिपांचदश्यंमनीषयानिष्कर्षंतिगूढम् २७

१९ तांसृष्टिंअसमृद्धां आलोक्य बहुसृष्ट्यर्थंविंध्याद्रिसमीपेअघमर्षणतीर्थेएत्यतत्रतपसाहरिंतोषयन्सन्हंसगुह्येनस्तोत्रेणहरिंअस्तौषीत् २० २१ २२ ॥ दक्षउवाच ॥ परायजीवमाययोर्नियंत्रेजीवैरदृष्टस्वरूपायस्वप्रकाशायनमः २३ किंच जीवः अस्मिन्देहेवसन्नपिअत्रैववसतः यस्यसख्यंनजानातितस्मैमहेशायनमस्करोमि २४ किंच अयंजीवःस्वस्वरूपंइंद्रियवर्गंदेवतावर्गंचएतत्त्रयंवेत्तितथापियंनवेदतंसर्वज्ञंअनंतंईडे २५ किंच यदादर्शनस्मृत्योर्नाशात्मनसःसमाधिर्भवतितदायःस्वरूपज्ञानेनप्रतीयतेतस्मैहंसायनमः २६ किंच विवेकिनः यंमनीषयाध्यायंति सः विश्वरूपः मम प्रसीदतां किंच २७ ॥ ९ ॥

अशेषाविशेषा । ( भेदाः ) यस्यास्तस्यामायायानिषेधेननिर्वाणसुखेनसमाधिसुखेनअनुभूतियस्य । अप्रसक्तनिषेधासंभवात्प्रसक्तिमाह। सएवसर्वनामासएवचविश्वरूपइति । तद्रूपत्वेपि
वास्तवत्वाभावान्निषेधः संभवतीत्याह । अनिरुक्ता।(निर्वचनानर्हा ) आत्मशक्तिर्मायायस्यसः२८ननुयदिकवलयास्वमंस्थयाप्रती यतेतर्हिसर्वनामत्वंविश्वरूपत्वंचानुपपन्नं वागाद्यगोच
रत्वादित्याशंक्य सर्वैर्नामभिर्वाच्यंप्रत्यक्षादिदृश्यंचतस्यरूपंवस्तुतोमाभूत् तथापिमाययावर्ततेइतिश्लोकत्रयेणोपपादयन्नमस्करोतिय द्यादिति ।यद्यद्वचसानिरुक्तंअभिहितंधियानिरू
पितंव्यवसितं । अक्षभिर्वाइंद्रियैर्निरूपितंगृहीतंउत अपिननमानिनिरूपितंयस्यस्वप्रकाशस्य । तस्यतत्तत्स्वरूपंमाभूत् । स्वरूपत्वाभावेहेतुः हियस्मात्तद्गुणानामेवरूपं । पाठांतरेगुणै
र्वेधितं । सतुगुणव्यतिरिक्तःयतोगुणानामपायविसर्गाभ्यांप्रलयोत्पत्तिभ्यांलक्ष्यतइतितथा । चैतन्यरूपमधिष्ठानंविनातयोरभावात् । यद्वायस्यस्वरूपंमाभून्नभवति तस्मैनमइतितृतीये
नान्वयः २९ तदेवंस्तुतोगुणस्वरूपत्वाभावमंगीकृत्य अनिरुक्तात्मशक्तिरित्यनेनद्योतितंमाययासर्ववाच्यत्वेनविश्वरूपत्वमाह । यस्मिन्नधिकरणेयतोऽपादानात् येनकरणेन यस्यमंबं
धि यस्मैसंप्रदानाय यदीप्सिततमंयःकर्ताकुरुतेस्वतंत्रःकार्यतेचान्येनप्रयोज्यकर्त्रातद्ब्रह्मेतिप्रत्येकंसंबंधः । अत्रचसप्तभिर्यच्छब्दैः सप्तविभक्त्यर्थादर्शिताः यथेतिचक्रियाकारकसंबंधप्र
कारवाचिनामव्ययानामर्थाः कुरुतेकार्यतेचस्वार्थपरार्थक्रियान्वयश्चसर्वेषांदर्शितः चशब्देनभावकर्मादिविहितप्रत्ययार्थाःसंगृहीताः । तद्ब्रह्मैवेतिकुतः तत्राह । तद्धेतुःतेषांकारणं । तत्कु
तः सर्वेभ्यःप्राक्प्रसिद्धं।ननुब्रह्मादयस्तद्धेतवः श्रूयंते । अवरेचदृश्यंते । तत्कथंब्रह्मैवतद्धेतुः तत्राह । परेषामवरेषांचहेतूनांपरमंकारणं । ननुसर्वकारणत्वेतस्यकिंनामसहकारिभवेत्तदा
नीमन्यस्याभावात्सत्यंनिरपेक्षमेवतत्कारणमित्याह । अनन्यद्विजातीयशून्यएकंसजातीयशून्यंचतस्मैनमइत्युत्तरेणान्वयः ३० नन्वेवंब्रह्मचेद्विश्वस्यहेतुः तर्हिमकदाचिदनीदृशंजगदि
तिवदंतोमीमांसकाः कुतोत्रविवदंतेतेश्चान्येस्वभाववादिनः संवदंते तेचतेचतत्त्वविद्भिर्बोधिताअपिकुतः पुनर्मुह्यंतितत्राह ।यस्यमायाविद्याद्याः शक्तयो विवादस्यकचित्संवादस्यभुवः
स्थानानिभवंतितस्मैनमः ३१ ननुकितद्ब्रह्मयस्यशक्तयोविवादादिभुवोभवंतितत्राह । अस्तीति । ( अस्तीति ) योगउपासनाशास्त्रंतत्रहिविराड्रूपेणोपासनायां पातालपादादिकम
स्तीत्युपास्यत्वेनविधीयते । नास्तीतिसांख्यंज्ञानशास्त्रं । तत्रह्यपाणिपादंअचक्षुरश्रोत्रमितिचवादादिनास्तीतिनिषिध्यते । तयोर्योगसांख्ययोर्यत्किंचित्समंअनुवर्तमानंअवेक्षितंप्रती
तंतद्बृहत्ब्रह्म विवादेप्यविवादास्पदंब्रह्मेत्यर्थः । विवादंस्फुटयति । भिन्नोअस्तिनास्तीत्येवंभूतौविरुद्धौधर्मौययोः तयोर्भिन्नविषयत्वेविरोधोनस्यादित्येकस्थयोरित्युक्तं । एकविषययोः ।
कुतः वस्तुनिष्ठयोः पादादिविधिप्रतिषेधयोरेकवस्तुनिष्ठत्वात् । समत्वेहेतुः । परंहि । यतोविधिप्रतिषेधयोरविषयः । तयोः पादादिविषयत्वात् । तर्हितथाविधस्यसद्भावेकिंप्रमाणं
तदाह । अनुकूलं । अधिष्ठानंविनापादादिकल्पनायोगात् अवधिंविनातन्निषेधायोगाच्चतयोरुपपादकत्वेनसिद्धमित्यर्थः तस्मैनमइतिपूर्वस्यानुषंगः ३२

सवैममाशेषविशेषमायानिषेधनिर्वाणसुखानुभूतिः ॥ ससर्वनामासचविश्वरूपःप्रसीदतामनिरुक्तात्मशक्तिः २८ यद्यन्निरुक्तंवचसानिरूपितंधियाक्षभि
र्वामनसावोतयस्य ॥ माभूत्स्वरूपंगुणरूपंहितत्सवैगुणापायविसर्गलक्षणः २९ यस्मिन्यतोयेनचयस्ययस्मैयद्योयथाकुरुतेकार्यतेवा ॥ परावरेषांपरमं
प्राक्प्रसिद्धंतद्ब्रह्मतद्धेतुरनन्यदेकम् ३० यच्छक्तयोवदतांवादिनांवैविवादसंवादभुवोभवंति ॥ कुर्वंतिचैषांमुहुरात्ममोहंतस्मैनमोनंतगुणायभूम्ने ३१
अस्तीतिनास्तीतिचवस्तुनिष्ठयोरेकस्थयोर्भिन्नविरुद्धधर्मयोः ॥ अवेक्षितंकिंचनसांख्ययोगयोःसमंपरंह्यनुकूलंबृहत्तत् ३२

२८ वचसाउक्तंबुध्यादिभिःनिरूपितंयन्नतत्यस्यस्वरूपंभवति तस्मैनमः २९ ३० ३१ ३२

ननूदासीनस्यसमरयनमस्कारेकोलाभस्तत्राह यइति। पादमूलंभजतामनुग्राहार्थंप्राकृतनामरूपरहितोपिजन्मभिरवतारैर्विशुद्धोर्जितसत्त्वानिरूपाणिकर्मभिर्नामानिचयोभेजे तत्कुतः भ
गवानचित्यैश्वर्यः समह्यंप्रसीदतु ३३ ननुत्वादृशाःसकामाःगणेशादीन्प्रार्थयंतेत्वंतुतान्विहायकिमितिभगवंतमेवप्रार्थयसेतत्राह। प्राकृतैरर्वाचीनैर्ज्ञानपथैरुपासनामार्गैःयथाशयंतत्तद्वा
सनानुसारेण योदेहगतोंऽतर्यामीतत्तद्देवतारूपेणाविविधोभवातियथावायुः पार्थिवंगुणंचंपकादिगंधभेदं आश्रित्यनानागंधवान् विभाति रेणोर्गुणंधूसरत्वादिकं आश्रित्यनानारूपवान् प्र
तीयते ।तद्वत्तस्यैवतत्तद्देवतारूपेणफलदातृत्वात्सईश्वरएवममममनोरथंसत्यंकरोतुकिमंतर्गतबहुभिर्देवतांतरैरित्यर्थःतदुक्तंगीतासु "योयोयांयांतनुंभक्तःश्रद्धयार्चितुमिच्छति।तस्यतस्याच
लां श्रद्धांतामेवविदधाम्यहम् । सतयाश्रद्धयायुक्तस्तस्याराधनमीहते । लभतेचततःकामान् मयैवविहितान्हितान्"इति । "येयथामांप्रपद्यंतेतांस्तथैवभजाम्यहम्"इतिच । ३४ संस्तु
वतोदक्षस्यभगवान् प्रत्यक्षोभूत् । ३५ तंवर्णयतिसार्धैश्चतुर्भिः सुपर्णस्यांसेस्कंधेकृतौपादौयेनप्रलंबः अष्टौमहांतोभुजायस्य । चक्राद्यष्टायुधधरः । ३६ प्रसन्नं वदनं ईक्षणेचयस्य । वन
मालयानिवीतम् कंठादिपादांतं व्याप्तंअंगं यस्य लसंतौश्रीवत्सकौस्तुभौयस्य । ३७ महांतिकिरीटकटकानियस्यस्फुरंतीमकरकुंडलेयस्य । कांच्यादिभिर्विभूषितः । वलयमत्रपादभूष
णंद्रष्टव्यं कटकस्योक्तत्वात् ३८ त्रैलोक्यमोहनंश्रीपुरुषोत्तमाख्यम् । सुरयूथपैर्लोकपालैः ३९ ( विचक्ष्यदृष्ट्वाआगतसाध्वसः प्राप्तसंभ्रमः । ) ४० यथान्हदिन्योनद्योनिर्झरैरापूर्यंते
तथातीव्रयामुदापरमानंदेन अपूरितानिमनोद्वाराणिइंद्रियाणितैः ( किंचनवक्तुंनाशकत् ) महानंदापूर्णत्वेनावृत्तिकरत्वाद्वागादीनांन।किंचिदपिवक्तुंशक्तोभूदित्यर्थः ४१
यद्यप्यसौनावोचत्तथापिचित्तज्ञइदंवक्ष्यमाणमाह ४२

योनुग्रहार्थंभजतांपादमूलमनामरूपोभगवाननंतः॥ नामानिरूपाणिचजन्मकर्मभिर्भेजेसमह्यंपरमःप्रसीदतु ३३ यःप्राकृतैर्ज्ञानपथैर्जनानांयथाशयंदेहग
तोविभाति ॥ यथाऽनिलःपार्थिवमाश्रितोगुणंसईश्वरोमेकुरुतान्मनोरथम् ३४ ॥ ॥ श्रीशुकउवाच ॥ ॥ इतिस्तुतःसंस्तुवतःसतस्मिन्नघमर्षणे ॥
आविरासीत्कुरुश्रेष्ठभगवान्भक्तवत्सलः ३५ कृतपादःसुपर्णांसेप्रलंबाष्टमहाभुजः ॥ चक्रशंखासिचर्मेषुधनुःपाशगदाधरः ३६ पीतवासाघनश्यामःप्र
सन्नवदनेक्षणः ॥ वनमालानिवीतांगोलसच्छ्रीवत्सकौस्तुभः ३७ महाकिरीटकटकःस्फुरन्मकरकुंडलः ॥ कांच्यंगुलीयवलयनूपुरांगदभूषितः ३८ त्रैलो
क्यमोहनंरूपंबिभ्रत्त्रिभुवनेश्वरः ॥ वृतोनारदनंदाद्यैःपार्षदैःसुरयूथपैः ॥ स्तूयमानोनुगायद्भिःसिद्धगंधर्वचारणैः ३९ रूपंतन्महदाश्चर्यंविचक्ष्यागतसा
ध्वसः ॥ ननामदंडवद्भूमौप्रहृष्टात्माप्रजापतिः ४० नकिंचनोदीरयितुमशकत्तीव्रयामुदा ॥ आपूरितमनोद्वारैर्ह्रदिन्यइवनिर्झरैः ४१ तंतथाऽवनतंभक्तं
प्रजाकामंप्रजापतिम् ॥ चित्तज्ञःसर्वभूतानामिदमाहजनार्दनः ४२

किंच यःभगवान् प्राकृतनामरूपरहितोपिपादमूलंभजतां अनुग्रहार्थंनामानिरूपाणिभेजेसःमेप्रसीदतु ३३ ३४ ॥ श्रीशुकउवाच ॥ इतिस्तुतः भगवान्गरुडांसेकृतपादः
अष्टभुजः शंखचक्रासिचर्मेषुधनुष्पाशगदाधरः पीतवासाः घनश्यामः नारदनंदाद्यैर्वृतः सिद्धगंधर्वादिभिः स्तूयमानः तत्रआविरासीत् ३५ ३६ ३७ ३८ ३९ ४०
तंदृष्ट्वाप्रजापतिः भूमौदंडवत् ननाम ४१ तदासर्वभूतानांचित्तज्ञः जनार्दनः प्रजाकामुकंदक्षंउवाच ४२

( युयतः ) भावंभक्तिंगतः प्राप्तः ४३ यतयतस्तेतपःअस्यविश्वस्यउद्धरणंवृद्धिकरंअतस्तेऽहंप्रीतः । मत्तपसोलोकसमृद्ध्यर्थत्वेत्वत्प्रीतेः किंकारणंतत्राह । ममेति। भूतानांविभूतयःसमृ
द्धयोभूयासुरितियत्एषएवममकामः अतोमत्कामपूरणादेवाहंप्रीतोस्मीत्यर्थः ४४ भूतिविस्तारप्रयत्नश्चतवोचितएवेन्याह । ब्रह्मेति । भवंतः प्रजापतयः भूतेरुद्भवस्यहेतवः ४५ विश्ववृ
द्ध्यर्थेनचत्वत्तपसाहंप्रीतइत्युक्तंतदेवतपःस्तुवन्प्रसंगादन्यान्यपिलोकवृद्धिकराणिविद्यादीनिस्तौति । ( हेब्रह्मन्तपोमूर्ते ) तपः यमनियमादिसहितंध्यानंमेहृदयम् । विद्यासांगोपांग
मंत्रजपः ध्यानं तनोतीतितनुर्देहः । क्रियाःध्यानादिविषयःपुं०व्यापारोभावनाशब्दवाच्यः । तेनाहिध्यानादिकं आक्रियतेइतिआकृतिः । जाताः सुनिष्पन्नाः क्रतवोंगानि । "शि
रोवाएतद्यत्प्रवर्ग्यः ग्रीवाउपसदश्चक्षुषीआज्यभागौ"इत्यादिश्रुतेः । धर्मः क्रत्वाद्यपूर्वं आत्मामनः हृदयाश्रयत्वात् । सुरायज्ञभुजस्तरवासवः प्राणाः संतर्पणीयत्वात् ४६ तपसःसं
तानवृद्धिहेतुत्वंदर्शयितुं द्वितीयतृतीयोक्तमितिहासमाहचतुर्भिः अहमेवेतिवत्स्वंतरव्यावृत्तिः । आसमेवेतिक्रियांतरव्यावृत्तिःआंतरंग्राहकंबहिर्ग्राह्यंसंज्ञानमात्रंचैतन्यमात्रं । अव्यक्तंइंद्रि
यवृत्तिभिरनभिव्यक्तंअतएवप्रसुप्तमिवविश्वतःसर्वत्र ४७ गुणतोमायातःगुणमयोविग्रहोब्रह्माण्डंततः तदैवअजः अयोनिजः ४८ (महादेवो महान् द्योतमानःसब्रह्मा । वीर्येणतेजसाउपबृं
हितः ) खिलमसमर्थमिव ४९ मेमयातपवपेत्यभिहितःसन् । येनतपसा ५० संततिवृद्धयुपायमाह । एषेति । अंगहेदक्ष । पंचजनाख्यस्यप्रजापतेः ५१ मिथुनस्ययोर्व्यवायोरतिः सएव
धर्मोयस्यसत्वम् । तथाभूतायांतस्याम् ५२ माययानिमित्तभूतयास्त्रियासहमिथुनीभूयभविष्यंतिपुत्रादिरूपेणोत्पत्स्यंते ५३ ५४ इतिश्रीभागवतेषष्ठस्कंधेटीकायांचतुर्थोध्यायः ॥ ४ ॥

॥ श्रीभगवानुवाच ॥ ॥ प्राचेतसमहाभागसंसिद्धस्तपसाभवान् ॥ यच्छ्रद्धयामत्परयामयिभावंपरंगतः ४३ प्रीतोहंतेप्रजानाथयत्तेस्योद्बृंहणंतपः ॥
ममैषकामोभूतानांयद्भूयासुर्विभूतयः ४४ ब्रह्माभवोभवंतश्चमनवोविबुधेश्वराः ॥ विभूतयोममह्येताभूतानांभूतिहेतवः ४५ तपोमेहृदयंब्रह्मन्तनुर्वि
द्याक्रियाकृतिः ॥ अंगानिक्रतवोजाताधर्मआत्माऽसवःसुराः ४६ अहमेवासमेवाग्रेनान्यत्किंचांतरंबहिः ॥ संज्ञानमात्रमव्यक्तंप्रसुप्तमिवविश्वतः ४७
मय्यनंतगुणेऽनंतेगुणतोगुणविग्रहः ॥ यदासीत्तत एवाद्यःस्वयंभूःसमभूदजः ४८ सवैयदामहादेवोममवीर्योपबृंहितः ॥ मेनेखिलमिवात्मानमुद्यतःसर्गक
र्मणि ४९ अथमेऽभिहितोदेवस्तपोऽतप्यतदारुणम् ॥ नवविश्वसृजोयुष्मान्येनादावसृजद्विभुः ५० एषापंचजनस्यांगदुहितावैप्रजापतेः ॥ असि
क्नीनामपत्नीत्वेप्रजेशप्रतिगृह्यताम् ॥ ५१ मिथुनव्यवायधर्मस्त्वंप्रजासर्गमिमंपुनः ॥ मिथुनव्यवायधर्मिण्यांभूरिशोभावयिष्यसि ५२ त्वत्तोऽधस्तात्
प्रजाःसर्वामिथुनीभूयमायया ॥ मदीययाभविष्यंतिहरिष्यंतिचमेबलिम् ॥ ५३ ॥ श्रीशुकउवाच ॥ इत्युक्त्वामिषतस्तस्यभगवान्विश्वभावनः ॥
स्वप्नोपलब्धार्थइवतत्रैवांतर्दधेहरिः ५४ ॥ इतिश्रीभा०म०षष्ठस्कंधेचतुर्थोध्यायः ॥ ४ ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥

हेप्राचेतस भवान्तपसासंसिद्धः तेअहंप्रीतोस्मिब्रह्माभवःभवंतश्चसर्वेभूतानांभूतिहेतवः ममविभूतयः ४५ अतः पंचजनस्यप्रजापतेः दुहिताअसिक्नी नाम्नी पत्नीत्वेन
गृह्यताम् ४६ ४७ ४८ ४९ ५० ५१ ५२ त्वंमैथुनधर्मःसन्मैथुनव्यवायधर्मिण्यांतस्यांप्रजासर्गंभूरिशः भावयिष्यसि ५२ त्वत्तः अग्रेसर्वाः प्रजाः मन्मायया मैथुन
धर्मेणैव भविष्यंति ५३ इतिदक्षं उक्त्वाहरिः तत्रैव अंतर्दधे ५४ ॥ ॥ इतिषष्ठेचतुर्थः ॥ ४ ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥

पंचमेनारदनाथवाचः कूटैस्तुनाशितान् । दृ तानाकर्ण्यदक्षोऽमुंशशापेतिनिरूप्यते॥१॥ अपृथग्धर्मशीलाएकाचारस्वभावाः ( योब्रह्मपुत्रोदक्षः सएवायंप्राचेतसइतिपुष्मानित्युक्तम्) १ २
तत्रप्रतीच्यांदिशिसिंधोर्नद्याःसमुद्रस्यचयत्रसंगमस्तत्रस्थम् नारायणसरोनामतीर्थं प्रययुरित्यन्वयः । सुमहत् अतिविस्तीर्णम् ३ विनिर्धूतोमलोरागादिर्यस्मात्सआशयोयेषांते ४तान्
शुद्धसत्त्वान्पित्रादेशजाड्यनप्रजाविवृद्धयेयत्तानुद्युक्तानददर्श ५ अहोकष्टंमोक्षमार्गाधिकारिणःसंतएतेप्रवृत्तिनिष्ठैःकर्मभिर्नश्येरन्निति कृपयातानिगूढार्थैर्वाक्यैरुपदिशतिस्मतदाहउ
वाचेतिचतुर्भिः । पालकाःसंतोपिबालिशाअज्ञायूयंकथंप्रजाःस्रक्ष्यथवतेतिखेदे । बालकाइतिपाठेबालिशत्वेहेतुः ६ एकएवपुरुषोयस्मिन्राष्ट्रेअदृष्टेत्यनुषंगः । बिलंचेत्यादिद्वितीयांता
नाम् अविज्ञायकथंसर्गंकरिष्यथेतितृतीयेनान्वयःपंचपंचानांपंचविंशतेरद्भुतंगृहम् । क्षुरैःपविभिर्वज्रैश्चनिर्मितमिवातितीक्ष्णंहंसंचेत्यर्थः । स्वयंस्वतंत्रंभ्रामिभ्रमणस्वभावम् ८ विपश्चितः
सर्वज्ञस्यस्वपितुरादेशमात्मनोनुरूपमविद्वांसोऽजानंतः पूर्वोक्तंचैकपुरुषंराष्ट्रमित्याद्यविज्ञाय अहोकथंसर्गंकरिष्यथेत्यन्वयः ९ वाचःकूटं परोक्षवादनार्थांतरमिवप्रतीयमानंवचनम् । औ
त्पत्तिकीसहनामनीषाविचारशक्तिर्यस्यास्तथाधियास्वयमेवविममृशुः विचारितवंतः १० नारदोक्तदशवाक्यानांतैर्विमृश्यतानर्थानाहदशभिः । अदृष्ट्वांतंभुवइत्यत्रभूशब्दार्थमाह । भूरि
तिक्षेत्रंतच्चात्रजीवसंज्ञंलिंगशरीरंयत्निजबंधनंआत्मनोबंधनकारणम् । अंतशब्दार्थमाहनिर्वाणंनाशम् । असद्भिः मोक्षानुपयोगिभिः कर्मभिः किंभवेन्नकिमपि ११

॥ श्रीशुकउवाच ॥ तस्यांसपांचजन्यांवैविष्णुमायोपबृंहितः ॥ हर्यश्वसंज्ञानयुतंपुत्रानजनयद्विभुः १ अपृथग्धर्मशीलास्तेसर्वेदाक्षायणानृप ॥ पित्राप्रो
क्ताःप्रजासर्गेप्रतीचींप्रययुर्दिशम् २ तत्रनारायणसरस्तीर्थंसिंधुसमुद्रयोः ॥ संगमोयत्रसुमहन्मुनिसिद्धनिषेवितम् ३ तदुपस्पर्शनादेवविनिर्धूतमला
शयाः ॥ धर्मेपारमहंस्येचप्रोत्पन्नमतयोऽप्युत ४ तेपिरेतपएवोग्रंपित्रादेशेनयंत्रिताः ॥ प्रजाविवृद्धयेयत्तान्देवर्षिस्तानददर्शह ५ उवाचचाथहर्य
श्वाःकथंस्रक्ष्यथवैप्रजाः ॥ अदृष्ट्वांतंभुवोयूयंबालिशाबतपालकाः ६ तथैकपुरुषंराष्ट्रंबिलंचादृष्टनिर्गमम् ॥ बहुरूपांस्त्रियंचापिपुमांसंपुंश्चलीपतिम् ७
नदीमुभयतोवाहांपंचपंचाद्भुतंगृहम् ॥ क्वचिद्धंसंचित्रकथंक्षौरपव्यंस्वयंभ्रमिम् ८ कथंस्वपितुरादेशमविद्वांसोविपश्चितः ॥ अनुरूपमविज्ञायअहोसर्गंक
रिष्यथ ९ ॥ श्रीशुकउवाच ॥ तन्निशम्याथहर्यश्वाऔत्पत्तिकमनीषया ॥ वाचःकूटंतुदेवर्षेःस्वयंविममृशुर्धिया १० भूःक्षेत्रंजीवसंज्ञंयदनादिनिजबंध
नम् ॥ अदृष्ट्वातस्यनिर्वाणंकिमसत्कर्मभिर्भवेत् ११

॥ श्रीशुकउवाच ॥ सः दक्षः पांचजन्यांतस्यां हर्यश्वसंज्ञान् अयुतंपुत्रान् अजनयत् १ हेनृप ते हर्यश्वा प्रजासर्गेपित्राप्रोक्ताःसंतःप्रतीचीं दिशंययुः २ तत्रनारायणसर
सि ३ ४ प्रजाविवृद्धयेउग्रंतपः तेपिरेतान्नारदः एत्यउवाच ५ हेहर्यश्वाः यूयंभुवः अंतं १ तथाएकपुरुषंराष्ट्रं २ अदृष्टनिर्गमांबिलं ३ बहुरूपांस्त्रियं ४ पुंश्चलीपतिंपु
रुषं ५ उभयतोवाहांनदीम् ६ पंचविंशतेः गृहं ७ चित्रकथंहंसं ८ क्षौरपव्यंस्वयंभ्रमिं ९ विपश्चितः स्वपितुरादेशं १० एतानि अविज्ञायकथंसर्गंकरिष्यथ ६ ७ ॥११॥
८ ९ श्रीशुकउवाच ॥ हर्यश्वाः तन्निशम्यस्वधियादेवर्षेःवाचःकूटंविचारितवंतः १० भुवः अंतमितिलिंगशरीरनाशंअदृ ।असत्कर्मभिः किंभवेत् १

एकपुरुषमित्यस्यार्थमाह । एकएवेति । तुर्यः सर्वसाक्षी । स्वाश्रयः स्वाधारः । अभवंनित्यमुक्तं । असद्भिः ईश्वरासमर्पितैःकर्मभिः १२ बिलंचादृष्टनिर्गममित्यस्यार्थमाह । ना
पुमानयद्गत्वाबिलस्वर्गपातालंगतइवनैवनिवर्ततेतत्प्रत्यग्धामज्योतीरूपंब्रह्म अविदुषः असद्भिः नश्वरस्वर्गादिसाधनैः कर्मभिः १३ बहुरूपांस्त्रियमित्यस्यार्थमाह । ना
नारूपेति । स्वैरिणीपुंश्चलीव विमोहकैः रजआदिगुणैः अन्विता तन्निष्ठां तस्याअवसानंविवेकं अगतस्यअप्राप्तस्य असद्भिरशांतैः १४ पुमांसंपुंश्चलीपतिमित्यस्यार्थ
माह । तस्याः संगेनभ्रंशितमैश्वर्यस्वातंत्र्यर्यस्य । कुत्सितभार्यायस्यतद्वत् तस्यागतीः सुखदुःखलक्षणाः संसरंतंगच्छंतंजीवंअबुधस्यजानतः असद्भिः बुद्ध्यविवेक
प्राप्तैः १५ नदीमुभयतोवाहामित्यस्यार्थमाहः । सृष्ट्यप्ययौकरोतीत्युभयतः प्रवाहोदर्शितः । वेलाकूलं प्रवाहपतितानांनिर्गमस्थानं तपोविद्यादि तस्यांतेवेगितांनिर्गमप्रतिबंधायक्रोधा
हंकारादिभिःकृतवेगां । मत्तस्यतद्वेगेनविवशस्य अतएवतांतथाभूतांअविज्ञस्य अविचारयतः।असद्भिर्मायिकैः ।यद्वा वेलाकूलंसमुद्रस्यव्यवहारस्थानंतस्य समीपेसमुद्रवृद्धिह्रासाभ्यांयथाउ
भयतोंतर्बहिः कृतवेगानदीभवति । एवंसमुद्रतुल्यस्यात्मनोव्यवहारस्थानंदेहे जन्ममरणादिभिः कृतवेगामित्यर्थः वेगिनीमितिपाठेवेगवतीम् १६ पंचपंचेत्यस्यार्थमाह । पंचविंशतित
त्त्वानांपुरुषोंऽतर्यामीअद्भुतदर्पणंआश्चर्यरूपआश्रयः अध्यात्मंकार्यकारणसंघाताधिष्ठातारं तमबुधस्य । असद्भिर्मिथ्यास्वातंत्र्यकृतैः १७ क्वचिद्धंसमित्यस्यार्थमाह । ऐश्वरंईश्वरप्रति
पादकं । विविक्तंपदंचिज्जडरूपंवस्तुयेननिहंसपदव्याख्यानं । बंधमोक्षावनुदर्शयतीतितथा । अनेनचित्राः कथायस्येतिव्याख्यातम् । तदुत्सृज्यअनभ्यस्यअज्ञायअविदुषः असद्भिः
बहिर्मुखैः १८ क्षौरपव्यमित्यस्यार्थमाह । कालचक्रमिति । भ्रमिः भ्रमणात्मकम् । तीक्ष्णमितिनिष्कर्षयदितिचक्षौरपव्यपदंव्याख्यातम् तदबुधस्य । अतएवफलस्यनित्यत्वबुद्ध्या
काम्यकर्मानुष्ठानेवैगुण्यबाहुल्यादसद्भिः १९ स्वपितुरादेशमित्यस्यार्थमाह । शास्त्रस्यस्वपितुःद्वितीयजन्महेतोः तदनुरूपायनिवृत्त्यनुरूपायनिवर्तकमादेशं योनवेदसकथंगुणविश्रंभीगुग
मयप्रवृत्तिमार्गविश्वासवान्सन् उपक्रमेत् सृष्ट्यादौप्रवर्तेत । 'मोक्षेशब्रह्मबुद्धीनांजीवमायांतरात्मनाम् । शास्त्रकालोपदेशानामज्ञानेकिमुकर्मभिः' इतिवाचःकूटसंग्रहश्लोकः २० इति
व्यवसिताः एवंनिश्चितवंतः एकचेतसः ऐकमत्ययुक्ताः तंनारदंप्रदक्षिणीकृत्य अपुनरावृत्तिमार्गंप्रययुः २१

एकएवेश्वरस्तुर्योभगवान्स्वाश्रयःपरः ॥ तमदृष्ट्वाऽभवंपुंसःकिमसत्कर्मभिर्भवेत् १२ पुमान्नैवैतियद्गत्वाबिलस्वर्गंगतोयथा ॥ प्रत्यग्धामाविदइहकिं
मसत्कर्मभिर्भवेत् १३ नानारूपात्मनोबुद्धिःस्वैरिणीवगुणान्विता ॥ तन्निष्ठामगतस्येहकिमसत्कर्मभिर्भवेत् १४ तत्संगभ्रंशितैश्वर्यंसंसरंतंकुभार्यवत् ॥
तद्गतीरबुधस्येहकिमसत्कर्मभिर्भवेत् १५ सृष्ट्यप्ययकरींमायांवेलाकूलांतवेगिताम् ॥ मत्तस्यतामविज्ञस्यकिमसत्कर्मभिर्भवेत् १६ पंचविंशतितत्त्वानां
पुरुषोऽद्भुतदर्पणम् ॥ अध्यात्ममबुधस्येहकिमसत्कर्मभिर्भवेत् १७ ऐश्वरंशास्त्रमुत्सृज्यबंधमोक्षानुदर्शनम् ॥ विविक्तपदमज्ञायकिमसत्कर्मभिर्भवेत् १८
कालचक्रंभ्रमिस्तीक्ष्णंसर्वंनिष्कर्षयज्जगत् ॥ स्वतंत्रमबुधस्येहकिमसत्कर्मभिर्भवेत् १९ शास्त्रस्यपितुरादेशंयोनवेदनिवर्तकं ॥ कथंतदनुरूपायगुण
विश्रंभ्युपक्रमेत् २० इतिव्यवसिताराजन्हर्यश्वाएकचेतसः ॥ प्रययुस्तंपरिक्रम्यपंथानमनिवर्तनम् २१

एकंईश्वरम् २ ब्रह्म ३ रजआदिगुणैःअन्विनबुद्धेः विवेकन् ४ बुद्धिसंगभ्रंशितैश्वर्यंसंसरंतंजीवम् ५ सृष्ट्यप्ययकरींमायाम् ६ पंचविंशतितत्त्वानांआश्रयः अंतर्यामीयः
तम् ७ ईश्वरप्रतिपादकंशास्त्रंबंधमोक्षानुदर्शनम् ८ कालचक्रभ्रमणात्मकंजगदाकर्षकं ९ शास्त्ररूपपितुः आदेशम् १० ११ १२ १३ १४ १५ १६ १७ १८
१९ २० इतिएवंविचार्यतंपरिक्रम्य अपुनरावृत्तिमार्गंप्रययुः २१

(स्वर्णिणास्वरूपेसामवेदस्वरब्रह्मणि ) निर्भातः प्रत्यक्षीभूतोयोहृषीकेशः तस्यपदांबुजे । अनुचरन्अन्वचरदित्यर्थः २२ नाशशद्नस्वधर्मभ्रंशंवा । शीलेनशालंतेशोभंतेइतितथाते
पाम् । कः दक्षः । सुप्रजास्त्वंसत्पुत्रवत्त्वम् । शुचांशोकानांस्थानम् २३ अजेनब्रह्मणा (शवलाश्वसंज्ञान् ) सहस्रशः सहस्रसंख्यान् २४ २५ परमंब्रह्मप्रणवंवक्ष्यमाणमंत्रंवा२६( अ
व्भक्षाः जलमात्रंप्राश्नंतः ) इडस्पतिंमंत्राणांपतिंविष्णुंआराधयामासुः २७ विशुद्धसत्त्वाश्रयायपरमहंसायनमोधीमहि २८ प्रतिसर्गेधीर्येषांतान् । वाचःकूटानिअदृष्टांतंभुवइत्यादीनि
पूर्वोक्तानिप्राह २९ हेदाक्षायणाः संशृणुतेत्यादिपुनरन्यदपिप्राह । निगममुपदेशंआन्विच्छतअवलोकयत ३० प्रायणं प्रकृष्टंगमनम् । पुण्यमेवबंधुर्यस्य । मरुद्भिर्भ्रातृवत्सलैर्देवैः ३१
अमोघंदर्शनंयस्य । हेमारिषआर्य ३२ सध्रीचीनं समीचीनं प्रतीचीनं प्रत्यग्वृत्तिलभ्यं ( परस्यब्रह्मणः)अनुपथंअनुगुणंपंथानं पश्चियामिनीःगताःरात्रयइव ३३ ३४ पुत्राणांपारमहंस्य
निष्ठामुपश्रुत्यदक्षोपिप्रायशोविरक्तःस्यादितितदनुग्रहार्थंदेवर्षिस्तत्पार्श्वंगतस्तदातमुपलभ्यदक्षआह ३५ साधोरिवलिंगंवेषोयस्यतेनत्वयानोऽस्मदीयानामर्भकाणाअसाधुअकारि
कृतम् । तदेवाह । साधूनांस्वधर्मेप्रवृत्तानांभिक्षोर्योमार्गः सप्रदर्शितः ३६

स्वरब्रह्मणिनिर्भातहृषीकेशपदांबुजे ॥ अखंडंचित्तमावेश्यलोकाननुचरन्मुनिः २२ नाशंनिशम्यपुत्राणांनारदाच्छीलशालिनां ॥ अन्वतप्यतकःशोच
नसुप्रजस्त्वंशुचांपदम् २३ सभूयःपांचजन्यायामजेनपरिसांत्वितः ॥ पुत्रानजनयद्दक्षःशवलाश्वान्सहस्रशः २४ तेपिपित्रासमादिष्टाःप्रजासर्गेधृतव्र
ताः ॥ नारायणसरोजग्मुर्यत्रसिद्धाःस्वपूर्वजाः २५ तदुपस्पर्शनादेवविनिर्धूतमलाशयाः ॥ जपंतोब्रह्मपरमंतेपुस्तत्रमहत्तपः २६ अब्भक्षाःकतिचिन्मा
सान्कतिचिद्वायुभोजनाः ॥ आराधयन्मंत्रमिममभ्यसंतइडस्पतिम् २७ ॐनमोनारायणायपुरुषायमहात्मने ॥ विशुद्धसत्त्वधिष्ण्यायमहाहंसायधीम
हि २८ इतितानपिराजेंद्रप्रतिसर्गधियोमुनिः ॥ उपेत्यनारदःप्राहवाचःकूटानिपूर्ववत् २९ दाक्षायणाःसंशृणुतगदतोनिगमंमम ॥ अन्विच्छतानुपदवीं
भ्रातॄणांभ्रातृवत्सलाः ३० भ्रातॄणांप्रायणंभ्रातायोऽनुतिष्ठतिधर्मवित् ॥ सपुण्यबंधुःपुरुषोमरुद्भिःसहमोदते ३१ एतावदुक्त्वाप्रययौनारदोऽमोघदर्शनः ॥
तेपिचान्वगमन्मार्गंभ्रातॄणामेवमारिष ३२ सध्रीचीनंप्रतीचीनंपरस्यानुपथंगताः ॥ नाद्यापितेनिवर्तंतेपश्चिमायामिनीरिव ३३ एतस्मिन्कालउत्पाता
न्बहून्पश्यन्प्रजापतिः ॥ पूर्ववन्नारदकृतंपुत्रनाशमुपाशृणोत् ३४ चुक्रोधनारदायासौपुत्रशोकविमूर्छितः ॥ देवर्षिमुपलभ्याहरोषाद्विस्फुरिताधरः
३५ ॥ दक्षउवाच ॥ अहोअसाधोसाधूनांसाधुलिंगेननस्त्वया ॥ असाध्वकार्यर्भकाणांभिक्षोर्मार्गःप्रदर्शितः ३६

२२ ततःदक्षःनारदात्पुत्राणांनाशंनिशम्य सुप्रजस्त्वंशुचांपदं इतिविचारयन्अशोचत् २३ पुनः ब्रह्मणासांत्वितः दक्षः शवलाश्वसंज्ञान् सहस्रश पुत्रान्ः अजनयत्
२४ तेपिप्रजासर्गे पित्राआदिष्टाः संतः नारायणसरः जग्मुः २५ यत्रस्वपूर्वजाः सिद्धाः तत्सरसिस्नात्वापरंब्रह्मजपंतः तपस्तेपुः २६ किंच ॐनमोनारायणायेतिमंत्रं
अभ्यसंतः विष्णुंआराधयामासुः २७ २८ हेराजेंद्र तानपिनारदः एत्यवाचःकूटानि पूर्ववत् उवाच २९ हेशवलाश्वाः भ्रातॄणापदवीं अवलोकयतइत्याद्युक्त्वानारदः य
यौ तेपिभ्रातॄणांमार्गं अन्वगमन् ३० ३१ ३२ एतस्मिन्कालेदक्षः बहून् उत्पातान्पश्यन्पूर्ववत् नारदकृतं पुत्रनाशंउपाशृणोत् ३३ ३४ ततोदक्षः नारदायचुक्रोध त
त्कालेनारदं उपलभ्य आह ३५ अहोअसाधोसाधुचिह्नेनत्वया अर्भकाणांभिक्षोर्मार्गः प्रदर्शितः ३६

ननुसंन्यासिनांमार्गः साधुरेवमोक्षहेतुत्वात्।सत्यं ऋणत्रयापाकरणं विनामहाननर्थएवेत्याह।ऋणैरिति । 'जायमानोवैब्राह्मणस्त्रिभिर्ऋणैर्ऋणवान्जायतेब्रह्मचर्येणऋषिभ्योयज्ञेनदेवेभ्यः प्रजयापितृभ्यःएषवाअनृणोयः पुत्रीयज्वाब्रह्मचारीवासि'इतिश्रुतेः ऋणैरमुक्तानांनमीमांसितानिविचारितानिकर्माणियैः तेषांतावदृणविमोकोनास्ति नतुत्तरकालभावित्वाच्च पुत्रोत्पादनयज्ञानुष्ठानयोरभावेनपितृदेवर्षिऋणाद्विमुक्तिश्चनास्ति अतः हेपापविषयभोगत्यागादिहलोकेश्रेयसोविघातः कृतः । मोक्षानधिकारित्वाच्चपरलोकेपिश्रेयसोविघातः कृतइत्यर्थः तथाचमनुः 'ऋणानित्रीण्यपाकृत्यमनोमोक्षेनिवेशयेत् । अनपाकृत्यमोक्षंतुसेवमानोव्रजत्यधः'इति ३७ बालानांमतिंपुत्रादिविषयांभिनत्तीतियथा । एवंनिरनुक्रोशोनिर्घृणः हरेर्यशोनाशकःसन् तत्पार्षदमध्येकथंचरसि ३८ निर्लज्जत्वमेवाह । ननुत्वामृतेभागवताः सर्वभूतानुग्रहपरवशाः स्वंतुभूतविप्रियंकुर्वन्कथंनलज्जसइतिभावः । ३९ ननुवैराग्याद्उपशमः उपशमाच्चभूतस्नेहपाशच्छेदनं भवति नचविरक्तस्यऋणत्रयापाकरणमावश्यकम् । 'यदहरेवविरजेत् तदहरेवप्रव्रजेत्यदिवेतरथाब्रह्मचर्यादेवप्रव्रजेत्'इत्यादिश्रुतेः अतोवैराग्योपदेशेनतेषांमयानुग्रहएवकृतइतिचेत्तत्राह । नेति । यद्यपित्वमेवंमन्यसेतथापिमृषाकेवलिनाज्ञानंविनाऽवधूतवेषेणत्वयाइत्थंमतिचालनेकृतेपिपुंसांविरागोनैवस्यात् । नचविरागंविनोपशमः नचतेनाविनास्नेहपाशनिकृंतनमित्यर्थः ४० इत्थंविरागोनस्यादित्यत्रहेतुमाह । नानुभूयअननुभूयविषयाणांतीक्ष्णतांदुःखहेतुत्वंनजानातितस्माद्विषयानुभवेनतीक्ष्णत्वज्ञानात्कारणात्स्वयंयथानिर्विद्येततथाभवादृशैः परैःभिन्नधीर्ननिर्विद्येत ४१ अतस्त्वयास्माकमप्रियमेवकृतं तथापिवयनकुर्मइत्याह यदिति । कर्मसंधानांकर्ममर्यादानांकर्तुमंधानामितिपाठेप्रवर्तितुमजानतामित्यर्थः । दुर्मर्षंदुःसहंयत्त्वंकृतवानसितन्मर्षितंसोढम् । ४२ तथापितवाभद्रंभविष्यत्येवेत्याह । तंतुकृंतन संतानच्छेदक । यद्यस्मात्अभद्रं पुत्राणांस्थानभ्रंशं अचरस्तस्मात्पदंस्थाननभवेदितिमृदुच्छलेनशापः ४३ बाढंतथेतिस्वीकृतवान् । ईश्वरोपिप्रतिशप्तुंसमर्थोपितितिक्षेतसहेतेतियत्एतावानेव ४४ ॥ ॥ इतिषष्ठेपंचमोध्यायः ॥ ५ ॥ ॥ ॐ ॥ ॥ ॐ ॥

ऋणैस्त्रिभिरमुक्तानाममीमांसितकर्मणाम् ॥ विघातःश्रेयसःपापलोकयोरुभयोःकृतः ३७ एवंत्वंनिरनुक्रोशोबालानांमतिभिद्धरेः ॥ पार्षदमध्येचरसियशोहानिरपत्रपः ३८ ननुभागवतानित्यंभूतानुग्रहकातराः ॥ ऋतेत्वांसौहृदघ्नंवैवैरंकारमवैरिणाम् ३९ नेत्थंपुंसांविरागःस्यात्त्वयाकेवलिनामृषा ॥ मन्यसेयद्युपशमंस्नेहपाशनिकृंतनम् ४० नानुभूयनजानातिपुमान्विषयतीक्ष्णताम् ॥ निर्विद्यतेस्वयंतस्मान्नतथाभिन्नधीःपरैः ४१ यन्नस्त्वंकर्मसंधानांसाधूनांगृहमेधिनाम् ॥ कृतवानसिदुर्मर्षंविप्रियंतवमर्षितम् ४२ तंतुकृंतनयन्नस्त्वमभद्रमचरःपुनः ॥ तस्माल्लोकेषुतेमूढनभवेद्भ्रमतःपदम् ४३ ॥ श्रीशुकउवाच ॥ प्रतिजग्राहतद्बाढंनारदःसाधुसंमतः ॥ एतावानसाधुवादोहितितिक्षेतेश्वरःस्वयम् ४४ ॥ इतिश्रीभा०महा०षष्ठस्कंधे नारदशापोनामपंचमोध्यायः ॥ ५ ॥ ॥ ॐ ॥ ॥ ॐ ॥ ॥ ॐ ॥ ॥ ॐ ॥ ॥ ॐ ॥

त्रिभिः ऋणैः अमुक्तानांउभयोः लोकयोः विघातः कृतः ३७ एवंत्वंनिर्दयः बालानांमतिभित् निर्लज्जः सन् हरेः पार्षदमध्येकथंचरसि ३८ ३९ ४० ननुजनःविषयदुःखंअननुभूयकथंनिर्विद्येत ४१ कर्मकर्तॄणांत्वयाविघ्नंकृतम् अतः तेअभद्रंस्यात् किंचयतः पुत्राणांत्वयास्थाननाशःकृतः अतः भ्रमतः तेस्थानंनभवेत् ४२ ४३ ॥ ॥ श्रीशुकउवाच ॥ ॥ साधुसंमतः नारदः प्रतिशप्तुंसमर्थोपिनच्छापंजगृहे ४४ ॥ इतिषष्ठेपंचमः ५ ॥

षष्टिदक्षेणसृष्टायांकन्यासट्यांप्रकीर्तिताः । पृथग्वंशायतोजातोविश्वरूपोऽदितेःसुतात् ॥ १ ॥ नारदात्पुत्रनाशमाशंकमानोदुहितृर्जनयामास १ कायकश्यपायद्विरद्विगुणाःषट् द्वादशयासुताः इत्येवकोत्यर्थः । इंदोः सोमायत्रिगवसप्तविंशतिं । तार्क्ष्याय नामांतरंप्राप्तायकश्यपायैवअपराअवशिष्टाश्चतस्रः २ सापत्यानांअपत्यमहितातांमत्तः शृणु । प्रसूतिप्रसवैःपुत्रपौत्रादिभिः ३ ४ (देवऋषभनामकः पुत्रः) ततोदेवऋषभात् इंद्रसेनोऽभवतम् ५ यतः कीकटात् । भुवोदुर्गाणिदुर्गाभिमानिनोदेवाः । जामेयः जाम्याःपुत्रःस्वर्गः ततःस्वर्गान्नंदिपुत्रोऽभवत् ६ तत्सुतः साध्यानांपुत्रः ७ ८ ९ वसोर्वंशस्यभूयस्त्वादंतेनिर्देशः।मेमत्तः १० अभिमतिर्नामपत्नीतस्याहर्षादयः पुत्राः ११ सहश्च आयुश्च पुरोजवश्च पुत्राः पुरः पुराणि १२ १३

॥ श्रीशुकउवाच ॥ ततःप्राचेतसोऽसिक्न्यामनुनीतःस्वयंभुवा ॥ षष्टिंसजनयामासदुहितृःपितृवत्सलाः १ दशधर्मायकायेंदोर्द्विषट्त्रिणवदत्तवान् ॥ भूतांगिरःकृशाश्वेभ्योद्वेद्वेतार्क्ष्यायचापराः २ नामधेयान्यमूषांत्वंसापत्यानांचमेशृणु ॥ यासांप्रसूतिप्रसवैर्लोकाआपूरितास्त्रयः ३ भानुर्लंबाककुब्जामिर्विश्वासाध्यामरुत्वती ॥ वसुर्मुहूर्तासंकल्पाधर्मपत्न्यःसुतान्शृणु ४ भानोस्तुदेवऋषभइंद्रसेनस्ततोनृप ॥ विद्योतआसील्लंबायास्ततश्चस्तनयित्नवः ५ ककुभःसंकटस्तस्यकीकटस्तनयोयतः ॥ भुवोदुर्गाणिजामेयःस्वर्गोनंदिस्ततोभवत् ६ विश्वेदेवास्तुविश्वायाअप्रजांस्तान्प्रचक्षते ॥ साध्योगणस्तुसाध्यायाअर्थसिद्धिस्तुतत्सुतः ॥ ७ मरुत्वांश्चजयंतश्चमरुत्वत्यांबभूवतुः ॥ जयंतोवासुदेवांशउपेंद्रइतियंविदुः ८ मौहूर्तिकादेवगणामुहूर्तायाश्चजज्ञिरे ॥ येवैफलंप्रयच्छंतिभूतानांस्वस्वकालजम् ९ संकल्पायाश्चसंकल्पःकामःसंकल्पजःस्मृतः ॥ वसवोऽष्टौवसोःपुत्रास्तासांनामानिमेशृणु १० द्रोणःप्राणोध्रुवोऽर्कोग्निर्दोषोवसुर्विभावसुः ॥ द्रोणस्याभिमतेःपत्न्याहर्षशोकभयादयः ११ प्राणस्योर्जस्वतीभार्यासहआयुःपुरोजवः ॥ ध्रुवस्यभार्याधरणिरसूतविविधाःपुरः १२ अर्कस्यवासनाभार्यापुत्रास्तर्षादयःस्मृताः ॥ अग्नेर्भार्यावसोर्धारापुत्राद्रविणकादयः १३

॥ श्रीशुकउवाच ॥ ॥ ततः ब्रह्मणासांत्वितः दक्षः षष्टिकन्याः जनयामास १ । तत्रधर्माय १० कश्यपाय १३ इंदोः २७ भूतस्य २ अंगिरसः २ कृशाश्वाय २ तार्क्ष्यइतिनामांतरंप्राप्तायकश्यपाय ४ एवं ६०।२। तत्रधर्मसंततिमाह ३ भानुर्लंबाककुब्जामिर्विश्वासाध्यामरुत्वती वसुर्मुहूर्तासंकल्पा धर्मपत्न्यः सुतान्शृणु ४ ।भानोः १ देवर्षभः तस्यइंद्रसेनः।लंबायाः २ विद्योतः ततस्तनयित्नवः ५। ककुभः ३ संकटः तस्यकीकटः ततः दुर्गाभिमानिनोदेवाः।जाम्याः ४स्वर्गः ततः नंदिः ६। विश्वायाः ५ विश्वेदेवाः तेअप्रजाः।साध्यायाः ६ साध्योगणः ततः अर्थसिद्धिः ।मरुत्वत्याः ७ ७। मरुत्वान्जयंतश्चसईश्वरांशः ८। मुहूर्तायाः ८ मौहूर्तिकाः देवगणाः ९। संकल्पायाः ९ संकल्पःततःकामः।वसोः १० अष्टौवसवः तेषांनामानिशृणु १०द्रोणः प्राणोध्रुवोर्कोग्निर्दोषोवसुर्विभावसुःतेषांवसूनांवंशमाह।द्रोणस्य १अभिमत्यांहर्षशोकभयादयःआसन् ११।प्राणस्य ऊर्जस्वत्यांसहआयुःपुरोजवाः।ध्रुवस्य धरण्यांविविधाःपुरः १२।अर्कस्य आसनायांतर्षादयः।अग्नेः वसोर्धारायांद्रविणकादयः१३ ॥ १३ ॥

यः कृत्तिकासुतः स्कंदः सोप्यग्नेः पुत्रः पाण्मातुरइतिअग्निभूरितिचप्रसिद्धेः ततः स्कंदाद्विशाखादयोऽभवन् १४ आकृतेःपतिः शिल्पाचार्यः । ततोविश्वकर्मणः चाक्षुपोमनुरासीत् १५ विभावसोः उपाभार्या अथआतपात्पंचयामोदिवसोजातः अतएवरात्रिस्त्रियामा । प्रदोषप्रत्यूषयोर्दिवसस्यावयवत्वात् ( येनदिवसेन ) १६ भूतस्यद्वेभार्येतयोर्वंशमाह । सरूपेति १७ महानिति एवमेकादशरूपस्यरुद्रस्यपार्षदाः प्रेतादयः अन्येअन्यस्यांजाताः १८ अंगिरसः स्वधासतीचेतिद्वेभार्ये तयोर्वंशमाह प्रजापतेरिति । स्वधानामपत्नीपितॄनपुत्रत्वेऽकरोत् । अथसतीचअथर्वांगिरसंनामवेदम् १९ कृशाश्वस्यअर्चिर्धिषणेतिद्वेभार्येतयोर्वंशमाह कृशाश्वइति २० २१ सुपर्णाविनता । अनूरुंअरुणम् २२ रोहिण्यामेवप्रेमातिशयेनअन्यासामुपेक्षणात्कुपितस्यदक्षस्यशापात्यक्ष्मग्रहार्दितः सन्नतास्वनपत्योभूत् तंदक्षंप्रसाद्यकेवलंकलाएवलेभेनतत्वपत्यानि । कथंभूताःक्षयेकृष्णपक्षे दिताःखंडिताःमतीः ( दोअवखंडनेधातुः । )पाटांतरेक्षयेक्षाति पुनरर्धिताः । तेनवर्धिताः सतीः २३ अथलोकानांमातृणांकश्यपपत्नीनांकल्याणकराणिनामानिशृणु २४ । २५

स्कंदश्चकृत्तिकापुत्रोयेविशाखादयस्ततः ॥ दोषस्यशर्वरीपुत्रःशिंशुमारोहरेःकला १४ वसोरांगिरसीपुत्रोविश्वकर्माकृतेःपतिः ॥ ततोमनुश्चाक्षुषोभूद्विश्वेसाध्यामनोःसुताः १५ विभावसोरसूतोषाव्युष्टंरोचिषमातपम् ॥ पंचयामोथभूतानियेनजाग्रतिकर्मसु १६ सरूपाऽसूतभूतस्यभार्यारुद्रांश्चकोटिशः ॥ रैवतोऽजोभवोभीमोवामउग्रोवृषाकपिः १७ अजैकपादहिर्बुध्न्योबहुरूपोमहानिति ॥ रुद्रस्यपार्षदाश्चान्येघोराभूतविनायकाः १८ प्रजापतेरंगिरसःस्वधापत्नीपितॄनथ ॥ अथर्वांगिरसंवेदंपुत्रत्वेचाकरोत्सती १९ कृशाश्वोऽर्चिषिभार्यायांधूम्रकेशमजीजनत् ॥ धिषणायांवेदशिरोदेवलंवयुनंमनुम् २० तार्क्ष्यस्यविनताकद्रूःपतंगीयामिनीइति ॥ पतंग्यसूतपतगान्यामिनीशलभानथ २१ सुपर्णाऽसूतगरुडंसाक्षाद्यज्ञेशवाहनम् ॥ सूर्यसूतमनूरुंचकद्रूर्नागाननेकशः २२ कृत्तिकादीनिनक्षत्राणींदोःपत्न्यस्तुभारत ॥ दक्षशापात्सोनपत्यस्तासुयक्ष्मग्रहार्दितः ॥ पुनःप्रसाद्यतंसोमःकलालेभेक्षयेदिताः २३ शृणुनामानिलोकानांमातॄणांशंकराणिच ॥ अथकश्यपपत्नीनांयत्प्रसूतमिदंजगत् २४ अदितिर्दितिर्दनुःकाष्ठाअरिष्टासुरसाइला ॥ मुनिःक्रोधवशाताम्रासुरभिःसरमातिमिः २५

। कृत्तिकायांस्कंदश्चस्कंदाद्विशाखादयः । दोषस्य शर्वर्यांशिशुमारः १४। वसोः आंगिरस्यांविश्वकर्माततः चाक्षुषोमनुः ततः विश्वेसाध्याः १५ । विभावसोः उषायांव्युष्टः रोचिषम् आतपंइति आतपात्दिवसोजातः १६ भूतस्यसरूपायांरैवतः अजः भवः भीमः वामः उग्रः वृषाकपिः अजैकपात् अहिर्बुध्न्यः बहुरूपः महान् अन्यस्यांएकादशरुद्राणांपार्षदाः भूतविनायकप्रेतादयः १७ १८ अंगिरसः ।स्वधापत्न्यां पितरः। सत्याम् २ अथर्वांगिरसोवेदः जातः १९ कृशाश्वः ।आर्चिषि । धूम्रकेशम्।धिषणायाम् ।१२ देवलम् देवशिरसम् वयुनत् मनुंजनयामास २० तार्क्ष्यस्य । विनतायाम् गरुडः अरुणश्च । कद्रुसंज्ञायाम् नागाः । पतंग्याम् पतगाः। यामिन्यांशलभाजाताः २१ २२ चंद्रस्यकृत्तिकादिस्त्रियः २२ सदक्षशापात् क्षयरोगीअनपत्यः सः दक्षंप्रसाद्यकलाः लेभेनत्वपत्यानि २३ अथकश्यपपत्नीनांनामानि शृणु २४ अदितिर्दितिर्दनुः काष्ठा अरिष्ठा सुरसा इला मुनिः क्रोधवशाताम्रा सुरभिः सरमा तिमिः २५

अल्पत्वेनसुगमत्वाद्यथायथंव्युत्क्रमेण न पांचेशानाह । तिमेरित्यादिना २६ । २७ सौरसाः सुरसायाः पुत्राः ( द्विशफेतराअश्वादयः ) २८ प्राधानिकानमुख्यानष्टादशशृणु २९ ३० ( नाहुषः नहुषस्यपुत्रः ) ३१ ३२ वैश्वानरः दनोः पुत्रस्तस्यसुताः । कः प्रजापतिः कश्यपउपयेमे । दानवीपरिणयनेहेतुःब्रह्मणाचोदितइति ३३ तयोःषष्टिसहस्राणिनिवातकवचानाम पुत्राजाताः तांश्च ( यज्ञविध्वंसिनः ) स्वर्गगतस्तेपितामहोऽर्जुनोजघान ३४ राहुर्ज्येष्ठोयस्य ( तत् । येकेतवः ) ३५ ३६ ३७

तिमेर्यादोगणाआसन्श्वापदाःसरमासुताः ॥ सुरभेर्महिषागावोयेचान्येद्विशफानृप २६ ताम्रायाःश्येनगृध्राद्यामुनेरप्सरसांगणाः ॥ दंदशूकादयःसर्पाराजन्क्रोधवशात्मजाः २७ इलायाभूरुहाःसर्वेयातुधानाश्चसौरसाः ॥ अरिष्टायाश्चगंधर्वाःकाष्ठायाद्विशफेतराः २८ सुतादनोरेकषष्टिस्तेषांप्राधानिकान्शृणु ॥ द्विमूर्धाशंबरोऽरिष्टोहयग्रीवोविभावसुः २९ अयोमुखःशंकुशिराःस्वर्भानुःकपिलोऽरुणः ॥ पुलोमावृषपर्वाचएकचक्रोऽनुतापनः ३० धूम्रकेशोविरूपाक्षोविप्रचित्तिश्चदुर्जयः ॥ स्वर्भानोःसुप्रभांकन्यामुवाहनमुचिःकिल ॥ वृषपर्वणस्तुशर्मिष्ठांययातिर्नाहुषोबली ३१ वैश्वानरसुतायाश्चचतस्रश्चारुदर्शनाः ॥ उपदानवीहयशिरापुलोमाकालकातथा ३२ उपदानवींहिरण्याक्षःक्रतुर्हयशिरांनृप ॥ पुलोमांकालकांचद्वेवैश्वानरसुतेतुकः ॥ उपयेमेऽथभगवान्कश्यपोब्रह्मचोदितः ३३ पौलोमाःकालकेयाश्चदानवायुद्धशालिनः ॥ तयोःषष्टिसहस्राणियज्ञघ्नांस्तेपितुःपिता ३४ जघानस्वर्गतोराजन्एकइंद्रप्रियंकरः ॥ विप्रचित्तिःसिंहिकयांशतंचैकमजीजनत् ॥ राहुज्येष्ठंकेतुशतंग्रहत्वंयउपागताः ॥ अथातःश्रूयतांवंशोयोऽदितेरनुपूर्वशः ॥ यत्रनारायणोदेवःस्वांशेनावतरद्विभुः ३६ विवस्वानर्यमापूषात्वष्टाथसविताभगः ॥ धाताविधातावरुणोमित्रःशक्रउरुक्रमः ३७

तिमेः १ यादोगणाः । सरमायाः २ श्वापदः । सुरभेः ३ महिषाः गावः अन्येद्विशफाश्च २६ । ताम्रायाः ४ श्येनगृध्राद्याः । मुनेः ५ अप्सरोगणाः । क्रोधवशायाः ६ दंदशूकादिसर्पाः २७ । इलायाः ७ भूरुहाः । सुरसायाः ८ यातुधानाः । अरिष्टायाः ९ गंधर्वाः । काष्ठायाः १० पंचनखैकशफादयः २८ । दनोः ११ एकषष्टिसुताः द्विमूर्धादयः । तत्रमुख्याः १८ द्विमूर्धा १ शंबरः २ अरिष्टः हयग्रीवः ४ विभावसुः ५ २९ । अयोमुखः ६ शंकुशिराः ७ स्वर्भानुः ८ कपिलः ९ अरुणः १० पुलोमाः ११ वृषपर्वा १२ एकचक्रः १३ अनुतापनः १४ ३० । धूमकेशः १५ विरूपाक्षः १६ विप्रचित्तिः १७ दुर्जयः १८ इति । स्वर्भानोः सुप्रभांकन्यां नमुचिः उवाह वृषपर्वणः शर्मिष्ठां ययातिः उवाह ३१ । दनोःपुत्रः वैश्वानरः तस्यकन्याः उपदानवी १ हयशिरा २ पुलोमा ३ कालका ४ ३२ । हिरण्याक्षः उपदानवीम् क्रतुः हयशिराम् ब्रह्मप्रेरितः कश्यपः पुलोमांकालकांचउवाह ३३ । तयोःपौलोमाः कालकेयाः षष्टिसहस्राणि निवातकवचाश्चजाताः तान्अर्जुनः स्वर्गतः सन् जघान ३४ । विप्रचित्तिःसिंहिकायां राहुज्येष्ठंकेतुशतं अजीजनत् ३५ । अथअदितेः वंशंशृणु यत्रनारायणः अंशेनअवतरत् ३६ । अदितेः द्वादशादित्याः विवस्वानर्यमापूषात्वष्टाथसविताभगःधाताविधाता वरुणः मित्रः शक्रः उरुक्रमः ३७

( संज्ञानामभार्याश्राद्धदेवसंज्ञंमनुं ) असूयतअजनयत् ३८ ( सैवसंज्ञावडवाऽश्विनीभूत्वा ) भुविवर्तमाना ( नासत्यौस्वैद्यौ ) ३९ ततः विवस्वतः ४० चर्षणयः कृताकृतज्ञानवंतः। पश्यतिकर्मत्वेननिघंटावुक्तेः। यत्रयेषुआत्मानुसंधानविशेषेणमानुषीजातिश्चोपकल्पिता । तथाचश्रुतिः। "पुरुषत्वेचाविस्तरामात्मा"इति ४१ कुपितंहरमितिशेषः। विवृतद्विजः प्रकटितदंतः रुन् ( पिष्टमत्तीतिपिष्टादः ) ४२ ( वीर्यवानूपराक्रमी ) ४३ यद्यदाविमतेनअवज्ञातेनबृहस्पतिनापरित्यक्ताः तदाद्विषतांशत्रूणांभागिनेयमपिविश्वरूपंपौरोहित्येवृतवंतः ४४ ॥ इतिश्रीभागवतेषष्ठस्कंधेटीकायांषष्ठोध्यायः ॥ ६ ॥ सप्तमेविश्वरूपोसौपौरोहित्येवृतःसुरैः। गुरुणासंपरित्यक्तैःपौरोहित्यमथाकरोत् ॥ १ ॥ कस्यहेतोः कस्माद्धेतोः आत्मनः शिष्याःसुराः परित्यक्ताः। अक्रमम्अपराधम् १ सइंद्रोयदासंप्राप्तंवाचस्पतिंनाभ्यनंदतनादृतवान् । तदासआंगिरसस्ततोनिर्गत्य तूष्णींस्वगृहमाययावित्यष्टानामन्वयः। अनादरहेतुं मदंदर्शयितुंतंविशिनष्टि। त्रिभुवनैश्वर्यमदेन उल्लंघितःसतांपंथायेनसः २ परिश्रितः परिवृतः ३ ४ आस्थानंसभातस्मिन्अध्या सनंसिंहासनंतदास्थितः ५ पारमेष्ठ्यैर्महाराजचिह्नैः ( अर्धासनया ) आसनस्यार्धस्थितयापौलोम्याशच्यासहविराजमानः ६ प्रत्युत्थानादिभिर्नाभ्यनंदत् ७

विवस्वतःश्राद्धदेवंसंज्ञासूयतवैमनुम् ॥ मिथुनंचमहाभागायमंदेवंयमींतथा ३८ सैवभूत्वाथवडवानासत्यौसुषुवेभुवि ३९ छायाशनैश्चरंलेभेसावर्णिंचमनुंततः ॥ कन्यांचतपतींयावैवव्रेसंवरणंपतिम् ४० अर्यम्णोमातृकापत्नीतयोश्चर्षणयःसुताः ॥ यत्रवैमानुषीजातिर्ब्रह्मणाचोपकल्पिता ४१ पूषाऽनपत्यः पिष्टादोभग्नदंतोऽभवत्पुरा ॥ योसौदक्षायकुपितंजहासविवृतद्विजः ४२ त्वष्टुर्दैत्यात्मजाभार्यारचनानामकन्यका ॥ संनिवेशस्तयोर्जज्ञे विश्वरूपश्चवीर्यवान् ४३ तंवव्रिरेसुरगणास्वस्रीयंद्विषतामपि ॥ विमतेनपरित्यक्तागुरुणांगिरसेनयत् ४४ ॥ इतिश्रीभागवतेमहा०षष्ठस्कंधेषष्ठोध्यायः ॥ ६ ॥ राजोवाच ॥ कस्यहेतोःपरित्यक्ताआचार्येणात्मनःसुराः ॥ एतदाचक्ष्वभगवन्शिष्याणामक्रमंगुरौ १ ॥ श्रीशुकउवाच ॥ इंद्रस्त्रिभुवनैश्वर्यमदोल्लंघितसत्पथः ॥ मरुद्भिर्वसुभीरुद्रैरादित्यैरृभुभिर्नृप २ विश्वेदेवैश्चसाध्यैश्चनासत्याभ्यांपरिश्रितः ॥ सिद्धचारणगंधर्वैर्मुनिभिर्ब्रह्मवादिभिः ३ विद्याधराप्सरोभिश्चकिन्नरैःपतगोरगैः ॥ निषेव्यमाणोमघवान्स्तूयमानश्चभारत ४ उपगीयमानोललितमास्थानाध्यासनाश्रितः ॥ पांडुरेणातपत्रेण चंद्रमंडलचारुणा ५ युक्तश्चान्यैःपारमेष्ठ्यैश्चामरव्यजनादिभिः ॥ विराजमानःपौलोम्यासहार्धासनयाभृशम् ६ सयदापरमाचार्यंदेवानामात्मनश्चह ॥ नाभ्यनंदतसंप्राप्तंप्रत्युत्थानासनादिभिः ७

तत्रविवस्वतः पत्नीसंज्ञाश्राद्धदेवमनुंयमंयमुनांचसुषुवेसैववडवाभूत्वानासत्यौसुषुवे ३८ पुनःसैवछायाशनैश्चरंसावर्णिमनुं तपतींकन्यांचसुषुवे यासवर्णंवव्रे ३९ ४० अर्यम्णः २। मातृकायांचर्षणयः पुत्राः। पूषा ३ अनपत्या ४१ ४२ त्वष्टुः ४ दैत्यानुजारोचनानामभार्यातस्यांसंनिवेशःविश्वरूपश्चजज्ञे ४३ बृहस्पतिनात्यक्ताः देवाः द्विषतांदौहित्रमपिविश्वरूपंपौरोहित्यायववृिरे ४४ ॥ ॥ इतिषष्ठस्कंधेषष्ठोऽध्यायः ॥ ६ ॥ ॥ राजोवाच ॥ स्वाशिष्याः देवाः बृहस्पतिनाकुतस्त्यक्ताः देवः किं अपराद्धं एतत् आचक्ष्व १ ॥ ॥ श्रीशुकउवाच ॥ ॥ इंद्रः त्रिभुवनैश्वर्यमदेनमत्तः सन् देवगंधर्वमुनिविद्याधराप्सरोभिः सर्वैः युक्तः सर्वराजचिह्नैः पौलोम्यासहविराजमानः अध्यासनेस्थितः सभागतंगुरुंदृष्ट्वापिनोच्चचाल २ ३ ४ ५ ६ ७

नचोच्चचाल । आसनएवस्थितोपिकिंचिन्नचलितवान् ८ श्रीमदेनयाविक्रियातांजानन् ९ प्रतिवुध्यअनुस्मृत्य । ( सदसिकृष्णीतआत्मनासात्विकवुद्धया) १० ममकृतंकर्मअहोअसाधु ।
यद्यस्मात् । दभ्रवुद्धिना ( अल्पमतिना ) मयाकात्कृतः तिरस्कृतः ११ ( गृध्येदभिकांक्षेत् । ) विवुधानांसात्विकानां देवानामीश्वरोप्यहम् १२ ननुमिहासनस्थोराजाभ्युत्थानंनकु
र्यादितिवृद्धावदंतितत्राह । अद्धानिद्वाभ्याम् । धिषणमासनम् ( परंसूक्ष्मम् )१३ कुत्थंदिशंति उपदिशंतितेकुपथदृष्टारस्तेषांवचः अश्ममयःप्लवोयेषांतेयथामज्जंतंप्लवमनुमज्जंतितद्वत् १४
अगाधागंभीराधिषणायस्यतम् । निशठः शाठ्यहीनः सन् १५ ( इंद्रापेक्षाया ) अधिकयाआत्ममायया १६ गुरोःसंज्ञांज्ञानोपायंपरीक्षमाणोपिनाधिगतः अप्राप्तःसन् १७
आततायिनः उद्यतास्त्राः ( युद्धोद्योगंचक्रुः ) १८ निर्भिन्नानिअंगान्युत्तमांगानिशिरांसिउरवोवाहवश्चयेषाम् १९ २० वः युष्माकंकृतंकरणंमहदभद्रं । तदाहब्रह्मिष्ठंइति । नाभ्य
नंदतनाभिनंदितवंतः २१ । परेभ्यः शत्रुभ्योवः पराभवइतियत्अयंतस्य अनयस्य अन्यायस्यसंवंधीफलरूपआसीत् । उक्तंच । ‘ ब्राह्मणंकुलसंपन्नंभक्तंविष्णोर्महात्मनः । आयांतं
वीक्ष्यनोत्तिष्ठेत्सदुःखैःपरिभूयते , इति स्वयमेववैरिणोहंतारोयेषांतेभ्यः २२

वाचस्पतिंमुनिवरंसुरासुरनमस्कृतम् ॥ नोच्चचालासनादिंद्रःपश्यन्नपिसभागतम् ८ ततोनिर्गत्यसहसाकविरांगिरसःप्रभुः ॥ आययौस्वगृहंतूष्णींविद्वा
न्श्रीमदविक्रियाम् ९ तर्ह्येवप्रतिवुद्ध्येंद्रोगुरुहेलनमात्मनः ॥ गर्हयामाससदसिस्वयमात्मानमात्मना १० अहोवतममासाधुकृतंवैदभ्रवुद्धिना ॥ यन्मये
श्वर्यमत्तेनगुरुःसदसिकात्कृतः ११ कोगृध्येत्पंडितोलक्ष्मींत्रिविष्टपपतेरपि ॥ ययाहमासुरंभावंनीतोद्यविवुधेश्वरः १२ येपारमेष्ठ्यंधिषणमधितिष्ठन्नकं
चन ॥ प्रत्युत्तिष्ठेदितिब्रूयुर्धर्मंतेनपरंविदुः १३ तेषांकुपथदेष्टॄणांपततांतमसिह्यधः ॥ येश्रद्दध्युर्वचस्तेवैमज्जंत्यश्मप्लवाइव १४ अथाहममराचार्यमगाध
धिषणंद्विजम् ॥ प्रसादयिष्येनिशठःशीर्ष्णातच्चरणंस्पृशन् १५ एवंचिंतयतस्तस्यमघोनोभगवान्गृहात् ॥ वृहस्पतिर्गतोऽदृष्टांगतिमध्यात्ममायया १६
गुरोर्नाधिगतःसंज्ञांपरीक्षन्भगवान्स्वराट् ॥ ध्यायन्धियासुरैर्युक्तःशर्मनालभतात्मनः १७ तच्छ्रुत्वैवासुराःसर्वआश्रित्यौशनसंमतम् ॥ देवान्प्रत्युद्यमंच
क्रुर्दुर्मदाआततायिनः १८ तैर्विसृष्टेषुभिस्तीक्ष्णैर्निर्भिन्नांगोरुवाहवः ॥ ब्रह्माणंशरणंजग्मुःसहेंद्रानतकंधराः १९ तांस्तथाभ्यर्दितान्वीक्ष्यभगवानात्मभूर
जः ॥ कृपयापरयादेवउवाचपरिसांत्वयन् २० ॥ ब्रह्मोवाच ॥ अहोवतसुरश्रेष्ठाह्यभद्रंवःकृतंमहत् ॥ ब्रह्मिष्ठंब्राह्मणंदांतमैश्वर्यान्नाभ्यनंदत २१ तस्या
यमनयस्यासीत्परेभ्योवःपराभवः ॥ प्रक्षीणेभ्यःस्ववैरिभ्यःसमृद्धानांचयत्सुराः २२

८ ततः गुरुः गृहंययौ ९ ततः इंद्रः स्वात्मानंगर्हयामास १० मांधिक् अस्तु अहोऐश्वर्यमत्तेन मया सदसि गुरुःतिरस्कृतः यत्प्रसादात् इयंश्रीः अतः अहंतंप्रसादयिष्ये
११ १२ १३ १४ १५ एवंचिंतयतः सतः वृहस्पतिः आत्ममायया अंतर्धानंगतः १६ इंद्रः देवैः सहगुरुं अप्राप्यशर्मनअलभत १७ तच्छ्रुत्वासर्वेदैत्याः शुक्रं आ
श्रित्यदेवान्जिग्युः १८ तदासेंद्राः देवाः ब्रह्माणंशरणंजग्मुः १९ ॥तदाब्रह्माउवाच॥ २० हेदेवाः भवद्भिः अभद्रंकृतं २१ ब्राह्मणावमानात्ऐश्वर्यभ्रष्टाः जाताः २२

आ
गुरुतिरस्कारसत्कारानिव्वापचयोपचयकारणमित्युरदृष्टांतेनाह । मघवन्निति । द्विषतः शत्रून्काव्यंभार्गवंगुरुमेवाराध्योपचितान् । उपचितत्वमेवाह । ( भृगुः शुक्रोदेवतायेषांते ) आदृदीरन्गृह्णीयुः २३ अभेद्योमंत्रो ( गुप्तवादो ) येषां । अनुशिक्षितार्थाःशिष्याः यतः विप्रागोविंदागावईश्वरा अनुग्राहकायेषांतेषामेवअभद्राणिनभवतिअन्येषांतुभवंति २४ ततस्मात् अथअनंतरमेवभजत । अस्यकर्मअनुरञ्जयतम् २५ उदिताउक्ताः । विगतज्वरानिश्चिंताः २६ ( हेतातविश्वरूपभवतआश्रमं । पितॄणांगृहआगमं ) २७ ( सतांपुत्राणांपुत्रवतामपि पितृशुश्रूषणंहिपरोधर्मः तत्रब्रह्मचारिणांकिमुतवक्तव्यम् ) २८ अतिथीनांपितॄणांचप्रशंसार्थमाहुः । आचार्यउपनीयवेदाध्यापकः । ब्रह्मणोवेदस्यमूर्तिः । ( मरुत्पतेरिंद्रस्य ) २९ धर्मस्यात्ममूर्तिरतिथिः । स्वयंसाक्षात्आत्मनः श्रीविष्णोः यद्वा आत्मनः स्वस्य । सर्वभूतेष्वात्मदृष्टिः कर्तव्येत्येतदर्थम् ३० परेभ्यः पराभवएवआर्तिः तां ३१ संदेशमाहुः तूष्णीमहइति ३२ ननूपाध्यायत्वे कनिष्ठस्यममाभिवंदनंकरिष्यथतत्रगर्हितंतत्राहुर्नेति । अर्थेषुप्रयोजननिमित्तं यविष्ठानांअभिवादनंननिंदंति । किंच । छंदोभ्योन्यत्रवयोज्यैष्ठ्यस्यकारणंनतुमंत्रेषु । अतोऽस्मभ्यमंत्रदातृत्वेनत्वमेवज्येष्ठोभविष्यसि । यद्वा । ( हेब्रह्मन् ) छंदोभ्योन्यत्रवेदान्विहायवयएवज्यैष्ठ्यस्यकारणंनभवति किंतुवेदाएवकारणं । तत्साम्येतुवयः । वेदज्ञत्वाद्धत्वमेवज्येष्ठइत्यर्थः ३३

मघवन्द्विषतःपश्यप्रक्षीणान्गुर्वतिक्रमात् ॥ संप्रत्युपचितान्भूयः काव्यमाराध्यभक्तितः ॥ आददीरन्निलयनंममापिभृगुदेवताः २३ त्रिविष्टपंकिंगणयंत्यभेद्यमंत्राभृगूणामनुशिक्षितार्थाः ॥ नविप्रगोविंदगवीश्वराणांभवंत्यभद्राणिनरेश्वराणाम् २४ तद्विश्वरूपंभजताशुविप्रंतपस्विनंत्वाष्ट्रमथात्मवंतम् ॥ सभाजितोर्थान्सविधास्यतेवोयदिक्षमिष्यध्वमुतास्यकर्म २५ ॥ श्रीशुकउवाच ॥ तएवमुदिताराजन्ब्रह्मणागाविगतज्वराः ॥ ऋषिंत्वाष्ट्रमुपव्रज्यपरिष्वज्येदमब्रुवन् २६ ॥ देवाऊचुः ॥ ॥ वयंतेऽतिथयःप्राप्ताआश्रमंभद्रमस्तुते ॥ कामःसंपाद्यतांतातपितॄणांसमयोचितः २७ पुत्राणांहिपरोधर्मःपितृशुश्रूषणंसताम् ॥ अपिपुत्रवतांब्रह्मन्किमुतब्रह्मचारिणाम् २८ आचार्योब्रह्मणोमूर्तिःपितामूर्तिःप्रजापतेः ॥ भ्रातामरुत्पतेर्मूर्तिर्माताःसाक्षात्क्षितेस्तनुः २९ दयायाभगिनीमूर्तिर्धर्मस्यात्मातिथिःस्वयम् ॥ अग्नेरभ्यागतोमूर्तिःसर्वभूतानिचात्मनः ३० तस्मात्पितॄणामार्तानामार्तिंपरपराभवम् ॥ तपसापनयंस्तातसंदेशंकर्तुमर्हसि ३१ वृणीमहेत्वोपाध्यायंब्रह्मिष्ठंब्राह्मणंगुरुम् ॥ यथांऽजसाविजेष्यामःसपत्नांस्तवतेजसा ३२ नगर्हयंतिह्यर्थेषुयविष्ठांघ्र्यभिवादनम् ॥ छंदोभ्योन्यत्रनब्रह्मन्वयोज्यैष्ठ्यस्यकारणम् ३३ ॥

हेमघवन्संप्रतिदैत्याःशुक्रंआराध्यनस्स्थानमपिग्रहीष्यंति २३ २४ तस्मात् आशुविश्वरूपं भजत यदिअस्यकर्मक्षमिष्यध्वं तर्हिसः भवदर्थान्विधास्यते २५ ॥ श्रीशुकउवाच ॥ ॥ इतिब्रह्मणोदितंश्रुत्वा त्वाष्ट्रंगत्वा २६ ॥ ॥ देवाऊचुः ॥ ॥ हेतात वयंअतिथयः प्राप्ताःनः कामः संपाद्यताम् २७ पुत्राणांपितृशुश्रूषणंपरोधर्मः २८ अतः गुरुः वेदस्यमूर्तिः पिताप्रजापतेर्मूर्तिः भ्राताइंद्रस्यमूर्तिः २९ भगिनीदयायाः मूर्तिः अतिथिः धर्मस्यमूर्तिः अग्नेः अभ्यागतोमूर्तिः सर्वभूतानिश्रीविष्णोर्मूर्तिः ३० अतः अस्माकंपितॄणांदुःखं तपसाअपनयन् सन् अस्मदाज्ञांकर्तुंअर्हसि ३१ त्वांउपाध्यायंवृणीमहे यथातवतेजसाशत्रून्विजेष्यामः ३२ कार्येषुकनिष्ठवंदनंनानिंदंति मंत्रेभ्योन्यत्रवयोज्यैष्ठ्यस्यकारणं ननुमंत्रेषु अतःमंत्रदानृत्वेनत्वमेवज्येष्ठोभविष्यसि ३३

भा०प० ( ऋषिः शुकः ) । ३४ निंदितमपीदं पुण्यघ्नत्वात् धर्मभंगभयेन कथं कुर्यामित्याह साधव । ( हनाथाः ) धर्मगर्हितं पौरोहित्यमिति शेषः धर्मशीलैः अधर्महेतुत्वात् । किंतु किंचाब्रह्मवर्चउपव्ययं अ०
पूर्वसिद्धस्य ब्रह्मवर्चसो व्ययकरं प्रत्याख्यातुं च मादृशो नार्हतीत्याह । कथं त्विति । तथापि लोकेशानां शिष्य शिक्षणार्हः स एव प्रत्याख्यानाभाव एव हि शिष्यस्य स्वार्थ उच्यते ३५ ननु पौरो
हित्येन धनलाभाद्धर्मः सिध्येत अन्यथा निर्धनस्य कुतो धर्मः अत एव तेन लोको हृष्यतीति तत्राह । अकिंचनानां शिलोंछं नं हि धनं । क्षेत्रे स्वाम्युपेक्षित कणिशोपादानं शिलं । हट्टादौ पतितव्रीह्या ॥ ७ ॥
॥ १६॥ देरुपादानमुंछनं । इह गृहाश्रमे तेनैव निर्वर्तिता संपादिता साधूनां सत्क्रिया येन ३६ कियदेतत्प्रार्थितम् अलमत्र । अभ्यधिकमपि करिष्यामीत्याह । भवतामिति । ३७ समाधिना परमो
द्यमेन । वैष्णव्या श्रीनारायणकवचात्मिकया । ३८ असुरचमूर्दैत्यसेनाः जिग्ये तां विद्यां तु तस्मै विश्वरूप उक्तवान् ३९ ४० ॥ इति श्रीभागवते षष्ठस्कंधे टीकायां सप्तमोध्यायः ॥ ७ ॥
अष्टमे विश्वरूपस्तु वर्म नारायणात्मकं ॥ इंद्राय प्राह येनेंद्रो गुप्तो दैत्यानथाजयत् ॥ १ ॥ त्रिलोक्याः संबंधिनीं श्रियं १ । ( यथावदाख्याहि ) २ । ३ ।

॥ ऋषिरुवाच ॥ अभ्यर्थितः सुरगणैः पौरोहित्ये महातपाः ॥ स विश्वरूपस्तानाह प्रसन्नः श्लक्ष्णया गिरा ३४ ॥ विश्वरूप उवाच ॥ विगर्हितं धर्मशीलैर्ब्रह्मव
र्चउपव्ययम् ॥ कथं नु मद्विधो नाथा लोकेशैरभियाचितम् ॥ प्रत्याख्यास्यति तच्छिष्यः स एव स्वार्थ उच्यते ३५ अकिंचनानां हि धनं शिलोंछनं तेनेह निर्व
र्तितसाधुसत्क्रियः ॥ कथं विगर्ह्यं नु करोम्यधीश्वराः पौरोधसं हृष्यति येन दुर्मतिः ३६ तथापि न प्रतिब्रूयां गुरुभिः प्रार्थितं कियत् ॥ भवतां प्रार्थितं सर्वं प्राणैरर्थै
श्च साधये ३७ ॥ ॥ श्रीशुक उवाच ॥ ॥ तेभ्य एवं प्रतिश्रुत्य विश्वरूपो महातपाः ॥ पौरोहित्यं वृतश्चक्रे परमेण समाधिना ३८ सुरद्विषां श्रियं गुप्तामौशन
स्यापि विद्यया ॥ आच्छिद्यादान्महेंद्राय वैष्णव्या विद्यया विभुः ३९ यया गुप्तः सहस्राक्षो जिग्येऽसुरचमूर्विभुः ॥ तां प्राह स महेंद्राय विश्वरूप उदारधीः ४०
॥ इति श्रीभागवते म० षष्ठस्कंधे सप्तमोध्यायः ॥ ७ ॥ राजोवाच ॥ यया गुप्तः सहस्राक्षः सवाहान् रिपुसैनिकान् ॥ क्रीडन्निव विनिर्जित्य त्रिलोक्या बुभुजे श्रि
यम् १ भगवंस्तन्ममाख्याहि वर्म नारायणात्मकम् ॥ यथाततायिनः शत्रून्येन गुप्तोजयन्मृधे २ ॥ श्रीशुक उवाच ॥ वृतः पुरोहितस्त्वाष्ट्रो महेंद्रायानु
पृच्छते ॥ नारायणाख्यं वर्माह तदिहैकमनाः शृणु ३ ॥

एवं देवैः पौरोहित्ये प्रार्थितः विश्वरूपः तान् आह ३४ ॥ ॥ विश्वरूप उवाच ॥ ॥ हे देवाः स्वपुण्यनाशकं पौरोहित्यं कथं नु करोमि ३५ ३६ तथापि गुरुभिः प्रार्थितं
प्राणैः अर्थैश्च साधये ३७ ॥ ॥ श्रीशुक उवाच ॥ ॥ विश्वरूपः एवं प्रतिज्ञाय देवैः वृतः सन् पौरोहित्यं चक्रे ३८ शुक्रविद्यया गुप्तां दैत्यश्रियं वैष्णव्या विद्यया आच्छिद्य ॥ १६॥
महेंद्राय अदात् ३९ इंद्रः यया विद्यया गुप्तः सन् असुरचमूः जिग्ये तां विद्यां विश्वरूपः इंद्राय प्राह ४० इति षष्ठे सप्तमः ७ ॥ ॥ राजोवाच ॥ ॥ सहस्राक्षः यया गुप्तः
सन् शत्रून् निर्जित्य त्रैलोक्यश्रियं बुभुजे १ हे भगवन् तत् नारायणमयं वर्म मम आख्याहि २ ॥ श्रीशुक उवाच ॥ ॥ ततः त्वाष्ट्रः महेंद्राय नारायणाख्यं वर्म आह तत् शृणु ३

मंत्राभ्यांअष्टाक्षरद्वादशाक्षराभ्यांकृतः स्वांगेषुकरयोश्चन्यासोयेन । नारायणमयं परंवर्म संनह्येत्बध्नीयात् ४ तत्राष्टाक्षरेणपादाद्यष्टांगेषुन्यासमाह पादयोरितिसार्धेन प्रणवसंपुटितमोंकाराद्येकैकमक्षरंविन्यसेत् । विपर्ययंयथाभवत्येवंशिरआदिपादांतंवाविन्यसेत् । उत्पत्तिन्यासंसंहारन्यासंवाकुर्यादित्यर्थः । ५ द्वादशाक्षरस्योद्धारः प्रणवादियकारांतमिति । प्रणवसंपुटितमेकैकमक्षरं दक्षिणतर्जनीमारभ्यवामतर्जनीपर्यंतमंगुलीषु । परिशिष्टमक्षरचतुष्टयं अंगुष्ठयोराद्यंतपर्वसुन्यसेत् । ६ मंत्रांतरन्यासमाह न्यसेदिति । षकारणकारयोर्विश्लेषेणषडक्षराणिहृदयादिषुन्यसेत् ७ मकारमस्त्रमुद्दिश्यध्यात्वातन्मकारास्त्रं मःअस्त्रायफडित्येवंदिग्बंधेविनिर्दिशेत् ( ॐविष्णवेनमइतिमंत्रोद्धारः ) ८ ध्येयमीश्वररूपमात्मानंध्यायेत् । षट्शक्तिभिः ऐश्वर्यादिभिः भगशब्दवाच्याभिः । विद्याचतेजश्चतपश्चमूर्तिर्यस्यतंइमंवक्ष्यमाणं श्रीनारायणकवचाख्यं ९ ( शंखचक्राद्यष्टायुधधरोऽष्टबाहुः ) अष्टगुणः अणिमाद्यष्टैश्वर्ययुक्तो ( हरिः सर्वतोरक्षणंकरोतु ) १० यादसांगणाएववरुणस्यपाशस्तस्मात् ११ अटवी आजिमुखं संग्रामोपग्रहश्चआदिर्येषांतेषुसंकटस्थानेषु १२ असौप्रसिद्धोवराहोमहात्मा अध्वनिरक्षतु । यज्ञैरवयवरूपैः कल्प्यतेनिरूप्यतइतितथा । उन्नीताउद्धृताधरायेनसः । अद्रिकूटेषुगिरिशिखरेषुरामोजामदग्न्यः विप्रवासेदूरवासे १३

॥ विश्वरूपउवाच ॥ ॥ धौतांघ्रिपाणिराचम्यसपवित्रउदङ्मुखः ॥ कृतस्वांगकरन्यासोमंत्राभ्यांवाग्यतःशुचिः ॥ नारायणपरंवर्मसंनह्येद्भयआगते॥४॥
पादयोर्जानुनोरूर्वोरुदरेहृद्यथोरसि ॥ मुखेशिरस्यानुपूर्व्यादोंकारादीनिविन्यसेत्॥ॐनमोनारायणायेतिविपर्ययमथापिवा ॥५॥ करन्यासंततःकुर्याद्द्वादशाक्षरविद्यया ॥ प्रणवादियकारांतमंगुल्यंगुष्ठपर्वसु ॥६॥ न्यसेद्धृदयओंकारंविकारमनुमूर्धनि ॥ षकारंतुभ्रुवोर्मध्येणकारंशिखयादिशेत् ॥ वेकारंनेत्रयोर्युंज्यान्नकारंसर्वसंधिषु ७ मकारमस्त्रमुद्दिश्यमंत्रमूर्तिर्भवेद्बुधः ॥ सविसर्गंफडंतंतत्सर्वदिक्षुविनिर्दिशेत् ॥ ॐविष्णवेनमइति ८ आत्मानंपरमंध्यायेद्ध्येयंषट्शक्तिभिर्युतम् ॥ विद्यातेजस्तपोमूर्तिमिमंमंत्रमुदाहरेत् ॥९ ॐहरिर्विदध्यान्ममसर्वरक्षांन्यस्तांघ्रिपद्मःपतगेंद्रपृष्ठे ॥ दरारिचर्मासिगदेषुचापपाशान्दधानोष्टगुणोऽष्टबाहुः १० जलेषुमांरक्षतुमत्स्यमूर्तिर्यादोगणेभ्योवरुणस्यपाशात् ॥ स्थलेषुमायावटुवामनोव्यात्त्रिविक्रमःखेऽवतुविश्वरूपः ११ दुर्गेष्वटव्याजिमुखादिषुप्रभुःपायान्नृसिंहोऽसुरयूथपारिः ॥ विमुंचतोयस्यमहाट्टहासंदिशोविनेदुर्न्यपतंश्चगर्भाः १२ रक्षत्वसौमाध्वनियज्ञकल्पःस्वदंष्ट्रयोन्नीतधरोवराहः ॥ रामोद्रिकूटेष्वथविप्रवासेसलक्ष्मणोव्याद्भरताग्रजोस्मान् ॥ १३ ॥

॥ विश्वरूपउवाच ॥ ॥ धौतांघ्रिपाणिराचम्यउदङ्मुखः वाग्यतः आष्टाक्षरद्वादशाक्षरमंत्राभ्यांस्वांगकरयोःन्यासंकृत्वानारायणमयंवर्मबध्नीयात् ४ एवंन्यासंकृत्वा ५ ६ ७ ८ आत्मानंईश्वररूपं ध्यात्वाइदंनारायणकवचंउदाहरेत् ९ ॐहरिः ममसर्वरक्षांविदध्यात् १० मत्स्यमूर्तिः जलेषुमांरक्षतु स्थलेषुवामनः खेत्रिविक्रमः ११ दुर्गमस्थानेषुनृसिंहः अध्वनिवराहः १२ गिरिशिखरेषुपरशुरामः प्रवासेभरताग्रजः १३

उग्रधर्मादभिचारादिलक्षणात् । दामाद्गर्वान्नरः अवतु । दत्तोदत्तात्रेयः अयोगात्योगभ्रंशात् । १४ पथियद्देवानांहेलनम् नमस्कारमकृत्वागमनंतस्मात् । पुरुषार्चनांतरोद्दवपूजाछि
द्रात्द्वात्रिंशदपरावरूपात् । ( देवर्षिवर्यो ) नारदः । १५ लोकाज्जनापवादात्यज्ञः । जननिमित्तोयोंतउपवातस्तस्माद्वलभद्रः अरनात् कृतांतादितिपाठकृतांतात्कालात् । रक्षतु ।
क्रोधवशात्सर्पगणात्शेषोऽहींद्रःशेषः १६ कालमलात्कलेः कल्किः धर्मावनायधर्मरक्षणायउरुर्महानकृतोऽवतारोयेन १७ दिनस्यपंचभागेषु क्रमेणप्रातरादि मंत्रपुराचेश्वमदोषादि
मंत्रैपुरश्चरार्थनंकेशवइतित्रिभिः । आसंगवंसंगवमभिव्याप्य ( अरींद्रपाणिश्चक्रपाणिः ) १८ त्रिधामात्रह्मादित्रिमूर्तिः माधवः दोषप्रदोषेहृषीकेशोऽवतु । अर्धरात्रेअर्धरात्रिरर्थतेका
ले निशीथेचएकःपद्मनाभोवतु । १९ अपररात्रेईशः श्रीवत्सधामावतु । प्रत्यूषईशःखड्गधरोजनार्दनोऽव्यात् । श्रीदामोदरः प्रभाते विश्वेश्वरोऽनुसंध्यं २० युगांतानलवत् तिग्मा
तीक्ष्णानेमिर्यस्यतच्चक्रं भगवताप्रयुक्तमत् अरिसैन्यंदंदग्धि अतिशयेन दहति । तस्यायंस्वभावएवनतुतस्मात्प्रार्थनीयमित्यर्थःयद्वा दंदग्धीतिलोण्मध्यमपुरुषः । अतस्त्वमेवंभूतंचक्रमि
तिस्वरूपमुक्त्वासंबोध्यप्रार्थ्यतेअतिशयेनदहेति । कक्षंशुष्कतृणं २१ अशनिवत् ( स्पर्शनं ) स्पर्शोयेपातेविस्फुलिंगायस्याः तस्याः संबोधनं । हेगदेत्वमजितस्यप्रियासि अहंअच्युत
स्यदासःअतः कूश्मांडादीन्निष्पिंढि निष्पिंढि अरींश्च संचूर्णय संचूर्णय सर्वत्रवीप्सा अतिशीघ्रत्वाय । २२

मामुग्रधर्मादखिलात्प्रमादान्नारायणःपातुनरश्चहासात् ॥ दत्तस्त्वयोगादथयोगनाथःपायाद्गुणेशःकपिलःकर्मबंधात् १४ सनत्कुमारोवतुकामदेवाद्धयशी
र्षामांपथिदेवहेलनात् ॥ देवर्षिवर्यःपुरुषार्चनांतरात्कूर्मोहरिर्मांनिरयादशेषात् १५ धन्वंतरिर्भगवान्पात्वपथ्याद्द्वंद्वाद्भयादृषभोनिर्जितात्मा ॥ यज्ञश्च
लोकादवताज्जनांताद्बलोगणात्क्रोधवशादहींद्रः १६ द्वैपायनोभगवानप्रबोधाद्बुद्धस्तुपाखंडगणात्प्रमादात् ॥ कल्किःकलेःकालमलात्प्रपातुधर्मावनायोरु
कृतावतारः १७ मांकेशवोगदयाप्रातरव्याद्गोविंदआसंगवमात्तवेणुः ॥ नारायणःप्राह्णउदात्तशक्तिर्मध्यंदिनेविष्णुररींद्रपाणिः १८ देवोपराह्णेमधुहोग्र
धन्वासायंत्रिधामाऽवतुमाधवोमाम् ॥ दोषेहृषीकेशउतार्धरात्रेनिशीथएकोवतुपद्मनाभः १९ श्रीवत्सधामाऽपररात्रईशःप्रत्यूषईशोऽसिधरोजनार्दनः ॥
दामोदरोऽव्यादनुसंध्यंप्रभातेविश्वेश्वरोभगवान्कालमूर्तिः २० चक्रंयुगांतानलतिग्मनेमिभ्रमत्समंताद्भगवत्प्रयुक्तम् ॥ दंदग्धिदंदग्ध्यरिसैन्यमाशुकक्षंय
थावातसखोहुताशः २१ गदेऽशनिस्पर्शनविस्फुलिंगेनिष्पिंढिनिष्पिंढ्यजितप्रियासि ॥ कूश्मांडवैनायकयक्षरक्षोभूतग्रहांश्चूर्णयचूर्णयारीन् ॥ २२ ॥

अभिचारादिधर्मात् नारायणः नरः गर्वात् दत्तः योगभ्रंशात् कपिलः कर्मबंधात्पातु १४ सनत्कुमारः मदनात् हयशीर्षापथिदेवहेलनात् नारदः देवपूजाछिद्रात्कूर्मः
निरयात् १५ धन्वंतरिः अपथ्यात् ऋषभः द्वंद्वभयात् यज्ञः जनापवादात् बलभद्रः कृतांतात् शेषः सर्पगणात् १६ द्वैपायनः अप्रबोधात् बुद्धः पाखंडगणात् कल्किः क
लिकालमलात् १७ केशवः गदया प्रातः । गोविंदः आसंगवम् । नारायणः प्राह्णे । विष्णुः मध्यंदिने १८ मधुहा अपराह्णे माधवः सायं हृषीकेशः दोषे पद्मनाभः आ
निशीथम् १९ श्रीवत्सधामा अपररात्रे जनार्दनः प्रत्यूषे दामोदरः अनुसंध्यम् विश्वेश्वरः प्रभाते २० हेचक्र मे रिपुसैन्यंदंदग्धि २१ हेगदेकूश्मांडादीन् चूर्णय २२

हेदरेंद्रपांचजन्यत्वयातुधानादीन्विद्रावय विप्रग्रहाब्रह्मराक्षसाःयेन्येचघोरदृष्टयस्तान् । २३ तिग्माधारायस्यहेतिग्मधार असिवर खड्गश्रेष्ठ त्वंममारिसैन्यंछिंधिछिंधि । शतचंद्राकाराणिमंडलानियस्मिन् हेशतचंद्रचर्मन् अघोनामघवतांद्विषांचक्षूंपिछादयपापचक्षुषांचउग्रदृष्टीनांचक्षूंपिहर । २४ यत्येभ्योभयं । अंवभ्यः पापेभ्यः २५ ( येचनोऽस्माकं ) श्रेयः प्रतीपकाइष्टव्याघातकाः २६ स्तोत्राणिबृहद्रथंतरादिसामानितैः स्तोभ्यतेसंस्तूयतइतिस्तोत्रस्तोभः छंदोमयोवेदमूर्तिः । 'सुपर्णोसिगरुत्मान्'इत्यादिश्रुतेः । ऐकपद्यपाठेस्तोमाः गीतिपूरकाक्षराणि । स्तोत्रस्तोमेतिपाठेमामाधारभूताःकुत्स्तोमः २७ नामानिचरूपाणिचयानानिचवाहनानिच आयुधानिचनोबुद्ध्यादीन्पांतु । पार्षदभूषणाः पार्षदमुख्याश्चपांतु २८ सच्चअसच्चमूर्तामूर्तंयत् । तत्सर्वंजगत् २९ ऐकात्म्यस्यानुभावोऽनुध्यानम् येषांतेषां विकल्पोभेदस्तद्राहितोपि ३० मत्यमानेनमत्यभूतेनप्रत्ययेन ३१ पुनरपिश्रीनृसिंहएवप्रार्थ्यते । विदिक्ष्विति । पात्वित्यनुषंगः । यद्वा नारसिंहः प्रह्लादः स्वनेनश्रीनृसिंहनामगर्जनेन स्वतेजसास्वप्रभावेन ग्रस्तानिसमस्तानि दिग्गजविषशस्त्रजलवाय्वग्न्यादीनांतेजांसिप्रभावाः येनसः ३२ दंशितःकवचितः ३३ सोपिसाध्वसाद्भयाद्विमुच्यते ३४ तस्यतुभयंनभवेदेव । ३५

त्वंयातुधानप्रमथप्रेतमातृपिशाचविप्रग्रहघोरदृष्टीन् ॥ दरेंद्रविद्रावयकृष्णपूरितोभीमस्वनोरेर्हृदयानिकंपयन् २३ त्वंतिग्मधारासिवरारिसैन्यमीशप्रयुक्तोममछिंधिछिंधि ॥ चक्षूंषिचर्मञ्छतचंद्रछादयद्विषामघोनांहरपापचक्षुषाम् २४ यन्नोभयंग्रहेभ्योऽभूत्केतुभ्योनृभ्यएवच ॥ सरीसृपेभ्योदंष्ट्रिभ्योभूतेभ्योंहोभ्यएववा २५ सर्वाण्येतानिभगवन्नामरूपास्त्रकीर्तनात् ॥ प्रयांतुसंक्षयंसद्योयेनःश्रेयःप्रतीपकाः २६ गरुडोभगवान्स्तोत्रस्तोभश्छंदोमयःप्रभुः ॥ रक्षत्वशेषकृच्छ्रेभ्योविष्वक्सेनःस्वनामभिः २७ सर्वापद्भ्योहरेर्नामरूपयानायुधानिनः ॥ बुद्धींद्रियमनःप्राणान्पांतुपार्षदभूषणाः २८ यथाहिभगवानेववस्तुतःसदसच्चयत् ॥ सत्येनानेननःसर्वेयांतुनाशमुपद्रवाः २९ यथैकात्म्यानुभावानांविकल्परहितःस्वयम् ॥ भूषणायुधलिंगाख्याधत्तेशक्तीःस्वमायया ३० तेनैवसत्यमानेनसर्वज्ञोभगवान्हरिः ॥ पातुसर्वैःस्वरूपैर्नःसदासर्वत्रसर्वगः ३१ विदिक्षुदिक्षूर्ध्वमधःसमंतादंतर्बहिर्भगवान्नारसिंहः ॥ प्रहापयल्लोकभयंस्वनेनस्वतेजसाग्रस्तसमस्ततेजाः ३२ मघवन्निदमाख्यातंवर्मनारायणात्मकम् ॥ विजेष्यस्यंजसायेनदंशितोऽसुरयूथपान् ३३ एतद्धारयमाणस्तुयंयंपश्यतिचक्षुषा ॥ पदावासंस्पृशेत्सद्यःसाध्वसात्सविमुच्यते ३४ नकुतश्चिद्भयंतस्यविद्यांधारयतोभवेत् ॥ राजदस्युग्रहादिभ्योव्याघ्रादिभ्यश्चकर्हिचित् ३५

हेपांचजन्ययातुधानादीन् विद्रावयविद्रावय २३ हेखड्गमेअरिसैन्यंछिंधिछिंधि हेचर्मन् द्विषांचक्षूंषि छादय हर २४ भगवन्नामरूपादिकीर्तनात् श्रेयोनाशकाः क्षयंयांतु २५ २६ गरुडः कृच्छ्रेभ्योरक्षतु २७ आपद्भ्योहरेर्नामरूपादीनिपार्षदाश्चनः बुद्ध्यादीन् पांतु २८ २९ ३० सर्वरूपैः हरिः सदापातु ३१ विदिक्षुदिक्षुऊर्ध्वमधः समंतात् अंतर्बहिश्चनारसिंहः पातु ३२ हेमघवन्नारायणाख्यंवर्मतेआख्यातंयेन शत्रून् विजेष्यसि ३३ यः इदं धारयेत् सः भयात्मुच्यते ३४ एतद्धारयतः कुतश्चभयंनभवेत् ३५

 एतद्विद्याप्रभावमितिहासेनाह । इमामिति सार्धैस्त्रिभिः । मरुधन्वनिनिरुदकेदेशे । अनेनविद्याप्राप्तःक्षेत्रतीर्थानपेक्षत्वंदर्शितं । ३६ यत्राद्विजस्यक्षयोदेहत्यागः तस्योपरि ३७ मद्यस्त 
त्क्षणमेवगगनान्न्यपतत् । पाठांतरेअंगनाभिःसह । वालखिल्योपदेशात्तस्यास्थीनिप्रास्यप्रक्षिप्यविस्मितःसन्स्वंधामगंधर्वलोकंजगाम । ३८ । ३९ अधिगतः प्राप्तः सन् । ४० इति
श्रीभागवतेषष्ठस्कंधेटीकायामष्टमोऽध्यायः ॥८॥ नवमेविश्वरूपेतुहतेशक्रेणकोपतः । त्वष्ट्राचोत्पादितेवृत्रेभीतैर्देवैर्हरिःस्तुतः ॥ १ ॥ सोमस्यपीथंपानंयस्मिन् । एवंसुरापीथं । अन्नमत्ती
 त्यन्नादं । अत्र "विश्वरूपोवैत्वाष्ट्रः पुरोहितोदेवानामासीत्"इत्यादिश्रुतिरनुसंधेया १ तस्यासुरपक्षपातमाह । सवाइतिद्वाभ्याम् । प्रत्यक्षंप्रकटंयथाभवतितथासविनयंदेवेभ्योहविर्भागम् 
इंद्रायेदं अग्नयइदमित्युच्चैरवदत् । अत्रहेतुः । यस्यपितरोदेवाः सः २ ॥ असुरेभ्यस्तुपरोक्षंगुप्तं भागंददौ । तदेवाह । देवान्यजमानोऽसावसुरान्प्रति भागमवहत् केनाप्युपायेनप्राप
यामास । अत्रहेतुः । मातृस्नेहवशानुगः ३ ( देवानांहेलनमवज्ञानंयत्रतद्धर्मालीकंधर्मकृतयेऽनृतं । तरसाशीघ्रम् ) ४ । ५ ।

इमांविद्यांपुराकश्चित्कौशिकोधारयन्द्विजः ॥ योगधारणयास्वांगंजहौसमरुधन्वनि ३६ तस्योपरिविमानेनगंधर्वपतिरेकदा ॥ ययौचित्ररथःस्त्रीभिर्वृ
तोयत्रद्विजक्षयः ॥ गगनान्न्यपतत्सद्यःसविमानोह्यवाक्शिराः ३७ सवालखिल्यवचनादस्थीन्यादायविस्मितः ॥ प्रास्यप्राचीसरस्वत्यांस्नात्वाधामस्व
मन्वगात् ३८ ॥ ॥ श्रीशुकउवाच ॥ ॥ यइदंशृणुयात्कालेयोधारयतिचादृतः ॥ तंनमस्यंतिभूतानिमुच्यतेसर्वतोभयात् ३९ एतांविद्यामधिगतो
विश्वरूपाच्छतक्रतुः ॥ त्रैलोक्यलक्ष्मींबुभुजेविनिर्जित्यमृधेऽसुरान् ४० ॥ ॥ इतिश्रीभागवते म० षष्ठस्कंधेनारायणवर्मनामाष्टमोध्यायः ॥ ८ ॥
॥ श्रीशुकउवाच ॥ तस्यासन्विश्वरूपस्यशिरांसित्रीणिभारत ॥ सोमपीथंसुरापीथमन्नादमितिशुश्रुम १ सवैबर्हिषिदेवेभ्योभागंप्रत्यक्षमुच्चकैः ॥ अवद
द्यस्यपितरोदेवाःसप्रश्रयंनृप २ सएवहिददौभागंपरोक्षमसुरान्प्रति ॥ यजमानोऽवहद्भागंमातृस्नेहवशानुगः ३ तदेवहेलनंतस्यधर्मालीकंसुरेश्वरः ॥
आलक्ष्यतरसाभीतस्तच्छीर्षाण्यच्छिनद्रुषा ४ सोमपीथंतुयत्तस्यशिरआसीत्कपिंजलः ॥ कलविंकःसुरापीथमन्नादंयत्सतित्तिरिः ५

पुराकश्चित्कौशिकोद्विजः इमांविद्यांधारयन् योगधारणयामरुदेशेस्वांगंजहौ ३६ तस्योपरिचित्ररथः गंधर्वः विमानेनययौ सः सद्यः सविमानः गगनात् न्यपतत् ३७
पुनः वालखिल्यवचनात् आस्थीन्यादाय प्राचीसरस्वत्यांप्रास्यस्नात्वास्वधामययौ ३८ ॥ ॥ श्रीशुकउवाच ॥ ॥ यः इदंशृणुयात् धारयतिच सः सर्वतोभयात्
मुच्यते ३९ इंद्रः विश्वरूपात् एतांविद्यांप्राप्यमृधे असुरान्जित्वात्रैलोक्यलक्ष्मीं बुभुजे ४० इतिपदेऽष्टमः ८ ॥ ॥ श्रीशुकउवाच ॥ ॥ विश्वरूपस्यत्रीणिशिरांसि सो 
मपीथम् १ सुरापीथं २ अन्नादम् ३ इतिआसन् १ सः देवेभ्यःप्रत्यक्षं हविर्भागंददौ २ मातृस्नेहेनदैत्यान् परोक्षंददौ ३ इंद्रः एवंतस्यविपर्यासं ज्ञात्वाअसुरेभ्योभीतः
सन् तस्यशीर्षाणि अच्छिनत् ४ तत्र सोमपीथात् कपिंजलः आसीत् सुरापीथात् कलविंकः अन्नादात् तित्तिरिः ५

१ अत्र 'विद्यामिमांधारयतोमृतस्यास्थिविलंबनात्' इत्यर्धमधिकंलिखितपुस्तकेवर्तते

तांवारयितुंसमर्थः तथापिजग्राह । संवत्सरंतथैवस्थित्वा संवत्सरांतेभूताक्रोशभीतः सन् भूतानांमध्येविशुद्धयै लोकापवादपरिहारायमहारिरिंद्रोभूम्यादिभ्यस्तदघं विभज्य ददौ ६
तुरीयंचतुर्थभागंखातस्यगर्तस्यपूरः पूरणंतेनवरेण । यदिखातपूरणंस्वतएवभविष्यति तर्हिंग्रहीष्यामीत्येवंभाषाबंधेनजग्राहेत्यर्थः । ईरणमूषरं । अतएवोपरेऽध्ययनादिनिषिध्यते ७
छेदेसतिपुनर्विरोहः प्ररोहोभवत्वितिवरेण । निर्यासरूपेणब्रह्महत्यायाः दृष्टत्वात्निर्यासोनभक्ष्यः ८ शश्वत्कामवरेणकामः संभोगः यावत्प्रसवंगर्भानुपघातेनैवसंभोगवरेणेत्यर्थः (अंहोह
त्या ।) रजः अतएवरजोदर्शनेतत्संगादिनकार्यम् । ९ द्रव्यभूयोवरेण यस्मिन्द्रव्येक्षीरादावापोमिश्राभवेयुः तस्यभूयस्त्वमाधिक्यंतन्मयत्वेनस्यादितिवरेणेत्यर्थः । यद्वास्त्रासामुद्ध
रणेपिनिर्झरोद्गमादिनाभूयस्त्ववरेण । द्रवभूयइतिपाठेऽप्ययमेवार्थः यद्वा द्रवभूयस्त्वंसांसिद्धिकद्रवत्वंतेनवरेण । ( तासु मलंपापं ) । अस्यविभागस्य "विश्वरूपोवैत्वाष्ट्रः"इत्यस्यां
श्रुतावुक्तेः । तद्विभागफलमाह । वत्पापंहरतिनिराकरोति । कः । क्षिपन् बुद्बुदादिजलाद्बहिः प्रक्षिपन् । ( पापंहर्तुमिच्छतावुद्बुदादित्याज्यमित्यर्थः । ) यद्वाक्षिपन् जलेपापंहरति
आहरतिगृह्णातीत्यर्थः अयंच 'तस्मात् आपोनपरिचक्ष्या" इत्यादिश्रुत्यर्थ उक्तः । पाटांतरेहरिकिल्बिषंइंद्रपापम् १० इंद्रायइंद्रंहंतुंशत्रवेशमूत्पत्त्यै । तदाह । इंद्रशत्रोविवर्धस्वेति ।
अत्रचेंद्रशत्रुपदस्य आद्युदात्तत्वात् "बहुव्रीहौप्रकृत्यापूर्वपदं"इतिस्मृतेर्बहुव्रीहिलक्षणापत्त्य।इंद्रएवतस्यशत्रुरभूत् तदुक्तंश्रुत्या'यदब्रवित्स्वाहेंद्रशत्रोवर्धस्वेतितस्मादस्येंद्रः शत्रुरभवदि'
तितथाचशिक्षायां । "मंत्रोहीनः स्वरतोवर्णतोवामिथ्याप्रयुक्तोनतमर्थमाह । सवाग्वज्रोयजमानांहिनास्तियथेंद्रशत्रुःस्वरतोपराधत्'इति ११ अन्वाहार्यपचनाद्दक्षिणाग्नेः १२ तंवक्ष्यावि
प्रस्ताल्लोकादशदिशोविदुद्रुवुरितिपंचमेनान्वयः । कथभूतं विष्वक्समंततः इषुविक्षेपमात्रंप्रतिदिनंवर्धमानं । दग्धशैलप्रतीकाशंकृष्णवर्णं । संध्याभ्रानीकवद्वर्चोदीप्तिर्यस्यतम् १३

ब्रह्महत्यामंजलिनाजग्राहयदपीश्वरः ॥ संवत्सरांतेतदघंभूतानांचविशुद्धये ६ भूम्यंबुद्रुमयोषिद्भ्यश्चतुर्धाव्यभजद्धरिः ॥ भूमिस्तुरीयंजग्राहखातपूरवरे
णवै ॥ ईरणंब्रह्महत्यायारूपंभूमौप्रदृश्यते ७ तुर्यंछेदविरोहेणवरेणजगृहुर्द्रुमाः ॥ तेषांनिर्यासरूपेणब्रह्महत्याप्रदृश्यते ८ शश्वत्कामवरेणांहस्तुरीयंजगृहुः
स्त्रियः ॥ रजोरूपेणतास्वंहोमासिमासिप्रदृश्यते ९ द्रव्यभूयोवरेणापस्तुरीयंजगृहुर्मलम् ॥ तासुबुद्बुदफेनाभ्यांदृष्टंतद्धरतिक्षिपन् १० हतपुत्रस्ततस्त्व
ष्टाजुहावेंद्रायशत्रवे ॥ इंद्रशत्रोविवर्धस्वमाचिरंजहिविद्विषम् ११ अथान्वाहार्यपचनादुत्थितोघोरदर्शनः ॥ कृतांतइवलोकानांयुगांतसमयोयथा १२
विष्वग्विवर्धमानंतमिषुमात्रंदिनेदिने ॥ दग्धशैलप्रतीकाशंसंध्याभ्रानीकवर्चसम् १३

इंद्रः ब्रह्महत्यां अंजलिना जग्राह संवत्सरांते आत्मशुद्धये ब्रह्महत्यांचतुर्धा विभज्य भूम्यंबुद्रुमयोषिद्भ्यः ददौ ६ तत्रभूमिः खातपूरवरेण ७ द्रुमाः छेदविरोहेण ८
स्त्रियः कामवरेण ९ आपः द्रव्यभूयस्त्ववरेण एवंजगृहुः तस्याः स्वरूपंभूम्यादिषु ऊषरं १ निर्यासः २ रजोदर्शनबुद्बुदफेनौइति १० हतपुत्रः त्वष्टाइंद्रशत्रोविवर्धस्वइति
होमंचकार ११ अथदक्षिणाग्नेः कृतांतइवघोरदर्शनः पुरुषः उत्थितः १२ सः प्रतिदिवसंइषुप्रक्षेपमात्रमानंवर्धमानः तंभयंकरंदग्धशैलप्रतीकाशं १३

तप्ततात्रवच्छिखाः श्मश्रूणिचयस्य मध्याह्नार्कवदुग्रेलोचनेयस्य १४ ( रोदसीआरोप्येवेत्यर्थः । ) १५ दरीवद्गंभीरेणवक्रेणमुहुर्मुहुर्जृंभमाणमित्यन्वयः । कथंभूतेन । नभस्तलं पिवता
ऋक्षाणिजिह्वयालिहता भुवनत्रयंग्रसता १६ महताविस्तीर्णेन । रौद्रादंष्ट्रायस्मिन्तेन १७ वृत्रनामनिर्वक्ति । येनावृताइवि । त्वाष्ट्रीमूर्तिर्यस्यतमसस्तेनत्वाष्ट्ररूपेणेत्यर्थः । तथाचश्रु
तिः 'सइमाँल्लोकानावृणोद्यदिमाँल्लोकानावृणोत्तत्तस्यवृत्रत्वं'इति १८ अग्रसत्भक्षितवान् १९ ग्रस्तंतेजोयेषांप्रत्यंचमंतर्यामिणं त्रिभुवनस्यतेनव्याप्तत्वात् क्वापिगमनासंभवात् ।
तत्रैवास्थित्वातुष्टुवुरित्यर्थः २० महाभयेपरित्राणमन्यतोनभवेदिति । हरिमेवप्रपद्यंतेसुराः शरणमातुराः ॥ वाय्वादीनिपंचमहाभूतानितैर्निर्मितास्त्रयोलोकास्तेषामधिपतयो ब्रह्मादय
श्चततोर्वाचीनावयंचसर्वेयस्मैअंतकायकालायोद्विजंतः संतोबलिंहरामअसावपियस्माद्बिभेतिततः परमेश्वरादेवनोऽस्माकं अरणंशरणंरक्षणमस्तु २१ ततएवेत्यवधारणेहेतुमाहुः ।
अविस्मितंनिरहंकारं । कुतूहलशून्यंवा । कुतः । प्रशांतंरागादिशून्यं । तच्चकुतः स्वेनैवलाभेनपरिपूर्णकामं । तच्चकुतः समंउपाधिपरिच्छेदशून्यं एवंभूतंपरमेश्वरंविनाअपरंयः शरणार्थ
मुपसर्पतिसबालिशोऽज्ञः यतोसौशुनोलांगूलेनपुच्छेन समुद्रमतितितर्तिअतितर्तुमिच्छतीत्यर्थः यथातेनसमुद्रतरणंनभवति तथा निरीश्वराश्रयणेनव्यसनार्णवतरणंनभवतीतिभावः
२२ महाभयेसएवरक्षकइतिदृष्टमित्याहुर्द्वाभ्यां । यस्यमहाशृंगेजगतींपृथ्वीमेवस्वनावंबद्ध्वामनुःसत्यव्रतोयथावदुर्गंसंकटंततार । सएववारिचरोमत्स्यमूर्तिर्नोऽस्मानप्याश्रितान् नूनं
त्राता रक्षिष्यति २३ ।

**तप्तताम्रशिखाश्मश्रुंमध्याह्नार्कोग्रलोचनम् १४ देदीप्यमानेत्रिशिखेशूलआरोप्यरोदसी ॥ नृत्यंतमुन्नदंतंचचालयंतंपदामहीम् १५ दरीगंभीरवक्त्रेण**
**पिबताचनभस्तलम् ॥ लिहताजिह्वयर्क्षाणिग्रसताभुवनत्रयम् १६ महतारौद्रदंष्ट्रेणजृंभमाणंमुहुर्मुहुः ॥ वित्रस्तादुद्रुवुर्लोकावीक्ष्यसर्वेदिशोदश १७ येना**
**वृताइमेलोकास्तमसात्वाष्ट्रमूर्तिना ॥ सवैवृत्रइतिप्रोक्तःपापःपरमदारुणः १८ तंनिजघ्नुरभिद्रुत्यसगणाविबुधर्षभाः ॥ स्वैःस्वैर्दिव्यास्त्रशस्त्रौघैःसोग्रसत्ता**
**निकृत्स्नशः१९ ततस्तेविस्मिताःसर्वेविषण्णाग्रस्ततेजसः ॥ प्रत्यंचमादिपुरुषमुपतस्थुःसमाहिताः२०॥देवाऊचुः॥वाय्वंबराग्न्यप्क्षितयस्त्रिलोकाब्रह्मा**
**दयोयेवयमुद्विजंतः ॥ हरामयस्मैबलिमंतकोसौबिभेतियस्मादरणंततोनः २१अविस्मितंतंपरिपूर्णकामंस्वेनैवलाभेनसमंप्रशांतम् ॥ विनोपसर्पत्यपरंहिबा**
**लिशःश्वलांगुलेनातितितर्तिसिंधुम् २२ यस्योरुशृंगेजगतींस्वनावंमनुर्यथाबध्यततारदुर्गम् ॥ सएवनस्त्वाष्ट्रभयाद्दुरंतात्त्राताश्रितान्वारिचरोपिनूनम् २३**

तप्तताम्रशिखाश्मश्रुंपदामहीं चालयंतं१४ १५जिह्वयाऋक्षाणिलिहंतंभुवनत्रयंग्रसतारौद्रदंष्ट्रेणमुखेनजृंभमाणं ईदृशंतंदृष्ट्वा त्रस्ताःलोकाःदुद्रुवुः १६ १७ येन इमेलोकाः
व्याप्ताः सः वृत्रइतिशेक्तः १८ इंद्राद्याः देवाः तत्रएत्यस्वैः स्वैः दिव्यास्त्रौघैः निजघ्नुः सः तानिशस्त्राण्यस्त्राणिअग्रसत् १९ तदासर्वेदेवाः विषण्णाः संतःआदिपुरुषंउ
पतस्थुः २० ॥ देवाऊचुः ॥ वयंब्रह्मादयः उद्विजंतः संतः यस्मैबलिंहराम सोपिकालः यस्माद्बिभेतितस्मात्परमेश्वरात् अस्माकंरक्षणमस्तु २१ किंच स्वेनैवलाभेनप
रिपूर्णकामंतंपरमेश्वरं विनाअपरं यः शरणार्थं उपसर्पति सः अज्ञः यतः शुनः पुच्छेन सिंधुंतर्तुंइच्छति २२ किंचयस्य मत्स्यस्य शृंगे पृथ्वींनावं बद्ध्वा
सत्यव्रतः संकटं ततार सः मत्स्यमूर्तिः अस्मान् रक्षिष्यति २३

संयमांभसि प्रलयोदके।उदीर्णैरुद्धतैर्वातैर्यऊर्मयस्तेषांरवैः करालेभयंकरे अरविंदात्ननाभिकमलात् पतितप्रायः एकः असहायएवतस्माद्भयाद्येननारायणेन ततार सएवनः पारस्तारको
स्तु । २४ किंचवयंभगवतैवसृष्टाः पालिताश्चबहुशः अतस्तमेवशरणंव्रजामेत्याहुः । यएकइतित्रिभिः येनानुगृहीताः संतोविश्वंसृजाम । ननु यूयमेवस्रष्टारः नान्योयुष्माकमनुग्राहको
स्ति । तस्यादर्शनात्तत्राहुः अस्मत्तःपुरःपूर्वमेवातर्यामितयासमीहमानस्यापियस्यलिंगंरूपंनपश्यामः तत्रहेतुः पृथक्पृथगीशाइत्यभिमानिनः २५ देवादिषुउपेंद्रपरशुराममत्स्यरामा
दितनुभिः कृतावतारः सन् नोऽस्मान्आत्मसात्कृत्वापातिच २६ आत्मभूतंदैवतं । कुतः । विश्वंविश्वात्मकं । तथापिविकारंवारयंति । अन्यं । विश्वात्मत्वेहेतुः । परंकारणं । ननु
प्रधानंपुरुषश्चविश्वस्यकारणंतत्राहुःप्रधानंपुरुषमिमितितदात्मकोपिसएवेत्यर्थः । सएवस्वानांनःशंविधास्यति । २७ प्रतीच्यांदिशिहृदिप्रथममाविरभूत्पुनश्चतंपुरोदृष्ट्वाईक्षणाह्लादेनविव
शाअवनौदंडवत्पतिताः संतः शनैरुत्थायतुष्टुवुरित्यन्वयः । २८ कथंभूतं । श्रीवत्सकौस्तुभौविनाआत्मतुल्यैः श्रीवत्सकौस्तुभमात्रव्यतिरिक्तैः शंखचक्रादिभिःकृत्वा स्वसमानैः षो
डशभिःसुनंदादिभिःपरितःसेवितं।विकासितशरदंबुरुहवदीक्षणेयस्यतं २९ ३० यज्ञोवीर्यंस्वर्गादिफलजननायसामर्थ्यंयस्यतस्मैनमःत्रयसेउततत्फलपरिच्छेदककालात्मनेपि।तद्विघातके
युदेत्येषुअस्तंप्रक्षिप्तंचक्रंयेनएवंभूतैः प्रभावैः सुपुरुहूतयेशोभनबहुनाम्ने ३१ ननु मद्गुणातीतंरूपं विहायगुणोपाधिकं यज्ञवीर्यत्वादि किमितिवर्ण्यतेतत्राहुः । यत्तइति । यत्तवगुणत्रयस्ये
शितुर्नियंतुस्त्रिगुणात्मकानां तिसृणांगतीनां परमंपदं निर्गुणस्वरूपम् तद्विसर्गस्यअर्वाचीनइदानींतनः हेधातर्वेदितुंनार्हति अतः केवलंतस्मैतेनमोस्तु ३२

पुरास्वयंभूरपिसंयमांभस्युदीर्णवातोर्मिरवैःकराले ॥ एकोरविंदात्पतितस्ततारतस्माद्भयाद्येनसनोस्तुपारः २४ यएकईशोनिजमाययानःससर्जयेनानुसृ
जामविश्वम् ॥वयंनयस्यापिपुरःसमीहतःपश्यामलिंगंपृथगीशमानिनः२५योनःसपत्नैर्भृशमर्द्यमानान्देवर्षितिर्यङ्नृपुनित्यएव॥कृतावतारस्तनुभिःस्वमा
ययाकृत्वात्मसात्पातियुगेयुगेच२६तमेवदेवंवयमात्मदैवतंपरंप्रधानंपुरुषंविश्वमन्यम् ॥ व्रजामसर्वेशरणंशरण्यंस्वानांसनोधास्यतिशंमहात्मा२७॥श्रीशुक
उवाच ॥ ॥ इतितेषांमहाराजसुराणामुपतिष्ठताम् ॥ प्रतीच्यांदिश्यभूदाविः शंखचक्रगदाधरः २८ आत्मतुल्यैःषोडशभिर्विनाश्रीवत्सकौस्तुभैः ॥
पर्युपासितमुन्निद्रशरदंबुरुहेक्षणम् २९ दृष्ट्वातमवनौसर्वईक्षणाह्लादविक्लवाः ॥ दंडवत्पतिताराजन्शनैरुत्थायतुष्टुवुः ३० ॥ देवाऊचुः ॥ नमस्तेयज्ञवीर्या
यवयसेउततेनमः ॥ नमस्तेह्यस्तचक्रायनमःसुपुरुहूतये ३१ यत्तेगतीनांतिसृणामीशितुःपरमंपदम् ॥ नार्वाचीनोविसर्गस्यधातर्वेदितुमर्हति ३२

पुराब्रह्मापिप्रलयोदकेनाभिकमलात्पतितः सन् येन ततार सः ईश्वरः नः तारकोस्तु २४ किंच यः ईशः स्वमायया नः ससर्ज २५ तान् नः शत्रुभिः अर्द्यमानान् दृ
ष्ट्वा देवादिषुकृतावतारः सन् पाति २६ तंआत्मदैवंशरणं व्रजेम सः ईश्वरः नः शंविधास्यति २७ ॥ ॥ श्रीशुकउवाच ॥ ॥ इतितेषांउपतिष्ठतांसतांप्रतीच्यांदिशि
शंखचक्रगदाधरः हरिः आविरभूत् २८ श्रीवत्सकौस्तुभौविनास्वतुल्यैः षोडशभिः सुनंदादिभिःपरिसेवितंतंदृष्ट्वादंडवत्पतिताःसंतःशनैःउत्थायतुष्टुवुः २९ ३० ॥ देवा
ऊचुः ॥ यज्ञवीर्यायशोभनबहुनाम्नेतेनमः ३१ हेधातः तवनिर्गुणस्वरूपंअर्वाचीनः कः वेदितुं अर्हति अतः केवलं नमोस्तु ३२

मिताक्षराणिपद्यानिनमीयंतेहरेर्गुणाः । इतिपद्यैरतुष्यंतः सद्योगद्येनतुष्टुवुः ॥ १ ॥ भक्त्युद्रेकेणबहुधासंबोधयंतोदुर्ज्ञेयत्वंप्रपंचयंतिभगवन्नित्यादिना । परमंमंगलंश्रेष्ठंयस्मिन् । आत्मयोगेनअष्टांगेन यः समाधिश्चित्तैकाग्र्यंतेनपरिभावितः सुशीलितः परिस्फुटः यः पारमहंस्यधर्मोभगवद्भजनंतेनउद्घाटितंतमोरूपं कपाटंयस्मिन्तस्मिन् द्वारभूतेचित्तेअपावृतेप्रकटे आत्मलोके प्रत्यग्रूपे स्वयमेवोपलब्धमभिव्यक्तंयन्निजसुखंतदनुभवरूपोभवान् ३३ । ननुकेवलानुभवरूपत्वे ममसृष्ट्यादिकर्तृत्वंकथंतत्राहुः । दुरवेति । दुरवबोधइवतवायं सृष्ट्यादिलक्षणः विहारयोगः क्रीडायोगः । यद्यस्मात् अशरणोनिराश्रयःअनवेक्षितोऽस्माकं समवायोमेलनंसाहाय्यंयेन सः ( तथाभूतः त्वं सगुणमिदंविश्वं आत्मनास्वयमेवसृजसिसंहरसि ) ३४ दुर्ज्ञेयत्वांतरमाहुः । अथेति । यथेहदेवदत्तोगृहादिनिर्मायतत्रस्वकृतशुभाशुभयोःफलमुपादत्तेएवंभवान् ब्रह्मस्वरूपोजीवरूपेणगुणविसर्गेपतितः सन्नुपाददाति । यद्वा समंजसंअप्रच्युतं दर्शनंचिच्छक्तिर्यस्य (उपशमोरागद्वेषाभावस्तच्छीलः ) सभवानुदास्तेउदासीनः साक्षितयावर्ततइति ( नविदामः ) ३५ तदेवं विरोधेनदुर्ज्ञेयत्वमुक्त्वातत्परिहारेणज्ञानप्रकारमाहुः नहीति । विरुध्यतइतिविरोधउभयंनविरुद्धमित्यर्थः । नह्यन्वदृष्टांतेन त्वयिविकल्पोयुज्यते । अतर्क्यैश्वर्यत्वादित्याहुः । भगवतीति । अपरिमितागुणगणायस्य तस्मिन्नीश्वरेस्वतंत्रे अनवगाह्यमतर्क्यं महात्म्यं यस्यतस्मिन् । विकल्पएवंवाएवंवेति वितर्कः किमत्रयुक्तमिति विचारइत्थमेवेति । तत्रप्रमाणाभासास्तदनुग्राहकाः कुतर्काश्च अर्वाचीनावस्तुस्वरूपासंस्पर्शिनोयेविकल्पादयस्ते येषुशास्त्रेषुतैः कलिलंव्याकुलंअंतःकरणमाश्रयोयस्यदुरवग्रहस्यदुराग्रहस्य तेनवादिनांविवादस्यानवसरेअगोचरे । ननुश्रद्धामात्रमेतत् युक्तिरुच्यतांतत्राहुः । उपरतोमायामयः संसारो यस्मिन् तस्मिन् केवलेप्यात्ममायां मध्येनिधायकोन्वर्थः कर्तृत्वादिर्नभवति । यदिवस्तुतः कर्तृत्वादिभवेत्तर्हिविरोधः स्यात् । ननुतदस्तीत्याहुः स्वरूपद्वयाभावादिति । ( वस्तुतोद्वैताभावान्नविरोधइत्यर्थः ) ३६

ॐ नमस्तेस्तुभगवन्नारायणवासुदेवादिपुरुषमहापुरुषमहानुभावपरममंगलपरमकल्याणपरमकारुणिककेवलजगदाधारलोकैकनाथसर्वेश्वरलक्ष्मीनाथपरमहंसपरिव्राजकैःपरमेणात्मयोगसमाधिनापरिभावितपरिस्फुटपारमहंस्यधर्मेणोद्घाटिततमःकपाटद्वारेचित्तेऽपावृतआत्मलोकेस्वयमुपलब्धनिजसुखानुभवोभवान् ३३ दुरवबोधइवतवायंविहारयोगोयदशरणोऽशरीरइदमनवेक्षितास्मत्समवायआत्मनैवाविक्रियमाणेनसगुणमगुणःसृजसिपासिसंहरसि ३४ अथतत्रभवान्किंदेवदत्तवदिहगुणविसर्गपतितःपारतंत्र्येणस्वकृतकुशलाकुशलफलमुपाददाति आहोस्विदात्मारामउपशमशीलःसमंजसदर्शनउदास्तइतिहवावनविदामः ३५ नहिविरोधउभयंभगवत्यपरिमितगुणितगुणगणईश्वरेअनवगाह्यमाहात्म्येयअर्वाचीनविकल्पवितर्कविचारप्रमाणाभासकुतर्कशास्त्रकलिलांतःकरणाश्रयदुरवग्रहवादिनांविवादानवसरेउपरतसमस्तमायामयेकेवलएवात्ममायामंतर्धायकोनुअर्थोदुर्घटइवभवतिस्वरूपद्वयाभावात् ३६

हेभगवन्नारायणपरमकारुणिकसर्वेश्वरलक्ष्मीनाथतेनमोस्तु ३३ हेभगवन्तवायंक्रीडायोगःदुर्ज्ञेयःयतः त्वंनिर्गुणोपिविश्वंमाययासृजसिपासिहरसि ३४ अथभवान्देवदत्तवत् पारतंत्र्येणशुभाशुभयोः फलंउपादत्ते आहोस्वित्आत्मारामः सन्उदासीनः साक्षितयावर्ततेइतिवयनविद्मः ३५ हेभगवन्एतदुभयंत्वयिनविरुद्धम् भगवति अनंतगुणेत्वयि कोनु कर्तृत्वादिरर्थोन संभवति नकोपि ३६

अनुग्रहनिग्रहादिकंतुनतन्मतिभेदेनत्वन्माययात्वयिस्फुरतीत्याहुः । समाविषमाचमतिर्येषांतेषांमतमभिप्रायं । सर्पादिविषयाधीर्येषांतेषां यथारज्जुखंडस्तथा तथाभाति यद्वा तमेवावि रोधंपुरुषमतिभेदेनदर्शयति।समविषमेति। ३७तदेवंविरोधंपरिहृत्यनिश्चितंपरमार्थमाहुः।सएवहिनानारूपेणप्रतीतः । वस्तुस्वरूपः।सद्रूपः । सर्वेषांगुणानांविषयाणांआभासैःप्रकाशैरुपल क्षितः ननुतैर्जीवएवोपलभ्यते । न । सर्वप्रत्यगात्मत्वात्सर्वजीवांतर्यामित्वात्।जडतादात्म्याध्यासेनजीवस्यापिजडप्रायत्वात्त्वतेनविनाप्रकाशइतिभावः।पर्यवशेषितः"नेतिनेति"इत्या दिश्रुतिभिः ३८ अतस्त्वद्भक्तिरेवपरमपुरुषार्थइत्याहुः अथहेतिइत्यादिनापर्यावर्तइत्यंतेन । यस्मादेवंभूतस्त्वंपरमेश्वरः अथहवाव अतएवहिहेमधुमथन परमभागवताएतेत्वत्पदां भोजानुसेवांकथंमुहुर्मुहुःविसृजंतीत्यन्वयः।हियस्मात्स्वार्थेपुरुषार्थेकुशलाःनिपुणाअतआत्मात्वमेवप्रियःसुहृच्चयेषांतेसाधवोरागादिशून्याःतत्रहेतुःतवमहिमैवामृतरससमुद्रःतस्यविप्रुषाबिंदु मात्रेणसकृदवलीढयाआस्वादितयास्वमनसिनिष्यंदमानम्अतिशयेनस्रवत्यन्निरंतरंसुखंतेनाविस्मारिताःदृष्टश्रुतविषयाःसुखलेशाभासायेषांते।अतएवभगवतित्वयिनितरांनिरंतरम् नि र्वृतंमनोयेषांतेयत्रयस्यामनुसेवायांसत्याम् । ३९ प्रस्तुतंविज्ञापयंति त्रिभुवनेत्यादिनायावत्समाप्ति । त्रिभुवनमात्मास्वरूपंभवनंचयस्य । त्रिभुवनस्यात्माभवनंचेतिवा । त्रयोविक्र मायस्य । त्रीन्लोकान्नयतीतितथात्रयाणांलोकानांमनोहरोऽनुभावोयस्यएवंचतुर्धासंबोध्याहुः तेषामनुपक्रमसमयउद्यमकालोनभवतीतिमत्वाहेदंडधरपूर्वयथादंडंधृतवान सिएवमेनंत्वाष्ट्रमपिजहि । ( मृगोवराहः । मिश्रितोनरसिंहः जलचरामत्स्यकूर्मा । इत्याद्याकृतिभिः ) । यदिमन्यसे हंतुंयदीच्छसि ४०

समविषममतीनांमतमनुसरसियथारज्जुखंडःसर्पादिधियाम् ३७ सएवहिपुनःसर्ववस्तुनिवस्तुस्वरूपः सर्वेश्वरःसकलजगत्कारणभूतः सर्वप्रत्यगात्मत्वा त्सर्वगुणाभासोपलक्षितएकएवपर्यवशेषितः ३८ अथहवावतवमहिमामृतरससमुद्रविप्रुषासकृदवलीढयास्वमनसिनिष्यंदमानानवरतसुखेनविस्मारितदृ ष्टश्रुतविषयसुखलेशाभासाः परमभागवताएकांतिनोभगवतिसर्वभूतप्रियसुहृदिसर्वात्मनिनितरांनिरंतरनिर्वृतमनसः कथमुहवाएतेमधुमथनपुनःस्वार्थकु शलाह्यात्मप्रियसुहृदः साधवस्त्वच्चरणांबुजानुसेवांविसृजंतिनयत्रपुनरयंसंसारपर्यावर्तः ३९ त्रिभुवनात्मभवनत्रिविक्रमत्रिनयनत्रिलोकमनोहरानुभाव तवैवविभूतयो दितिजदनुजादयश्चापितेषामनुपक्रमसमयोयमितिस्वात्ममाययासुरनरमृगमिश्रितजलचराकृतिभिर्यथापराधंदंडंदंडधरदधर्थएवमेनमपिभ गवन्जहित्वाष्ट्रमुतयदिमन्यसे ४०

हेहरे यः त्वंसमविषममतीनां अनुसरसि सएवसर्वेश्वरः त्वंपर्यवशेषितोसि ३७ ३८ हेमधुमथनपरमभागवताएतेत्वयिनिर्वृतमनसः संतःत्वत्पादांभोजानुसेवांकथंविसृजं ति ३९ किंच हेत्रिविक्रम दितिजदनुजादयः तवैवविभूतयोपि तासांअयं उद्यमकालो नभवति इतिमत्वा त्वंदंडंदधर्थ एवमेवत्वाष्ट्रंजहि यदिमन्यसे ४०

(अस्माकमिति ।) प्रथमंतावत्त्वदीयानामस्माकं अंतस्तापंशमयितुमर्हसि । तावकानामित्यत्रहेतुः । तत ततामह हेपितः हेपितामह । तवचरणनलिनयुगलध्यानेनैवानुबद्धोहृदयेनिगडः शृंखलायेषां । स्वलिंगविवरणेन निजमूर्तिप्रकटनेनस्वीकृतानां । केन । अनुकंपयानुरंजितंसानुरागंयत्तदृजुविशदंरुचिरंच शिशिरंचयत्स्मितंतत्सहितेनावलोकेन । तथानुकंपयैव विगलितोमधुरोमुखरसःप्रियवाक्सैवामृतकलातयाच ४१ किंचास्मदभिप्रायस्त्वया ज्ञायतएवकिमत्रास्माभिर्विज्ञापनीयमित्याहुः (अथेति)अथहेभगवन्नतवास्माभिरिहकियान्वार्थविशेषोविज्ञापनीयःस्यादित्यन्वयः । यथाहिरण्यरेतसोग्नेस्तदंशभूतैर्विस्फुलिंगादिभिः प्रकाशोनक्रियते ।तथातवास्माभिः कार्यार्थप्रकाशनंनकार्यमित्यर्थः अत्रहेतुगर्भाणिविशेषणानि अखिलजगतामुत्पत्त्यादिषु निमित्तायमानया दिव्यमायया विनोदोयस्य । अतएवसर्वजीवनिकायानामंतर्हृदयेषुब्रह्मस्वरूपेणप्रत्यगात्मांतर्यामिरूपेणचबहिरपिप्रधानरूपेणदेशकालदेहावस्थानविशेषाननुल्लंघ्यानुभवतः । कथं । तेषांउपादानतया निमित्तरूपतयाउपलंभकतयाचउपादानस्योपलंभकतयेतिवा अतएवसर्वेषां प्रत्ययानांबुद्ध्यादीनामपिसाक्षिणः । साक्षित्वेहेतुः आकाशवदलिप्तंशरीरंस्वरूपंयस्य । अलिप्तत्वेहेतुद्वयं । साक्षात्परब्रह्मणोनिरुपाधेः परमात्मनः शुद्धसत्त्वमूर्तेश्च ४२ अतइति । अतएवसर्वज्ञत्वादेववयंयत्कामेनयस्यकार्यस्यकामेनोपसादिताः प्रापिताः तदस्माकं कार्यंस्वयमेवोपकल्पय संपादयेति चरणमेवशतपलाशंकमलंतस्यच्छायांविविधैर्वृजिनैः यः संसारपरिश्रमः तस्योपशमकरीं उपसृतानांप्राप्तानां ४३ पूर्वंभक्तेरुत्कर्षोक्तेस्तत्कामशंकामाभूदिति स्वकामंकथयंति । अथोअनंतरमेव ४४ शीघ्रंतद्वधायपुनः प्रणमंति हंसायेति । हंसायशुद्धाय हरयेआर्तिहरायतेनमः । शुद्धत्वेहेतवः । दहानिलयायहृदयाकाशनिकेतायनिरीक्षकायबुद्ध्यादिसाक्षिणे । कृष्णायसदानंदरूपाय "कृषिर्भूवाचकः शब्दोणश्चनिर्वृतिवाचकः । तयोरैक्यंपरंब्रह्मकृष्णइत्यभिधीयते" इतिनिरुक्तेः । आर्तिहरत्वेहेतवः मृष्टंरुचिकरंयशोयस्य । निरुपक्रमायआदिशून्याय । साद्भिः संगृह्यतइतितथातस्मै । भवपांथोभवरूपेपथिवर्तमानः तस्यजनस्यनिजाश्रमाप्तौस्वशरणप्राप्तौसत्याम् संसारस्यातिपरीष्टासर्वतः पूजिता उत्तमागतिः फलंयस्तस्मै ४५

अस्माकंतावकानांतवनतानांततततामहतवचरणनलिनयुगलध्यानानुबद्धहृदयनिगडानांस्वलिंगविवरणेनात्मसात्कृतानामनुकंपानुरंजितविशदरुचिरशिशिरस्मितावलोकेनविगलितमधुरमुखरसामृतकलयाचांतस्तापमनघार्हसिशमयितुम् ४१ अथभगवंस्तवास्माभिरखिलजगदुत्पत्तिस्थितिलयनिमित्तायमानदिव्यमायाविनोदस्यसकलजीवनिकायानामंतर्हृदयेषुबहिरपिचब्रह्मप्रत्यगात्मस्वरूपेणप्रधानरूपेणचयथादेशकालदेहावस्थानविशेषंतदुपादानोपलंभकतयाऽनुभवतः सर्वप्रत्ययसाक्षिणआकाशशरीरस्यसाक्षात्परब्रह्मणःपरमात्मनःकियानिहवाअर्थविशेषोविज्ञापनीयःस्याद्विस्फुलिंगादिभिरिवहिरण्यरेतसः ४२ अतएवस्वयंतदुपकल्पयास्माकंभगवतःपरमगुरोस्तवचरणशतपलाशच्छायांविविधवृजिनसंसारपरिश्रमोपशमनीमुपसृतानांवयंयत्कामेनोपसादिताः ४३ अथोईशजहित्वाष्ट्रंग्रसंतंभुवनत्रयम् ॥ ग्रस्तानियेननःकृष्णतेजांस्यस्त्रायुधानिच ४४ हंसायदह्रनिलयायनिरीक्षकायकृष्णायमृष्टयशसेनिरुपक्रमाय ॥ सत्संग्रहायभवपांथनिजाश्रमाप्तावंतेपरीष्टगतयेहरयेनमस्ते ४५

प्रथमंतावत् त्वदीयानांतवनतानां अस्माकंअंतस्तापंशमयितुं अर्हसि ४१ हेभगवन् सर्वसाक्षिणः साक्षात्परब्रह्मणः परमात्मनः तव अस्माभिः किंविज्ञापनीयं अस्ति अस्मदभिप्रायस्तुत्वयाज्ञातएव ४२ अतः भगवतः तव चरणकमलच्छायांयत्कामेनप्राप्ताः वयं तत्कार्यंस्वयमेवसंपादय ४३ अस्माकं तेजोस्त्रायुधानिग्रस्तानितंत्वाष्ट्रंजहि ४४ हंसायबुद्ध्यादिसाक्षिणेकृष्णायआदिशून्यायहरये ते नमः ४५ ॥ ॥२१॥

अभिनंदितः संतोषितः ४६ मदीयमुपस्थानंस्तोत्रं तत्साहितयाविद्ययाज्ञानेन आत्मनऐश्वर्यमसंभारित्वंतस्यस्मृतिर्यया । नहिविरोधउभयमित्यादिनाकर्तृत्वभोक्तृत्वादेर्मायिकत्वोक्तेः ।
भक्तिश्चयथाभवति ४७ अथहवावरयादिनामक्तेः मर्योत्कर्षोक्तिर्मक्तमभिनंदति । किमिति ४८ यदुक्तंदेवैःस्वयंतदुपकल्पयास्माकमित्यादि । तत्संपादनंकृपालोर्ममानुचितमित्याशये
नाह । नवेदेतिद्वाभ्यां । गुणेषुविषयेषुतत्त्वदर्शीम (कृपणोऽज्ञः) आत्मनः श्रेयोनवेद । तस्यनान् विषयान् । सोपितथाविधोऽज्ञएव ४९ कर्मनत्रकिपत्राति मार्ग नत्रकिंहि । अपथ्यं
यथानरातिनददाति भिषक्तमःसद्वैद्यः ५० एवंतत्त्वकथनेनानौचित्यंपरिहृत्यतदभिप्रायमनुसरन्नाह । मघवन्निति । विद्ययाव्रतेस्तपसाचसारंदृढंगात्रंशरीरम् । याचतयाचध्वम् ५१
तत्रतदीयं विद्यातिशयमाह । सवाइतिद्वाभ्यां । एतद्ब्रह्ममिद्धाकथा । "निशम्याथर्वणंदक्षंप्रवर्ग्यब्रह्मविद्ययोः । दध्यंचं समुपागम्यतमूचतुरथाश्विनौ । भगवन्देहिनौविद्यामितिश्रु
त्वासचाब्रवीत् । कर्मण्यवस्थितोद्याहपश्चाद्वक्ष्यामिगच्छतं । तयोर्निर्गतयोरेवशक्रआगत्यतंमुनिं । उवाचभिषजोर्विद्यांमावादीरश्विनोर्मुने । यदिमद्वाक्यमुल्लंघ्यब्रवीषिसहसैवते ।
शिरश्छिद्यांनसंदेहइत्युक्त्वासययौहरिः । इंद्रेगतेतथाभ्येत्यनासत्यावूचतुर्द्विजं । तन्मुखादिंद्रगदितंश्रुत्वातावूचतुःपुनः । आवांतवशिरश्छित्वापूर्वमश्वस्यमस्तकं । संधास्यावस्ततोब्रूहि
तेनविद्यांचनौद्विज । तस्मिन्निंद्रेणसंच्छिन्नेपुनःसंधायमस्तकम् । निजंतेदक्षिणांदत्वागमिष्यावोयथागतं । एतच्छ्रुत्वातथोवाचदध्यङ्ङाथर्वणस्तयोः । प्रवर्ग्यंब्रह्मविद्यांचसत्कृतोऽसत्य
शंकितः" इति । ततश्चायमर्थः सोधिगतोज्ञानी यद्वा दध्यङ् निष्कलं शुद्धं ब्रह्म अधिगतः ज्ञातवान् पाठांतरेतुमितरांकृतंभवतिवनमथेन तंप्रवर्ग्यंचाधिगतः ज्ञातवान् । ततोऽश्विभ्यां
प्रादादित्युत्तरस्यानुषंगः उपदिदेशेत्यर्थः कथंभूतंब्रह्म यद्वैअश्वशिरसाप्रोक्तत्वादश्वशिरोनामप्रसिद्धंतयोरश्विनोरमरत्वं जीवन्मुक्तत्वंव्यधात् । तथाच श्रुतिः "अश्वस्यशीर्ष्णाप्रयदी
मुवाच "इति । (यद्वाअश्विभ्यामितिपंचमी ताभ्यांसकाशात् अश्वशिरोऽश्वस्यमुखमधिगतोविद्यामदात् ।) ५२

श्रीशुकउवाच॥अथैवमीडितोराजन्सादरंत्रिदशैर्हरिः॥स्वमुपस्थानमाकर्ण्यप्राहतानभिनंदितः ४६॥श्रीभगवानुवाच॥प्रीतोऽहंवःसुरश्रेष्ठामदुपस्थानविद्य
या॥आत्मैश्वर्यस्मृतिःपुंसांभक्तिश्चैवययामयि ४७ किंदुरापंमयिप्रीतेतथापिविबुधर्षभाः ॥ मय्येकांतमतिर्नान्यन्मत्तोवांछतितत्त्ववित् ४८ नवेदकृप
णःश्रेयआत्मनोगुणवस्तुदृक् ॥ तस्यतानिच्छतोयच्छेद्यदिसोपितथाविधः ॥ ४९ स्वयंनिःश्रेयसंविद्वान्नवक्त्यज्ञायकर्महि ॥ नरातिरोगिणोऽपथ्यंवां
छतोहिभिषक्तमः ५० मघवन्यातभद्रंवोदध्यंचमृषिसत्तमम् ॥ विद्याव्रततपःसारंगात्रंयाचतमाचिरम् ५१ सवाअधिगतोदध्यङ्ङश्विभ्यांब्रह्मनिष्कलम्॥
यद्वाअश्वशिरोनामतयोरमरतांव्यधात् ५२ ॥

॥ ॥ श्रीशुकउवाच ॥ ॥ एवंदेवैःस्तुतः हरिः तान्उवाच ४६ हेदेवाः मयिप्रीतेसतिदुरापंकिमस्ति ४७ ४८ तथापिमयि एकांतमतिः पुरुषः मत्तोन्यत्
नवांछति ४९ ५० अथापि हे मघवन् वः भद्रमस्तु अथदध्यंचंऋषिंगत्वातस्यशरीरंअयाचत ५१ सः दध्यङ्अश्वशिरोनामप्रसिद्धं ब्रह्मप्रवर्ग्यंच अधि
गतः ततः अश्विभ्यांसः उपदिदेश ५२

मदात्मकंवर्मश्रीनारायणकवचं । आविष्मतइतिपूर्वस्यानुषंगः । तत्रहेतु यद्यस्मात्त्वष्ट्रेप्रादात् । ( किंतत् । ) यत्त्वष्टा विश्वरूपायपुत्रायप्रादात् । कीदृशं । यत्त्वंततो विश्वरूपात्
अघाःधृतवानसि । तदेवंविद्ययासारंगात्रंयाचध्वमित्यर्थः । ५३ ननुमेष्टंदेहंकथंदास्यतितत्राह । युष्मभ्यमंगानिअस्थीनियाचितः सन्दास्यति । यतोधर्मज्ञः । विशेषतोऽश्विभ्यामपि
व्यप्रीत्यादास्यति । अस्थीनीत्यनेनहेयत्वंदर्शितं । तैरस्थिभिर्विश्वकर्मणाविनिर्मितः आयुधश्रेष्ठोवज्रोमविष्यतीतिशेषः । येनमवान् वृत्रशिरोहर्ताहनिष्यति । ममतेजसाउपबृंहितः
( अभिवर्धितः ) सन् । ५४ । तेजश्चअस्त्राणिच आयुधानिचसंपदश्चभूयः प्राप्स्यथ । महाकायस्त्रिभुवनग्रासीसएवास्मान्हन्यादितिशंकाकुलचित्तान्प्रत्याह । मत्परांश्चकेपिनहिंसंति
अतोयुष्माकंभद्रमेवेति ५५ इतिषष्ठस्कंधेटीकायांनवमोऽध्यायः ॥ ९ ॥ ॥ दशमेकेशवादिष्टदध्यङ्ङस्थिजवज्रभृत् । इंद्रोऽयुध्यतवृत्रेणसासुरेणसनिर्जरः ॥ १ ॥ १ २ ( अंतः ) मोदमा
न एवतन्मुखाद्धर्मं श्रोतुकामः प्रत्याचक्षाणइवोवाच । अपीतिद्वाभ्याम् । हेवृंदारकाः अपिकिंसंस्थायांमृत्यौयोभिद्रोहो दुःखं तंनजानीथ ३ आत्मादेहः । वयंजानीमएवकिंतुश्रीवि
ष्णुरस्मन्मुखेनयाचतइतिचेत्तत्राह । याचमानायविष्णवेपिदातुंकउत्सहेत ४ पुण्यश्लोकैरीड्यानिकर्माणियेषाम् ५ याचकोयदिवेदर्हिनयाचेत । दाताईश्वरोदानसमर्थश्चेत्तर्हिसोपिने
तिनाह । अतोयथातवसंकटंवयंस्वार्थपरानजानीमः एवंप्रत्याचक्षाणस्त्वमप्यस्मत्संकटंनजानासीतिभावः ६

दध्यङ्ङाथर्वणस्त्वष्ट्रेवर्माभेद्यंमदात्मकम् ॥ विश्वरूपाययत्प्रादात्त्वष्टायत्त्वमधास्ततः ५३ युष्मभ्यंयाचितोऽश्विभ्यांधर्मज्ञोऽगानिदास्यति ॥ ततस्तैराय
धश्रेष्ठोविश्वकर्मविनिर्मितः ॥ येनवृत्रशिरोहर्तामत्तेजउपबृंहितः ५४ तस्मिन्विनिहतेयूयंतेजोस्त्रायुधसंपदः ॥ भूयःप्राप्स्यथभद्रंवोनहिंसंतिचमत्परान्
५५ ॥ इतिश्रीभागवतेम० षष्ठस्कंधेनवमोध्यायः ॥ ९ ॥ श्रीबादरायणिरुवाच ॥ इंद्रमेवंसमादिश्यभगवान्विश्वभावनः ॥पश्यतामनिमेषाणांतत्रैवांत
र्दधेहरिः १ तथाभियाचितोदेवैर्ऋषिराथर्वणोमहान् ॥ मोदमानउवाचेदंप्रहसन्निवभारत २ अपिवृंदारकायूयंनजानीथशरीरिणाम् ॥ संस्थायांयस्त्वभि
द्रोहोदुःसहश्चेतनापहः ३ जिजीविषूणांजीवानामात्माप्रेष्ठइहेप्सितः ॥ कउत्सहेततंदातुंभिक्षमाणायविष्णवे ४ ॥ ॥ देवाऊचुः ॥ ॥ किंनुतद्दुस्त्य
जंब्रह्मन्पुंसांभूतानुकंपिनाम् ॥ भवद्विधानांमहतांपुण्यश्लोकेड्यकर्मणाम् ५ नूनंस्वार्थपरोलोकोनवेदपरसंकटम् ॥यदिवेदनयाचेतनेतिनाहयदीश्वरः ६

अश्विनोर्जीवन्मुक्तत्वंव्यधातृदध्यङ् श्रीनारायणकवचं ज्ञातवान्सः त्वष्ट्रेप्रादात् त्वष्टाविश्वरूपाय यत् त्वंविश्वरूपात् धृतवानसि ५३ किंच सः दध्यङ् धर्मज्ञःअश्विभ्यां
चितः सन्स्वांगानि युष्मभ्यंदास्यति तदस्थिभिः विश्वकर्मविनिर्मितः आयुधश्रेष्ठोवज्रोभविष्यति ५४ येनवृत्रशिरः हरिष्यसि ततः तेजोस्त्रायुधसंपदःभूयःप्राप्स्यथमत्प
रान्केपिनहिंसंति अतोवः भद्रमेवास्तु ५५ ॥ ॥ इतिषष्ठेनवमः ॥ ९ ॥ श्रीशुकउवाच ॥ एवंइंद्रंसमादिश्यभगवान् अंतर्दधे १ तथादेवैर्याचितः दधीचिःधर्मं श्रोतु
[illegible] उवाच २ हेवृंदारकाः पूर्वशरीरिणांमृत्युदुःखंनजानीथ ३ देहिनांदेहः अतिप्रियः अतः भिक्षमाणायापिविष्णवे ईश्वरंदेहंदातुंकः उत्सहेत ४
॥ देवाऊचुः ॥ [illegible] भूतानुकंपिनांपुण्यश्लोकेड्यकर्मणां [illegible] पुंसां दुस्त्यजंकिंनु ५ ननुस्वार्थपरोलोकः परसंकटंनवेद यदिवेदर्हिनयाचेत ६

[illegible] । एषोहं मांत्यक्ष्यामि [illegible] ७ अध्रुवेणात्मना देहेन हेनाथाः देवाः ( स स्थावरैर्वृक्षादिभिरपिशोच्यः । तद्देश्चपरोपकारित्वात् [illegible]
[illegible] ) । ८ य आत्मास्वं भूतानांशोकेन शोचति हर्षेण हृष्यति तस्य ( भूतदयालक्षणो ) ऽयंधर्मएतावानेवान्यथइत्यर्थः ९ पारक्यैः [illegible]
[illegible] । स्वंवित्तं ज्ञातयःपुत्रादयः विग्रहोदेहस्तैर्नोपकुर्यादितिवत् १० कृतंभ्यवसितं निश्चयोयेन । आत्मानंपरेब्रह्मंसन्नयन्एकीकुर्वन्तनुंजहौ ११ ( [illegible]
[illegible] ) यताक्षादयोयेन तत्त्वं पश्यतीतितथा । ध्वस्ताविनष्टानिर्बंधनानियस्य १२ अर्थेंद्रः अशोभतेत्युत्तरेणान्वयः । मुनेः शुक्तिभिरस्थिभिः निर्मितं । उत्सिक्तऊर्जितः । [illegible]
नेः शक्तिभिरिति वापाठः १३ ( गजेंद्रस्योपरिशुशुभे ) १४ असुरानीकानांयूथपैः पर्यस्तं परिवृतं ( वृत्रंछेत्तुं अभ्यद्रवत् अभिजगामअंतकंहंतुंमृत्युंनयइव ) १५ रणःसंग्रामः प्र
थमेचतुर्युगे तत्र त्रेतायुगस्यमुखेआरंभे १६ ( पितृभिर्वह्निभिश्च । एतैःस्वयाश्रियाच रोचमानं मरुत्पतिं देवराजं शक्रंदृष्ट्वा ) नामृष्यन् नासहंतेत्युत्तरेणान्वयः १७ १८ १९ २०

॥ ऋषिरुवाच ॥ धर्मंवःश्रोतुकामेनयूयंमेप्रत्युदाहृताः ॥ एषवःप्रियमात्मानंत्यजंतंसंत्यजाम्यहम् ७ योऽध्रुवेणात्मनानाथानधर्मंनयशःपुमान् ॥ ईहेत
भूतदययासशोच्यःस्थावरैरपि ८ एतावानव्ययोधर्मःपुण्यश्लोकैरुपासितः ॥ योभूतशोकहर्षाभ्यामात्माशोचतिहृष्यति ९ अहोदैन्यमहोकष्टं
पारक्यैःक्षणभंगुरैः ॥ यन्नोपकुर्यादस्वार्थैर्मर्त्यःस्वज्ञातिविग्रहैः १० ॥ ॥ श्रीशुकउवाच ॥ ॥ एवंकृतव्यवसितोदध्यङ्ङाथर्वणस्तनुम् ॥ परेभगवतिब्रह्म
ण्यात्मानंसन्नयन्जहौ ११ यताक्षासुमनोबुद्धिस्तत्त्वदृग्ध्वस्तबंधनः ॥ आस्थितःपरमंयोगंनदेहंबुबुधेगतम् १२ अथेंद्रोवज्रमुद्यम्यानिर्मितंविश्वकर्मणा ॥
मुनेःशुक्तिभिरुत्सिक्तोभगवत्तेजसान्वितः १३ वृतोदेवगणैःसर्वैर्गजेंद्रोपर्यशोभत ॥ स्तूयमानोमुनिगणैस्त्रैलोक्यंहर्षयन्निव १४ वृत्रमभ्यद्रवच्छेत्तुमसुरानी
कयूथपैः ॥ पर्यस्तमोजसाराजन्क्रुद्धोरुद्रइवांतकम् १५ ततःसुराणामसुरैरणःपरमदारुणः ॥ त्रेतामुखेनर्मदायामभवत्प्रथमेयुगे १६ रुद्रैर्वसुभिरादित्यै
रश्विभ्यांपितृवह्निभिः ॥ मरुद्भिरृभुभिःसाध्यैर्विश्वेदेवैर्मरुत्पतिम् १७ दृष्ट्वावज्रधरंशक्रंरोचमानःस्वयाश्रिया ॥ नामृष्यन्नसुराराजन्मृधेवृत्रपुरःसराः १८ नमु
चिःशंबरोऽनर्वाद्विमूर्धाऋषभोंऽबरः ॥ हयग्रीवःशंकुशिराविप्रचित्तिरयोमुखः १९ पुलोमावृषपर्वाचप्रहेतिर्हेतिरुत्कलः ॥ दैतेयादानवायक्षारक्षांसिचसहस्रशः २०

इत्यादिश्रुत्वादधीचिरुवाच हेदेवाः धर्मंश्रोतुकामेनमयायूयंप्रत्युदाहृताः अथापिमांत्यक्ष्यंतंकायंतंदेहंत्यजामि गृह्यताम् ७ हेदेवाः यः अध्रुवेणदेहेन धर्मंयशश्चभूतदयया
नसंपादयेत् सः सर्वैः शोच्यः ८ ९ १० ॥ [illegible] उवाच ॥ एवमुक्त्वाअथर्वणःपरेब्रह्मणिक्षेत्रज्ञंएकीकुर्वन्तनुंजहौ ११ १२ अथइंद्रःतदस्थिभिः विश्वकर्मणानिर्मितं
वज्रंउद्यम्यदेवैः वृतः गजेंद्रास्थितः मुनिग [illegible] गणो संहर्षयन्निववृत्रंछेत्तुं अभ्यद्रवत् १५ ततः सुराणांदैत्यैः सह रणःत्रेतामुखेनर्मदायां अभवत् १६
रुद्रैः वसुभिः आदित्यैः आश्वि [illegible] न यस्मिन्वृत्रपुरःसराः असुराः नासहंत १७ १८ ततः नमुचिः शंबरः अनर्वा द्विमूर्धा ऋषभः
अंबरः हयग्रीवः शंकुशिरा [illegible] हेतिःउत्कलः १९ २०

भा०प० ( अपिद्रवते योद्धुमभितः १ ... ॰मदयाऽभिमृष्टस्ताडितः ) सप्तधनुःप्रमाणदेशं ११ अथोऽव्यथोवाहोयस्यतस्यैवमायुक्त (सङ्गम) अ०
अमृतस्पंदी अमृतस्रावीयः ... ततोवाहोयस्येंद्रस्य तथाभूतो योद्धुमवतस्थे १२ सवृत्रः हेमृपेंद्र । आहवकाम्यया युद्धेच्छया
यास्थितं भ्रातृहणंविश्वरूपह ... न् १३ यो ब्रह्महा ब्राह्मणं हतवान् । विशेषतश्चगुरुंममच भ्रातरं समवानग्रतः समवस्थितः दिष्टद्विष्टया ॥१०॥
॥२४॥ भद्रं जातं । दिष्टेत्यव्ययमानंदा ... त् ( शिला ) तत्तुल्यंनिर्दयं हृत्हृदयं यस्यतेन त्वया निमित्तभूतेन अद्यअचिरादेव भ्रातुरनृणोऽहंस्यां एतच्च
दिष्टचा १४ ( विश्रभ्यविश्वासंदत्त्वेत्य ... त् ) स्वर्गकामोयाज्ञिकः पशोरिवेतिवा १५ ( स्वकर्मणाहेतुनालज्जादिभिरुत्सृष्टंराक्षसैश्चगर्ह्यंशोच्यं ) तैस्त्याज्य
स्पृष्टवह्निं ( अस्यसंसर्गोमाभूदितिवह्निनाप्य ... दंति वर्तमानसामीप्ये वर्तमानवन्निर्देशः १६ अन्येपियेअज्ञा इहत्वात्वांनृशंसमनु । मह्यमुद्यतास्त्राः संतोयदिप्रहरं
ति तैर्भूतनाथान् भैरवादीन्यक्ष्यामि । कथं ... कृतं यन्ममत्रिशूलं तेननिर्भिन्नोगलोयेषांतैः १७

विलोक्यतंवज्रधरोत्यमर्षितःस्वशत्रवेऽभिद्रवतेमहागदां ॥ चिक्षेपतामापततींसुदुःसहांजग्राहवामेनकरेणलीलया ९ सइंद्रशत्रुःकुपितोभृशंतयामहेंद्रवाहंग
दयोग्रविक्रमः ॥ जघानकुंभस्थलउन्नदन्मृधेतत्कर्मसर्वेसमपूजयन्नृप १० ऐरावतोवृत्रगदाभिमृष्टोविघूर्णितोऽद्रिःकुलिशाहतोयथा ॥ अपासरद्भिन्नमुखःस
हेंद्रोमुंचन्नसृक्सप्तधनुर्भृशार्तः ११ नसन्नवाहायविषण्णचेतसेप्रायुंक्तभूयःसगदांमहात्मा ॥ इंद्रोऽमृतस्पंदिकराभिमर्शवीतव्यथाक्षतवाहोऽवतस्थे १२ सतं
नृपेंद्राहवकाम्ययारिपुंवज्रायुधंभ्रातृहणंविलोक्य ॥ स्मरंश्चतत्कर्मनृशंसमंहःशोकेनमोहेनहसन्जगाद १३ ॥ वृत्रउवाच ॥ दिष्ट्याभवान्मेसमवस्थितो
रिपुर्योब्रह्महागुरुहाभ्रातृहाच ॥ दिष्ट्याऽनृणोद्याहमसत्तमत्वयामच्छूलनिर्भिन्नदृषद्धृदाऽचिरात् १४ योनोऽग्रजस्यात्मविदोद्विजातेर्गुरोरपापस्यचदीक्षित
स्य ॥ विश्रभ्यखड्गेनशिरांस्यवृश्चत्पशोरिवाकरुणःस्वर्गकामः १५ ह्रीश्रीदयाकीर्तिभिरुज्झितंत्वांस्वकर्मणापुरुषादैश्चगर्ह्यम् ॥ कृच्छ्रेणमच्छूलविभिन्न
देहमस्पृष्टवह्निंसमदंतिगृध्राः १६ अन्येनुयेत्वेहनृशंसमज्ञायदुद्यतास्त्राःप्रहरंतिमह्यम् ॥ तैर्भूतनाथान्सगणान्निशातत्रिशूलनिर्भिन्नगलैर्यजामि १७

तद्विलोक्य अमर्षितः इंद्रः स्वशत्रवेगदांचिक्षेप तदावृत्रः प्राप्तांतांगदांवामकरेणगृहीत्वा ९ तयैवऐरावतगंडस्थलेजघान तत्कर्म सर्वेसमपूजयन् १० ऐरावतः वृत्रग
दाभिमृष्टः भिन्नमुखः सन् असृक् वमन् सप्तधनुःप्रमाणंदेशमपासरत् ११ इन्द्रः अमृतस्रावि‍हस्तेनतं अभिमर्श्यगतव्यथः सन् युद्धाय अवतस्थे १२ हेराज ॥२४॥
न्वृत्रः भ्रातृहणंवज्रायुधं इंद्रंदृष्ट्वा उवाच १३ हेइंद्रत्वंब्रह्महागुरुहाभ्रातृहाच अतःअद्यत्वांहत्वाअहं भ्रातृऋणात्मुक्तोभवामि १४ हेइंद्र यःत्वंस्वर्गकामः सन्
अग्रजस्यगुरोः नः अग्रजस्यशिरांसिपशोरिवखड्गेन अवृश्चः १५ अतः ह्रीश्रीयादिभिः उज्झितं मच्छूलविभिन्नदेहंअदग्धदेहंत्वांगृध्राः समदंति १६ अन्येयेउद्यतास्त्रा
सन्तः मह्यंप्रहरंति तान्त्रिशूलेन हत्वातैर्भैरवादीन् यजामि १७

अथोऽमवारेहरेऽमोहंद्र यदिभवानेवममशिरो हृतांहरिष्यति तत्रत्वयासति अनृणो विमुक्तकर्मबंधः सन्भूतेभ्यो बलिंदेहेनविधाय मनस्विनांपादरजः प्रपत्स्येधाराणाम पदमाप्स्या
मीत्यर्थः १८ जीवितादपिमृत्युरेवममाभिमतइत्याशयेनाह । सुरेशेति । नहिमोषि नाहिक्षिपसि । मदेव विफलंमाभविष्यतीतिसंशयंमाकार्षीः कृपणादर्थः प्रयोजनंयस्याः सायाच्ञातया
निष्फलातथानस्यात् १९ अमोघत्वेहेतुंवदन् तंप्रोत्साहयतिनान्वितति । ( हरेर्विष्णोश्चतेजसा ) तेजितस्तीक्ष्णीकृतः शत्रुंमांजहि विष्णुनायंत्रितः प्रेरितः । ( यतोयत्रहरिस्तत्रस्तत
व । ) २० हननेन ममपीडास्यादित्यपिमासंशयिष्ठाइत्याहअहमिति । संकर्षणोमत्पातिर्यथासमाधियोगमाहतथातदीयचरणारविंदेमनःसमाधायमुनेर्योगिनोगतिंयामिष्यास्यामि । त्व
द्वज्रस्यरंहसालुलितश्छिन्नोग्राम्यपाशोविषयभोगलक्षणोयस्य अपविद्धलोकःत्यक्तदेहः २१ तर्हिभगवान्संकर्षणः स्वभृत्यायमह्यमेवस्वर्गादिसंपदो दास्यतीत्यपिमासंशयिष्ठाइत्याहपुंसामि
ति । स्वर्गेभूमौ रसातलेचयाः संपदस्ताः किलनिश्चितंनरातिनददाति अत्रहेतुः यत्याभ्यः द्वेषादयोभवंति । ( उद्रेकागर्वः । आधिश्चिंता । मदउच्छृंखलता । व्यसनमासक्तिः
संप्रयासोरक्षणादौ ) २२ तर्हिस्वभक्तस्यकिंविधत्तेतत्राह । त्रैवर्गिकोधर्मार्थकामविषयोयआयासस्तस्यविघातंविधत्ते । ततआयासोपरमादनुमेयः।नत्वैश्वर्यादिना । ( यः प्रसादोऽकिंच
नेभ्योऽन्यैर्दुर्लभः । ) अतः सम्यग्भगवत्प्रसादाभावात्तवसंपदोमाभविष्यंतीतिभावः २३ एवमभिप्रायस्वाभिप्रायंनिवेद्यमममर्वतंप्रार्थयते अहमिति तवपादावेव एकंमूलमाश्रयोयेषां तेषांदा
सानामनुदासः भूयोभवितास्मिभवेयं । असुपतेःप्राणनाथस्यतवगुणान्ममममनः स्मरतु । वाक्पिवानेवकीर्तयतु कायस्तवैव कर्मकरोतु २४ ननुकिंदास्येनतुभ्यंमहाफलानिदास्यामितत्रा
ह । ( ननाकेति ) । नाकपृष्ठंध्रुवपदं । ब्रह्मलोकादिकंच । हेसमंजस निखिलसौभाग्यनिधे त्वात्वांविरहय्यपृथक्कृत्यनकांक्षे नेच्छामि । ( किंतुत्वामेवकांक्षे । ) २५

अथोहरेमेकुलिशेनवीरहर्ताप्रमथ्यैवशिरोयदीह ॥ तत्रानृणोभूतबलिंविधायमनस्विनांपादरजःप्रपत्स्ये १८ सुरेशकस्मान्नहिनोषिवज्रंपुरःस्थितेवैरिणिमय्यमोघम् ॥ मासंशयिष्ठानगदेववज्रंस्यान्निष्फलंकृपणार्थेवयाच्ञा। १९ नन्वेषवज्रस्तवशक्रतेजसाहरेर्दधीचेस्तपसाचतेजितः ॥ तेनैवशत्रुंजहिविष्णुयंत्रितोयतोहरिर्विजयःश्रीर्गुणास्ततः २० अहंसमाधायमनोयथाहसंकर्षणस्तच्चरणारविंदे ॥ त्वद्वज्ररंहोलुलितग्राम्यपाशोगतिंमुनेर्याम्यपविद्धलोकः २१ पुंसांकिलैकांतधियांस्वकानांयाःसंपदोदिविभूमौरसायाम् ॥ नरातियद्द्वेषउद्वेगआधिर्मदःकलिर्व्यसनंसंप्रयासः २२ त्रैवर्गिकायासविघातमस्मत्पतिर्विधत्तेपुरुषस्यशक्र ॥ ततोनुमेयोभगवत्प्रसादोयोदुर्लभोऽकिंचनगोचरोन्यैः २३ अहंहरेतवपादैकमूलदासानुदासोभवितास्मिभूयः ॥ मनःस्मरेतासुपतेर्गुणांस्तेगृणीतवाक्कर्मकरोतुकायः २४ नाकि… ध्रुवपदंनपारमेष्ठ्यंनसार्वभौमंनरसाधिपत्यम् ॥ नयोगसिद्धीरपुनर्भवंवासमंजसत्वाविरहय्यकांक्षे २५

अथहेइंद्रत्वंवज्रेण मेशिरःयदिहरिष्यसि, … विधायस्वर्गंयामि १८ हेसुरेश मयिवज्रंकुतः नक्षिपसिगदेववज्रंनिष्फलंनस्यात् १९ अयंतेवज्रः हस्ते
जसादधीचेस्तपसाचतीक्ष्णीकृतः अ… तः यत्रहरिस्तत्राविजयः भवति २० अहंसंकर्षणचरणारविंदेमनःनिधायत्वद्वज्रहतःसन् योगिनांगतिं या
स्यामि २१ भगवान् दत्ताचित्ता… नि यतः याभ्यःद्वेषादयोभवंति २२ अतः अस्मत्पतिःपुरुषस्यत्रैवर्गिकायासनाशंकरोति ततः आया
सोपरमाद्भगवत्प्रसादोनुमेयः २… …म्पःभूयःभविष्यामि मेमनः तवगुणान्स्मरतु वाक् कीर्तयतु कायः तवकर्मकरोतु २४ हे
ईश्वरत्वां पृथक्कृत्यनाकपृष्ठा…

[illegible] लोकाइतिसपालैः । यस्यवशेस्थिताः स्वयंविवशाः [illegible] द्विजाः [illegible] । कल्पतीतिकालो भगवान् इहजयादौकारणं ८ ओजआदि
[illegible] अविज्ञायजडंसंतं आत्मानंदेहंहेतुंमन्यते । ( ओजः [illegible] सहः मनोबलं ) ९ १० ननुस्वारंभकधर्मपुरुषादितंत्राणीतिचुक्तंतत्राह । पुरुषइति [illegible]
तत्त्वं । आत्माऽहंकारः ( अस्यविश्वस्यसृष्ट्यादौनशक्नुवंति ) ११ ननुस्वकर्मद्वाराजीव एवसृष्ट्यादिहेतुरितिमीमांसकामन्यंतेतत्राह । ( अविद्वानिति । ) एवमविद्वान् [illegible]
[illegible] । आत्माऽहंकारः ईश्वरं स्वतंत्रंमन्यते ननु पित्रादयः स्रष्टारोदृश्यंते व्याघ्रादयस्तु हंतारस्तत्राह । भूतैरिति । स्वयंईश्वरः १२ ननुत्वयापराजितस्यममजयादिशंकैवनास्ति किमितिमांबलात्युद्धेन
तेयसितत्राह आयुरिति । तत्काले जयादिकाले । विपर्ययाअकीर्त्यादयः १३ यस्मादेवंसर्वमीश्वराधीनंतस्मात्समःस्यात्हर्षविषादहीनोभवेत् १४ । समदृष्टावुपायमाह । सत्त्वमिति
हर्षादिभिर्नबध्यते १५ हर्षविषादनिवृत्त्यैतवाहमेवगुरुरित्याह । पश्येति । वृक्णमायुधंभुजश्चयस्य । १६ । अनियतत्वंद्यूतरूपकेणोपसंहरति । ( प्राणेति ) प्राणएवग्लहः पणोयस्मि
न् । इषवएवअक्षाःपाशकायत्र । वाहनान्येवइतस्ततश्चाल्यमानानि आसनानिफलकायस्मिन् । १७ । गतालीकंनिष्कपटं ( वृत्रस्यवचः अपूजयत्सभाजयामास ) १८

लोकाःसपालायस्येमेश्वसंतिविवशावशे ॥ द्विजाइवशिचाबद्धाःसकालइहकारणम् ८ ओजःसहोबलंप्राणममृतंमृत्युमेवच ॥ तमज्ञायजनोहेतुमात्मानंम
न्यतेजडम् ९ यथादारुमयीनारीयथायंत्रमयीमृगः ॥ एवंभूतानिमघवन्नीशतंत्राणिविद्धिभोः १० पुरुषःप्रकृतिर्व्यक्तमात्माभूतेंद्रियाशयाः ॥ शक्नुवंत्य
स्यसर्गादौनविनायदनुग्रहात् ११ अविद्वानेवमात्मानंमन्यतेऽनीशमीश्वरम् ॥ भूतैःसृजतिभूतानिग्रसतेतानितैःस्वयम् १२ आयुःश्रीःकीर्तिरैश्वर्यमा
शिषःपुरुषस्ययाः ॥ भवंत्येवहितत्कालेयथानिच्छोर्विपर्ययाः १३ तस्मादकीर्तियशसोर्जयापजययोरपि ॥ समःस्यात्सुखदुःखाभ्यांमृत्युजीवितयोस्त
था १४ सत्त्वंरजस्तमइतिप्रकृतेर्नात्मनोगुणाः ॥ तत्रसाक्षिणमात्मानंयोवेदसनबध्यते १५ पश्यमांनिर्जितंशक्रवृक्णायुधभुजंमृधे ॥ घटमानंयथाशक्ति
तवप्राणजिहीर्षया १६ प्राणग्लहोयंसमरइष्वक्षोवाहनासनः ॥ तत्रनज्ञायतेऽमुष्यजयोऽमुष्यपराजयः १७ ॥ श्रीशुकउवाच ॥ इंद्रोवृत्रवचःश्रुत्वागतालीक
मपूजयत् ॥ गृहीतवज्रःप्रहसंस्तमाहगतवि [illegible] १८

सःकालःजयादौकारणंतंकालंअज्ञायजना [illegible]
स्यविश्वस्यसर्गादौनशक्नुवंति ११
र्त्यादयोभवंति १३ तस्मात् ज
अयंप्राणपणःसमरःअत्रअमुष्य

९ हेमघवन् यथादारुमयीस्त्री एवंभूतानिईशतंत्राणिविद्धि १० किंच पुरुषप्रकृत्यादयः यदनुग्रहाद्विना अ
हंस्वतंत्रं मन्यते १२ किंच ईश्वरः भूतैःभूतानिसृजतेतैर्ग्रसतेचकिंच जयादिकाले पुरुषस्य आयुःश्रीकी
ममता स्यात् १४ १५ हेशक्रमृधेनिर्जितमपितवप्राणजिहीर्षया घटमानंमांपश्य १६ हेइंद्र
त्र ॥ हेराजन् इंद्रःवृत्रवचः श्रुत्वानिष्कपटंतंसंपूज्य ततः गृहीतवज्रः सन्तं आह १८

भक्तः(सर्वात्मनाजगदीश्वरं)मेत्रि... ...व( अमृताब्धाविव्रपरमानंदेविहरतः ) खातकोदकैः गर्तादिजलोपमैः ( क्षुद्रैः )स्वर्गादिभिः
किम् २२ युधांसंग्रामाणांपतीमुख... ...४ ( करभोपमंहस्तिहस्तामं । करभःकरिपोतेचतत्करेइत्यभिधानात् ) २५ उत्कृत्तंमूलेययो
स्ताभ्यां । रक्तंस्रवतीतितथा । गो... ...र्तयिनान्वयःनभोवद्गंभीरेणवक्रेण । लेलिहःसर्पस्तद्वदुल्बणयाजिह्वया२७कालकल्पाभिर्मृत्युतुल्यकराला
भिःग्रसन्निवचालयन्(अतिमात्रमहाको... ...न् २९महाप्राणोमहाबलःमहावीर्योमहाप्रभावः(महासर्पोऽजगरोद्विपंगजम्) ३० ३१महापुरुषेणकवचरूपेणश्री
नारायणेन सन्नद्धोदंशितः । योगबलेनमा... ...उच्चकर्त चिच्छेद । ३२ तदेवाहतस्यकंधरंकंधराम् । आशुवेगः अतिवेगवान् । ज्योतिषांसूर्यादीनांअयनेदक्षिणो
त्तरगतिरूपेसंवत्सरेयोऽहर्गणः षष्ट्युत्तरशतत्रयं... ...गनवार्त्रहत्येवृत्रहत्यायोगेकालेन्यपातयत् यद्वास्वार्थेतद्धितः । वृत्रहत्यायांवृत्रहननार्थम् परिवर्तमान इत्यर्थः ३३

॥ इंद्रउवाच ॥ ॥ अहोदानवसिद्धोसियस्यतमतिरीदृशी ॥ भक्तःसर्वात्मनात्मानंसुहृदंजगदीश्वरम् १९ भवानतार्षीन्मायांवैवैष्णवींजनमोहिनीम् ॥
यद्विहायासुरंभावंमहापुरुषतांगतः २० खल्विदंमहदाश्चर्यंयद्रजःप्रकृतेस्तव ॥ वासुदेवेभगवतिसत्त्वात्मनिदृढामतिः २१ यस्यभक्तिर्भगवतिहरौनिःश्रे
यसेश्वरे ॥ विक्रीडतोऽमृतांभोधौकिंक्षुद्रैःखातकोदकैः २२ ॥ ॥ श्रीशुकउवाच ॥ ॥ इतिब्रुवाणावन्योन्यंधर्मजिज्ञासयानृप ॥ युयुधातेमहावीर्यावि
द्रवृत्रौयुधांपती २३ आविध्यपरिघंवृत्रःकार्ष्णायसमरिंदमः ॥ इंद्रायप्राहिणोद्घोरंवामहस्तेनमारिष २४ सतुवृत्रस्यपरिघंकरंचकरभोपमम् ॥ चिच्छे
दयुगपद्देवोवज्रेणशतपर्वणा २५ दोर्भ्यामुत्कृत्तमूलाभ्यांबभौरक्तस्रवोऽसुरः ॥ छिन्नपक्षोयथागोत्रःखाद्भ्रष्टोवज्रिणाहतः २६ कृत्वाऽधरांहनुंभूमौदैत्योदिव्युत्
रांहनुम् ॥ नभोगंभीरवक्रेणलेलिहोल्बणजिह्वया २७ दंष्ट्राभिःकालकल्पाभिर्ग्रसन्निवजगत्त्रयम् ॥ अतिमात्रमहाकायआक्षिपंस्तरसागिरीन् २८ गिरिराट्पाद
चारीवपद्भ्यांनिर्जरयन्महीम् ॥ जग्राससससमासाद्यवज्रिणंसहवाहनम् २९ महाप्राणोमहावीर्योमहासर्पइवद्विपम् ॥ वृत्रग्रस्तंतमालोक्यसप्रजापतयःसुराः ३० हाक
ष्टमितिनिर्विण्णाश्चुक्रुशुःसमहर्षयः ॥ निगीर्णोप्यसुरेंद्रेणनममारोदरंगतः ३१ महापुरुषसंनद्धोयोगमायाबलेनच ॥ भित्त्वावज्रेणतत्कुक्षिंनिष्क्रम्यबलभिद्वि
भुः ॥ उच्चकर्तशिरःशत्रोर्गिरिशृंगमिवौजसा ३२ वज्रस्तुतत्कंधरमाशुवेगःकृतन्समंतात्परिवर्तमानः ॥ न्यपातयत्तावदहर्गणेनयोज्योतिषामयनेवार्त्रहत्ये ३३

अहो दानव सिद्धोसि त्वंहरिभक्तोसि १९ भवान् वैष्णवीं मायांअतार्षीत् यतः एवंतेभगवति भक्तिरस्ति २० २१ २२ ॥ ॥ श्रीशुकउवाच ॥ ॥ एवं अन्योन्यं
ब्रुवाणौ इंद्रवृत्रौ युयुधाते २३ वृत्रः परिघेणइंद्रंअताडयत् २४ ततः इंद्रः तस्यपरिघंवामकरंच चिच्छेद २५ छिन्नहस्तः वृत्रः अधरोष्ठंभूमौकृत्वाभूमौउत्तरोष्ठंकृत्वादंष्ट्राभिः
जगत्त्रयंग्रसन्निव २६ २७ २८ ऐरावतेनसहवज्रिणं जिह्वयागृहीत्वा अगिलत् २९ वृत्रग्रस्तंइंद्रंआलक्ष्यसर्वेदेवाद्याः चुक्रुशुः ३० इंद्रः नारायणकवचेनसन्नद्धःनममार
३१ किंच वज्रेण तत्कुक्षिंभित्त्वानिष्क्रम्य शत्रोः शिरः उच्चकर्त ३२ सवज्रः परमवेगवान् सन् वर्षेणैव वृत्रशिरः न्यपातयत् ३३

वार्त्रघ्नलिंगै-(-मंत्रै-)-वृत्रहंतुर्वीर्यप्रकाशकैः । "वार्त्रहत्या यशवसेपृतनाषाह्यायच" इत्याद्यैस्तमिंद्रमभिष्टुवानाः प्रतिष्टुवंतः ३४ अलोकंलोकातीतंभगवंतं ३५ इतिषष्ठस्कंधेटीकायांद्वादशोध्यायः ॥ १२ ॥ त्रयोदशेतुवृत्रस्यब्रह्मत्यामहाभयात् । चिरंनष्टोऽवितःशक्रोविष्णुनेतिनिरूप्यते ॥ १ ॥ ( हेभूरिदबहुप्रद ) अनिर्वृतेंद्रियंशक्रंअपहृष्टास्वयमेवप्रातिबन्मुः १ २ ह रेरिंद्रस्य ३ तस्येंद्रस्यदुःखहेतुंतत्कुंप्रस्तावकथामाह । वृत्रविक्रमेत्यादिना । अर्थयन्प्रार्थयंत । वृद्धवधात्ब्राह्मणवधाद्भीतः सन् ४ एवः पापंविभक्तंविभज्यगृहीतं । मार्जन्यकर्त्यध्वा मि ५ ६ ७ ( यस्यनारायणस्य ) ८ ( सब्रह्मविरिंच्यसहितं ) ९

तदाचखेदुंदुभयोविनेदुर्गंधर्वासिद्धाःसमहर्षिसंघाः ॥ वार्त्रघ्नलिंगैस्तमभिष्टुवानामंत्रैर्मुदाकुसुमैरभ्यवर्षन् ३४ वृत्रस्यदेहान्निष्क्रांतमात्मज्योतिरारिंदम ॥ प श्यतांसर्वलोकानामलोकंसमपद्यत ३५ इतिश्रीभागवतेमहा० षष्ठस्कंधेवृत्रवधोनामद्वादशोऽध्यायः १२ ॥ श्रीशुकउवाच ॥ ॥ वृत्रेहतेत्रयोलोकाविना शक्रेणभूरिद ॥ सपालाह्यभवन्सद्योविज्वरानिर्वृतेंद्रियाः १ देवर्षिपितृभूतानिदैत्यादेवानुगाःस्वयम् ॥ प्रतिजग्मुःस्वधिष्ण्यानिब्रह्मेशेंद्रादयस्ततः २ राजोवाच ॥ इंद्रस्यानिर्वृतेर्हेतुंश्रोतुमिच्छामिभोमुने ॥ येनासन्सुखिनोदेवाहरेर्दुःखंकुतोभवत् ३ श्रीशुकउवाच ॥ ॥ वृत्रविक्रमसंविग्नाःसर्वेदेवाःस हर्षिभिः ॥ तद्वधायार्थयन्निंद्रंनैच्छद्भीतोबृहद्वधात् ४ ॥ इंद्रउवाच ॥ स्त्रीभूजलद्रुमैरेनोविश्वरूपवधोद्भवम् ॥ विभक्तमनुगृह्णद्भिर्वृत्रहत्यांक्वमाज्म्यं हम् ५ ॥ श्रीशुकउवाच ॥ ॥ ऋषयस्तदुपाकर्ण्यमहेंद्रमिदमब्रुवन् ॥ याजयिष्यामभद्रंतेहयमेधेनमास्मभैः ६ हयमेधेनपुरुषंपरमात्मानमीश्वरम् ॥ इष्ट्वानारायणंदेवंमोक्ष्यसेपिजगद्वधात् ७ ब्रह्महापितृहागोघ्नोमातृहाचार्यहाघवान् ॥ श्वादःपुल्कसकोवापिशुध्येरन्यस्यकीर्तनात् ८ तमश्वमेधेनमहाम खेनश्रद्धान्वितोस्माभिरनुष्ठितेन ॥ हत्वापिसब्रह्मचराचरंत्वंनलिप्यसेकिंखलनिग्रहेण ९

तदाखेदुंदुभयोनेदुर्गंधर्वादयः कुसुमैः अभ्यवर्षन् ३४ सर्वेइंद्रंअस्तुवन् वृत्रदेहात्निर्गतं आत्मज्योतिः सर्वेषांपश्यतांभगवंतंसमपद्यत ३५ इतिषष्ठेद्वादशः ॥ १२ ॥ ॥ श्रीशुकउवाच ॥ ॥ एवंवृत्रेहतेसतिइंद्रंविनास्[...]पगणाद्याःसुखिनःसंतःस्वस्थानानिजग्मुः १ २ ॥ ॥ राजोवाच ॥ ॥ येनदेवाद्याः सुखिनः अभवन् तेनइंद्रस्यकुतोदुःखं अभवत् तत् श्रोतुमिच्छ[...] [...]शुकउवाच ॥ ॥ देवाः वृत्रात्भीताः तद्वधायइंद्रं प्रार्थयन् ४ तदाइंद्रः उवाच हेदेवर्षयः विश्वरूपव धोद्भवंएनः स्त्रीभूजलद्रुमैर्विभज्यगृहीतं [...]न ५ ॥ ॥ श्रीशुकउवाच ॥ ॥ ततः ऋषयः इंद्रवचः श्रुत्वा ऊचुः हेइंद्रहयमेधेन त्वांयाजयि ष्यामः माभैः ६ हयमेधेन नारा[...] [...]हापितृहागोघ्नोमातृहाचार्यहाघवान् श्वादःपुल्कसकोवापिशुध्येरन्यस्यकीर्तनात् ८ ९

१ वार्त्रहत्यायशवसेपृतनाषाह्य[...] [...]यते तद्वार्त्रहत्यंवस्तत्संवार्त्रहत्यायशवसेबलाय । पृतनाषाह्यायच । पृतनाःसेनायेनशवषासहंते अभिभू यैते तत्पृतनाषाह्यम् । तस्मैतदर्थम् १

वृषाकपिमिंद्रं १० तयादेवादि ... मिंद्रंनिर्वृतिर्नाविशत् । ननुधैर्यादिगुणयुक्तस्यकुतोऽनिर्वृतिस्तत्राह । ह्रीमंतंलज्जावंतंवाच्यतां

मियतां ११ यक्ष्मग्रस्तांक्षयरोग ... श्वासवायुस्तस्यगंधेन १३ प्रागुदीचीं ( ऐशानीं )दिशंगतःसन्तूर्णमानसंसरः ( प्रविष्टः )१४

सइंद्रःसहस्रंवर्षाणिपुष्करनालस्य ... यस्मात्इहजलेवसन् अग्निदूतश्चस्त्वयं । अग्नेश्चस्वदूतस्यहविर्भागानेतुःजलेप्रवेशासंभवादलब्ध

भोजनइत्यर्थः । पाठांतरेनलब्धोयः ... यस्मिन्निति नाकंपुण्यलोकःतृतीयंनाकंस्वर्गं । ननुमनुष्यस्य कुतः स्वर्गराज्यंतत्राह । विद्योपासनातपआदिभि

रनुभावःस्वर्गपालनसामर्थ्यंयस्यसः । त ... त्वमेमाप्तिस्तत्राह । सनहुषः संपदैश्वर्याभ्यांयोमदस्तेनांधाबुद्धिर्यस्यसः । इंद्रपत्न्याशच्यातिरश्चांगतिंसर्पयोनिं

नीतःउपायेनप्रापितः । एवंव्याख्यायते । नहुष ... मुवाचइंद्रस्त्वावदइंअतस्त्वंमांमजेति तयाचावेदितवृत्तांतोबृहस्पतिस्तामुवाच । ब्राह्मणवाह्यशिबिकामारुह्यआगतं

त्वांभजिष्यामीतिब्रूहि । ततोसौब्रह्मशापात्पतिष्यं ... थोक्तोनहुषोऽगस्त्यादीन्शिबिकांवाहयामास । तदाचशीघ्रंसर्पसर्पेत्यगस्त्यंपदास्पृशत् तेनसर्पोभवेतिशप्तोमहासर्पोऽज

गरोऽभूदिति १६ ततइंद्रः स्वर्गंगतः प्राप्तः । कथंभूतः । ... ब्राह्मणवाक्येनोपहूतः सन् ऋतंभरःसत्यपालकोहरिस्तस्यध्यानेनानिवारितं अघंयेन । प्रागपितुपापोब्रह्मवधस्तमिंद्रं

नाभ्यभूत् । कुतः दिग्देवतयाप्रागुदीच्यांदिशिस्थितया रुद्रे ... आग्नीध्रेण ( हतौजाहतबलः । विष्णुपत्न्याकमलवासिन्यालक्ष्म्या ) अभितःरक्षितंसंतम् ( विष्णुपत्न्योति

पाठेमानससरसिस्थितयागंगया ) १७

॥ श्रीशुकउवाच ॥ एवंसंचोदितोविप्रैर्मरुत्वानहनाद्रिपुम् ॥ ब्रह्महत्याहतेतस्मिन्नाससादवृषाकपिम् १० तयेंद्रःस्मासहत्तापंनिर्वृतिर्नामुमाविशत् ॥

ह्रीमंतंवाच्यतांप्राप्तंसुखयंत्यपिनोगुणाः ११ तांददर्शानुधावंतींचांडालीमिवरूपिणीम् ॥ जरयावेपमानांगींयक्ष्मग्रस्तामसृक्पटाम् १२ विकीर्यपलिता

न्केशांस्तिष्ठतिष्ठेतिभाषिणीम् ॥ मीनगंध्यसुगंधेनकुर्वंतीमार्गदूषणम् १३ नभोगतोदिशःसर्वाःसहस्राक्षोविशांपते ॥ प्रागुदीचींदिशंतूर्णंप्रविष्टोनृ

पमानसम् १४ सआवसत्पुष्करनालतंतूनलब्धभोगोयदिहाग्निदूतः ॥ वर्षाणिसाहस्रमलक्षितोंतःसंचिंतयन्ब्रह्मवधाद्विमोक्षम् १५ तावत्त्रिणाकंनहुषःश

शासविद्यातपोयोगबलानुभावः ॥ ससंपदैश्वर्यमदांधबुद्धिर्नीतस्तिरश्चांगतिमिंद्रपत्न्या १६ ततोगतोब्रह्मगिरोपहूतऋतंभरध्याननिवारिताघः ॥ पा

पस्तुदिग्देवतयाहतौजास्तंनाभ्यभूदवितंविष्णुपत्न्या १७

॥ श्रीशुकउवाच ॥ ॥ इत्थंब्राह्मणाज्ञयारिपुं अहनत् तदैव ब्रह्महत्या इंद्रं असरार १० इंद्रः तांचांडालीमिव असृक्पटांमीनगंधांधावंतीं आलोक्य ब्रह्मांडंभित्वा ॥२७॥

मानससरोवरंप्रविष्टः ११ १२ १३ १४ तत्रपुष्करनालतंतुषु प्रविश्यब्रह्मवधाद् मोक्षंचिंतयन् वर्षसहस्रंउवास १५ तावत्नहुषःत्रिणाकंशशास स इंद्राण्यातिरश्चां

गतिं नीतः सन् ब्रह्मशापात्अजगरोभूत् १६ १७

पुरुषस्यहरेराराधनंयस्मिन्तेन १८ सर्वदेवमयआत्मामूर्तिर्यस्यतस्मिन वेदमयात्मनीतिवापाठः । ब्रह्मवादिभिर्विततेऽनुष्ठिते अश्वमेधेमहेंद्रेणेज्यमानेपुरुषेसति १९ तमत्रपुरुषमेवपू
ज्यायनीतः निःशेषनाशितइत्यर्थः २० अधिकृतायज्ञायेनतं २१ पाठादिविधातुमाख्यानंस्तौति इदमिति । प्रक्षाल्यतेअनेनेतिप्रक्षालनंतीर्थपदस्यानुकीर्तनंयस्मिन् ।( अवस्तीर्थेभ्यो
धिकमेतत् )भक्तेरुच्छ्रयोयस्मिन् । भक्तजनानामनुवर्णनंयस्मिन् महेंद्रस्यमोक्षोयस्मिन् । मरुत्वतोविशेषेणजयोयत्र २२इंद्रियं तत्पाटवकरम् इंद्रस्यसंबंधीतिवा । आयुष्यआयुष्यम् २३
इतिषष्ठस्कंधेटीकायांत्रयोदशोऽध्यायः॥१३॥वृत्रस्यज्ञानमश्रुत्वादिश्रुत्वापृष्टःपरीक्षिता । हेतुमाहचतुर्भिस्तत्प्राग्जन्मचरितोक्तिभिः ॥ १ ॥ चतुर्दशेतुसहसाकृच्छ्रलब्धसुतेमृते । चित्रकेतो
रतिमहादतिशोकोनिरूप्यते ॥ १ ॥ रजस्तमश्चस्वभावोयस्य १ २ भक्तेर्दुर्लभत्वंप्रपंचयतित्रिभिः । रजोभिरिति पार्थिवैरजोभिः परमाणुभिःसमसंख्याता अनंताइत्यर्थः । जंतवो
जीवाः तेषांमध्येयेकेचनकातपयेश्रेयोधर्ममीहंतेकुर्वंति ३ मुच्येतगृहादिसंगाद्विमुच्येत सिध्यातितत्त्वंजानाति ४ ५ ६ ( अत्रास्माकमयंसंशयोऽस्तिअतःश्रोतुंकौतूहलंवर्तते । ) नरेंद्र
मियाकृष्णंशरणंगतइत्याह । यः पौरुषेणेति ७

तंब्रह्मर्षयोऽभ्येत्यहयमेधेनभारत ॥ यथावद्दीक्षयांचक्रुःपुरुषाराधनेनह १८ अथेज्यमानेपुरुषेसर्वदेवमयात्मनि ॥ अश्वमेधेमहेंद्रेणावितते ब्रह्मवादिभिः १९ ससर्वपापविनिर्मुक्तः? 

तंब्रह्मर्षयोऽभ्येत्यहयमेधेनभारत ॥ यथावद्दीक्षयांचक्रुःपुरुषाराधनेनह १८ अथेज्यमानेपुरुषेसर्वदेवमयात्मनि ॥ अश्वमेधेमहेंद्रेणावितते ब्रह्मवादिभिः १९ इष्ट्वाधियज्ञंपुरु
सर्वत्वाष्ट्रवधोभूयानपिपापचयोनृप ॥ नीतस्तेनैवशून्यायनीहारइवभानुना २० सवाजिमेधेनयथोदितेनवितायमानेनमरीचिमिश्रैः ॥ इष्ट्वाधियज्ञंपुरु
षंपुराणमिंद्रोमहानासविधूतपापः २१ इदंमहाख्यानमशेषपाप्मनांप्रक्षालनंतीर्थपदानुकीर्तनम् ॥ भक्त्युच्छ्रयंभक्तजनानुवर्णनंमहेंद्रमोक्षंविजयंमरुत्व
तः २२ पठेयुराख्यानमिदंसदाबुधाःशृण्वंत्यथोपर्वणिपर्वणींद्रियम् ॥ धन्यंयशस्यंनिखिलाघमोचनंरिपुंजयंस्वस्त्ययनंतथायुषम् २३ इतिश्रीभागवते
महा० षष्ठस्कंधेइंद्रविजयोनामत्रयोदशोऽध्यायः ॥१३ ॥ ॥ परीक्षिदुवाच ॥ ॥ रजस्तमःस्वभावस्यब्रह्मन्वृत्रस्यपाप्मनः ॥ नारायणेभगवतिकथमासी
दृढामतिः १ देवानांशुद्धसत्त्वानामृषीणांचामलात्मनाम् ॥ भक्तिर्मुकुंदचरणेनप्रायेणोपजायते २ रजोभिःसमसंख्याताःपार्थिवैरिहजंतवः ॥ तेषांयेकेच
नेहंतेश्रेयोवैमनुजादयः ३ प्रायोमुमुक्षवस्तेषांकेचनैवद्विजोत्तम ॥ मुमुक्षूणांसहस्रेषुकश्चिन्मुच्येतसिध्यति ४ मुक्तानामपिसिद्धानांनारायणपरायणः ॥
सुदुर्लभःप्रशांतात्माकोटिष्वपिमहामुने ५ वृत्रस्तुसकथंपापःसर्वलोकोपतापनः ॥ इत्थंदृढमतिःकृष्णआसीत्संग्रामउल्बणे ६ अत्रनःसंशयोभूयान्श्रोतुं
कौतूहलंप्रभो ॥ यःपौरुषेणसमरेसहस्राक्षमतो‍ ७

अथब्रह्मर्षयः तत्रपत्यइंद्रायदीक्षांदत्त्वाहयमे‍ ... त् मोचयामासुः १८ १९ २० सः मरीचिप्रभृतिभिः यथोदितवाजिमेधेनयज्ञपतिं इष्ट्वाविधूतपापः आ
स २१ इदं आख्यानं महेंद्रमोक्षंमरु‍ ... लनं येपठेयुः पर्वणिपर्वणियेशृण्वंति तेषां धन्यंयशस्यं निखिलाघमोचनं रिपुंजयं स्वस्त्ययनं तथायु
ष्यंभवति २२ २३ इतिषष्ठेत्रयो‍ ... ॥ हेब्रह्मन्रजस्तमःस्वभावस्यपाप्मनः वृत्रस्यभगवति दृढामतिः कथं आसीत् १ देवादीनामपिमु
कुंदचरणेभक्तिः प्रायः नजाय‍ ... केचन धर्मकुर्वंति तेषांमध्येपिकेचनमुमुक्षवः तेष्वपिकश्चित्संगात्मुच्यते ३ ४ मुक्तानाम
पिकश्चित्नारायणपरः ५ ए‍ ... त् ६ अत्र नः संशयोस्ति तांछिंधि ७

८ यथायथावच्छृणु ९ १० ... वयंसंतानार्हेऽपिपुत्रोत्पादनसमर्थोऽपितासुसंततिंनलेभे। सर्वास्ता(आश्चर्यकरेण)दैवयोगेन वंध्या
एवमिलिताइतिभावः ११ त... मुपविवेश। समाहितःसंयतः१५ १६ अपिकिंअनामयमारोग्यम्। तथात्मनस्तवप्रकृतीनांस्वस्ति
शुभंकिम्। प्रकृत्यधीनमेवहिरा... भिः प्रकृतिभिः पुमान्जीवोनित्यंगुप्तोभवति। नतुतद्व्यतिरेकेणक्षणमपितिष्ठति। तथाराजापि सप्तभिः
"स्वाम्यमात्योजनपदादुर्गद्रविणं... तयोमताः" इत्युक्तलक्षणाभिर्नित्यंगुप्तःसन् श्रेयआप्नुयादित्युत्तरेणान्वयः। तत्रस्वामीगुरुः स्वयंवा( मंत्रसहायो
मित्रं। कर्मसहायोऽमात्यः दंडःसेना)... त्मानंनिधायतदनुवर्तिनंकृत्वाश्रेयोराज्यसुखं प्राप्नुयात्। प्रकृतीनांचसुखंराजाधीनमेवेत्याह। हेनरदेवतथाप्रकृतयो
पिराज्ञा (नृपेणआहिताआधियांसुताः)... क्षेपाः धनैः समृद्धाभवंतीत्यर्थः। पाठांतरे आसमंततोहताधयोनिरस्तमनोदुःखाभवंति १८ अपिकिंवशवर्तिनः
संति। तत्रप्रजाःकृषीवलादयः श्रेण्यः समर्याविशेषण... वर्तमानावणिक्प्रभृतयः। पौराः पुरवासिनः। जानपदास्तत्तद्देशाधिकारिणः १९

॥ सूतउवाच ॥ परीक्षितोथसंप्रश्नंभगवान्बादरायणिः ॥ निशम्यश्रद्दधानस्यप्रतिनंद्यवचोऽब्रवीत् ८ ॥ श्रीशुकउवाच ॥ शृणुष्वावहितोराजन्इति
हासमिमंयथा ॥ श्रुतंद्वैपायनमुखान्नारदाद्देवलादपि ९ आसीद्राजासार्वभौमःशूरसेनेषुवैनृप ॥ चित्रकेतुरितिख्यातोयस्यासीत्कामधुङ्मही १० तस्य
भार्यासहस्राणांसहस्राणिदशाभवन् ॥ सांतानिकश्चापिनृपोनलेभेतासुसंततिम् ११ रूपौदार्यवयोजन्मविद्यैश्वर्यश्रियादिभिः ॥ संपन्नस्यगुणैःसर्वैश्चिंता
वंध्यापतेरभूत् १२ नतस्यसंपदःसर्वामहिष्योवामलोचनाः ॥ सार्वभौमस्यभूश्चेयमभवन्प्रीतिहेतवः १३ तस्यैकदातुभवनमंगिराभगवानृषिः ॥ लोका
ननुचरन्नेतानुपागच्छद्यदृच्छया १४ तंपूजयित्वाविधिवत्प्रत्युत्थानार्हणादिभिः ॥ कृतातिथ्यमुपासीदत्सुखासीनंसमाहितः १५ महर्षिस्तमुपासीनंप्र
श्रयावनतंक्षितौ ॥ प्रतिपूज्यमहाराजसमाभाष्येदमब्रवीत् १६ ॥ ॥ अंगिराउवाच ॥ ॥ अपितेऽनामयंस्वस्तिप्रकृतीनांतथात्मनः ॥ यथाप्रकृ
तिभिर्गुप्तःपुमान्राजाचसप्तभिः १७ आत्मानंप्रकृतिष्वद्धानिधायश्रेयआप्नुयात् ॥ राज्ञातथाप्रकृतयोनरदेवाहिताधयः १८ अपिदाराःप्रजामात्याभृत्याः
श्रेण्योथमंत्रिणः ॥ पौराजानपदाभूपाआत्मजावशवर्तिनः १९

८ ॥ ॥ श्रीशुकउवाह ॥ ॥ हेराजन्त्वंव्यासनारददेवलमुखात्श्रुतंइतिहासंशृणु ९ शूरसेनेषुदेशेषु कश्चिच्छूरः चित्रकेतुसंज्ञकः सार्वभौमोराजासीत् १० तस्यए
ककोटिभार्याः आसन् तासु सः संततिं नलेभे ११ सर्वास्तावंध्याएवदैवयोगेनमिलिताः तस्यरूपादिभिः संपन्नस्यापिवंध्यापतेश्चिंताभूत् १२ तस्यसर्वाः संपदः
प्रीतिहेतवःनाभवन् १३ एकदातस्यगृहे अंगिरानामऋषिः आगमत् १४ तंराजापूजयामास १५ तदा अंगिराउवाच १६ हेराजन् तेस्वस्तिकिं प्रजाः
धर्मेणपालयंतं त्वां चिंताग्रस्तं लक्षये १७ १८ १९

तवमनः स्ववशेवानवेत्यर्थात्पृच्छति । यस्यात्मामवः अनुवशः अनुवर्तीआधीनः स्यात् तस्यसर्वेइमेदारादयोवशगाभवंति । किंचलोकाश्चतस्यबलिंयच्छंति २० आत्मनोभवतआत्मा
अंतःकरणंनप्रीयतेनतुष्यातित त्किंपरतोवास्वतोवा अलब्धकामंत्वांलक्षये।(तत्र लिंगं । चिंतयेति)२१ विदुषासर्वज्ञेनापि २२ अलब्धकामत्वंकथयन् पुत्रंयाचते भगवन्निमितिचतुर्भिः २३ २४
अप्रजमपुत्रम् । क्षुत्तृड्भ्यामन्नपानकामम् अपरेस्रक्चंदनादयोयथानसुखयंति २५ पूर्वैः पित्रादिभिः सहगतंप्राप्तंतमःनरकंप्रजयायथातरेमतत्तथाविधेहि २६ ( त्वाष्ट्रंत्वष्टृदेवताकं )२७
राज्ञोमहिषीणांमध्येगुणैःश्रेष्ठा यज्ञोच्छिष्टंयज्ञशेषं २८ जन्मनाहर्षंमरणेनचशोकंप्रददातीतितथा । इतिएवमुक्त्वाययौ २९ ३० शूरसेनानामीशस्यतेजसावीर्येणयोगर्भःसववृधे ३१
३२ जातकंजातकर्म ३३ अर्बुदंदशकोट्यः । वेदेतुकोटिरेवार्बुदम् । नियुतंचप्रयुतंचार्बुदंचेतिप्रयुतानंतरंनिर्देशात् ३४ धन्यंधनकरम् आयुष्यंआयुष्करं महामनाःअत्युदारः ३५

यस्यात्मानुवशश्चेत्स्यात्सर्वेतद्वशगाइमे ॥ लोकाःसपालायच्छंतिसर्वेबलिमतंद्रिताः२०आत्मनःप्रीयतेनात्मापरतःस्वतएववा ॥ लक्षयेऽलब्धकामंत्वांचिं
तयाशबलंमुखम् २१ एवंविकल्पितोराजन्विदुषामुनिनापिसः ॥ प्रश्रयावनतोऽभ्याहप्रजाकामस्ततोमुनिम् २२ ॥ चित्रकेतुरुवाच ॥ भगवन्किंनविदि
तंतपोज्ञानसमाधिभिः॥योगिनांध्वस्तपापानांबहिरंतःशरीरिषु २३ तथापिपृच्छतोब्रूयाद्ब्रह्मन्नात्मनिचिंतितम् ॥ भवतोविदुषश्चापिचोदितस्त्वदनुज्ञ
या २४ लोकपालैरपिप्रार्थ्याःसाम्राज्यैश्वर्यसंपदः ॥ ननंदयंत्यप्रजंमांक्षुत्तृट्कामामिवापरे २५ ततःपाहिमहाभागपूर्वैःसहगतंतमः ॥ यथातरेमदुस्तारंप्रज
यातद्विधेहिनः २६ ॥ श्रीशुकउवाच ॥ इत्यर्थितः सभगवान्कृपालुर्ब्रह्मणःसुतः ॥ श्रपयित्वाचरुंत्वाष्ट्रंत्वष्टारमयजाद्द्विजः २७ ज्येष्ठाश्रेष्ठाचयाराज्ञोम
हिषीणांचभारत ॥ नाम्नाकृतद्युतिस्तस्यैयज्ञोच्छिष्टमदाद्द्विजः २८ अथाहनृपतिंराजन्भवितैकस्तवात्मजः॥ हर्षशोकप्रदस्तुभ्यमितिब्रह्मसुतोययौ२९
सापितत्प्राशनादेवचित्रकेतोरधारयत् ॥ गर्भंकृतद्युतिर्देवीकृत्तिकाग्नेरिवात्मजम् ३० तस्याअनुदिनंगर्भःशुक्लपक्षइवोडुपः ॥ ववृधेशूरसेनेशतेजसा
शनकैर्नृप ३१ अथकालउपावृत्तेकुमारःसमजायत ॥ जनयन्शूरसेनानांशृण्वतांपरमांमुदम् ३२ हृष्टोराजाकुमारस्यस्नातःशुचिरलंकृतः ॥ वाचयित्वाऽ
शिषोविप्रैःकारयामासजातकम् ३३ तेभ्योहिरण्यंरजतंवासांस्याभरणानिच ॥ ग्रामान्हयान्गजान्प्रादाद्धेनूनामर्बुदानिषट् ३४ ववर्षकाममन्येषां
पर्जन्यइवदेहिनाम् ॥ धन्यंयशस्यमायुष्यंकुमारस्यमहामनाः ३५

२० २१ २२ ॥ ॥ चित्रकेतुरुवाच ॥ ॥ हेभगवन् तव किमपि अविदितं न तथापि वक्ष्ये २३ २४ लोकपालैः प्रार्थ्याः संपदः संति तथापि अप्रजं मां न नं
दयंति २५ अतः पित्रादिभिःसह प्राप्तंनरकंयथाप्रजयातरेमतथाविधेहि २६ ॥ ॥ श्रीशुकउवाच ॥ ॥ एवं राज्ञाप्रार्थितः अंगिराः त्वाष्ट्रंचरुंश्रपयित्वात्वष्टारं अ
यजत् २७ ततः सर्वस्त्रीणांमध्येज्येष्ठा या कृतद्युतिः तस्यै यज्ञोच्छिष्टंचरुंअदात् २८ आहच हेराजन् तवहर्षशोकप्रदःएकःपुत्रोभविष्यति इत्युक्त्वासःययौ २९ साचरुप्रा
शनात् चित्रकेतोःगर्भंअधारयत ३० अथकाले कुमारः अजायत ३१ ३२ तदाहृष्टोराजा विप्रैः जातकं कारयित्वा ३३ तेभ्यः हिरण्यं ग्रामान् हयान् गजान्
धेनूनांषडर्बुदानि अदात् ३४ अन्वहं मातापित्रोः स्नेहः पुत्रे अवर्द्धत ३५ .

३६ । मोहस्यसमुद्भवोयस्मिन् प्रजाकामन्तोज्वरस्तापः ३७ दारइत्येकवचनमार्षं ३८ आनपत्येन अपुत्रत्वनिमित्तेन ३९ नगृहेसंमताबहुमतातां । यद्वागृहादाराः दारेष्वपिगृहाइत्य अ०
प॰१०० ष मरः नभार्यैतिसंमतामित्यर्थः । ४० ( स्वामिनः परिचर्ययाअभीक्ष्णंलब्धमानानांदासीनांकोनामसंतापः अतोवयंनकेवलंदास्यः किंतु ) दास्याःदासीयथातथादुर्भगाः ४१ नसंमताद्व
तिर्जीवनंयासां ४२ मतिर्विवेकोयामांताः । गरंविषं । दुर्मर्षाः विद्वेषेणनष्टाअसहमानाः ४३ । ४४ धात्रींस्तनदायिनीं४ ५ उद्वृत्तेतारकेकनीनिकेययोस्तेलोचनेयस्यतम् ४६ । ४७ वि ॥१४॥
॥२९॥ भ्रष्टाः शिरोरुहाअंबरेचयस्याःसा ४८ ताश्चसपत्न्योपि ४९ अलक्षितःअंतकोमृत्युहेतुर्यस्यतम् अनुगताःप्रकृतयो अमात्यादयोयस्यसोऽनुप्रकृतिः ५० ।

कृच्छ्रलब्धेथराजर्षेस्तनयेनुदिनंपितुः ॥ यथानिःस्वस्यकृच्छ्राप्तेधनेस्नेहोन्ववर्धत ३६ मातुस्त्वतितरांपुत्रेस्नेहोमोहसमुद्भवः ॥ कृतद्युतेःसपत्नीनां प्रजाकामोज्वरोभवत् ३७ चित्रकेतोरतिप्रीतिर्यथादारेप्रजावति ॥ नतथाऽन्येपुसंजज्ञेबालंलालयतोऽन्वहम् ३८ ताःपर्यतप्यतात्मानंगर्हयंत्योऽभ्यसूयया ॥ आनपत्येनदुःखेनराज्ञोऽनादरणेनच ३९ धिगप्रजांस्त्रियंपापांपत्युश्चागृहसंमताम् ॥ सुप्रजाभिःसपत्नीभिर्दासीमिवतिरस्कृताम् ४० दासीनांकोनुसंतापःस्वामिनःपरिचर्यया ॥ अभीक्ष्णंलब्धमानानांदास्यादासीवदुर्भगाः ४१ एवंसंदह्यमानानांसपत्न्याः पुत्रसंपदा ॥ राज्ञोऽसंमतवृत्तीनांविद्वेषोबलवानभूत् ४२ विद्वेषनष्टमतयःस्त्रियोदारुणचेतसः ॥ गरंददुःकुमारायदुर्मर्षानृपतिंप्रति ४३ कृतद्युतिरजानंतीसपत्नीनामघंमहत् । सुप्तएवेतिसंचिंत्यानिरीक्ष्यव्यचरद्गृहे ४४शयानंसुचिरंबालमुपधार्यमनीषिणी ॥ पुत्रमानयमेभद्रेइतिधात्रीमचोदयत्४५साशयानमुपव्रज्यदृष्ट्वाचोत्तारलोचनम् ॥ प्राणेंद्रियात्मभिस्त्यक्तंहतास्मीत्यपतद्भुवि ४६तस्यास्तदाकर्ण्यभृशातुरंस्वरंघ्नंत्याः कराभ्यामुरउच्चकैरपि॥प्रविश्यराज्ञीत्वरयाऽऽत्मजांतिकंददर्शबालंसहसामृतंसुतम् ४७ पपातभूमौपरिवृद्धयाशुचामुमोहविभ्रष्टशिरोरुहांबरा ॥ ततोनृपांतःपुरवर्तिनोजनानराश्चनार्यश्चनिशम्यरोदनम् ४८ आगत्यतुल्यव्यसनाःसुदुःखितास्ताश्चव्यलीकंरुरुदुःकृतागसः ॥ श्रुत्वामृतंपुत्रमलक्षितांतकंविनष्टदृष्टिःप्रपतन्स्खलन्पथि ४९ स्नेहानुबंधैधितयाशुचाभृशंविमूछितोऽनुप्रकृतिर्द्विजैर्वृतः ॥ पपातबालस्यसपादमूलेमृतस्यविस्रस्तशिरोरुहांबरः ५०

३६ अन्यस्त्रीणांप्रजाकामज्वरःअभवत् ३७ ताः आत्मानं गर्हयामासुः ३८ ३९ अहो अप्रजांस्त्रियंधिक्इत्यादि ४० ४१ एवंसपत्न्याः पुत्रसंपदादह्यमानानांवलवा ॥२९॥
न् विद्वेषः अभूत् ४२ तेननष्टमतयःदारुणचेतसःस्त्रियःकुमाराय गरंददुः ४३ साकृतद्युतिःसपत्नीनांकर्मअजानतीबालःसुप्तएवेतिचिंतयतीगृहेव्यचरत् ४४ बालंबहुतका
लंशयानंआलक्ष्यपुत्रमानयेतिधात्रींअचोदयत् ४५ साशयानंबालकंउपव्रज्यतंमृतंदृष्ट्वाहतास्मीतिउच्चैः शब्दंकृत्वाभुविन्यपतत् ४६ तस्याःदीनंशब्दंश्रुत्वाराज्ञीत्वरयातदं
तिकंआगत्यमृतंपुत्रंदृष्ट्वाभूमौपपातमुमोहशुशोच४७ ४८ततः अंतःपुरवर्तिनः नराःनार्यश्चरुरुदुः सपत्न्यश्चव्यलीकंरुरुदुः नृपः पुत्रं मृतं श्रुत्वा पदेपदे प्रस्खलन्४९ ५०

बाष्पकलाभिरश्रुबिंदुभिरुपरोधतः संवृतत्वेन निरुद्धःकंठोयस्य उरुशुचाऽर्पितंबहुशोकेनव्याप्तम् एकमेवसंततिरूपम् । ५१ विलसंत्यः स्रजोयेभ्यस्तान्केशान् । ५२ आत्मसृष्टेरप्रति
रूपम् अननुरूपंचेष्टसे । तदेवाह । नुअहोपरेवृद्धेजीवति अपरस्यबालस्ययामृतिस्तत् । यदाहिवृद्धस्यसृष्टिसामर्थ्याभावेबालेचमृतेसतितवसृष्टिर्नष्टास्यादित्यर्थः । ननुसांप्रतंस्वसृष्टेर्वि
परीतोस्मीतिचेत्तत्राह । विपर्ययः विपरीतोसिचेत्तर्हित्वंप्राणिनांअविदु·खकारित्वाध्ध्रुवः नित्यः परः शत्रुरसि नतुकृपालुरित्यर्थः ५३ ननुजीवकर्मानुसारेणजन्मादिकुर्वतोममको
पराधस्तत्राहनहीति पुत्रेजीवत्येवपिताम्रियतेपितरिजीवत्येवपुत्रोजायते इतिचक्रमोनास्तिकर्माधीनत्वादितिचेत्तर्हिस्वकर्मभिरेवतज्जन्मादिकमस्तु किंत्वयाकृत्यं । ननुमयेश्वरेणविना
जडैःकर्मभिरिदंकथंसिध्येत् । भवतुनामतथापिनिजसर्गवृध्यैतेत्वयायःस्नेहपाशःकृतस्तमिमंस्वयमेवविवृश्चसिछिनत्सीत्यादिक्रोशति । नह्येवंविधंदुःखंदृष्ट्वाकश्चिदपिपुत्रादिषुस्नेहंकरिष्य
तीतिभावः५४(विचक्ष्वपश्य।)अप्रजदुस्तरम् अप्रजानादुस्तरं ध्वांतंतमिस्रं अंजोऽनायासेनतरेम।अकरुणेनसह५५अशनयाक्षुधा (व्याप्तस्त्वंभुंक्ष्व) ५६ तनुजहेपुत्र नाहंप्रथमंत्वत्पार्श्वेमा
गतासती तवमुग्धस्मितंवक्त्रं-(·कमलं)ददर्शेदृष्टवत्यस्मि।इदानीमपि गिरोनशृणोमि तर्हिकिं अपुनरन्वयम् पुनरागमनं यथानभवति तथापरलोकंअघृणेन यमेननीतःकिंवागतोसि५७५८५९

दीर्घंश्वसन्बाष्पकलोपरोधतोनिरुद्धकंठोनशशाकभाषितुम् ॥ पतिंनिरीक्ष्योरुशुचार्पितंतदामृतंचबालंसुतमेकसंततिम् ॥ जनस्यराज्ञीप्रकृतेश्चहृद्रुजंसतीदधानाविललापचित्रधा ५१ स्तनद्वयंकुंकुमगंधमंडितंनिर्षिंचतीसांजनबाष्पबिंदुभिः ॥ विकीर्यकेशान्विगलत्स्रजःसुतंशुशोचचित्रंकुररीवसुस्वरम् ५२ अहोविधातस्त्वमतीवबालिशोयस्त्वात्मसृष्ट्यप्रतिरूपमीहसे ॥ परेनुजीवत्यपरस्ययामृतिर्विपर्ययश्चेत्त्वमसिध्रुवःपरः ५३ नाहिक्रमश्चेदिहमृत्युजन्मनोःशरीरिणामस्तुतदात्मकर्मभिः ॥ यःस्नेहपाशोनिजसर्गवृद्धयेस्वयंकृतस्तेतामिमंविवृश्चसि ५४ त्वंतातनार्हसिचमांकृपणामनाथांत्यक्तुंविचक्ष्वपितरंतवशोकततम् ॥ अंजस्तरेमभवताऽप्रजदुस्तरंयध्द्वांतंनयाह्यकरुणेनयमेनदूरम् ५५ उत्तिष्ठताततइमेशिशवोवयस्यास्त्वामाह्वयंतिनृपनंदनसंविहर्तुम् ॥ सुप्तश्चिरंह्यशनयाचभवान्परीतोभुंक्ष्वस्तनंपिबशुचोहरनःस्वकानाम् ५६ नाहंतनूजददृशेहतमंगलातेमुग्धस्मितंमुदितवीक्षणमाननाब्जम् ॥ किंवागतोस्यपुनरन्वयमन्यलोकंनीतोघृणेननशृणोमिकलागिरस्ते ५७ ॥ श्रीशुकउवाच ॥ विलपंत्यामृतंपुत्रमितिचित्रविलापनैः ॥ चित्रकेतुर्भृशंतप्तोमुक्तकंठोरुरोदह ५८ तयोर्विलपतोःसर्वेदंपत्योस्तदनुव्रताः ॥ रुरुदुःस्मनरानार्यःसर्वमासीदचेतनम् ५९

तत्रागत्यबालस्यपादमूलेपतित्वा दीर्घंश्वसन्बाष्पकलयारुद्धकंठः भाषितुंनशशाक ५१ ततः राज्ञीशुचार्पितं पतिंमृतं पुत्रं चवीक्ष्य ५२ केशान् विकीर्यशुशोच आहच ५३ अहोविधातः त्वंअज्ञोसि यः आत्मसृष्टेःअननुरूपंचेष्टसे वृद्धेजीवतिसतिबालस्यमृतिरिति किंच एवंसति तवसृष्टिः नष्टास्यात् इत्यादि ५४ हेतातः कृपणांमांत्यक्तुंनार्हसि शोकतप्तंपितरंपश्य किंच अकरुणेनयमेनसहदूरंनयाहि ५५ हेतात उत्तिष्ठ इमेते वयस्याः शिशवः त्वांक्रीडितुं आह्वयंति क्षुधार्तः त्वंमेस्तनंपिब स्वकानांशुचःहर ५६ इदानीं तेकलाः गिरः नशृणोमि यतःयमेनत्वं दूरंनीतोसीत्यादि ५७ ॥ ॥ श्रीशुकउवाच ॥ ॥ हेराजन् चित्रकेतुःमृतंपुत्रंवीक्ष्य तप्तः सन् रुरोद ५८ एवंदंपत्योः विलपतोः सर्वे जनाः रुरुदुः ५९

कश्मलंशोकंप्राप्तम्सर्वमनाथंज्ञात्वा सनारदः नारदेनसह । ६० इतिश्रीभागवतेमहापुराणेषष्ठस्कंधेचतुर्दशोध्यायः॥१४॥ततःपंचदशेचित्रकेतोःशोकापनोदनम् । कृतंतत्त्वोपदेशेननार
देनांगिरोयुजा १ ॥ मृतकोपांतेशवसमीपे ( पतितंतौमुनीऊचतुः ) १ त्वंचास्यबंधुनांकतमः सृष्टौप्रजारूपायां । अयंपुत्रः अहंचास्यपितेतिचेत्तत्राहतुः । पुरेति । येपूर्वजन्मनि पित्रा
दिरूपेणसंयुक्ताआसन्।तएवमरणेनवियुक्ताःसंतोवर्तमानजन्मनिकदाचित्तस्यैवान्यस्यवाकलत्रादयः शत्रुमित्रादयोवाभवंतिअतोनायंनियमइतिभावः२तमेवाभिप्रायंप्रकटयतःयथेति।स्रो
तसःप्रवाहस्यवेगेनयथायांतिवियुज्यंते संयांतिसंयुज्यंतेतथाकालवेगेनदेहिनोजीवाअपि ३तथाप्येतावंतंकालंममपुत्रोनाभूत्वार्धकजातोमृतइतिदुःखमितिचेत्तत्राहतुः।यथाधानासुबीजेषु
धानाः बीजांतराणिभवंतिकासुचित्कदाचिन्नभवंति।नोत्पद्यंते।नश्यंतिच।नतुभवंत्येवातिष्ठंत्येवेतिवानियमः।एवमेवभूतानिपुत्रादिरूपाणिभूतेषुपित्रादिषु।अतोधानानांजन्यजनकत्वेपिपितृ
पुत्रादिभावोनास्ति एवमत्रापीति नशोकःकार्यइतिभावः४ईशमाययाप्रेरितानामिवभवनमभवनम् नवस्तुतः।तस्यचसर्वसाधारणत्वान्नपुत्रएवशोचनीयइत्याहतुः।वयमिति।तुल्यकालावर्त
मानकालीनाःजन्मनःप्राक् मृत्योःपश्चाच्च यथानसंतिएवमधुनापिनसंति • भोराजन्नाद्यंतयोरसत्त्वात्स्वप्नवदित्यर्थः ५ असत्त्वेकथंप्रतीतिः कथंवाहमस्यजनक इत्याद्यभिमानस्तत्राह
तुः भूतैरिति ! ईश्वरेणमाययासृष्टत्वात् प्रतीतिनिमित्तमात्रत्वेनैवचभूतानामयमभिमानइतिभावः । नन्वीश्वरस्य सृष्ट्यादिभिः साध्यमस्तिचेत् अपूर्णकामताप्राप्ता । नास्तिचेत्कुतः
प्रवृत्तिस्तत्राहतुः अनपेक्षोपिबालवल्लीलयाकरोतीति ६ अयंचजन्मादिव्यवहारोदेहानामेवनत्वात्मनइत्याहतुः । देहिनो देहेनापितुःशरीरेणदेहान्मातुःशरीरात्पुत्रस्यदेहोऽभिजाय
ते । यथाबीजादेवबीजंजायते । देहीतुशाश्वतएव । अर्थोभूम्यादिर्यथातद्वत् । ननुनश्वरदेहप्रवृत्तियोगित्वाद्देह्यपिनशाश्वतः स्यात् तत्राहतुः । ७

एवंकश्मलमापन्नंनष्टसंज्ञमनायकम् ॥ ज्ञात्वांऽगिरानाममुनिराजगामसनारदः ६० ॥ इतिश्रीभागवतेमहापुराणेषष्ठस्कंधेचतुर्दशोध्यायः १४ ॥ श्रीशु
कउवाच ॥ ॥ ऊचतुर्मृतकोपांतेपतितंमृतकोपमम् ॥ शोकाभिभूतंराजानंबोधयंतौसदुक्तिभिः १ कोयंस्यात्तवराजेंद्रभवान्यमनुशोचति ॥ त्वंचास्य
कतमःसृष्टौपुरेदानीमतःपरम् २ यथाप्रयातिसंयातिस्रोतोवेगेनवालुकाः॥संयुज्यंतेवियुज्यंतेतथाकालेनदेहिनः ३यथाधानासुवैधानाभवंतिनभवंतिच॥एवं
भूतेषुभूतानिचोदितानीशमायया ४ वयंचत्वंचयेचेमेतुल्यकालाश्चराचराः ॥ जन्ममृत्योर्यथापश्चात्प्राङ्नैवमधुनापिभो ५ भूतैर्भूतानिभूतेशःसृजत्य
वतिहंत्यजः ॥ आत्मसृष्टैरस्वतंत्रैरनपेक्षोपिबालवत् ६ देहेनदेहिनोराजन्देहाद्देहोभिजायते ॥ बीजादेवयथाबीजंदेह्यर्थइवशाश्वतः ७

एवंवर्तमानंज्ञात्वासनारदःअंगिराःआजगाम ६ इतिषष्ठेचतुर्दशः ॥ १४ ॥ ॥ श्रीशुकउवाच ॥ ॥ मृतबालकसमीपे शोकाभिभूतंपतितंराजानंबोधयंतौ नारदांगिर
सौऊचतुः १ हेराजेंद्र त्वं यं अनुशोचसि अयं ते कः अस्यपूर्वजन्मसुकतमः पितासिअयंमेपुत्रः अहमस्यपिता एवंनियमः २ कालत्रयेन यथाप्रवाहवेगेनवालुकाः सं
युज्यंतेवियुज्यंते तथाकालवेगेनजीवाआपि ३ यथाधानानांजन्यजनकत्वेपिपितृपुत्रभावोनास्ति एवंजीवस्यापि अतः शोकोनकार्यः ४ किंचएतेवर्तमानकालीनाः चरा
चराः वयंचत्वंच इमे जन्मनः प्राक् मृत्योः पश्चाच्चयथानसंति तद्वदधुनापि ५ भगवान् भूतैः भूतानिलीलयासृजति अवति हंतिच ६ हेराजन् पितुर्देहेन पुत्र
देहः मातृदेहाज्जायतेयथाबीजात् बीजं ७

देहदेहिनोरयंपरस्परप्रतियोगिविभागः पुराअनादिः अविवेककृतः अज्ञानकल्पितः जातिः सामान्यं व्यक्तिर्विशेषः तयोर्विभागोयथावस्तुनिसन्मात्रेकल्पितः । परस्परापेक्षसिद्ध त्वेनानिरूप्यत्वात्तद्वत् ८ आधिनाशोकेनम्लानंवक्रं ९ १० उन्मत्तस्येवलिंगंयेषांते ( ग्राम्यबुद्धीनाम् क्षियधियाम् ) ११ १२ १३ १४ १५ ममप्रभूरक्षकौबोधेसमर्थौविविवा । अतो युवाभ्यांज्ञानदीपःप्रवर्त्यताम् १६ १७ महापुरुषगोचरंहरिभक्तंत्वां १८ १९ तदैवयदापूर्वमागतोस्मि ( परंतुअन्याभिनिवेशंअचात्मनिपुत्रेअत्यंतासक्तिं ) २०

देहदेहिविभागोयमविवेककृतःपुरा ॥ जातिव्यक्तिविभागोयंयथावस्तुनिकल्पितः ८ ॥ ॥ श्रीशुकउवाच ॥ ॥ एवमाश्वासितोराजाचित्रकेतुर्द्विजोक्तिभिः ॥ प्रमृज्यपाणिनावक्रमाधिम्लानमभाषत ९ ॥ ॥ राजोवाच ॥ ॥ ॥ कौयुवांज्ञानसंपन्नौमहिष्ठौचमहीयसाम् ॥ अवधूतेनवेषेणगूढाविहसमागतौ १० चरंतिह्यवनौकामंब्राह्मणाभगवत्प्रियाः ॥ मादृशांग्राम्यबुद्धीनांबोधायोन्मत्तलिंगिनः ११ कुमारोनारदऋभुरंगिरादेवलोऽसितः ॥ अपांतरतमोव्यासोमार्कंडेयोथगौतमः १२ वसिष्ठोभगवान्रामःकपिलोबादरायणिः ॥ दुर्वासायाज्ञवल्क्यश्चजातूकर्ण्यस्तथारुणिः १३ रोमशश्च्यवनोदत्तआसुरिःसपतंजलिः ॥ ऋषिर्वेदशिरावोध्योमुनिःपंचशिरास्तथा १४ हिरण्यनाभःकौशल्यःश्रुतदेवऋतध्वजः ॥ एतेपरेचसिद्धेशाश्चरंतिज्ञानहेतवः १५ तस्माद्युवांग्राम्यपशोर्ममूढधियाप्रभू ॥ अंधेतमसिमग्नस्यज्ञानदीपउदीर्यताम् १६ ॥ अंगिराउवाच ॥ ॥ अहंतेपुत्रकामस्यपुत्रदोऽस्म्यंगिरानृप ॥ एषब्रह्मसुतःसाक्षान्नारदोभगवानृषिः १७ इत्थंत्वांपुत्रशोकेनमग्नंतमसिदुस्तरे ॥ अतदर्हमनुस्मृत्यमहापुरुषगोचरम् १८ अनुग्रहायभवतःप्राप्तावावामिहप्रभो ॥ ब्रह्मण्योभगवद्भक्तोनावसीदितुमर्हति १९ तदैवतेपरंज्ञानंददामिगृहमागतः ॥ ज्ञात्वाऽन्याभिनिवेशंतेपुत्रमेवददाम्यहम् २०

जीवस्तुशाश्वत एव अयंपितृपुत्रादिविभागः अविवेककृतोस्तिअतः शोकंमाकुरुइत्यादि ८ ॥ ॥ श्रीशुकउवाच ॥ एवंतैः आश्वासितोराजापाणिनावक्रंविमृज्यउवाच ९ युवांज्ञानसंपन्नौ अवधूतवेषेणगूढौकौ १० भगवद्भक्ताः ब्राह्मणाः मादृशांअज्ञानांबोधायभूमौचरंति ११ तेच कुमाराः नारदः ऋभुः अंगिराः देवलः असितः अपांतरतमः व्यासः मार्कंडेयः गौतमः वसिष्ठः परशुरामः कपिलः दुर्वासाः याज्ञवल्क्यः जातूकर्ण्यः आरुणिः रोमशः च्यवनः दत्तः आसुरिः पतंजलिः वेदशिराः बोधः पंचशिराः हिरण्यनाभः कौशल्यः ऋतदेवः ऋतध्वजः एते १२ १३ १४ १५ अन्येचेति युवयोः एष्वेवांतर्गतत्वमस्तिअतः ग्राम्यपशोःअंधेतमसिमग्नस्यम मज्ञानदीपः उदीर्यताम् १६ ॥ ॥ अंगिराउवाच हेनृप पुत्रकामस्यते पुत्रदोयः सएवाहमंगिरास्मि अयंतु नारदः १७ पुत्रशोकेमग्नंत्वांज्ञात्वा १८ अनुग्रहाय आवांप्राप्तौ ब्रह्मण्यः भगवद्भक्तः दुःखंप्राप्तुंनार्हति १९ किंच अहं पूर्वमेव ते ज्ञानोपदेशायप्राप्तः तदातुते अन्याभिनिवेशंज्ञात्वा पुत्रमेवअदाम् २०

राधः अर्थाः(विविधानि ऐश्वर्याणि संपदश्च।)२१चलाअनित्याःकिंचमहीति २२हे शूरसेन इमेसर्वेपिशोकादिप्रदाः । किंचआगमापायित्वेनगंधर्वनगरतुल्याःगंधर्वनगरंह्यकस्मादेवकावि
दायातिचापयातिचेतिप्रसिद्धं । तदेवमनित्यत्वं शोकादिहेतुत्वंचागमापायित्वंचोक्तं । मिथ्यात्वमप्याह । स्वप्नश्चमायाचमनोरथश्चयथा । तद्वत् २३ मनोभवामनोमात्रविजृंभिताः ।
अत्रहेतुः अर्थनतात्त्विकस्वरूपेणविनैवदृश्यमानाः तत्कुतः यस्मात्क्षणांतरेनदृश्यंते । तात्त्विकत्वेहि क्षणांतरेबाधोनस्यात् । अतो मनोमात्रविजृंभितत्वेन स्वप्नादिवन्मिथ्याभूताइ
त्यर्थः । नन्वेतेपुण्यापुण्यकृताइतिमीमांसकाःप्राहुस्तत्कुतोमनोभवत्वंतत्राह । कर्मभिः कर्मवासनाभिः अर्थान्ध्यायतः पुंसोमनसएवनिमित्तात् कर्माण्यभवन् । पाठांतरे कर्मईप्सितत
ममभिध्यायतइत्यर्थः।कर्मणोपिमनोभवत्वात्तत्साध्या अर्थाअपिमनोभवाएवेतिभावः २४ तदेवंममतास्पदानांदुःखादिहेतुत्वमुक्तं । तत्रदेहसंबंधो मूलमित्याह । अयंहीति । हीत्यव
धारणे । अयंद्रव्यज्ञानक्रियात्मकः अधिभूताधिदैवाध्यात्मरूपोदेहएवदेहिनो देहोहमिति मन्यमानस्यदेहिनोजीवस्यविविधान् क्लेशान् संतापांश्च करोतीतितथा २५ स्वस्थेनअव्य
ग्रेण । गतिंतत्त्वं । ध्रुवोऽयमर्थइति विश्रंभंविश्वासं प्रणयंवात्यज ततश्चउपशममाविशआश्रय २६ अंगिरसोपादिष्टंतत्त्वं परमेश्वरप्रसादंविनानप्राप्यतइतितत्प्रसादायमंत्रविद्यांनारद
उपदिशति । एतामिति । उपनिषदण्णंपरंश्रेयोस्यामिति उपनिषत् मंत्रएवोपनिषत्तांप्रतीच्छगृहाण द्रष्टाद्रक्ष्यतिभवान् २७ अतुलंचतदनाधिकंच समानाधिकशून्यं परं
महिमानंप्रापुः । उपैतिउपैष्यति २८ इतिषष्ठस्कंधेटीकायांपंचदशोध्यायः ॥ १५ ॥

अधुनापुत्रिणांतापोभवतैवानुभूयते ॥ एवंदारागृहारायोविविधैश्वर्यसंपदः २१ शब्दादयश्चविषयाश्चलाराज्यविभूतयः ॥ राज्यंमहीबलंकोशोभृत्यामा
त्याःसुहृज्जनाः २२ सर्वेपिशूरसेनेमेशोकमोहभयार्तिदाः ॥ गंधर्वनगरप्रख्याःस्वप्नमायामनोरथाः २३ दृश्यमानाविनार्थेननदृश्यंतेमनोभवाः ॥ कर्मभि
र्ध्यायतोनानाकर्माणिमनसोऽभवन् २४ अयंहिदेहिनोदेहोद्रव्यज्ञानक्रियात्मकः ॥ देहिनोविविधक्लेशसंतापकृदुदाहृतः २५ तस्मात्स्वस्थेनमनसाविमृ
श्यगतिमात्मनः ॥ द्वैतेध्रुवार्थविस्रंभंत्यजोपशममाविश २६ ॥ श्रीनारदउवाच ॥ ॥ एतांमंत्रोपनिषदंप्रतीच्छयतोमम ॥ यांधारयन्सप्तरात्राद्द्र
ष्टासंकर्षणंप्रभुम् २७ यत्पादपद्ममुपसृत्यनरेंद्रपूर्वेशर्वादयोभ्रममिमंद्वितयंविसृज्य ॥ सद्यस्तदीयमतुलानधिकंमहत्वंप्रापुर्भवानपिपरंनचिरादुपैति २८
इतिश्रीभागवतेमहापुराणेषष्ठस्कंधेपंचदशोऽध्यायः ॥ १५ ॥ ॥ ६ ॥

इदानीं पुत्रवतांयस्तापः सः त्वयैव अनुभूयते एवंदारादयः गृहाः विविधैश्वर्यसंपदः २१ सर्वेप्येतेशोकमोहभयप्रदाः स्वप्नमायामनोरथाइवमिथ्यासंति २२ २३ २४
२५ अतः स्वस्थेनमनसा आत्मनस्तत्त्वं विमृश्य द्वैते स्थिरविश्वासंत्यज उपशमं आश्रय २६ ॥ नारदउवाच ॥ हेराजन् मत्तः एतांमंत्रोपनिषदं गृहाणयांधारयन्
सप्तरात्रात् संकर्षणं विभुं द्रक्ष्यसि २७ शर्वादयः यत्पादमूलंउपसृत्यभ्रमंविसृज्यमहित्वंआपुः तथाभवानपि अचिरात् उपैष्यति २८ ॥ इतिषष्ठेपंचदशः ॥ १५ ॥

षोडशेतत्सुतोत्तयैवविशोकीकृत्यतंनृपं । आदिदेशमहाविद्यांनारदः शेषतोषिर्णां ॥ १॥१ आदौतावत्तत्पुत्रमुखेनैवापितृपुत्रादिसंबंधोमिथ्येतिदर्शयितुं योगबलेन तमेवज्ञातीनांदर्शायि त्वाजीवात्मन्नित्याद्युवाच २ शेषमवशिष्टमायुरस्ति अपमृत्युनामृतत्वादित्यर्थः । तदेवकलेवरंप्रविश्येतिथतोजीवउवाच । यद्वांऽतराले प्रेतशरीरेस्थित्वेतिज्ञेयं ३ मह्यंमम ४ मयि मृतेपुत्रदृष्ट्याशोकश्चेत् शत्रुदृष्ट्याहर्षः किंनक्रियतेइत्याशयेनसंबंधस्यानियतत्वमाह । बंधवोविवाहादिभिः संबंधिनः । ज्ञातयः सपिंडाः । अरयोघातकाः । मित्राणिरक्षकाः । मध्य स्थाउभयव्यतिरिक्ताः साधारणाः।द्विद्विषोद्रव्यादिनिमित्तेनद्वेषिणः । उदासीनास्तव्द्यतिरिक्ताइतिभेदः ५ कर्मभिर्भ्राम्यमाणत्वेदृष्टांतः यथापण्यानिक्रयविक्रयाद्यर्हाणिकर्तृषुव्यवहर्तृ षुपरिभ्रमंति एवंजीवोपियोनिषुजनकेषु ६ एकस्मिन्नपिजन्मनिसंबंधस्यानियतत्वंसदृष्टांतमाहद्वाभ्यां नित्यस्यजीवतोपि अर्थस्यपश्वादेः अनित्यः अनियतः विक्रयादिनासंबंधनिवृत्ते दृष्टत्वात् ७ एवं योनिगतःपित्रादिसंबधंप्राप्तोपि सजीवोनित्यः । देहजन्मादिनातस्यजन्माद्यभावात् । अतएववस्तुतो निरहंकृतः । अहमस्यपुत्रइत्यभिमानशून्यः। यत्रापित्रादौसं बंधिनियावदुपलभ्येत कर्मवशेनवर्तेतातावदेव तस्यपित्रादेः तत्तस्मिन्स्वत्वंनतुक्रियाद्युत्तरकालमपि अथचैवंसंबंधः यदुक्तं कलेवरंस्वमाविश्येति तत्रतस्मिन् कलेवरे ममेदानीं स्वत्वं निवृत्तमिति सदृष्टांतमाह नित्यस्यचिरकालावस्थायिनः सुवर्णादेः योनिगतो देहंप्रविष्टः यत्रदेहेतस्यजीवस्यतत्तस्मिन्देहेस्वत्वं नतुमरणोत्तरकालमपीत्यर्थः । शेषंसमानं ८ जीवस्य नित्यत्वंसाधयति एषनित्यः तत्रहेतुः अव्ययःअपक्षयशून्यः तत्कुतः । सूक्ष्मो जन्मादिशून्यः । तच्चकुतः सर्वाश्रयः जन्मादिमतोदेहादेराश्रयः नतुदेहादिरूपः यतः स्वदृक् स्वप्रकाशः सर्वाश्रयत्वमुपपादयति । आत्ममायागुणैरात्मानमेवविश्व विश्वात्मकं सृजति "तदात्मानं स्वयमकुरुत"इतिश्रुतेः उपादानकारणत्वात् सर्वाश्रयइत्यर्थः जीवस्यवस्तुतो ब्रह्मत्वाद्ब्रह्म णएवाचिच्छक्तिविशिष्टस्येश्वरत्वेनस्रष्टृत्वाज्जीवःसृजतीतिवाचोयुक्तिः यद्वास्वकर्मद्वारासृष्टिनिमित्तत्वेन स्रष्टृत्वं । भोग्यस्यचसर्वस्य भोक्ताश्रयत्वात् सर्वाश्रयत्वंचोक्तमिति द्रष्टव्यं ९

॥ श्रीशुकउवाच ॥ ॥ अथदेवऋषीराजन्संपरेतंनृपात्मजम् ॥ दर्शयित्वेतिहोवाचज्ञातीनामनुशोचताम् १ ॥ ॥ श्रीनारदउवाच ॥ ॥ जी वात्मन्पश्यभद्रंतेमातरंपितरंचते ॥ सुहृदोबांधवास्तप्तान्शुचात्वत्कृतयाभृशम् २ कलेवरंस्वमाविश्यशेषमायुःसुहृद्वृतः ॥ भुंक्ष्वभोगान्पितृप्रत्तान धितिष्ठनृपासनम् ३ ॥ जीवउवाच ॥ कस्मिञ्जन्मन्यमीमह्यंपितरोमातरोऽभवन् ॥ कर्मभिर्भ्राम्यमाणस्यदेवतिर्यङ्नृयोनिषु ४ बंधुज्ञात्यरिमध्यस्थ मित्रोदासीनविद्विषः ॥ सर्वएवहिसर्वेषांभवंतिक्रमशोमिथः ५ यथावस्तूनिपण्यानिहेमादीनिततस्ततः ॥ पर्यटंतिनरेष्वेवंजीवोयोनिषुकर्तृषु ६ नि त्यस्यार्थस्यसंबंधोह्यनित्योदृश्यतेनृषु ॥ यावद्यस्यहिसंबंधोममत्वंतावदेवहि ७ एवंयोनिगतोजीवःसनित्योनिरहंकृतः ॥ यावद्यत्रोपलभ्येततावत्स्वत्वं हितस्यतत् ८ एषनित्योऽव्ययःसूक्ष्मएषसर्वाश्रयःस्वदृक् ॥ आत्ममायागुणैर्विश्वमात्मानंसृजतेप्रभुः ९

॥ ॥ श्रीशुकउवाच ॥ ॥ हेराजन् अथदेवार्षिः मृतंनृपात्मजं ज्ञातीनांदर्शयित्वाउवाच १ हेजीवात्मन् मातरंपितरंशोचतः सुहृदश्चपश्यपश्य २ स्वंकलेवरं आविश्य पितृदत्तान्भोगान् भुंजन्नृपासनं अधितिष्ठ ३ ॥ ॥ जीवउवाच ॥ ॥ कर्मभिः देवतिर्यङ्नृयोनिषुभ्राम्यमाणस्यमेकस्मिन् जन्मनि अमीपितरः मातरः अभवन् ४ यथापण्यानि वस्तूनि व्यवहर्तृषु इतस्ततः पर्यटंति तथा जीवः कर्मणा भ्रमति ५ ६ एवंच जीवोनित्यः सर्वेंद्रियसाक्षी स्वतंत्रोस्ति ७ ८ ९

यदुक्तं सुहृद्वृतइति सुहृदोबांधवास्तथाइतिचतदप्याह । नह्यस्येति। तत्रहेतुः।एकः सुहृदादिसंगरहितः तत्कृतः गुणदोषयोर्हिताहितयोः कर्तॄणां मित्रादीनांयाः सर्वाधियो विचित्रा बु द्धयः तासांद्रष्टामात्रसाक्षी १० यच्चोक्तं भुंक्ष्वभोगानित्यादितत्राप्याह । नादत्तइति । गुणंसुखं । दोषंदुःखम् । क्रियाफलंचराज्यादिकम् । उदासीनत्वेहेतुः । परावरदृक् । कारणस्यकार्य स्यचसाक्षी । नतुभोक्ता । यतईश्वरःदेहादिपारतंत्र्यशून्यः । अतएवंभूतस्यममचयुष्माकंच संबंधाभावाच्छोकंमाकुरुतेतिवाक्यार्थः ११ । १२ । १३ । द्विजभाषितंअंगिरसाप्रोक्तं पुत्रा दीनांदुःखहेतुत्वंस्मरंत्यः पुत्रकामनाशून्याः निर्मत्सराःसत्यइतिभावः १४ निबिडपंकतुल्यंगृहंविहायनिष्क्रमणंअतिधीरस्यतस्यैवयोग्यंनान्यस्येति सदृष्टांतमाह । सरसः पंकात्द्वि पोगजइवेति १५ कृताः पुण्यजलक्रियाः ( आचमन-) तर्पणाद्यायेन । संयतप्राणो नियतेंद्रियः १६ धीमहिध्यायेममनसानमस्यामइत्यर्थः १७ १८ ( विज्ञानमात्राय ब्रह्मानुभवैक रूपाय ) । निवृत्ताद्वैतदृष्टिर्यस्मात् ( तस्मै ) । १९ । न्यस्तानिरस्ताः शक्तयुर्मयोमायानिमित्तारागद्वेषादयोयेन २० मनसासहवचासि अप्राप्योपरतेसति यएकएवप्रकाशते । वच सीतिसर्वेंद्रियोपलक्षणम् । सोऽस्मानव्यात्सदसत्परः कार्यकारणयोःकारणम् ( अधिष्ठानं ) २१

**नह्यस्यातिप्रियःकश्चिन्नाप्रियःस्वःपरोपिवा ॥ एकःसर्वधियांद्रष्टाकर्तॄणांगुणदोषयोः १० नादत्तआत्माहिगुणंनदोषंनक्रियाफलम् ॥ उदासीनवदासीनः परावरदृगीश्वरः ११ ॥ श्रीशुकउवाच ॥ ॥ इत्युदीर्यगतोजीवोज्ञातयस्तस्यतेतदा ॥ विस्मितामुमुचुःशोकंछित्त्वाऽऽत्मस्नेहशृंखलाम् १२ निर्हृत्य ज्ञातयोज्ञातेर्देहंकृत्वोचिताःक्रियाः ॥ तत्यजुर्दुस्त्यजंस्नेहंशोकमोहभयार्तिदम् १३ बालघ्न्योव्रीडितास्तत्रबालहत्याहतप्रभाः ॥ बालहत्याव्रतंचेरुर्ब्राह्मणै र्यन्निरूपितम् ॥ यमुनायांमहाराजस्मरंत्योद्विजभाषितम् १४ सइत्थंप्रतिबुद्धात्माचित्रकेतुर्द्विजोक्तिभिः ॥ गृहांधकूपान्निष्क्रांतःसरःपंकादिवद्विपः १५ कालिंद्यांविधिवत्स्नात्वाकृतपुण्यजलक्रियः ॥ मौनेनसंयतप्राणोब्रह्मपुत्राववंदत १६ अथतस्मैप्रपन्नायभक्तायप्रयतात्मने ॥ भगवान्नारदःप्रीतोविद्यामे तामुवाचह १७ ॐनमस्तुभ्यंभगवतेवासुदेवायधीमहि ॥ प्रद्युम्नायानिरुद्धायनमःसंकर्षणायच १८ नमोविज्ञानमात्रायपरमानंदमूर्तये ॥ आत्मारामायशांतायनिवृत्तद्वैतदृष्टये १९ आत्मानंदानुभूत्यैवन्यस्तशक्त्यूर्मयेनमः ॥ हृषीकेशायमहतेनमस्तेनंतमूर्तये २० वचस्युपरतेऽप्राप्ययए कोमनसासह ॥ अनामरूपश्चिन्मात्रःसोऽव्यान्नःसदसत्परः २१**

एवंभूतस्य ममयुष्माकंच संबंधाभावात् शोकंमाकुरु १० ११ ॥ ॥ श्रीशुकउवाच ॥ ॥ इत्युदीर्य जीवोगतः ततः सर्वेशोकंमुमुचुः मृतबालस्यक्रियाश्चक्रुः १२ १३ तत्रबालघ्न्यः स्त्रियः ब्राह्मणैःनिरूपितं बालहत्याव्रतंयमुनायांचक्रुः १४ एवं द्विजोक्तिभिः प्रतिबुद्धात्माचित्रकेतुः गृहांधकूपात् निष्क्रम्य १५ कालिंद्यांस्नात्वा सं यतप्राणः ब्रह्मपुत्रौ अवंदत १६ अथ नारदः प्रपन्नाय तस्मै एतांविद्यांउवाच १७ नमस्तुभ्यंभगवतेवासुदेवायधीमहि प्रद्युम्नायानिरुद्धायनमःसंकर्षणायच १८ आत्मा रामायपरमानंदमूर्तयेनमः १९ हृषीकेशाय विश्वमूर्तयेनमः २० इंद्रियेषूपरतेषुयः प्रकाशते सः सदसत्परः नःअव्यात् २१

तदेवाह । यस्मिन्निदंकार्यकारणंचातिष्ठति । अप्येतिप्रलीयतेच । यतश्चजायते । मृन्मयेषुघटादिषुमृज्जातिर्मृन्मात्रमिवसर्वानुस्यूतंयत्तस्मै २२ ननुसर्वानुस्यूतंचेत् जातिवत्प्रतीयेतकथं मनोवचसोरप्राप्तिस्तत्राह । यत्ब्रह्मव्योमवद्विततमपि असवः प्राणाः क्रियाशक्त्यानस्पृशंति मनआदीनिचज्ञानशक्त्यानविदुः । तद्ब्रह्मनतोस्मि २३ तेषांतदज्ञानेहेतुमाह । देहेंद्रियमन्द योऽमीविकाराः यदंशविद्धाः यच्चैतन्यांशेनाविष्टाःसंतः कर्मसुस्वस्वविषयेषुप्रचरंतिजाग्रत्स्वप्नयोः । अन्यदासुषुप्तिमूर्छादौनैवप्रचरंतियथाअप्रतप्तंलोहंनदहाति अतोयथालोहं अग्निशक्त्यै वदाहकर्मसदग्निंविनानदहाति । एवंब्रह्मगतज्ञानाक्रियाशाक्तिभ्यांप्रवर्तमानादेहादयस्तंनस्पृशांति नाविदुश्चेतिभावः । जीवस्तर्हिद्रष्टृत्वाज्जानातुनेत्याह । स्थानेषुजाग्रदादिषुद्रष्टृपदेशं द्रष्टृ मज्ञातदेवेति । नान्योजीवोनामास्ति । "नान्योतोस्तिद्रष्टा" इत्यादिश्रुतेः । यद्वा । द्रष्टृपदेशंद्रष्टृसंज्ञंजीवमपि तदेवप्रतिजानातिनतुजीवस्तज्जानातीत्यर्थः । तदुक्तंहंसगुह्यस्तोत्रे । "देहोऽसवोऽक्षा" इत्यादि २४ सकलायेसात्वतपरिवृढास्तेषांनिकरःसमूहस्तस्यकरकमलानांकुड्मलैर्मुकुलैरुपलालितंचरणारविंदयुगलंयस्यतस्य संबोधनम् । परमउत्कृष्ट । परमेष्ठिन् सर्वेश्वर २५ पूर्वंसनारदोंगिराआजगामेतिअंगिराः प्राधान्येनोक्तः । चित्रकेतोःपुत्रप्रदत्वेनतस्यपृथगुक्तत्वात् । इहतु नारदोंऽगिरसासाकंययौ इतिनारदस्यप्राधान्यनिर्देशःतदुप देशेनतस्यवैराग्योत्पत्तेः । प्रभोहेसमर्थ । २६ यथावद्यथावद्धारयामास २७ विद्याधराधिपत्यंचावांतरफलंलेभे । अप्रतिहतमस्खलितम् । २८ कतिपयैरहोभिः विद्ययाइद्धेनदीप्तेनमन सागतिर्यस्य २९ मृणालवद्गौरम् शितिवाससंनीलांबरम् । स्फुरंतिकिरीटादीनियस्य कटित्रंकटिसूत्रम् । प्रसन्नानिवक्त्राणियस्य । अरुणानिलोचनानियस्यतंचतंच । ३०

यस्मिन्निदंयतश्चेदंतिष्ठत्यप्येतिजायते ॥ मृन्मयेष्विवमृज्जातिस्तस्मैतेब्रह्मणेनमः २२ यन्नस्पृशंतिनविदुर्मनोबुद्धींद्रियासवः ॥ अंतर्बहिश्चविततंव्यो मवत्तंनतोस्म्यहम् २३ देहेंद्रियप्राणमनोधियोमीयदंशविद्धाःप्रचरंतिकर्मसु ॥ नैवान्यदालोहमिवाप्रतप्तंस्थानेषुतद्द्रष्टृपदेशमेति २४ ॐनमोभगवतेम हापुरुषायमहानुभावायमहाविभूतिपतयेसकलसात्वतपरिवृढनिकरकरकमलकुड्मलोपलालितचरणारविंदयुगलपरमपरमेष्ठिन्नमस्ते २५ ॥ श्रीशुकउवा च ॥ ॥ भक्तायैतांप्रपन्नायविद्यामादिश्यनारदः ॥ ययावंगिरसासाकंधामस्वायंभुवंप्रभो २६ चित्रकेतुस्तुतांविद्यांयथानारदभाषिताम् ॥ धारयामा ससप्ताहमब्भक्षःसुसमाहितः २७ततश्चसप्तरात्रांतेविद्ययाधार्यमाणया ॥ विद्याधराधिपत्यंसलेभेऽप्रतिहतंनृप २८ ततःकतिपयाहोभिर्विद्ययेद्धमनोगतिः ॥ जगामदेवदेवस्यशेषस्यचरणांतिकम् २९मृणालगौरंशितिवाससंस्फुरत्किरीटकेयूरकटित्रकंकणम् ॥ प्रसन्नवक्त्रारुणलोचनंवृतंददर्शसिद्धेश्वरमंडलैःप्रभुम् ३०

यस्मिन् इदं जगत् तिष्ठति जायते नश्यतिच तस्मै ब्रह्मणेनमः २२ किंचबुद्ध्यादयः यंनविदुः तंहरिं नतोस्मि २३ ॐ नमो भगवते महापुरुषाय महाविभूतिपतये तेनमोस्तु २४ २५ ॥ ॥ श्रीशुकउवाच ॥ ॥ नारदः भक्तायएतां विद्यांआदिश्य अंगिरसासह ब्रह्मलोकंययौ २६ चित्रकेतुः अब्भक्षः सन् नारदभाषितां विद्यांसप्ता हं धारयामास २७ ततः धार्यमाणयातयाविद्ययासप्तरात्रांतेविद्याधराधिपत्यंलेभे २८ ततः कतिपयैः दिवसैः शेषस्य चरणांतिकं जगाम २९ ततः तत्रनीलांबरं किरीटादिभिर्भूषितं प्रभुं ददर्श ३०

दृष्ट्वाचतमादिपुरुषम् अभ्ययाच्छरणंगतः। अनमन्ननाम। कथंभूतः तस्यदर्शनेनध्वस्तंसमस्तंकिल्बिषंयस्य। स्वच्छममलंचांतःकरणंयस्य। ( स्वच्छत्वंप्रसादः। प्रणयेनाश्रुयुक्ते लोचनेयस्यप्रहृष्टानिरोमाणिपस्यसः ३१ तंप्रसमीडितुंस्तोतुंचिरंनैवाशकन्नशशाक। तत्रहेतुः। उत्तमश्लोकस्यपादाब्जयोर्विष्टरमासनम् उपमेहयन् अभिषिंचन् प्रेम्णाउपरुद्धः अखि लानांवर्णानांनिर्गमउच्चारणंयस्यसः ३२ मनीषयाबुद्ध्यामनःसमाधायैतद्वक्ष्यमाणंवभाषे। प्रतिलब्धावाक्येन। सात्वतशास्त्रोक्तोविग्रहोयस्यतम् ३३ ''अन्योन्यप्रेमजानंदनिभृतान्स्वा मिसेवकान्। अभिनंदनमुदास्ताातिदशभिःपंचभिर्विभुम्''। हेअजितअन्यैरजितोपिभवान् साधुभिर्भक्तैःजितःस्वाधीनएवकृतः। यतोभवानतिकरुणः। तेपिचनिष्कामाअपि भवता विजिताः योभवानकामात्मनाम् आत्मानमेवददाति३४ ननुभक्तैरेवजितइतिकथम्। स्पर्धमानैरपिसृष्ट्यादिकर्तृभिरन्यैरीश्वरैर्जयमंभवान्तत्राह। तवेति। जगतउदयादीनितवैवविभ वःविभवनंमहिमालीलेतियावत्। आदिशब्देनप्रवेशनियमादीनि। विश्वसृजस्तुब्रह्मादयोनेश्वराः। किंतुतेतवांशोयःपुरुषस्तस्यांशाः। तत्रएवंस्थितेपिपृथगीश्वरावयमित्यभिमानेनवृ थैवस्पर्धंते ३५ त्वमेवविश्वसृष्ट्यादिकर्तेत्येतत् उपपादयति परमाणुः सूक्ष्ममूलकारणंपरममहत् अंतिमंकार्यम् तयोस्त्वमेवाद्यंतांतरवर्ती आदावंतेच अंतरेमध्येचवर्तितुंशीलंयस्यसःअत एवत्रयविधुरःआद्यंतमध्यशून्यः ध्रुवः। तेचत्वयासृज्यंतेनतुध्रुवाः। कुतइत्याह। सत्त्वानांसत्त्वेन ( ससत्तया)प्रतीतानां कार्याणांआदावंतेपियत् ध्रुवंअनपायिअंतरालेपितदवध्रुवंसुवर्णा दिवत् ३६ एवंध्रुवत्वेनकालतः परिच्छेदोनास्तीत्युक्तंदेशतोप्यपरिच्छेदमाह। क्षितीति। पूर्वस्मात्पूर्वस्माद्दशगुणोत्तरैर्दशगुणमधिकैः ( क्षित्यंबुतेजोवाय्वाकाशाहंकारमहद्भिः-)आ वृतः ( आंडकोशःएतादृशांडकोटिभिः सहएषः ) यत्रत्वयिअणुतुल्यः पततिपरिभ्रमतितस्मादनंतस्त्वम् ३७

तद्दर्शनध्वस्तसमस्तकिल्बिषःस्वच्छामलांतःकरणोऽभ्ययान्मुनिः ॥ प्रवृद्धभक्त्याप्रणयाश्रुलोचनःप्रहृष्टरोमाऽनमदादिपूरुषम् ३१ सउत्तमश्लोकपदाब्ज विष्टरंप्रेमाश्रुलेशैरुपमेहयन्मुहुः ॥ प्रेमोपरुद्धाखिलवर्णनिर्गमोनैवाशकत्तंप्रसमीडितुंचिरम् ३२ ततःसमाधायमनोमनीषयावभाषएतत्प्रतिलब्धवाग सौ ॥ नियम्यसर्वेंद्रियबाह्यवर्तनंजगद्गुरुंसात्वतशास्त्रविग्रहम् ३३ ॥ ॥ चित्रकेतुरुवाच ॥ अजितजितःसममतिभिःसाधुभिर्भवानजितात्मभिर्भवता ॥ विजितास्तेपिचभजतामकामात्मनांयआत्मदोऽतिकरुणः ३४ तवविभवःखलुभगवन्जगदुदयस्थितिलयादीनि ॥ विश्वसृजस्तेंऽशांशास्तत्रमृषास्प र्धंतिपृथगभिमत्या ३५ परमाणुपरममहतोस्त्वमाद्यंतांतरवर्तीत्रयविधुरः ॥ आदावंतेचसत्त्वानांयद्ध्रुवंतदेवांतरालेपि ३६ क्षित्यादिभिरेषकिलावृतः सप्तभिर्दशगुणोत्तरैरांडकोशः ॥ यत्रपतत्यणुकल्पःसहांडकोटिभिस्तदनंतः ३७

तद्दर्शनध्वस्तसमस्तकिल्बिषः प्रवृद्धभक्त्याअश्रुलोचनःसन् तंनत्वा ३१ प्रेमाश्रुलेशैः प्रभोरासनं अभिषिंचन् स्तोतुं नशशाक ३२ ततः मनः समाधाय जगद्गुरुंअस्तौ त् ३३ ॥ ॥ चित्रकेतुरुवाच ॥ ॥ हेअजित सममतिभिः साधुभिः त्वंजितोसि तेचत्वयाजिताः ३४ हेभगवन् अयंआंडकोशः क्षित्यादिभिः सप्तावरणैः आवृ तः सन् त्वयि अणुवत् परिभ्रमति तस्मात्त्वंअनंतोसि ३५ ३६ ३७

यस्मादेवंपरमेश्वरस्त्वमेव अन्येदेवास्तवविभूतयः अतस्त्वांविहाय विषयकाममयाऽन्योपासकाअतिमंदाइत्याह । विषयेषुतृट्तृष्णायेषांते वराकाराः पशवः। कुक्क येविभूतीरिंद्राद्याउ पासतेनतुपरंत्वां । ततः किंतत्राह । तेषामिति । तदनुउपास्यनाशानंतरं । यथाराजकुलमनु । राजकुलनाशानंतरं ( यथा ) तत्सेवकानांआशिषोनश्यंतितद्वत । अयंचपरमोऽवधिः मध्येपिनश्यंत्येव । ३८ विषयकामेनापिकृतात्वत्सेवामोक्षफलैवेत्याह । कामधियः विषयकामनाअपि हेपरमत्वयिरचिताः कृताश्चेत्नरोहंति । देहांतरोत्पत्तये नभवंति । करंभवी जानि भर्जितबीजानियथा । ( नहितप्तखर्परबीजोमिरंकुरायभवति ) यतोऽस्यजीवस्य गुणगणादेवद्वंद्वसमूहाभवंति । अतः कामेनापिनिर्गुणस्यतवभजनाच्छनैर्नैर्गुण्यंभवतीत्यर्थः ३९ फलकामनयापित्वदाराधनंयदामोक्षहेतुस्तदाकिंवक्तव्यम् भगवद्धर्ममाहात्म्यमितिवक्तुम् तत्संप्रदायप्रवर्तकत्वेनचभगवंतंस्तौति । जितमिति । यदाभवान् भागवतंधर्ममाह तदाहेभ गवनूत्वयाजितमसर्वोत्कर्षेणस्थितम् । तत्रहेतुः । येनिष्किंचनाः सनत्कुमारादयोमुनयस्ते ( आत्मारामाजीवन्मुक्ताअपि ) यंभवंतं अपवर्गाय ( अखंडभक्तिरसाय ) सेवंतेतेनभवता जितम् । यंधर्ममितिवा ४० अनवद्यतामेवाह । विषममतिर्यत्रयस्मिन्भागवतेधर्मेनास्ति । यदन्यत्र । यथान्यस्मिन्काम्यधर्मे । ननुसोपिवेदोक्तत्वादनवद्यएवतत्राह । विषमधियाश त्रुमरणादिकामनयारचितोयः सह्यविशुद्धः रागद्वेषादिमत्वात् । क्षयिष्णुश्चनश्वरफलत्वात् । अधर्मबहुलश्चहिंसादिबाहुल्यात् । तदुक्तंशंकरस्वामिभिः 'उभयमिहचोदनायांलक्ष्यते अर्थोऽनर्थश्च'इत्यादि ४१ एतत्प्रपंचयति । कः क्षेमः किंकुशलम् नकिंचित् । निजपरयोः स्वस्यपरस्यच । स्वपरद्रुहास्वस्मैपरस्मैचद्रुह्यतीतिस्वपरध्रुक् ( तेनधर्मेण ) यतः स्वद्रोहा दत्यंतकायक्लेशात्तवकोपः पीडा संभवति । तदुक्तंगीतासु "कर्षयंतःशरीरस्थंभूतग्राममचेतसः । मांचैवांतःशरीरस्थंतान्विद्धयासुरनिश्चयान्"इति । तथापरसंपीडयाधर्मः चशब्दात्तव कोपश्च । अतस्त्वयारागांधमपिकथंचिद्वेदमार्गेप्रवर्तयितुंकाम्यधर्मोऽभिहितो नतत्स्वदृष्ट्या ४२ भागवतधर्मेणतुनद्रोहइत्याह नेति । नव्यभिचरतिनपरमार्थंजहाति । तवईक्षादृष्टिः । अव्यभिचारेहेतुः । स्थिरेति स्थावरजंगमप्राणिसमूहेषुसमबुद्धयोभागवता यंधर्मंसेवंते । ४३ एवंभूतस्य भागवतधर्मप्रवर्तकस्यतवदर्शनात् सर्वपापक्षयोभविष्यतीतिकिंचित्र मित्याह नहीति । पुल्कसोपिश्वपचोपि ४४

विषयतृषोनरपशवोयउपासतेविभूतीर्नपरंत्वाम् ॥तेषामाशिषईशतदनुविनश्यंतियथाराजकुलम् ३८ कामधियस्त्वयिरचितानपरमरोहंतियथाकरंभवी जानि ॥ ज्ञानात्मन्यगुणमयेगुणगणतोऽस्यद्वंद्वजालानि ३९ जितमजितत दाभवतायदाहभागवतंधर्ममनवद्यम् ॥ निष्किंचनायेमुनयआत्मारामायमुपास तेऽपवर्गाय ४० विषममतिर्नयत्रनृणांत्वमहमितिममतवेतिचयदन्यत्र ॥ विषमधियारचितोयःसह्यविशुद्धःक्षयिष्णुरधर्मबहुलः ४१ कःक्षेमोनिजपरयोः कियानर्थःस्वपरद्रुहाधर्मेण ॥ स्वद्रोहात्तवकोपःपरसंपीडयाचतथाऽधर्मः ४२ नव्यभिचरतितवेक्षायया ह्यभिहितोभागवतोधर्मः ॥ स्थिरचरसत्त्वकदंबे ष्वपृथग्धियोयमुपासतेत्वार्याः ४३ नहिभगवन्नघटितमिदंत्वद्दर्शनान्नृणामखिलपापक्षयः ॥ यन्नामसकृच्छ्रवणात्पुल्कसोपिविमुच्यतेसंसारात् ४४

किंच येनरपशवः तवेंद्रादिविभूतीः उपासते नत्वां तेषांआशिषः नश्यंति ३८ विषयकामेनापि कृता त्वत्सेवामोक्षफलैवभवति ३९ हेभगवन्यदाभवान् भागवतं धर्मं आह तदात्वयाजितं जितं यतः यस्मिन् धर्मे विषममतिर्नास्ति ४० ४१ ४२ ४३ हेभगवन्त्वद्दर्शनात् नृणांपापक्षयः इदं अघटितं न यतःयन्नामस्मरणात् पुल्क सोपि संसारात् मुच्यते ४४

( अतोऽहंकृतार्थोस्मीत्याह । ) अथेति । अतोहेतोः त्वदवलोकनेन परिमृष्टा निरस्ताआशयेचित्तेमलायेषांते । त्वद्दर्शनंचमम नारदोपदेशेनजातमित्याह सुरऋषिणेति ( द्रष्टासंकर्षणं विभुमितियदुदितम् । ) ४५ अथचाहंपूर्वमतिमूढआसम् यथाचनारदेनानुगृहीतोस्मि तत्सर्वांतर्यामिणस्तव किंमयाप्रकाशनीयमित्याह विदितमिति । विशेषेणज्ञाप्यंप्रकाशनीयं कियदिवनकिमपीत्यर्थः । सवितुर्यथाखद्योतैः । प्रकाशनीयंनास्तितद्वत् ४६ उक्तलक्षणंभगवंतंप्रणमति । नमइतिद्वाभ्याम् । सकलस्यजगतः स्थित्यादीनामीशाय समर्थाय ( कुयोगिनांभिदाभेददृष्ट्या ) दुरवसिता अविज्ञाता आत्मगतिर्निजतत्त्वंयस्यतस्मै केषां कुयोगिनां केन भिदाभेददृष्ट्या ४७ श्वसंतिचेष्टंते । चेकितानंपश्यंतंअनु । चित्तयोज्ञानेंद्रियाणिउच्चकंतिसारूढपश्यंति तस्मै नमोस्तु ४८ ४९ मेममानुशासनंमद्विषयउपदेशस्तेनच तयाचविद्यया अस्माच्चदर्शनात्संसिद्धोसि ५० तद्बोधदार्ढ्यायस्वयमप्युपादिशति । अहमित्यादिना । सर्वभूतान्यहमेवभूतानामात्माभोक्ताप्यहमेव । भोक्तृभोग्यात्मकं विश्वंमद्व्यतिरिक्तंनास्तीत्यर्थः । यतोहंभूतभावनः भूतानांप्रकाशकः कारणंच । ननुशब्दब्रह्मप्रकाशकं परब्रह्मकारणंच । सत्यम् । तेउभेममैवरूपेइत्याह । शब्दब्रह्मेति । शाश्वतीशाश्वत्यौ ५१ अतस्त्वमेवंपश्येत्याह । लोकेभोग्यप्रपंचेभोक्तृत्वेन विततमनुगतमात्मानं । लोकंचात्मनिभोग्यत्वेनसंततंव्याप्तम् तदुभयंचमयाकारणात्मनाव्याप्तंमयिचैवोभयंकृतंकल्पितंस्मरेदितितृतीयेनान्वयः । पश्येदित्यध्याहारोवा ५२ ननुजाग्रदाद्यवस्थाभेदेन भोक्तृभोग्यात्मकं विश्वंस्फुटंप्रतीयमानं कथंकल्पितंस्यादित्याशंक्य स्वप्नगतजाग्रदादिदृष्टांतेन संभावयन्नाह । यथेतिद्वाभ्यां यथास्वप्नेसुप्तो विश्वंगिरिवनादिरूपंदेशांतरस्थंआत्मन्येवपश्यति । स्वप्नमध्येसुप्तिस्वप्नंचपश्यतीत्यर्थः तथास्वप्नएवउत्थितःसन्आत्मानमेकदेशस्थं शयनदेशेस्थितं मन्यतेजाग्रदवस्थामनुभवति ५३ एवंप्रसिद्धान्यपिजागरणादीनिजीवस्थानानिजीवोपाधेर्बुद्धेरवस्थाभूतानि आत्मनोमायामात्राणीत्येवं विज्ञायतेषांद्रष्टारं अतएवपरम् तदवस्थारहितंआत्मानंस्मरेत् ५४

**अथ भगवन्वयमधुनात्वदवलोकपरिमृष्टाशयमलाः ॥ सुरऋषिणायदुदितंतावकेनकथमन्यथाभवति ४५ विदितमनंतसमस्तंतवजगदात्मनोजनैरिहाचरितम् ॥ विज्ञाप्यंपरमगुरोःकियदिवसवितुरिवखद्योतैः ४६ नमस्तुभ्यंभगवतेसकलजगत्स्थितिलयोदयेशाय ॥ दुरवसितात्मगतयेकुयोगिनांभिदापरमहंसाय ४७ यंवैश्वसंतमनुविश्वसृजःश्वसंतियंचेकितानमनुचित्तयउच्चकंति ॥ भूमंडलंसर्षपायतियस्यमूर्ध्नितस्मैनमोभगवतेऽस्तुसहस्रमूर्ध्ने ४८ ॥ श्रीशुकउवाच ॥ ॥ संस्तुतोभगवानेवमनंतस्तमभाषत ॥ विद्याधरपतिंप्रीतश्चित्रकेतुंकुरूद्वह ४९ ॥ ॥ श्रीभगवानुवाच ॥ ॥ यन्नारदांगिरोभ्यांतेव्याहृतंमेऽनुशासनम् ॥ संसिद्धोसितयाराजन्विद्ययादर्शनाच्चमे ५० अहंवैसर्वभूतानिभूतात्माभूतभावनः ॥ शब्दब्रह्मपरब्रह्ममभेशाश्वतीतनू ५१ लोकेविततमात्मानंलोकंचात्मनिसंततम् ॥ उभयंचमयाव्याप्तंमयिचैवोभयंकृतम् ५२ यथासुषुप्तःपुरुषोविश्वंपश्यतिचात्मनि ॥ आत्मानमेकदेशस्थंमन्यतेस्वप्नउत्थितः ५३ एवंजागरणादीनिजीवस्थानानिचात्मनः ॥ मायामात्राणिविज्ञायतद्द्रष्टारंपरंस्मरेत् ५४**

हेअनंत यस्यतेमूर्ध्निइदं भूमंडलंसर्षपायति तस्मै ते सहस्रमूर्ध्नेनमोस्तु ४५ ४६ ४७ ४८ ॥ ॥ श्रीशुकउवाच ॥ ॥ एवंस्तुतः अनंतःविद्याधरपतिं उवाच ४९ नारदांगिरोभ्यां उक्तोपदेशरूपाविद्यया त्वं सिद्धोसि ५० मेदर्शनाच्च ५१ ५२ ५३ ५४

ननुतंपादृष्टारंइतिकथमुच्यतेस्वापेदृश्यामावेनद्रष्टृत्वाभावात् । तत्राहयेनेति । प्रसुप्तः पुरुषोजीवः येनरूपेणतदास्वापकाले आत्मनः स्वापंनिर्गुणमतींद्रियंसुखंचवेद तमात्मानं ब्रह्म
मामवेहि । तदास्वापसुखयोरसंवेदने "सुखमहमस्वाप्सम्" इतिस्मृतेरसंभवात् ५५ ननुस्वापसाक्षिणादृष्टं कथंजाग्रदवस्थः स्मरेत् । नह्यन्येनदृष्टमन्यःस्मरतितत्राह । उभयंप्रस्वापप्र
तिबोधंचस्मरतः अनुसंदधतः तयोः प्रस्वापप्रतिबोधयोः प्रकाशकत्वेनयदन्वेतितताभ्यांव्यतिरिच्येत ( व्यतिरिक्तंच ) भवेत् एकैकापायेप्यनपायात् । तज्ज्ञानंपरंब्रह्मतदेवनतुभिन्नमि
त्यर्थः । अतोबाल्येदृष्टस्ययौवनेस्मृतिवत् अवस्थांतरत्वेपिस्वापानंदयोः स्मरणंच दृष्टमितिभावः तदेवंभूतंब्रह्मात्मानमवेहीत्यनुषंगः ५६ विपक्षेदोषमाह । यद्यदिएतन्मयिभावंमत्स्व
रूपं ब्रह्मविस्मृतम् तदात्मनः सकाशाद्भिन्नंभवति ततएतस्यपुंसःसंसारोभवति संसारस्वरूपमाह । देहाद्देहोजन्मानंतरंपुनर्जन्म । मृतेरनंतरंमृतिश्च ५७ योन्यंतरेपिभोगादिसंपादनंश
क्यंज्ञानार्थंत्वत्रैवयतितव्यमित्याह लब्ध्वेति । ज्ञानंशास्त्रोक्तम् । विज्ञानमपरोक्षम् । तयोःसंभवोयस्यांताम् ५८ वैराग्यार्थमाह । स्मृत्वेति । ईहायांप्रवृत्तिमार्गे ततईहातःअनीहायां
निवृत्तिमार्गेतुअभयंमोक्षोभवतीतिचस्मृत्वा फलसंकल्पाद्विरमेत् । पाठांतरेनोभयंपरिक्लेशःफलविपर्ययश्चनास्तीत्येवंस्मृत्वा ५९ एतद्विवृणोति । सुखायेतित्रिभिः । दुःखस्यानिवृत्तिः
सुखस्यअप्राप्तिः ६० विज्ञाउद्यमेमप्रवीणावयमित्यभिमानवतां । स्थानत्रयविलक्षणांतुरीयां बुद्ध्वा ६१ दृष्टश्रुताभिर्मात्राभिः ऐहिकामुष्मिकैर्विषयैः । स्वेनतेजसाविवेकबलेन ६२ नचातः
परः पुरुषार्थोस्तीत्याहएतावानिति । योगेनैपुण्यंयस्याः साबुद्धिर्येषां । परस्यात्मनएकंदर्शनमितियत् एतावानेव ६३ ६४ ६५ ॥ इतिषष्ठस्कंधेटीकायांषोडशोऽध्यायः ॥ १६ ॥ छ ॥

येनप्रसुप्तःपुरुषःस्वापंवेदात्मनस्तदा॥सुखंचनिर्गुणंब्रह्मतमात्मानमवेहिमाम् ५५ उभयंस्मरतःपुंसःप्रस्वापप्रतिबोधयोः ॥अन्वेतिव्यतिरिच्येततज्ज्ञानं
ब्रह्मतत्परम् ५६ यदेतद्विस्मृतंपुंसोमद्भावंभिन्नमात्मनः ॥ ततःसंसारएतस्यदेहाद्देहोमृतेर्मृतिः ५७ लब्ध्वेहमानुषींयोनिंज्ञानविज्ञानसंभवाम् ॥ आत्मा
नंयोनबुध्येतनक्वचित्क्षेममाप्नुयात् ५८ स्मृत्वेहायांपरिक्लेशंततःफलविपर्ययम् ॥ अभयंचाप्यनीहायांसंकल्पाद्विरमेत्कविः ५९ सुखायदुःखमोक्षायकु
र्वातेदंपतीक्रियाः॥ततोऽनिवृत्तिरप्राप्तिर्दुःखस्यचसुखस्यच ६० एवंविपर्ययंबुद्ध्वानृणांविज्ञाभिमानिनाम् ॥ आत्मनश्चगतिंसूक्ष्मांस्थानत्रयविलक्षणाम्
६१ दृष्टश्रुताभिर्मात्राभिर्निर्मुक्तःस्वेनतेजसा ॥ ज्ञानविज्ञानसंतृप्तोमद्भक्तःपुरुषोभवेत् ६२ एतावानेवमनुजैर्योगनैपुण्यबुद्धिभिः ॥ स्वार्थःसर्वात्मनाज्ञे
योयत्परात्मैकदर्शनम् ६३ त्वमेतच्छ्रद्धयाराजन्नप्रमत्तोवचोमम ॥ ज्ञानविज्ञानसंपन्नोधारयन्नाशुसिध्यसि ६४ ॥ श्रीशुकउवाच ॥ आश्वास्यभगवा
नित्थंचित्रकेतुंजगद्गुरुः ॥पश्यतस्तस्यविश्वात्माततश्चांतर्दधेहरिः ६५ ॥ इतिश्रीभागवतेमहापुराणेषष्ठस्कंधेषोडशोऽध्यायः ॥ १६ ॥ ॥ छ ॥

५५ ५६ ५७ इहमानुषींयोनिं लब्ध्वायः आत्मानं नबुध्येतसः कुत्रापिसुखंनाप्नुयात् ५८ किंच कविः इच्छायांपरिक्लेशंस्मृत्वा अनीहायां अभयंचस्मृत्वासंकल्पात्
विरमेत् ५९ किंच दंपती सुखायदुःखमोक्षाय क्रियाः कुर्वाते ततः दुःखनिवृत्तिः सुखप्राप्तिश्चनभवति ६० एवं विपर्ययंबुद्ध्वा आत्मनश्चसूक्ष्मां तुरीयांगतिं बुद्ध्वादृष्ट
श्रुतैर्विषयैर्मुक्तः सन् ज्ञानविज्ञानतुष्टः ममभक्तोभवेत् इत्यादि ६१ ६२ ६३ एवंममवचः धारयन् ज्ञानविज्ञानसंपन्नः त्वंआशुसिध्यसि ६४ ॥ श्रीशुकउवाच ॥
एवं श्रीहरिः चित्रकेतुं आश्वास्यअंतर्दधे ६५ ॥ इतिषष्ठेषोडशः ॥ १६ ॥

ततःसप्तदशेऽमोघमहर्द्धिप्राप्यखेचरन् । विहस्यगिरिशंशापादुमायात्र्त्रतागतः ॥ १ ॥ यतः यस्यांतस्यै दिशेनमः नमनंकृत्वा १ सःचित्रकेतुः विद्याधरस्त्रीभिः हरिं गापयन् रेमेइति
द्वयोरन्वयः । अव्याहतं बलं इंद्रियपाटवंचयस्य २ नानाविधाः संकल्पनैर्वासिद्धय यासुतासु(कुलाचलेंद्रस्य द्रोणीषुनिम्नतटीषु ) ३ अकस्मादद्भुतैश्वर्यगर्वात्प्राचीनकर्मतः । आसुरींयो
निमापन्नोभवानीशापतःस्तु ॥ तदाह एकदेत्यादिना ४ अंकीकृतांउत्संगेनैकीकृत्यस्थापितांदेवींबाहुनालिंग्यस्थितंउवाचजहासचतस्यांतिकेस्थितःसन् ५ धर्मवक्तावदातिशरीरिणां
मध्ये मुख्यश्च ! भार्ययामिथुनीभूयचास्ते ६ ७ ८ ( ज्ञान्यपिमुह्यति अहोप्राचीनकर्मबलवदिति प्रहस्य । ) अगाधागंभीराधीर्यस्यसः ( तस्यसाधुत्वं परिज्ञायेतिभावः) ९ नतस्यवीर्यं
प्रभावं विद्वान् अतद्वीर्यविद्वान् तस्मिन् । निर्जितात्माभिमानिने जितेंद्रियोहमित्यभिमानवते । रुषाक्रोधेनाह १० विरुद्धंप्रकर्षेण करोतीति विप्रकृत् ११ अतिवर्तिनंशास्त्रमति
क्रम्यवर्तनशीलं । ये नोनिषेधंति नवारयांति १२

॥ श्रीशुकउवाच ॥ यतश्चांतर्हितोऽनंतस्तस्यैकृत्वादिशेनमः ॥ विद्याधरश्चित्रकेतुश्चचारगगनेचरः १ सलक्षंवर्षलक्षाणामव्याहतबलेंद्रियः ॥ स्तूय
मानोमहायोगीमुनिभिःसिद्धचारणैः २ कुलाचलेंद्रद्रोणीषुनानासंकल्पसिद्धिषु ॥ रेमेविद्याधरस्त्रीभिर्गापयन्हरिमीश्वरम् ३ एकदासविमानेनविष्णुदत्ते
नभासता ॥ गिरिशंददृशेगच्छन्परीतंसिद्धचारणैः ४ आलिंग्यांकीकृतांदेवींबाहुनामुनिसंसदि ॥ उवाचदेव्याःशृण्वंत्याजहासोच्चैस्तदंतिके ५ ॥ चि
त्रकेतुरुवाच ॥ एषलोकगुरुःसाक्षाद्धर्मंवक्ताशरीरिणाम् ॥ आस्तेमुख्यःसभायांवैमिथुनीभूयभार्यया ६ जटाधरस्तीव्रतपाब्रह्मवादीसभापतिः ॥ अंकीकृ
त्यस्त्रियंचास्तेगतह्रीःप्राकृतोयथा ७ प्रायशःप्राकृताश्चापिस्त्रियंरहसिबिभ्रति ॥ अयंमहाव्रतधरोबिभर्तिसदसिस्त्रियम् ८ ॥ श्रीशुकउवाच ॥ भगवान
पितच्छ्रुत्वाप्रहस्यागाधधीर्नृप ॥ तूष्णींबभूवसदसिसभ्याश्चतदनुव्रताः ९ इत्यतद्वीर्यविदुषिब्रुवाणेबह्वशोभनम् ॥ रुषाऽऽहदेवीधृष्टायनिर्जितात्माभिमा
निने १० ॥ श्रीपार्वत्युवाच ॥ अयंकिमधुनालोकेशास्तादंडधरःप्रभुः ॥ अस्मद्विधानांदुष्टानांनिर्लज्जानांचविप्रकृत् ११ नवेदधर्मंकिलपद्मयोनिर्नब्रह्म
पुत्राभृगुनारदाद्याः ॥ नवैकुमारःकपिलोमनुश्चयेनोनिषेधंत्यतिवर्तिनंहरम् १२

॥ श्रीशुकउवाच ॥ ॥ चित्रकेतुः यस्यांदिशिहरिः अंतर्हितः तस्यैदिशेनमःकृत्वागगनेचरः चचार १ सःअव्याहतबलेंद्रियः सिद्धादिभिःस्तूयमानः २ सर्वस्थानेषुभ्र
मन् विद्याधरस्त्रीभिः सहहरिंगापयन् वर्षाणांलक्षंरेमे ३ एकदाविष्णुदत्तविमानेनभ्रमन्गिरिशंददृशे ४ मुनिसंसदि देवीं आलिंग्यास्थितंशिवंदृष्ट्वा देव्याः शृण्वंत्याउच्चैः
हसित्वाउवाच ५ ॥ ॥ चित्रकेतुरुवाच ॥ ॥ अयंसाक्षात्लोकगुरुः ब्रह्मवादी नृणांधर्मंवक्ता सन् सभायां भार्यांअंगीकृत्यआस्ते ६ यथाप्राकृतः ७ प्राकृताअपि
प्रायःस्त्रियंरहसिबिभ्रति अयंसदसिबिभर्त्ति ८ किमाश्चर्यम् एवंतद्वचःश्रुत्वाशिवः सभ्याश्चतूष्णीं आसन् ९ ॥ ॥ श्रीशुकउवाच ॥ इतिश्रुत्वाअभिमानवते तस्मै पा ॥१९॥
र्वती उवाच १० लोकेअधुनाअयंदंडधरः अस्मद्विधानांनिर्लज्जानां शास्ताकिम् ११ ब्रह्मादयः धर्मंनाविदुः ये शास्त्रमुल्लंघ्य वर्तमानंहरं नानिषेधंति १२

एषां ब्रह्मादीनामनुध्येयं पदाब्जयुग्मंयस्यतं मंगलमंगलंपरमधर्ममूर्तिं । भूरीन् परिभूयाज्ञान्कृत्वाजगद्गुरुंयः प्रशास्तिततस्मात् १३ ननुहरिभक्तोयंनदंडार्हइतिचेतत्राह । नायंसाधु
भिःपरिसेवितं वैकुंठस्य पादमूलोपसर्पणमर्हति । यतःसंभाविता अहमधिकइति कृतामतिर्येन अतएवस्तब्धःअनम्रः १४ तदेवंस्वयं दंड्यत्वंनिश्चित्यतं प्रत्याहअतइति हेपुत्रयथा भूयो
महतां किल्बिषमपराधं नकर्तानकरिष्यसि तथायाहीत्यर्थः १५ १६ पूर्वदिष्टंप्राचीनं कर्मप्राप्तमेव १७ अयंचसंसारचक्रस्वभावएव नचित्रमित्याह । संसारचक्रइति १८ अतएवात्रम
मचतवचनकोपिदोषइत्याह नैवेति । १९ एवंतावत्सुखदुःखादिकमंगीकृत्योक्तं । इदानींतदपिवस्तुतोनास्तीत्याह गुणानांमायानांप्रवाहेसंसारे, २० ननुमायागुणानांचेदयं प्रवाहस्तर्हि
तेषांजडत्वाद्बंधमोक्षाद्यनुभवोनस्यात्तत्राह । एकःपरमेश्वरः माययानिमित्तभूतयाभूतानिप्राणिनः सृजतिएषांबंधादिकंचसृजति निष्कलः स्वयंबंधादिशून्यः २१ नन्वेवंभूतविषमसृष्टौत
स्यकिंकारणम् प्रियादिवैषम्याभावादित्याशंक्ययद्यपिप्रियादयोनसंतितथापितत्तत्कर्मवशात्सर्वंघटतइत्याह नतस्येतिद्वाभ्याम् । प्रतीपः अप्रियःनज्ञातिर्बंधुश्चेत्यर्थः । तत्रहेतुः ।
सर्वत्रसमस्य । तत्कुतः । निरंजनस्यनिःसंगस्य । अतएवतन्निमित्तेसुखेरागोनास्तिरागानुबंधोरोषः कुतः स्यात् २२

**एषामनुध्येयपदाब्जयुग्मंजगद्गुरुंमंगलमंगलंस्वयम् ॥ यःक्षत्रबंधुःपरिभूयभूरीनप्रशास्तिधृष्टस्तदयंहिदंड्यः १३ नायमर्हतिवैकुंठपादमूलोपसर्पणम् ॥**
**संभावितमतिस्तब्धःसाधुभिःपर्युपासितम् १४ अतःपापीयसींयोनिमासुरींयाहिदुर्मते ॥ यथेहभूयोमहतांनकर्तापुत्रकिल्बिषम् १५ ॥श्रीशुकउवाच ॥**
**एवंशप्तश्चित्रकेतुर्विमानादवरुह्यसः ॥ प्रसादयामाससतींमूर्ध्नानम्रेणभारत १६ ॥ चित्रकेतुरुवाच ॥ प्रतिगृह्णामितेशापमात्मनोंजलिनांबिके ॥ देवैर्म**
**र्त्याययत्प्रोक्तंपूर्वदिष्टंहितस्यतत् १७ संसारचक्रएतस्मिन्जंतुरज्ञानमोहितः ॥ भ्राम्यन्सुखंचदुःखंचभुंक्तेसर्वत्रसर्वदा १८ नैवात्मनःपरश्चापिकर्तास्या**
**त्सुखदुःखयोः॥कर्तारंमन्यतेप्राज्ञाआत्मानंपरमेवच १९ गुणप्रवाहएतस्मिन्कःशापःकोन्वनुग्रहः ॥ कःस्वर्गोनरकःकोवाकिंसुखंदुःखमेववा २० एकःसृज**
**तिभूतानिभगवानात्ममायया ॥ येषांबंधंचमोक्षंचसुखंदुःखंचनिष्कलः २१ नतस्यकश्चिद्दयितःप्रतीपोनज्ञातिबंधुर्नपरोनचस्वः ॥ समस्यसर्वत्रनि**
**रंजनस्यसुखेनरागःकुतएषरोषः २२**

योयंक्षत्रबंधुः भूरीन्परिभूयशिवंशास्ति अतः निश्चयेनअयं दंड्यः १३ अयंवैकुंठपादमूलोपसर्पणंनार्हति १४ हेदुर्मतेत्वंआसुरींयोनिंयाहि यथापुनः महतांकिल्बिषंनक
र्ता १५ ॥ ॥ श्रीशुकउवाच ॥ एवंशप्तः चित्रकेतुः विमानात् अवरुह्य सतीं मूर्ध्ना प्रसादयामास १६ ॥ ॥ चित्रकेतुरुवाच ॥ ॥ हेअंबिकेतेशापंअहं अंजलिना
प्रगृह्णामि मर्त्यायदेवैः यत् प्रोक्तंतत् तस्यपूर्वदिष्टमेव १७ एतस्मिन्संसारेअज्ञानमोहितः जंतुः अत्रसुखंदुःखंचभुंक्ते १८ अस्यसुखदुःखकर्ता नात्मानपरश्च १९ किंतु
ईश्वरएव सः एकएवमायया भूतानिसृजति २० एषांबंधंमोक्षंसुखंदुःखंचसृजति२१तस्यकश्चित्दयितोन रिपुर्न अतः सर्वत्रसमस्यतस्यसुखेनप्रीतिर्नास्तितदारोपःकृतः२२

यद्यप्येवं तथापि तस्यशक्तयामायया यो विसर्गः पुण्यपापादिलक्षणंकर्म एषांसुखाद्यर्थमत्रकल्पतेसमर्थोभवति यथोक्तंगीतासु । " भूतभावोद्भवकरोविसर्गःकर्मसंज्ञितः "इति २३ अथत
स्मात्(हे)भामिनिकोपने त्वांकेवलंप्रसादयामिनतुशापमोक्षाय । तर्हिकिंप्रसादेनातआह । ममोक्तंउक्तिसाध्वपि असाधुवन्मन्यसे तत्त्वयाक्षम्यताम् २४ गिरिशौभवानीशंकरौप्रसाद्य
स्मयतोर्विस्मयंकुर्वतोः सतोः २५ २६ ( हरेर्भृत्यस्यभृत्यानां ) २७ स्वर्गादावपितुल्योऽर्थः प्रयोजनमितिद्रष्टुंशीलंयेषां तेतथा ( । स्वर्गाभ्यांनहृष्यंतिनचनरकाद्बिभ्यतीत्यर्थः ) २८
तत्रतदुक्तमेवहेतुमाहद्वाभ्यां देहिनांसुखंदुःखमित्यादिद्वंद्वानिईश्वरस्यलीलयामाययाभवंति २९ तेषुगुणदोषविकल्पइत्येवेत्यन्वयः । इष्टानिष्टभेदइव यः स्फुरतिसआत्मन्यर्थभेदः सु
खादिभेदः पुंसः स्वमेयथाअविवेककृतोभवति । स्रजिवत् सर्पमालादिविभिर्यथातथवकृतइत्यर्थः । स्रग्वदिति वक्तव्ये स्रजिवदित्यार्षं । पाठांतरेतुसुगमं ३० अतोभागवतानांनिः
स्पृहत्वमुचितमेवेत्याह । वासुदेवइति । ज्ञानवैराग्ययोर्वीर्यंबलंयेषांतेषांठयपाश्रयः विशिष्टबुद्ध्याआश्रयणीयोऽर्थोनास्ति ३१ अस्यचहरिदासत्वेनतत्स्वभावत्वान्नैतच्चित्रमितिवक्तुंहरे
र्माहात्म्यमाह । नाहमितिद्वाभ्यां । ईहितमभिप्रायंलीलांवा । यदावयंनविद्मस्तदातस्यस्वरूपमंशकांशकाअपिसंतःपृथगीशमानिनोनविदुरेव ३२ अतएवहरिरपिसर्वेषांभूतानांप्रियः
३३ अहंचैवाच्युतस्यप्रियः । तस्मान्ममास्मिन्क्रोधो नाभूदितिभावः ३४

तथापितच्छक्तिविसर्गएषांसुखायदुःखायहिताहिताय ॥ बंधायमोक्षायचमृत्युजन्मनोःशरीरिणांसंसृतयेऽवकल्पते २३ अथप्रसादयेनत्वांशापमोक्षाय
भामिनि॥यन्मन्यसेअसाधूक्तंममतत्क्षम्यतांसति२४॥श्रीशुकउवाच ॥ इतिप्रसाद्यगिरिशौचित्रकेतुररिंदम ॥ जगामस्वविमानेनपश्यतोःस्मयतोस्तयोः
२५ ततस्तुभगवान्रुद्रोरुद्राणीमिदमब्रवीत् ॥ देवर्षिदैत्यसिद्धानांपार्षदानांचशृण्वताम् २६ ॥ श्रीरुद्रउवाच ॥ दृष्टवत्यसिसुश्रोणिहरेरद्भुतकर्मणः ॥
माहात्म्यंभृत्यभृत्यानांनिःस्पृहाणांमहात्मनाम् २७ नारायणपराःसर्वेनकुतश्चनबिभ्यति ॥ स्वर्गापवर्गनरकेष्वपितुल्यार्थदर्शिनः २८ देहिनांदेहसंयो
गाद्द्वंद्वानीश्वरलीलया ॥ सुखंदुःखंमृतिर्जन्मशापानुग्रहएवच २९ अविवेककृतःपुंसोह्यर्थभेदइवात्मनि ॥ गुणदोषविकल्पश्चभिदेवस्रजिवत्कृतः ३०
वासुदेवेभगवतिभक्तिमुद्वहतांनृणाम् ॥ ज्ञानवैराग्यवीर्याणांनेहकश्चिद्व्यपाश्रयः ३१ नाहंविरिंच्योनकुमारनारदौनब्रह्मपुत्रामुनयःसुरेशाः ॥ विदामय
स्येहितमंशकांशकानतत्स्वरूपंपृथगीशमानिनः ३२ नह्यस्यास्तिप्रियःकश्चिन्नाप्रियःस्वःपरोपिवा ॥ आत्मत्वात्सर्वभूतानांसर्वभूतप्रियोहरिः ३३ तस्य
चायंमहाभागश्चित्रकेतुःप्रियोनुगः ॥ सर्वत्रसमदृक्शांतोह्यहंचैवाच्युतप्रियः ३४

तथापितन्माययायत्पुण्यपापादिकर्मतत् एषांशरीरिणांसुखाद्यर्थं समर्थंभवति सुखदुःखादिसर्वंमायाजनितमस्ति २३ हेदेविशापमोक्षायत्वांनप्रसादये ममोक्तंसा
ध्वपि असाधुवत्मन्यसे तत्क्षम्यतामित्युक्त्वासः जगाम २४ २५ ततः सर्वेषांशृण्वतांरुद्रः रुद्राणींअब्रवीत् २६ हेसुश्रोणिहरेः भक्तानांमाहात्म्यंदृष्टवत्यसि २७ नारा
यणपराः कुतश्चननबिभ्यति तेसर्वत्रसमदर्शिनः संति २८ २९ ३० ३१ ईश्वरस्य ईहितं अस्मदादयः नविदाम ३२ ३३ तस्यभक्तः सः अहंचविष्णुभक्तः अतः
ममतास्मिन् क्रोधोनाभूत् ३४

३५ ३६ प्रतिशप्तुंरतिशापंदातुमलंतमः समर्थोपि ३७ ३८ असुरजातेः असुरयोनावुत्पत्तेः । भगवतिमतेश्च ३९ ४० एततएतम् ४१ इतिषष्ठस्कंधेटीकायांसप्तदशोध्यायः॥ १७॥आदि
त्यानांचतुर्थस्यत्वष्टुर्वंशप्रसंगतः । प्रोक्तमिंद्रकृतंविश्वरूपवृत्रवधादिकम् ॥ १ ॥ अदितेःपंचमादीनापुत्राणामन्वयोक्तितः । अष्टादशेदितेर्गर्भेशक्रेणमरुतांभिदा ॥ २ ॥ त्वष्टुर्वंशमनुक्र
म्यसप्रसंगंयथाक्रमं । आदित्यानामथान्येषांवंशानाहमुनीश्वरः ॥३॥ दक्षकन्यान्वयानुकथनेअदित्याद्वादशपुत्राः प्रोक्ताः । "विवस्वानर्यमापूषात्वष्टाथसविताभगः॥ धाताविधातावरु
णोमित्रः शक्रउरुक्रमः" इतितत्र अष्टाध्यायांतमारभ्य विश्वरूपवृत्रचित्रकेतूपाख्यानैस्त्वष्टुर्वंशमनुवर्ण्यइदानीं सवितुर्वंशमाहपृश्निस्त्विति । सावित्रीमित्यादिषुप्रासूतेत्युत्तरस्यानुषंगः
पशुंपशुयागं महामखान् पंचमहायज्ञान् । १ । ( अंगहेराजन् ) २ धातुर्भार्याकुहूः सायंपुत्रंप्रासूत । एवंसिनीवालीदर्शइत्यनुक्रमात् ३ समनंतरोविधाता क्रियायांभार्यायां पुरीष्यान
ग्नीन् पंचचित्तीन् । 'पुरीष्यासोअग्नय'इति "पंचवाएतेग्नयोयच्चितयः"इतिश्रुतेः चर्षणीवरुणस्यभार्याआसीत् । पूर्वंब्रह्मणः पुत्रोभृगुर्यस्यांपुनर्जातः ४

तस्मान्नविस्मयःकार्यःपुरुषेपुमहात्मसु ॥ महापुरुषभक्तेषुशांतेषुसमदर्शिषु ३५ ॥ श्रीशुकउवाच ॥ इति श्रुत्वाभगवतःशिवस्योमाभिभाषितम् ॥ बभूव
शांतधीराजन्देवीविगतविस्मया ३६ इतिभागवतोदेव्याःप्रतिशप्तुमलंतमः ॥ मूर्ध्नासंजगृहेशापमेतावत्साधुलक्षणम् ३७जज्ञेत्वष्टुर्दक्षिणाग्नौदानवींयोनिमा
श्रितः ॥ वृत्रइत्यभिविख्यतोज्ञानविज्ञानसंयुतः ३८ एतत्तेसर्वमाख्यातंयन्मांत्वंपरिपृच्छसि ॥ वृत्रास्यासुरजातेश्चकारणंभगवन्मतेः ३९ इतिहास
मिमंपुण्यंचित्रकेतोर्महात्मनः ॥ माहात्म्यंविष्णुभक्तानांश्रुत्वाबंधाद्विमुच्यते ४० यएतत्प्रातरुत्थायश्रद्धयावाग्यतःपठेत् ॥ इतिहासंहरिंस्मृत्वासया
तिपरमांगतिम् ४१ इतिश्रीभागवते महापुराणे षष्ठस्कंधेसप्तदशोऽध्यायः ॥ १७ ॥ श्रीशुकउवाच ॥ पृश्निस्तुपत्नीसवितुःसावित्रींव्याहृतींत्रयीम्॥
अग्निहोत्रंपशुंसोमंचातुर्मास्यंमहामखान् १ सिद्धिर्भगस्यभार्याऽंगमहिमानंविभुंप्रभुम् ॥ आशिषंचवरारोहांकन्यांप्रासूतसुव्रताम् २ धातुःकुहूःसिनीवाली
राकाचानुमतिस्तथा ॥ सायंदर्शमथप्रातःपूर्णमासमनुक्रमात् ३ अग्नीन्पुरीष्यानाधत्तक्रियायांसमनंतरः ॥ चर्षणीवरुणस्यासीद्यस्यांजातोभृगुःपुनः४

तस्मात् भक्तेषुत्वयाविस्मयोनकार्यः ३५ ॥ श्रीशुकउवाच ॥ ॥ इतिशिवभाषितंश्रुत्वाउमाशांतधीः बभूव ३६ अहोचित्रकेतुर्भगवद्भक्तःशप्तुंसमर्थःपिशापमेवजगृहे
एतावत्साधुलक्षणं ३७ हेराजन् सः दानवीं योनिमाश्रितः ज्ञानविज्ञानसंयुतः वृत्रइतिख्यातः त्वष्टुर्दक्षिणाग्नौजज्ञे ३८ एतत्तेकथितम् ३९ इमंचित्रकेतोः इतिहासं
विष्णुभक्तमाहात्म्यंश्रुत्वाबंधात्मुच्यते ४० यःएतत्प्रातःशृणुयात् पठेद्वा हरिं स्मृत्वापरांगतियाति ४१ इतिषष्ठस्कंधेसप्तदशः ॥ १७ ॥ ॥ श्रीशुकउवाच ॥ ॥ अथ
सवितुः पत्नीपृश्निः सावित्रीं व्याहृतीः त्रयीम् अग्निहोत्रं पशुं सोमम् चातुर्मास्यम् महामखान् असूत १ भगस्य ६ सिद्धिः भार्या महिमानम् विभुम् प्रभुं असूत
आशीःकन्यांच २ धातुः ७ भार्याः ४ सिनीवाली दर्शम् कुहूः सायं राका प्रातः अनुमतिः पूर्णमासम् एवंताः प्रासूयंत विधातुः ८ क्रियापुरीष्यान् अग्नीन् ३
आधत्त वरुणस्य चर्षणी भृगुंवाल्मीकिं प्रासूत ४

वाल्मीकिर्वरुणस्यैवपुत्रोऽभवत् । एतौ वरुणस्यासाधारणौपुत्रौ । तथोत्सर्गादयोपिमित्रस्यासाधारणाः । तयोरेवसाधारणौद्वौपुत्रौचाह । अगस्त्यश्चवसिष्ठश्चऋषीमित्रावरुणयोरम
वतां ५ यतउभावपिकुंभेरेतःसिषिचतुः "सत्रेहजातावीषितानमोभिः कुंभेरेतः सिषिचतुः समानं" इतिश्रुतेः । द्रुतंस्कन्नम् ६ ७ ८ पश्चात्अष्टमस्कंधे । ( तस्योरुक्रमस्यकर्मगुणवीर्या
णिवक्ष्यामः ) ९ अथेति । कश्यपस्यादितेः पुत्राणांद्वादशादित्यानांसंततिमुक्त्वादितेःपुत्रान्कथयामीत्यर्थः १० हिरण्यकशिपुर्हिरण्याक्षश्चेतिप्रथमंद्वाविवतौचकीर्तितौतृतीयस्कंधे
११ ( जंभस्यतनयाहिरण्यकशिपवेदत्तामातस्यभार्यासुतान्सुषुवे ) १२ तत्रप्राक्पूर्वंसंन्हादंसुषुवे । पश्चादनुह्रादं तेषांस्वसादानवात् ) विप्रचित्तोभर्तुः सकाशात्राहुंपुत्रंअग्रहीत् १३
ततः संन्हादादसूत १४ योमेषरूपंवातापिंअगस्त्यार्थंपेचेतंइल्वलं यः पेचेतंचवातापिमसूतेत्यन्वयः १५ (प्रान्हादिः प्रन्हादस्यपुत्रः तस्यविरोचनदेव्याः पत्न्याः) १६ ततोबलेः सका
शादभवत् । तस्यबलेरनुभावः सुश्लोकयः पुण्यकीर्त्यर्हः । यद्वा अनुभाव्यतेसद्भिःस्तूयतइत्यनुभावंसुश्लोकयंयशइतिशेषः । ( पश्चादष्टमस्कंधे ) १७

वाल्मीकिश्चमहायोगीवल्मीकादभवत्किल ॥अगस्त्यश्चवसिष्ठश्चमित्रावरुणयोरृषी ५ रेतःसिषिचतुःकुंभेउर्वश्याःसन्निधौद्रुतम् ॥ रेवत्यांमित्रउत्सर्गमरि
ष्टंपिप्पलंव्यधात् ६ पौलोम्यामिंद्रआधत्तत्रीन्पुत्रानितिनःश्रुतम् ॥ जयंतमृषभंतातत्तृतीयंमीढुषंप्रभुः ७ उरुक्रमस्यदेवस्यमायावामनरूपिणः ॥
कीर्तौपत्न्यांबृहच्छ्लोकस्तस्यासन्सौभगादयः ८ तत्कर्मगुणवीर्याणिकाश्यपस्यमहात्मनः ॥ पश्चाद्वक्ष्यामहेऽदित्यांयथैवावततारह ९ अथकश्यप
दायादान्दैतेयान्कीर्तयामिते ॥ यत्रभागवतःश्रीमान्प्रह्लादोबलिरेवच १० दितेर्द्वावेवदायादौदैत्यदानववंदितौ ॥ हिरण्यकशिपुर्नामहिरण्याक्षश्चकीर्ति
तौ ११ हिरण्यकशिपोर्भार्याकयाधुर्नामदानवी ॥ जंभस्यतनयादत्तासुषुवेचतुरःसुतान् १२ संह्लादंप्रागनुह्लादंह्लादंप्रह्लादमेवच ॥ तत्स्वसासिंहिकाना
मराहुंविप्रचित्तोऽग्रहीत् १३ शिरोऽहरद्यस्यहरिश्चक्रेणापिबतोऽमृतम् ॥ संह्लादस्यकृतिर्भार्याऽसूतपंचजनंततः १४ ह्लादस्यधमनिर्भार्याऽसूतवातापिमि
ल्वलम् ॥ योऽगस्त्यायत्वतिथयेपेचेवातापिमिल्वलम् १५ अनुह्लादस्यसूर्म्यायांबाष्कलोमहिषस्तथा ॥ विरोचनस्तुप्राह्लादिर्देव्यास्तस्याभवद्बलिः
१६ बाणज्येष्ठंपुत्रशतमशनायांततोऽभवत् ॥ तस्यानुभावःसुश्लोक्यःपश्चादेवाभिधास्यते १७

५ मित्रस्य १० रेवती उत्सर्गारिष्टपिप्पलान् असूत अगस्त्यवसिष्ठौमित्रावरुणयोः पुत्रौअभूतां यतः उर्वश्याः सन्निधौउभावपिस्कन्नंरेतः कुंभेसिषिचतुः ६ इंद्रस्य ११
पौलोमिर्जयंतऋषभमीढुषान् असूत ७ उरुक्रमस्य १२ कीर्तिः बृहच्छ्लोकं तस्यसौभगादयः पुत्राः आसन् ८ अथकश्यपपुत्रान् दैत्यांस्तेकीर्तयामि यत्रभागवतः प्रन्हादो
बलिश्चजातः ९ १० दित्यांहिरण्यकशिपुः हिरण्याक्षश्चजातौ ११ हिरण्यकशिपोःकयाध्वां पुत्राः ४ संन्हादः न्हादः अनुन्हादः प्रन्हादः सिंहिकाकन्याच तांविप्रचित्ति
र्जग्राहतत्सुतोराहुः १२ १३ यस्यशिरः हरिः अहरत् संन्हादात्कृत्यां पंचजनः १४ न्हादात् धमन्यांइल्वलः वातापीच १५ अनुन्हादात् सूर्म्यायां बाष्कलमहिषौ
१६ प्रन्हादात् देव्यां विरोचनः ततोबलिः ततः बाणज्येष्ठंपुत्रशतं १७

तस्यगणेषुमुख्यतांप्राधान्यम् । ( भगवान्गिरिशः ) १८ सात्मतांसमानरूपतांदेवत्वमित्यर्थः १९ सात्म्यं देवत्वं प्रापिताः । ( हेगुरो ) २० । २१ आदृतं आदरयुक्तं । ( अल्पंमिताक्षरं ) । अर्थवत्बह्वर्थयुक्तं । सत्रमयनमाश्रयोयस्य हे सत्रायणशौनक २२ शक्रस्य पार्ष्णिग्राहेणपृष्ठतः सहायेन ( पुत्रविषयकशोकदीप्तेन शक्रविषयकक्रोधेन ज्वलंती ) २३ भ्रातृहंतारं इंद्रंमारयित्वा सुखंशयेस्वपिमि सुखिनीस्यामिति चिंतयामास दितिः उल्बणंक्रूरं अक्लिन्नहृदयंकठिनचित्तं २४ ननुराजास्वदेहरक्षार्थं अन्येषांघातंकरोत्येव किमत्रचित्रंतत्राह । कृमीति । ईशः प्रभुरित्यभिहितस्यापि यस्यपूर्वेषांराज्ञांदेहस्य मरणानंतरंद्वित्रिदिनावस्थितस्य कृमयइति श्वादिभिर्भक्षितस्यतुविष्ठेति दग्धस्यतुभस्मेतिसंज्ञाआसीत् । तत्कृतेतस्य देहस्यार्थे योभूतेभ्यो द्रुह्यति सकिंस्वार्थंवेद नवेदेव । तत्रहेतुः । यतोभूतद्रोहान्निरयो भवति । २५ इदंदेहादिकं ध्रुवंनित्यं आशासानस्यमन्यमानस्य अतउन्नद्धं उच्छृंखलं चेतो यस्य तस्येंद्रस्ययो मदस्तस्य शोषकः पुत्रोमेयेनहेतुना भूयाद्भवेत् २६ तत्रभर्तुःप्रियाचरणमेवहेतुःइतिभावेन साभर्तुःप्रियंअसकृदाचचार । ( प्रश्रयेणनम्रतया ) २७ ( भावज्ञाभर्तुश्चित्तं जानती ) २८ विवशः स्त्रीपरतंत्रः सन् बाढंतवमनोरथंपूरयिष्यामीतियदाहनतच्चित्रं २९ तत्रहेतुमाह विलोक्येति । एकांतभूतानि निःसंगानिमिथुनेनसृष्टिवृद्ध्यर्थं स्वदेहार्धमेव स्त्रियंचक्रे ३०

बाणआराध्यगिरिशंलेभेतद्गणमुख्यताम् ॥ यत्पार्श्वेभगवानास्तेह्यद्यापिपुरपालकः १८ मरुतश्चदितेःपुत्राश्चत्वारिंशन्नवाधिकाः ॥ तआसन्नप्रजाःसर्वे नीताइंद्रेणसात्मताम् १९ ॥ राजोवाच ॥ कथंतआसुरंभावमपोह्यौत्पत्तिकंगुरो ॥ इंद्रेणप्रापिताःसात्म्यंकिंतत्साधुकृतंहितैः २० इमेश्रद्दधतेब्रह्मन्नृषयोहिमयासह ॥ परिज्ञानायभगवन्तन्नोव्याख्यातुमर्हसि २१ ॥ सूतउवाच ॥ तद्विष्णुरातस्यसबादरायणिर्वचोनिशम्यादृतमल्पमर्थवत् ॥ सभाजयन्संनिभृतेनचेतसाजगादसत्रायणसर्वदर्शनः २२ ॥ श्रीशुकउवाच ॥ हतपुत्रादितिःशक्रपार्ष्णिग्राहेणविष्णुना ॥ मन्युनाशोकदीप्तेनज्वलंतीपर्यचिंतयत् २३ कदानुभ्रातृहंतारमिंद्रियाराममुल्बणम् ॥ अक्लिन्नहृदयंपापंघातयित्वाशयेसुखम् २४ कृमिविड्भस्मसंज्ञाऽऽसीद्यस्येशाभिहितस्यच ॥ भूतध्रुक्तत्कृतेस्वार्थंकिंवेदनिरयोयतः २५ आशासानस्यतस्येदंध्रुवमुन्नद्धचेतसः ॥ मदशोषकइंद्रस्यभूयायेनसुतोहिमे २६ इतिभावेनसाभर्तुराचचारासकृत्प्रियम् ॥ शुश्रूषयानुरागेणप्रश्रयेणदमेनच २७ भक्त्यापरमयाराजन्मनोज्ञैर्वल्गुभाषितैः ॥ मनोजग्राहभावज्ञासुस्मितापांगवीक्षणैः २८ एवंस्त्रियाजडीभूतोविद्वानपिविदग्धया ॥बाढमित्याहविवशोनतच्चित्रंहियोषिति २९ विलोक्यैकांतभूतानिभूतान्यादौप्रजापतिः ॥ स्त्रियंचक्रेस्वदेहार्धंययापुंसांमतिर्हृता ३०

१८ कश्यपात् दित्यांमरुतः ४९ अभवन् तेइंद्रेणसमानरूपतांनीताः १९ ॥ राजोवाच ॥ हेगुरोतेअसुरभावंहित्वा कथंदेवत्वंप्राप्ताः इदंकथय २० २१ ॥ ॥ श्रीशुकउवाच ॥ ॥ एकदाहतपुत्रादितिः पुत्रहंतारंघातयित्वाकदासुखंशये २२ २३ २४ इतिमनसिकृत्वाम्रोचेष्टितैः परमभक्त्याशुश्रूषयाच पतिंकश्यपंवशमकरोत् २५ २६ २७ २८ एवंस्त्रियाजडीभूतः सःविद्वानपिबाढमित्याह २९ तच्चित्रंन यतः प्रजापतिः स्वदेहार्धं स्त्रियं चक्रे यया पुंसां मतिर्हृता ३०

एवंस्त्रियाशुश्रूषितः सन् ३१ इहचकारात् परत्रच अगमः अप्राप्यः ३२ ननुपरमेश्वरेसुप्रीते सर्वकामप्राप्तिः प्रसिद्धं तत्राह।पतिरेवेति ३३ ननुमनसिस्थितः श्रीवासुदेव एवलक्ष्मीपतिः परंदैवतमितिप्रसिद्धं । सत्यं । सएवस्वाधिकारेण रूपभेदैःपूज्यत इत्याह । मानसइति सार्धेन । देवतालिंगैर्मूर्तिभिरुपलक्षितः । लिंगान्येवाह । नाम इंद्रादि रूपंवज्रहस्तत्वादि । ताभ्यांविविधं कल्पितः । ( स्वस्वाधिकारानुसारेणविहितासुइंद्रादिमूर्तिषु भगवान् वासुदेवएवपुरुषैः पूज्यतइत्यर्थः । स्त्रीभिस्तु पतिरूपेणेश्वरः पूज्यते ) ३४ । ३५ ३६ इंद्रहणं इंद्रहंतारं । अमृत्युंमृत्युशून्यं येनइंद्रेण विष्णुनासहाय-( मृतेन ) घातितौ ३७ ३८ ३९ स्वभावमनुवर्तमानायाः योषितः कोतिक्रमोऽपराधः ४० स्वमात्मेवाह द्वाभ्यां । शरत्पद्मस्योत्सवो विकाशोयस्मिन् श्रवणेश्रुती तयोरमृतंक्षुरधारोपमंचित्तं४१स्वाशिषाआत्मनां स्वार्थकामनया आत्मवत्प्रेष्ठत्वेन प्रतीयमानाना ४२ तत्रेदमुपकल्पतेयोग्यं भवति।अयंभावः वैष्णवंव्रतं तावदुपदेक्ष्यामितेनैवास्याः शुद्धचित्तायाः इंद्रंप्रति क्रोधो निवर्तिष्यते।पुत्रस्त्वमर्त्यो भविष्यति। दीर्घकालत्वेचव्रतस्य कथंचिद्वैगुण्येसतींद्रस्यवधोपिनभविष्यतीति। ४३ ४४ ।

एवंशुश्रूषितस्तातभगवान्कश्यपःस्त्रिया ॥ प्रहस्यपरमप्रीतोदितिमाहाभिनंद्यच ३१ ॥ कश्यपउवाच ॥ वरंवरयवामोरुप्रीतस्तेहमनिंदिते ॥ स्त्रिया भर्तरिसुप्रीतेकःकामइहचागमः ३२ पतिरेवहिनारीणांदैवतंपरमंस्मृतम् ॥ मानसःसर्वभूतानांवासुदेवःश्रियःपतिः ३३ सएवदेवतालिंगैर्नामरूपविकल्पितैः ॥ इज्यतेभगवान्पुंभिःस्त्रीभिश्चपतिरूपधृक् ३४ तस्मात्पतिव्रतानार्यःश्रेयस्कामाःसुमध्यमे ॥ यजंतेऽनन्यभावेनपतिमात्मानमीश्वरम् ३५ सोहंत्वयार्चितोभद्रेईदृग्भावेनभक्तितः ॥ तत्तेसंपादयेकाममसतीनांसुदुर्लभम् ३६ ॥ दितिरुवाच ॥ ॥ वरदोयदिमेब्रह्मन्पुत्रमिंद्रहणंवृणे ॥ अमृत्युंमृतपुत्राहंयेनमेघातितौसुतौ ३७ निशम्यतद्वचोविप्रोविमनाःपर्यतप्यत ॥ अहोअधर्मःसुमहानद्यमेसमुपस्थितः ३८ अहोअर्थेंद्रियारामोयोषिन्मय्येहमायया ॥ गृहीतचेताःकृपणःपतिष्येनरकेध्रुवम् ३९ कोतिक्रमोनुवर्तंत्याःस्वभावमिहयोषितः ॥ धिङ्मांबताबुधंस्वार्थेयदहंत्वजितेंद्रियः ४० शरत्पद्मोत्सवंवक्त्रंवचश्चश्रवणामृतम् ॥ हृदयंक्षुरधाराभंस्त्रीणांकोवेदचेष्टितम् ४१ नहिकश्चित्प्रियःस्त्रीणामंजसास्वाशिषात्मनाम् ॥ पतिंपुत्रंभ्रातरंवाघ्नंत्यर्थेघातयंतिच ४२ प्रतिश्रुतंददामीतिवचस्तन्नमृषाभवेत् ॥ वधंनार्हतिचेंद्रोपितत्रेदमुपकल्पते ४३ इतिसंचिंत्यभगवान्मारीचःकुरुनंदन ॥ उवाचकिंचित्कुपितआत्मानंचविगर्हयन् ४४

एवंशुश्रूषितः कश्यपः प्रहस्यप्रीतः सन्दितिंआह हेवामोरु ३१ अहंतेप्रीतोस्मिस्त्रीणां दैवतं पतिरेव किंचसर्वभूतानांपतिः ३२ वासुदेवः सएवपतिरूपेणस्त्रीभिः पूज्यते ३३ ३४ तस्मात्पतिव्रताः स्त्रियः अनन्यभावेनईश्वरंपतिंयजंते ३५ सः अहंत्वयार्चितः अतः हेभद्रेतेकामंसंपादये ३६ ॥ दितिरुवाच ॥ हेब्रह्मन् अहंमृतपुत्रा येनमेसुतौघातितौ तंइंद्रहंतारंमृत्युहीनं पुत्रंवृणे ३७ ॥ ॥ श्रीशुकउवाच ॥ ॥ एवंतस्यावचोनिशम्य कश्यपः अतप्यत अहो अधर्मः सुमहान्प्राप्तः ३८ योषिन्मय्यामाययागृहीतचेताः अहंध्रुवंनरकेपतिष्ये ३९ अतःअबुधंमांधिक् ४० किंच शरत्पद्मोत्सववक्त्रं वचश्चश्रवणामृतं हृदयंक्षुरधाराभंस्त्रीणांकोवेदचेष्टितम् ४१ स्त्रीणांकोपिप्रियःन याःस्वार्थेपत्यादीन्घ्नंति ४२ अस्तुमयातुददामीत्युक्तं तत्मृषामाभूत् इंद्रोपिवधंनार्हतितत्रेदंयोग्यम् ४३ एवंविचार्यकश्यपउवाच ४४

हेभद्रे अंजः यथावत् यदिधारयिष्यसितर्हींद्रहाभविष्यति । वैगुण्येतुदेवबांधवो भविष्यति । वैष्णवत्वाद्व्रतस्यकथंचिद्वैगुण्येपिसति सर्वथावैफल्याभावात् ४५ कार्याण्यावश्यकानि व्रतंयानिनघ्नंति नावश्यकानिनचनिषिद्धानिकिंतत्वभ्यनुज्ञातानितानिसर्वाण्यपि ब्रूहि ४६ तत्रैकविंशतिंनिषेधानाह । नहिंस्यादितिपंचभिः । नशपेन्नाक्रोशेत् । यदमंगलं कपालास्थ्यादिकं तन्नस्पृशेत् ४७ नाप्सुप्रविश्य स्नायात् पूर्वं बिधृतांस्रजं पुनर्नधारयेत् ४८ भोजनेपंचनिषेधानाह । नोच्छिष्टमिति । चंडिकान्नंभद्रकाल्यैनिवेदितम् पिपीलिकादिदूषितंवा । अंजलिनात्वपोनपिबेत् ४९ गृहाद्बहिर्निर्गमेसप्तनिषेधानाह । नोच्छिष्टेति । अनर्चितामंडनहीना । असंवीताअप्रावृता । ५० शयनेष्टौनिषेधानाह । नाधौतपादेति । नापराक् पश्चिमशिराः ५१ कार्याण्याह । धौतवासाइतिद्वाभ्याम् । प्रातराशात्प्रथमभोजनात् । ५२ वीरवतीर्जीवद्भर्तृकाः ( बलिरुपहारः । मंडनमलंकारः ) आचर्यसंपूज्य कोष्ठगतंकुक्षिगतम् । ५३ पुंसवनंपुत्रोत्पत्तिकरं । ( अविप्लुतंअविच्छिन्नं ) तुभ्यंतत्र । ५४ ( अंजः सम्यक् ) । ५५ ५६

॥ कश्यपउवाच ॥ पुत्रस्तेभविताभद्रेइंद्रहादेवबांधवः ॥ संवत्सरंव्रतमिदंयद्यंजोधारयिष्यसि ४५ ॥ दितिरुवाच ॥ धारयिष्येव्रतंब्रह्मन्ब्रूहिकार्याणियानिमे ॥ यानिचेहनिषिद्धानिनव्रतंघ्नंतियान्युत ४६ ॥ श्रीशुकउवाच ॥ नहिंस्याद्भूतजातानिनशपेन्नानृतंवदेत् ॥ नछिंद्यान्नखरोमाणिनस्पृशेद्यदमंगलम् ४७ नाप्सुस्नायान्नकुप्येतनसंभाषेतदुर्जनैः ॥ नवसीताधौतवासःस्रजंचविधृतांक्वचित् ४८ नोच्छिष्टंचंडिकान्नंचसामिषंवृषलाहृतम् ॥ भुंजीतोदक्ययादृष्टंपिबेदंजलिनात्वपः ४९ नोच्छिष्टाऽस्पृष्टसलिलासंध्यायांमुक्तमूर्धजा ॥ अनर्चिताऽसंयतवाङ्नासंवीताबहिश्चरेत् ५० नाधौतपादाऽप्रयतानार्द्रपान्नोउदक्शिराः ॥ शयीतनापराङ्नान्यैर्ननग्नानचसंध्ययोः ५१ धौतवासाःशुचिर्नित्यंसर्वमंगलसंयुता ॥ पूजयेत्प्रातराशात्प्राग्गोविप्रान्श्रियमच्युताम् ५२ स्त्रियोवीरवतीश्चार्चेत्स्रग्गंधबलिमंडनैः ॥ पतिंचार्च्योपतिष्ठेतध्यायेतकोष्ठगतंचतम् ५३ सांवत्सरंपुंसवनंव्रतमेतदविप्लुतम् ॥ धारयिष्यसिचेत्तुभ्यंशक्रहाभवितासुतः ५४ बाढमित्यभिप्रेत्याथदितीराजन्महामनाः ॥ कश्यपंगर्भमाधत्तव्रतंचांजोदधारसा ५५ मातृष्वसुरभिप्रायमिंद्रआज्ञायमानद ॥ शुश्रूषणेनाश्रमस्थांदितिंपर्यचरत्कविः ५६

हेभद्रेसंवत्सरं व्रतं यदिधारयिष्यसि तर्हिइंद्रहापुत्रोभविताव्रतवैगुण्येदेवबांधवोभविष्यति ४५ ॥ दितिरुवाच ॥ हेब्रह्मन्व्रतंधारयिष्येकर्तव्याकर्तव्यंकथय ४६ ॥ कश्यपउवाच ॥ भूतानिनहिंस्यात् नशपेत् मिथ्यानवदेत् नखरोमाणिनछिंद्यात्अस्पृश्यं नस्पृशेत् ४७ अप्सुप्रविश्यनस्नायात् दुर्जनैःसहनसंभाषेत अधौतं वासोनविधृतांस्रजंचपुनः नधारयेत् ४८ उच्छिष्टंचंडिकान्नंमांसंशूद्राहृतम् रजस्वलादृष्टंअन्नंनभुंजीत अंजलिनाअपः नपिबेत् ४९ उच्छिष्टाअस्पृष्टसलिला संध्यायांमुक्तकेशामंडनहीना असंयतवाक् अप्रावृतावहिर्नगच्छेत् ५० अधौतपादाअप्रयता आर्द्रपात् उदक्शिराः पश्चिमशिराः अन्यैः सह नग्नासंध्ययोःनशयीत ५२ धौतवासाः शुचिः सर्वमंगलयुताभोजनात् प्राक् गोविप्रान् श्रियं अच्युतं पूजयेत् ५२ सुवासिनीश्च पूजयेत् पतिंचअभ्यर्च्यउपतिष्ठेत् ध्यायेत् ५३ इदंपुंसवनव्रतंसंवत्सरंयदिधारयिष्यसितर्हिशक्रहापुत्रः भविता ५४ सावाढमित्युक्त्वा कश्यपात् गर्भंव्रतं दधार ५५ तदाइंद्रः मातृष्वसुः अभिप्रायंज्ञात्वा दितिंशुश्रूषणंचक्रे ५६

भा०ष० ( अपोजलं ) ५७ हरिरिंद्रोव्रतस्यछिद्रंप्रेप्सुः प्राप्तुमिच्छुः जिह्मः कुटिलः । मृगहालुब्धकोयथामृगवंचनायमृगवेषो भवतितद्वत्साधुवेषः ५८ केनमेशिवंस्यादितिचिंतांप्रापः । छिद्रान्वे अ०
पणेतत्परः ५९ अस्पृष्टवारिश्चामावधौतांघ्रिश्च ६० ( अतरंछिद्रम् ) निद्रयाऽपहृतंचेतोयस्याः ६१ मारोदीरित्युपलालयन्निव तान्शकलीकृतानपुनः एकैकंसप्तधाचकर्तचिच्छेद६२
पाट्यमानाः छिद्यमानाः ६३ कौशिकइंद्रः । गणान्सप्त । "सप्तगणावैमरुतः" इतिश्रुतेः । ( मह्यंमम ) ६४ ( यथाद्रौणेरस्त्रात्अस्त्रेणक्षुण्णोपिभवान्नममारतद्वत् ) ६५ ( यत्
॥३९॥ यस्मात्हरिरर्चितःअतोनममार ) ६६ सजूःसह ( मातृदोषंसपत्नभावम् ) ६७ ६८ ( हेतात आदित्यानांदेवानांयुष्माकम् ) ६९ ( सप्तसप्तएकोनपंचाशत् ) ७० दित्यानिष्कपटमुक्तेस ॥१८॥
तिइंद्रोपिनिष्कपटमेवाह । अंबेति लब्धमतरंयेन अर्थस्वबुद्धिर्यस्य ७१ ( मेमयाकृत्तश्छिन्नः वृक्णाश्छिन्नाअपिनमृताः ) ७२

नित्यंवनात्सुमनसःफलमूलसमित्कुशान् ॥ पत्रांकुरमृदोऽपश्चकालेकालउपाहरत् ५७ एवंतस्याव्रतस्थायाव्रतच्छिद्रंहरिर्नृप ॥ प्रेप्सुःपर्यचरज्जिह्मोमृग
हेवमृगाकृतिः५८नाध्यगच्छद्व्रतच्छिद्रंतत्परोथमहीपते ॥ चिंतांतीव्रांगतःशक्रःकेनमेस्याच्छिवंत्विह ५९ एकदासातुसंध्यायामुच्छिष्टाव्रतकर्शिता॥
अस्पृष्टवार्यधौतांघ्रिःसुष्वापविधिमोहिता ६० लब्ध्वातदंतरंशक्रोनिद्रापहृतचेतसः ॥ दितेःप्रविष्टउदरंयोगेशोयोगमायया ६१ चकर्तसप्तधागर्भंवज्रेण
कनकप्रभम् ॥ रुदंतंसप्तधैकैकंमारोदीरितितान्पुनः ६२ तेतमूचुःपाट्यमानाःसर्वेप्रांजलयोनृप ॥ नोजिघांससिकिमिंद्रभ्रातरोमरुतस्तव ६३ माभैष्टभ्रा
तरोमह्यंयूयमित्याहकौशिकः॥अनन्यभावान्पार्षदानात्मनोमरुतांगणान्६४नममारदितेर्गर्भःश्रीनिवासानुकंपया ॥ बहुधाकुलिशक्षुण्णोद्रौण्यस्त्रेणयथाभ
वान् ६५ सकृदिष्ट्वादिपुरुषंपुरुषोयातिसाम्यताम् ॥ संवत्सरंकिंचिदूनंदित्यायद्धरिरर्चितः ६६ सजूरिंद्रेणपंचाशद्देवास्तेमरुतोऽभवन् ॥ व्यपोह्यमातृदो
षंतेहरिणासोमपाःकृताः६७दितिरुत्थायददृशेकुमाराननलप्रभान् ॥ इंद्रेणसहितान्देवीपर्यतुष्यदनिंदिता ६८ अथेंद्रमाहताताहमादित्यानांभयावहम् ॥
अपत्यमिच्छत्यचरंव्रतमेतत्सुदुष्करम् ६९एकःसंकल्पितःपुत्रःसप्तसप्ताभवन्कथम्॥यदितेविदितंपुत्रसत्यंकथयमामृषा ७० इंद्रउवाच ॥ अंबतेहंव्यवसित
मुपधार्यागतोंतिकम् ॥ लब्ध्वांतरोऽच्छिदंगर्भमर्थबुद्धिर्नधर्मवित् ७१कृत्तोमेसप्तधागर्भआसन्सप्तकुमारकाः ॥ तेपिचैकैकशोवृक्णाःसप्तधानापिमम्रिरे ७२

वनात्फलमूलादीनि आहरत् ५७ इंद्रः तस्याः व्रतच्छिद्रंप्रेप्सुः जिह्मः पर्यचरन् व्रतच्छिद्रं नाध्यगच्छत् तदामेशिवंकेनस्यात् इतिचिंतांआप ५८ ५९ एकदासाउ
च्छिष्टाअस्पृष्टवार्यधौतांघ्रिः विधिमोहितासंध्यायांसुष्वाप ६० इंद्रः तदंतरंलब्ध्वायोगमायया।दितेःउदरंप्रविश्य ६१गर्भं सप्तधाचकर्त तेसप्तधाभूताःरुरुदुः पुनः एकैकंमा
रोदीः इत्युक्त्वासप्तधाचकर्त ६२ ॥ तदातेऊचुः ॥ हेइंद्रवयंमरुतः तेभ्रातरः नः कुतः जिघांससि ६३ तदाइंद्रआह यूयंचेत्ममभ्रातरः तर्हिमाभैष्ट ६४ एवंसातिदिते
गर्भः वज्रेणक्षुण्णोपिश्रीनिवासानुकंपयानममार यथाब्रह्मास्त्रेणभवान् ६५ ६६ तेमरुतः इंद्रेणसहपंचाशद्देवाअभवन् एवंतेमातृदोषंव्यपोह्य हरिणा सोमपाः कृताः ६७
ततोदितिः उत्थायइंद्रेणसहअग्निप्रभान् कुमारान्दृष्ट्वासंतोषंआप ६८ अथदितिः इंद्रंआह हेतात आदित्यानांभयदं एकं पुत्रंइच्छंती व्रतं आचरं ६९ तेसप्तधाकथं
अभवन् हेपुत्रयदित्वयासत्यंज्ञातं तर्हिकथय ७० ॥ इंद्रउवाच ॥ हेअंबतेव्यवसितंज्ञात्वाव्रतच्छिद्रंलब्ध्वाअंतरंगत्वासप्तसप्तधागर्भः छिन्नः ७१ तावंतः पुत्राजाताः ॥३९॥
महापुरुषपूजायाः सिद्ध्या ते नमृताः ७२

( अनुषंगिणीअवांतरफलरूपा ) ७३ अपिपरंमोक्षमपि ७४ गुणस्पर्शोविषयभोगंवुधः कोवृणीत । यद्यस्मान्नरकेपिस्यात् ७५ महीयसि हेमहत्तमे मृतः सनूउत्थितः ७६ ७७ ७८ इति षष्ठस्कंधेटीकायामष्टादशोध्यायः॥ १८॥ऊनविंशेतुयत्प्रोक्तंकश्यपेनदितेर्व्रतम् । तदेवविवृतंलोकहितायहरितोषणं॥ १॥ तस्यप्रकारमितिशेषः १ मार्गशिरेमासेशुक्लपक्षेआदितःप्रतिपदि २ अनुमंत्र्यपृष्ट्वाशुक्लादंतायस्याः साशुक्लदतीधौतदंता अलंकृतासतीपूजयेत् ३ आदौतावन्नमस्कारमंत्रानाह अलमितित्रिभिः । तेतुभ्यंअलंपर्याप्तमेवसर्वनाकिंचिदन्यैःकृत्यमस्ति । अतः केवलंतेतुभ्यंनमोस्तु । पर्याप्तौहेतवः निरपेक्षाय हेपूर्णकाम । महाविभूतिपतयेलक्ष्मीपतये सकलाःसिद्धयोअणिमाद्यायस्मिन्तस्मै ४ भोईशयथायथावत्त्वंकृपादिभिर्जुष्टःमहिना महत्त्वेन अन्यैश्चसत्यसंकल्पत्वादिभिः सर्वैर्गुणैः ततस्तस्मात् ५ महापुरुषस्यपरमेश्वरस्यैवलक्षणानिनिरपेक्षत्वादीनियस्याः तस्याः संबोधनम् ६

ततस्तत्परमाश्चर्यंवीक्ष्याध्यवसितंमया ॥ महापुरुषपूजायाःसिद्धिःकाप्यनुषंगिणी ७३ आराधनंभगवतईहमानानिराशिषः ॥ येतुनेच्छंत्यपिपरंतेस्वार्थकुशलाःस्मृताः ७४ आराध्यात्मप्रदंदेवंस्वात्मानंजगदीश्वरम् ॥ कोवृणीतगुणस्पर्शंबुधःस्यान्नरकेपियत् ७५ तदिदंममदौर्जन्यंबालिशस्यमहीयसि ॥ क्षंतुमर्हसिमातस्त्वंदिष्ट्यागर्भोमृतोत्थितः ७६ ॥ श्रीशुकउवाच ॥ इंद्रस्तयाभ्यनुज्ञातःशुद्धभावेनतुष्टया ॥ मरुद्भिःसहतांनत्वाजगामत्रिदिवंप्रभुः ७७ एवंतेसर्वमाख्यातंयन्मात्वंपरिपृच्छसि ॥ मंगलंमरुतांजन्मकिंभूयःकथयामिते ७८ ॥ इतिश्रीभागवतेमहापुराणेषष्ठस्कंधेऽष्टादशोध्यायः १८ ॥ राजोवाच ॥ व्रतंपुंसवनंब्रह्मन्भवतायदुदीरितम् ॥ तस्यवेदितुमिच्छामियेनविष्णुःप्रसीदति १॥श्रीशुकउवाच॥शुक्लेमार्गशिरेपक्षेयोषिद्भर्तुरनुज्ञया ॥आरभेतव्रतमिदंसार्वकामिकमादितः २ निशम्यमरुतांजन्मब्राह्मणाननुमंत्र्यच॥स्नात्वाशुक्लदतीशुक्लेवसीतालंकृतांबरे ॥ पूजयेत्प्रातराशात्प्राग्भगवंतंश्रियासह ३ अलंतेनिरपेक्षायपूर्णकामनमोस्तुते ॥ महाविभूतिपतयेनमःसकलसिद्धये ४ यथात्वंकृपयाभूत्यातेजसामहिनौजसा ॥ जुष्टईशगुणैःसर्वैस्ततोसिभगवान्प्रभुः ५ विष्णुपत्निमहामायेमहापुरुषलक्षणे ॥ प्रीयेथामेमहाभागेलोकमातर्नमोऽस्तुते ६

७३ तदिदंबालिशस्यममदौरात्म्यंक्षंतुमर्हसि ७४ ७५ ॥ श्रीशुकउवाच ॥ ॥तदादितिः तस्यशुद्धभावंदृष्ट्वाएतान्बंधुत्वेनपालय तवसाहाय्यंकरिष्यंति इत्याह ततः इंद्रः तांनत्वामरुद्भिः सहदिवंययौ ७६ हेराजन् एवंतेमरुतांजन्मआख्यातं भूयः किंकथयामि ७७ इतिषष्ठेष्टादशः ॥ १८ ॥ ॥ राजोवाच ॥ ॥ हेब्रह्मन्भवतायत् पुंसवनव्रतं कथितं तत्प्रकारं ज्ञातुमिच्छामिकुतःयेनविष्णुःप्रसीदति १ ॥ ॥ श्रीशुकउवाच ॥ ॥ मार्गशीर्षशुक्लपक्षप्रतिपदिस्त्रीभर्तुरनुज्ञयाइदं सार्वकामिकंव्रतं आरभेत २ मरुतांजन्मश्रुत्वाब्राह्मणाज्ञया स्नात्वा शुक्लवस्त्रे धृत्वाअलंकृता सती प्रातःश्रियासहभगवंतंपूजयेत् ३ अलंतेनिरपेक्षाययथात्वंकृपयेतिमंत्राभ्यां ४ ५ विष्णुपत्निमहामायेत्यनेनचभगवंतं श्रियंनमस्कृत्य ॐनमोभगवते महापुरुषायेति मंत्रेण षोडशोपचारैः पूजयेत् ततः ॐनमोभगवते महापुरुषायेतिमंत्रेण अनले हविःशेषेणद्वादशाहुतीर्जुहुयात् ६

पूजामंत्रमाह ॐनमइति । हविःशेषमुपहारावशिष्टम् ७ होममंत्रस्योदाहरणंदर्शयति ॐमिति । प्रकर्षेणभवंत्याभ्यामितिप्रभवौ ८ ९ (युवांश्रीश्वविष्णुश्च) १० इज्या यज्ञाभिनिर्वर्तकः पुरुषव्यापारोभावनाख्यः । क्रियालौकिकी ११ ( व्यंजकः प्रकाशकः । सर्वेषांशरीरिणामात्मा । आशयोंऽतःकरणं ) प्रत्ययोनामरूपयोः प्रकाशः अपाश्रयस्तयोराधारः १२ १३ (उपहरणमुपहारम् ) १४ १५ महापुरुषचेतसाईश्वरबुद्ध्या । उपनमेत्भजेत् । पतिश्चस्वयंप्रेमशीलःसन् पत्न्याःसर्वकर्माणिबिभृयात् । तदनुकूलोभवेदित्यर्थः १६ यत:दंपत्योर्मध्ये एकतरेणकृतमुभयोरपिभवति ( ततःपत्न्यामनर्हायांएतत्पतिः कुर्यात् ) । नविहन्यात् । नविच्छिंद्यात् १७ १८ १९

ॐनमोभगवतेमहापुरुषायमहानुभावायमहाविभूतिपतयेसहमहाविभूतिभिर्बलिमुपाहरामीति ॥ अनेनाहरहर्मंत्रेणविष्णोरावाहनार्घपाद्योपस्पर्शनस्नानवासउपवीतविभूषणगंधपुष्पधूपदीपोपहाराद्युपचारांश्वसमाहिताउपाहरेत् । हविःशेषंतुजुहुयादनलेद्वादशाहुतीः ७ ॐनमोभगवतेमहापुरुषायमहाविभूतिपतयेस्वाहेति ॥ श्रियंविष्णुंचवरदावाशिषांप्रभवावुभौ ॥ भक्त्यासंपूजयेन्नित्यंयदीच्छेत्सर्वसंपदः ८ प्रणमेद्दंडवद्भूमौभक्तिप्रह्वेणचेतसा ॥ दशवारंजपेन्मंत्रंततःस्तोत्रमुदीरयेत् ९ युवांतुविश्वस्यविभूजगतःकारणंपरम ॥ इयंहिप्रकृतिःसूक्ष्मामायाशक्तिर्दुरत्यया १० तस्याअधीश्वरःसाक्षात्त्वमेवपुरुषःपरः ॥ त्वंसर्वयज्ञइज्येयंक्रियेयंफलभुग्भवागन् ११ गुणव्यक्तिरियंदेवीव्यंजकोगुणभुग्भवान् ॥ त्वंहिसर्वशरीर्यात्माश्रीःशरीरेंद्रियाशयाः ॥ नामरूपेभगवतीप्रत्ययस्त्वमपाश्रयः १२ यथायुवांत्रिलोकस्यवरदौपरमेष्ठिनौ ॥ तथामउत्तमश्लोकसंतुसत्यामहाशिषः १३ इत्यभिष्टूयवरदंश्रीनिवासंश्रियासह ॥ तान्निःसार्योपहरणंदत्त्वाचमनमर्चयेत् १४ ततःस्तुवीतस्तोत्रेणभक्तिप्रह्वेणचेतसा ॥ यज्ञोच्छिष्टमवघ्रायपुनरभ्यर्चयेद्धरिम् १५ पतिंचपरयाभक्त्यामहापुरुषचेतसा ॥ प्रियैस्तैस्तैरुपनमेत्प्रेमशीलःस्वयंपतिः ॥ बिभृयात्सर्वकर्माणिपत्न्याउच्चावचानिच १६ कृतमेकतरेणापिदंपत्योरुभयोरपि ॥ पत्न्यांकुर्यादनर्हायांपतिरेतत्समाहितः ॥ विष्णोर्व्रतमिदंबिभ्रन्नविहन्यात्कथंचन १७ विप्रान्स्त्रियोवीरवतीःस्रग्गंधबलिमंडनैः ॥ अर्चेदहरहर्भक्त्यादेवंनियममास्थितः १८ उद्वास्यदेवंस्वेधाम्नितन्निवेदितमग्रतः ॥ अद्यादात्मविशुद्ध्यर्थंसर्वकामर्द्धयेतथा १९

श्रियंविष्णुंचभक्त्यानित्यंसंपूज्य ८ भूमौ दंडवत् प्रणम्यदशवारंमंत्रंजपेत् ९ युवांसर्वजगतः कारणम् इयंसूक्ष्माप्रकृतिः १० तस्याः साक्षात् अधीश्वरस्त्वं असि ११ इत्यादिनास्तुत्वा १२ १३ उपहरणंनिःसार्यआचमनंदत्त्वापुनः अर्चयेत् ततः स्तोत्रेणस्तुत्वायज्ञोच्छिष्टंआघ्राय पुनरर्चयेत् १५परमभक्त्यापतिंच भजेत्इदंव्रतंदंपत्योर्मध्ये एकेनकृतंउभयोरपिभवति १६इदंविष्णोर्व्रतं बिभ्रत्कथंचननविच्छिंद्यात् ततः विप्रान्सुवासिनीश्चस्रग्गंधादिभिर्नित्यं अर्चयेत् १७ १८देवं उद्वास्यतन्निवेदितं अद्यात् १९

द्वादशमासानित्युक्ते कदाचित्तन्मध्येमलमासेसति तेनसहद्वादशसंख्यायांसत्यांशुद्धस्यैकस्यत्यागः स्यात् । हायनमित्युक्तेतन्मध्यपातिनः तस्यापिप्रसंगः स्यात् । तदुभयंवारयितु मुभयमुक्तं । उपचरेत्उपवसेत् २० श्वोभूतेप्रभातेसति । पयसिश्रृतेनपक्केन पाकयज्ञविधानेनपार्वणस्थालीपाकविधानेन२१ २२सुप्रजास्त्वंसत्पुत्रत्वकरामित्यर्थः वाग्यतः सन् शेषः २३ २४ अवीराविधवाधनेश्वरीसत्यपियासुदुर्भगासासुभगाभवति २५ ( विरूपारूपरहिताऽग्र्यंश्रेष्ठंरूपंविंदेत् । ) यआमयावीरोगी सविरुजाविशिष्टयारुजाविमुच्यते । इंद्रियैः सहितं कल्पंदेहंचविंदेदितिशेषः । पठन्योवर्ततेतस्यपितॄणांदेवतानांचानंततृप्तिर्भवतीत्यर्थ २६ उपसंहरति राजन्निति । महत्पुण्यंजन्ममहद्व्रतंच २७ षष्ठस्कंधनिगूढार्थपदभावार्थदीपिका ॥ सद्भिरासेव्यतांस्पायतिश्रीधरनिर्मिता ॥ इतिश्रीधरस्वामिविरचितायां भागवतभावार्थदीपिकायांषष्ठएकोनविंशोध्यायः ॥ १९ ॥ ( व्याख्यायांश्रीधरोक्तायामत्रयद्दृश्यतेक्वचित् । वचोऽधिकंसाहनंतचक्रेमोहान्महेश्वरः १ )

एतेनपूजाविधिनामासान्द्वादशहायनम् ॥ नीत्वाऽथोपचरेत्साध्वीकार्तिकेचरमेहानि २० श्वोभूतेऽपउपस्पृश्यकृष्णमभ्यर्च्यपूर्ववत्॥ पयःशृतेनजुहुयाच्चरुणासहसर्पिषा २१ पाकयज्ञविधानेनद्वादशैवाहुतीःपतिः ॥ आशिषःशिरसादायाद्द्विजैःप्रीतैःसमीरिताः ॥ प्रणम्यशिरसाभक्त्याभुंजीततदनुज्ञया२२ आचार्यमग्रतःकृत्वावाग्यतःसहबंधुभिः ॥ दद्यात्पत्न्यैचरोःशेषंसुप्रजास्त्वंसुसौभगम् २३ एतच्चरित्वाविधिवद्व्रतंविभोरभीप्सितार्थंलभतेपुमानिह ॥ स्त्रीत्वेतदास्थायलभेतसौभगंश्रियंप्रजांजीवपतिंयशोगृहम् २४ कन्याचविंदेतसमग्रलक्षणंवरंत्ववीराहतकिल्बिषांगतिम् ॥ मृतप्रजाजीवसुताधनेश्वरी सुदुर्भगासुभगारूपमग्र्यम् २५ विंदेद्विरूपाविरुजाविमुच्यतेयआमयावींद्रियकल्पदेहम् ॥ एतत्पठन्नभ्युदयेचकर्मण्यनंततृप्तिःपितृदेवतानाम् २६ तुष्टाःप्रयच्छंतिसमस्तकामान्होमावसानेहुतभुक्श्रीहरिश्च ॥ राजन्महन्मरुतांजन्मपुण्यंदितेर्व्रतंचाभिहितंमहत्ते २७ इतिश्रीभागवतेमहापुराणेषष्ठस्कंधे पुंसवनव्रतकथनंनामैकोनविंशोध्यायः ॥ १९ ॥ ॥ श्रीकृष्णार्पणमस्तु ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥

एवंद्वादशमासान्नीत्वाकार्तिकेचरमेहनिउपवसेत् २० श्वः प्रातः अपउपस्पृश्य कृष्णंचअभ्यर्च्य पयःशृतेनघृतमिश्रचरुणायथाविधि पतिः द्वादशाहुतीर्जुहुयात् २१ द्विजाशिषोगृहीत्वा प्रणम्य २२ आचार्यपुरतः कृत्वाबंधुभिः सहभुंजीतपत्न्यैचरोः शेषंदद्यात् २४ एवंकृतेपुमान्इष्टार्थंलभतेस्त्रीतुसौभाग्यश्रियंप्रजांजीवपतियशःगृहम् कन्यातुउत्तमवरम विधवासद्गतिम् मृतप्रजाजीवसुताभवति दुर्भगासुभगास्यात् विरूपारूपंलभतेरोगीआरोग्यंलभतेएतत्पठन्अभ्युदयकर्मणिपितृदेवानांतृप्तिर्भवति तेतुष्टाः संतः अग्निः श्रीहरिश्चसर्वकामान्प्रयच्छंति २४ २५ २६ हेराजन्मरुतांपुण्यजन्मादितेर्व्रतंचतेकथितं इतिषष्टस्कंधेएकोनविंशोऽध्यायः १९ ॥ इतिषष्टस्कंधः समाप्तः ॥ श्रीकृष्णार्पणमस्तु ॥ २७ शुभंभवतु ॥ छ ॥



॥ इति सटीकसचूर्णिकश्रीमद्भागवतेषष्ठःस्कंधः समाप्तः ॥

श्रीलक्ष्मीनारायणाभ्यांनमः ॥ शांतादुर्गामहालसाभ्यांनमः । स्वभक्तपक्षपातेनतद्विपक्षविदारणम् । नृसिंहमद्भुतंवंदेपरमानंदविग्रहम् ॥ १ ॥ इतिःपंचदशाध्याये सप्तमेवर्ण्यतेऽधुना । ऊ
बिश्ववासनाप्रोक्तातत्तत्कर्मानुसारिणी ॥ २ ॥ अशुभाचशुभाचेतिसाद्विधाहेतुभेदतः । अशुभामहतांकोपाच्छुभामह दनुग्रहात् । हरेर्द्वारपयोर्यद्वद्वैकुंठेत्रसतोरपि ॥ ३ ॥ चतुःसनरुषावि
ष्णुद्वेषाच्चाशुभवासना ॥ ४ ॥ यथाहिदैत्यगर्भेपिप्रह्लादस्यसतः स्थिरा । नारदानुग्रहादासीविष्णौसद्भक्तिवासना ॥ ५ ॥ स्वभक्तंचसदाविष्णुर्द्विषतमापिरक्षति । तृतीयेपिभवेद्वाःस्थावक
रोदात्मसात्पुनः॥ ६॥अतोमनीषिणायत्नःकार्योमहदनुग्रहे।इत्येतदर्थमूतीनामत्रलक्षणमुच्यते॥७॥तत्रादौदशभिर्दैत्यतत्पुत्रमतिभेदतः।महत्कोपानुकंपोत्थवासनाभेद उच्यते॥८॥सद्वास
नानगुज्येतकर्मभिःशुद्धचेतसः परैस्तुपंचभिस्तस्मात्क्रियतेधर्मनिर्णयः॥९॥तत्रतुप्रथमेऽध्यायेहिरण्यकशिपोःसुते । विष्णुभक्तेविरोधस्तुविप्रशापजईर्यते॥१०॥यदुक्तंपूर्वस्कंधांते"हतपुत्रा
दितिःशक्रपार्ष्णिग्राहेणविष्णुना । मन्युनाशोकदीप्तेनज्वलंतीपर्यचिंतयत्"इतितच्छ्रुत्वाविस्मितःपरीक्षित्पृच्छतिसमइतित्रिभिः ( श्लोकैः । तत्रसमोरागद्वेषशून्यः । सुहृदान्मित्रंहि
तकरइत्यर्थः प्रियआत्मरूपः ) । नहिसमस्यसुहृदश्चवैषम्यंनामास्ति । नचप्रियस्यप्रीतिकर्तृपुत्रैषम्यंयुक्तमित्यर्थः १ किंच । यस्ययःप्रयोजनंसिध्यति । सतत्पक्षपातीभवति । येभ्योवि
भेतितान्विद्वेषेणहंतिनतुतदस्यास्तीत्याह । नहीति । ( अर्थःप्रयोजनं । तदभावेहेतुःसाक्षान्निरुपाधिकं ) निश्रेयसंपरमानंदएवआत्मास्वरूपंयस्यतस्य । असुरेभ्यश्चोद्वेगोभयंनास्ति
अतोविद्वेपोपिनास्त्येव । तत्रहेतुःअगुणस्येति गुणाधीनौप्रीतिद्वेषावित्यर्थः २ ( शोभनोमहान्भागोदैवंयस्यतत्संबोधनम् ) श्रीनारायणस्यगुणान्अनुग्रहादीन्प्रति।तत्तंसंशयं ३ (य
स्मिन्चरिते ) भागवतस्यप्रह्लादस्यमाहात्म्यंगीयतेइतिसंबंधः ( तस्यकथयिष्यमाणत्वात्मायेणतदेवपृष्टमित्यर्थः ) ४ कृष्णायव्यासायकृष्णंमुनिंनत्वेत्यर्थः ५ यस्मात्प्रकृतेःपरःअतो
निर्गुणः । अतएवअजःअतएवअव्यक्तःरागद्वेषादिनिमित्तभूतेंद्रियादिव्यक्तिरहितः सोपिस्वमायागुणंसत्त्वादिकंआविश्यअधिष्ठायबाध्यान्प्रति ( बाधकताम् ) यद्वादेवासुरादीनाया
परस्परंबाध्यबाधकतातांगतःप्राप्तःतत्रहेतुर्जातइत्यर्थः ६ तत्रगुणानांस्वीयत्वेसतिप्राकृतपुरुषवद्विषयःविषमःस्यात्नतुतदस्तीत्याह । सत्त्वमिति । ननस्वेच्छयागुणाधिष्ठानेनापिपक्षपा
तवैषम्यंस्यादेव । न । तस्यकालकृतत्वादित्याह नतेषामितिसार्धेन । ह्रासःक्षयः उल्लासोवृद्धिः ७

॥ श्रीः ॥ राजोवाच ॥ समःप्रियःसुहृद्ब्रह्मन्भूतानांभगवान्स्वयम् ॥ इंद्रस्यार्थेकथंदैत्यानवधीद्विषमोयथा १ नह्यस्यार्थःसुरगणैःसाक्षान्निश्रेयसात्मनः
॥ नैवासुरेभ्योविद्वेषोनोद्वेगश्चागुणस्यहि २ इतिनःसुमहाभागनारायणगुणान्प्रति ॥ संशयःसुमहान्जातस्तद्भवांश्छेत्तुमर्हति ३ ॥ श्रीशुकउ
वाच ॥ साधुपृष्टंमहाराजहरेश्चरितमद्भुतम् ॥ यद्भागवतमाहात्म्यंभगवद्भक्तिवर्धनम् ४ गीयतेपरमंपुण्यमृषिभिर्नारदादिभिः ॥ नत्वाकृष्णायमुन
येकथयिष्येहरेःकथाः ५ निर्गुणोपिह्यजोऽव्यक्तोभगवान्प्रकृतेःपरः ॥ स्वमायागुणमाविश्यबाध्यबाधकतांगतः ६ सत्त्वंरजस्तमइतिप्रकृतेर्नात्मनो
गुणाः ॥ नतेषांयुगपद्राजन्ह्रासउल्लासएवच ७

श्रीगणेशायनमः ॥ ॥ श्रीमत्कुलदेवतायैनमः ॥ अथसप्तमस्कंधचूर्णिका ॥ राजोवाच ॥ हेब्रह्मन् भगवान् सर्वभूतानांप्रियःसमश्चसन्इंद्रस्यार्थेकथंदैत्यानवधीत् १
परमात्मनः निर्गुणस्यदेवैःअर्थोनदैत्यैःसहद्वेषोपिन २ एवंसतिकथंदैत्यनाशःअतएवभगवद्गुणान्प्रतिमहान्संशयोजातःतच्छेत्तुमर्हसि ३ ॥ श्रीशुकउवाच ॥ हेमहाभा
गत्वयाहरेः चरितंसाधुपृष्टम् ४ यत्रभागवतमाहात्म्यंनारदादिभिःपरमंपुण्यंगीयते अतःकृष्णंमुनिंनत्वाहरेःकथांकथयिष्ये ५ भगवान्निर्गुणोऽपिस्वमायागुणमाविश्यबा
ध्यबाधकतांगतः ६ हेनृप सत्त्वरजस्तमइति प्रकृतेः गुणाः तेषां युगपद्ह्रासोन वृद्धिरपिन ७

सत्त्वस्यजयकालेउत्कर्षसमयेदेवानृषींश्चअभजत् । तत्तद्देहंप्रविश्यवर्द्धयतीत्यर्थः रजसोजयकालेतमसोजयकालइत्यन्वयः असुरान्मानवादीन् । तस्यकालस्यानुगुणःसन् ८ समस्या
पिनिमित्तभेदेनवैषम्येदृष्टांतः । ज्योतिरग्निर्यथाकाष्ठादिषु । (आदिशब्दात्)जलंयथापात्रेषु । आकाशंयथाघटादिषु । तथानानारूपआभाति । ननुतर्हितद्वदेवाविवेकेनप्रतीयेततत्राह
। संघातात्सुरादिदेहात्अविविच्यते ताहितान्भजतीतिकुतोज्ञायतेतत्राह । विदंतीति । आत्मस्थंपरमात्मानंकवयोनिपुणाःमथित्वाकार्यदर्शनलिंगेनविचार्यजानंति । अंततःस्वभावकर्मा
दिवादनिषेधेन । विदंतीतिपाठेलाभोपिज्ञानमेव । अत्रापिज्योतिरादिरिवेतिद्रष्टव्यम् । यथाहिसूर्यकांतादौदाहदर्शनाज्ज्योतिर्ज्ञायते । यथाचकंपदर्शनाद्वायुरित्यादि ९ तदेवंमा
यागुणवशेनतद्वैषम्यंनतुस्वाभाविकमित्युक्तम् तर्हिगुणपारतंत्र्यादनीश्वरत्वमाशंक्याह । यदात्मनोजीवस्यभोगायपुरःशरीराणिपरःपरमेश्वरःसिसृक्षुर्भवतितदासाम्येनस्थितंरजः पृथ
क्सृजति । विचित्रासुतासुपूर्षुरिरंसुःक्रीडितुमिच्छुःसत्त्वंपृथक्सृजति शयिष्यमाणःसंहरिष्यन्तमःपृथगीरयतिप्रेरयतिआविष्कुर्वन्वर्धयतीत्यर्थः १०यदासिसृक्षुरित्यादिनिर्देशात्प्रतीतंकालपा
रतंत्र्यंवारयन्प्रधानपुरुषपारतंत्र्यमपिवारयति । कालमिति । हेनरदेवप्रधानपुंभ्यांनिमित्तभूताभ्यांसत्यकृत्अमोघकर्ताईश्वरःतयोःसहकारित्वेनआश्रयभूतंचरंवर्तमानंकालंस्वयमेवसृ
जति । स्वचेष्टारूपत्वात्कालस्यनतत्पारतंत्र्यमित्यर्थः । तथापिप्रस्तुतेकिमायातंतत्राह । यएषकालःससत्त्वमेधयति । अतोहेतोःईशितापिईश्वरोपिसत्त्वप्रधानंसुरानीकंदेवसमूहमेधय
तीवेत्यर्थः तत्प्रत्यनीकान्सुरप्रतिपक्षान्प्रमिणोतिहिनस्तीवेत्यन्वयः । उरुश्रवाःकीर्तिर्यस्यसउरुश्रवाःकालशक्तिक्षुभितगुणगतवैषम्यंसन्निधिमात्रेणतदधिष्ठातरिस्फुरतीतिप्रकरणार्थः
११ इदानींतयोर्वधोनसुरपक्षपातेनाकिंतुब्राह्मणशापेनासुरीयोनिंप्राप्तयोरनुग्रहार्थएवेतिवक्तुमितिहासमुपक्षिपति । अत्रैवेति अत्रैवद्वेषादिरहितस्यापिदैत्यवधेनारदेनइतिहासःप्रस्ता
वित १२ चेदिभूभुजःशिशुपालस्य १३ १४

जयकालेतुसत्त्वस्यदेवर्षीन्रजसोऽसुरान् ॥ तमसोयक्षरक्षांसितत्कालानुगुणोऽभजत् ८ ज्योतिरादिरिवाभातिसंघातान्नविविच्यते ॥ विदंत्यात्मानमात्म
स्थंमथित्वाकवयोंऽततः ९ यदासिसृक्षुःपुरआत्मनःपरोरजःसृजत्येषपृथक्स्वमायया ॥ सत्त्वंविचित्रासुरिरंसुरीश्वरःशयिष्यमाणस्तमईरयत्यसौ १०
कालंचरंतंसृजतीशआश्रयंप्रधानपुंभ्यांनरदेवसत्यकृत् ॥ सएषराजन्नपिकालईशितासत्त्वंसुरानीकमिवैधयत्यतः ॥ तत्प्रत्यनीकानसुरान्सुरप्रियोरजस्त
मस्कान्प्रमिणोत्युरुश्रवाः ११ अत्रैवोदाहृतःपूर्वमितिहासःसुरर्षिणा ॥ प्रीत्यामहाक्रतौराजन्पृच्छतेऽजातशत्रवे १२ दृष्ट्वामहाद्भुतंराजाराजसूयेमहा
क्रतौ ॥ वासुदेवेभगवतिसायुज्यंचेदिभूभुजः १३ तत्रासीनंसुरऋषिंराजापांडुसुतःक्रतौ ॥ पप्रच्छविस्मितमनामुनीनांशृण्वतामिदम् १४

सत्त्वोत्कर्षकालेदेवादीनांवृद्धिःरजउत्कर्षेदैत्यानाम् तमस.उत्कर्षेयक्षरक्षसाम् भगवान्तत्तत्कालानुगुणोभवति ८ ९ किंच यदाजीवस्यभोगार्थंपुरःस्रष्टुंइच्छतितदारजो
वर्द्धयतियदाक्रीडितुमिच्छतितदासत्त्वंयदासंहर्तुमिच्छति तदातमः १० हेराजन् अजः प्रधानपुरुषसहकारित्वेनस्वाश्रयभूतंचरंतंकालंस्वयमेवसृजति हेनृप अयंकालः
सत्त्वगुणोत्कर्षकृत् अतः देवानांकंवर्धयति सुरप्रतिपक्षान्हिनस्ति ११ एवंकालशक्तिक्षुभितगुणगतवैषम्यंतदधिष्ठातरिस्फुरतिअतः तयोः सुरपक्षपातेनवधोन किंतु ब्रह्म
शापेनदैत्ययोनिंप्राप्तयोः अनुग्रहार्थमेववधःकृतःहेनृपएतद्विषयेमहाक्रतौपृच्छतेयुधिष्ठिरायपूर्वंसुरर्षिणाइतिहासःउदाहृतः तंशृणु १२ अथराजसूये महाक्रतौ श्रीकृष्णे शिशु
पालस्य सायुज्यं दृष्ट्वा १३ तत्र मुनीनां शृण्वतां युधिष्ठिरः नारदं उवाच १४

एकांतभक्तानामपिदुर्लभाप्राप्तिर्विद्विषोजातेत्येतदद्भुतंहि १५ तस्यतुवेनस्येवनरकपातएवोचितइत्याह। भगवन्निंदयेति। तमसिनरके १६दमघोषस्यसुतःशिशुपालःकलभाषणात्बाल्ये कोमलभाषणमारभ्यसंप्रतिअधुनापि (गोविंदे) अमर्षीक्रोधीमत्सरीवा १७ श्वित्रःकुष्टम् १८ दुरवग्राह्यंदुःप्रापंधामस्वरूपंयस्यतस्मिन्लयंसायुज्यंईयतुःजग्मतुः । अमूतस्यापिदं तत्रकिमायुज्यस्यजातकप्रामाण्येनसिद्धत्वान्निर्देशः १९एतत् अद्भुततमंहि। अतएतत्मनिभ्राम्यति। भगवान्सर्वज्ञस्त्वंब्रूहि २०आभाष्यसंबोध्यसीदंतिनिषीदंत्यस्यामितिसत्सभा तस्याःसदः सदसःशृण्वंत्याःसत्याः कथाःप्राहेत्यन्वयः २१ अहोभगवन्निंदकस्यनरकपातेनभाव्यमितियदतस्तत्रकोभिप्रायः । भगवत्पीडाकरत्वेनवातदभावेपिसुरापानादिवन्निषिद्धाचरणाद्वा । तत्रतावद्देहाभिमानकृतत्वान्निंदादिनिमित्तपीडादीनाम् । भगवतश्चतदभावान्नपीडाशंकास्तीत्याहनिंदनइतिसार्धैस्त्रिभिः निंदनंदोषकीर्तनम् । न्यक्कारास्तिरस्कारः । स्तवोगुणकीर्तनम् सत्कारआदरः।निंदनस्तुत्यादिज्ञानार्थंप्रधानपुरुषयोरविवेकेनअविवेचनेनकलेवरंकल्पितंरचितम् । देहाभिमानोनिंदनादिस्वीकारेआत्मानात्मविवेकराहित्यंहेतुरित्यर्थः २२ तस्यदेह स्याभिमानेनभूतानांयथाममाहमितिवैषम्यंतत्कृतंहिंसादिकंचभवतितथानयस्येत्युत्तरेणान्वयः । दंडस्ताडनंपारुष्यंनिंदातयोर्हिंसापीडाचभवति ( देहाभिमानेनस्वपरबुद्धिःतयाचदं डादितेनचहिंसादीत्यर्थः) २३ यस्मिन्निबद्धोयमभिमानस्तस्यदेहस्यवधात्प्राणिनांवधश्चयथातथायस्याभिमानोनास्तिअस्यपरमेश्वरस्यहिंसाकेनहेतुनाकल्प्यते । नकेनापि। अभिमाना भावेहेतुः । कैवल्यात् । अद्वितीयत्वेनअभिमंतव्याभावात् । वैषम्याभावेहेतुः अखिलात्मनःसर्वात्मनइति । तर्हिकिमितिहंति । तत्राहपरस्यदमकर्तुरिति हितार्थंदंडंकरोतीत्यर्थः २४

॥ युधिष्ठिरउवाच ॥ अहोअत्यद्भुतंह्येतद्दुर्लभैकांतिनामपि ॥ वासुदेवेपरेतत्त्वेप्राप्तिश्चैद्यस्यविद्विषः १५ एतद्वेदितुमिच्छामःसर्वएववयंमुने ॥ भगवन्निंदयावेनोद्विजैस्तमसिपातितः १६ दमघोषसुतःपापआरभ्यकलभाषणात् ॥ संप्रत्यमर्षीगोविंदेदंतवक्रश्चदुर्मतिः १७ शपतोरसकृद्विष्णुंयद्ब्रह्मपरमव्ययम् ॥ श्वित्रोनजातोजिह्वायांनांधंविविशतुस्तमः १८ कथंतस्मिन्भगवतिदुरवग्राह्यधामनि ॥ पश्यतांसर्वलोकानांलयमीयतुरंजसा १९ एतद्भ्राम्यतिमेबुद्धिर्दीपार्चिरिववायुना ॥ ब्रूह्येतदद्भुततमंभगवांस्तत्रकारणम् २० ॥ श्रीशुकउवाच ॥ राज्ञस्तद्वचआकर्ण्यनारदोभगवानृषिः ॥ तुष्टःप्राहतमाभाष्यशृण्वंत्यास्तत्सदःकथाः २१ ॥ नारदउवाच ॥ निंदनस्तवसत्कारन्यक्कारार्थंकलेवरम् ॥ प्रधानपरयोराजन्नविवेकेनकल्पितम् २२ हिंसातदभिमानेनदंडपारुष्ययोर्यथा ॥ वैषम्यमिहभूतानांममाहमितिपार्थिव २३ यन्निबद्धोऽभिमानोऽयंतद्वधात्प्राणिनांवधः ॥ तथानयस्यकैवल्यादभिमानोऽखिलात्मनः ॥ परस्यदमकर्तुर्हिहिंसाकेनास्यकल्प्यते २४

अहोएकांतभक्तानामपिदुर्लभामोक्षाप्तिःसाशत्रोःशिशुपालस्यकथंप्राप्ता १५ एतद्ज्ञातुंइच्छामः किंचभगवन्निंदयावेनःद्विजैःनरकेपातितः १६ शिशुपालदंतवक्रोतुआबाल्यात् कृष्णद्वेष्टारौ असकृद्विष्णुंशपतोःतयोः जिव्हायांकुष्टंनोत्पन्नंनरकंचनविविशतुः १७ १८ एवंसायुज्यंप्राप्तौ १९ एतद्विषयेमेमनोभ्राम्यति तत्रकारणंब्रूहि २० ॥ श्रीशुकउवाच ॥ राज्ञःवचःश्रुत्वा २१ नारदउवाच हेयुधिष्ठिर ईश्वरस्यतु वैषम्यं नास्ति २२ २३ २४

यस्माद्भगवतोनिंदादिकृतंवैषम्यंनास्तितस्माद्येनकेनाप्युपायेनध्यायतस्तेनैवानिंदादिकृतपापस्यापिनाशात्सायुज्यंयुक्तमित्याशयेनाहतस्मादितिसप्तभिः । नास्तिवैरंकेनापियस्मिन्तेन भक्तियोगेनेत्यर्थः । युंज्यान्मनइतिशेषः । तस्मात्कथंचिदेतैरुपायैःपृथक्नेक्षतेनेक्षेतअनवरतमनोयोगेनभाव्यमित्यर्थः २५ तेष्वपिवैरानुबंधःश्रेष्ठइत्याह यथेति । ( वैरस्याखंडयोगेन यथानतथाभक्तियोगेनापीति ) २६ अत्रदृष्टांतः कीटःपेशस्कृताभ्रमरेणतंभ्रमरम् । संरंभोद्वेषः भयंचसएवयोगस्तेन २७ वैरेणयाअनुचितातयैवपूतःपाप्मायेषांतेतंप्रापुः २८ तदघकामादिनिमित्तंपापंहित्वा २९ ३० तर्हिवेनःकिमितिनरकेपातितः । तीव्रध्यानाभावात्पापमेवतत्रफलितमित्याह । कतमोपीति । पुरुषंश्रीहरिंप्रतिपुरुषपुरुषस्यकामात्संभवात्भयादिभिश्चि तयतांपंचानांमध्येनकतमोपिवेनः अयंभावः । वैरंतावन्नविधीयते । किंत्वनुचिंतनमेव । वेनेनतुवैरमात्रंकृतंनतुतदनुबंधःशिशुपालादयस्तुतीव्रध्यानेनवैरादिजन्यंअघंहित्वाश्रीहरिंप्राप्ता इति ३१ तदेवमितिहासप्रस्तावकथामुक्त्वाश्रीकृष्णेशिशुपालस्यवैरानुबंधेकोहेतुरित्यपेक्षायांतमेवेतिहासंवक्तुमाह । मातृष्वस्रेयइति । पदात्वैकुंठात्प्रच्युतौ ३२ हरिदासौअभिमृशति अभिभवतीतितथा भवोजन्म कस्यशापःकीदृशोवाअश्रद्धेयइवअनादरणीयइवअसंभवात् ३३ असंभवमेवाह । जन्महेतुभूतैःप्राकृतैर्देहेंद्रियासुभिर्हीनानाम् । शुद्धसत्त्वमयदेहानामित्यर्थः प्राकृतदेहसंबंधेनसंबद्धमेतदाख्यानमाख्यातुमर्हसि ३४ ३५

तस्माद्वैरानुबंधेननिर्वैरेणभयेनवा ॥ स्नेहात्कामेनवायुंज्यात्कथंचिन्नेक्षतेपृथक् २५ यथावैरानुबंधेनमर्त्यस्तन्मयतामियात् ॥ नतथाभक्तियोगेनइतिमे निश्चितामतिः २६ कीटःपेशस्कृतारुद्धःकुड्यायांतमनुस्मरन् ॥ संरंभभययोगेनाविंदतेतत्स्वरूपताम् २७ एवंकृष्णेभगवतिमायामनुजईश्वरे ॥ वैरण पूतपाप्मानस्तमीयुरनुचिंतया २८ कामाद्द्वेषाद्भयात्स्नेहाद्यथाभक्त्येश्वरेमनः ॥ आवेश्यतदघंहित्वाबहवस्तद्गतिंगताः २९ गोप्यःकामाद्भयात्कंसोद्वेषाच्चैद्यादयोनृपाः ॥ संबंधाद्वृष्णयःस्नेहाद्यूयंभक्त्यावयंविभो ३० कतमोपिनवेनःस्यात्पंचानांपुरुषंप्रति ॥ तस्मात्केनाप्युपायेनमनःकृष्णेनिवेशयेत् ३१ मातृष्वस्रेयोवश्चैद्योदंतवक्रश्चपांडव ॥ पार्षदप्रवरौविष्णोर्विप्रशापात्पदाच्च्युतौ ३२ ॥ युधिष्ठिरउवाच ॥ कीदृशःकस्यवाशापोहरिदासाभिमर्शनः ॥ अश्रद्धेयइवाभातिहरेरेकांतिनांभवः ३३ देहेंद्रियासुहीनानांवैकुंठपुरवासिनाम् ॥ देहसंबंधसंबद्धमेतदाख्यातुमर्हसि ३४ ॥ श्रीनारदउवाच ॥ एकदा ब्रह्मणःपुत्राविष्णोर्लोकंयदृच्छया ॥ सनंदनादयोजग्मुश्चरंतोभुवनत्रयम् ३५

अतःवैरानुबंधेनभयेनस्नेहात्कामेनवाहरौमनःयुंज्यात् २५ २६ यथाकीटःभ्रमरेणरुद्धःतंअनुस्मरन्तद्रूपंविंदते २७ तथाभगवतिमनोयुंजन्पुमान्सायुज्यंप्राप्नोति २८ किंच द्वेषादिभिःईश्वरेमनःस्थाप्यबहवःतद्गतिंप्राप्ताः तेच गोप्यः कामात्भयात्कंसोद्वेषाच्चैद्यादयोनृपाः संबंधात्वृष्णयःस्नेहात्यूयंभक्त्यावयंविभो २९ एषुमध्येवेनःकतमोपिनतस्मात्केनाप्युपायेनमनःकृष्णेनिवेशयेत् ३० शिशुपालदंतवक्रौतुविष्णुपार्षदौविप्रशापात्पदच्युतौ ३१ युधिष्ठिरउवाच॥ वैकुंठवासिनोर्हरिदासयोःकीदृशःकस्यवाशापोजातः ३२ ३३ ॥ नारदउवाच ॥ एकदासनकादयः यदृच्छयावैकुंठंजग्मुः ३४ तदा द्वाःस्थौ तान् शिशून् मत्वा न्यषेधताम् ३५

कथंभूताःपंचवापट्वाहायनानिवर्षाणियेपांतेअर्भावालास्तद्वदाभायेषांते । पूर्वेषांमरीच्यादीनामपि । दिग्वाससोदिगंबराअनस्तान्शिशून्मत्वा ( द्वाःस्थौद्वारपालौ ) ३६ वासमपि नार्हथःकुतःपुनस्तत्सेवामितिचकारार्थः । हेवालिशौ अतोहेतोःआशुयातं ( गच्छतम् ) ३७ वांयुवयोस्त्रिभिर्जन्मभिःलोकायस्वस्थानप्राप्तयेकल्पतांशापइतिशेषः । तावता ( कालेन )
वंशापःममाप्यस्तामितिपुनःप्रोक्तावित्यर्थः ३८ ३९ धरोद्धारेनिमित्तेतत्रनिपक्षीहतः ४० हिरण्यकशिपोर्वधकारणंनुवयाति । हिरण्यकशिपुःपुत्रमिति ४१ सर्वभूतानामात्मभूतम् ।
कुतःसमंब्रह्मवपश्यतीतितथातम् । अतःप्रशांतंद्वेषादिरहितंअतएवभगवतस्तेजसास्पृष्टंव्याप्तम् । उद्यमैःशस्त्रप्रहारादिभिः ४२ विश्रवसःसुतौ ४३ न्यहनत्हतवानित्यर्थः । तर्हितदे
वकथनीदमित्युत्सुकंप्रत्याह । रामवीर्यमिति ४४ कृष्णचक्रेणहतमंहोययोः । पापमेवहतंनतुतावित्यर्थः ४५ ( अच्युतस्यसमात्मतांसरूपताम् ) ४६ येनकारणेनप्रह्लादस्याच्युतात्मता
अच्युतेकचित्तत्वंतदभिब्रूहीतिशेषः ४७ ॥ ॥ इतिश्रीभागवतेमहापुराणेसप्तमस्कंधेनारदयुधिष्ठिरसंवादेटीकायांप्रथमोऽध्यायः १ ॥ ॥ छ ॥

पंचषड्ढायनाभीभाःपूर्वेषामपिपूर्वजाः ॥ दिग्वाससःशिशून्मत्वाद्वाःस्थौतान्प्रत्यषेधताम् ३६ अशपन्कुपिताएवंयुवांवासंनचार्हथः ॥ रजस्तमोभ्यांरहि
तेपादमूलेमधुद्विषः ॥ पापिष्ठामासुरींयोनिंबालिशौयातमाश्वतः ३७ एवंशप्तौस्वभवनात्पतंतौतैःकृपालुभिः ॥ प्रोक्तौपुनर्जन्मभिर्वांत्रिभिर्लोकायकल्प
ताम् ३८ जज्ञातेतौदितेःपुत्रौदैत्यदानववंदितौ ॥ हिरण्यकशिपुर्ज्येष्ठोहिरण्याक्षोऽनुजस्ततः ३९ हतोहिरण्यकशिपुर्हरिणासिंहरूपिणा ॥ हिरण्या
क्षोधरोद्धारेबिभ्रतासौकरंवपुः ४० हिरण्यकशिपुःपुत्रंप्रह्लादंकेशवप्रियम् ॥ जिघांसुरकरोन्नानायातनामृत्युहेतवे ४१ सर्वभूतात्मभूतंतंप्रशांतंसमदर्श
नम् ॥ भगवत्तेजसास्पृष्टंनाशक्नोद्धंतुमुद्यमैः ४२ ततस्तौराक्षसौजातौकेशिन्यांविश्रवःसुतौ ॥ रावणःकुंभकर्णश्चसर्वलोकोपतापनौ ४३ तत्रापिराघवो
भूत्वान्यहनच्छापमुक्तये ॥ रामवीर्यंश्रोष्यसित्वंमार्कंडेयमुखात्प्रभो ४४ तावेवक्षत्रियौजातौमातृष्वस्रात्मजौतव ॥ अधुनाशापनिर्मुक्तौकृष्णचक्रहतांह
सौ ४५ वैरानुबंधतीव्रेणध्यानेनाच्युतसात्मताम् ॥ नीतौपुनर्हरेःपार्श्वंजग्मतुर्विष्णुपार्षदौ ४६ ॥ युधिष्ठिरउवाच ॥ विद्वेषोदयितेपुत्रेकथमासीन्महा
त्मनि ॥ ब्रूहिमेभगवन्येनप्रह्लादस्याच्युतात्मताम् ४७ इतिश्रीभागवतेमहापुराणेसप्तमस्कंधेनारदयुधिष्ठिरसंवादेप्रथमोऽध्यायः १ ॥ ॥ छ ॥

तदानेक्रुद्धाःसंतःऊचुःहेद्वाःस्थौयुवांअत्रवासंकर्तुंनचार्हथःअतःआसुरींयोनिंयातम् इतिअशपन् ३६ एवंशप्तौतत्स्थानात्पतंतौकृपालुभिः तैःपुनः प्रोक्तौयुवांत्रिभिर्जन्मभिः
स्वलोकायकल्पतान् ३७ तौहिरण्यकशिपुहिरण्याक्षौजातौ ३८ नृसिंहरूपिणाहरिणाज्येष्ठोहतःसूकररूपेणहिरण्याक्षोहतः ३९ हिरण्यकशिपुः हरिभक्तंपुत्रंप्रह्लादंजिघां
सुःनानायातनाःकृत्वा ४० हंतुंनाशकत् ४१ ततस्तौरावणकुंभकर्णौजातौ ४२ तौरामःअवधीत् हेधर्मतस्यवीर्यंमार्कंडेयमुखात्श्रोष्यसि ४३ तावेवशिशुपालदंतवक्रौ
कृष्णचक्रहतांहसौशापमुक्तौभूत्वापुनःपार्षदौजातौ ४४ ४५ ४६ युधिष्ठिरउवाच ॥ विष्णुभक्तेपुत्रेविद्वेषः कुतःआसीत् प्रह्लादस्यहरिभक्तिः कथंआसीत् तत्सर्वंब्रूहि
४७॥ इतिसप्तमेप्रथमः ॥ १ ॥ ॥ छ ॥

द्वितीयेविष्णुरोषेणलोकंविद्राव्यदानवैः । सह्रुतोभ्रातृपुत्रादीनितिहासैरसांत्वयत्॥१॥भगवद्वेषएवतद्वेषेपिकारणमित्याशयेनाह । भ्रातरित्यादिना । एवंदेवपक्षपातेन ( भ्रातरिहिरण्याक्षे ) १ कोपेनउत् अतिशयेनज्वलद्भिःकोपाग्निधूमैनैवधूम्रमंबरं निरीक्षमाणः २ करालदंष्ट्राभिर्युक्तयाउग्रयादृष्टयादुःप्रेक्षंभ्रुकुटीयुक्तंमुखंयस्यसः ३ ४ ( आशुमाचिरंअतिशीघ्रम् । यद्वाआशुशृणुत । माचिरंक्रियताम् ) ५ समेनापिउपधावनैः भजनैःनिमित्तभूतैः पार्ष्णिग्राहेण ( पृष्ठतोरक्षकेण) ६ एवंत्यक्तःस्वभावःसमत्वंयेन । तस्यघृणेःशुद्धतेजोमयस्यापिमायया वनौकसः वराहरूपस्यमतः अस्थिरात्मनःअव्यवसितचित्तस्य । कुतः । योयोभजतितंतंभजमानस्यअनुसरतः ७ तस्यरुधिरेणयावत्तर्पयिष्यामितावद्यूयंभुवंयातेतितृतीयेनान्वयः ८ ननुदेवैस्तद्वधःकारितः अतस्तेकिंनहन्यंतेतत्राह । तस्मिन्हरौकूटेकपटेअहितेप्रतिपक्षेकूटमीहितंयस्येतिवा । वस्तुतःकूटेनिश्चले । हितेसर्वसुहृदि । नष्टेअदृष्टेसतिदेवाःशुष्यंतिस्वयमेवनाशंयास्यंति । कुतःविष्णुरेवप्राणोयेषांतेयथाकृत्तमूलेवृक्षेशाखाःस्वयंशुष्यंतितद्वत् ९ तपोयज्ञादियुक्तान्सूदयध्वंघातयत १० ननुतैःकिमपराद्धंतत्राह । विष्णुरिति । द्विजानांक्रियाअनुष्ठानंमूलंयस्यसः । यतोसौयज्ञोधर्ममयश्चदेवादीनांपरायणंपरमआश्रयः । अतोयज्ञरूपस्यविष्णोमूलत्वात्प्रमाणादत्यतदाश्रयणाच्चेतवध्याइतिभावः ११ तस्मात्परमंमंत्रंशृणुतेत्याह । यत्रयत्रेति । संदीपयतदहत । वृश्चतआजीव्यानांवृक्षाणांछेदंकुरुत १२ ( विदधुश्चक्रुः ) १३

॥ नादरउवाच ॥ भ्रातर्येवंविनिहतेहरिणाक्रोडमूर्तिना ॥ हिरण्यकशिपूराजन्पर्यतप्यद्रुषाशुचा १ आहचेदंरुषापूर्णःसंदष्टदशनच्छदः ॥ कोपोज्ज्वलद्भ्यांचक्षुर्भ्यांनिरीक्षन्धूम्रमंबरम् २ करालदंष्ट्रोग्रदृष्ट्यादुःप्रेक्षभ्रुकुटीमुखः ॥ शूलमुद्यम्यसदसिदानवानिदमब्रवीत् ३ भोभोदानवदैतेयाद्विमूर्धत्र्यक्षशंबर ॥ शतबाहोहयग्रीवनमुचेपाकइल्वल ४ विप्रचित्तेममवचःपुलोमन्शकुनादयः ॥ शृणुतानंतरंसर्वेक्रियतामाशुमाचिरम् ५ सपत्नैर्घातितःक्षुद्रैर्भ्रातामेदयितःसुहृत् ॥ पार्ष्णिग्राहेणहरिणासमेनाप्युपधावनैः ६ तस्यत्यक्तस्वभावस्यघृणेर्मायावनौकसः ॥ भजंतंभजमानस्यबालस्येवास्थिरात्मनः ७ मच्छूलभिन्नग्रीवस्यभूरिणारुधिरेणवै ॥ रुधिरप्रियंतर्पयिष्येभ्रातरंमेगतव्यथः ८ तस्मिन्कूटेऽहितेनष्टेकृत्तमूलेवनस्पतौ ॥ विटपाइवशुष्यंतिविष्णुप्राणादिवौकसः ९ तावद्यातभुवंयूयंब्रह्मक्षत्रसमेधिताम् ॥ सूदयध्वंतपोयज्ञस्वाध्यायव्रतदानिनः १० विष्णुर्द्विजक्रियामूलोयज्ञोधर्ममयःपुमान् ॥ देवर्षिपितृभूतानांधर्मस्यचपरायणम् ११ यत्रयत्रद्विजागावोवेदावर्णाश्रमाःक्रियाः ॥ तंतंजनपदंयातसंदीपयतवृश्चत १२ इतितेभर्तृनिर्देशमादायशिरसाऽऽदृताः ॥ तथाप्रजानांकदनंविदधुःकदनप्रियाः १३

॥ नारदउवाच ॥ क्रोडमूर्तिनाहरिणाहिरण्याक्षेहतेसतिक्रुद्धः १ हिरण्यकशिपुःसदसिशूलंउद्यम्यदानवान्अब्रवीत् २ ३ भोदानवदैतेयाःमद्वचःशृणुततथैवआशुक्रियताम् ४ ५ मत्सपत्नैर्देवैः हरिणामेभ्राताघातितः ६ ७ अतःतंहरिंहत्वातद्रक्तेनयावत्भ्रातरंतर्पयिष्यामि ८ ९ तावत्भुवंयाततत्रतपोयज्ञादियुक्तान्द्विजान्घातयत १० एवंकृतेद्विजक्रियामूलोविष्णुःनश्येत् ११ किंच यत्रयत्रद्विजागावोवेदावर्णाश्रमाःक्रियाःतंतंजनपदंयात १२ संदीपयतवृश्चत इतिभर्तृगदितंश्रुत्वातथाप्रजानाशंचक्रुः १३

पुरंहट्टादिमत् । ग्रामस्तद्रहितः । व्रजोगवांवासः । उद्यानंकृत्रिमंवनम् । क्षेत्रंव्रीह्यादेः । आरामोऽकृत्रिमंवनम् । आश्रमंऋषीणांस्थानम् । आकरोरत्नादीनाम् । खेटःकृषिवलानांवासः । खर्वटोगिरिद्रोण्याश्रयआश्रमः । घोषआभीराणांवासः । पत्तनंराजधानी १४ खनित्रैः खननसाधनैः । आजीव्यान्उपजीव्यान् जंब्वाम्रकपित्थादीन् शरणानिगृहान् १५ विप्रकृतेउपद्रुते । यज्ञभागानामभावात्दिवंपरित्यज्य अलक्षिताःसंतःभुविचेरुः १६ तदेवंप्रजानांकदनंदानवेषुकुर्वत्सुस्वयंस्वर्गराज्यादिसाधयितुंतपस्तप्तुकामः प्रथमंयत्कृतवान्तदाह । हिरण्यकशिपुरित्यादिना । कटोदकंप्रेतायप्रदेयमुदकं आदिशब्दात्प्रेतश्राद्धंच १७ १८ १९ हेवधूरितिभ्रातुर्भार्यांसंबोधयति ( श्लाघ्यःस्तुत्यःईप्सितःकथितइत्यर्थः ) २० भवतुनामतस्यश्लाघ्योवधः । तथास्माकंपर्यंतावद्वंधुर्गतएवेतिचेत्तत्राह । भूतानामिति । दैवेनप्राचीनकर्मणाएकत्रनीतानांसंयोजितानां पुनश्चस्वैःस्वैःकर्मभिरुन्नीतानांवियोजितानाम् । ( प्रपापानीयशालातस्यामिव ) २१ एवंलोकदृष्ट्याशोकंनिवार्यतत्त्वदृष्ट्यानिवारयति । नित्यइति । आत्मानित्यःमृत्युशून्यः । अव्ययः अपक्षयशून्यः । शुद्धःनिर्मलः । सर्वगःसर्वगतः । सर्ववित् सर्वज्ञश्च सर्वत्रहेतुः परोदेहादिव्यतिरिक्तः अतोमृतइतिकृशइतिमलिनइतिवियुक्तइतिअज्ञइतिशोकोनकार्यइत्यर्थः । कथंतर्हितस्यसंसारः तत्राह । धत्तइति । आत्मनामाययास्वाविद्यया लिंगंधत्ते । गुणान्उच्चावचान्देहान्सुखदुःखादीन्वाविशेषेणसृजन्स्वीकुर्वन् । लिंगशरीरोपाधिःसंसारोनतुवास्तवइत्यर्थः २२ एतत्सदृष्टांतंप्रपंचयति । यथेतिचतुर्भिः । तरवःप्रतिबिंबिताः । उपाधिधर्माउपहितेभवंतीतिदृष्टांतमुक्त्वा ग्राहकधर्माग्राह्येभवंतीतिदृष्टांतांतरमाह चक्षुषेति २३

पुरग्रामव्रजोद्यानक्षेत्रारामाश्रमाकरान् ॥ खेटखर्वटघोषांश्चददहुःपत्तनानिच १४ केचित्खनित्रैर्बिभिदुःसेतुप्राकारगोपुरान् ॥ आजीव्यांश्चिच्छिदुर्वृक्षान्केचित्परशुपाणयः ॥ प्राहरन्शरणान्यन्येप्रजानांज्वलितोल्मुकैः १५ एवंविप्रकृतेलोकेदैत्येंद्रानुचरैर्मुहुः ॥ दिवंदेवाःपरित्यज्यभुविचेरुरलक्षिताः १६ हिरण्यकशिपुर्भ्रातुःसंपरेतस्यदुःखितः ॥ कृत्वाकटोदकादीनिभ्रातुःपुत्रानसांत्वयत् १७ शकुनिंशंबरंधृष्टंभूतसंतापनंवृकम् ॥ कालनाभंमहानाभंहरिश्मश्रुमथोत्कचम् १८ तन्मातरंरुषाभानुंदितिंचजननींगिरा ॥ श्लक्ष्णयादेशकालज्ञइदमाहजनेश्वर १९ ॥ हिरण्यकशिपुरुवाच ॥ अंबांबहेवधूःपुत्रावीरंमार्हथशोचितुम् ॥ रिपोरभिमुखेश्लाघ्यःशूराणांवधईप्सितः २० भूतानामिहसंवासःप्रपायामिवसुव्रते ॥ दैवेनैकत्रनीतानामुन्नीतानांस्वकर्मभिः २१ नित्यआत्माऽव्ययःशुद्धःसर्वगःसर्ववित्परः ॥ धत्तेऽसावात्मनालिंगंमाययाविसृजन्गुणान् २२ यथांऽभसाप्रचलतातरवोपिचलाइव ॥ चक्षुषाभ्राम्यमाणेनदृश्यतेचलतीवभूः २३

किंचपुरग्रामादीन्ददहुः १४ केचित्खनित्रैःसेतुप्राकारादीन्विभिदुःकेचित्आजीव्यान्वृक्षान्चिच्छिदुः १५ एवंदैत्यैःउपद्रुतेलोकेसतिदेवाःदिवंत्यक्त्वागुप्ताःसंतःभुविचेरुः १६ ततःहिरण्यकशिपुःमृतभ्रातुःपारलौकिकंकृत्वातत्पत्नींरुषाभानुंपुत्रान्शकुनिशंबरादीन् १७ १८ दितिंचसांत्वयन्उवाच १९ हिरण्यकशिपुरुवाच ॥ हेअंबहेवधूःहेपुत्राःवीरंमाशोचथ शूराणांवधःरिपोरभिमुखेश्लाघ्यएव २० अत्रभूतानांसंवासःप्रपायामिवास्ति २१ आत्मातुनित्यःदेहसंबंधस्तुमायाकृतः २२ तस्मान्मायाकृतंसर्वंमिथ्याइतिज्ञात्वामाशोचत २३

अविकल·परिपूर्णएव । तत्साम्यतांमनःसमतांइत्यर्थः २४ लिंगभावनादेहाभिमानः एषआत्मनोविपर्यासःअन्यथाभावः । तमेवाह । प्रियैर्वियोगःअप्रियैर्योगश्च । कर्मचसंसृतिश्चनाना गर्भेषुप्रवेशः २५ ततश्चसंभवउत्पत्तिः । विवेकस्यास्मृतिरननुसंधानम् २६ अत्रापि शोकहेतुंविनात्थैवायंशोकइत्यस्मिन्नर्थे । प्रेतस्यमृतस्यकस्यचिद्येयेबांधवास्तेषांसंवादंशृणुतच २७ उपासतसमीपेआवृत्यास्थिताः २८ विशीर्णरत्नमयंकवचंयस्य । विभ्रष्टानिआभरणानिस्रजश्चयस्य । शरेणनिर्भिन्नंहृदयंयस्य । असृजारक्तेनआविलंलिप्तम् २९ प्रकीर्णाःकेशायस्य । ध्वस्तेअक्षिणीयस्य । रभसामर्षेणदष्टोदच्छदओष्ठोयेन । रजसाकुंठंआवृतंमुखांभोजंयस्य । छिन्नमायुधंभुजश्चयस्य ३० तस्यपदयोरुपसमीपेआसमंतादपतन् ३१ ( स्वशोकेनपरेषामपिनृणांशुचंशोकमुत्पादयंत्यः ) ३२ विलापमेवाह । अहोइतिद्वाभ्याम् । अकरुणत्वमेवाहुः । दृशामगोचरांदशांयेनभवान्प्रणीतोगमितः । तेनविधात्रात्वमधुनाशुचांविवर्धनःकृतोसीत्यन्वयः ३३ हेमहीपतेत्वयासुहृत्तमेनविनावयंकथंस्यामभवेमजीवेमेत्यर्थः । अतःहेवीरयत्रत्वंयास्यसितत्रतेअनुयानंअनुगमनंतवपादयोःशुश्रूषांकुर्वतीनांअस्माकंदिशदेहि ३४ निर्हारंदाहार्थंनयनंअनिच्छतीनाम् । अस्तंअस्ताचलंप्रति ३५ परिदेवितंरोदनंस्वपुर्यामेवाश्रुत्यश्रुत्वातत्रस्वयमेवोपागतोयमःबालकोभूत्वातान्आह अहोइत्यादिना ३६

एवंगुणैर्भ्राम्यमाणेमनस्यविकलःपुमान् ॥ यातितत्साम्यतांभद्रेह्यलिंगोलिंगवानिव २४ एषआत्मविपर्यासोह्यलिंगेलिंगभावना ॥ एषप्रियाप्रियैर्योगोवियोगःकर्मसंसृतिः २५ संभवश्चविनाशश्चशोकश्चविविधःस्मृतः ॥ अविवेकश्चचिंताचविवेकास्मृतिरेवच २६ अत्राप्युदाहरंतीममितिहासंपुरातनम् ॥ यमस्यप्रेतबंधूनांसंवादंतंनिबोधत २७ उशीनरेष्वभूद्राजासुयज्ञइतिविश्रुतः ॥ सपत्नैर्निहतोयुद्धेज्ञातयस्तमुपासत २८ विशीर्णरत्नकवचंविभ्रष्टाभरणस्रजम् ॥ शरनिर्भिन्नहृदयंशयानमसृगाविलम् २९ प्रकीर्णकेशंध्वस्ताक्षंरभसादष्टदच्छदम् ॥ रजःकुंठमुखांभोजंछिन्नायुधभुजंमृधे ३० उशीनरेंद्रंविधिनातथाकृतंपतिंमहिष्यःप्रसमीक्ष्यदुःखिताः ॥ हताःस्मनाथेतिकरैरुरोभृशंघ्नंत्योमुहुस्तत्पदयोरुपापतन् ३१ रुदंत्यउच्चैर्दयितांघ्रिपंकजंसिंचंत्यअस्रैःकुचकुंकुमारुणैः ॥ विस्रस्तकेशाभरणाःशुचंनृणांसृजंत्यआक्रंदनयाविलेपिरे ३२ अहोविधात्राऽकरुणेननःप्रभोभवान्प्रणीतोदृगगोचरांदशाम् ॥ उशीनराणामसिवृत्तिदःपुराकृतोधुनायेनशुचांविवर्धनः ३३ त्वयाकृतज्ञेनवयंमहीपतेकथंविनास्यामसुहृत्तमेनते ॥ तत्रानुयानंतववीरपादयोःशुश्रूषतीनांदिशयत्रयास्यसि ३४ एवंविलपतीनांवैपरिगृह्यमृतंपतिम् ॥ अनिच्छतीनांनिर्हारमर्कोस्तंसंन्यवर्तत ३५ तत्रहप्रेतबंधूनामाश्रुत्यपरिदेवितम् ॥ आहतान्बालकोभूत्वायमःस्वयमुपागतः ३६

२४ २५ २६ अत्रइतिहासंशृणुत २७ उशीनरेषु सुयज्ञोनामराजाअभूत्सःयुद्धेशत्रुभिर्घातितःतंज्ञातयःआवृत्यास्थिताः २८ तदाशरनिर्भिन्नहृदयंशयानं २९ ध्वस्ताक्षंछिन्नायुधभुजं ३० एवंभूतंपतिंदृष्ट्वातस्त्रियःदुःखिताःकरैःउरोघ्नंत्यःउच्चैःरुदंत्यःसत्यःविलेपिरे ३१ ३२ अहोनिर्दयेनब्रह्मणात्वंईदृशांदशांगमितः ३३ हेराजन्त्वयासुहृत्तमेनविनावयंकथंजीवेम हेवीरयत्रत्वंयास्यसितत्रअनुगमनेनःआज्ञांदेहि ३४ एवंमृतंपतिंप्रगृह्य विलपतीनां तस्यदाहार्थंनयनंअनिच्छतीनांसतीनांसूर्यास्तंजातम् ३५ तदायमःतत्परिदेवितंश्रुत्वा बालकरूपेणतत्रागत्य तान्बोधयामास ३६

अहोआश्चर्यंवयसाअस्मत्तोऽधिकानामपिलोकस्यविधिंजन्ममरणादिप्रकारंविपश्यतामपि । विमोहमेवाह । यत्रयस्मादव्यक्तादागतः तत्रैवगतमपार्थंशोचंति । तदुक्तंगीतासु । ' अव्य
क्तादीनिभूतानिव्यक्तमध्यानिभारत । अव्यक्तनिधनान्येवतत्रकापरिदेवना' इति । किंच । स्वयमपिसधर्माःतेनसमानोमृत्युलक्षणोधर्मोयेषांतथाभूताअपि ३७ अबलादर्बलाआपितृका
दिभिरभक्ष्यमाणावयंनविचितयामः । तत्रहेतुः योऽन्तर्गर्भेरक्षतिसएवहिसर्वत्र ( विश्वं ) रक्षिता ( रक्षति ) ३८ ननुतस्यरक्षणेकिंप्रयोजनंनकिंचिदपिकिंतुक्रीडैवकेवलमित्याह ।
यइतियइदंविश्वंसृजतिरक्षतिसंहरतिच । इच्छयासंकल्पमात्रेण । भोअबलाःतस्यईशितुःचराचरंक्रीडासाधनमाहुः । अतःमएवनिग्रहेसंहारेसंग्रहेपालनेचप्रभुः ३९ प्रभुत्वमेवान्वयव्य
तिरेकाभ्यांदर्शयतिपथीति । दिष्टेनदैवेन ( तदनुरूपेण ) ईश्वरेणरक्षितम् । तेनेश्वरेणविहतमरक्षितम् । अस्यहतःतेनोपेक्षितइत्यर्थः ४० तदेवमात्मनोजन्ममरणादिकमंगीकृत्ये
श्वराधीनत्वान्नशोकःकार्यइत्युक्तं । इदानींतुदेहानामेवजन्मादिनत्वात्मनइत्याहत्रिभिः । भूतानिदेहाःनिजयोनिःस्वकारणभूतंलिंगशरीरंतन्निमित्तैःकर्मभिः ( काले ) भवंतिजायंते ।
नभवंतिनश्यंतिच । सर्वशःदेवादिदेहाअपि । तत्रहतदा प्रकृतौदेहेस्थितोप्यात्मातस्यागुणैःदेहस्यधर्मैर्जन्मादिभिर्नबध्यतेनयुज्यते । यतःअन्यतमोदेहादत्यंतविलक्षणः ४१ नन्वहंकृ
शःस्थूलइत्यादौनवैलक्षण्यंप्रतीयतेतत्राह । इदंशरीरंमोहजंअविवेकादात्मत्वेनजातं । वस्तुतस्तुपृथगेव । यतःईयतेदृश्यते । भौतिकंच । यथागृहमित्यन्वयः । अत्रैवंप्रयोगः । द्रष्टुर
भौतिकात्पुरुषात्शरीरंभिन्नंदृश्यत्वात्भौतिकत्वाच्चयथात्यंताविवेकिनआत्मत्वेनाभिमतमपिगृहंततःपृथक् तद्वदिति । भौतिकत्वानुमानंविवृण्वन्नात्मनोजन्माद्यभावमुपसंहर
ति । यथाऔदकैः परमाणुभिर्जातोबुद्बुदादिः यथाचपार्थिवैर्जातोघटादिः यथाचतैजसैर्जातः कुंडलादिर्विनश्यतिवथातैरेवत्रिविधैः परमाणुभिर्जातोजनोदेहएवविकृतः परि
णतःसन्विनश्यतिनत्वात्मेत्यर्थः ४२

॥ यमउवाच ॥ अहोअमीषांवयमाऽधिकानांविपश्यतांलोकविधिंविमोहः ॥ यत्रागतस्तत्रगतंमनुष्यंस्वयंसधर्माअपिशोचंत्यपार्थम् ३७ अहोवयंधन्यत
मायदत्रत्यक्ताःपितृभ्यांनविचिंतयामः ॥ अभक्ष्यमाणाअबलावृकादिभिःसरक्षितारक्षतियोहिगर्भे ३८ यइच्छयेशःसृजतीदमव्ययोयएवरक्षत्यवलुंपते
चयः ॥ तस्याबलाःक्रीडनमाहुरीशितुश्चराचरंनिग्रहसंग्रहेप्रभुः ३९ पथिच्युतंतिष्ठतिदिष्टरक्षितंगृहेस्थितंतद्विहतंविनश्यति ॥ जीवत्यनाथोपितदीक्षि
तोवनेगृहेपिगुप्तोऽस्यहतोनजीवति ४० भूतानितैस्तैर्निजयोनिकर्मभिर्भवंतिकालेनभवंतिसर्वशः ॥ नतत्रहात्माप्रकृतावपिस्थितस्तस्यागुणैरन्यतमोनिब
ध्यते ४१ इदंशरीरंपुरुषस्यमोहजंयथापृथक्भौतिकमीयतेगृहम् ॥ यथौदकैःपार्थिवतैजसैर्जनःकालेनजातोविकृतोविनश्यति ४२

॥ यमउवाच ॥ अहोवयसाऽधिकानांअमीषांमोहपश्यत जीवःयस्मादागतःतत्रैवगतःतंस्वयंसधर्माअपिव्यर्थशोचंति ३७ अहोवयंयुष्मत्तोधन्याःअत्रपितृभ्यांत्यक्ताः बाला
अपिवृकादिभिःअभक्ष्यमाणाःसंतःवयंनविचिंतयामःकुतःयःगर्भेरक्षतिसएवसर्वत्ररक्षिता ३८ हेअबलाःईश्वरेणईक्षितःअनाथोपिवनेजीवति तेनोपेक्षितःगृहेगुप्तोऽपि
नजीवति ३९ ४० किंचपथिच्युतंनस्तुदिष्टरक्षितंनिष्ठति गृहेस्थितमपिईश्वरेच्छयानश्यतितद्वत् अतःशोकोनकार्यःहेमूढाःयंशोचयसःअयंसुयज्ञः शेते यःश्रोता यःवक्ता
सःकोंहिचिनूनदृश्येनमएवआत्मादेहाद्भिन्नःशोचोनभवति ४१ ४२

पृथगवस्थानाभावेपिभिन्नत्वेदृष्टांतद्वयमाहयथेति । यथाऽनलोदारुष्ववस्थितोपिदाहकत्वेनप्रकाशकत्वेनचभिन्नएवप्रतीयते । यथाचदेहगतोप्यनिलोनासिकादिषुपृथक्स्थितएवप्रतीयते । देहस्थत्वेप्यात्मनस्तद्धर्मयोगाभावेदृष्टांतमाह । यथानभोनमज्जतेक्वापिसंगंनप्राप्नोति । तथापुमानपिसर्वेषांगुणानांदेहेंद्रियादीनांआश्रयःतैस्त्वाश्रितोवापरःपृथगेवेत्यर्थः ४३ किंच । हे मूढाः यमनुशोचथसोयंयुष्मद्वर्तासुयज्ञः शेतेकिमितिशोचथ । नन्वेतावंतंकालंअसौशृणोतिअनंतरं प्रतिवक्तिच । इदानींतस्यादर्शनान्मृतइतिशोचामइतिचेत्सतुनशोचनीयोभवतिप्रागपितस्यादर्शनादित्याहयःश्रोतेति ४४ ननुमुखनासिकासंचारीप्राणःश्रोतावक्ताचदृष्टएवेत्याशंक्यनासौश्रोतावक्ताचअचेतनत्वादित्याह । नश्रोतेति । महान्सर्वेंद्रियचेष्टाहेतुः अतएवमुख्यः । 'प्राणोवैमुख्यः' इतिश्रुतेः । कस्तर्हिश्रोतावक्ताचतत्राह यस्त्विहेति । यस्तुइहेंद्रियैस्तत्तदर्थद्रष्टा आत्मासश्रोतावक्ताच । सतुप्राणदेहाभ्यामचेतनाभ्यामन्यएवसचेतनश्च ४५ ननुचेतनत्वेअन्यत्वेचतस्याहंकृशःस्थूलःकाणोबधिरइत्यादिदेहधर्मोपलब्धिःकुतस्तत्राह । भूतेंद्रियमनोभिःलिंग्यंतेलक्ष्यंतइतितथातान्देहान्तेभ्योन्यएवभजतिअहमितिमन्यते । तर्हिकथंमोक्षस्तत्राह । तच्चभजनंस्वेनतेजसाविवेकबलेनउत्सृजत्यपि । हीत्यनुभवंप्रमाणयति ४६ ननुविवेकानंतरमपिआहारादिकर्मसुप्रवृत्तेर्बंधःस्यादेवेत्यतआह । यावल्लिंगशरीरेणान्वितस्तदभिमानवानात्माभवति । तावदेवतस्यतत्कर्मनिबंधनंबंधहेतुर्भवति । ततोविपर्ययःदेहधर्मभाक्त्वं । ततःक्लेशश्चानुवर्तते । नतुलिंगाभिमानेनिवृत्तेपि । यतोयंमायायोगोमाययायुज्यतइतितथा । विपर्ययादिर्नपरमार्थइत्यर्थः ४७ ननुसुखदुःखादीनांतत्साधनानांचसत्यत्वप्रतीतेःकुतोमायामयत्वं तथाचबहवोवादिनःसत्यमेवेदंतितत्राह वितथेति वितथःमिथ्याभूतोयमभिनिवेशःकोसौगुणेषुतत्कार्येषुसुखदुःखादिष्वर्थःपरमार्थइतिदृक्वचश्चेतियत् कुतइत्यतआह । यथेति ४८ उपसंहरति । अथतस्मात् नित्यमात्मानं अनित्यंदेहंवातद्विदः नित्यमनित्यंचजानंतःनशोचंति । नन्वेवमुपदेष्टारोपिशोचंतोदृश्यंतेतत्राह । नान्यथेति । ज्ञानदार्ढ्याभावात्स्वभावोननिवर्ततइत्यर्थः ४९ स्वयंसधर्माअपिइतियदुक्तंतत्रेतिहासमाह । लुब्धकइत्यादिना । पक्षिणामंतकईश्वरेणनिर्मितःसन्यत्रयत्रवेतत्रतत्रतान्कणादिभिःप्रलोभयन् जालंविस्तार्य विशेषेणधृतवान् पाठांतरेतेषामामिषादिभिःप्रलोभनंकृतवानित्यर्थः ५०

**यथाऽनलोदारुषुभिन्नईयतेयथाऽनिलोदेहगतःपृथक्स्थितः ॥ यथानभःसर्वगतंनसज्जतेतथापुमान्सर्वगुणाश्रयःपरः ४३ सुयज्ञोनन्वयंशेतेमूढायमनुशोचथ ॥ यःश्रोतायोनुवक्तेहसनदृश्येतकर्हिचित् ४४ नश्रोतानानुवक्तायंमुख्योप्यत्रमहानसुः ॥ यस्त्विहेंद्रियवानात्मासचान्यःप्राणदेहयोः ४५ भूतेंद्रियमनोलिंगान्देहानुच्चावचान्विभुः ॥ भजत्युत्सृजतिह्यन्यस्तच्चापिस्वेनतेजसा ४६ यावल्लिंगान्वितोह्यात्मातावत्कर्मनिबंधनम् ॥ ततोविपर्ययःक्लेशोमायायोगोनुवर्तते ४७ वितथाभिनिवेशोयंयद्गुणेष्वर्थदृग्वचः ॥ यथामनोरथःस्वप्नःसर्वमैंद्रियकंमृषा ४८ अथनित्यमनित्यंवानेहशोचंतितद्विदः ॥ नान्यथाशक्यतेकर्तुंस्वभावःशोचतामिति ४९ लुब्धकोविपिनेकश्चित्पक्षिणांनिर्मितोऽतकः ॥ वितत्यजालंविदधेतत्रतत्रप्रलोभयन् ५०**

४३ ४४ ४५ किंच यस्त्विहदेहेंद्रियैस्तत्तदर्थद्रष्टाआत्मासतुप्राणदेहाभ्यांअन्यएवसन् उच्चावचान्भजतिविवेकबलेनउत्सृजतिचआत्मनोदेहधर्मः ४६ ४७ सुखदुःखादिभाक्त्वंतुमाययायुज्यते तस्मान्नित्यंआत्मानंअनित्यंदेहंवाज्ञानिनःनशोचंतिस्वयंसधर्मेतियदुक्तं तत्रेतिहासमाह ४९ वनेकश्चित्लुब्धकःकणादिभिःप्रलोभयन् जालंविस्तार्यपक्षिणःधृतवान् ५०

कुलिंगः कंदमक्षीपक्षिविशेषः । कुलिंगयोर्मिथुनम् ५१ शिचस्तंत्यांजालस्यसूत्रेऽसज्जतबंधनंप्राप । ( महिषीकुलिंगस्यस्त्री ) । तांआपन्नांआपदंप्राप्तां । अकल्पः मोचयितुमसमर्थः कृपणोदी
नः । पर्यदेवयत वृक्षशाखामाश्रित्यरुरोद ५२ आकरुणयासर्वतोऽनुकंपायस्यांतया स्त्रियाकिंकरिष्यति ( मामां अनुलक्ष्यशोचंत्याकिंकरिष्यति । किमर्थमिमांरक्षेत् किंतस्यनिष्ठुरस्या
नयोपयोगइतिभावः ) ५३ आत्मनोदेहस्यार्धेनविधुरायुषाभार्याशून्यजीवितेन अनेनदुःखंयथाभवत्येवंजीवताकिंमेप्रयोजनं अतोमामपिकामंनयत्वित्यन्वयः ५४ नजाताःपक्षायेषांतान्
बालकान् कथंबिभर्मिभरिष्यामिमेप्रजामातरंप्रतीक्षंते ५५ शाकुनिकःपक्षिहंताविलीनःसन् ५६ आत्मापायंस्वमृत्युम् ५७ अयथोत्थितंमिथ्यैवाविर्भूतम् ५८ सांपरायिकंपरलोककृत्यम्
५९ अशोचतेतिपाठेअडागमआर्षः स्व-परइतिअभिनिवेशएवाज्ञानंतेनविना ६० सस्नुषास्नुषयासहिता ६१ ॥ इतिश्रीभागवतेमहापुराणेसप्तमस्कंधेटीकायांद्वितीयोऽध्यायः ॥ २ ॥

कुलिंगमिथुनंतत्रविचरत्समदृश्यत ॥ तयोःकुलिंगीसहसालुब्धकेनप्रलोभिता ५१ साऽसज्जतशिचस्तंत्यांमहिषीकालयंत्रिता ॥ कुलिंगस्तांतथापन्नांनि
रीक्ष्यभृशदुःखितः ॥ स्नेहादकल्पःकृपणःकृपणांपर्यदेवयत् ५२ अहोअकरुणोदेवःस्त्रियाऽऽकरुणयाविभुः ॥ कृपणंमानुशोचंत्यादीनयाकिंकरिष्यति ५३
कामंनयतुमांदेवःकिमर्धेनात्मनोहिमे ॥ दीनेनजीवतादुःखमनेनविधुरायुषा ५४ कथंत्वजातपक्षांस्तान्मातृहीनान्बिभर्म्यहम् ॥ मंदभाग्याःप्रतीक्षंतेनी
डेमेमातरंप्रजाः ५५ एवंकुलिंगंविलपंतमारात्प्रियावियोगातुरमश्रुकंठम् ॥ सएवतंशाकुनिकःशरेणविव्याधकालप्रहितोविलीनः ५६ एवंयूयमपश्यंत्य
आत्मापायमबुद्धयः ॥ नैनंप्राप्स्यथशोचंत्यःपतिंवर्षशतैरपि ५७ हिरण्यकशिपुरुवाच ॥ बालएवंप्रवदतिसर्वेविस्मितचेतसः ॥ ज्ञातयोमेनिरेसर्वमनित्य
मयथोत्थितम् ५८ यमएतदुपाख्यायतत्रैवांतरधीयत ॥ ज्ञातयोपिसुयज्ञस्यचक्रुर्यत्सांपरायिकम् ५९ ततःशोचतमायूयंपरंचात्मानमेवच ॥ कआत्मा
कःपरोवात्रस्वीयःपारक्यएववा ॥ स्वपराभिनिवेशेनविनाऽज्ञानेनदेहिनाम् ६० ॥ नारदउवाच ॥ इतिदैत्यपतेर्वाक्यंदितिराकर्ण्यसस्नुषा ॥ पुत्रशोकं
क्षणात्त्यक्त्वातत्त्वेचित्तमधारयत् ६१ इतिश्रीभागवतेमहापुराणेसप्तमस्कंधेद्वितीयोऽध्यायः २ ॥ ॥ ७ ॥

एवंकृतवतितत्रविचरत्कुलिंगमिथुनंदृष्ट्वातयोर्मध्येकुलिंगींप्रलोभ्यजालसूत्रेणदधार ५१ तांबद्धांदृष्ट्वाकुलिंगःमोक्तुमसमर्थः वृक्षंआश्रित्यविलापंचकार ५२ अहोदेवः
अकरुणःदीनयास्त्रियाकिंकरिष्यति ५३ मामपिकामंनयतु विधुरायुषाकिंप्रयोजनम् ५४ मातृहीनान्बालान्कथंबिभर्मि ५५ एवंविलपंतंकुलिंगंलुब्धकःगुप्तःसन्शरे
णविव्याध ५६ एवंयूयंस्वमृत्युंअपश्यंत्यःशोचंत्यःवर्षशतैरपिएनंपतिनप्राप्स्यथ ५७ हिरण्यकशिपुरुवाच ॥ इत्युक्त्वायमःअंतरधीयतसुयज्ञस्यज्ञातयःपारलौकिकंचक्रुः ५८
५९ तस्मात्यूयंमाशोचत ६० ॥ नारदउवाच ॥ एवंसस्नुषादितिः हिरण्यकशिपोर्वाक्यंश्रुत्वापुत्रशोकंत्यक्त्वा तत्त्वेचित्तं अधारयत् ६१ ॥ इतिसप्तमेद्वितीयः ॥ २ ॥

तृतीयेतस्यतपसातप्तैर्विक्ष्यजगदिदिवि । आगताःस्वस्तुतस्तेनवरयाचितश्चवरान्वव्रे ॥ १॥ तदेवंसाधूनांकदनेदानवानादिश्यवंधूनांशोकंतत्त्वनिरूपणेनापनीयस्वयंतद्वधकृन्नशानूनदाह । हिरण्यकशिपुरित्यादिना । अप्रतिद्वंद्वंप्रतिपक्षहीनं । एकराजंएकमेवराजानं । व्यधित्सतकर्तुमैच्छत् १ ऊर्ध्वौबाहूयस्य । नभसिदृष्टिर्यस्य । पादांगुष्ठेनाश्रिताऽवनिर्येन २ जटानांदीधितिभिःकांतिभिः । अंशुभिःरश्मिभिः । प्रलयकर्ताअर्कइवरेजे । पूर्वंयेअलक्षिताःसंतोविचेरुः । तेदेवाःपुनःस्वानिस्थानानिभेजिरे ३ विष्वगीरितःसर्वतःप्रसृतःसन् ४ द्वीपैरद्रिभिश्चसहिताभूश्चलिता ५ ६ तवबलिहाराः करप्रदाः पूजाकारिणइतिवा । अभितोभवतीत्यभिभूःहेअभिभूःसर्वाधिपते । पाठांतरेभोःइतिसंबोधनं । अभिअभितोयावन्ननंक्ष्यंतीतिसंबंधः ७ ब्रह्मणस्तस्मिन्नद्वेपमुत्पादयितुंतत्संकल्पमाहुः । तस्येतिचतुर्भिःतस्यसंकल्पः । तवकिंनविदितः । अथाप्यस्माभिर्निवेदितस्त्वयाश्रूयताम् ८ तपोयोगयोः समाधिनानिष्ठयासर्वधिष्ण्येभ्यःश्रेष्ठंनिजासनंसत्यलोकंयथाअध्यास्तेअधितिष्ठति ९ तत्तथैवात्मनःसाधयिष्यामि । ननुब्रह्मणाअतिदीर्घायुषातपस्तस्मात्तत्साधितं । अन्यःकुतस्तत्साधयेत् । तत्राह । कालात्मनोरिति । यद्यप्यायुषोऽल्पत्वेनदेहोवारंवारंम्रियेत । तथापिकालस्यात्मनश्चनित्यत्वात्बहुभिर्जन्मभिस्तपस्तस्मात्तत्साधयिष्याम्येवेति १०

॥ नारदउवाच ॥ हिरण्यकशिपूराजन्नजेयमजरामरम् ॥ आत्मानमप्रतिद्वंद्वमेकराजंव्यधित्सत १ सतेपेमंदरद्रोण्यांतपःपरमदारुणम् ॥ ऊर्ध्वबाहुर्नभोदृष्टिःपादांगुष्ठाश्रितावनिः २ जटादीधितिभीरेजेसंवर्तार्कइवांशुभिः ॥ तस्मिंस्तपस्तप्यमानेदेवाःस्थानानिभेजिरे ३ तस्यमूर्ध्नःसमुद्भूतःसधूमोग्निस्तपोमयः ॥ तिर्यगूर्ध्वमधोलोकानतपद्विष्वगीरितः ४ चुक्षुभुर्नद्युदन्वंतःसद्वीपाद्रिश्चचालभूः ॥ निपेतुःसग्रहास्ताराजज्वलुश्चदिशोदश ५ तेनतप्तादिवंत्यक्त्वाब्रह्मलोकंययुःसुराः ॥ धात्रेविज्ञापयामासुर्देवदेवजगत्पते ६ दैत्येंद्रतपसातप्तादिविस्थातुंनशक्नुमः ॥ तस्यचोपशमंभूमन्विधेहियदिमन्यसे । लोकानयावन्नंक्ष्यंतिबलिहारास्तवाभिभूः ७ तस्यायंकिलसंकल्पश्चरतोदुश्चरंतपः ॥ श्रूयतांकिंनविदितस्तवाथापिनिवेदितम् ८ सृष्ट्वाचराचरमिदंतपोयोगसमाधिना ॥ अध्यास्तेसर्वधिष्ण्येभ्यःपरमेष्ठीनिजासनम् ९ तदहंवर्धमानेनतपोयोगसमाधिना ॥ कालात्मनोश्चनित्यत्वात्साधयिष्येतथात्मनः १०

नारदउवाच ॥ ॥ हेयुधिष्ठिर हिरण्यकशिपुः आत्मानं अजेयंअजरामरं शत्रुहीनंकर्त्तुमिच्छन् १ ऊर्ध्वबाहुःनभोदृष्टिःपादांगुष्ठाश्रितावनिःसन्मंदरद्रोण्यांदारुणंतपःतेपे २ तदादेवाःस्वस्थानानिभेजिरे ३ बहुकालकृततपसातस्यमूर्ध्नःसधूमोऽग्निःउत्थितः तेनत्रैलोक्यंअतपत् ४ समुद्राःचुक्षुभुः द्वीपाद्रिभिःसहभूश्चचाल सग्रहास्ताराःनिपेतुः दिशःजज्वलुः ५ तेनाग्निनातप्ताःदेवाःदिवंत्यक्त्वाब्रह्मलोकंगत्वाधात्रेविज्ञापयामासुः ६ हेदेवदेव दैत्येंद्रतपसातप्ताः एवंदिविस्थातुंनशक्नुमः हेभूमन्लोकाःयावन्नंक्ष्यंतितावत्तस्यउपशमंयदिमन्यसेतर्हिविधेहि ७ हेब्रह्मन्तवकिमपिअविदितंन तथापिविज्ञापयामहे एवंतस्यसंकल्पोस्ति ८ यथाब्रह्मातपोयोगनिष्ठयासत्यलोकंअधितिष्ठति ९ तथा अहमपि तपोयोगादिना आत्मनः विधास्यामि १०

वर्धमानेनेतियदुक्तंतस्यफलमाह । अन्यथेति । अन्यथासुरासुरादिव्यत्ययेन । अयथापूर्वंपुण्यपापादिव्यत्ययेन । इदंजगाद्विधास्यामि । अन्यैर्वैष्णवादिभिःध्रुवादिपदैःकिंप्रयोजनम् । अतस्तदेवसाधयिष्यामि ११ इतित्वत्पदापहरणेतस्यनिर्बंधंशुश्रुम । अतएवासौतपःपरममास्थितःवर्ततेयदत्रयुक्तंतत् अनंतरं ( शीघ्रम् ) विधत्स्व १२ अन्यथातत्रस्थानभ्रंशेमातिमाधूनामनिष्टंस्यादितिशोचंतआहुःतवपारमेष्ठ्यमिदमासनं द्विजानांगवांचभवायउद्भवायश्रेयसे सुखायभूत्यैऐश्वर्याय । क्षेमायलब्धपालनाय । विजयायउत्कर्षाय १३ १४ वल्मीकादिभिःप्रतिच्छन्नंप्रथमंनददर्शपश्चात्कथंचिद्विलक्ष्यतंप्राहेतिद्वयोरन्वयः । पिपीलिकाभिःआचीर्णंसमंताद्भक्षितंमेदश्चत्वक्च मांसंचशोणितंचयस्य १५अभ्रैरपिहितंछन्नंरविमिवविलक्ष्यविस्मितःप्राह १६ १७हृत्सारंधैर्यं।दंशैर्मक्षिकाविशेषैर्भक्षितोदेहोयस्य १८निरंबुर्निषिद्धमंबुर्येनसःत्यक्तोदकइत्यर्थः १९तेत्वया ।अनेनव्यवसायेनैवतावज्जितोहंतपोनिष्ठनभवतातुसुतरांजितः २०मर्त्यस्यतवअमर्त्यस्यममदर्शनमफलंनभवति २१आदौभवतीत्यादिभवः । औक्षत्प्रोक्षितवान् २२वज्रवत्संहननंअंगदार्ढ्यंयस्य।तप्तस्यहेम्नइवआभायस्य २३ तस्यदर्शनेनमहानुत्सवोयस्य २४

अन्यथेदंविधास्येहमयथापूर्वमोजसा ॥ किमन्यैःकालनिर्धूतैःकल्पांतेवैष्णवादिभिः ११ इतिशुश्रुमनिर्बंधंतपःपरममास्थितः ॥ विधत्स्वानंतरंयुक्तंस्वयंत्रिभुवनेश्वर १२ तवासनंद्विजगवांपारमेष्ठ्यंजगत्पते ॥ भवायश्रेयसेभूत्यैक्षेमायविजयायच १३ इतिविज्ञापितोदेवैर्भगवानात्मभूर्नृप ॥ परितोभृगुदक्षाद्यैर्ययौदैत्येश्वराश्रमम् १४ नददर्शप्रतिच्छन्नंवल्मीकतृणकीचकैः ॥ पिपीलिकाभिराचीर्णंमेदस्त्वङ्मांसशोणितम् १५ तपंतंतपसालोकान्यथाभ्रापिहितंरविम् ॥ विलक्ष्यविस्मितःप्राहप्रहसन्हंसवाहनः १६ ॥ ब्रह्मोवाच ॥ उत्तिष्ठोत्तिष्ठभद्रंतेतपःसिद्धोसिकाश्यप ॥ वरदोहमनुप्राप्तोव्रियतामीप्सितोवरः १७ अद्राक्षमहमेतत्तेहृत्सारंमहदद्भुतम् ॥ दंशभक्षितदेहस्यप्राणाह्यस्थिषुशेरते १८ नैतत्पूर्वर्षयश्चक्रुर्नकारष्यंतिचापरे ॥ निरंबुर्धारयेत्प्राणान्कोवैदिव्यसमाःशतम् १९ व्यवसायेनतेऽनेनदुष्करेणमनास्विनाम् ॥ तपोनिष्ठेनभवताजितोहंदितिनंदन २० ततस्तआशिषःसर्वाददाम्यसुरपुंगव ॥ मर्त्यस्यतेअमर्त्यस्यदर्शनंनाफलंमम २१ ॥ श्रीनारदउवाच ॥ इत्युक्त्वादिभवोदेवोभक्षितांगंपिपीलिकैः ॥ कमंडलुजलेनौक्षद्दिव्येनामोघराधसा २२ सतत्कीचकवल्मीकात्सहओजोबलान्वितः ॥ सर्वावयवसंपन्नोवज्रसंहननोयुवा ॥ उत्थितस्तप्तहेमाभोविभावसुरिवैधसः २३ सनिरीक्ष्यांबरेदेवंहंसवाहमवस्थितम् ॥ ननामशिरसाभूमौतद्दर्शनमहोत्सवः २४

किंच इदंविश्वंसुरासुरादिव्यत्ययेनविधास्यामि ११ पुण्यपापव्यत्यासंचकरोमि एवंत्वत्पदग्रहणेतस्यविनिर्बंधंशुश्रुम अतः अत्रयत् युक्तंतत्अनंतरमेवविधत्स्व १२ हेब्रह्मन्तवासनंतुद्विजगवासुखायवर्तते अतःतदुपशमंआशुकुरु १३ एवंदेवैर्विज्ञापितःब्रह्मातदाश्रमंभृग्वादिभिःसहययौ १४ तत्रवल्मीकतृणकीचकैः प्रतिच्छन्नंतंप्रथमंददर्श पश्चात्पिपीलिकादिभिःभक्षितमेदस्त्वङ्मांसशोणितंतपसालोकान्तपंतंदैत्यंकथंचित्आलक्ष्यविस्मितःसन्प्राह १५ १६ ॥ ब्रह्मोवाच ॥ हेकाश्यपउत्तिष्ठोत्तिष्ठत्वंतपःसिद्धोऽसि अहंवरदःप्राप्तः ईप्सितोवरःव्रियताम् १७ हेदैत्यदंशभक्षितदेहस्यतेप्राणाः अस्थिषुशेरतेएवंतेधैर्यंमयादृष्टम् १८ नैतत्पूर्वर्षयःचक्रुः नचापरेकरिष्यंति शतंदिव्यसमाः निरंबु प्राणान्कःधारयेत् १९ अनेनव्यवसायेनत्वयाजितोऽहम् २० मद्दर्शनंतेनिष्फलंन अतः वरं वृणीष्व २१ ॥ नारदउवाच ॥ एवमुक्त्वाब्रह्माकमंडलुजलेनतंप्रोक्षितवान् २२ ततः सर्वावयवसंपन्नः युवावल्मीकादुत्थितःसन् २३ खेस्थितंब्रह्माणंदृष्ट्वाशिरसाभूमौप्रणम्यप्रांजलिःसन्अस्तौत् २४

हर्षेणाश्रूणिपुलकोद्भेदश्चयस्य २५ अंधेननिबिडेन । तत्रहेतुः । कालसृष्टेनप्रकृतिगुणरूपेणध्वांतेनतममाआवृतमिदंजगत्‌यःअभिव्यनक्‌अभिव्यक्तमकरोत्‌ यश्चत्रिगुणेनात्मनाइदंजग
त्सृजतिअवतिपालयतिलुंपतिसंहरतिचतस्मैरजःसत्त्वतमसांधाम्नेआश्रयायमहतेपरायपरमेश्वरायनमइतिद्वयोरन्वयः २६ २७ अत्रचस्वप्रकाशत्वंजगत्प्रकाशकत्वंतत्कारणत्वंसृष्ट्या
दिकर्तृत्वंमहत्त्वंपरमेश्वरत्वंचेतिषड्विधत्वमुक्तम्‌ । तदेवप्रपंचयन्नमस्करोति । नमइतिचतुर्भिः । बीजायकारणाय । तत्रहेतुः । आद्याय । ज्ञानंज्ञप्तिःविज्ञानंविषयाकारंज्ञानंमूर्तिर्यस्यतस्मै
अनेनस्वप्रकाशत्वंजगत्प्रकाशकत्वंचदर्शितम्‌ । बीजायेतिनिमित्तत्वमुक्तम्‌ । उपादानत्वमाह । प्राणादयोयेविकारास्तैरूपैर्व्यक्तिंकार्याकारईयुषेप्राप्तवते २८ एवमात्मनात्रिवृताचेत्य
नेनोक्तंकारणत्वंद्विधादर्शितम्‌ । महत्त्वमीश्वरत्वंचाह । त्वमिति । त्वमेवजगतोजंगमस्यतस्थुषःस्थावरस्यचईशिषेनियंताभवसि । केन । मुख्येनप्राणेनसूत्रात्मरूपेण । अतस्त्वंप्रजा
नांपतिः तासांचित्तस्यचित्तेश्चतत्परिणामभूतायाश्चेतनायामनसश्चतन्नियम्यानांइंद्रियाणांचपतिःअतस्त्वमेवमहान्‌ । भूतानामाकाशादीनांतद्गुणानांशब्दादिविषयाणांआशयानांत
द्वासनानामीशश्चएतेनैवस्वप्रवृत्तत्वंदर्शितम्‌ २९ इदानींयज्ञप्रवर्तकत्वेनांतर्यामित्वेन चजगत्पालकत्वमाह । त्वमेवसप्ततंतून्‌अग्निष्टोमादियज्ञान्‌विस्तारयसि । कथंत्रय्यातन्वावेदत्रयरूपेण ।
कथंभूतया । चत्वारोहोतारोयत्रतच्चातुर्होत्रिकंकर्म तद्विषययाविद्यया । आत्मवतांप्राणिनामात्मभूतस्त्वमेवांतरात्माचअंतर्यामी । कुतः । यतःकविःसर्वज्ञः । तत्कुतः । एकःअखंडः
तत्रहेतुः । अनादिःअनंतपारश्चेति । नास्त्यंतःकालतः पारश्चदेशतोयस्यसः ३० कालरूपेणसंहर्तृत्वमाह । त्वमेवेति । लवाद्यैःकालावयवैःक्षिणोषिक्षपयसि । तदेवंसृष्ट्यादिकर्तृत्वेपि
निर्विकारस्त्वमेवाहकूटस्थइति । तत्रहेतवः । आत्माज्ञानरूपःपरमेष्ठीपरमेश्वरःअजःजन्मशून्यः महान्‌अपरीच्छिन्नः । किंच । जीवलोकएवकर्मवशाज्जन्मादिभिर्विक्रियते
त्वंतुतस्यजीवःजीवनस्यहेतुःयतस्तस्यात्मानियंता ३१

उत्थायप्रांजलिःप्रह्वईक्षमाणोदृशाविभुम्‌ ॥ हर्षाश्रुपुलकोद्भेदोगिरागद्गदयाऽगृणात्‌ २५ ॥ हिरण्यकशिपुरुवाच ॥ कल्पांतेकालसृष्टेनयोंऽधेनतमसावृत
म्‌ ॥ अभिव्यनग्जगदिदंस्वयंज्योतिःस्वरोचिषा २६ आत्मनात्रिवृताचेदंसृजत्यवतिलुंपति ॥ रजःसत्त्वतमोधाम्नेपरायमहतेनमः २७ नमआद्यायबी
जायज्ञानविज्ञानमूर्तये ॥ प्राणेंद्रियमनोबुद्धिविकारैर्व्यक्तिमीयुषे २८ त्वमीशिषेजगतस्तस्थुषश्चप्राणेनमुख्येनपतिःप्रजानाम्‌ ॥ चित्तस्यचित्तेर्मनइंद्रि
याणांपतिर्महान्भूतगुणाशयेशः २९ त्वंसप्ततंतून्वितनोषितन्वात्रय्याचातुर्होत्रिकविद्ययाच ॥ त्वमेकआत्मात्मवतामनादिरनंतपारःकविरंतरात्मा ३० त्व
मेवकालोऽनिमिषोजनानामायुर्लवाद्यावयवैःक्षिणोषि ॥ कूटस्थआत्मापरमेष्ठ्यजोमहांस्त्वंजीवलोकस्यचजीवआत्मा ३१



२५ ॥ हिरण्यकशिपुरुवाच ॥ हेदेवत्वंतमसाव्याप्तंइदंजगत्प्रकटंकृतवान्‌ २६ किंच इदंत्वमेवपासिसृजसिहरसि रजःसत्त्वतमसां आश्रयायपरमेश्वरायतेनमः २७ २८
हेविभो त्वंचराचरस्यजगतःनियंता असि २९ किंच त्वमेवत्रय्यातन्वायज्ञान्‌विस्तारयसि ३० त्वमेवकालःसन्‌जनानांआयुःक्षिणोषि ३१

तत्कुतस्तत्राह । त्वत्तइति । त्वत्तो व्यतिरिक्तंयदिकिंचिद्भवेत् तर्हितस्मात्तवजन्मादिविकारोनियम्यत्वादिकंवाभवेत्तत्तुनास्तीत्याह । त्वत्तःपरंकारणंअपरंकार्यं । तत्रएजत्जंगमम् अनेजत्स्थावरंचव्यतिरिक्तंनास्ति । ननुमद्बोधकशास्त्रंव्यतिरिक्तमस्तीतिचेत्तत्र । यतःविद्यावेदोपवेदादिविद्यास्थानानिकलाश्चतदंगानि तवैवतनवः । नतुत्वद्व्यतिरिक्ताः । तत्कुतःयतःत्वं बृहद्ब्रह्मैवासि । तदपिकुतः तत्राह । हिरण्यरूपंब्रह्मांडंगर्भेयस्यसः । त्रिपृष्ठःत्रिगुणात्मकस्यप्रधानस्यपृष्ठेपरतःस्थितः"अक्षरात्परतःपरः"इत्यादिश्रुतेः ३२ ननुब्रह्मांडशरीरस्यजीवस्यममकुतोब्रह्मत्वंकुतोवाब्रह्मांडगर्भत्वादितत्राह । व्यक्तंकार्यमिदंतवशरीरंव्यक्तंसत्यमितिवा । येनशरीरेणत्वमिंद्रियप्राणमनसांगुणान्विषयान् भुंक्षे । किंच । पारमेष्ठ्येपरमैश्वर्येधामनिस्वरूपेस्थितएवभुंक्षेनतुअस्मदादिवत्स्वरूपविरोधानेन । अतस्त्वमव्यक्तआत्मानिरुपाधिब्रह्मैवपुराणपुरुषश्चेत्यर्थः३३ ननुब्रह्मत्वंपुराणपुरुषत्वंचकथमेकस्यतत्राहअनंतइति । हेअनंत येनत्वयाअव्यक्तेनमनोवचनागोचरेणरूपेणइदंविश्वंततंव्याप्तंतस्मैतुभ्यंभगवतेअचिंत्यैश्वर्यायनमः । भगवत्त्वेहेतुः चिच्छक्तिर्विद्याअचिच्छक्तिर्माया।ताभ्यांयुक्तायेति ३४ ३५ अन्यस्मात्त्वत्सृष्टव्यतिरिक्तादपिभगवतआयुधैर्माभूत् ३६ व्यसुभिरप्राणैःअसुमद्भिःसप्राणैः । यथात्मनस्तवास्तितथाअप्रतिद्वंद्वतादिकंदेहीतिशेषः ३७ तपसायोगेनचप्रभावोयेषांतेषांयत्अणिमाद्यैश्वर्यं (नरिष्यति) ननश्यतितच्चदेहीत्यर्थः ३८ ॥ इतिश्रीभागवतेमहापुराणेसप्तमस्कंधेटीकायांतृतीयोध्यायः ॥ ३ ॥ ॥ ७ ॥ ॥ ७ ॥ ॥ चतुर्थेतुवरान्लब्ध्वा विजित्याखिललोकपान् । विष्णुद्वेषेणतान्सर्वान्दैत्येंद्रःसमपीडयत् ॥ १ ॥ स्वतदृतिर्ब्रह्मा १

त्वत्तःपरंनापरमप्यनेजदेजच्चकिंचिद्व्यतिरिक्तमस्ति ॥ विद्याकलास्तेतनवश्चसर्वाहिरण्यगर्भोसिबृहत्त्रिपृष्ठः ३२ व्यक्तंविभोस्थूलमिदंशरीरंयेनेंद्रियप्राणमनोगुणांस्त्वम् ॥ भुंक्षेस्थितोधामनिपारमेष्ठ्येअव्यक्तआत्मापुरुषःपुराणः ३३ अनंताव्यक्तरूपेणयेनेदमखिलंततम् ॥ चिदचिच्छक्तियुक्तायतस्मैभगवतेनमः ३४ यदिदास्यस्यभिमतान्वरान्मेवरदोत्तम ॥ भूतेभ्यस्त्वद्विसृष्टेभ्योमृत्युर्माभून्ममप्रभो ३५ नांतर्बहिर्दिवानक्तमन्यस्मादपिचायुधैः ॥ नभूमौनांबरेमृत्युर्ननरैर्नमृगैरपि ३६ व्यसुभिर्वाऽसुमद्भिर्वासुरासुरमहोरगैः ॥ अप्रतिद्वंद्वतांयुद्धेऐकपत्यंचदेहिनाम् ३७ सर्वेषांलोकपालानांमहिमानंयथात्मनः ॥ तपोयोगप्रभावानांयन्नरिष्यतिकर्हिचित् ३८ ॥ इतिश्रीभागवतेमहापुराणेसप्तमस्कंधेतृतीयोध्यायः ॥ ३ ॥ ॥ श्रीनारदउवाच ॥ एवंवृतः शतधृतिर्हिरण्यकशिपोरथ ॥ प्रादात्तत्तपसाप्रीतोवरांस्तस्यसुदुर्लभान् १

किंच कार्यकारणादिसर्वंत्वव्यतिरिक्तंनास्ति वेदोपवेदादयोऽपितवैवतनवःसंति ३२ किंच इदंकार्यंतवशरीरं त्वंस्वरूपेएवस्थितःसन्येनशरीरेणविषयान्भुंक्षे अतस्त्वंब्रह्मैवासितस्मैभगवतेनमः ३३ इत्यादिएवंस्तुत्वावरंप्रार्थयते ३४ हेवरदोत्तम यदिवरान्दास्यसितर्हि त्वद्विसृष्टभूतेभ्यःमेमृत्युर्माभूत् ३५ अंतः न बहिर्न दिवान नक्तंन त्वत्सृष्टव्यतिरिक्तान्न आयुधैःन भूमौन अंबरेन नरैःन मृगैःन ३६ अप्राणैःन सप्राणैःन सुरासुरोरगैः मेमृत्युर्माभूत् किंच देहिनांऐकपत्यम् ३७ लोकपालानांमहिमानम् यथातवमहिमातंचदेहि तथाअणिमाद्यैश्वर्यंचदेहि ३८ ॥ इतिसप्तमेतृतीयः ॥ ३ ॥ ७ ॥ नारदउवाच ॥ ब्रह्माएवंवृतः तत्तपसाप्रीतः सन्दुर्लभान्वरान्दत्त्वा १

ममत्तः । यदपियद्यपिइमेदुर्लभाः ( तथापिताम्वितरामिददामि ) २ अमोघोनुग्रहोयस्यप्रजेश्वरैर्मरीच्यादिभिः ३ यदर्थंतपस्तमंतदाहएवमित्यादिना ४ ५ ६ सर्वेषांसत्वानांप्राणिजातानांयेयेपतयस्तान् ७ त्रिविष्टपंस्वर्गंअध्यास्तेस्म अधिष्ठितवान् । तत्रमहेंद्रभवनमध्युवासअधिवसतिस्म ८ अखिलर्द्धियुक्तत्वमेवाहयत्रेतित्रिभिः ९ मुक्तादामानिपरिच्छदाः परिकरायासाम् १० सुदतीःसुदत्यः ११ ऊर्जितमधिकंचंडंतीव्रंशासनंयस्य १२ अंगहेराजन् । उरुगंधिनोग्रगंधेनमधुनासुरयामत्तंअतएवविवृत्तेविघूर्णितेताम्रेअक्षिणीयस्यतम् । अशेषधिष्ण्यपाःसर्वलोकपालाःउपायनयुक्तैःपाणिभिरुपासत सेवन्ते । त्रिभिर्ब्रह्मविष्णुरुद्रैर्विना । पदंआश्रयभूतम् १३ उपासनाप्रकारमाहजगुरितिआस्थितंअधिष्ठितम् १४ १५ ( अकृष्टपच्याकर्षणमंतरेणपचंतीत्यर्थः । द्यौःस्वर्गः ) १६

ब्रह्मोवाच ।। तातेमेदुर्लभाःपुंसांयान्वृणीषेवरान्मम ।। तथापिवितराम्यंगवरान्यदपिदुर्लभान् २ ततोजगामभगवानमोघानुग्रहोविभुः ।। पूजितोऽसुरवर्येणस्तूयमानःप्रजेश्वरैः ३ एवंलब्धवरोदैत्योबिभ्रद्धेममयंवपुः ।। भगवत्यकरोद्द्वेषंभ्रातुर्वधमनुस्मरन् ४ सविजित्यदिशःसर्वालोकांश्चत्रीन्महासुरः ।। देवासुरमनुष्येंद्रान्गंधर्वगरुडोरगान् ५ सिद्धचारणविद्याध्रानृषीन्पितृपतीन्मनून् ।। यक्षरक्षःपिशाचेशान्प्रेतभूतपतीनथ ६ सर्वसत्त्वपतीन्जित्वावशमानीयविश्वजित् ।। जहारलोकपालानांस्थानानिसहतेजसा ७ देवोद्यानश्रियाजुष्टमध्यास्तेस्मत्रिविष्टपम् ।। महेंद्रभवनंसाक्षान्निर्मितंविश्वकर्मणा ।। त्रैलोक्यलक्ष्म्यायतनमध्युवासाखिलर्धिमत् ८ यत्रविद्रुमसोपानामहामरकताभुवः ।। यत्रस्फाटिककुड्यानिवैडूर्यस्तंभपंक्तयः ९ यत्रचित्रवितानानिपद्मरागासनानि च ।। पयःफेननिभाःशय्यामुक्तादामपरिच्छदाः १० कूजद्भिर्नूपुरैर्देव्यःशब्दयंत्यइतस्ततः ।। रत्नस्थलीषुपश्यंतिसुदतीःसुंदरंमुखम् ११ तस्मिन्महेंद्रभवनेमहाबलोमहामनानिर्जितलोकएकराट् ।। रेमेभिवंद्यांघ्रियुगःसुरादिभिःप्रतापितैरूर्जितचंडशासनः १२ तमंगमत्तंमधुनोरुगंधिनाविवृत्तताम्राक्षमशेषधिष्ण्यपाः ।। उपासतोपायनपाणिभिर्विनात्रिभिस्तपोयोगबलौजसांपदम् १३ जगुर्महेंद्रासनमोजसास्थितंविश्वावसुस्तुंबुरुरस्मदादयः ।। गंधर्वसिद्धाऋषयोऽस्तुवन्मुहुर्विद्याधराअप्सरसश्चपांडव १४ सएववर्णाश्रमिभिःक्रतुभिर्भूरिदक्षिणैः ।। इज्यमानोहविर्भागानग्रहीत्स्वेनतेजसा १५ अकृष्टपच्यातस्यासीत्सप्तद्वीपवतीमही ।। तथाकामदुघाद्यौस्तुनानाश्चर्यपदंनभः १६

तेनपूजितःसन् सत्यलोकंजगाम २ ३ हिरण्यकशिपुः लब्धवरः हेममयंवपुःबिभ्रत्भ्रातुर्वधंस्मरन्भगवतिद्वेषं अकरोत् ४ ततः लोकत्रयं देवदैत्यगंधर्वादीन् ५ ऋषिपितृपतिमन्वादीन्सर्वसत्त्वपतीन्जित्वावशंआनीयलोकपालानांस्थानैश्वर्यादीनिजहार ६ ७ देवोद्यानश्रियाजुष्टंत्रैलोक्यलक्ष्म्यायतनंइंद्रभवनं अधिवसतिस्म ८ तस्मिन्महेंद्रभवनंसुरादिभिर्वंदितचरणःसन्रेमे ९ १० ११ १२ हेअंगमद्येनमत्तंतंब्रह्मविष्णुरुद्रैर्विनाइंद्रादयः देवाः दैत्यगंधर्वसिद्धविद्याधरयक्षराक्षसादयः एतेसर्वेउपायनयुक्पाणिभिः उपासत १३ १४ सएववर्णाश्रमवद्भिः कृतैर्यज्ञादिभिः इज्यमानः हविर्भागान् अग्रहीत् १५ तस्य अकृष्टपच्यामहीआसीत् द्यौः कामदुघा आस १६

तत्पत्न्योनद्यःऊहुर्वहंतिस्म । रत्नाकरानेवाहक्षारेति ( सीधुमद्यं । क्षौद्रंमधु ) १७ आक्रीडंक्रीडास्थानम् ( शैलादधुः ) द्रुमाःसर्वेषुऋतुषुगुणान्पुष्पफलादीन् ( दधुः ) सचलोकपालाना पृथग्विधान्गुणान्वर्षणदहनादीन्एकएवदधार १८ निर्जिताःककुभोयेन । यथोपजोषंयथाप्रीति १९ महान्कालःएकसप्ततियुगानिकिंचिदधिकानि २० २१ २२ २३ अरूपावक्ररहिता २४ मद्दर्शनंश्रवणं । सर्वेषांश्रेयसांउपपत्तये ( प्राप्तये ) भवति २५ २६ २७ ननुदेवादिविद्वेषेप्यस्यविनाशोनास्तिब्रह्मवरेणोर्जितत्वात्तत्राह । निर्वैरायेति । सर्वमहंसहेनमद्भक्तद्रोह मितिभावः २८ असुरंचहतंमेनिरेतदानींद्वेषस्यप्रवृत्तत्वादितिभावः २९ तमेवद्वेषंवकुमादौनतस्यमहत्त्वमाह । तस्येत्यादिना । गुणैर्महानभूत् । गुणानेवाहमहदुपासकइत्यादिना ३० सत्यासंधाप्रतिज्ञायस्य । एकएवप्रियश्चसुहृत्तमश्च ३१

रत्नाकराश्चरत्नौघास्तत्पत्न्यश्चोहुरूर्मिभिः ॥ क्षारसीधुघृतक्षौद्रदधिक्षीरामृतोदकाः १७ शैलाद्रोणिभिराक्रीडंसर्वर्तुषुगुणान्द्रुमाः ॥ दधारलोकपालाना मेकएवपृथग्गुणान् १८ सइत्थंनिर्जितककुबेकराड्विषयान्प्रियान् ॥ यथोपजोषंभुंजानोनातृप्यदजितेंद्रियः १९ एवमैश्वर्यमत्तस्यदृप्तस्योच्छास्त्रव र्तिनः ॥ कालोमहान्व्यतीयायब्रह्मशापमुपेयुषः २० तस्योग्रदंडसंविग्नाःसर्वेलोकाःसपालकाः ॥ अन्यत्रालब्धशरणाःशरणंययुरच्युतम् २१ तस्यैनमो स्तुकाष्ठायैयत्रात्माहरिरीश्वरः ॥ यद्गत्वाननिवर्ततेशांताःसन्यासिनोऽमलाः २२ इतितेसंयतात्मानःसमाहितधियोमलाः ॥ उपतस्थुर्हृषीकेशंविनिद्रावा युभोजनाः २३ तेषामाविरभूद्वाणीअरूपामेघनिःस्वना ॥ संनादयंतीककुभःसाधूनामभयंकरी २४ माभैष्टविबुधश्रेष्ठाःसर्वेषांभद्रमस्तुवः ॥ मद्दर्शनंहि भूतानांसर्वश्रेयोपपत्तये २५ ज्ञातमेतस्यदौरात्म्यंदैतेयापसदस्ययत् ॥ तस्यशांतिंकरिष्यामिकालंतावत्प्रतीक्षताम् २६ यदादेवेषुवेदेषुगोषुविप्रेषुसाधु षु ॥ धर्मेमयिचविद्वेषःसवाआशुविनश्यति २७ निर्वैरायप्रशांतायस्वसुतायमहात्मने ॥ प्रह्रादाययदाद्रुह्येत्हनिष्येऽपिवरोर्जितम् २८ श्रीनारदउ वाच ॥ इत्युक्तालोकगुरुणातंप्रणम्यदिवौकसः ॥ न्यवर्ततगतोद्वेगामेनिरेचासुरंहतम् २९ तस्यदैत्यपतेःपुत्राश्चत्वारःपरमाद्भुताः ॥ प्रह्रादोभून्महां स्तेषांगुणैर्महदुपासकः ३० ब्रह्मण्यःशीलसंपन्नःसत्यसंधोजितेंद्रियः ॥ आत्मवत्सर्वभूतानामेकःप्रियसुहृत्तमः ३१

समुद्रः रत्नौघान्ददुः नद्यः घृतदुग्धादीन्ऊहुः १७ पर्वताः क्रीडास्थानानिददुः द्रुमाः सर्वर्तुषुपुष्पफलादीन् दधुः लोकपालानांपृथक्गुणान् एक एवदधार १८ एवं सः त्रैलोक्यैश्वर्यंभुंजन्नातृप्यत १९ ऐश्वर्यमत्तस्यतस्यमहान्कालः अगात् २० तस्योग्रदंडसंविग्नाः सर्वेलोकाः सपालकाः विनिद्राः वायुभोजनाःसंतः अच्युतंशरणंग त्वाउपतस्थुः २१ २२ २३ तदासाधूनां अभयंकरी आकाशवाणी अभवत् २४ हेदेवाः माभैष्ट २५ वःभद्रं तस्यदौरात्म्यंज्ञातं तच्छांतिंकरिष्यामि तावत्कालंप्रतीक्षत २६ यदावेदेषुदेवेषुगोषुविप्रेषुसाधुषु धर्मेमयिचविद्वेषः सवाआशुर्विनश्यति २७ किंच यदानिर्वैरायस्वसुतमद्भक्तप्रह्रादायद्रुह्येत्तदा वरोर्जितमपितंहनिष्ये २८॥ नारदउ वाच ॥ इत्युक्तादेवाः तंप्रणम्य न्यवर्तंत असुरंहतं च मेनिरे २९ तस्यदैत्यपतेः पुत्राः चत्वारः आसन् तेषुप्रह्रादः गुणैर्महान् आसीत् ३०

ममभत्तः । यदपियद्यपिइमेदुर्लभाः ( तथापिताम्वितरामिददामि ) २ अमोघोनुग्रहोयस्यप्रजेश्वरैर्मरीच्यादिभिः ३ यदर्थंतपस्तमंतदाहएवमित्यादिना ४ ५ ६ सर्वेषांसत्त्वानांप्राणिजातानांयेपतयस्तान् ७ त्रिविष्टपंस्वर्गंअध्यास्तेस्म अधिष्ठितवान् । तत्रमहेंद्रभवनमध्युवास अधिवसतिस्म ८ अखिलर्द्धियुक्तत्वमेवाइयत्रेतित्रिभिः ९ मुक्तादामानिपरिच्छदाः परिकरायासाम् १० सुदतीःसुदत्यः ११ ऊर्जितमधिकंचंडंतीव्रंशासनंयस्य १२ अंगहेराजन् । उरुगंधिनोग्रगंधेनमधुनासुरयामत्तं अतएवविवृत्तेविघूर्णितेताम्रेअक्षिणीयस्यतम् । अशेषधिष्ण्यपाःसर्वलोकपालाःउपायनयुक्तैःपाणिभिरुपासत सेवन्ते । त्रिभिर्ब्रह्मविष्णुरुद्रैर्विना । पदंआश्रयभूतम् १३ उपासनाप्रकारमाहजगुरितिआस्थितंअधिष्ठितम् १४ १५ ( अकृष्टपच्याकर्षणमंतरेणपच्यंतीत्यर्थः । द्यौःस्वर्गः ) १६



ब्रह्मोवाच । तातेमेदुर्लभाःपुंसांयान्वृणीषेवरान्मम ॥ तथापिवितराम्यंगवरान्यदपिदुर्लभान् २ ततोजगामभगवानमोघानुग्रहोविभुः ॥ पूजितोऽसुरवर्येणस्तूयमानःप्रजेश्वरैः ३ एवंलब्धवरोदैत्योबिभ्रद्धेममयंवपुः ॥ भगवत्यकरोद्द्वेषंभ्रातुर्वधमनुस्मरन् ४ सविजित्यदिशःसर्वालोकांश्चत्रीन्महासुरः ॥ देवासुरमनुष्येंद्रान्गंधर्वगरुडोरगान् ५ सिद्धचारणविद्याध्रानृषीन्पितृपतीन्मनून् ॥ यक्षरक्षःपिशाचेशान्प्रेतभूतपतीनथ ६ सर्वसत्त्वपतीन्जित्वावशमानीयविश्वजित् ॥ जहारलोकपालानांस्थानानिसहतेजसा ७ देवोद्यानश्रियाजुष्टमध्यास्तेस्मत्रिविष्टपम् ॥ महेंद्रभवनंमाक्षान्निर्मितंविश्वकर्मणा ॥ त्रैलोक्यलक्ष्म्यायतनमध्युवासाखिलर्धिमत् ८ यत्रविद्रुमसोपानामहामरकताभुवः ॥ यत्रस्फटिककुड्यानिवैडूर्यस्तंभपंक्तयः ९ यत्रचित्रवितानानिपद्मरागासनानिच ॥ पयःफेननिभाःशय्यामुक्तादामपरिच्छदाः १० कूजद्भिर्नूपुरैर्देव्यःशब्दयंत्यइतस्ततः ॥ रत्नस्थलीषुपश्यंतिसुदतीःसुंदरंमुखम् ११ तस्मिन्महेंद्रभवनेमहाबलोमहामनानिर्जितलोकएकराट् ॥ रेमेभिवंद्यांघ्रियुगःसुरादिभिःप्रतापितैरूर्जितचंडशासनः १२ तमंगमत्तंमधुनोरुगंधिनाविवृत्तताम्राक्षमशेषधिष्ण्यपाः ॥ उपासतोपायनपाणिभिर्विनात्रिभिस्तपोयोगबलौजसांपदम् १३ जगुर्महेंद्रासनमोजसास्थितंविश्वावसुस्तुंबुरुरस्मदादयः ॥ गंधर्वसिद्धाऋषयोऽस्तुवन्मुहुर्विद्याधराअप्सरसश्चपांडव १४ सएववर्णाश्रमिभिःक्रतुभिर्भूरिदक्षिणैः ॥ इज्यमानोहविर्भागानग्रहीत्स्वेनतेजसा १५ अकृष्टपच्यातस्यासीत्सप्तद्वीपवतीमही ॥ तथाकामदुघाद्यौस्तुनानाश्चर्यपदंनभः १६

तेनपूजितःसन् सत्यलोकंजगाम २ ३ हिरण्यकशिपुः लब्धवरः हेममयंवपुःबिभ्रत्भ्रातुर्वधंस्मरन्भगवतिद्वेषं अकरोत् ४ ततः लोकत्रयं देवदैत्यगंधर्वादीन् ५ ऋषिपितृपतिमन्वादीन्सर्वसत्त्वपतीन्जित्वावशंआनीयलोकपालानांस्थानैश्वर्यादीनिजहार ६ ७ देवोद्यानश्रियाजुष्टंत्रैलोक्यलक्ष्म्यायतनंइंद्रभवनं अधिवसतिस्म ८ तस्मिन् ॥ ८ ॥
महेंद्रभवनंसुरादिभिर्वंदितचरणःसन्रेमे ९ १० ११ १२ हेअंगमद्येनमत्तंतंब्रह्मविष्णुरुद्रैर्विनाइंद्रादयः देवाः दैत्यगंधर्वसिद्धविद्याधरयक्षराक्षसादयः एतेसर्वेउपायनयुक्पाणिभिः उपासत १३ १४ सएववर्णाश्रमवद्भिः कृतैर्यज्ञादिभिः इज्यमानः हविर्भागान् अग्रहीत् १५ तस्य अकृष्टपच्यामहीआसीत् द्यौः कामदुघा आस १६

तत्पत्न्योनद्यःऊहुर्वहंतिस्म । रत्नाकरानेवाहसारेति ( सीधुमद्यं । क्षौद्रंमधु) १७ आक्रीडंक्रीडास्थानम् ( शैलादधुः ) द्रुमाःसर्वेषृक्तुषुगुणान्पुष्पफलादीन् ( दधुः ) सचलोकपालानां पृथग्विधान्गुणान्वर्षणदहनादीन्एकएवदधार १८ निर्जिताःककुभोयेन । यथोपजोषंयथाप्रीति १९ महान्कालःएकसप्ततियुगानिकिंचिदधिकानि २० २१ २२ २३ अरूपावक्राहिता २४ मद्दर्शनंश्रवणं । सर्वेषांश्रेयसांउपपत्तये ( प्राप्तये ) भवति २५ २६ २७ ननुदेवादिविद्वेषेप्यस्यविनाशोनास्तिब्रह्मवरेणोर्जितत्वात्तत्राह । निर्वैरायेति । सर्वमहंसहेनमद्भक्तद्रोह मितिभावः २८ असुरंचहतंमेनिरेतदानींद्वेषस्यप्रवृत्तत्वादितिभावः २९ तमेवद्वेषंवक्तुमादौतस्यमहत्त्वमाह । तस्येत्यादिना । गुणैर्महानभूत् । गुणानेवाहमहदुपासकइत्यादिना ३० सत्यासंधाप्रतिज्ञायस्य । एकएवप्रियश्चसुहृत्तमश्च ३१

रत्नाकराश्चरत्नौघास्तत्पत्न्यश्चोहुरूर्मिभिः ॥ क्षारसीधुघृतक्षौद्रदधिक्षीरामृतोदकाः १७ शैलाद्रोणिभिराक्रीडंसर्वर्तुषुगुणान्द्रुमाः ॥ दधारलोकपालाना मेकएवपृथग्गुणान् १८ सइत्थंनिर्जितककुबेकराड्विषयान्प्रियान् ॥ यथोपजोषंभुंजानोनातृप्यदजितेंद्रियः १९ एवमैश्वर्यमत्तस्यदृप्तस्योच्छास्त्रव र्तिनः ॥ कालोमहान्व्यतीयायब्रह्मशापमुपेयुषः २० तस्योग्रदंडसंविग्नाःसर्वेलोकाःसपालकाः ॥ अन्यत्रालब्धशरणाःशरणंययुरच्युतम् २१ तस्यैनमो स्तुकाष्ठायैयत्रात्माहरिरीश्वरः ॥ यद्गत्वाननिवर्तंतेशांताःसन्यासिनोऽमलाः २२ इतितेसंयतात्मानःसमाहितधियोमलाः ॥ उपतस्थुर्हृषीकेशंविनिद्रावा युभोजनाः २३ तेषामाविरभूद्वाणीअरूपामेघनिःस्वना ॥ संनादयंतीककुभःसाधूनामभयंकरी २४ माभैष्टविबुधश्रेष्ठाःसर्वेषांभद्रमस्तुवः ॥ मद्दर्शनंहि भूतानांसर्वश्रेयोपपत्तये २५ ज्ञातमेतस्यदौरात्म्यंदैतेयापसदस्ययत् ॥ तस्यशांतिंकरिष्यामिकालंतावत्प्रतीक्षताम् २६ यदादेवेषुवेदेषुगोषुविप्रेषुसाधु षु ॥ धर्मेमयिचविद्वेषःसवाआशुविनश्यति २७ निर्वैरायप्रशांतायस्वसुतायमहात्मने ॥ प्रह्लादाययदाद्रुह्येत्तदाहनिष्येऽपिवरोर्जितम् २८ श्रीनारदउ वाच ॥ इत्युक्तालोकगुरुणातंप्रणम्यदिवौकसः ॥ न्यवर्ततगतोद्वेगामेनिरेचासुरंहतम् २९ तस्यदैत्यपतेःपुत्राश्चत्वारःपरमाद्भुताः ॥ प्रह्लादोभून्महां स्तेषांगुणैर्महदुपासकः ३० ब्रह्मण्यःशीलसंपन्नःसत्यसंधोजितेंद्रियः ॥ आत्मवत्सर्वभूतानामेकःप्रियसुहृत्तमः ३१

समुद्रः रत्नौघानूददुः नद्यः घृतदुग्धादीन्ऊहुः १७ पर्वताः क्रीडास्थानानिददुः द्रुमाः सर्वर्तुषुपुष्पफलादीन् दधुः लोकपालानांपृथक्गुणान् एक एवदधार १८ एवं सः त्रैलोक्यैश्वर्यंभुंजन्नातृप्यत १९ ऐश्वर्यमत्तस्यतस्यमहान्कालः अगात् २० तस्योग्रदंडसंविग्नाः सर्वेलोकाः सपालकाः विनिद्राः वायुभोजनाःसंतः अच्युतंशरणंग त्वाउपतस्थुः २१ २२ २३ तदासाधूनां अभयंकरी आकाशवाणी अभवत् २४ हेदेवाः माभैष्ट २५ वःभद्रं तस्यदौरात्म्यंज्ञातं तच्छांतिंकरिष्यामि तावत्कालंप्रतीक्षत २६ यदावेदेषुदेवेषुगोषुविप्रेषुसाधुषु धर्मेमयिचविद्वेषः सवाआशुविनश्यति २७ किंच यदानिर्वैरायस्वसुतमद्भक्तप्रह्लादायद्रुह्येत्तदा वरोर्जितमपितंहनिष्ये २८ ॥ नारदउ वाच ॥ इत्युक्तादेवाः तंप्रणम्य न्यवर्तंत असुरंहतं च मेनिरे २९ तस्यदैत्यपतेः पुत्राः चत्वारः आसन् तेषुप्रह्लादः गुणैर्महान् आसीत् ३०

दासवत्सम्यक्नताःसन्नताआर्याणामंघ्रयोयेन । गुरुषुईश्वरइतिभावनायस्य ३२ व्यसनेषुप्राप्तेष्वपिनोद्विग्नचित्तः दृष्टेषुश्रुतेषु गुणेषुविषयेषुनिस्पृहः । यतस्तेषुअवस्तुदृक् दांताइंद्रियादयोयस्य । रहितआसुरोभावोमत्सरादिर्यस्य । असुरोपिसन्प्रशांतकामः ३३ अधुनापितेगुणानपिधीयंतेतिरोहितानभवंति ३४ साधुगाथासदसिसाधुकथाप्रसंगवत्स्यासमायांयंप्रह्लादंप्रतिमानंदृष्टांतंरिपवोपिसुराःकुर्वंतिकिंवक्तव्यंभवादृशाविष्णुभक्ताः ३५ सूच्यतेमयाकेवलंद्योत्यतेसुष्ठुकथ्यतइतिवा ३६ नैसर्गिकरतेर्लिंगान्याह न्यस्तक्रीडनकइतिपाद्भिः । तन्मनस्तयातदेकाविष्टत्वेन ३७ एतानिआसनादीनि । गोविंदेनपरिरंभितःआत्मनाएकीकृतः ३८ रुदतिरोदितिरौति । वैकुंठस्यचिंतयाशबलाव्यामिश्राक्षुभिताचेतनायस्य । तस्यचिंतयाह्लादोयस्य ३९ क्वचित्उत्कंठःमुक्तकंठःसन् अनुचकारतच्चेष्टादिकंस्वयंकृतवान् ४० संस्पर्शस्तद्गात्रापात्तिः तेनानिर्वृतः ( मुदितः ) । अस्पंदःस्थिरोयःप्रणयस्तेनयआनंदःतेनयत्सलिलंतेनयुक्तेआमीलितेईपन्निमीलितेईक्षणेयस्य ४१ आत्मनःपरांनिर्वृतिंशांतिंतन्वन्दुःसंगेनदीनस्यअन्यस्यलोकस्यापिमनसःशमंशांतिंव्यधात् ४२ अघंद्रोहमकरोत् ४३

दासवत्संनतार्यांघ्रिःपितृवद्दीनवत्सलः ॥ भ्रातृवत्सदृशेस्निग्धोगुरुष्वीश्वरभावनः ॥ विद्यार्थरूपजन्माढ्योमानस्तंभविवर्जितः ३२ नोद्विग्नचित्तोव्यसनेषुनिस्पृहःश्रुतेषुदृष्टेषुगुणेष्ववस्तुदृक् ॥ दांतेंद्रियप्राणशरीरधीःसदाप्रशांतकामोरहितासुरोऽसुरः ३३ यस्मिन्महागुणाराजन्गृह्यंतेकविभिर्मुहुः ॥ नतेधुनापिधीयंतेयथाभगवतीश्वरे ३४ यंसाधुगाथासदसिरिपवोपिसुरानृप ॥ प्रतिमानंचकुर्वंतिकिमुतान्येभवादृशाः ३५ गुणैरलमसंख्येयैर्माहात्म्यंतस्यसूच्यते ॥ वासुदेवेभगवतियस्यनैसर्गिकीरतिः ३६ न्यस्तक्रीडनकोबालोजडवत्तन्मनस्तया ॥ कृष्णग्रहगृहीतात्मानवेदजगदीदृशम् ३७ आसीनःपर्यटन्नश्नन्शयानःप्रपिबन्ब्रुवन् ॥ नानुसंधत्तएतानिगोविंदपरिरंभितः ३८ क्वचिद्रुदतिवैकुंठचिंताशबलचेतनः ॥ क्वचिद्धसतितच्चिंताह्लादउद्गायतिक्वचित् ३९ नंदतिक्वचिदुत्कंठोविलज्जोनृत्यतिक्वचित् ॥ क्वचित्तद्भावनायुक्तस्तन्मयोऽनुचकारह ४० क्वचिदुत्पुलकस्तूष्णीमास्तेसंस्पर्शनिर्वृतः ॥ अस्पंदप्रणयानंदसलिलामीलितेक्षणः ४१ सउत्तमश्लोकपदारविंदयोर्निषेवयाऽकिंचनसंगलब्धया ॥ तन्वन्परांनिर्वृतिमात्मनोमुहुर्दुःसंगदीनान्यमनःशमंव्यधात् ४२ तस्मिन्महाभागवतेमहाभागेमहात्मनि ॥ हिरण्यकशिपूराजन्नकरोदघमात्मजे ४३

किंच ब्रह्मण्यः सत्यसंधः सर्वप्रियः सुहृत्तमः विषयेषुनिस्पृहः गुरुषुईश्वरभावनः नियतेंद्रियः ३१ ३२ ३३ ३४ ३५ किंच यस्यवासुदेवे स्वाभाविकी मतिः ३६ यःबालोपिन्यस्तक्रीडनकः ३७ कृष्णगृहगृहीतात्माईदृशंजगत्नवेद आसीनःपर्यटन्नश्नन्शयानः प्रपिबन्ब्रुवन् नानुसंधत्तएतानिगोविंदपरिरंभितः क्वचित्गोविंदचिंतयारुदति हसतिगायतिनृत्यतीत्यादि ३८ ३९ ४० ४१ हरिपादारविंदसेवयासत्संगलब्धयाभक्त्या आत्मनः सुखंतन्वन् अन्यस्यमनसोपिशांतिंव्यधात् ४२ ईदृशेभगवद्भक्तेपुत्रेदैत्यः द्रोहं अकरोत् ४३

प्रथमाध्यायांतेपृष्टमेवार्थमतिविस्मयेनपुनःपृच्छति । देवर्षइति । तवत्वत्तः । तववाक्यमितिवा ।साधवेअघ मेदात्साधोर्द्रोहंकृतवानितियत् । एतद्वेदितुंज्ञातुमिच्छामः ४४ उपालभंते
आक्षिपंति । अघंतुनैवकुर्वंति । अपरःशत्रुरिव । अनुवशान् अनुकूलान्साधून् अपगतरोषान् । गुरुःपितैवदेवताएषांतानुद्दिश्याघंनकुर्वंतीतिकिमुवक्तव्यमित्यर्थः ४५ पुत्रायपुत्रमुद्दिश्यापि
तुर्द्वेषःपित्राकृतोद्वेषःपुत्रस्यमरणार्थप्रयोजितःप्रवर्तितः ( नतुसाधारणइति ) यत्एतत्कौतूहलंकौतुकंविधमअपाकुरु । यद्वायद्यस्मात्पुत्राययोद्वेषःसपितुर्मरणायप्रयोजितःअतएतत्कौतू
हलंविधमेत्यर्थः ४६ ॥ ॥ इतिश्रीभागवतेमहापुराणेसप्तमस्कंधेटीकायांचतुर्थोऽध्यायः । ४ ॥ ॥ ७ ॥ ॥ पंचमेगुरुतोऽधीतंत्यक्त्वाविष्णुस्तुतौरतं । घातयन्द्विपसर्पाद्यैःसुतंदैत्यो
नचाशकत् ॥१॥ भगवद्भक्तिरेवविद्वेषकारणमितिवक्तुमाह । पौरोहित्यायेत्यादिना । काव्यःशुक्रःअतस्तस्यसुतौदैत्यराजगृहांतिके ( शंडश्चमर्कश्चदेवताद्वंद्वेचेतिदीर्घःतत्र ) न्यवसतामि
तिशेषः १ पाठ्यान्दंडनीत्यादि (ग्रंथान् ) पाठयान्असुरबालकानितिवाऽन्वयः २ अनुश्रवणानंतरंतथैवपपाठच । किंतुतत्साधुनमेने । तत्रहेतुः । स्वःपरइतिअसद्ग्रहोमिथ्याभिनिवे
शएवआश्रयोयस्यतत् ३ ४ हेअसुरवर्यअसद्ग्रहात्अहंममेतिमिथ्याभिनिवेशात्हेतोःसम्यगुद्विग्नाधीर्येषां । वनंगतःसन्हरिमाश्रयेतेतियत्तदेवाहंसाधुमन्ये । कथंभूतंगृहंहित्वाआत्म
पातंआत्मनः ( पातंपातरूपं ) अधःपातनिमित्तमितिभावः । कुतःअंधकूपवन्मोहावहम् ५ परपक्षेविष्णौसमाहिताःपरिनिष्ठिताः । हासमेवाह । बुद्धिरिति ( परेषांबुद्धिभिः ) ६

॥ युधिष्ठिरउवाच ॥ देवर्षएतदिच्छामोवेदितुंतवसुव्रत ॥ यदात्मजायशुद्धायपिताऽदात्साधवेह्यघम् ४४ पुत्रान्विप्रतिकूलान्स्वान्पितरःपुत्रवत्सलाः ॥
उपालभंतेशिक्षार्थंनैवाघमपरोयथा ॥ किमुतानुवशान्साधूंस्तादृशान्गुरुदेवतान् ४५ एतत्कौतूहलंब्रह्मन्नस्माकंविधमप्रभो ॥ पितुःपुत्राययद्द्वेषोमरणाय
प्रयोजितः ४६ ॥ ॥ इतिश्रीभागवतेमहापुराणेसप्तमस्कंधेचतुर्थोऽध्यायः ॥ ४ ॥ ॥७॥ ॥ नारदउवाच ॥ पौरोहित्यायभगवान्वृतःकाव्यःकिला
सुरैः ॥ शंडामर्कौसुतौतस्यदैत्यराजगृहांतिके १ तौराज्ञाप्रापितंबालंप्रह्लादंनयकोविदं ॥ पाठयामासतुःपाठ्यानन्यांश्चासुरबालकान् २ यत्तत्रगुरुणाप्रोक्तं
शुश्रुवेऽनुपपाठच ॥ नसाधुमनसामेनेस्वपरासद्ग्रहाश्रयम् ३ एकदाऽसुरराट्पुत्रमंकमारोप्यपांडव ॥ पप्रच्छकथ्यतांवत्समन्यतेसाधुयद्भवान् ४ प्रह्लाद
उवाच ॥ तत्साधुमन्येऽसुरवर्यदेहिनांसदासमुद्विग्नधियामसद्ग्रहात् ॥ हित्वात्मपातंगृहमंधकूपंवनंगतोयद्धरिमाश्रयेत ५ ॥ नारदउवाच ॥ श्रुत्वापुत्रगि
रोदैत्यःपरपक्षसमाहिताः ॥ जहासबुद्धिर्बालानांभिद्यतेपरबुद्धिभिः ६

॥ युधिष्ठिरउवाच ॥ हेदेवर्षेशुद्धायस्वपुत्रायतत्पिताकुतःद्रोहंअकरोत् एतद्वेदितुमिच्छामः ४४ विप्रातिकूलानपिपुत्रान्पितरःशिक्षार्थंनिंदंतिपरंतुनघ्नंति ४५ एवंसतिपुत्र
द्वेषःपितुर्मरणायकथंजातः एतत्कौतूहलंअपाकुरु ४६ ॥ ॥ इतिसप्तमेचतुर्थः ॥ ४ ॥ ७ ॥ ॥ नारदउवाच ॥ असुरैःपौरोहित्यायकाव्योवृतः तस्यपुत्रौशंडामर्कौराज
गृहांतिकेन्यवसताम् १ तौप्रह्लादंअन्यबालकांश्चपाठयामासतुः २ ताभ्यांप्रोक्तंद्वैतशास्त्रंशुश्रुवेपपाठच परंतु साधुनमेने ३ एकदादैत्येंद्रः पुत्रं अंकमारोप्यपप्रच्छहेवत्सत्वं
१०९ यत्साधुमन्यसे तत्उच्यताम् ४ ॥ प्रह्लादउवाच ॥ हेदैत्यवर्य आत्मपातंगृहंहित्वावनंगत्वाहरिंआश्रयेत् एतत् साधुमन्ये ५ एवंपुत्रगिरःश्रुत्वाहसित्वागुरून्उवाचअ
स्यधीः विष्णुपक्षैः यथानभिद्येत तथास्वगृहेबालः धार्यताम् ६

विष्णुपक्षैःभागवतैर्हेतुभूतैः । ननुत्वद्गृहेकुतस्तेषांप्रवेशः सत्यम् । तथाऽपिप्रतिच्छन्नैर्वेषांतरेणाच्छन्नैः ७ दैत्यैर्गृहमानीतम् ८ बालान्सर्वानतिआतिक्रम्य तुभ्यंतव ९ १० अहोमायामोहि
तामवंतोमामाक्षिपंतीत्याशयेनतावदाह परःस्वश्चेतिमिथ्याभिनिवेशोयदीययामाययैवकृतोनतुवास्तवः अतएवतयाविमोहितबुद्धीनांभवतामेवदृष्टःनतुमम । तस्मैअचिंत्यमायेश्वरायन
मः ११ अहोकिमेतत्प्रलपसिनत्वबुद्धिभेदोयतोजातस्तंकथयेत्याक्षिप्तः सन् तत्प्रसादादेवेत्युत्तरमाह । सइतित्रिभिः । सभगवान्यदा अनुव्रतः अनुकूलोभवतितदापशूनामिवबुद्धिर्भेदगता
भेदनीष्ठाअसतीमिथ्यासंसारविषयाभिद्यतेभिन्नात्मनिष्ठाभवति १२ भेदकस्यासत्त्वंदर्शयन्नाह । सएषपरमात्मैवस्वःपरइतिचअविवेकिभिःनिरूप्यते । युक्तंचैतत् । यतःयस्यवर्त्मनिजि
ज्ञासायांब्रह्मादयोपिमुह्यंति । तत्रहेतुःदुरत्ययंदुर्घटमनुक्रमणंअनुचरितमनुवर्णनंवायस्यसः ( एषपरमात्मामेमतिंभिनत्ति ) १३ ननुनिर्विकारस्यकथंमतिभेदकत्वंतत्राह । यथाअयोलोहं
आकर्षस्यअयस्कांतस्यसमीपेस्वयमेवभ्रमति तथा मेचेतसश्चक्रपाणेःसन्निधौसन्निधिरेवकुतोजातस्तत्राह । यदृच्छयेतितत्रकस्यतपोदानादेःफलमेततत्तन्नज्ञायतेइत्यर्थः १४ राजसेवक
उवाचेतिशेषः १५ अरेवेत्रंकशा आनीयतांसामदानभेददंडानां ( उपायानां ) मध्येचतुर्थःदमोदंडःअस्यदुर्बुद्धेःउदितःउक्तःशास्त्रेषु। दुर्बुद्धित्वेहेतुः। कुलांगारस्येतिकुलस्यज्वलदंगारव
न्नाशहेतोः १६ तत्कुतस्तत्राह । दैतेयाएवचंदनद्रुमाःतेषांवनेअयंकंटकद्रुमतुल्योजातः तदेवाह । यस्यदैतेयचंदनवनस्यमूलोन्मूलनमूलोच्छेदेपरशुस्थानीयस्यविष्णोरयमर्भकएवनाला
यितःनालमिवाचरत् । यथावनस्यच्छेदकत्वेपरशोःबब्बुलादिनिर्मितोदंडःसहकारीभवति । तंविनाछेदनासंभवात् । तथाविष्णोर्दैत्यमूलच्छेदेहेतुर्जातइत्यर्थः १७

सम्यग्विधार्यतांबालोगुरुगेहेद्विजातिभिः ॥ विष्णुपक्षैःप्रतिच्छन्नैर्नभिद्येतास्यधीर्यथा ७ गृहमानीतमाहूयप्रह्रादंदैत्ययाजकः ॥ प्रशस्यश्लक्ष्णयावाचास
मपृच्छतसामभिः ८ वत्सप्रह्लादभद्रंतेसत्यंकथयमामृषा ॥ बालानतिकुतस्तुभ्यमेषबुद्धिविपर्ययः ९ बुद्धिभेदःपरकृतउताहोतेस्वतोऽभवत् । भण्यतां
श्रोतुकामानांगुरूणांकुलनंदन १० ॥ प्रह्लादउवाच ॥ परःस्वश्चेत्यसद्ग्राहःपुंसांयन्माययाकृतः ॥ विमोहितधियांदृष्टस्तस्मैभगवतेनमः ११ सयदानुव्र
तःपुंसांपशुबुद्धिर्विभिद्यते ॥ अन्यएषततोन्योहमितिभेदगताऽसती १२ सएषआत्मास्वपरेत्यबुद्धिभिर्दुरत्ययानुक्रमणोनिरूप्यते ॥ मुह्यंतियद्वर्त्मनिवे
दवादिनोब्रह्मादयोह्येषभिनत्तिमेमतिम् १३ यथाभ्राम्यत्ययोब्रह्मन्स्वयमाकर्षसन्निधौ ॥ तथामेभिद्यतेचेतश्चक्रपाणेर्यदृच्छया १४ ॥ श्रीनारदउवाच ॥ ए
तावद्ब्राह्मणायोक्त्वाविरराममहामतिः ॥ तंनिर्भर्त्स्याथकुपितःसदीनोराजसेवकः १५ आनीयतामरेवेत्रमस्माकमयशस्करः ॥ कुलांगारस्यदुर्बुद्धेश्चतुर्थोऽ
स्योदितोदमः १६ दैतेयचंदनवनेजातोयंकंटकद्रुमः ॥ यन्मूलोन्मूलपरशोर्विष्णोर्नालायितोऽर्भकः १७

७ ततोदैत्ययाजकाःप्रह्लादंगृहमानीयप्रशस्य तं अपृच्छंत ८ हेप्रह्लादसत्यंकथय बालानतिक्रम्यतेबुद्धिविपर्ययः कुतः किंच तेबुद्धिभेदःपरकृतःस्वतोवाएतद्वद ९ १०
॥ प्रह्लादउवाच ॥ परः स्वः इतिअज्ञानंयस्यमाययाभवतांदृष्टम् ममतुन तस्मैभगवतेनमः ११ यस्याजिज्ञातायांब्रह्मादयोपिमुह्यंति सः मेबुद्धिं भिनत्ति १३ यथा अय
स्कांतस्यसान्निध्यात् लोहंभ्रमति तथाचक्रपाणेः इच्छयामेचेतः भिद्यते १४ एवमुक्त्वाविरराम तदाराजसेवकः कुपितः सन् तंनिर्भर्त्स्यउवाच १५ अरेवेत्रमानीयतांकु
लांगारस्यअस्यदमः उदितः सः क्रियते १६ दैतेयचंदनवनेजातोयंकंटकद्रुमः यन्मूलोन्मूलपरशोर्विष्णोर्नालायितोऽर्भकः १७

इतितंप्रह्लादंभीषयन्धर्मार्थकामवर्गस्य( क्षयस्थानवृद्धिलक्षणत्रिवर्गस्यवा )प्रतिपादकंशास्त्रंअध्यापयामास१८ज्ञातंज्ञेयचतुष्टयंसामादिउपायचतुष्टयंयेनतं( ज्ञात्वा) दैत्येंद्रंप्रति । मात्रा मृष्टंउद्वर्त्यस्नापितंअलंकृतंभूषणातिलकादिभिः १९ ( निर्वृतिमानंदं )२० २१( यदाशिक्षत्यच्च स्वधीतंतत्किंचिदुत्तमंपठ्यतां )२२पादसेवनंपरिचर्या । अर्चनंपूजा । दास्यं(दासभावेन) कर्मार्पणंसख्यंतद्विश्वासादि । आत्मनिवेदनंदेहसमर्पणं । यथाविक्रीतस्यगवाश्वादेर्भरणपालनादिचिंतानक्रियतेतथादेहंतस्मैसमर्प्यतच्चिंतावर्जनमित्यर्थः २३ इतिनव ( संख्याकानि) लक्षणानियस्याःसाअद्धासाक्षात्ज्ञानपूर्वकंचेद्भगवतिविष्णौभक्तिःक्रियेतेसाचअर्पितैवसतीयदिक्रियेतनतुकृतासतीपश्चादर्प्यतेतदुत्तमंअधीतंमन्ये । नत्वस्माद्गुरोरधीतं शिक्षितंवातथाविधं किंचिदस्तीतिभावः२४ २५ नविद्यतेसारंयत्रतदसारंनविद्यतेसारंयस्मादितिवास्तत्वोर्थः ( हेब्रह्मबंधोद्विजाधम । विपक्षंविष्णुं )२६ मित्रत्वेनप्रवर्तमानस्यापितद्विरोधाचरणंनासंभावि तमित्याहसंतिहीति । दुष्टंमैत्रंमित्रत्वंयेषांते ( छद्मवेषिणःकपटवेषधारिणः ) रोगइति । 'ब्रह्महाक्षयरोगीस्यात्सुरापःश्यावदंतकः । स्वर्णहारीतुकुनखीदुश्चर्मागुरुतल्पगः'इत्यादिस्मृत्युक्तःपातकिनांनरकभोगानंतरंरोगोयथोदेतिअकस्मात्प्रकटीभवतितथातेषामयंहृद्गतंविद्वेषादिकंउदेतीत्यर्थः २७ मत्प्रणीतंमयापाठितं । नोऽस्मभ्यंकत्कुत्सितंदोषंमास्मअदाःअडागम आर्षः । मयिदोषारोपंमाकृथाइत्यर्थः ( मन्युंक्रोधंनियच्छशमय ) इंद्रशत्रोइति । नहि ( दुर्बलेषु ) ब्राह्मणेषुतवकोपउचितइतिभावः २८

इतितंविविधोपायैर्भीषयंस्तर्जनादिभिः । प्रह्लादंग्राहयामासत्रिवर्गस्योपपादनम् १८ ततएनंगुरुर्ज्ञात्वाज्ञातज्ञेयचतुष्टयम् । दैत्येंद्रंदर्शयामाससमातृमृष्टमलंकृतम् १९ पादयोःपतितंबालंप्रतिनंद्याऽऽशिषाऽसुरः ॥ परिष्वज्यचिरंदोर्भ्यांपरमामापनिर्वृतिं २० आरोप्यांकमवघ्रायमूर्धन्यश्रुकलांबुभिः ॥ आसिंचन्विकसद्वक्त्रमिदमाहयुधिष्ठिर २१ ॥ हिरण्यकशिपुरुवाच ॥ प्रह्लादानूच्यतांतातस्वधीतंकिंचिदुत्तमम् ॥ कालेनैतावतायुष्मन्यदशिक्षद्गुरोर्भवान् २२ ॥ प्रह्लादउवाच ॥ श्रवणंकीर्तनंविष्णोःस्मरणंपादसेवनम् ॥ अर्चनंवंदनंदास्यंसख्यमात्मनिवेदनम् २३ इतिपुंसार्पिताविष्णौभक्तिश्चेन्नवलक्षणा ॥ क्रियतेभगवत्यद्धातन्मन्येऽधीतमुत्तमम् २४ निशम्यैतत्सुतवचोहिरण्यकशिपुस्तदा ॥ गुरुपुत्रमुवाचेदंरुषाप्रस्फुरिताधरः २५ ब्रह्मबंधोकिमेतत्तेविपक्षंश्रयताऽसता ॥ असारंग्राहितोबालोमामनादृत्यदुर्मते २६ संतिह्यसाधवोलोकेदुर्मैत्राश्छद्मवेषिणः ॥ तेषामुदेत्यघंकालेरोगःपातकिनामिव ॥ २७ ॥ गुरुपुत्रउवाच ॥ नमत्प्रणीतंनपरप्रणीतंसुतोवदत्येषतवेंद्रशत्रो ॥ नैसर्गिकीयंमतिरस्यराजन्नियच्छमन्युंकददाःस्ममानः २८

एवंतंभीषयन् त्रिवर्गप्रतिपादकशास्त्र अध्यापयामास १८ ततोगुरुः ज्ञातज्ञेयचतुष्टयंएवंज्ञात्वादैत्येंद्रंदर्शयामास १९ ततः पादयोः पतितंबालंआलिंग्य अंकमारोप्यइदंआह २० २१ ॥ हिरण्यकशिपुरुवाच ॥ हेप्रह्लादएतावताकालेनगुरोः यत्स्वधीतंतदुच्यताम् २२ प्रह्लादउवाच ॥ श्रवणंकीर्तनंविष्णोःस्मरणंपादसेवनम् अर्चनंवंदनं दास्यंसख्यमात्मानिवेदनम् २३ इतिनवलक्षणाभक्तिः विष्णौसमर्प्यतेइतियत्तत्उत्तमं अधीतंमन्ये २४ ॥ नारदउवाच ॥ एवंपुत्रवचः श्रुत्वाक्रोधेनगुरुमुवाच२५हेब्रह्मबंधोमेपुत्रः किं असारंग्राहितः २६ २७ ॥ गुरुपुत्रउवाच ॥ हेइंद्रशत्रोतवसुतः अयंमत्प्रणीतंनवदतिअस्यइयंनैसर्गिकीमतिरस्ति अतः मन्युंनियच्छमयिदोषंमाकृथाः २८

गुरुमुखीगुरुवाग्जनिता हेअभद्र२९ आस्तामियंवार्ताभवादृशानांविषयासक्तानामत्रानाधिकारादित्याशयेनाह। मतिरिति। परतःगुरोःस्वतोवामिथोवा अन्योन्यतःमाभिपद्येत। नसंपद्येत केषांगृहव्रतानांगृहएवव्रतंसंकल्पइतिकृत्यचिंतायेषां अतएवअदांतैः अनुपरतैर्गोभिरिंद्रियैर्हेतुभूतैस्तमिस्रसंसारंविशतां। तस्य चर्वितस्यैवचर्वणंयेषां ( तेषां ) ३० ननुश्रीकृष्णस्यपरमानंदरूपत्वात्तेपितन्निष्ठाएवकिंनस्युःइतिचेत्तदज्ञानादित्याह। नेति। येदुराशयाविषयवासितांतःकरणास्तेहिविष्णुंनविदुः स्वस्मिन्नेवार्थः पुरुषार्थोयेषांतेषांगतिगम्यं। ननुतेपिगुरूपदेशाद्विष्णुंज्ञास्यंतितत्राह। बहिर्विषयेष्वर्थोयेषांतेबहिरर्थास्तानेवगुरुत्वेनमंतुंशीलंयेषांते अतःअंधैरुपनीयमानाअंधायथापंथानंनविदुः। किंतुगर्तेपतंति। तथातेपि। ईशस्यतंत्र्यांदीर्घरज्ज्वांवेदलक्षणायांउरूणिदामानिब्राह्मणादिनामानियस्यांतस्यांकाम्यैःकर्मभिर्बद्धाएवभवंतीत्यर्थः। तदुक्तं। 'विषयाविष्टचित्तानांविष्ण्वावेशःसुदूरतः। वारुणीदिग्गतंवस्तुव्रजन्नैंद्रींकिमाप्नुयात्' इति३१ ननुच 'एकोदेवःसर्वभूतेषुगूढः सर्वव्यापीसर्वभूतांतरात्मा' इत्यादिश्रुतिप्रतिपादितंविष्णुंकथंनविदुःकुतोवातेषांतमिस्रप्रवेशस्तत्राह। नैषामिति। निष्किंचनानांनिरस्तविषयाभिमानानांमहत्तमानांपादरजसाअभिषेकंयावन्नवृणीततावत् श्रुतिवाक्यतोजातापिएषांमतिरुरुक्रमस्यांघ्रिंनस्पृशतिनप्राप्नोति। असंभावनादिभिर्विहन्यतइत्यर्थः। अनर्थस्यसंसारस्यापगमोयदर्थःयस्याअंघ्रिस्पर्शिन्यामतेरर्थःप्रयोजनम्। महदनुग्रहादेवभगवत्प्राप्तिरितिभावः ३२ निरस्यतचिक्षेप ३३ अमर्षोऽसहनंतेनसहितयारुषाआविष्टोव्याप्तःकषायीभूतेआताम्रेलोचनेयस्य। हेनैर्ऋताःराक्षसाः। ( एनंनिःसारयतनिष्पातयत ) ३४ वध्यत्वेहेतुः। यतोयंमेभ्रातृहा। कुतःयोविष्णोःपादावर्चति। तत्पक्षपातीत्यर्थः अतःसएवायमित्यन्वयः ३५ अहोविष्णुरप्यविश्वसनीयंकिमितिस्वीकृतवानित्याह। विष्णोर्वेति अहात्जहौ ३६

नारदउवाच ॥ गुरुणैवंप्रतिप्रोक्तोभूयआहासुरःसुतम् ॥ नचेद्गुरुमुखीयंतेकुतोऽभद्रासतीमतिः २९ ॥ प्रह्लादउवाच ॥ मतिर्नकृष्णेपरतःस्वतोवामिथोभिपद्येतगृहव्रतानाम् ॥ अदांतगोभिर्विशतांतमिस्रंपुनःपुनश्चर्वितचर्वणानाम् ३० नतेविदुःस्वार्थगतिंहिविष्णुंदुराशयायेबहिरर्थमानिनः ॥ अंधायथांधैरुपनीयमानावाचीशतंत्र्यामुरुदाम्निबद्धाः ३१ नैषांमतिस्तावदुरुक्रमांघ्रिंस्पृशत्यनर्थापगमोयदर्थः ॥ महीयसांपादरजोभिषेकंनिष्किंचनानांनवृणीतयावत् ३२ इत्युक्त्वोपरतंपुत्रंहिरण्यकशिपूरुषा ॥ अंधीकृतात्मास्वोत्संगान्निरस्यतमहीतले ३३ आहामर्षरुषाविष्टःकषायीभूतलोचनः ॥ वध्यतामाश्वयंवध्योनिःसारयतनैर्ऋताः ३४ अयंमेभ्रातृहासोयंहित्वास्वान्सुहृदोऽधमः ॥ पितृव्यहंतुर्यःपादौविष्णोर्दासवदर्चति ३५ विष्णोर्वासाध्वसौकिंनुकरिष्यत्यसमंजसः ॥ सौहृदंदुस्त्यजंपित्रोरहाद्यःपंचहायनः ३६

॥ नारदउवाच ॥ एवंगुरूक्तंश्रुत्वापुत्रंउवाच हेपुत्रइयंतेबुद्धिः गुरुमुखीनचेत्तर्हि असती कुतः प्राप्ता २९ ॥ प्रह्लादउवाच ॥ हेपितःश्रीकृष्णेमतिः परतः स्वतोवासत्समागमंविनानोत्पद्यते ३० ३१ ३२ नारदउवाच ॥ इत्युक्त्वाउपरतंपुत्रंस्वोत्संगात् महीतलेनिरस्यराक्षसान्उवाच ३३ हेराक्षसाः अयंवध्यताम् ३४ यः पितृव्यहंतुः विष्णोःपादौदासवत्अर्चति ३५ योयंपंचहायनः पित्रोः सौहृदं जहौ ३६ ॥११॥

ननुतवायमपत्यंचकथंवध्यस्तत्राह । परोप्यौषधमिवहितकृच्चेत्तदपत्यमेवज्ञेयम् । सुतःस्वदेहजोपि अहितश्चेदामयइवज्ञेयः । आस्तांममतास्पदस्यकथा । अंगमपियस्करचरणादितदप्यात्मनोऽहितंचेच्छिंद्यादेवेत्यर्थः ३७ अतःसर्वैरुपायैर्हंतव्यः । संभोजोभोजनम् । भोजनादिषुविषादिप्रयोगैरित्यर्थः । ( सुहृल्लिंगधरः पुत्ररूपधरइत्यर्थः ) यथाबहिर्मुखमिंद्रियं ( स्त्रीयमपि ) मुनेःशत्रुर्भवति ३८ तिग्माःतीक्ष्णाःदंष्ट्रायेषाम् । करालान्यास्यानियेषांतेचतेच । ताम्राणिश्मश्रूणिशिरोरुहाश्चयेषाम् ३९ ( आसीनंस्वस्थचित्तमित्यर्थः ) ४० परेईश्वरेयुक्तःसमाहितआत्मामनोयस्यतस्मिन्प्रह्लादेतेषांनैर्ऋतानांप्रहारानिष्फलाजाताः । तत्रहेतवः । ब्रह्मणिनिर्विकारेअनिर्देश्येअविषयेभगवतिनिरतिशयैश्वर्ये अखिलात्मनिशस्त्रादीनामपिनियंतरिएवंभूतेपरे । अपुण्यस्यनिर्दयस्यसत्क्रियामहोद्यमाइव ४१ ४२ दंदशूकैः सर्पैः अभिचाराः कृत्यादयः अवपातनानिगिरिशृंगादधःपातनानितैः मायाभिःशंबरनिर्मिताभिः अवटादिषुसंनिरोधैश्च ४३ पर्वताक्रमणैः पर्वतानांतदुपरिक्षेपैः बहुवचनैरभिचाराद्यावृत्तिंदर्शयति । तत् हननंकर्तुं नाभ्यपद्यतनप्राप नाशक्नोदित्यर्थः ४४ चिंतामेवाहएषइतित्रिभिः । मेमयाअसाधुपरुषंयथाभवतितथोक्तःअसद्भिरपकारैःअभिचारैर्वा ४५ अविदूरेसमीपेवर्तमानोपिबालोप्ययंअजडधीःनिर्भयचित्तः । मेअनार्यअन्यायंशत्रुत्वंवानविस्मरति । अजीगर्तस्यमध्यमपुत्रःशुनःशेपोनामपितृभ्यांहरिश्चंद्रायविक्रीतःसयथातयोरपकारमविस्मरंस्तद्विपक्षंविश्वामित्रमाश्रित्यगोत्रांतरमापन्नस्तद्वत् । यद्वास्वभावापरित्यागेदृष्टांतः । शुनःशेपःपुच्छमिवेति । ( वृद्धिसरलीकृतमपिनवक्रतांत्यजति ) ४६

परोप्यपत्यंहितकृद्यथौषधंस्वदेहजोप्यामयवत्सुतोऽहितः ॥ छिंद्यात्तदंगंयदुतात्मनोऽहितंशेषंसुखंजीवतियद्विवर्जनात् ३७ सर्वैरुपायैर्हंतव्यःसंभोजशयनासनैः ॥ सुहृल्लिंगधरःशत्रुर्मुनेर्दुष्टमिवेंद्रियम् ३८ नैर्ऋतास्तेसमादिष्टाभर्त्रावैशूलपाणयः ॥ तिग्मदंष्ट्रकरालास्यास्ताम्रश्मश्रुशिरोरुहाः ३९ नदंतोभैरवान्नादांश्छिंधिभिंधीतिवादिनः । आसीनंचाहनन्शूलैःप्रह्लादंसर्वमर्मसु ४० परेब्रह्मण्यनिर्देश्येभगवत्यखिलात्मनि ॥ युक्तात्मन्यफलाआसन्नपुण्यस्येवसत्क्रियाः ४१ प्रयासेऽपहतेतस्मिन्दैत्येंद्रःपरिशंकितः ॥ चकारतद्वधोपायान्निर्बंधेनयुधिष्ठिर ४२ दिग्गजैर्दंदशूकेंद्रैरभिचारावपातनैः ॥ मायाभिःसंनिरोधैश्चगरदानैरभोजनैः ४३ हिमवाय्वग्निसलिलैःपर्वताक्रमणैरपि ॥ नशशाकयदाहंतुमपापमसुरःसुतम् ॥ चिंतांदीर्घतमांप्राप्तस्तत्कर्तुंनाभ्यपद्यत ४४ एषमेबह्वसाधूक्तोवधोपायाश्चनिर्मिताः ॥ तैस्तैर्द्रोहैरसद्धर्मैर्मुक्तःस्वेनैवतेजसा ४५ वर्तमानोऽविदूरेवैबालोप्यजडधीरयम् ॥ नविस्मरतिमेनार्यंशुनःशेपइवप्रभुः ४६

अतःअयंसर्वैःउपायैःहंतव्यः ३७ ३८ तदातेराक्षसाः भर्त्राआदिष्टाः ३९ छिंधिभिंधीतिवादिनः संतः शूलैः तंमर्मसु अहनन् ४० तथापिमहाभागवते ब्रह्मणि समाहितात्मनि प्रल्हादेतेषांप्रहाराः निष्फलाः आसन् ४१ तस्मिन्प्रयासेनष्टेसतिदैत्येंद्रः तद्वधोपायान्चकार ४२ दिग्गजैः दंदशूकैः अभिचारैः गिरिशृंगात् अधःपातैः मायाभिः अवटादिषुनिरोधैः गरदानैः अभोजनैः ४३ हिमवाय्वग्निसलिलैः पर्वताक्रमणैः एतैरुपायैः निष्पापंसुतंहंतुंनशशाक तदादीर्घचिंतांप्राप्तः आह ४४ मयाएषः असाधुउक्तः वधोपायाश्चकृताः तथापिस्वतेजसामुक्तः ४५ किंचमत्समीपेनिर्भयोवर्तते अतः अस्यविरोधेनमेमृत्युर्भविता ४६

 अप्रमेयः अपरिमेयोऽनुभावोयस्य । नकुतश्चिद्भयंयस्य । अमरोमृत्युशून्यश्च नवाभविता अन्यथामृत्युर्नैवभविष्यतीत्यर्थः४७औशनसौउशनसःपुत्रौनीतिज्ञौ । विविक्तेएकांते ४८ भ्रुवोर्वि 
जृंभणेनवत्रस्ताःसमस्ताधिष्ण्यपायस्मिन् । तस्यतवचिंत्यंनचक्ष्महेनपश्याम । पदमालंबनंनैवास्ति । यद्वाशिशूनांवृत्तंगुणदोषयोःपदंविषयोनभवतीत्यर्थः४९ तथापितुबंधनमस्योचित
 मित्याहतुः । इमंत्विति । यावद्गुरुरागमिष्यतितावद्बद्ध्वानिधेहि । ततः किंअतऊचतुः । यतःपुंसःबुद्धिश्च ( सती ) वयसा ( यौवनेन ) तथा आर्यसेवया ( सत्सेवया ) समीचीनाभव
ति५० अनुज्ञायतथेत्यंगीकृत्य५१ततश्चतौप्रह्लादंधर्मादिकमूचतुः । प्रश्रितश्चासावनतश्चतस्मै । ( प्रश्रयोविनयः ) ५२यथायथावत्त्रिवर्गमनुशिक्षितमपिसाधुनमेने । तांशिक्षांचसाधुनमे 
ने । कुतः द्वंद्वैः रागद्वेषादिभिर्विषयेष्वारमणंयेषांतैरुपवर्णिताम्५३परावृत्तः अन्यत्रगतः । उपहूतः ( क्रीडार्थमाहूतः ) । संधिःपादपूरणार्थः । कृतक्षणैःकृतोत्सवैःलब्धावसरैरितिवा ५४
तान्निष्ठांतेषांनिष्ठांजन्ममरणादिलक्षणांविद्वान् ५५ द्वंद्वारामाणांईरितैरीहितैश्चनदूषिताधीर्येषाम् । यतोबालाः ५६ तस्मिन्नेवन्यस्तंहृदयंईक्षणंचयैः ५७ ॥ इतिश्रीभागवते
महापुराणेसप्तमस्कंधेटीकायांपंचमोऽध्यायः ५ ॥ ॥ ७ ॥ ॥

अप्रमेयानुभावोयमकुतश्चिद्भयोऽमरः ॥ नूनमेतद्विरोधेनमृत्युर्मेभवितानवा ४७ इतितंचिंतयाकिंचिन्म्लानश्रियमधोमुखम् ॥ शंडामर्कावौशनसौवि
विक्तइतिहोचतुः ४८ जितंत्वयैकेनजगत्त्रयंभ्रुवोर्विजृंभणत्रस्तसमस्तधिष्ण्यपम् ॥ नतस्यचिंत्यंतवनाथचक्ष्महेनवैशिशूनांगुणदोषयोःपदम् ४९ इमंतु
पाशैर्वरुणस्यबद्ध्वानिधेहिभीतोनपलायतेयथा ॥ बुद्धिश्चपुंसोवयसार्यसेवयायावद्गुरुर्भार्गवआगमिष्यति ५० तथेतिगुरुपुत्रोक्तमनुज्ञायेदमब्रवीत् ॥ धर्मो
ह्यस्योपदेष्टव्योराज्ञांयोगृहमेधिनाम् ५१ धर्ममर्थंचकामंचनितरांचानुपूर्वशः ॥ प्रह्लादायोचतूराजन्प्रश्रितावनतायच ५२ तथात्रिवर्गंगुरुभिरात्मनेउप
शिक्षितम् ॥ नसाधुमेनेतच्छिक्षांद्वंद्वारामोपवर्णिताम् ५३ यदाऽऽचार्यःपरावृत्तोगृहमेधीयकर्मसु ॥ वयस्यैर्बालकैस्तत्रसोपहूतःकृतक्षणैः ५४ अथ
तान्श्लक्ष्णयावाचाप्रत्याहूयमहाबुधः ॥ उवाचविद्वांस्तन्निष्ठांकृपयाप्रहसन्निव ५५ तेतुतद्गौरवात्सर्वेत्यक्तक्रीडापरिच्छदाः ॥ बालानदूषितधियोद्वंद्वा
रामेरितेहितैः ५६ पर्युपासतराजेंद्रतन्न्यस्तहृदयेक्षणाः ॥ तानाहकरुणोमैत्रोमहाभागवतोऽसुरः ५७ ॥ ॥ इतिश्रीभागवतेमहापुराणे
सप्तमस्कंधेपंचमोध्यायः ॥ ५ ॥

४७ इतिचिंतया अधोमुखंतंएकांतेशंडामर्कौऊचतुः ४८ त्वयाजगत्त्रयंजितंतवतुचिंत्यंनपश्यामः ४९ एनंवरुणपाशैर्बद्ध्वायावद्भार्गवः आगमिष्यति तावन्निधेहि ५० राजा
तथेत्युक्त्वाइदमब्रवीत् अस्यराज्ञांधर्माः उपदेष्टव्याः ५१ तदागुरूत्रिवर्गोपपादकंशास्त्रंदैत्यबालकैःसहतंअध्यापयताम् ५२ गुरुशिक्षितंसः साधुनमेने ५३ किंच यदा
आचार्यः गृहमेधीयकर्मसुकचित् अन्यत्रगतः तदालब्धावसरैर्बालकैःक्रीडार्थमुपहूतः ५४ प्रह्लादः बालान्प्रत्याहूयउवाच ५५ हेराजेंद्र तेबालाः प्रह्लादस्यगौरवात्
त्यक्तक्रीडनकाः संतः ५६ तं पर्युपासत ततो महाभागवतः प्रह्लादः तान् बालानाह ५७ ॥ इतिसप्तमेपंचमः ॥ ५ ॥ 

पठेगुरौगृहव्यग्रेप्रह्लादोदैत्यबालकान् ॥ अनुकंप्यपरंतत्त्वंनारदोक्तमुपादिशत् ॥१॥ निरर्थकक्रियालेशैरायुर्व्ययमजानताम् । प्रह्लादःसदयंप्राहधर्मंभागवतंकृती ॥२॥ कौमारइत्यादिना इहैवमानुपजन्मनिधर्मानाचरेत् । यदोर्थदमेतत् । तत्रकौमारएव । यतःतदप्यध्रुवम् । नचैवंभूतंजन्मांतरं । यतःदुर्लभं ( मानुषंजन्म ) तत्रधर्मानेवाचरेत् । नतुसुखप्रयासान् । तत्रभागवतानेवनकाम्यान् १ इहभागवतानेवधर्मानाचरेदित्येतदुपपादयति । यथाहीतिचतुर्भिः । इहपुरुषस्यविष्णोःपादोपसर्पणमेवयथाऽनुरूपम् योग्यमित्यर्थः । यद्यस्मादेषप्रियइत्यादि २ भोगोद्यमःकथंत्याज्यइतिचेत्तत्राह । सुखमिति । सर्वत्रपश्वादावपि । दैवात्पूर्वादृष्टादेव ३ अतस्तदर्थप्रयासोनकर्तव्यः । यतःप्रयासात्परंकेवलंआयुषोव्ययएव । तथातेनप्रकारेणक्षेमरूपम् नप्राप्नोति ४ भयमाश्रितःसंसारंप्राप्तः । पुरुषरूपंशरीरंयावत्पुष्कलमस्ति । नविपद्येत क्षयं अक्षमं ( नभवेत्नभजेत् ननश्येदितिवा ) तावच्छीघ्रंक्षेमाययतेत ५ आयुर्व्ययक्रममाहपुंसइतित्रिभिः । यद्यस्मात् ( अंधंतमःप्रापितः ) शेते६विंशतिर्वर्षाणिआयुर्याति७दुरापूरेणदुःखैरापूर्यमाणेन८ननुयौवनेगृहासक्तोपिपश्चाद्विरक्तःसन्क्षेमंयास्यतीत्याशंक्यतदसंभवंदर्शयन्कौमारेएवआचरेदित्येतदुपपादयतिकोगृहेष्वितिसप्तभिः९यंअर्थअसुभिःक्रीणातिप्राणहानिमंगीकृत्यापितस्करादिः(अर्थसाधयति)तस्मिन्नर्थेतृष्णांकोनुविसृजेत्१०किंचकथमिति।प्रियायाःसंगादिकंस्मरन्कथंत्यजेदितितृतीयेनान्वयः।मंत्रान्रहितशिक्षालापान्सुहृत्सुचसंगं।तेषांस्नेहेनसितोबद्धःकलानिमधुराण्यक्षराणियेषांतेषांचसंगम्।तेष्वनुरक्तंचित्तंयस्य११

॥ प्रह्लादउवाच ॥ कौमारआचरेत्प्राज्ञोधर्मान्भागवतानिह ॥ दुर्लभंमानुषंजन्मतदप्यध्रुवमर्थदम् १ तथाहिपुरुषस्येहविष्णोःपादोपसर्पणम् ॥ यदेषसर्वभूतानांप्रियआत्मेश्वरःसुहृत् २ सुखमैंद्रियकंदैत्यादेहयोगेनदेहिनाम् ॥ सर्वत्रलभतेदैवाद्यथादुःखमयत्नतः ३ तत्प्रयासोनकर्तव्योयतआयुर्व्ययःपरम् ॥ नतथाविंदतेक्षेमंमुकुंदचरणांबुजम् ४ ततोयतेतकुशलःक्षेमायभयमाश्रितः ॥ शरीरंपौरुषंयावन्नविपद्येतपुष्कलम् ५ पुंसोवर्षशतंह्यायुस्तदर्धंचाजितात्मनः ॥ निष्फलंयदसौरात्र्यांशेतेंऽधंप्रापितस्तमः ६ मुग्धस्यबाल्येकौमारेक्रीडतोयातिविंशतिः ॥ जरयाग्रस्तदेहस्ययात्यकल्पस्यविंशतिः ७ दुरापूरेणकामेनमोहेनचबलीयसा ॥ शेषंगृहेषुसक्तस्यप्रमत्तस्यापयातिहि ८ कोगृहेषुपुमान्सक्तमात्मानमजितेंद्रियः ॥ स्नेहपाशैर्दृढैर्बद्धमुत्सहेतविमोचितुम् ९ कोन्वर्थतृष्णांविसृजेत्प्राणेभ्योपियईप्सितः ॥ यंक्रीणात्यसुभिःप्रेष्ठैस्तस्करःसेवकोवणिक् १० कथंप्रियायाअनुकंपितायाःसंगंरहस्यंरुचिरांश्चमंत्रान् ॥ सुहृत्सुचस्नेहसितःशिशूनांकलाक्षराणामनुरक्तचित्तः ११

प्रह्लादउवाच ॥ हेबालकाः प्राज्ञः कौमारे एव भगवद्धर्मानाचरेत् इहमानुषंजन्मदुर्लभम् १ अतः विष्णोः पादोपसर्पणंयोग्यम् २ हेदैत्याः विषयसुखंतुसर्वत्रलभ्यते ३ अतस्तदर्थंयत्नोनकार्यः यतः तेनवृथा आयुर्व्ययो भवति ४ संसारंप्राप्तः पुमान्यावच्छरीरं ननश्येत्तावत् क्षेमाययतेत ५ किंच अजितात्मनः पुंसः वर्षशतंआयुः तत्रअर्द्धंनिष्फलंयतः असौरात्र्यांशेते ६ मुग्धस्यक्रीडतः बाल्येकौमारेविंशतिवर्षाणियाति ७ जरयाग्रस्तदेहस्यविंशतिवर्षाणियाति ( एवं ६० ) शेषं ( ४० ) गृहेसक्तस्यअर्थचिंतनकामेन मोहेनचयाति ८ एवंगृहेसक्तं आत्मानंमोचयितुंकः उत्सहेत ९ किंच प्राणहानिंअंगीकृत्यद्रव्यंसाधयतितस्मिन्नर्थेतृष्णांकोनुविसृजेत १० किंच स्त्रीपुत्रगृहादीन्स्मरन्सन्अवितृप्तकामः कथंविरक्तःस्यात् ११

ताःश्वशुरगृहेस्थिताः हृदय्याहृदयंगमाः मनोज्ञाउरवःपरिच्छदायेषुतान्वृत्तीर्जीविकाःकुल्याःकुलपरंपरागताः १२ कोशस्कृत्कोशस्कारीकीटःसयथागृहंकुर्वन्आत्मनोनिर्गमायद्वारम
पिनावशेषयतितथाकर्माणीहमानः । नन्ववितृप्तकामोपिदोपदर्शनेनविरक्तःसन्त्यजेत् ( सत्यं ) औपस्थ्यंशैश्न्यंजैह्वयंच ( रसनेंद्रियजन्यम् ) सुखंतदेवाधिकंमन्यमानःअतोदुरंतोमो
होयस्यसःकथंविरज्येतविरक्तःस्यात् १३ दुरंतमोहत्वंदर्शयन्नाह। कुटुंबपोषणायवियन्क्षीयमाणंनिजमायुःपुरुपार्थंचविहतंनबुध्यते । अतएवतापत्रयेणदुःखितचित्तोपिनानिर्विद्यते। दुः
खवृद्धिंनकरोति । यतःस्वकुटुंबेरामोरतिर्यस्य १४ प्रत्युतचौर्यंकरोतीत्याह । वित्तेष्विति । नित्यमभिनिविष्टंचेतोयस्यसः । परवित्तहर्तुःप्रेत्यनरकलक्षणंइहचदंडादिरूपंदोपंयद्यपिविद्वा
न्अथाप्यशांताभिलापःसन्तत्परवित्तंहरत्येव १५ तदेवंकोगृहेषुपुमान्सक्तमित्यादिभिःसप्तभिःश्लोकैरुपपादितंगृहादिषुप्रसक्तस्यवैराग्याद्यसंभवमुपसंहरतिविद्वानपीति । स्वलोकायआ
त्मपरामर्शायनकल्पते किंतुविमूढोयथातथाविद्वानपितमःअभिनिवेशमेवप्रपद्यते । तत्रहेतुः यइति । स्वीयमिदंपारक्यमिदमितिभिन्नोभावोभावनायस्यसः १६ तस्मात्कौमारएवभागव
तान्धर्मानाचरेदितिसहेतुकमुपसंहरति । यतःकश्चिदपिस्वमात्मानंमोचितुंनसमर्थःततःनारायणमुपेतेत्युत्तरेणान्वयः असामर्थ्येहेतुः । अलंदीनःलंपटः । अतःकामोद्दशियासातासांविहा
रेक्रीडायांनिमित्तेक्रीडामृगः ( गृह्यकमर्कटः ) विहारमितिपाठेत्वासांविहारसाधनमात्मानंयतस्तासांक्रीडामृगःसइत्यन्वयः। किंच। यत्रयासुनिगडःशृंखलातुल्योविसर्गःपुत्रादिरूपोभवति
१७ विदूराद्दूरतःसंगंपरिहृत्य । यद्वाअविदूराच्छीघ्रंनारायणमुपेतेत्यन्वयः । ( उपेतशरणंगच्छत । ) यस्मात्सएवापवर्गःइषितःइष्टः १८ बलानामस्माकंतद्भजनमशक्यमितिचेत्तत्रा
ह । नहीति । बह्वायासोऽतिप्रयासः १९

पुत्रान्स्मरंस्तादुहितॄर्हृदय्याभ्रातॄन्स्वसॄर्वापितरौचदीनौ ॥ गृहान्मनोज्ञोरुपरिच्छदांश्ववृत्तीस्वकुल्याःपशुभृत्यवर्गान् १२ त्यजेतकोशस्कृदिवेहमानः
कर्माणिलोभादवितृप्तकामः ॥ औपस्थ्यजैह्व्यंबहुमन्यमानःकथंविरज्येतदुरंतमोहः १३ कुटुंबपोषायवियन्निजायुर्नबुध्यतेर्थंविहतंप्रमत्तः ॥ सर्वत्रताप
त्रयदुःखितात्मानिर्विद्यतेनस्वकुटुंबरामः १४ वित्तेषुनित्याभिनिविष्टचेताविद्वांश्चदोषंपरवित्तहर्तुः ॥ प्रेत्येहचाथाप्यजितेंद्रियस्तदशांतकामोहरतेकुटुं
बी १५ विद्वानपीत्थंदनुजाःकुटुंबंपुष्णन्स्वलोकायनकल्पतेवै ॥ यःस्वीयपारक्यविभिन्नभावस्तमःप्रपद्येतयथाविमूढः १६ यतोनकश्चित्क्वचकुत्रचिद्दा
दीनःस्वमात्मानमलंसमर्थः ॥ विमोचितुंकामदृशांविहारक्रीडामृगोयन्निगडोविसर्गः १७ ततोविदूरात्परिहृत्यदैत्यादैत्येषुसंगंविषयात्मकेषु ॥ उपेतनारा
यणमादिदेवंसमुक्तसंगैरिषितोऽपवर्गः १८ नह्यच्युतंप्रीणयतोबह्वायासोऽसुरात्मजाः ॥ आत्मत्वात्सर्वभूतानांसिद्धत्वादिहसर्वतः १९ ॥१३॥

१२ १३ किंच कुटुंबपोषणार्थंक्षीयमाणायुः पुमान् पुरुपार्थंविहतंनमन्यते अतएवतापत्रयेणदुःखितचित्तोपिविषयेषुदुःखवृद्धिंनकरोति १४ किंचवित्तहर्तुःइहामुत्रदंड
नरकरूपंदोषंविद्वानपिकुटुंबीपरवित्तंहरत्येव १५ इत्थंकुटुंबंपुष्णन्सन्आत्मविचारायनकल्पते १६ यतःकश्चिदपिस्वमात्मानंमोचितुंनसमर्थः १७ तस्मात् हेदैत्याः
विषयात्मकेषुदैत्येषुसंगंत्यक्त्वामुक्तसंगैःसहसंगम्यनारायणंशरणंव्रजत १८ हेदैत्यबालकाः अच्युतंप्रीणयतःपुंसःबह्वायासोन कुतःसर्वभूतानांआत्मत्वात् १९

आत्मत्वात्सर्वत्रसिद्धत्वादितिचहेतुद्वयंउपपादयतिपरावरेष्वितिचतुर्भिः । ब्रह्मा अंतोयेषांस्थावरआदिर्येषांतेषु । जीवेषुघटादिषुमहत्सुचभूतेषु आकाशादिषु २० गुणसाम्येप्रधाने । गुणव्यतिकरेमहत्तत्त्वादौच । परोब्रह्मस्वरूपः २१ कथंतर्हिद्रष्टृदृश्यभोक्तृभोग्यादिभेदामाययेत्याह । प्रत्यगात्मात्रद्रष्टाभोक्तातत्स्वरूपेणव्यापकतयानिर्देश्यः । दृश्यंभोग्यंदेहादितद्रूपेणचव्याप्यतयानिर्देश्योमाययाईयतेइत्युत्तरेणान्वयः । वस्तुतस्तुस्वयंअविकल्पितोअनिर्देश्योपिसन् । यद्वाअनिर्देश्योपिस्वंनिर्देश्यःसन्विकल्पितईयतेइत्यन्वयः २२ यतःकेवलोऽनुभवात्मकआनंदएवस्वरूपंयस्य । ननुसएवचेत्सर्वत्रतर्हिसर्वज्ञत्वाद्युपलभ्येततत्राह । गुणात्मकःसर्गोयस्याःसागुणसर्गातयामाययाअंतर्हितंऐश्वर्यंयेनसः २३ यस्मादेवंतस्मात्सर्वेषुयथाचितंदयांसौहृदंचकुरुत । ययादयया । उन्मुच्यसंत्यज्य २४ ततःकिमतआह । तुष्टेचतत्रतस्मिन्किमलभ्यम् । तथापिगुणपरिणामाद्दैवादेवस्वभिद्धाअयत्नतःसिद्धायेधर्मादयःतैःकिं । अगुणेनचमोक्षेणकांक्षितेनकिं । तमुपगायतांनोस्माकंअकांक्षितस्यापितस्यसिद्धेः यद्वा माभून्मोक्षःतस्यचरणयोःसारंजुषांसुधांसेवमानानांतेनापिकिमित्यर्थः २५ ननुचधर्मादेरपुरुषार्थत्वेकिमित्याचार्यैःवेदोक्तत्वेनससत्यएवाभिहितस्तत्राह । धर्मोर्थःकामश्चेतियस्त्रिवर्गस्तदर्थंचयाईक्षाद्याअभिहिता ईक्षाआत्मविद्यात्रयीकर्मविद्यानयदंडोतर्कोदंडश्च विविधाचवार्ताजीविकातदेतत्सर्वंनिगमस्यार्थजातंस्वसुहृदःस्वांतर्यामिणःपरस्यपुंसःस्वात्मार्पणसाधनंचेत्तर्हिसत्यंमन्येसत्यपरत्वात् । अन्यथातदसत्यमेव । यद्वातदेतदखिलंनिगमस्यत्रैगुण्यविषयस्यप्रतिपाद्यंमन्ये । सत्यं पुनर्निस्त्रैगुण्यलक्षणंपरमस्यपुंसःस्वात्मार्पणमेवेत्यर्थः । तदुक्तंभगवता । ' त्रैगुण्यविषयावेदानिस्त्रैगुण्योभवार्जुन ' इति २६ तेषांविश्वासार्थंगुरुसंप्रदायमाह ज्ञानमिति । यत्रनारदःश्रोतातत्रकुतोमादृशानामधिकारइत्यत्राह । भगवतएकांतभक्तानांयत्पादरजस्तेनआप्लुतानांस्नातानांदेहिनांसर्वेषामपितद्ज्ञानंस्याद्नतुतमानामेवेतिनियमः २७ अतएवमयापिपूर्वं ( देवस्यदर्शनंयस्यतस्मात् ) नारदाच्छ्रुतम् । विज्ञानसंयुतंअनुभवयुक्तम् । धर्मंचश्रुतवानहम् २८

**परावरेषुभूतेषुब्रह्मांतस्थावरादिषु ॥ भौतिकेषुविकारेषुभूतेष्वथमहत्सुच २० गुणेषुगुणसाम्येचगुणव्यतिकरेतथा ॥ एकएवपरोह्यात्माभगवानीश्वरोऽव्ययः २१ प्रत्यगात्मस्वरूपेणदृश्यरूपेणचस्वयम् ॥ व्याप्यव्यापकनिर्देश्योह्यनिर्देश्योविकल्पितः २२ केवलानुभवानंदस्वरूपःपरमेश्वरः ॥ माययांतर्हितैश्वर्यईयतेगुणसर्गया २३ तस्मात्सर्वेषुभूतेषुदयांकुरुतसौहृदम् ॥ आसुरंभावमुन्मुच्यययातुष्यत्यधोक्षजः २४ तुष्टेचतत्रकिमलभ्यमनंतआद्ये किंतैर्गुणव्यतिकरादिहयेस्वसिद्धाः ॥ धर्मादयःकिमगुणेनचकांक्षितेनसारंजुषांचरणयोरुपगायतांनः २५ धर्मार्थकामइतियोभिहितस्त्रिवर्गईक्षात्रयीनयदमौविविधाचवार्ता ॥ मन्येतदेतदखिलंनिगमस्यसत्यंस्वात्मार्पणंस्वसुहृदःपरमस्यपुंसः २६ ज्ञानंतदेतदमलंदुरवापमाहनारायणोनरसखःकिलनारदाय ॥ एकांतिनांभगवतस्तदकिंचनानांपादारविंदरजसाप्लुतदेहिनांस्यात् २७ श्रुतमेतन्मयापूर्वंज्ञानंविज्ञानसंयुतम् ॥ धर्मंभागवतंशुद्धंनारदाद्देवदर्शनात् २८**

किंचयःब्रह्माद्यण्वंतपदार्थेषुपरमात्माव्याप्यस्थितः २० २१ २२ २३ तस्मात्आसुरंभावंउन्मुच्य सर्वभूतेषुदयांसौहृदंचकुरुतदययाअधोक्षजःतुष्यति २४ अनंतेतुष्टेतच्चरणजुषांनःअलभ्यंकिम् २५ २६ एतत्ज्ञानंनारायणःनारदायआह एकांतभक्तानांपादरजसास्नातानांसर्वेषामपिइदंज्ञानंस्यात् नतुउच्चानामेवेतिनियमः २७ इदंभगवद्धर्मरूपंज्ञानं मयापूर्वं नारदात्श्रुतम् २८

तत्राऽतिविस्मिताःपृच्छंति प्रह्लादेति । एताभ्यामृतेऽन्यंगुरुंनविद्मः । एतदागमनात्पूर्वमेवाहंनारदपार्श्वंगतइतिचेत्तत्राहुः । हियस्माद्बालानामपिअतिशिशूनामस्माकंएतावीश्वरौनि यंतारौ । अतस्तवान्यत्रगमननसंभवति २९ सएवात्रागतइत्यपिनसंभवतीत्याहुः बालस्येति । दुरन्वयःदुर्घटः विश्रंभकारणंविश्वासहेतुः ३० ॥ इतिश्रीभागवतेमहापुराणेसप्तमस्कंधेटी कायांप्रह्लादानुचरितेषष्ठोऽध्यायः ६ ॥ ॥ ७ ॥ ॥ सप्तमेमातृगर्भस्थेस्वस्मिन्नारदभाषितम् । प्रह्लादोवर्णयामासशिष्यप्रत्ययसिद्धये ॥१॥ अश्रावितनारदादेतन्मयागर्भइतीरितुम् । तत्र स्तावत्कथामाहपद्यैःषोडशभिःसुधीः॥२॥ १ अस्माकंपितरिहिरण्यकशिपौ २ स्वकृतेनैवपापोसौअभक्षिभक्षितइतिहर्षंतोयुद्धोद्यमंचक्रुः ३ ४ ५ राज्ञःशिबिरंआवासंव्यलुंपन्सर्वस्वापहा रेणनाशितवंतः ( गर्भस्थस्यममातरंअग्रहीच ) ६ ७ अनागसंनिरपराधांएनांनेतुमार्हसीतिमाह ८ अविषह्यंदुःसहंअतःअनयाप्रसवपर्यंतंअत्रास्यताम् । ततश्चअर्थस्यपदवींमार्गंगतः प्राप्तःसन् ( मोक्ष्ये ) जातंपुत्रंहत्वामोक्ष्यामीत्यर्थः ९ साक्षात्स्वगुणैरेवमहान्नतुपित्रादिसंबंधात् । त्वयाहेतुभूतेन संस्थांमृत्युंनयास्यति तत्रहेतवोनिष्किल्बिषइत्यादयः १०

दैत्यपुत्राऊचुः ॥ प्रह्लादत्वंवयंचापिनर्तेऽन्यंविद्महेगुरुं ॥ एताभ्यांगुरुपुत्राभ्यांबालानामपिहीश्वरौ २९ बालस्यांतःपुरस्थस्यमहत्संगोदुरन्वयः ॥ छिंधिनः संशयंसौम्यस्याच्चेद्विश्रंभकारणम् ३० इतिश्रीभागवतेमहापुराणेसप्तमस्कंधेप्रह्लादानुचरितेषष्ठोऽध्यायः ६ ॥ ७ ॥ श्रीनारदउवाच ॥ एवंदैत्यसुतैःपृष्टोम हाभागवतोऽसुरः ॥ उवाचस्मयमानांस्तान्स्मरन्मदनुभाषितम् १ ॥ प्रह्लादउवाच ॥ पितरिप्रस्थितेऽस्माकंतपसेमंदराचलम् ॥ युद्धोद्यमंपरंचक्रुर्वि बुधादानवान्प्रति २ पिपीलिकैरहिरिवदिष्ट्यालोकोपतापनः ॥ पापेनपापोऽभक्षीतिवादिनोवासवादयः ३ तेषामतिबलोद्योगंनिशम्यासुरयूथपाः ॥ वध्य मानाःसुरैर्भीताद्रुद्रुवुःसर्वतोदिशम् ४ कलत्रपुत्रमित्राप्तान्गृहान्पशुपरिच्छदान् ॥ नावेक्षमाणास्त्वरिताःसर्वेप्राणपरीप्सवः ५ व्यलुंपन्राजशिबिरममराज यकांक्षिणः ॥ इंद्रस्तुराजमहिषींमातरंममचाग्रहीत् ६ नीयमानांभयोद्विग्नांरुदतींकुररीमिव ॥ यदृच्छयाऽऽगतस्तत्रदेवर्षिर्ददृशेपथि ७ प्राहमैनांसुरपतेने तुमर्हस्यनागसम् ॥ मुंचमुंचमहाभागसतींपरपरिग्रहम् ८ ॥ इंद्रउवाच ॥ आस्तेऽस्याजठरेवीर्यमविषह्यंसुराद्विषः ॥ आस्यतांयावत्प्रसवंमोक्ष्येऽर्थपद वींगतः ९ ॥ श्रीनारदउवाच ॥ अयंनिःकिल्बिषःसाक्षान्महाभागवतोमहान् ॥ त्वयानप्राप्स्यतेसंस्थामनंतानुचरोबली १०

दैत्यपुत्राऊचुः ॥ वयंत्वंचअन्यंगुरुंनविद्महे २९ अंतःपुरस्थस्यबालस्यतवमहत्संगःकथंजातःइतिनःसंशयंछिंधि ३० ॥ इतिसप्तमेषष्ठः ६ ॥ ॥ नारदउवाच ॥ एवं दैत्यसुतैःपृष्टःप्रह्लादःममपूर्वानुभाषितंस्मरन्उवाच १ ॥ प्रह्लादउवाच ॥ अस्मत्पितरितपसेमंदराचलंप्रस्थितेसति देवाः दानवान्प्रतियुद्धोद्यमंचक्रुः २ तदाअसुराःदेवब लोद्योगंदृष्ट्वाकलत्रादिसर्वंत्यक्त्वादिशःप्रदुद्रुवुः ३ ४ ५ ततोदेवाः राज्ञः आवासंव्यलुंपन् इंद्रस्तुममममातरंगृहीत्वानीतवान् ६ तांनीयमानांभयोद्विग्नांपथिदृष्ट्वानारदः इंद्रंप्राह ७ हेइंद्र एनांसतींनेतुंनार्हसि ८ मुंचमुंच एवमुक्तः इंद्रःनारदंउवाच हेऋषेअस्याः जठरेअविषह्यंवीर्यंआस्तेअतः प्रसवोत्तरंतंहत्वाएनांमोक्ष्ये ९ नारदउवाच ॥ हेइंद्रअयंमहाभागवतःअनंतानुचरःत्वयासंस्थांनप्राप्स्यते १०

अनंतस्यप्रियोयोहं सवाप्रियोयस्यतस्यममभक्त्याएनांप्रदक्षिणीकृत्य ११ इहोष्यतामित्याहेतिशेषः १२ अंतिसमीपे १३ अंतर्वत्नीगर्भिणी । इच्छयाभर्तुरागमनानंतरंप्रसूतये । एव मपिस्वगर्भस्यक्षेमाय १४ तस्याःशोकशांत्यैधर्मस्यतत्त्वंमांकिलक्षणं ज्ञानमात्मानात्मविवेकःतदुभयंप्रादात्‌ ईश्वरःसमर्थः १५ १६ भूयात्भवेत्‌ वैशारदीस्वार्थेतद्धितः । देहाद्यहंकारच्छे दनिपुणेत्यर्थः । ( तादृशीधीर्भूयात्‌ भवेत्‌ । स्त्रीणांबालानांचश्रद्धातोज्ञानाधिकारःयथामम ) १७ कासौवैशारदीधीरित्यपेक्षायांनारदोक्तमेवदेहात्मविवेकप्रकारमाह । जन्मेतिदश भिः । जन्माद्याःजायतेअस्तिवर्धतेविपरिणमतेअपक्षीयतेनश्यतीत्येवंभूताइमेषड्भावाविकारा वृक्षस्येवयथाफलानांदृश्यंते तद्वदात्मनितथैवास्थितेदेहस्यदृष्टाइत्यर्थः । ईश्वरीविकारस मर्थामूर्तिर्यस्यतेन १८ तदेवंदेहधर्मैस्तद्वैलक्षण्येनआत्मनोदेहभेदोदर्शितः । इदानीमात्मधर्मैरेवभेदंस्फुटयंस्तदहंकारादिकंत्याजयति । आत्मानित्यः । ‘ अविनाशीवाअरेयमात्मा’ इतिश्रुतेः । अव्ययःअपक्षयशून्यः । ‘ ऋचोअक्षरेपरमेव्योमन्‌ ’ इतिश्रुतेः । शुद्धः ‘ निरवद्यंनिरंजनं ’ इतिश्रुतेः । एकः । ‘ एकमेवाद्वितीयं ’ इतिश्रुतेः । क्षेत्रज्ञः ‘विज्ञातारमेकेन विजानीयात्‌ ’ इतिश्रुतेः । आश्रयः । ‘यस्मिन्द्यौःपृथिवीचांतरिक्षं ’ इतिश्रुतेः । अविक्रियः । ‘ निष्कलंनिष्क्रियंशांतं ’ इतिश्रुतेः । स्वदृक्‌ । ‘ आत्मज्योतिःसम्राडितिहोवाच ’ इतिश्रुतेः । हेतुः । ‘ सइमाँल्लोकानसृजत’इतिश्रुतेः । व्यापकः । ‘ सत्यंज्ञानमनंतं ’ इतिश्रुतेः । असंगी । ‘ असंगोह्ययंपुरुषः ’ इतिश्रुतेः । अनावृतः । ‘ पूर्णस्यपूर्णमादायपूर्णमेवाव शिष्यते’ । इतिश्रुतेः १९ परैःश्रेष्ठैर्विवेकसमर्थैःदेहाद्भेदंविद्वान्‌ अहंममेत्यसद्भावंमिथ्याभिनिवेशंत्यजेत्‌ २०

इत्युक्तस्तांविहायेंद्रोदेवर्षेर्मानयन्वचः ॥ अनंतप्रियभक्त्यैनांपरिक्रम्यादिवंययौ ११ ततोनोमातरमृषिःसमानीयनिजाश्रमम्‌ ॥ आश्वास्येहोष्यतांव त्सेयावत्तेभर्तुरागमः १२ तथेत्यवात्सीद्देवर्षेरंतिसाऽप्यकुतोभया ॥ यावद्दैत्यपतिर्घोरात्तपसोनन्यवर्तत १३ ऋषिंपर्यचरत्तत्रभक्त्यापरमयासती ॥ अंत र्वत्नीस्वगर्भस्यक्षेमायेच्छाप्रसूतये १४ ऋषिःकारुणिकस्तस्याःप्रादादुभयमीश्वरः ॥ धर्मस्यतत्त्वंज्ञानंचमामप्युद्दिश्यनिर्मलम्‌ १५ तत्तुकालस्यदीर्घ त्वात्स्त्रीत्वान्मातुस्तिरोदधे ॥ ऋषिणानुगृहीतंमांनाधुनाप्यजहात्स्मृतिः १६ भवतामपिभूयान्मेयदिश्रद्दधतेवचः ॥ वैशारदीधीःश्रद्धातःस्त्रीबालानांच मेयथा १७ जन्माद्याःषडिमेभावादृष्टादेहस्यनात्मनः ॥ फलानामिववृक्षस्यकालेनेश्वरमूर्तिना १८ आत्मानित्योऽव्ययःशुद्धएकःक्षेत्रज्ञआश्रयः ॥ अविक्रियःस्वदृग्घेतुर्व्यापकोऽसंग्यनावृतः ॥ १९ एतैर्द्वादशभिर्विद्वानात्मनोलक्षणैःपरैः ॥ अहंममेत्यसद्भावंदेहादौमोहजंत्यजेत्‌ २०

इत्युक्तः इंद्रःतांविहायदिवंययौ ११ ततोनारदःमेमातरंआश्वास्य निजाश्रमंआनीययावत्‌तेभर्तुरागमःतावत्‌इहउष्यतांइत्याह १२ साअंतर्वत्नीइच्छाप्रसूतयेगर्भक्षेमाय चऋषिंपर्यचरत्‌ १३ १४ कारुणिकःऋषिःमांउद्दिश्यतस्याःधर्मस्यतत्स्वरूपंनकिंज्ञानंचप्रादात्‌ १५ तत्तुबहुकालत्वात्‌स्त्रीत्वाच्चमातुःतिरोदधेऋषिकृपयामांअधुनापिस्मृ तिर्नजहाति १६ अतःयदिममवचःश्रद्दधतेतर्हिभवतामपिभक्तिज्ञानंचभवेत्‌ १७ अथनारदोक्तं देहात्मविवेकप्रकारंदर्शयति जन्माद्याःषड्भावाःदेहस्यदृष्टाःआत्मनः न १८ आत्मानित्यःअव्ययः शुद्धः १९ इत्यादिलक्षणैःदेहात्‌ भेदंज्ञात्वादेहादौअहंममेतिमिथ्याबुद्धिंत्यजेत्‌ २०

भा०स० नन्वेवंविविक्तात्मज्ञानिनोपिअपरोक्षानुभवेनब्रह्मताप्राप्तिःकथंस्यात्यतोऽहंकारादिकंत्यजेत् इत्यपेक्षायांतत्प्राप्तिप्रकारंसदृष्टांतमाह । क्षेत्रेषुस्वर्णाकरेषुस्फुरत्स्वर्णकणेषुग्रावसुयोगैर्ध अ०
मनाद्युपायैस्तदुपायाभिज्ञोहेमकारोयथास्वर्णमाप्नुयात् । ( एवंक्षेत्ररूपेषुदेहेषु ) आत्मयोगैरात्मप्राप्त्युपायैःब्रह्मगतिंब्रह्मतांअध्यात्मवित् आत्माधिकृतकार्यकारणसंघातज्ञाता ( ल
॥१५॥ मेत ) २१ अध्यात्मविवेकरूपमात्मप्राप्त्युपायमाह । अष्टाविति त्रिभिः । मूलप्रकृतिर्महदहंकारौपंचतन्मात्राणिचेत्यष्टौ । त्रयःसत्त्वादयस्तेचप्रकृतिगुणाएव । नतुभिन्नाः । एकादशे ॥ ७॥
न्द्रियाणिपंचमहाभूतानिचेतिषोडश पुमानात्माएकःप्रोक्तः आचार्यैःकपिलादिभिः । एकत्वेहेतुःएषुसाक्षित्वेनअन्वयात् । तदुक्तं । ' मूलप्रकृतिरविकृतिर्महदाद्याःप्रकृतिविकृतयःसप्त ।
षोडशकस्तुविकारोनप्रकृतिर्नविकृतिःपुरुषः ' इति २२ जगत्जंगमंतस्थुःस्थावरम् । अत्रैवसर्वसंघातात्मकेदेहएवमृग्यःअन्वेष्टव्यः । कुशकंचेतदित्याह । नेतिनेतीत्यन्यापोहेक्रियमा
णेस्वयमेवअनात्मवर्गात्पृथगुपलभ्यमानइत्यर्थः २३ मणिषुसूत्रस्येवसर्वत्रानुस्यूतत्वेनअन्वयः । अतएवमणिभ्यःसूत्रस्येवएकैकव्यतिरेकश्च । तयोर्द्वंद्वे कथंतेनयोविवेकःपूर्वोक्तोवातेन
उशताशुद्धेनआत्मनामनसा । सर्गस्थानसमाम्नायैःसृष्टिस्थितिसंहारैः ' यतोवाइमानिभूतानिजायंते ' इत्यादिश्रुत्युक्तसर्गाद्यनुसंधानेनेत्यर्थः । विमृशद्भिःविचारयद्भिःअसत्वरैः अ
व्यग्रैःमुमुक्षुभिर्मृग्यइतिपूर्वेणान्वयः २४ विमर्शप्रकारमाहबुद्धेरितिद्वाभ्याम् । अध्यक्षःसाक्षी २५ अतएभिर्बुद्धेर्भेदैःपरिणामैःपर्यस्तैःपरितःक्षिप्तैरनात्मधर्मत्वेननिरस्तैः । बुद्धिधर्म
त्वेहेतुः । त्रिवर्णैःत्रिगुणात्मकैःक्रियोद्भवैःकर्मजन्यैःबुद्धेरेवत्रिगुणात्मकत्वात्कर्मकर्तृत्वाच्च । तस्याएवैताअवस्थाः । आत्मातुबुद्ध्यन्वयात्तदवस्थावानिवभातिनतत्त्वतइत्यात्मनः
स्वरूपंबुध्येत्जानीयादित्यर्थः । अत्रदृष्टांतःकुसुमधर्मैर्गंधैस्तदाश्रयंवायुमिव २६ ननुतर्हियथाकुसुमधर्मोपिवायोर्गंधोविवेकज्ञानेनानिवर्ततएवमात्मनःसंसारोबुद्धिधर्मोपिनिवर्ततेत्या
शंक्याह । एतद्द्वारःबुद्धिद्वारकःतद्बन्धस्याद्वारकोवानतुस्वतःहियस्मात्बुद्धेर्येगुणाःकर्माणिचतैर्निबध्यतइतितथा । सचअज्ञानमूलः ( भ्रांतिमूलकः ) अतोअपार्थोऽपिमिथ्याभूतोपिस्व
प्नइवेष्यते । वायोस्तुगंधविशिष्टद्रव्यसंबंधस्यवास्तवत्वात्सोऽस्मिन्विषयेविषमोदृष्टांतः । ( अतोऽत्रस्वप्नइवेष्यतइतिभावः ) २७

स्वर्णंयथाग्रावसुहेमकारः क्षेत्रेषुयोगैस्तदभिज्ञआप्नुयात ॥ क्षेत्रेषुदेहेषुतथाऽत्मयोगैरध्यात्मविद्ब्रह्मगतिंलभेत २१ अष्टौप्रकृतयःप्रोक्तास्त्रयएवहितद्गुणाः ॥
विकाराःषोडशाचार्यैःपुमानेकःसमन्वयात २२ देहस्तुसर्वसंघातोजगत्तस्थुरितिद्विधा ॥ अत्रैवमृग्यःपुरुषोनेतिनेतीत्यतत्त्यजन् २३ अन्वयव्यतिरेके
णविवेकेनोशतात्मना ॥ सर्गस्थानसमाम्नायैर्विमृशद्भिरसत्वरैः २४ बुद्धेर्जागरणंस्वप्नःसुषुप्तिरितिवृत्तयः ॥ तायेनैवानुभूयंतेसोऽध्यक्षःपुरुषःपरः २५ ए
भिस्त्रिवर्णैःपर्यस्तैर्बुद्धिभेदैःक्रियोद्भवैः ॥ स्वरूपमात्मनोबुध्येद्गंधैर्वायुमिवान्वयात २६ एतद्द्वारोहिसंसारोगुणकर्मनिबंधनः ॥ अज्ञानमूलोऽपार्थो
पिपुंसःस्वप्नइवेष्यते २७ ॥१५॥

२१ २२ २३ २४ किंचजाग्रत्स्वप्नसुषुप्तिवृत्तयःबुद्धेर्भवंति ताः येनअनुभूयंते सःसाक्षीपुरुषः २५ २६ संसारस्तुबुद्धिद्वारकःअज्ञानमूलः २७

माकिरशक्येतिघनमंतव्यमित्याह । कइति । छिद्रवत् आकाशवत् । तिष्ठतः विषयाणामुपपादनैः अर्जनैःकिम् । तत्रहेतु । सर्वदेहिनांसामान्यतः । विषयनिष्ठत्वेश्वशूकरादिसाधा
रण्यादित्यर्थः । नचैवमादौपौनरुक्त्यदोषःनारदोक्तानुवादरूपत्वादस्यप्रकरणस्य ३८ अनर्थकंचविषयार्जनमित्याह । रायोअर्थाः ( कोशोभांडागारंभूतिरैश्वर्यं ) क्षणभंगुरमायुर्य 
स्यतस्यस्वयमपिचलाःसंतः । तदुक्तमितिहासेषु । ' धनंहिपुरुषोलोकेपुरुषंघनमेववा । अवश्यमेकंत्यजतितस्मात्किंधनतृष्णया ' इति ३९ ' यन्नदुःखेनसंभिन्नंनचग्रस्तमनंतरं । अभि
 लाषोपपन्नंचसुखंस्वर्गसुखास्पदम् ' इत्येवंभूताःस्वर्गादिभोगाअपिनसेव्याहाइत्याह । एवंहीति । क्षयिष्णुत्वेहेतुः क्रतुभिःकृताइति ' तद्यथेहकर्मचितोलोकःक्षीयते एवमेवामुत्रपुण्यचितो 
लोकःक्षीयते' इतिश्रुतेः । अतएवपुण्यतारतम्येनसातिशयानचनिर्मलाःस्पर्धादिमत्वात् । नविद्यतेदृष्टंश्रुतंचदूषणंयस्मिन् ४० यदर्थोयःसंकल्पः ( आत्मानंविद्वांसंमन्यतेऽवि
द्वन्मानी ) । अतःसंकल्पितार्थाद्विपर्यासंविपरीतंफलंअमोघंअवश्यंप्राप्नोति ४१ तदेवदर्शयतिसुखायेति । ईहयाइच्छयाक्रिययावा । यःपूर्वमनीहायाहेतोःसुखेनआवृतोव्याप्तआसीत्सई
हयादुःखमाप्नोत्येव ( सदा ) ४२ किंचकामान्भोगान्काम्यैर्विषयैःकर्मभिर्वा । पारक्यःश्वसृगालादिभोग्यःनत्वात्मीयःभंगुरश्च ४३ किमुदेहात्व्यवहिताअपत्यादयोममताविषयाः
पारक्याइतिवक्तव्यम् ४४ किंच । स्वयंपुरुषार्थरूपस्यकिमेतैरातितुच्छैरित्याह किमेतैरिति ४५ भोगावसराभावाश्चैतैःकल्पयोइत्याहनिरूप्यतामिति । ( निषेकादिषुगर्भसंभवादिषु )
प्राचीनैःकर्मभिःक्लिश्यमानस्य । कर्मभिःकियानर्थइतिवाऽन्वयः ४६

कोतिप्रयासोऽसुरबालकाहरेरुपासनेस्वेहृदिछिद्रवत्सतः ॥ स्वस्यात्मनःसख्युरशेषदेहिनांसामान्यतःकिंविषयोपपादनैः ३८ रायःकलत्रंपशवःसुता
दयोगृहामहीकुंजरकोशभूतयः ॥ सर्वेऽर्थकामाःक्षणभंगुरायुषःकुर्वंतिमर्त्यस्यकियत्प्रियंचलाः ३९ एवंहिलोकाःक्रतुभिःकृताअमीक्षयिष्णवःसातिशयान
निर्मलाः ॥ तस्माददृष्टश्रुतदूषणंपरंभक्त्यैकयेशंभजतात्मलब्धये ४० यदर्थइहकर्माणिविद्वन्मान्यसकृन्नरः ॥ करोत्यतोविपर्यासममोघंविंदतेफलम् ४१
सुखायदुःखमोक्षायसंकल्पइहकर्मिणः ॥ सदाप्नोतीहयादुःखमनीहायाःसुखावृतः ४२ कामान्कामयतेकाम्यैर्यदर्थमिहपूरुषः ॥ सवैदेहस्तुपारक्योभं
गुरोयात्युपैतिच ४३ किमुव्यवहितापत्यदारागारधनादयः ॥ राज्यंकोशगजामात्यभृत्याप्ताममतास्पदाः ४४ किमेतैरात्मनस्तुच्छैःसहदेहेननश्वरैः ॥
अनर्थैरर्थसंकाशैर्नित्यानंदमहोदधेः ४५ निरूप्यतामिहस्वार्थःकियान्देहभृतोऽसुराः ॥ निषेकादिष्ववस्थासुक्लिश्यमानस्यकर्मभिः ४६

हेदैत्यबालकाःहृत्स्थस्यहरेर्भजनेकोतिप्रयासोस्ति ३८ किंचद्रव्यकलत्रादयः एतेमर्त्यस्यकियत्प्रियं कुर्वंति ३९ यथाद्रव्यपुत्रकलत्रादिकं इहलोकसुखंनश्वरम् एवंपुण्या
र्जितस्वर्गादिकमपिनश्वरंतस्मात् आत्मलब्धयेभक्त्याहरिंभजत ४० किंचअयंनरः यत्संकल्प्य कर्माणिकरोति तद्विपरीतंफलंप्राप्नोति ४१ तदेवाह इहकर्मिणः सुखायसं 
कल्पोस्तिपरंचइच्छयादुःखंप्राप्नोति ४२ किंच यदर्थंकामान्कामयतेसः देहस्तुपारक्योयदा ४३ तदाऽपुत्रादयःपारक्याइतिकिंवक्तव्यम् ४४ किंच आत्मनःनश्वरैः
एतैः किम् किंच हेअसुराःक्लिश्यमानस्यदेहिनःकर्मभिः कियानर्थइतिकथयत ४५ ४६

ननुकर्मसुसमाप्तेषुमोगावसरःस्यात्तत्राह । कर्माणीति । नचैवंकर्मतत्फलंदेहादिकंपरमार्थमित्याह । उभयंकर्मचदेहंच अविवेकतःअज्ञानेनैवतनुते ४७ अर्थादयो यदपाश्रयायदधीनाः ४८ भूतानांप्राणिनाम् । जीवसंज्ञितःअंतर्यामी ४९ असुराणामस्माकमत्रनाधिकारइत्यपिनवाच्यमित्याह । देवइतिपंचभिः ५० ( नालंनसमर्थं ) ५१ अमलयानिष्कामया । अन्यद्विडंबनंनटनमात्रम् ५२ ( सर्वत्रसर्वभूतेषुआत्मौपम्येनआत्मतुल्यदर्शनेन ) ५३ अच्युततांअमृतत्वम् ५४ अध्यायद्वयोक्तमुपसंहरति । एतावानिति । तदीक्षणंगोविंददृष्टया संमाननम् ५५ ॥ ॥ इतिश्रीभागवतेमहापुराणेसप्तमस्कंधेटीकायांसप्तमोऽध्यायः ७ ॥ ॥ ७ ॥ ॥ अष्टमेतिरुषासूनुंनिघ्नन्दैत्योहतःस्वयम् । आविर्भूयनृसिंहेनसचब्रह्मादिभिःस्तुतः ॥ १ ॥ अंतःकृपासुधापूर्णोबहिःक्रोधोनृकेसरी । दैत्येंद्रमरिमावेनभजंतंसममावयत् ॥ २ ॥ १ एकांतसंस्थितांप्रत्यङ्निष्ठाम् । यथायथावत् २ सचपुत्रंहंतुंमनोदधे । कथंभूतः । कोपस्यावेशेनोद्रेकेणचलद्गात्रंवपुर्यस्यसः ३ क्षिप्त्वातिरस्कृत्य ( अतदर्हणंतिरस्कारानर्हपरमसाधुम् ) पापेनसरोषेण तिरश्चीनेनवक्रेण ( आहोवाच ) ४

कर्माण्यारभतेदेहीदेहेनात्मानुवर्तिना ॥ कर्मभिस्तनुतेदेहमुभयंत्वविवेकतः ४७ तस्मादर्थाश्चकामाश्चधर्माश्चयदपाश्रयाः ॥ भजतानीहयात्मानमनीहंहरिमीश्वरम् ४८ सर्वेषामपिभूतानांहरिरात्मेश्वरःप्रियः ॥ भूतैर्महद्भिःस्वकृतैःकृतानांजीवसंज्ञितः ४९ देवोऽसुरोमनुष्योवायक्षोगंधर्वएववच ॥ भजन्मुकुंदचरणंस्वस्तिमान्स्याद्यथावयम् ५० नालंद्विजत्वंदेवत्वमृषित्वंवाऽसुरात्मजाः ॥ प्रीणनायमुकुंदस्यनवृत्तंनबहुज्ञता ५१ नदानंनतपोनेज्यानशौचंनव्रतानिच ॥ प्रीयतेऽमलयाभक्त्याहरिरन्यद्विडंबनम् ५२ ततोहरौभगवतिभक्तिंकुरुतदानवाः ॥ आत्मौपम्येनसर्वत्रसर्वभूतात्मनीश्वरे ५३ दैतेयायक्षरक्षांसिस्त्रियःशूद्राव्रजौकसः ॥ खगामृगाःपापजीवाःसंतिह्यच्युततांगताः ५४ एतावानेवलोकेस्मिन्पुंसःस्वार्थःपरःस्मृतः ॥ एकांतभक्तिर्गोविंदेयत्सर्वत्रतदीक्षणम् ५५ ॥ ॥ इतिश्रीभागवतेमहापुराणेसप्तमस्कंधेसप्तमोऽध्यायः ७ ॥ नारदउवाच ॥ अथदैत्यसुताःसर्वेश्रुत्वातदनुवर्णितम् ॥जगृहुर्निरवद्यत्वान्नैवगुर्वनुशिक्षितम् १ अथाचार्यसुतस्तेषांबुद्धिमेकांतसंस्थिताम् ॥ आलक्ष्यभीतस्त्वरितोराज्ञआवेदयद्यथा २ श्रुत्वातदप्रियंदैत्योदुःसहंतनयानयम् ॥ कोपावेशचलद्गात्रःपुत्रंहंतुंमनोदधे ३ क्षिप्त्वापरुषयावाचाप्रह्लादमतदर्हणम् ॥ आहेक्षमाणःपापेनातिरश्चीनेनचक्षुषा ४

किंच अयंदेहीदेहंकर्मचअज्ञानेनैवतनुते ४७ तस्मात्अर्थादयोयदधीनाः तंहरिंभजध्वम् ४८ ४९ नःअसुराणांहरिभजनेअनधिकारःइतिनचवाच्यम् देवोऽसुरोमनुष्योवायक्षोगंधर्वएवच भजन्मुकुंदचरणंस्वस्तिमान्स्याद्यथावयम् ५० नालंद्विजत्वंदेवत्वमृषित्वंवासुरात्मजाः ॥ प्रीणनायमुकुंदस्यनवृत्तंनबहुज्ञता ५१ नदानंनतपोनेज्यानशौचंनव्रतानिच ॥ प्रीयतेऽमलयाभक्त्याहरिरन्यद्विडंबनम् ५२ ततोहरौभगवति भक्तिंकुरुतदानवाः ॥ आत्मौपम्येनसर्वत्रसर्वभूतात्मनीश्वरे ५३ दैतेयायक्षरक्षांसिस्त्रियःशूद्राव्रजौकसः ५४ खगामृगाःपापजीवाःसंतिह्यच्युततांगताः॥एतावानेवलोकेऽस्मिन्पुंसःस्वार्थःपरःस्मृतः॥एकांतभक्तिर्गोविंदेयत्सर्वत्रतदीक्षणम् ५५ ॥ इतिसप्तमेसप्तमः ७॥ ॥ नारदउवाच ॥ अथसर्वेदैत्यसुताःनिर्दोषंप्रह्लादवाक्यंजगृहुःगुरुशिक्षितंन १ अथाचार्यसुतःबालकानांप्रत्यङ्निष्ठांबुद्धिंआलक्ष्यभीतःसन्राज्ञेशीघ्रंन्यवेदयत् २ राजातत् अप्रियंश्रुत्वाकोपावेशेनचलद्गात्रः पुत्रंहंतुंमनोदधे ३ बद्धांजलिंस्थितंपुत्रंपापेनचक्षुषाअवलोकयन् आह ४

५ हेमंदात्मन् अल्पबुद्धे । मदाज्ञाऽतिलंघिनंत्वामद्ययमालयंनेष्यामि ६ अभीतवत् । किंबलंयस्यसकिंबलः ( अत्यगाः अतिक्रांतवान् ) ७ ( समगवान्ममैवबलमितिन । किंतुभवतो न्येषांचबलिनांसएवबलम् । येपरेब्रह्मादयोऽवरेचयेस्थिरजंगमास्तेयेनवशंप्रापिताः ) ८ वशंप्रणीताइत्यत्रहेतुःसईश्वरइति । उरुः क्रमः पादविक्षेपायस्य । बहुपराक्रमइतिवा । ओजआदिरूपः । सत्त्वंधैर्यंबुद्धिर्वा ९ ननुमच्छत्रुरसौकथंममापिसएवबलंस्यादतआहजहीति । आत्मनः स्वस्यभावंस्वभावंत्यज । यतः अजितादात्मनोमनसःऋतेविनाअन्येविद्विषोनसंति । किंच । तद्धितदेवाहिसाम्येनमनसोधारणमेवसमर्हणमाराधनम् १० ननुमयादिग्विजयेसर्वेरिपवोजिताः अतः सांप्रतंविद्विषोनसंतीतिचेत्सत्यंतत्राह । दस्यूनिति । एकेमत्वाह शामंदाःपुराआदौलुंपतः सर्वस्वंहरतःषडिंद्रियलक्षणान्शत्रून् अविजित्यअजित्वादशदिशःस्वयंजितामन्यंते । साधोस्तुजितचित्तस्यदेहिनांसमस्यज्ञस्यविदुषः स्वाज्ञानकल्पिताःपरेशत्रवःकुतःस्युः ११ व्यक्तंनिश्चितम् । विह्वलाअनन्विताइत्यर्थः १२ हेमंदभाग्यमदन्योजगदीश्वरोयद्यस्तितर्हिसौक्वास्ति । प्रह्लादआहससर्वत्रास्ति । हिरण्यकशिपुराहतर्हिकस्मात्स्तंभेनास्ति । प्रह्लादस्तुतंस्तंभंनिरीक्षमाणोनमस्यन्नाहदृश्यतइति १३ हिरण्यकशिपुस्तत्रतमपश्यन्नाह । सोऽहमिति । विकत्थमानस्यविपरीतंब्रुवाणस्यतेशिरः कायाद्धरामिपृथक्करोमि ( त्वात्वाम् ) १४

प्रश्रयावनतंदांतंबद्धांजलिमवस्थितम् ॥ सर्पःपदाहतइवश्वसन्प्रकृतिदारुणः ५ हेदुर्विनीतमंदात्मन्कुलभेदकराधम ॥ स्तब्धंमच्छासनोद्वृत्तंनेष्येत्वाऽद्ययमक्षयम् ६ क्रुद्धस्ययस्यकंपंतेत्रयोलोकाःसहेश्वराः ॥ तस्यमेऽभीतवन्मूढशासनंकिंबलोऽत्यगाः ७ ॥ प्रह्लादउवाच ॥ नकेवलंमेभवतश्चराजन्सवैबलंबलिनांचापरेषाम् ॥ परेऽवरेऽमीस्थिरजंगमायेब्रह्मादयोयेनवशंप्रणीताः ८ सईश्वरःकालउरुक्रमोसावोजःसहःसत्त्वबलेंद्रियात्मा ॥ सएवविश्वंपरमःस्वशक्तिभिःसृजत्यवत्यत्तिगुणत्रयेशः ९ जह्यासुरंभावमिमंत्वमात्मनःसमंमनोधत्स्वनसंतिविद्विषः ॥ ऋतेऽजितादात्मनउत्पथस्थितात्तद्धिह्यनंतस्यमहत्समर्हणम् १० दस्यून्पुराषण्नविजित्यलुंपतोमन्यंतएकेस्वजितादिशोदश ॥ जितात्मनोज्ञस्यसमस्यदेहिनांसाधोःस्वमोहप्रभवाःकुतःपरे ११ हिरण्यकशिपुरुवाच ॥ व्यक्तंत्वंमर्तुकामोसियोऽतिमात्रंविकत्थसे ॥ मुमूर्षूणांहिमंदात्मन्ननुस्युर्विक्लवागिरः १२ यस्त्वयामंदभाग्योक्तोमदन्योजगदीश्वरः ॥ क्वासौयदिससर्वत्रकस्मात्स्तंभेनदृश्यते १३ सोऽहंविकत्थमानस्यशिरःकायाद्धरामिते ॥ गोपायेतहरिस्त्वाद्ययस्तेशरणमीप्सितम् १४

५ हेदुर्विनीत हेअधममच्छासनातिगंत्वांअद्ययमसादनंनेष्ये ६ यस्यमेक्रुद्धस्यसतःत्रयोलोकाःकंपंतेतस्यमेशासनंकस्यबलेनअतिक्रांतवान् ७ ॥ नारदउवाच ॥ इतिश्रुत्वाहरेःप्रियःप्रह्लादःप्रहसन्इवगतभीः उवाच हेराजन्सःकेवलंममबलंनकिंतुभवतः अपरेषांबलिनांचबलम् येनब्रह्मादयोवशंनीताः ८ सःईश्वरःइदंसृजतिअवति अत्ति ९ त्वंआसुरंस्वभावंजहिमनःसमंधत्स्वअजितादात्मनःमनोविनाअन्येविद्विषोनसंति किंचसर्वत्रसाम्येनमनसोधारणं तदेवअनंतस्यसमर्हणंभवतीत्यादे १० ११
॥ राजोवाच ॥ हेमंदात्मन्निश्चितंत्वंमर्तुकामासियःत्वंअमर्यादंविकत्थसे १२ हेमंदभाग्यत्वयामदन्यःजगदीश्वरःउक्तः असौक्वास्तियदिसर्वत्रवर्ततेतर्हिकस्मात्स्तंभेनदृश्यते
१३ प्रह्लादःतंस्तंभंनिरीक्ष्यमाणः नमस्यन्नाहदृश्यतेइति अविकत्थमानस्यतेशिरःहरामि त्वांहरिःअद्यगोपायेत १४

प्रह्लादेनमूर्ध्निबद्धांजलिनानिरीक्ष्यमाणंस्तंभंमुष्टिनाताडितवान् १५ ( हे अंगयंस्वनंश्रुत्वास्वधाम्नोऽप्ययंप्रलयइव ) १६ तस्यदंतस्यस्वनेराश्रयस्य । येननिनादेन ( दैत्यनायकावितत्रसुः अत्युद्विग्नाबभूवुः ) विक्रमन्सर्वतःप्रहरन् १७. भगवांस्तदास्तंभंविदार्यअदृश्यतदृश्योबभूव । किमर्थं । निजभृत्येनप्रह्लादेनयद्भाषितंदृश्यतइतितत्सत्यंविधातुंकर्तुं । तथाअखिलेषु भूतेष्वात्मनोव्याप्तिंचसत्यांकर्तुंस्तंभेअदृश्यत । तत्किमर्थं । 'भौतिकेषुचभावेषुभूतेष्वपमहत्सुच । भगवानास्ते' इतियत्तेनैवभृत्येनभाषितंतत्सत्यंविधातुम् । तथाऽस्यअद्भुतंदैत्यघातकमति घोररूपमुद्वहन्दृष्टवंत । तत्किमर्थंनिजभृत्यैःसनकादिभिःशापानंतरमनुतप्तैस्त्रिभिर्जन्मभिःशापमोक्षोभवत्वितिभाषितंतत्सत्यंकर्तुं । तथाअत्यद्भुतंब्रह्मसृष्टावदृष्टमश्रुतंचरूपमुद्वहन्नत एवनमृगाकारंनचमनुष्याकारंउद्वहन्सभायांमध्येअदृश्यततत्किमर्थंनिजभृत्येनहिरण्यकशिपुनाब्रह्माणंप्रतियद्भाषितं'भूतेभ्यस्त्वद्विसृष्टेभ्योमृत्युर्माभूम्ममप्रभो'इति तथा'नांतर्नबहिरिति न नरैर्नमृगैरपि'इतिच । ब्रह्मणाचनिजभृत्येनतथास्त्वितियद्भाषितंतदुभयोर्वाक्यंसत्यंकर्तुं । नहितद्ब्रह्मसृष्टंभूतंनचनरोवामृगोवानचसभायामहस्यांतःनचतस्मान्नगरंबहिः एवंताभ्यांयद्भाषितंतस्य सत्यंकर्तुं । यच्चहिरण्यकशिपुनाभाषितंनूनमेतद्विरोधेनमृत्युर्मेभविता इतितथा अयमकृतश्चिद्धद्योऽमरइतिच । यच्चनारदेनमिनिजभृत्येनेंद्रंप्रतिभाषितंअयंमहाभागवतःसर्वान्प्राप्स्यतिअनंतान् परोबलीत्यनेनस्वभक्तपक्षपातेन चकारान्निजभाषितंच कितव ' कौंतेयप्रतिजानीहिनमेभक्तःप्रणश्यति'इतितथा 'तेषामहंसमुद्धर्तामृत्युसंसारसागरात्' इत्यादितत्सत्यंकर्तुमदृश्यतेति द्रष्टव्यम् अलंअतिविस्तरेण १८ सदैत्यःएवंध्वनिंश्रुत्वातदाश्रयंसर्वंप्राणिभिश्चिंतयंसर्वतोविलोकयन्स्तंभमस्यमध्यान्निर्गच्छत्नृमृगेंद्ररूपंअभिश्ररूपंअहोकिमेतदितिमीमांसितवानितिशेषः । तस्यैवंभलंभयानकंतन्नृसिंहरूपंमीमांसमानस्याग्रतोनृसिंहरूपोहरिःसमुत्थितः १९

एवंदुरुक्तैर्मुहुरर्दयन्रुषासुतंमहाभागवतंमहासुरः ॥ खड्गंप्रगृह्योत्पतितोवरासनात्स्तंभंतताडातिबलःस्वमुष्टिना १५ तदैवतस्मिन्निनदोतिभीषणोबभूव
येनांडकटाहमस्फुटत् ॥ यंवैस्वधिष्ण्योपगतंत्वजादयःश्रुत्वास्वधामाप्ययमंगमेनिरे १६ सविक्रमन्पुत्रवधेप्सुरोजसानिशम्यनिर्ह्रादमपूर्वमद्भुतम् ॥
अंतःसभायांनददर्शतत्पदंवितत्रसुर्येनसुरारियूथपाः १७ सत्यंविधातुंनिजभृत्यभाषितंव्याप्तिंचभूतेष्वखिलेषुचात्मनः ॥ अदृश्यतात्यद्भुतरूपमुद्वह
न्स्तंभेसभायांनमृगंनमानुषम् १८ ससत्त्वमेनंपरितोविपश्यन्स्तंभस्यमध्यादनुनिर्जिहानम् ॥ नायंमृगोनापिनरोविचित्रमहोकिमेतन्नृमृगेंद्ररूपम् ॥
मीमांसमानस्यसमुत्थितोऽग्रतोनृसिंहरूपस्तदलंभयानकम् १९

एवंदुरुक्तैःसुतंअर्दयन्सन्खड्गंप्रगृह्यसिंहासनात्उत्पत्यस्वमुष्टिनास्तंभंतताड १५ ततःस्तंभेअतिभीषणःशब्दःअभूत् येनअंडकटाहंअस्फुटत् तंश्रुत्वाब्रह्मादयःस्वस्थानना शंमेनिरे १६ सःदैत्यःसभामध्येअपूर्वंनादंश्रुत्वातस्याश्रयंनददर्श नादेनसर्वेदैत्याःवितत्रसुः १७ तदाभगवान्स्तंभंविदार्यदृश्योबभूव निजभृत्यभाषितंतथाअखिलभूतेषुआ त्मनोव्याप्तिंतथाचसनकादिभिःयत्भाषितंशापमोक्षोभवत्विति तदपिसत्यंकर्तुंनमृगंनमानुषंअद्भुतंरूपंदधत्सन् सभायांस्तंभेअदृश्यत १८ सःदैत्यःएवंध्वनिंश्रुत्वातदाश्रयं विलोकयन् स्तंभमध्यात् निर्गच्छंतं नृमृगेंद्ररूपंदृष्ट्वा नायंमृगःनापिनरः अहोएतत्किं इतिअतर्कयत् १९

भयानकत्वमेव दर्शयंस्तद्रूपमनुवर्णयति ( त्रिभिः ) प्रतप्तंचामीकरंस्वर्णंतद्वत्पिंगानिचंडानिलोचनानियस्मिन् । सटाजटाःकेसराःकंठरोमाणिस्फुरद्भिःसटाकेशरैःजृंभितंसाटोपमाननंयस्मिन् करालाःतुंगाःदंष्ट्रायस्मिन् करवालःखड्गः तद्वच्चंचलाक्षुरांतवत्तीक्ष्णाचजिह्वायस्मिन्भ्रुकुटीयुक्तेनमुखेनोल्बणम् २० स्तब्धौउन्मत्तौशंकुवदूर्ध्वौकर्णौयस्मिन्गिरिकंदरवदद्भुतंव्यात्तंप्रसृतंआस्यंनासेचयस्मिन् । हनूकपोलप्रांतौतयोर्भेदेनाविदारणेनभीषणम् कर्णांतमुखविस्तारमित्यर्थः । दिविस्पृशन्कायोयस्मिन् । अलुक्समासः । अदीर्घान्ह्रस्वापीवरास्थूलाग्रीवायस्मिन् । उरुविशालंवक्षस्थलंयस्मिन्तत्तथा । अल्पंमध्यमंउदरंयस्मिन् २१ चंद्रांशुवद्गौरैस्तनूरुहैलोमभिश्छुरितंव्याप्तं विष्वक्सर्वतः प्रसृताभुजास्तेषामनीकानिस्तोमाः तेषांशतानियस्मिन् नखान्येवायुधानियस्मिन् २२ दुरासदंप्राप्तुमशक्यंसर्वाणिचनिजानिचक्रादीनिइतराणिचशार्ङ्गादीनितएवायुधप्रवेकाः श्रेष्ठोत्तमास्तैर्विद्राविता दैत्यदानवायेनतद्रूपंमीमांसमानस्याग्रतः समुत्थितइतिपूर्वेणैवान्वयः २३ तदाविर्भावप्रयोजनविमर्शपूर्वकंतेनसहदैत्यस्ययुद्धमाह सप्तभिः । प्रायेणमहामायाविनाहरिणामेऽयमेवं भूतोवधः मृत्युहेतुःस्मृतः चिंतितः । तथाप्यनेनसमुद्यतेनवधेनकिंनकिंचिदपीत्येवंब्रुवन्नभ्यपतदित्यन्वयः २४ तदासोऽसुरोनृसिंहस्यतेजसिदीप्तौपतितः सन् अलक्षितः अदृष्टोभूत् । सत्त्वधामनिसत्त्वप्रकाशेहरौपतितस्यतमोमयस्यादर्शनंनतद्विचित्रंभवतितत्रहेतुः योहरिः पुरासृष्टेरादौप्रलयकालीनंतमः नुम्रहोऽपिबत्तस्मिन् २५ विक्रमंतं संमततः प्रहरंतम् । ( ताक्ष्यसुतोगरुडः ) २६ हस्तादुत्कलितः निसृतः तदाअमरादेवाः सर्वेधिष्ण्यपाः असाध्वमन्यंत । ह्रतान्योकांसिस्थानानियेषांते तद्वयाद्धनच्छदामेघांतरिताः संतः ( हेमारत ) २७

प्रतप्तचामीकरचंडलोचनंस्फुरत्सटाकेसरजृंभिताननम् ॥ करालदंष्ट्रंकरवालचंचलक्षुरांतजिह्वंभ्रुकुटीमुखोल्बणम् २० स्तब्धोर्ध्वकर्णंगिरिकंदराद्भुतव्यात्तास्यनासंहनुभेदभीषणम् ॥ दिविस्पृशत्कायमदीर्घपीवरग्रीवोरुवक्षस्स्थलमल्पमध्यमम् २१ चंद्रांशुगौरैश्छुरितंतनूरुहैर्विष्वग्भुजानीकशतंनखायुधम्
२२ दुरासदंसर्वनिजेतरायुधप्रवेकविद्रावितदैत्यदानवम् ॥ प्रायेणमेऽयंहरिणोरुमायिनावधःस्मृतोऽनेनसमुद्यतेनकिम् २३ एवंब्रुवंस्त्वभ्यपतद्गदायुधोनदन्नृसिंहंप्रतिदैत्यकुंजरः ॥ अलक्षितोऽग्नौपतितःपतंगमोयथानृसिंहौजसिसोऽसुरस्तदा २४ नतद्विचित्रंखलुसत्त्वधामनिस्वतेजसायोनुपुराऽपिबत्तमः ॥ ततोऽभिपद्याभ्यहनन्महासुरोरुषानृसिंहंगदयोरुवेगया २५ तंविक्रमंतंसगदंगदाधरोमहोरगंतार्क्ष्यसुतोयथाग्रहीत ॥ सतस्यहस्तोत्कलितस्तदाऽसुरोविक्रीडतोयद्वदहिर्गरुत्मतः २६ असाध्वमन्यंतहृतौकसोऽमराघनच्छदाभारतसर्वधिष्ण्यपाः ॥ तंमन्यमानोनिजवीर्यशंकितंयद्धस्तमुक्तोनृहरिंमहासुरः ॥ पुनस्तमासज्जतखड्गचर्मणीप्रगृह्यवेगेनजितश्रमोमृधे २७

एवंतस्यतर्कयतःसतःअग्रतःनृसिंहरूपःहरिःसमुत्थितः तदातप्तसुवर्णलोचनंकरालदंष्ट्रं गिरिकंदरवत्प्रसृतास्यनासं स्तब्धोर्ध्वकर्णं दिविस्पृशत्कायं नखायुधं २० २१ २२ ईदृशंनृसिंहंदृष्ट्वाआह अहोमहामायिनाहरिणाअयंममवधोपायःचिंतितः अस्तुतथाअनेनाकिम् २३ एवंब्रुवन्दैत्यकुंजरःतंअभ्यपतत् तदानृसिंहतेजसिअग्नौपतंगइवअदृष्टोभूत २४ ततोदैत्यःनृसिंहंगदयाअभ्यहनत् २५ तदैवनृहरिणागृहीतःसन् हस्तात्निसृत्य २६ खड्गचर्मणीप्रगृह्य वेगेनतंअभ्यपद्यत २७

यस्यहस्तात्स्वयंमुक्तः तंनृहरिस्स्ववीर्याच्छंकितंमन्यमानः खङ्गचर्मणीप्रगृह्यपुनस्तंआसन्नःअभ्यपद्यतेत्यन्वयः ( मृधेषुद्धविषयेजितश्रमःअस्फुरदेहइतियावत् ) २७ श्येनस्येववेगोय
स्यतंशतचंद्रवर्त्मभिः खड्गचर्ममार्गैः अच्छिद्रंयथाभवत्येवंउपर्यधश्चरंतम् । अट्टहासमेवाह । स्वरंतीव्रम् । उत्स्वनेनमहाशब्देनउल्बणंभयंकरं तद्भयेनहरेस्तेजसाचनिमीलितेअक्षिणी
यस्य २८ ग्रहणेदृष्टांतः । व्यालोयथाखुंमूषकम् । विदारणेदृष्टांतः अहिंगरुडइवेति । विष्वक्सर्वतः स्फुरंतं निःसरंतम् । ग्रहणेनातुरंविवशम् । इंद्रेणसहयुद्धेवज्रयुक्तेनकुलिशेननक्षता
त्वगपियस्य । द्वारिसभायांनांतर्नबहिः ऊरेऊरौनिपात्यनभूमौनचांबरे । नखैर्नठ्यसुभिरसुमद्भिर्वा । एवंदिवानक्तपरिहारायसंध्यायामितिद्रष्टव्यम् २९ दैत्यवधमुक्त्वातन्नृत्यवधमा
हद्वाभ्याम् । संरंभेण दुःप्रेक्षाणिकरालानिलोचनानियस्य । असृजोरक्तस्यलवैर्बिंदुभिः रक्ताः सिक्ताअतएवारुणाः केसरा आननंचयस्यसः । कइव । द्विपहत्यया गजवधेनहरिः सिंहो
यथा । एवंभूतस्तस्यानुचरान् अहन्नित्युत्तरेणान्वयः ३० नखांकुरैरुत्पाटितंहृत्सरोरुहंयस्यतम् । दोर्दंडानांयूथानियस्यसः । तमनुपंथायेषांतान् अन्यानपितत्पक्षपातिनइत्यर्थः ३१ दैत्य
वधव्यग्रस्यनृहरेराटोपमाहद्वाभ्याम् । सटाभिरवधूताः प्रकंपिताः परापतन्व्यशीर्यंत । तस्यदृष्ट्याविमुष्टंरोचिर्येषांते तिरस्कृतप्रभाः अभवन्निति शेषः । दिगिभादिग्गजाः ३२ तस्यस
टाभिरुत्क्षिप्तानिविमानानितैः संकुलाद्यौःभासतीप्रोत्सर्पतस्वस्थानात्प्रकर्षेणोदसर्पदित्यर्थः (तथाक्ष्माचप्रोत्सर्पत) ३३ स्वमृत्यैश्वर्यमाश्चर्यमिवमत्वाकौतूहलेनतस्यासनेउपविष्टंभयात्को
पिनवभाजनासेवत मलक्षितोद्वैरथःप्रतियोद्धायेन ३४ लोकत्रयस्यमस्तकज्वरंशिरोव्यथेवदुःसहम् । प्रहर्षस्यवेगेनउत्कलितानिविकसितानिआननानियासांताःसुरस्त्रियःनृहरिंववृषुः ३५

तंश्येनवेगंशतचंद्रवर्त्मभिश्चरंतमच्छिद्रमुपर्यधोहरिः॥ कृत्वाऽट्टहासंखरमुत्स्वनोल्बणंनिमीलिताक्षंजगृहेमहाजवः २८ विष्वक्स्फुरंतंग्रहणातुरंहरिर्व्यालोय
थाऽऽखुंकुलिशाक्षतत्वचम् ॥ द्वार्यूरआपात्यददारलीलयानखैर्यथाहिंगरुडोमहाविषम् २९ संरंभदुष्प्रेक्षकराललोचनोव्यात्ताननांतंविलिहन्स्वजिह्वया ॥
असृग्लवाक्तारुणकेसराननोयथांत्रमालीद्विपहत्ययाहरिः ३० नखांकुरोत्पाटितहृत्सरोरुहंविसृज्यतस्यानुचरानुदायुधान् ॥ अहन्समंतान्नखशस्त्रपार्ष्णि
भिर्दोर्दंडयूथोऽनुपथान्सहस्रशः ३१ सटावधूताजलदाःपरापतन्ग्रहाश्चतद्दृष्टिविमुष्टरोचिषः ॥ अंभोधयःश्वासहताविचुक्षुभुर्निर्ह्रादभीतादिगिभाविचुक्रु
शुः ३२ द्यौस्तत्सटोत्क्षिप्तविमानसंकुलाप्रोत्सर्पतक्ष्माचपदातिपीडिता ॥ शैलाःसमुत्पेतुरमुष्यरंहसाततेजसाखंककुभोनरेजिरे ३३ ततःसभायामुप
विष्टमुत्तमेनृपासनेसंभृततेजसंविभुम् ॥ अलक्षितद्वैरथमत्यमर्षणंप्रचंडवक्त्रंनबभाजकश्चन ३४ निशम्यलोकत्रयमस्तकज्वरंतमादिदैत्यंहरिणाहतंमृधे ॥
प्रहर्षवेगोत्कलिताननामुहुःप्रसूनवर्षैर्ववृषुःसुरस्त्रियः ३५

तदाहरिःअट्टहासंकृत्वायथाव्यालःआखुं गरुडःअहिं तथातंसभायांद्वारिऊरौनिपात्यतस्यहृदयंसंध्यायांनखैर्विददार २८ २९ ततः । संरंभदुःप्रेक्ष्यकराललोचनोव्यात्तान
नस्तंविलिहन्स्वजिह्वया ॥ असृग्लवाक्तारुणकेसराननो यथांत्रमालीद्विपहत्ययाहरिः तथाअशोभत ३० ततःमृतंतंविसृज्य उदायुधान् तस्यअनुचरान् नखश
स्त्रपार्ष्णिभिःअहन् ३१ तदातस्यसटाभिःकंपिताःमेघाःव्यशीर्यंत तद्दृष्ट्याग्रहाःनिष्प्रभाःअभवन् श्वासहताःसमुद्राःचुक्षुभुः ३२ तस्यरंहसाशैलाःउत्पेतुःततेजसाखंदिशः
नरेजिरे ३३ ततःसभायांनृपासनेउपविष्टंविभुं भयात् कोपिनासेवत ३४ तदाहरिणा त्रिलोकशत्रुं हतं दृष्ट्वा सुरस्त्रियः पुष्पैः हरिं ववृषुः ३५

नाकिनांदेवानांविमानावलिभिः । सुराणामानकाः पटहाःतेजघ्निरेवादिताः । स्त्रियोप्सरसोननृतुः गंधर्वमुख्याजगुः ३६ ३७ गंधर्वाश्चअप्सरसश्चचारणाश्चेत्यर्थः ( हेतात ) ३८ नर शार्दूलंपुरुषोत्तमं ( नातिदूरचराः किंचिद्दूरस्थिताः ) ३९ ब्रह्मादयोनृसिंहस्यशंकयाऽऽकुलचेतसः । अमराअस्तुवन्सप्तदशश्लोकैः पृथक्पृथक् ॥ अनंतायअनंतंप्रसादयितुंनतोस्मि । अनंतत्वेहेतुः दुरंताः शक्तयोयस्य । तत्कुतः विचित्राणिवीर्याणिप्रभावायस्य । तात्किमर्थं । पवित्राणिशोधकानिकर्माणियस्य । विचित्रवीर्यत्वमेवाह । विश्वस्येति । संदधतेसम्यक्कुर्वते । एवमपिअव्ययात्मनेअप्रच्युतस्वरूपाय ४० रुद्रस्तुतत्कोपकालाभिज्ञोनायंकोपावसरइतितंप्रार्थयते । ( सहस्रयुगांतस्तवकोपस्यकालः ) कोपायोग्यश्चायं ( दैत्य ) इत्याह । अल्पकः अत्यल्पः । अतःकोपानिवृत्त्याप्रह्लादंमाहिंसीरित्याह । तत्सुतमिति । यद्वा । अकालेप्ययंकोपोऽस्यभक्तस्यरक्षणार्थमिति चेत्तर्हीदानींकोपंत्यक्त्वेमंपाहीत्यर्थः ४१ इंद्रस्तु नास्माकंहविर्भागादिलाभः पुरुषार्थः किंतुत्वत्परिचर्यैव । भवताएनरनेनसंरंभेणस्वकार्यमेवसाधितम् । तस्यचसिद्धत्वादुपसंहरनंक्रोधमित्याशयेनाह । हेपरम नोस्माकंत्रायतारक्षता भवतास्वीयाएवभागादैत्यात्प्रत्याहृताः अंतर्यामिणस्तवैवयज्ञेषुभोक्तृत्वात् । अस्मदीयंहृदयकमलंचत्वद्गृहमेव । एतावत्पर्यंतंभयहेतुत्वेनास्मत्स्मृतिपथेनित्यंस्थितेनदैत्येनाक्रांतंव्याप्तंसत्त्वत्प्रत्यबोधि । भयापकरणेन विकाशंनीतम् । तवत्रैलोक्यैश्वर्यसाधनार्थमयमुद्यमइतिचेत्तत्राह । कालग्रस्तमिति । इदंत्रैलोक्यम् । तेत्वाम् । हेनारसिंहनरसिंहाकाराभ्यामाविर्भूत । अपरैः स्वर्गादिपदैः ४२

तदाविमानावलिभिर्नभस्तलंदिदृक्षतांसंकुलमासनाकिनाम् ॥ सुरानकादुंदुभयोथजघ्निरेगंधर्वमुख्याननृतुर्जगुःस्त्रियः ३६ तत्रोपव्रज्यविबुधाब्रह्मेंद्रगिरिशादयः ॥ ऋषयःपितरःसिद्धाविद्याधरमहोरगाः ३७ मनवःप्रजानांपतयोगंधर्वाप्सरचारणाः ॥ यक्षाःकिंपुरुषास्तातवेतालाःसिद्धकिन्नराः ॥ तेविष्णुपार्षदाःसर्वेसुनंदकुमुदादयः ३८ मूर्ध्निबद्धांजलिपुटाआसीनंतीव्रतेजसम् ॥ ईडिरेनरशार्दूलंनातिदूरचराःपृथक् ३९ ॥ श्रीब्रह्मोवाच ॥ नतोस्म्यनंतायदुरंतशक्तयेविचित्रवीर्यायपवित्रकर्मणे ॥ विश्वस्यसर्गस्थितिसंयमान्गुणैःस्वलीलयासंदधतेऽव्ययात्मने ४० ॥ श्रीरुद्रउवाच ॥ कोपकालोयुगांतस्तेहतोयमसुरोऽल्पकः ॥ तत्सुतंपाह्युपसृतंभक्तंतेभक्तवत्सल ४१ ॥ इंद्रउवाच ॥ प्रत्यानीताःपरमभवतात्रायतानःस्वभागादैत्याक्रांतंहृदयकमलंत्वद्गृहंप्रत्यबोधि ॥ कालग्रस्तंकियदिदमहोनाथशुश्रूषतांतेमुक्तिस्तेषांनहिबहुमतानारसिंहापरैःकिम् ४२

विमानावलिभिःआकाशंसंकुलंआस देवदुंदुभयोनेदुः अप्सरसःननृतुः गंधर्वाःजगुः ३६ तत्रब्रह्मेंद्रगिरिशादयःऋषयःपितरःसिद्धाःविद्याधराःमहोरगाः ३७ गंधर्वाप्सरसः मनवःप्रजापतयःचारणाःयक्षाःकिंपुरुषादयःविष्णुपार्षदाश्च मूर्ध्निबद्धांजलिपुटाःसंतःसिंहासनेआसीनंतंउपव्रज्यईडिरे ३८ ३९ ब्रह्मोवाच ॥ हेअनंत तेदुरंतशक्तयेनमोस्तु ४० रुद्रउवाच ॥ हेभगवन्अयंअल्पःअसुरोहतःइतउत्तरंकोपस्यकारणंनास्ति अतःएनंउपसृतंतत्सुतंपाहिइत्यादि ४१ इंद्रउवाच ॥ हेनृहरे अस्मान्रक्षताभवतास्वभागाःदैत्यात् प्रत्याहृताः इतउपरि क्रोधंउपसंहर ४२

ऋषयस्तपःप्रवर्तनेनास्माकंमहाननुग्रहः कृतइत्याहुः । त्वंनोयदात्थ(उपदिष्टवान्)परमंघ्यामलक्षणंतपः परमत्वेहेतुः आत्मनस्तवतेजः प्रभावरूपम् तदेवाहुः येनतपसाआत्मनिलीनमिदंविश्वंससर्जसृष्टवानसि । तत्अमुनादैत्येनविप्रलुप्तंकुंठितम् । तत्हेशरण्यपालअद्यरक्षार्थंगृहीतेनानेनवपुषापुनरपितपः कुरुतेत्यन्वमंस्थाअनुज्ञातवानसि तस्मैतेनमइत्युत्तरश्लोकचतुर्थपादस्यानुषंगः ४३ पितरस्तुश्राद्धोद्धरणेनपरमोपकारिणंप्रणमंति । श्राद्धानिश्रद्धायुक्तानिपिंडादीनिनोऽस्मभ्यंपुत्रैर्दत्तानिप्रसभंबलात्अयमविकृत्यबुभुजे । किंचतीर्थस्नानसमयेदत्तंतिलोदकमप्यपिबत्तमनितस्योदरात्यआच्छेत्आहृतवान् । कथंभूतात् । नखैर्विदीर्णात्वपायस्यतस्मात् । वपाविदारणस्यतद्गतपिंडोद्धरणमेवफलमितिभावः ४४ योगसिद्धांगतिअणिमादिसामर्थ्यम् । तस्मैतुभ्यंतंत्वामुद्दिश्य ४५ विद्यामंतर्धानादिलक्षणाम् । अनुराद्धांसंप्राप्तांसंख्येयुद्धे ४६ रत्नानिफणासुस्थितानि । स्त्रीरत्नानिचउत्तमाःस्त्रियः । आसांस्त्रीणांदत्तआनंदोयेनतत्संबोधनम् । पाठांतरेअस्माकंदत्तआनंदोयेनेति ४७ नृसिंहेनावलोकिताः संतोमूर्ध्निबद्धांजलयोमनवः प्रोचुः । मनवोवयंधर्मपालकाः परिभूताः सेतवोवर्णाश्रमधर्ममर्यादायेषांते अनुशाधिअनुशिक्षय ४८ प्रजापतयोपितद्वलोकिताः प्रोचुः । हेपरेशतेत्वयाऽभिसृष्टाः प्रजेशावयंयेननिषिद्धाः संतः प्रजानसृजामःसएषभिन्नवक्षोयस्यसःनुनिश्चितंमृतःशेतेअतः परं प्रजाःस्रक्ष्याम इतिद्रष्ट्यंतआहुः हेसत्त्वमूर्तेतवायमवतारोजगतांमंगलम् ४९

ऋषयऊचुः ॥ त्वंनस्तपःपरममात्थयदात्मतेजोयेनेदमादिपुरुषात्मगतंससर्ज ॥ तद्विप्रलुप्तममुनाद्यशरण्यपालरक्षागृहीतवपुषापुनरन्वमंस्थाः ४३ ॥ पितरऊचुः ॥ श्राद्धानिनोधिबुभुजेप्रसभंतनूजैर्दत्तानितीर्थसमयेप्यपिबत्तिलांबु ॥ तस्योदरान्नखविदीर्णवपाद्यआर्च्छत्तस्मैनमोनृहरयेऽखिलधर्मगोप्त्रे ४४ सिद्धाऊचुः ॥ योनोगतिंयोगसिद्धामसाधुरहारषीद्योगतपोबलेन ॥ नानादर्पंतंनखैर्निर्ददारतस्मैतुभ्यंप्रणताःस्मोनृसिंह ४५ ॥ विद्याधराऊचुः ॥ विद्यांपृथक्धारणयानुराद्धांन्यषेधदज्ञोबलवीर्यदृप्तः ॥ सयेनसंख्येपशुवद्धतस्तंमायानृसिंहंप्रणताःस्मनित्यम् ॥ ४६ ॥ नागाऊचुः ॥ येनपापेनरत्नानिस्त्रीरत्नानिहृतानिनः ॥ तद्वक्षःपाटनेनासांदत्तानंदनमोस्तुते ४७ ॥ मनवऊचुः ॥ मनवोवयंतवनिदेशकारिणोदितिजेनदेवपरिभूतसेतवः ॥ भवताखलःसउपसंहृतःप्रभोकरवामतेकिमनुशाधिकिंकरान् ४८ ॥ प्रजापतयऊचुः । प्रजेशावयंतेपरेशाभिसृष्टानयेनप्रजावैसृजामोनिषिद्धाः ॥ सएषत्वयाभिन्नवक्षानुशेतेजगन्मंगलंसत्वमूर्तेऽवतारः ४९

ऋषयऊचुः ॥ हेनृहरेत्वंनःयत्तपःआत्थतत्येनविकुंठितंतंदैत्यंहत्वापुनरपितपःकुरुतेतिनःअनुज्ञातवान्असितस्मैतेनमः ४३ पितरऊचुः ॥ नःपुत्रैर्दत्तानिश्राद्धानियःबुभुजेतस्यदैत्यस्यउदरात्तानिपिंडोदकानियःत्वंआहृतवान्तस्मैतेनमः ४४ सिद्धाऊचुः ॥ हेनृसिंहयःनःगतिंअहार्षीत्तंदैत्यंभवान्नखैर्विददारतस्मैतेनमः ४५ विद्याधराऊचुः ॥ यःनःविद्यांन्यषेधत् सःदैत्यःभवतायुद्धेहतःतंत्वांप्रणताःस्म ४६ नागाऊचुः ॥ येननःरत्नानिस्त्रीरत्नानिचहृतानितद्वक्षःपाटनेनासांदत्तानंदनमोस्तुते ४७ मनवऊचुः ॥ तवआज्ञाकारिणोवयंयेनपरिभूताःसःत्वयाहतःहेप्रभोनःशाधि ४८ प्रजापतयऊचुः ॥ हेसत्त्वमूर्तेयेनवयंप्रजासर्गेनिषिद्धाःसदैत्यःत्वयाहतःसन्शेते अतःपरंप्रजाःसृजामः ४९

गंधर्वा अपितद्वललोकिताःप्रोचुः। हेविभोवयंतैत्वदीयानटा नर्तकाःनाट्येनृत्येगायकाश्च। येनस्वाधीनाःकृताः कथंभूतेनवीर्यशौर्यबलंशक्तिःताभ्यामोजःप्रभावोयस्यतेन । इमांदशांमृतिम् उचितमेवदित्याहुःकिमिति ५० भवापवर्गसंसारनिवर्तकम् । आश्रयणेहेतुःयद्यस्मात्साधूनांहृदिभयजनकत्वेनशेतेतिष्ठतीतितथा । सएषोसुरस्त्वयासमापितःअंतंनीतः ५१ मनोज्ञैः कर्मभिःअनुचरेषुमुख्याः। पंचतांमृत्युं हेपंचविंशचतुर्विंशतितत्त्वनियामक ५२ किंपुरुषास्तुत्वांस्तोतुंकेवलंनराकाइत्याहुः। वयंकिंपुरुषास्तुच्छप्राणिनःत्वंतु महानद्भुतानुभावःपुरुषः। नन्वयं महान्दैत्योहतइतिकिंनवर्ण्यतइत्याशंक्यकियदेतदित्याहुःअयमिति ५३ सत्रेषुयज्ञेषु तेत्वयाहतःएतादिष्ट्याभद्रंकृतम् ५४ अमुनादितिजेन विष्टिमूल्यरहितंकर्मअनुनिरंतरंकारिताःअतः परंनःविभवायसमृद्धयेभव ५५ नोऽस्माकंभक्तानांशरणदआश्रयप्रद सर्वेषांलोकानांशर्ममंगलमेतदद्भुतंरूपमद्यैवदृष्टंनतुपूर्वम् । विधिकरःकिंकरः ५६ ॥ ॥ इतिश्रीभागवतेमहापुराणे सप्तमस्कंधेटीकायांअष्टमोऽध्यायः ॥ ८ ॥ ॥ ७ ॥ ॥ ७ ॥ ॥ ७ ॥ ॥ ७ ॥ ॥ ७ ॥ ॥ ७ ॥

॥ गंधर्वाऊचुः ॥ वयंविभोतेनटनाट्यगायकायेनात्मसाद्वीर्यबलौजसाकृताः ॥ सएषनीतोभवतादशामिमांकिमुत्पथस्थःकुशलायकल्पते ५० ॥ चारणाऊचुः ॥ हरेतवांघ्रिपंकजंभवापवर्गमाश्रिताः ॥ यदेषसाधुहृच्छयस्त्वयाऽसुरःसमापितः ५१ ॥ यक्षाऊचुः ॥ वयमनुचरमुख्याःकर्मभिस्तेमनोज्ञैस्तइहदितिसुतेनप्रापितावाहकत्वम् ॥ सतुजनपरितापंतत्कृतंजानतातेनरहरउपनीतःपंचतांपंचविंश ५२ ॥ किंपुरुषाऊचुः ॥ वयंकिंपुरुषास्त्वंतुमहापुरुषईश्वरः ॥ अयंकुपुरुषोनष्टोधिक्कृतःसाधुभिर्यदा ५३ ॥ वैतालिकाऊचुः ॥ सभासुसत्रेषुतवामलंयशोगीत्वासपर्यांमहतींलभामहे ॥ यस्तांव्यनैषीद्भृशमेषदुर्जनोदिष्ट्याहतस्तेभगवन्यथाऽऽमयः ५४ ॥ किन्नराऊचुः ॥ वयमीशकिन्नरगणास्तवानुगादितिजेनविष्टिममुनाऽनुकारिताः ॥ भवताहरेसवृजिनोऽवसादितोनरसिंहनाथविभवायनोभव ५५ ॥ विष्णुपार्षदाऊचुः ॥ अद्यैतद्धरिनररूपमद्भुतंतेदृष्टंनःशरणदसर्वलोकशर्म ॥ सोयंतेविधिकरईशविप्रशप्तस्तस्येदंनिधनमनुग्रहायविद्मः ५६ ॥ इतिश्रीभागवतेमहापुराणेसप्तमस्कंधेअष्टमोऽध्यायः ॥ ८ ॥ ॥ ७ ॥ ॥ ७ ॥ ॥ ७ ॥ ॥

गंधर्वाऊचुः ॥ हेविभोत्वदीयाःवयंयेनस्ववशेकृताःसःत्वयामृतिंनीतःयोग्यमिदम् ५० ॥ चारणाऊचुः ॥ हेहरेयतः एषःदैत्यःत्वयाहतःअतःवयंत्वत्पदंप्राप्ताः ५१ ॥ यक्षाऊचुः ॥ हेपंचविंश वयंदैत्येनवाहकत्वंप्रापिताः सः त्वयामृत्युंनीतः ५२ ॥ किंपुरुषाऊचुः ॥ वयंकिंपुरुषाःत्वंईश्वरःत्वयाअयंकुपुरुषोहतः ५३ ॥ वैतालिकाऊचुः ॥ हेभगवन्वयंतवयशोगीत्वासंपदंलभामहेतांसंपदंयःव्यनैषीत्सःत्वयाहतःएतादिष्ट्या ५४ ॥ किन्नराऊचुः ॥ ॥ हेहरेतवानुगाःवयं दितिजेनविष्टिंकारिताःसः त्वयाहतः हेनृसिंह त्वंनः समृद्धयेभव ५५ ॥ विष्णुपार्षदाऊचुः॥ हेभगवन् लोकानांमंगलंइदंअद्भुतंनृसिंहरूपं अद्यैवदृष्टम् नतुपूर्वं हेईश सोयंतेकिंकरःविप्रशप्तःतस्येदं निधनंअनुग्रहाय विद्मः ॥ ५६ ॥ इतिसप्तमेअष्टमः ॥ ८ ॥ ॥ ७ ॥ ॥ ७ ॥ ॥ ७ ॥ ॥ ७ ॥ ॥ ७ ॥

एवमेवप्रामीत्वाचोदितोऽसुरबालकः । कोपंप्रशमयन्नस्तौन्नृसिंहमतिभीषणम् ॥ १ ॥ “उग्रोऽप्यनुग्रएवायंस्वभक्तानांनृकेसरी । केसरीवस्वपोतानामन्येषामुग्रविग्रहः”इत्याशयमोक्षप कामुकोपित्वमाहुः एवमितिसप्तभिः । एवंदूरतएवस्थित्वास्तुवंतः । मन्युनासंरंभआवेशोयस्य ( अतएवदुरासदं ) तमुपगंतुंनाशक्नुवन् १ महदद्भुतंरूपंदृष्ट्वाशंकितासतीतंनोपजगाम । अद्भुतत्वेहेतुःअदृष्टेति २ उपेहिउपगच्छ ३ ४ कालपवाहिस्तस्माद्विस्रस्ताधीर्येषांतेषांकृतममयंयेनतत् ५ तस्यकरस्पर्शेनधुतंनिरस्तमखिलमशुभंयस्य । सपदितत्क्षणमेवअभिव्यक्तं अपरोक्षीभूतंपरात्मदर्शनंब्रह्मज्ञानंयस्य । निर्वृतःसन्हृदिदधौ । हृष्यंतीरोमांचितातनुर्यस्य । क्लिन्नमार्द्रंहृत्हृदयंयस्य । अश्रूणिलोचनयोर्यस्य । परमपुरुषार्थतयादधौनतुसाधनत्वे नेत्यर्थः ६ सुसमाहितत्वमेवाह । तस्मिन्नेवन्यस्तेहृदयमीक्षणंचयेनेति ७ । स्वस्मिन्निवसमस्तेषुतत्कृपामृतवृष्टये । प्रह्लादःस्तौतिसत्पद्यैर्द्विचत्वारिंशताहरिम् ॥ १ ॥ तत्रतावदात्मनो भगवत्स्तुतावनधिकारमिवाशंक्याधिकारंसंभावयन्नाह । ब्रह्मादयइतिपंचभिः । मुनयोमननशीलाःसिद्धाज्ञानिनोपिकथंभूताः सत्त्वएवैकस्मिन्स्तानोविस्तरोयस्याःसामतिर्येषांतथावि धाअपिवचसांप्रवाहैरपितथाबहुभिर्वक्ष्यमाणैः ( धनाभिजनादि- ) गुणैरपि । ( यद्वा । कथंभूतैःप्रवाहैः । पुरवोभगवद्गुणायेषुतैरपि ) । यमाराधयितुंअधुनापिनपप्रुःनपूर्णाः । नशक्ता इत्यर्थः । सहरिर्मेकथंतोष्टुंतोषंप्राप्तुमर्हति । तत्रहेतुःउग्रजातेःउग्राघोराआसुरीजातिर्यस्य ८

॥ श्रीनारदउवाच ॥ एवंसुरादयःसर्वेब्रह्मरुद्रपुरःसराः ॥ नोपैतुमशकन्मन्युसंरंभंसुदुरासदम् १ साक्षाच्छ्रीःप्रेषितादेवैर्दृष्ट्वातन्महदद्भुतम् ॥ अदृष्टा श्रुतपूर्वत्वात्सानोपेयायशंकिता २ प्रह्लादंप्रेषयामासब्रह्माऽवस्थितमंतिके ॥ तातप्रशमयोपेहिस्वपित्रेकुपितंप्रभुम् ३ तथेतिशनकैराजन्महाभागवतो ऽर्भकः ॥ उपेत्यभुविकायेननाममविधृतांजलिः ४ स्वपादमूलेपतितंतमर्भकंविलोक्यदेवःकृपयापरिप्लुतः ॥ उत्थाप्यतच्छीर्ष्ण्यदधात्कराम्बुजंकालाहि वित्रस्तधियांकृतामयम् ५ सतत्करस्पर्शधुताखिलाशुभःसपद्यभिव्यक्तपरात्मदर्शनः ॥ तत्पादपद्मंहृदिनिर्वृतोदधौहृष्यत्तनुःक्लिन्नहृदश्रुलोचनः ६ अ स्तौषीद्धरिमेकाग्रमनसासुसमाहितः ॥ प्रेमगद्गदयावाचातन्न्यस्तहृदयेक्षणः ७ ॥ ॥ प्रह्लादउवाच ॥ ॥ ब्रह्मादयःसुरगणामुनयोऽथसिद्धाःसत्त्वैक तानमतयोवचसांप्रवाहैः ॥ नाराधितुंपुरुगुणैरधुनापिपप्रुःकिंतोष्टुमर्हतिसमेहरिरुग्रजातेः ८

नारदउवाच ॥ एवंदूरतःस्थित्वास्तुवंतः ब्रह्माद्याःदेवाःतत्समीपेगंतुंनअशाकन् १ तदादेवैःप्रेषिताश्रीःतत्अद्भुतंरूपंदृष्ट्वा अदृष्टाश्रुतपूर्वत्वात्शंकितासतीतत्समीपंनजगाम २ तदाब्रह्मासमीपेस्थितंप्रह्लादंआह हेतातस्वपित्रेकुपितंप्रभुंप्रशमयइत्युक्त्वातंप्रेषयामास ३ ततःप्रह्लादःतथेत्युक्त्वाशनकैःउपेत्यविधृतांजलिःसन्भुविकायेननननाम ४ देवः स्वपादमूलपतितंअर्भकंविलोक्यकृपयापरिप्लुतः तंउत्थाप्यतच्छीर्ष्णिकरांबुजंदधौ ५ ततःभगवत्करस्पर्शात्विधुताखिलाशुभःतत्पादपद्मंहृदिदधन्एकाग्रमनसाहरिंअस्तौ त् ६ ७ ॥ प्रह्लादउवाच ॥ ब्रह्मादयः सुरगणाः मुनयः सिद्धाः वचसांप्रवाहैः आराधितुंनशकाः सः हरिः उग्रजातेः मम कथंसंतोषं प्राप्तुं अर्हति ८

एवंहरितोषणेस्वस्यायोग्यतामाशंक्ययोग्यतांसंभावयतिमन्यइतिद्वाभ्याम् अभिजनःसत्कुलेजन्म रूपंसौंदर्यं श्रुतंपांडित्यम् ओजःइंद्रियनैपुण्यंतेजःकांतिः प्रभावःप्रतापः पौरुषमुद्यमः बुद्धिःप्रज्ञा योगोष्टांगः । एतेधनादयोद्वादशापिगुणाःपरमस्यपुंसः आराधनायनभवंति । हियतःकेवलयाभक्त्यैवसतुगजेंद्रायतुष्टोभवत् ९ एवंभक्त्यैवकेवलयाहरितोषःसंभवतीत्युक्तं । इदानींभक्तिविनानान्यत्किंचित्तोषहेतुरित्याह । विप्रादिति । पूर्वोक्ताधनादयोद्विषड्द्वादशगुणास्तैर्युक्ताद्विप्रादपिश्वपचंवरिष्ठंमन्ये । यद्वा सनत्सुजातोक्ताद्वादशज्ञानादयोगुणाद्रष्टव्याः तदुक्तं' ज्ञानंचसत्यंचदमःश्रुतंचह्यमात्सर्यंन्हीस्तितिक्षाऽनसूया । यज्ञश्चदानंचधृतिःशमश्च महाव्रताद्वादशब्राह्मणस्य' 'शमोदमस्तपःशौचंक्षांत्यार्जवविरक्तताः । ज्ञानविज्ञानसंतोषाः सत्यास्तिक्ये द्विषड्गुणाः' इति । कथंभूताद्विप्रात् । अरविंदनाभस्यपादारविंदाद्विमुखात् । कथंभूतंश्वपचम् । तस्मिन्अरविंदनाभेअर्पितामनआदयोयेनतम् । ईहितंकर्म । वरिष्ठत्वे हेतुः । सएवंभूतःश्वपचःसर्वकुलंपुनाति । भूरिर्मानोगर्वोयस्यसतुविप्रआत्मानमपिनपुनातिकुतःकुलम् । यतोभक्तिहीनस्यैतेगुणागर्वायैवभवंतिनतुश्रेयसेअतोहीनइतिभावः १० तर्हिकिंव नाद्यर्पणेनसंमानंप्राकृतइवभगवानपेक्षतेनेत्याह । नैवेति । अयंप्रभुरीश्वरः । अविदुषोऽल्पकाज्जनात्मानंपूजामात्मनोऽर्थंनवृणीतेनेच्छति । यतोनिजलाभेनैवपूर्णःतर्हिकिंपूजांनेच्छत्येव । तत्राह । करुणःकृपालुः । अतोवृणीते । तत्रहेतुःयदिति यंयंमानम् । यद्वायद्यस्मात्यदयंधनादिनाभगवतेमानंविदधीततदेवात्मनेभवतिनान्यत्यथामुखेकृतैवातिलकादिश्रीःशोभाप्रतिबिंबस्यभवतिनतुसाक्षात्तस्यैवकर्तुंशक्यतेतद्वत् ११ यस्मादेवंभगवान्भक्त्यैवतुष्यतितस्मादहंनीचोपिविगतविक्लवःगतशंकःसन्ईश्वरस्यमहिमहिमानंसर्वप्रयत्नेनस्वमनीषानुसारेणानुवर्णयामि । अजानतोपिस्तुतिकरणेहेतुमाह । येनैवमहिम्नाऽनुवर्णितेनअविद्ययासंसारमनुप्रविष्टःपुमान्पूयेतशुध्येत्तन्महि । अन्यस्यतथाशोधकस्याभावादित्यर्थ १२ तदेवमात्मनःस्तुतावनधिकारंपरिहृत्येदानींतंस्तुवन्कोपोपसंहारंप्रार्थयतेसर्वेहीतिद्वाभ्याम् । भोईशअमीउद्विजंतोबिभ्यतःसर्वेब्रह्मादयःसत्त्वमूर्तेस्तवविधिकराःत्वन्नियोगकर्तारोभक्ता एवनान्ये । नचवयमसुराइववैरभावेनैतेभक्ताःकिंतुश्रद्धयैव । तवरुचिरैरवतारैर्विविधंक्रीडनंअस्यविश्वस्यक्षेमादिप्रयोजनायनतुभयोत्पादनाय १३

मन्येधनाभिजनरूपतपःश्रुतौजस्तेजःप्रभावबलपौरुषबुद्धियोगाः ॥ नाराधनायहिभवंतिपरस्यपुंसोभक्त्यातुतोषभगवान्गजयूथपाय ९ विप्राद्द्विषड्गुणयुतादरविंदनाभपादारविंदविमुखात्श्वपचंवरिष्ठम् ॥ मन्येतदर्पितमनोवचनेहितार्थप्राणंपुनातिसकुलंनतुभूरिमानः १० नैवात्मनःप्रभुरयंनिजलाभपूर्णोमानंजनादविदुषःकरुणोवृणीते ॥ यद्यज्जनोभगवतेविदधीतमानंतच्चात्मनेप्रतिमुखस्ययथामुखश्रीः ११ तस्मादहंविगतविक्लवईश्वरस्यसर्वात्मनामहिगृणामियथामनीषम् ॥ नीचोऽजयागुणविसर्गमनुप्रविष्टःपूयेतयेनहिपुमाननुवर्णितेन १२ सर्वेह्यमीविधिकरास्तवसत्त्वधाम्नोब्रह्मादयोवयमिवेशनचोद्विजंतः ॥ क्षेमायभूतयउतात्मसुखायचास्याविक्रीडितंभगवतोरुचिरावतारैः १३

किंच धनम् सत्कुलेजन्म सौंदर्यं तपः पांडित्यं इंद्रियनैपुण्यं कांतिः प्रतापः शारीरंबलं उद्यमः प्रज्ञा अष्टांगयोगः एतेद्वादशापिगुणाः ईश्वरस्य आराधनाय नभवंतियतः केवलयाभक्त्यैवहरिः गजेंद्राय तुष्टोऽभवत् ९ एतैर्द्वादशगुणैर्युक्तादपिनारायणपादारविंदविमुखात्विप्रात्श्वपचंभक्तियुक्तंवरिष्ठंमन्ये यतः सः सर्वकुलंपुनाति विप्रःआत्मानमपिन अतोहीनः१० ११ किंच अहंनीचोपियथामति ईश्वरस्यमहिमानंवर्णयामि येनपुमान्पूयेत१२ हेनृसिंह सर्वेअमीब्रह्माद्याः उद्विजंतः तवभक्ताः संति नचवयमिववैरभावेन किंतुश्रद्धया तेरुचिरावतारैः क्रीडा विश्वस्यक्षेमाद्यर्थम् नतुभयोत्पादनाय १३

तत्तस्मादेषांभयपरिहाराय मन्युंक्रोधंयच्छउपसंहर । यदर्थेअयंमन्युः सचासुरः साधूनांसंतोपार्थंअद्यहतः अतःपरंक्रोधेनकार्याभावात्तंनियच्छ । नन्वन्यपांवधेनसाधुःकिंमोदेततत्राह । वृश्चिकादेः परोपद्रवकारिणोऽन्यतएवप्रजातयाहत्यावधेनतस्यैवतद्वदंजातामितिसाधुरपिमोदेतैव । तर्हिबहूनांसुखावहत्वादमुंक्रोधंनत्यजामीतिचेत्तत्राह । लोकाश्चनिर्वृतिं ( सुखं ) इताःप्राप्ताः संतः प्रतियंतिक्रोधोपसंहारंप्रतीक्षंते । तर्हिजनानांपुनर्भयाभावायमन्युंधारयामीतिचेत्तत्राह । रूपमिति । विभयायभयनिवृत्त्यै । एतद्रूपस्मरणादेवभयनिवृत्तेर्नमन्युधारणेनकृत्यमस्तीत्यर्थः १४ त्वंचेद्बिभेषितर्हित्यजामीतिचेत्तत्राह । नाहमिति । भोअजिततेअस्माद्रूपात् अहंनाबिभेमि । कथंभूतात् । आस्यंचजिह्वाचअर्कसदृशनेत्राणिचभृकुटीनांरभसआटोपश्चउग्रादंष्ट्राश्चएतानिभतिभयानकानियस्मिन्तस्मात् । आंत्रमयःस्रजोयस्मिन्तत् आंत्रस्रक् तस्मात् क्षतजाक्ताः केसरायस्मिन् । शंकुवदुन्नतौस्तब्धौकर्णौयस्मिन्तच्चतच्चतस्मात् । निर्ह्रादेनभीतादिगिभायस्मात्तस्मात् । अरीन्भिदंतीतिअरिभिंदि तानिनखाग्राणियत्र । एवंभूतादपितेरूपादहंनाबिभेमीति १५ महद्भयंतत्त्वन्यदस्तीत्याह । त्रस्तोस्मीति । दुःसहंयदुग्रंसंसारचक्रंतत्रकदनंदुःखंतस्मादहंत्रस्तोस्मि । तत्रचग्रसतांहिंस्राणांमध्येस्वकर्मभिः बद्धः सन् प्रणीतः निःक्षिप्तोस्मि । हेकृपणवत्सलहेउशत्तमकदानुत्वंप्रीतःसन् अपवर्गभूतंचशरणंशरणंतवांघ्रिमूलंतत्प्रतिह्वयसेमाम् ह्वयसि १६ दास्येसतिमत्प्रीतिरितिचेत्तर्हिनानायोनिषुक्लिश्यमानस्यममदास्यज्ञानाभावात्त्वमेवतदुपदिशेतिप्रार्थयते । यस्मात्प्रियैरप्रियैश्चवियोगसंयोगाभ्यांजन्मयस्यतेनशोकाग्निनासकलयोनिषुदह्यमानोस्मि । दुःखस्यप्रतीकारः कार्यइतिचेत्तत्राह । दुःखस्यौषधंप्रतीकारः तदपि दुःखमेव । एवमपिअतद्धियादेहाद्यभिमानेनमुह्यामिअतः हेभूमन्प्रभोमेतवदास्यंरूपयोगंनिस्तारोपायंवद ( अत्रसयोगः सहयोगः संयोगइत्यर्थः ) १७ ननुदास्ययोगेनप्रवृत्तस्यापितदंतरायभूतानांपूर्वोक्तनानादुःखानां कुतः परिहारस्तत्राह । सोहंत्वद्दासःसन् भोनृसिंह तवलीलाकथाअनुगृणन्दुर्गाणिमहादुःखानि अंजसा तितर्मितरामि नमणयिष्यामीत्यर्थः । तत्रहेतुः । गुणैः रागादिभिर्विश्लेषेणप्रमुक्तःसन् । तत्कुतः । तेपदयुगमेवआलयोयेषांभक्तानांवएवहंसाज्ञानिनःतेषांसंगोयस्यममसोहम् । कथंभूतस्यकथास्तत्राह । प्रियस्येत्यादि । कुतोज्ञाताः । विरिंच्येनगीताः । तत्संप्रदायप्रवृत्ताः । तथाचाथर्वणीश्रुतिः । 'देवाहवैप्रजापतिमब्रुवन्'इत्यादि । दास्येप्रवृत्तस्यभगवदनुग्रहेणसत्संगः ततोवीतरागतयाभगवद्गुणानुवर्णनम् । ततश्चदुःखानभिवःस्यादितिवाक्यार्थः १८

तद्यच्छमन्युमसुरश्चहतस्त्वयाद्यमोदेतसाधुरपिवृश्चिकसर्पहत्या ॥ लोकाश्चनिर्वृतिमिताःप्रतियंतिसर्वेरूपंनृसिंहविभयायजनाःस्मरंति १४ नाहंबिभेम्यजिततेतिभयानकास्यजिह्वार्कनेत्रभृकुटीरभसोग्रदंष्ट्रात् ॥ आंत्रस्रजःक्षतजकेसरशंकुकर्णान्निर्ह्रादभीतदिगिभादरिभिन्नखाग्रात् १५ त्रस्तोस्म्यहंकृपणवत्सलदुःसहोग्रसंसारचक्रकदनाद्ग्रसतांप्रणीतः ॥ बद्धःस्वकर्मभिरुशत्तमतेऽघ्रिमूलंप्रीतोऽपवर्गशरणंह्वयसेकदानु १६ यस्मात्प्रियाप्रियवियोगसयोगजन्मशोकाग्निनासकलयोनिषुदह्यमानः ॥ दुःखौषधंतदपिदुःखमतद्धियाऽहंभूमन्भ्रमामिवदमेतवदास्ययोगम् १७ सोहंप्रियस्यसुहृदःपरदेवतायालीलाकथास्तवनृसिंहविरिंच्यगीताः ॥ अंजस्तितर्म्यनुगृणन्गुणविप्रमुक्तोदुर्गाणितेपदयुगालयहंससंगः १८

अतः मन्युंनियच्छ यदर्थंअयंमन्युः सचअसुरः अधुनैवहतः लोकाश्चसुखंप्राप्ताःसंतः क्रोधोपसंहारंप्रतीक्षंते १४ सर्वेएतद्रूपंभयनिवृत्त्यर्थंस्मरंति हे अजिततेइदंरूपंदृष्ट्वा अहंनबिभेमि १५ हेदीनदयालो स्वकर्मभिर्बद्धः संसाराद्भीतः अहं एवंभूतं मां तवांघ्रिकमलंप्रति कदा आह्वयसे १६ यस्मात्प्रियाप्रियादिसंयोगवियोगाभ्यांदह्यमानःसन् सकलयोनिषुभ्रमामिअतस्त्वन्निस्तारोपायंदास्ययोगंवद १७ हेभूमन् अहंत्वद्दासःसन् तवलीलाकथाः अनुगृणन् महादुःखानि नगणयिष्यामि १८

ननुदुःखैरतप्तस्यदुःप्रतीकारोलोकेप्रसिद्धएव । किंममदारयादिनातत्राह । बालस्येति । भोनृसिंह तप्तस्यतत्प्रातिविधिःदुःखप्रतीकारःइहलोकेयोंजसाइष्टःसत्त्वयोपेक्षितानांतनुभृतांतावद्दे
क्षणमात्रमेवनत्वात्यंतिकः । तदेवाह । बालस्यपितरौशरणंरक्षकाविहनभवतः । ताभ्यांपाल्यमानस्यापितस्यदुःखदर्शनात् । क्वचिदजीगर्तादिवत्ताभ्यामेवतद्वधदर्शनाच्च । नचार्त
स्यरोगिणःअगदमौषधंशरणम् । कृतेऽप्यौषधेमृत्युदर्शनात् । नचउदन्वतिसमुद्रेमज्जतःपुंसोनौःशरणम् । तयासहमज्जनदर्शनात् । अतस्त्वमेवशरणमित्यर्थः । अथवैवंकाकाव्याख्येयम् ।
तप्तस्यतत्प्रातिविधिर्यइहतावत्प्रसिद्धःसत्त्वदुपेक्षितानांकिमंजसेष्टःअपितुनेष्टएव । यद्वा यस्तावदिहप्रतिविधिरिष्टःसकिमंजसा । नैवांजसेत्यादियोज्यम् । बालस्येत्यादिपूर्ववदेव १९
ननुकश्चित्कुत्रश्चित्केनचित्कदाचित्कश्चिद्रक्षकोपिदृश्यतएवेत्याशंक्यतत्राषितत्तद्रूपेणत्वमेवरक्षकइत्युरीकृत्यतस्यैवसर्वात्मतामाह । यस्मिन्निति । अपरोऽर्वाचीनःपित्रादिःपरोब्र
ह्मादिर्वाभावःकर्तातत्कारकेणयद्यत्करोतितत्सर्वंभवतस्तवस्वरूपंनतुपृथक् । यस्मिन्नधिकरणेयतोनिमित्तात्यर्हियस्मिन्कालेयेनकरणेनयेनकर्त्रासंचोदितश्चयस्यसंबंधियस्मादपादाना
त्यस्मैसंप्रदानायथदीप्सिततमं ( उतवा ) यःकर्तेत्येवंसप्तसप्तविभक्त्यर्थाः । यथायेनप्रकारेणेतिक्रियाविशेषणीभूतानामव्ययानामर्थाः । पृथक्स्वभावःसत्त्वादिप्रकृतिः करोतिउत्पादय
तिविकरोतिरूपांतरंनयतीति २० अतोन्यस्यरक्षकस्याभावात्असंसारित्वाच्चनित्यमुक्तस्त्वमेवमांशरणागतंरक्षेतिप्रार्थयते । मायेतिद्वाभ्याम् । त्वदंशस्यपुंसोऽनुमतेनईक्षणरूपेणअ
नुग्रहेणमनःमनःप्रधानंलिंगंमायासृजति । कथंभूता । कालेनचोदिताःक्षोभितागुणायस्याः । कथंभूतंमनः कर्ममयंकुर्वद्रूपम् । बलीयःदुर्जयम् । छंदोमयंवेदोक्तकर्मप्रधानंच । अजयाजी
वस्याविद्ययातद्भोगार्थमर्पिताःषोडशआराविकारामनःप्राणेंद्रियरूपायस्मिन्एवदेवंभूतंसंसारचक्रात्मकंमनःतत्को तितरेत् । भोअजत्वदन्यःत्वत्तःपृथक्स्थितःत्वाममजन्नित्यर्थः २१ न
नुममापिमयासंबंधात्कर्तृत्वाद्यविशेषात्त्वत्तःकोविशेषइत्यतआहसइति । स्वधाम्नाचिच्छक्त्यानित्यंविजिताआत्मनोबुद्धेर्गुणायेनसः (इत्थंभूतस्त्वं) कालःमायाप्रेरकःअतएववशीकृताः
विसृज्यानांकार्याणांविसर्गाणांसाधनानांचशक्तयोयेन । अतइक्षुदंडवन्निष्पीड्यमानंमांउपकर्षस्वसमीपंनय ( अजयामाययाविसृष्टमर्पितं ) २२ ननुलोकपालानांभोगान्भुंक्ष्वापिकियंचरा
ज्यमिदंदास्यामिकिमितिसंसाराद्बिभेषीतिजसेतत्राह । दृष्टाइतित्रिभिः । श्रियःसंपदः विभवउद्भवः आयुरादयोदृष्टाइतिकाकातुच्छत्वमुक्तम् । तदेवाह । येअस्मत्पितुःकोपहासविजृंभितभ्रू
भंगमात्रेणविध्वस्ताःसच ( पिता ) त्वयानिरस्तः २३

बालस्यनेहशरणंपितरौनृसिंहनार्तस्यचागदमुदन्वतिमज्जतोनौः ॥ तप्तस्यतत्प्रातिविधिर्यइहांजसेष्टस्तावद्विभोतनुभृतांत्वदुपेक्षितानाम् १९ यस्मिन्य
तोयर्हियेनचयस्ययस्माद्यस्मैयथायदुतयस्त्वपरःपरोवा ॥ भावःकरोतिविकरोतिपृथक्स्वभावःसंचोदितस्तदाखिलंभवतःस्वरूपम् २० मायामनःसृज
तिकर्ममयंबलीयःकालेनचोदितगुणानुमतेनपुंसः ॥ छंदोमयंयदजयार्पितषोडशारंसंसारचक्रमजकोतितरेत्त्वदन्यः २१ सत्वंहिनित्यविजितात्मगुणःस्व
धाम्नाकालोवशीकृतविसृज्यविसर्गशक्तिः ॥ चक्रेविसृष्टमजयेश्वरषोडशारेनिष्पीड्यमानमुपकर्षविभोप्रपन्नम् २२ दृष्टामयादिविविभोऽखिलधिष्ण्यपाना
मायुःश्रियोविभवइच्छातियान्जनोयम् ॥ येऽस्मत्पितुःकुपितहासविजृंभितभ्रूविस्फूर्जितेनलुलिताःसतुतोनिरस्तः २३ 

सः त्वं संसारात्मकेमनोरूपेचक्रे निष्पीड्यमानं अतएवप्रपन्नं मांस्वसमीपंनय १९ २० २१ २२ हेनृहरे अहंभोगपरिपाकंविद्वान् आविरिंच्यान्भोगान् अणिमादि
सिद्धीरपिनेच्छामि २३

यस्मादेवंतस्मात्आशिषभोगान्ब्रह्मतत्पारिपाकंविद्वान् अहंऐंद्रि यंइंद्रियैर्भोग्यंब्र ह्मणोभोगमभिव्याप्यकमपि ( विभवं ) नेच्छामितेतवकालरूपेणउरुविक्रमेणविलुलितान्विध्वस्तान् २४
किंच । वर्तमानकालेपिनभोगार्हाइत्याह। कुत्रेति। श्रुतिःश्रवणंतदेवसुखंयासुताःमृगतृष्णिकावन्मिथ्यामूना आशिषःक्व। अशेषाणांरुजांरोगाणांविरोहउद्भवस्थानंक्व चेदंकलेवरम्। एवंचेत्
सर्वोपिजनःकिंनविरज्यतेतत्राह। यदपियद्यपिइतिएवंविद्वान् अयंजनः तथापिनानिर्विंद्यतेविरक्तोनभवति कुतः कामएवानलःतंमधुलवैःसुखलवैःदुःसाध्यैरपिशमयन्कामाग्निशमनव्य
ग्रस्यनिर्वेदेप्यवकाशोनास्तीत्यर्थःयद्वा अचिंत्यमिदंत्वन्मायाचेष्टितमितिभावः २५ तर्हित्वंकथंनिर्विण्णोसि अनर्हेपिमयिप्रवृत्तयात्वत्कृपयैवेत्याशयेनाहक्वेति । रजसैवप्रभवोजन्मयस्य
सः । सप्रभवंब्रवाकुलविशेषणम् । तमोधिकंयस्मिन्तस्मिन्नस्मिन् असुराणांकुलेजातोहंक्व । क्वचतवानुकंपा । तामेवाह। ब्रह्मादीनांशिरसियो(नवै)नैवार्पितःसपद्मवत्सकलसंतापहरःकर
रूपःप्रसादोमेशिरसिअर्पितइतियत् । यत्यथाऽनुकंपयेतिवा २६ नचत्वयीदमतिचित्रमित्याहनैषेति । एतेब्रह्मादयउत्तमाअयमसुरोनीचइत्येवंपरावरमतिःजंतोःप्राकृतस्ययथातथाभव
तोननुनिश्चितंनस्यात् । अत्रहेतुःजगतआत्मनःसुहृदश्च । तर्हिसर्वत्रमत्प्रसादएकरूपश्चकिंनस्यात्तत्राह । संसेवयातवप्रसादोभवति । तत्रचसेवानुरूपंतत्तदिच्छानुसारेणधर्मादीनामुद
योभवति । एवंसत्यपिवैषम्याभावेदृष्टांतः सुरतरुर्यथासेवकस्यैवसंकल्पानुसारेणफलंददाति। नचविषमः। तद्वत्परावरत्वंअत्रकारणमितिशेषः २७ एतच्चत्वद्भृत्यकृपयामयाप्राप्तमितित्व
द्भृत्यपार्श्वमेवमांनयेत्याशयेनाह । एवमिति । यथात्वयाऽनुकंपितोस्मि । एवंनारदेनात्मसात्कृतःपूर्वमनुगृहीतःसोहंकथंनुत्वद्भृत्यसेवांविसृजामि । कथंभूतोऽनुगृहीतोऽस्मि । प्रभव
एवाहिर्युक्तःकूपःतस्मिन्कामान्अभितःकामयमानंजनंनिपतितमनुतत्प्रसंगात्प्रपतन्योऽहंतदेवंत्वद्भृत्यस्यश्रीनारदस्यानुग्रहेणेनत्वयात्यंतमनुकंपितोस्मि अयमेवचममपरमोऽनुग्रहः । न
पुनरिदमतितुच्छंमत्प्राणरक्षणादि २८ नचेदंत्वयामदनुग्रहार्थमेवंकृतंकिंत्वन्यार्थमित्याह । भोअनंतयदेतन्मत्प्राणरक्षणंमन्येहंतुयच्चतस्यमत्पितुर्वधश्चतदुभयंत्वद्भृत्यस्यऋषेर्वाक्यंऋतंवि
धातुमित्यहंमन्ये । कुतः यद्यस्मात्असत् अयुक्तंविधित्सुःखड्गंप्रगृह्यावोचत् । किं । मदपरोमद्व्यतिरिक्तश्चेदीश्वरोस्तितर्हित्वामिदानींअवतुतवकंशिरोऽहंहरामीति । पाठांतरेप्ययमेवा
र्थः । यत्यदाअवोचत्तदामत्प्राणरक्षणमितिवान्वयः । एतच्चसत्यंविधातुंनिजभृत्यभाषितमित्यत्रबहुधाव्याख्यातम् २९

तस्मादमूस्तनुभृतामहमाशिषोज्ञआयुःश्रियंविभवमैंद्रियमाविरिंच्यात् ॥ नेच्छामितेविलुलितानुरुविक्रमेणकालात्मनोपनयमांनिजभृत्यपार्श्वम् २४
कुत्राशिषःश्रुतिसुखामृगतृष्णिरूपाःक्वेदंकलेवरमशेषरुजांविरोहः ॥ निर्विद्यतेनतुजनोयदपीतिविद्वान्कामानलंमधुलवैःशमयन्दुरापैः २५ क्वाहंरजः
प्रभवईशतमोधिकेऽस्मिन्जातःसुरेतरकुलेक्वतवानुकंपा ॥ नब्रह्मणोनतुभवस्यनवैरमायायन्मेऽर्पितःशिरसिपद्मकरःप्रसादः २६ नैषापरावरमतिर्भवतो
ननुस्याज्जंतोर्यथाऽऽत्मसुहृदोजगतस्तथापि ॥ संसेवयासुरतरोरिवतेप्रसादःसेवानुरूपमुदयोनपरावरत्वम् २७ एवंजनंनिपतितंप्रभवाहिकूपेकामाभिका
ममनुयःप्रपतन्प्रसंगात् ॥ कृत्वात्मसात्सुरर्षिणाभगवन्गृहीतःसोहंकथंनुविसृजेतवभृत्यसेवाम् २८ मत्प्राणरक्षणमनंतपितुर्वधश्चमन्येस्वभृत्यऋषिवाक्य
मृतंविधातुम् ॥ खड्गंप्रगृह्ययदवोचदसद्विधित्सुस्त्वामीश्वरोमदपरोऽवतुकंहरामि २९

२४ किंचकर्णप्रियाःआशिषःक्व रोगाणांउत्पत्तिस्थानं
कलेवरंक्व एवंविद्वानपिजनः विरक्तोनभवति २५ किंचअहंरजःप्रभवःक्व तवकृपाक्व यतःसकलसंतापहरःप्रसादःकररूपःमेशिरसिअर्पितः २६ किंचहेनारसिंहयथात्वया
ऽनुकंपितोस्मि २७ एवंनारदेनपूर्वं अनुगृहीतः सोहंकथंनुत्वद्भृत्यसेवां विसृजामि २८ हे अनंत मत्प्राणरक्षणं मत्पितुर्वधश्च एतद्द्वयंत्वयाकृतंतत् स्वभृत्यवाक्यंसत्यंकर्तुंमन्ये २९

नचेदं पक्षपातेनरक्षणं दैत्यहननंचत्वयिनत्वाभाविकं किंतुमायागुणोपाधिकंसर्वात्मकेत्वायस्वतस्तदयोगादित्याहएकइति । एतज्जगत्त्वमेवैकः यद्यतः अमुष्यादावंतेचपृथगवस्यसिपृथक्स्थित्वास्वस्मिन्नवसानंकरोषि । सन्मात्रतयाकारणतयाचावधित्वेनवर्तसइत्यर्थः । अतोमध्यतश्चत्वमेव । कुतस्तर्हिभेदप्रतीतिस्तत्राह । निजमाययागुणपरिणामात्मकमिदंजगत्सृष्ट्वा तदनुप्रविष्टस्त्वंतैर्गुणैर्हेतुभूतैर्नानेवरक्षकइवहंतेवच अवसितःप्रतीतः । तदुक्तंस्कंधोपक्रमे । 'निर्गुणोपिह्यजोऽव्यक्तोभगवान्प्रकृतेःपरः । स्वमायागुणमाविश्यबाध्यबाधकतांगतः' इति ३० ननुयद्येतज्जगदहमेवतर्हिजमतोवैषम्येणममवैषम्यमपिकिंनस्यादित्यतआह । त्वमेवत्वमेवइदंसदसत्कार्यकारणात्मकंजगत् । नतुत्वत्तःपृथक् भवांस्तुततोन्यः आद्यंतयोःपृथगवस्थानात् यद्यस्मादेवंअतोममात्मीयोयंपरइतियाबुद्धिःसाअपार्थामायैव । कार्यकारणाभेदंदृष्टांतेनसाधयति । यद्यतःयस्यजन्मईक्षणंप्रकाशश्चयस्मिन्निधनंचस्थितिश्चतद्वैतदेव । अष्टिर्बीजं कारणम् । तरुःकार्यम् । तयोर्वसुकालवत् । भूतसूक्ष्मरूपपृथ्वीमात्रत्वमिव । कालशब्देनन्नीलत्वासाधारणगुणयोगात्पृथ्वी । वसुशब्देनवसुमात्रंभूतसूक्ष्मम् । अयमर्थःयथापृथ्वीमयतरोःपृथ्वीमयबीजमात्रत्वम् । तस्यचयथाभूतसूक्ष्ममात्रत्वम् । एवंसर्वमपिकार्यकारणात्मकंजगत्परमकारणात्मकमेवेति(परमकारणंतुभगवानेव) । तथाचपारमर्षसूत्रम् । 'तदनन्यत्वमारंभणशब्दादिभ्यः' इति । श्रुतिश्च । 'वाचारंभणंविकारोनामधेयंमृत्तिकेत्येवसत्यं' इति ३१ तत्रतावदंतेपृथगवस्थानंदर्शयति न्यस्येति । इदंजगत्आत्मनाआत्मनैवआत्मनिनिक्षिप्यस्वसुखमेवानुभवन्निष्क्रियःसन्प्रलयोदकमध्येशयनंकरोषि । तर्हिकिंजीवस्येवममापितमोवृत्तिरूपानिद्रास्ति । नहि । योगएवत्वबहिर्वृत्तिभावसाम्यान्निद्रोच्यतइत्याह । योगेनमीलितेदृशौयेन । आत्मनास्वरूपप्रकाशेननिपीतानिद्रायेन । यतस्तुर्येअवस्थात्रयातिरिक्तेस्वरूपेस्थितस्त्वंनतुसुप्तइवआत्मनातमोयुंक्षेयोजयसि । नपश्यसीत्यर्थः । नजाग्रत्स्वप्नयोरिवगुणान्विषयांश्चेत्यर्थः ३२ इदानींकारणत्वेनादावपिपृथगवस्थानंदर्शयन्मध्यतश्चत्वमेवेत्येतत्प्रपंचयतिचतुर्भिः । (तस्येति) यस्त्वंअंभसिशेषेतस्यैवतेइदंजगद्वपुःस्वरूपंनाभ्यस्य । यतस्त्वंमध्यतोपितस्य । कथंभूतस्यतव । निजयाकालशक्त्यासंचोदिताःप्रकृतिधर्माःसत्त्वादयोयेन । स्वरूपत्वेहेतुः । अनंतशयनावशेनपर्यंकात्विरमन्समाधिर्यस्यतस्यतवनाभेःसकाशात् एकार्णवोदकेमहान्लोकपद्मंअभूत । कथंभूतंआत्मनित्वय्येवगूढंसत् स्वकणिकातःसूक्ष्माद्वटबीजात्महान्वटइव ३३

एकस्त्वमेवजगदेतदमुष्ययत्त्वमाद्यंतयोःपृथगवस्यसिमध्यतश्च ॥ सृष्ट्वागुणव्यतिकरंनिजमाययेदंनानेवतैरवसितस्तदनुप्रविष्टः ३० त्वंवाइदंसदसदीशभवांस्ततोन्योमायायदात्मपरबुद्धिरियंह्यपार्था ॥ यद्यस्यजन्मनिधनंस्थितिरीक्षणंचतद्वैतदेववसुकालवदष्टितर्वोः ३१ न्यस्येदमात्मनिजगद्विलयांबुमध्येशेषेत्मनानिजसुखानुभवोनिरीहः ॥ योगेनमीलितदृगात्मनिपीतनिद्रस्तुर्येस्थितोनतुतमोनगुणांश्चयुंक्षे ३२ तस्यैवतेवपुरिदंनिजकालशक्त्यासंचोदितप्रकृतिधर्मणआत्मगूढम् । अंभस्यनंतशयनाद्विरमत्समाधेर्नाभेरभूत्स्वकणिकावटवन्महाब्जम् ३३

किंच त्वमेवएकः एतत् जगत्सृष्ट्वातदनुप्रविष्टः सन् नानेवप्रतीयसे ३० किंच इदंकार्यकारणात्मकंजगत् त्वमेव नत्वत्तः पृथक् त्वंतु ततोन्यः अतः अयं स्वः अयंपरइतिबुद्धिर्व्यर्थैव ३१ किंच यस्त्वं प्रलये इदंजगत् आत्मनि निक्षिप्य निष्क्रियःसन् प्रलयोदकेशेषे ३२ तस्यैव तव नाभेः सकशात् लोकपद्मं अभूत् ३३

तदेवंकश्यपत्वेन अनुभवतःसन्नन्यतश्चत्वमेवावर्तसइत्युक्तम् । एतदेवशुद्धसत्त्वस्य ब्रह्मणोऽनुभवेनस्फुटयितुंतस्यप्राक्तनीमवस्थामाह । तस्मिन्नब्जेसंभवोयस्यसकविर्ब्रह्माअतःपद्मादन्य दपश्यन्बीजंउपादानकारणभूतंत्वांस्वस्मिन्ततंसंततंव्याप्तमपिनाविंदत् । युक्तंचैतत्तउहअहोअंकुरेजातेसतिबीजंतदनुगतंकारणंपृथक्कथंनामपुमान्पश्येत् ३४ भवदुपासनयातुत्वास्मि न्नेवदृष्टवानित्याह । सत्विति । परावृत्त्यासनंआस्थितःसन्तीव्रेणतपसाध्यानेन । अनेनसन्मात्ररूपेणोपादानतयादर्शनमुक्तम् ३५ ईश्वरत्वेनचदृष्ट्वाकृतार्थोऽभवदित्याह । एवमनेनप्रकारे णसगुणरूपत्वेनेत्यर्थः । सहस्रमपरिमितानिवदनादीनितैराढ्यंसमृद्धंमायामयंमायाप्रधानम् । सताप्रपंचेनोपलक्षितः संनिवेशःपादादिरचनायस्य ३६ तदाभवांस्तस्यानुग्रहंकृतवानि त्याह । तस्माइति । ( हरिशिरस्तनुवम् ) हयग्रीवमूर्तिंबिभ्रत्सन्रजस्तमोरूपौमधुकैटभाख्यौहत्वातस्मैश्रुतिगणान्समर्पितवान् तत्रहेतुः । सत्त्वामिति ३७ एकस्त्वमेवेत्यादिभिर ष्टभिःश्लोकैर्यदुक्तंपक्षपातेनरक्षणंतद्विपक्षवधश्चससत्त्वोपाधिकोनतुस्वतइतितदुपसंहरति इत्थमिति । विभावयसिपालयसिहंसिघातयसि । कलौतुतन्नकरोषि । यतस्तदात्वंछन्नोऽभवः यतस्त्रिष्वपिचयुगेष्वाविर्भावात्सएवंभूतस्त्वंत्रियुगइतिप्रसिद्धम् ३८ तदेवंभगवतस्तत्त्वंनिरूप्यस्वस्यचतद्विचारायोग्यतांनिवेदयन्प्रार्थयतेनैतादितित्रिभिः । असाधुबहिर्मुखम् । तीव्रं दुर्धरं । हर्षशोकभयैरिषणात्रयेणच आर्तंदुःखितमपित्वत्कथासुनसंप्रीयते । ( इषणात्रयंतुवित्तेषणापुत्रेषणालोकेषणेतिप्रसिद्धम् ) तस्मिन्नेवंभूतेमनसिसतिकथंतवतत्त्वंविचारयामि ३९ किंच । जिह्वाअवितृप्तासतीमोअच्युतमामांयतोमधुरादिरसस्ततआकर्षति । उदरंतुक्षुधासंतप्तंसद्यएवयत्किंचिदाहारमात्रंप्रति । चपलादृक्चक्षुः । कर्मशक्तिःकर्मेंद्रियाणि । लुनंतित्रो टयंति । अनेकाःसपत्न्योगेहपतिंयथालुनंतित्रोटयंति ४०

तत्संभवःकविरतोन्यदपश्यमानस्त्वांबीजमात्मनिततंस्वबहिर्विचिंत्य ॥ नाविंददब्दशतमप्सुनिमज्जमानोजातेऽकुरेकथमुहोपलभेतबीजम् ३४ सत्वात्म योनिरतिविस्मितआस्थितोब्जंकालेनतीव्रतपसापरिशुद्धभावः ॥ त्वामात्मनीशभुविगंधमिवातिसूक्ष्मंभूतेंद्रियाशयमयेविततंददर्श ३५ एवंसहस्रवद नांघ्रिशिरःकरोरुनासास्यकर्णनयनाभरणायुधाढ्यम् ॥ मायामयंसदुपलक्षितसंनिवेशंदृष्ट्वामहापुरुषमापमुदंविरिंच्यः ३६ तस्मैभवान्हरिशिरस्तनुवंच बिभ्रद्वेदद्रुहावतिबलौमधुकैटभाख्यौ ॥ हत्वाऽनयच्छ्रुतिगणांस्तुरजस्तमश्चसत्त्वंतवप्रियतमांतनुमामनंति ३७ इत्थंनृतिर्यगृषिदेवझषावतारैर्लोकान् विभावयसिहंसिजगत्प्रतीपान् ॥ धर्मंमहापुरुषपासियुगानुवृत्तंछन्नःकलौयदभवस्त्रियुगोथसत्त्वम् ३८ नैतन्मनस्तवकथासुविकुंठनाथसंप्रीयतेदुरितदुष्ट मसाधुतीव्रम् ॥ कामातुरंहर्षशोकभयेषणार्तंतस्मिन्कथंतवगतिंविमृशामिदीनः ३९ जिह्वैकतोऽच्युतविकर्षतिमाऽवितृप्ताशिश्नोन्यतस्त्वगुदरंश्रवणं कुतश्चित् ॥ घ्राणोऽन्यतश्चपलदृक्कचकर्मशक्तिर्बह्व्यःसपत्न्यइवगेहपतिंलुनंति ४०

तत्संभवोब्रह्मापद्मादन्यत्अपश्यमानः त्वांसंतमपिनापश्यत् ३४ तदाविस्मितः ब्रह्मा पद्मं आस्थितःसन् आत्मनिसहस्रमुखांघ्रिशिरआद्यवयवैर्युक्तंत्वांदृष्ट्वामुदं आप ३५ ३६ तदात्वंहयग्रीवमूर्तिं धृत्वामधुकैटभौदैत्यौहत्वा तस्मैब्रह्मणेश्रुतिगणान्समर्पितवान् ३७ एवंत्वंरामम़त्स्याद्यवतारैः लोकान्धर्मंचपालयसिदुष्टान्हंसिच ३८ किंच हेविकुंठनाथहर्षशोकादिभिः आर्तंकामातुरंइदंममनः तवकथासुनप्रीयतेमनसिएवंभूतेसतिकथंतत्त्वंविचारयामि ३९ किंच मांजिह्वाएकतःविकर्षति शिश्नोन्यतः त्वगु दरंश्रवणंचकुतश्चित् घ्राणः अन्यतः कच चपलदृक् कचकर्मेंद्रियाणि एवं सपत्न्यःपतिमिव मांत्रोटयंति ४०

मकेवलमहमेकएवकष्टांदशांआपन्नः किंतुमहाजनोप्येवमेवक्लिश्यति अतःसर्वजनंपालयेतिप्रार्थयते एवमिति । भवःसंसारएववैतरणीयमद्वारनदीतस्यां (विण्मूत्रशोणितादिपूर्णायांदेहलक्षणायांयमनद्यामित्यर्थः । स्वकर्मणापतितं) अन्योन्यतोयानिजन्ममरणमक्षणानितेभ्योभीस्त्याभतिंस्वेषांपरेषांचविग्रहेयथायथंवैरंमैत्रंचयस्य । एवंमूढंजनंपश्यन्त्वं हेपारचरतस्याःपारेस्थितनित्यमुक्त हंतेतिअहोकष्टमित्येवमनुकंप्याद्यपीपृहिवेतरणीमुत्तार्यपालय ४१ एकेनमयाकथंसर्वोजनस्तारणीयइतिचेत्तत्राह । कोन्विति । कोनुतेअत्रसर्वजनोत्तारणेप्रयासःनकोपि । कुतः । अस्यविश्वस्यभवसंभवलोपानांउत्पत्तिस्थितिलयानांहेतोःकिमेतद्दुष्करमितिभावः । उचितंचैतदित्याह । मूढेष्विति । त्वांचत्वदीयांश्चतारयिष्यामिइमंदुराग्रहंमाकृथाइतिचेत्तत्राह । ववयेप्रियजनाभक्तास्तानुसेवमानानांनोऽस्माकंतेनउत्तारणेनकिम् । कोतिप्रयासोऽसुरबालकाहरेःकोन्वत्रतेऽखिलगुरोभगवन्प्रयासः । प्रह्लादइत्यमुपमंत्र्यमिथोनराणामीशेनसख्यमकरोदपनीबमावाम् ४२ वत्सप्रह्लादत्वांतावत्तारयिष्यामितावतैवकृतार्थःस्याःकिमनेननिर्बंधेनेत्यत्राह । नैवेति हेपरसर्वोत्तमत्वद्वीर्यगायनमेवमहामृतंतस्मिन्मग्नंचित्तंयस्यसोहंभववैतरण्याःनैवोद्विजे । किंतुविमूढानुशोचामि । तानेवाह । ततोमहामृताद्विमुखंचेतोयेषां । प्रस्तुतइंद्रियार्थनिमित्तंयन्मायासुखंतदर्थभरंकुटुंबादिभारंउद्वहतः ४३ त्वंतावत्मुक्तिमृहाणतांस्तुतत्वज्ञानमुमयत्रुपदेक्ष्यंतीतिचेत्तत्राह प्रायेणेति । नाविमुमुक्षोर्मुक्तिंनेच्छामि । तर्ह्यन्यंकमपिप्रार्थयमामेवकिमितिनिर्बध्नासीतिचेत्अतआह । त्वत्तोन्यमस्यजनस्यशरणंनपश्यामि ४४ नन्वेतेस्त्रीसंभोगादिनासुखिनएवनकृपणास्तत्राह । यदिति । करयोःकंडूयनेनसंघर्षणेनेवदुःखमनुदुःखंयस्मिन् तर्हिदुःखत्वादेवततोनिर्विद्यमुच्येरन्तत्राह । कृपणाःकामुकाबहुदुःखभाजोपिइहगृहमेधिसुखेनतृप्यंतिअलमितिनमन्यंते । कंडूतिवत्कामस्यदुःसहत्वात् । ननुकेचित्कंडूतिमपिसहंतेकामंचेत्यत्राह त्वत्प्रसादात्तुकश्चिद्धीरएवमनसिजंकामंविषहेतनतुसर्वे अत्रापिकंडूतिवदितिदृष्टांतः ४५ ननुमौनादिभिर्मोक्षसाधनैःसुलभैवतेषामपिमुक्तिःतत्राहमानेति । हेपुरुषअंतर्यामिन् । येमौनादयोदशआपवर्ग्याअपवर्गहेतवःप्रसिद्धाःरहःविविक्तवासः । तेतुप्रायशःअजितेंद्रियाणांइंद्रियभोगायअर्थार्थविक्रीणतांवार्ताःजीवनोपायाभवंति । दांभिकानांवार्ताअपिभवंतिवानवादंभस्यप्रायेणानिष्फलत्वात् ४६

एवंस्वकर्मपतितंभववैतरण्यामन्योन्यजन्ममरणाशनभीतिभीतम् ॥ पश्यन्जनंस्वपरविग्रहवैरमैत्रंहंतेतिपारचरपीपृहिमूढमद्य ४१ कोन्वत्रतेऽखिलगुरोभगवन्प्रयासउत्तारणेस्यभवसंभवलोपहेतोः ॥ मूढेषुवैमहदनुग्रहआर्तबंधोकिंतेनतेप्रियजनाननुसेवतांनः ४२ नैवोद्विजेपरदुरत्ययवैतरण्यास्त्वद्वीर्यगायनमहामृतमग्नचित्तः ॥ शोचेततोविमुखचेतसइंद्रियार्थमायासुखायभरमुद्वहतोविमूढान् ४३ प्रायेणदेवमुनयःस्वविमुक्तिकामामौनंचरंतिविजनेनपरार्थनिष्ठाः ॥ नैतान्विहायकृपणान्विमुमुक्षएकोनान्यत्त्वदस्यशरणंभ्रमतोनुपश्ये ४४ यन्मैथुनादिगृहमेधिसुखंहितुच्छंकण्डूयनेनकरयोरिवदुःखदुःखम् ॥ तृप्यंतिनेहकृपणाबहुदुःखभाजःकंडूतिवन्मनसिजंविषहेतधीरः ४५ मौनव्रतश्रुततपोध्ययनस्वधर्मव्याख्यारहोजपसमाधयआपवर्ग्याः ॥ प्रायःपरंपुरुषतेत्वजितेंद्रियाणांवार्ताभवंत्युतनवात्रतुदांभिकानाम् ४६

हेनित्यमुक्त एवंभववैतरिण्यांपतितंजनंवैतरणीमुत्तार्यपाहि ४१ हेविभोअस्योत्तारणेअखिलगुरोस्तेकोतिप्रयासोस्ति ४२ किंच हेसर्वोत्तम वैतरण्याःसकाशात्अहंनोद्विजे किंतुत्वत्कथाविमुखान्जनान्शोचामि ४३ किंच एतान्कृपणान्विहाय एकएवाहंमुक्तिंनेच्छामि किंचअस्यजनस्यशरणंत्वत्तोन्यंनपश्यामि ४४ ४५ हेपुरुष मौनव्रतादयःमोक्षहेतवोपि अजितेंद्रियाणां जीवनोपायाः भवंति ४६

रवक्ज्ञानंतुभ।किंविनासकामैर्मौना।दिभिर्नभवत्येवेत्याह । रूपेइतित्रिभिः।बीजांकुराविवप्रवाहापन्नेइमेसदसतीकार्यकारणेतत्ररूपेउपलक्षणभूतेवेदेनसृष्टेप्रकाशितेनचान्यत् । स्वसमवेतंगौ रत्वादिकमिवदेवदत्तादेः । कुतः । अरूपकस्यप्राकृतरूपादिशून्यस्य अतःयुक्ताःसंयताएवमक्तियोगेनप्रत्यक्षंत्वामुभयत्रकार्येकारणेचानुगतंपश्यंतिमथनेनदारुषुवह्निमिव । नान्यतःस्यात् ज्ञानमितिशेषः । यद्वाज्ञानप्रकारमेवाह । एतदुभयमन्यतःप्रधानपरमाण्वादेर्नस्यात् । ‘सऐक्षत ’ इत्यादिश्रुतेः अतस्त्वमेवकारणत्वात्सर्वत्रानुस्यूतइति ४७ तदेवाह त्वंवायुरिति । हृदयंमनः । चित्तचित्तं । अनुग्रहोऽहंकारःदेवतावर्गोवा । सगुणःस्थूलः विगुणःसूक्ष्मः । मनश्ववचश्वमनोवचस्तेननिरुक्तंप्रकाशितंकिमपित्वत्तोऽन्यन्नास्ति ४८ अमक्तास्तुअस्मिन्ननुगत मपित्वांनजानंतीत्याह नैतेइति एतेगुणानुगुणिनोगुणाद्यभिमानिनोदेवाआद्यंतवंतःजडोपाधित्वात्अनाद्यंतंनिरुपाधिंत्वांनविदंतिहियस्मात्सुधियोविद्वांसःएवंविचार्यशब्दात्अ ध्यापनादिव्यापारादुपरमंति । त्वामेवसमाधिनोपासतेइत्यर्थः । तथाचश्रुतिः ! ‘ किमर्थावयमध्येष्यामहेकिमर्थावयंयक्ष्यामहे ’ इति । ‘ नानुध्यायेद्बहूञ्छब्दान्वाचोविग्लापनंहि तत् ’इतिच । स्मृतिश्च । ‘ यदातेमोहकलिलंबुद्धिर्व्यतितरिष्यति । तदागंतासिनिर्वेदंश्रोतव्यस्यश्रुतस्यच ’ इत्यादि ४९ उपसंहरतितत्।दिति । हेअर्हत्तम । नमश्वस्तुतिश्वकर्मपूजाचन मःस्तुतिकर्मपूजाःप्रणिपातस्तुतिसर्वकर्मार्पणानि । कर्मपरिचर्या । चरणयोःस्मृतिश्वकथायांश्रवणंचेतिषडंगयासम्यक्सेवयात्विमापरमहंसानांगतिंप्राप्येत्वयिजनःकथंभक्तिंलभेत । य स्मादेवंभक्तिविनानमोक्षोनैवभक्तिःसंसेवयाविना अतःप्राक्प्रार्थितंदास्ययोगमेवदेहीतिप्रकरणार्थः ५० एतावंतोवर्णितागुणायस्य । यतमन्युःउपसंहृतकोपः ५१ कामान्पूरयतीतित था । यद्वापुरुषार्थप्रवहोऽस्मीत्यर्थः । हेमद्र ५२ अप्रीणतः अप्रीणयतः । तमुंअपूर्णकामत्वेनशोचितुम् ५३

रूपेइमेसदसतीतववेदसृष्टेबीजांकुराविवनचान्यदरूपकस्य ॥ युक्ताःसमक्षमुभयत्रविचिन्वतेत्वांयोगेनवह्निमिवदारुषुनान्यतःस्यात् ४७ त्वंवायुरग्निरव निर्वियदंबुमात्राप्राणेंद्रियाणिहृदयंचिदनुग्रहश्च ॥ सर्वंत्वमेवसगुणोविगुणश्वभूमन्नान्यत्त्वदस्त्यपिमनोवचसानिरुक्तम् ४८ नैतेगुणानुगुणिनोमहदादयो येसर्वेमनःप्रभृतयःसहदेवमर्त्याः ॥ आद्यंतवंतउरुगायविदंतिहित्वामेवंविमृश्यसुधियोविरमंतिशब्दात् ४९ तत्तेऽर्हत्तमनमःस्तुतिकर्मपूजाःकर्मस्मृतिश्वर णयोःश्रवणंकथायाम् ॥ संसेवयात्वयिविनेतिषडंगयाकिंभक्तिंजनःपरमहंसगतौलभेत ५० ॥ श्रीनारदउवाच ॥ एतावद्वर्णितगुणोभक्त्याभक्तेननिर्गुणः ॥ प्रह्लादंप्रणतंप्रीतोयतमन्युरभाषत ५१ ॥ श्रीभगवानुवाच ॥ प्रह्लादभद्रभद्रंतेप्रीतोऽहंतेसुरोत्तम ॥ वरंवृणीष्वाभिमतंकामपूरोऽस्म्यहंनृणाम् ५२ मामप्रीणतआयुष्मन्दर्शनंदुर्लभंहिमे ॥ दृष्ट्वामांनपुनर्जंतुरात्मानंतप्तुमर्हति ५३

किंच एतेकार्यकारणेएवतेरूपेअत्रयोगिनःत्वांपश्यंति ४७ दारुषुअग्निमिव किंचहेहरेभूतानि ५ मात्राः ५ प्राणादिचमनोवचोभ्यांप्रकाशितंसर्वंत्वमेवासि ४८ एतेगुणा द्यभिमानिनोदेवाःनिरुपाधिंत्वांनविदंतिएवंविचार्यविद्वांसःअध्ययनादिव्यापारादुपरमंति ४९ किंचहेउरुगाय अयंजनःप्राणिपात १ स्तुति २ सर्वकर्मार्पण ३ परिचर्या ४ चरणस्मृति ५ कथाश्रवण ६ रूपयाषडंगसेवयाविनात्वयिभक्तिंकथंलभेत् यस्मात्भक्तिंविनानमोक्षःसेवयाविनानभक्तिःअतः त्वद्दास्ययोगमेवदेहि ५० नारदउवाच ॥भ क्तेन एतावद्वर्णितगुणःयतमन्युःप्रीतःनृहरिःप्रह्लादंअभाषत ५१ हेप्रह्लादतेभद्रंअहंतेप्रीतःअभीष्टंवरंवृणीष्व ५२ जनानांमेदर्शनंदुर्लभम् जंतुःमांदृष्ट्वापुनर्दुःखंप्राप्तुंनार्हति ५३

प्रीणंतितोषयंतिआशिषांश्रेयसाम् ५४ लोकाःप्रलोभ्यंतेयैस्तादृशैःप्रलोभ्यमानोपिएकांतित्वात्निरुपाधिकत्वात्अकृत्रिमभक्तत्वादित्यर्थः ॥ ५५ ॥ इतिश्रीभा०म०सप्त०टीकायांनव मोऽध्यायः ॥ ९ ॥ दशमेत्वनुगृह्यानुभक्तमंतर्हितेहरौ । प्रसंगाद्धरिणारुद्रेकृतोऽनुग्रहईर्यते ॥ १ ॥ तत्सर्ववरजातं । अंतरायतयाविघ्नरूपतया १ उत्पत्त्यास्वभावेनैवसक्तंमां । तेषांकामा नांसंगाद्भीतः २ ननुकिमहंभक्तंप्रलोभयामिनहिनहिकिंतुवरंवृणीष्वेतिवदतस्तवाभिप्रायोऽन्यएवेत्याहभृत्यलक्षणोति । हृदयस्यग्रंथिवद्बंधकेषु । तेतवअन्यथाअनर्थसाधनेप्रवर्तनंनघटते इत्यर्थः ३ कथमेवंभृत्यलक्षणज्ञानंस्यात् । तत्राह । यइति । तेत्वत्तः ४ ननुकामनयापिसेव्यसेवकयोःस्वामिभृत्यभावः प्रसिद्धः सत्यं सोपाधिकोसौनतुनात्त्विकइत्याह । आशासान इति । स्वामिन्यात्मनआशिषोअपेक्षमाणोनैव ( सत्स्वामिनो ) भृत्यः । भृत्यहेतुकमात्मनःस्वाम्यमिच्छन्यो भृत्यायददाति । सनैवस्वामी ५ आवयोस्तुतात्त्विकोभावइत्याह । अहं त्विति । अनपाश्रयोनिरभिसंधिः । अन्यथाकामाद्यभिसंधिनाअर्थःप्रयोजनंनास्ति ६ ननुतथापिपरमेश्वरस्यपरमोदारस्यममसंतोषार्थंकिमपिवृणीष्वेतिचेत् अतआहयदीति । कामां कुराणांअसंरोहंअनुत्पत्तिंभवतःसकाशात् ७ ननुकामोत्पत्तौसत्यांकोदोषस्तत्राह । इंद्रियादीनियस्य ( कामस्य ) जन्मनानश्यंतीतिआत्मादेहः ८ कामाभावेगुणमाह । विमुंचतीति । भगवत्त्वायत्वत्समानैश्वर्याय । तथाचश्रुतिः । ‘ यदासर्वेप्रमुच्यंतेकामायेऽस्यहृदिश्रिताः । अथमर्त्योऽमृतोभवत्यत्रब्रह्मसमश्नुते ’ इति ९

प्रीणंतिह्यथमांधीराःसर्वभावेनसाधवः ॥ श्रेयस्कामामहाभागाःसर्वासामाशिषांपतिम् ५४ एवंप्रलोभ्यमानोऽपिवरैर्लोकप्रलोभनैः ॥ एकांतित्वाद्भगवतिनै च्छत्तानसुरोत्तमः ५५ इतिश्रीभागवतेमहापुराणेसप्तमस्कंधेनवमोऽध्यायः ॥ ९ ॥ ध ॥ श्रीनारदउवाच ॥ भक्तियोगस्यतत्सर्वमंतरायतयाऽर्भकः ॥ मन्यमानोहृषीकेशंस्मयमानउवाचह १ ॥ प्रह्लादउवाच ॥ मामांप्रलोभयोत्पत्त्यासक्तंकामेषुतैर्वरैः ॥ तत्संगभीतोनिर्विण्णोमुमुक्षुस्त्वामुपाश्रितः २ भृत्यलक्षणजिज्ञासुर्भक्तंकामेष्वचोदयत् ॥ भवान्संसारबीजेषुहृदयग्रंथिषुप्रभो ३ नान्यथातेऽखिलगुरोर्घटेतकरुणात्मनः ॥ यस्तआशिषआशास्तेनस भृत्यःसवैवणिक् ४ आशासानोनवैभृत्यःस्वामिन्याशिषआत्मनः ॥ नस्वामीभृत्यतःस्वाम्यमिच्छन्योरातिचाशिषः ५ अहंत्वकामस्त्वद्भक्तस्त्वंचस्वा म्यनपाश्रयः ॥ नान्यथेहावयोरर्थोराजसेवकयोरिव ६ यदिरासीशमेकामान्वरांस्त्वंवरदर्षभ ॥ कामानांहृद्यसंरोहंभवतस्तुवृणेवरम् ७ इंद्रियाणिमनःप्राण आत्माधर्मोधृतिर्मतिः ॥ ह्रीःश्रीस्तेजःस्मृतिःसत्यंयस्यनश्यंतिजन्मना ८ विमुंचतियदाकामान्मानवोमनसिस्थितान् । तर्ह्येवपुंडरीकाक्षभगवत्त्वायकल्पते ९

५४ ॥ नारदउवाच ॥ इतिलोकप्रलोभनैःवरैःप्रलोभ्यमानोपिएकांतभक्तित्वात्प्रह्लादःवरान्नैच्छत् ५५ ॥ इतिसप्तमेनवमः ९ ॥ ॥ ॥ नारदउवाच ॥ प्रह्लादः वरप्रदानादिकंभक्तियोगस्यविघ्नमितिज्ञात्वाहृषीकेशंउवाच १ हेनृहरेअहंमुमुक्षुःत्वांउपाश्रितःअतःमांवरैःमाप्रलोभय २ ३ ४ ५ किंच अहंअकामःत्वद्भक्तःत्वंचनिर भिसंधिःस्वामीअतःआवयोःप्रयोजनंराजसेवकयोरिवन ६ हेवरदर्षभयदिमेवरान्दास्यसितर्हिहृदिकामांकुराणांअनुत्पत्तिंवरंवृणे ७ मानवःमनःस्थितान्कामान्यदामुंच तितर्ह्येवभगवत्त्वाययोग्योभवति ८ ९

निर्दोषान्कामान्दातुमिच्छंतंप्रत्याख्यास्यन्नमस्यति । ॐनमइति १० सत्यमेकांतभक्तस्त्वंतथापिमदाज्ञाकरणीयेत्याहनेति । मेएकांतिनःकदाचिदपिइहामुत्र चमद्याशिषोनवांच्छं त्येव । तथाप्येतन्मन्वंतरमात्रंभोगान्भुंक्ष्व ११ ननुतर्हिबंधःस्यादित्यतआह । कथाइतिद्वाभ्याम् । सर्वेषुभूतेषुसंतमेकमीशंयज्ञाधिष्ठातारंमामात्मन्यावेश्ययजस्व । तर्ह्यनेनैवकर्मणाबं धःस्यात्नेत्याह । योगेनमदर्पणेनकर्महिन्वन्त्यजन्यजस्व १२ किंच भोगेनसुखानुभवेनप्रारब्धंपुण्यंहित्वामुक्तबंधःसन्लोकानुग्रहार्थंकीर्तिंचविस्तार्यमांप्राप्स्यसि । कुशलेनपुण्याचर णेनपापंहित्वेतिविमीषामात्रम् । अन्यथातस्यराज्यप्रवृत्तेःनतुतस्यप्राचीनंपापमस्तितदधिगमेउत्तरपूर्वाघयोरश्लेषविनाशौतद्व्यपदेशादितिन्यायात् ‘तत्सुकृतदुष्कृतेविधुनुते’ इतिश्रुतेः नचेदंप्रारब्धंपापाभिप्रायंतस्यभोगेनैवक्षयात् । कुशलेनहित्वेतिवचनानुपपतेः । नचासावविद्वानितिवाच्यम् । भगवतैवकृतार्थत्वस्यानंतरंवक्ष्यमाणत्वात् । अतएवयोगेनकर्महिन्व न्नित्यपिलोकसंग्रहार्थंकर्मणिप्रवर्तितस्यानुद्वेगमात्रार्थेतिसर्वमनवद्यम् १३ किंचयइति । त्वांचमांचइदंमच्चरितंचस्मरन्नेतत्स्तोत्रंयःकीर्तयेत्सोपिकर्मबंधाद्विमुच्यतेकुतस्तवबंधशंकेत्यर्थः १४ ईश्वराज्ञाप्राप्तकर्माधिकारोसौपितुर्निष्कृतिंप्रार्थयतेत्रिभिः । वरंवरणीयंएतदपरंवृणेत्वत्तः १५ विद्वोऽमर्षणक्रोधेनआशयोयस्य १६ यदातेअपांगेनसंदृष्टस्तदाएतएवतथापिभोकृ पणवत्सल । कार्पण्येनप्रार्थयेऽहमित्यर्थः १७ यद्यपिकश्यपोमरीचिर्ब्रह्माचेतितत्रिगुणत्रयएवपूर्वजास्तथापित्रिभिःसप्तभिःसहेतिप्राकल्पगतपित्रभिप्रायेणोक्तम् । यद्यस्मात् १८

ॐनमोभगवतेतुभ्यंपुरुषायमहात्मने ॥ हरयेऽद्भुतसिंहायब्रह्मणेपरमात्मने १० ॥ श्रीनृसिंहउवाच ॥ नैकांतिनोमेमयिजात्विहाशिषआशासतेऽमुत्रचयेभव द्विधाः ॥ अथापिमन्वंतरमेतदत्रदैत्येश्वराणामनुभुंक्ष्वभोगान् ११ कथामदीयाजुषमाणःप्रियास्त्वमावेश्यमामात्मनिसंतमेकम् ॥ सर्वेषुभुतेष्वधियज्ञमी शंयजस्वयोगेनचकर्महिन्वन् १२ भोगेनपुण्यंकुशलेनपापंकलेवरंकालजवेनहित्वा ॥ कीर्तिंविशुद्धांसुरलोकगीतांवितायमामेष्यसिमुक्तबंधः १३ यएतत्की र्तयेन्मह्यंत्वयागीतमिदंनरः ॥ त्वांचमांचस्मरन्कालेकर्मबंधाद्विमुच्यते १४ ॥ श्रीप्रह्लादउवाच ॥ वरंवरयएतत्तेवरदेशान्महेश्वर ॥ यदनिंदत्पिता मेत्वामविद्वांस्तेजऐश्वरम् १५ विद्धामर्षाशयःसाक्षात्सर्वलोकगुरुंहरिम् ॥ भ्रातृहेतिमृषादृष्टिस्त्वद्भक्तेमयिचाघवान् १६ तस्मात्पितामेपूयेतदुरंताद्दु स्तरादघात् ॥ पूतस्तेऽपांगसंदृष्टस्तदाकृपणवत्सल १७ ॥ ॥ श्रीभगवानुवाच ॥ ॥ त्रिःसप्तभिःपितापूतःपितृभिःसहतेऽनघ ॥ यत्साधोऽस्यगृहे जातोभवान्वैकुलपावनः १८

भगवतेअद्भुतसिंहायतुभ्यंनमः १० ॥ नृसिंहउवाच ॥ मेएकांतभक्ताःआशिषः नैववांछंति अथापिएतन्मन्वंतरंदैत्येश्वराणांभोगान्भुंक्ष्व मदीयाःजुषमाणःसर्वभूत स्थंमां आत्मनिआवेश्ययोगेनमांयजस्व ११ १२ किंच पुण्यपापक्षयंकुर्वन्कालजवेनइदंकलेवरंहित्वाअत्रशुद्धांकीर्तिंविस्तार्यमुक्तबंधःसन्मांप्राप्स्यति हेप्रह्लादत्वांमांचइ दंमच्चरित्रंत्वयागीतंएतत्स्तोत्रंचयःस्मरन्कीर्तयेत् सःनरःकर्मबंधात्मुच्यते १३ १४ १५ १६ प्रह्लादउवाच ॥ हेहरेमेपितातवतेजःअविद्वान्भ्रातृहेतिमृषादृष्टिःसन्त्वां अनिंदत् सःपूयेतइतिअन्यंवरंवृणे १५ ॥ श्रीभगवानुवाच ॥ हेवत्सतेपिताएकविंशतिपितृभिस्सहपूतः यतःयस्यकुलेत्वंसाधुर्जातः १८

सम्यगुत्तमआचारोयेषांतेयत्रयत्रतेकीकटाअपिदेशास्तत्तुल्यास्तेशाश्चपूयंतेशुद्धाभवंति १९ ननुत्वद्भक्तानामयंमहिमेतिनचित्रम् । अहंतुतादृशोनभवामीतिचेत्तत्राह । सर्वात्मनेतिद्वाभ्याम् । मद्भावेनमद्भक्तयात्रिगतास्पृहायेषाम् २० त्वामनुगतायेकेचित्पुरुषाःतेप्येवंलक्षणाःसंतोमद्भक्ताभवंतिअतोभवान्भक्तानांसर्वेषांप्रतिरूपधृक्तद्रूपमानास्पदंश्रेष्ठइत्यर्थः २१ मदंगस्पर्शनेनसर्वशःपूतस्यतेपितुःपापशंकैवनास्ति ( किंचशोभनाप्रजापुत्रोयस्यसलोकानुत्तमगतीः ) तथापिपुत्रकृत्यानिप्रेतकर्माणिकुरु २२ वेदवादिभिरुक्तमनतिक्रम्यमत्परःसन्कर्माणिकुरु २३ ( सांपरायिकंपारलौकिकं ) २४ २५ ( निहतइतीयत्तद्दिष्ट्याभद्रंजातमित्यर्थः ) २६ ममसृष्टिभिर्मयासृष्टैर्भूतैःसमस्तान्निगमान्धर्मानित्यर्थः । अहन्हतवान्मत्तवरात्प्रहतः २७ एतद्दिष्ट्या । सामितःरूम्यक्प्राप्तः २८सर्वतःसंत्रासात् । गोप्तृरक्षकम् २९ एवंभूतोवरस्त्वयानप्रदेयःक्रूरोनिसर्गःस्वभावोयेषाम् । अमृतंक्षीरम् ३० ३१( भगवतःकलाविभूतीः) ३२ ३३

यत्रयत्रचमद्भक्ताःप्रशांताःसमदर्शिनः ॥ साधवःसमुदाचारास्तेपूयंतेऽपिकीकटाः १९ सर्वात्मनानहिंसंतिभूतग्रामेषुकिंचन ॥ उच्चावचेषुदैत्येंद्रमद्भावेनगतस्पृहाः २० भवंतिपुरुषालोकेमद्भक्तास्त्वामनुव्रताः ॥ भवान्मेखलुभक्तानांसर्वेषांप्रतिरूपधृक् २१ कुरुत्वंप्रेतकार्याणिपितुःपूतस्यसर्वशः ॥ मदंगस्पर्शनेनांगलोकान्यास्यतिसुप्रजाः २२ पित्र्यंचस्थानमातिष्ठयथोक्तंब्रह्मवादिभिः ॥ मय्यावेश्यमनस्तातकुरुकर्माणिमत्परः २३ ॥ श्रीनारदउवाच ॥ प्रह्लादोऽपितथाचक्रेपितुर्यत्सांपरायिकम् ॥ यथाहभगवान्राजन्नभिषिक्तोद्विजोत्तमैः २४ प्रसादसुमुखंदृष्ट्वाब्रह्मानरहरिंहरिम् ॥ स्तुत्वावाग्भिःपवित्राभिःप्राहदेवादिभिर्वृतः २५ ॥ ब्रह्मोवाच ॥ देवदेवाखिलाध्यक्षभूतभावनपूर्वज ॥ दिष्ट्यातेनिहतःपापोलोकसंतापनोऽसुरः २६ योऽसौलब्धवरोमत्तोऽनवध्योममसृष्टिभिः ॥ तपोयोगबलोन्नद्धःसमस्तनिगमानहन् २७ दिष्ट्याऽस्यतनयःसाधुर्महाभागवतोऽर्भकः ॥ त्वयाविमोचितोमृत्योर्दिष्ट्यात्वांसमितोऽधुना २८ एतद्वपुस्तेभगवन्ध्यायतःप्रयतात्मनः ॥ सर्वतोगोप्तृसंत्रासान्मृत्योरपिजिघांसतः २९ ॥ श्रीनृसिंहउवाच ॥ मैवंभूतोऽसुराणांतेप्रदेयःपद्मसंभव ॥ वरःक्रूरनिसर्गाणामहीनाममृतंयथा ३० ॥ श्रीनारदउवाच ॥ इत्युक्त्वाभगवान्राजंस्ततश्चांतर्दधेहरिः ॥ अदृश्यःसर्वभूतानांपूजितःपरमेष्ठिना ३१ ततःसंपूज्यशिरसाववंदेपरमेष्ठिनम् ॥ भवंप्रजापतीन्देवान्प्रह्लादोभगवत्कलाः ३२ ततःकाव्यादिभिःसार्धंमुनिभिःकमलासनः ॥ दैत्यानांदानवानांचप्रह्लादमकरोत्पतिम् ३३

किंच हेप्रह्लादयत्रयत्रमद्भक्ताःवसंतितेकीकटाअपिदेशाःशुद्धाःभवंति १९ २० किंच येपुरुषाःत्वा अनुगताः तेऽपिमद्भक्ताःभवंति अतःत्वंमद्भक्तानांमध्येश्रेष्ठोऽसि २१ अथ त्वंपितुःप्रेतकार्याणिकुरु पित्र्यंचस्थानमातिष्ठ त्वंमत्परःसन्कर्माणिकुरु २२ २३ श्रीशुकउवाच ॥ हेराजन्प्रह्लादोपिपितुःसांपरायिकंचक्रे २४ तदाब्रह्माप्रसन्नंदेवंदृष्ट्वाप्राह २५ हेदेव त्वया असुरोहतः एतद्भद्रं २६ २७ महाभागवतःअयंअर्भकःमृत्योर्मोचितः इदमपिभद्रम् २८ २९ ॥ श्रीनृसिंहउवाच ॥ हेपद्मसंभव त्वया असुराणांएवंवरोनदेयः यथाअहीनांअमृतम् ३० ॥ ॥ नारदउवाच ॥ ॥ इत्युक्त्वाभगवान् अंतर्दधे ३१ ततःप्रह्लादःब्रह्मादीन्संपूज्यववंदे ३२ ततोब्रह्माकाव्यादिभिर्मुनिभिःदैत्यदानवानांपतिप्रह्लादं अकरोत् ३३

३४ ।शिशुपालदंतवक्रयोर्द्विषतोःश्रीकृष्णसायुज्यंकथमितियत्पृष्टंतदेवतयोःसर्वजन्मकथनादिभिरुपपादितमुपसंहरति । एवमितिसप्तभिः । दितेःपुत्रत्वंप्रापितौविप्रशापेनेत्युत्तरस्यानुषंगः ३५ ३६ तच्चित्तौश्रीरामेचित्तंययोस्तौ ३७ करूषजोदंतवक्रः । ( ववपश्यतः सतः ) हरौसायुज्यंसमीयतुः ३८ कृष्णनिंदादिनापूर्वंकृतंयदेनःपापंतच्चतद्ध्यानेनतदात्मानःसंतो जहुः तदात्मत्वेदृष्टांतःकीटःपेशस्कृतोध्यानेनयथातदात्मामवतीति ३९ अभिदाभेददर्शनशून्यया । हरेःसात्म्यंसारूप्यम् ४० ४१ प्रह्लादचरितार्थमुपसंहरति । एषेतिचतुर्भिःअवतारःश्रीनृसिंहरूपस्तस्यकथाआख्यातेतिशेषः ४२ प्रह्लादस्यचरितमित्यादेःसमाम्नातमितितृतीयेनान्वयः । अस्येत्यनेनोक्तंसर्गस्थित्यप्ययानामीशस्यहरेर्याथात्म्यंतत्त्वंअनेनकृतंहरेः गुणकर्मानुवर्णनंचेत्यर्थः ४३ परावरेषांदेवदैत्यादीनांयानिस्थानानितेषांव्यत्ययोविपर्यासःसच ४४ आध्यात्मिकंआत्मानात्मविवेकादि ४५ एतच्छ्रवणादिफलमाहद्वाभ्याम् । एतच्छ्रुत्वायःकीर्तयेत ४६ एतत्एतांमृगेंद्रस्यलीलाम् । तामेवाह । दैत्येंद्रस्ययूथपानांचवधंयःशुचिःसन्पठेत् । पुण्यमनुभावंप्रभावंमातिनिश्चयंप्रा । लोकंवैकुंठम् ४७

प्रतिनंद्यततोदेवाःप्रयुज्यपरमाशिषः ॥ स्वधामानिययूराजन्ब्रह्माद्याःप्रतिपूजिताः ३४ एवंतौपार्षदौविष्णोःपुत्रत्वंप्रापितौदितेः ॥ हृदिस्थितेनहरिणावैरभावेनतौहतौ ३५ पुनश्चविप्रशापेनराक्षसौतौबभूवतुः ॥ कुंभकर्णदशग्रीवौहतौतौरामविक्रमैः ३६ शयानौयुधिनिर्भिन्नहृदयौरामसायकैः ॥ तच्चित्तौजहतुर्देहंयथाप्राक्तनजन्मनि ३७ ताविहाथपुनर्जातौशिशुपालकरूषजौ ॥ हरौवैरानुबंधेनपश्यतस्तेसमीयतुः ३८ एनःपूर्वकृतंयत्तद्राजानःकृष्णवैरिणः ॥ जहुःसंतोतदात्मनःकीटःपेशस्कृतोयथा ३९ यथायथाभगवतोभक्त्यापरमयाभिदा ॥ नृपाश्चैद्यादयःसात्म्यंहरेस्तच्चिंतयाययुः ४० आख्यातंसर्वमेतत्तेयन्मात्वंपरिपृष्टवान् ॥ दमघोषसुतादीनांहरेःसात्म्यमपिद्विषाम् ४१ एषाब्रह्मण्यदेवस्यकृष्णस्यचमहात्मनः ॥ अवतारकथापुण्यावधोयत्रादिदैत्ययोः ४२ प्रह्लादस्यानुचरितंमहाभागवतस्यच ॥ भक्तिर्ज्ञानंविरक्तिश्चयाथात्म्यंचास्यवैहरेः ४३ सर्गस्थित्यप्ययेशस्यगुणकर्मानुवर्णनम् ॥ परावरेषांस्थानानांकालेनव्यत्ययोमहान् ४४ धर्मोभागवतानांचभगवान्येनगम्यते ॥ आख्यानेऽस्मिन्समाम्नातमाध्यात्मिकमशेषतः ४५ यएतत्पुण्यमाख्यानंविष्णोर्वीर्योपबृंहितम् ॥ कीर्तयेच्छ्रद्धयाश्रुत्वाकर्मपाशैर्विमुच्यते ४६ एतद्यआदिपुरुषस्यमृगेंद्रलीलांदैत्येंद्रयूथपवधंप्रयतःपठेत ॥ दैत्यात्मजस्यचसतांप्रवरस्यपुण्यंश्रुत्वाऽनुभावमकुतोभयमेतिलोकम् ४७

ततोब्रह्माद्याःस्वस्थानानिययुः ३४ एवंतौविष्णोःपार्षदौदितेःपुत्रत्वंप्रापितौहरिणाहतौ ३५ पुनः कुंभकर्णदशग्रीवौराक्षसौजातौतौरामविक्रमैःहतौ ३६ ३७ तावेवइहपुनः शिशुपालकरूषजौजातौतौवैरानुबंधेमतवपश्यतःसतः हरौसमीयतुः ३८ ३९ ४० हेराजन् दमघोषसुतादीनांद्विषांहरेः सात्म्यंकथंइतित्वंपृष्टवान्तदाख्यातं ४१ किंच श्रीकृष्णस्यश्रीनृसिंहावतारस्यकथा ४२ प्रह्लादस्यचरितंभक्तिर्ज्ञानंवैराग्यं ४३ हरेस्तत्त्वंगुणकर्मानुवर्णनंचदेवदैत्यस्थानानांविपर्यासः ४४ भागवतानां धर्मः आत्मानात्मविवेकादिचएतत्सर्वमस्मिन्नाख्यानेकथितम् ४५ ४६ य.एतांमृगेंद्रलीलांदैत्येंद्रवधंप्रह्लादचरितंचपठेत् सःवैकुंठंएति ४७

भा०स० अहोप्रह्लादस्यभाग्यंयेनदेवो ( नृहरिः ) दृष्टःवयंतुमंदभाग्याइतिविषीदंतंप्रत्याहयूयमितित्रिभिः । येषांयुष्माकंगृहान्मुनयोऽभियांतिसर्वतःसमायांति । तत्कस्यहेतोः । एषुगृहेषुनरा अ०
कारंगूढंसत्श्रीकृष्णाख्यंपरंब्रह्मसाक्षादासमंताद्वसतीति ४८ ननुकृष्णोऽस्माकंमातुलेयःकथंब्रह्मेत्युच्यते । तत्राहसवाइति । सोऽयंब्रह्मैव । कथंभूतःमहद्भिर्विमृग्यंयत्कैवल्यनिर्वाणसुखं
निरूपाधिःपरमानंदःतदनुभूतिरूपःवोयुष्माकंखलुप्रियः । सुहृदित्यादिरूपोभवति । अर्हणीयःपूज्यःविधिकृदाज्ञानुवर्ती ४९ ननुब्रह्मरूपश्चेत्कथंद्वयःपुमहस्त्वस्त्रीपुरातिःकथंवाधर्माद्या
॥२७॥ चरणंतस्येत्यत्रआह । नयस्यरूपंतत्त्वंभवादिभिरपिधियास्वबुद्ध्यावस्तुतयाइदमित्थमितिसाक्षान्नोपवर्णितम् । सयुष्माकंस्वयमेवप्रसन्नः । अस्माकंतुमौनादिसाधनैस्तत्प्रसादःप्रार्थनी ॥१०॥
यएवेत्याह । मौनेति । सएवमात्वतांपतिर्नःप्रसीदतु । ननुप्रह्लादस्यगृहेषुपरंब्रह्मवसतिनैवतद्दर्शनार्थमुनयस्तद्गृहानभियांति नचतस्यब्रह्ममातुलेयादिरूपेणवर्तते नचस्वयमेवप्रसन्नंअतोयू
यमेवततोऽस्मत्तोपिभूरिभागाइति ५० नन्वन्यैर्दुष्करंत्रिपुरभेदादिकंश्रीरुद्रःकृतवान्सएवंभूतईश्वरोप्यस्यतत्त्वंनजानातीतिकथंइत्यपेक्षायांतस्यापितन्माहात्म्यादेवासौप्रभावोनकेवल
स्येतिवक्तुमाख्यानमुपाक्षिपतिसएषइति ५१ राजायुधिष्ठिरउवाच ( कस्मिन्निति ) । जगदीशितुर्देवस्यकीर्तिःकस्मिन्कर्मणिमयोहतवान् ( अनेनकृष्णेनउपचितातत्कथ्यताम् ) ५२
अनेनश्रीकृष्णेनउपबृंहितैःसंवर्धितैः ५३ हैमीचरौप्याचायसीचेतितिस्रःपुरोनिर्मायतेभ्योददावितिशेषः । दुर्लक्ष्यौअपायसंयोगौगमनागमनेयासांदुर्वितर्क्यःपरिच्छदोयासु ५४
( असुराणां ) सेनान्यःसेनापतयःपूर्ववैरंस्मरंतः ५५

## यूयंनृलोकेबतभूरिभागालोकंपुनानामुनयोऽभियांति ॥ येषांगृहानावसतीतिसाक्षाद्गूढंपरंब्रह्ममनुष्यलिंगम् ४८ सवाअयंब्रह्ममहद्विमृग्यंकैवल्यनिर्वाण सुखानुभूतिः ॥ प्रियःसुहृद्वःखलुमातुलेयआत्माऽर्हणीयोविधिकृद्गुरुश्च ४९ नयस्यसाक्षाद्भवपद्मजादिभीरूपंधियावस्तुतयोपवर्णितम् ॥ मौनेनभक्त्योपशमेनपूजितःप्रसीदतामेषससात्वतांपतिः ५० सएषभगवान्राजन्व्यतनोद्विहतंयशः ॥ पुरारुद्रस्यदेवस्यमयेनानंतमायिना ५१ ॥ राजोवाच ॥ कस्मिन्कर्मणिदेवस्यमयोऽहन्जगदीशितुः॥यथाचोपचिताकीर्तिःकृष्णेनानेनकथ्यताम् ५२ ॥ श्रीनारदउवाच ॥ निर्जिताअसुरादेवैर्युध्यनेनोपबृंहितैः॥ मायिनांपरमाचार्यंमयंशरणमाययुः ५३ सनिर्मायपुरास्तिस्रोहैमीरौप्यायसीर्विभुः ॥ दुर्लक्ष्यापायसंयोगादुर्वितर्क्यपरिच्छदाः ५४ ताभिस्तेऽसुरसेनान्योलोकांस्त्रीन्सेश्वरान्नृप ॥ स्मरंतोनाशयांचक्रुःपूर्ववैरमलक्षिताः ५५

हेयुधिष्ठिरयूयंनृलोकेबतभूरिभागाः अतः युष्माकंगृहानृषयआयांति श्रीकृष्णश्चवसति ४८ एवंप्रह्लादोन यतःतस्यगृहेपरब्रह्मनवसति तद्दर्शनार्थमुनयः नआभियंति
तस्यमातुलेयादिरूपेणकृष्णोनवर्तते नचतस्यस्वयंप्रसन्नःअतःततोपि अस्मत्तोपियूयंभूरिभागाः४९किंच यस्यस्वरूपंभवविरिंच्यादिभिः इदमित्थमितिनोपवर्णितम् एवंभूतः
भगवान्प्रसीदतां ५० ननुदुष्करंत्रिपुरभेदादिकंश्रीरुद्रः कृतवान् एवंभूतः शिवोपि अस्यतत्त्वंनजानातीतिकथंइत्यपेक्षायांभगवत्साहाय्यादेवअसौशिवप्रभावः नकेवलस्यइ ॥२७॥
तिवक्तुं आख्यानंउपक्षिपति हेराजन्पुरामयेनविहतंरुद्रस्ययशःसएषभगवान्व्यतनोत् ५१ ॥ युधिष्ठिरवाच।। अनेनकृष्णेनरुद्रस्यकीर्तिः कस्मिन्कर्मणिवर्द्धितातत्कथ्यताम्
५२ ॥ नारदउवाच ॥ पुरादेवैः जिताः असुराः मयंशरणंययुः ५३सः हेमरौप्यलोहमयीः तिस्रः पुरःनिर्माय तेभ्यः ददौ ५४ ताभिःतेसेश्वरान् लोकान् अवावंत ५५

५६ असंअभिमंत्रितम । शस्त्रंत्वनमिमंत्रितंपुरेषुव्यमुंचत् ५७ तत अरा: सूर्यमंडलात्मयूखसंदोहारश्मिसमूहाइवयतोयेभ्य: ५८ कूपरसेरवयं निर्मितकूपामृते ५९ वज्रसाराववज्रदृढांगा: महौजसोमहाबला:मेघभेदिनोविद्युद्रूपाग्नइव ६० ६१ कालेमध्याह्ने ६२ ६३ ६४ आत्मनोवाअन्यस्यवाद्वयोरपिवादैवेनदिष्टकल्पितंअपोहितुंपरिहर्तुंइहकश्चिदपीश्वर: समर्थोनास्ति असौश्रीकृष्ण: ( धर्मज्ञानादिभि:शक्तिभि: ) प्रधनंसंग्रामस्तत्साधनं ( रथसूतादियद्वधात् ) ६५ ( अथहर:सन्नद्धोरथमास्थाय ) ६६ अभिजितिमध्याह्ने ६७ विमानशतानिसंकुलानिसंकीर्णानियेषांतेदेवादय: ६८ स्वधामकैलासम् ६९ ७०

ततस्तेसेश्वरालोकाउपासाद्येश्वरंविभो ॥ त्राहिनस्तावकान्देवविनष्टांस्त्रिपुरालयै: ५६ अथानुगृह्यभगवान्माभैष्टेतिसुरान्विभु: ॥ शरंधनुषिसंधायपुरेष्वस्त्रंव्यमुंचत ५७ ततोऽग्निवर्णाइषवउत्पेतु सूर्यमंडलात् ॥ यथामयूखसंदोहानादृश्यंतपुरोयत: ५८ तै:स्पृष्टाव्यसव:सर्वेनिपेतुःस्मपुरौकस: ॥ तानानीयमहायोगीमय:कूपरसेऽक्षिपत् ५९ सिद्धामृतरसस्पृष्टावज्रसारामहौजस: ॥ उत्तस्थुर्मेघदलनावैद्युताइववह्नय: ६० विलोक्यभग्नसंकल्पंविमनस्कं वृषध्वजम् ॥ तदाऽयंभगवान्विष्णुस्तत्रोपायमकल्पयत् ६१ वत्सआसीत्तदाब्रह्मास्वयंविष्णुरयंहिगौ: ॥ प्रविश्यत्रिपुरंकालेरसकूपामृतंपपौ ६२ तेऽसुराह्यपिपश्यंतोनन्यषेधन्विमोहिता: ॥ तद्विज्ञायमहायोगीरसपालानिदंजगौ ॥ स्वयंविशोक:शोकार्तान्स्मरन्दैवगतिंचताम् ६३ देवोऽसुरोनरोऽन्योवानेश्वरोऽस्तीहकश्चन ॥ आत्मनोऽन्यस्यवादिष्टंदैवेनापोहितुंद्वयो: ६४ अथासौशक्तिभि:स्वाभि:शंभो:प्राधानिकंव्यधात् ॥ धर्मज्ञानविरक्त्यृद्धितपोविद्याक्रियादिभि: ६५ रथंसूतंध्वजंवाहान्धनुर्वर्मशरादियत् ॥ सन्नद्धोरथमास्थायशरंधनुरुपाददे ६६ शरंधनुषिसंधायमुहूर्तेऽभिजितीश्वर: ॥ ददाहतेनदुर्भेद्याहरोऽथत्रिपुरोनृप ६७ दिविदुंदुभयोनेदुर्विमानशतसंकुला: ६८ देवर्षिपितृसिद्धेशाजयेतिकुसुमोत्करै: ॥ अवाकिरन्जगुर्हृष्टानन्तृतुश्चाप्सरोगणा: ६९ एवंदग्ध्वापुरस्तिस्रोभगवान्पुरहानृप ॥ ब्रह्मादिभि:स्तूयमान:स्वधामप्रत्यपद्यत ७०

तदादेवाद्या:रुद्रंशरणंययु: ५६ तत:रुद्र:माभैष्टेतिअभयंदत्वापुरेषुअस्त्रंव्यमुंचत ५७ तदादैत्या: बाणैर्मृता:संत:पेतु: ५८ तदामहायोगीमय:रसकूपे तान् अक्षिपत् ५९ तेअमृतरसस्पृष्टा:वज्रसारा: उत्तस्थु: ६० तदाभग्नसंकल्पंशिवंवीक्ष्य अयंभगवान्उपायंअकरोत् ६१ तदाब्रह्मावत्स: आसीत् अयंविष्णुर्गौर्भूत्वात्रिपुरंप्रविश्यकूपामृतंपपौ तेअसुरा:पश्यंतोपि मोहिता:संत: नन्यषेधन् ६२ ६३ ६४ अथ असौकृष्ण:शंभो: संग्रामसाधनंरथसूतध्वजादिव्यधात् ६५ तत: रुद्र: सन्नद्ध:सन्रथंआ
११७ स्थाय ६६ अभिजिन्मुहूर्तेशरंमुमोच तेनतिस्र: पुर: ददाह तदादिविदुंदुभयोनेदु: पुष्पवृष्टि:पपात गंधर्वादय: ननृतु:जगुश्च ६७ ६८ ६९ एवंशिव:पुरत्रयं दग्ध्वा ब्रह्मादिभि:स्तुत: सन्स्वधामययौ ७०

आदितआरभ्यस्कंधार्थंनिगमयति । एवंविधानीति । नृलोकंनराकारं आत्मनोविडंबमानस्यअनुकुर्वतः ७१ ॥ इतिश्रीभागवतेमहापुराणेसप्तमस्कंधेटीकायांत्रिपुरविजयोनामदशमो
ऽध्यायः ॥ १० ॥ ॥ एकादशेनृणांधर्माःसाधारण्येनवर्णिताः । विशेषेणचवर्णानांमुख्यामुख्याश्चयोषिताम् ॥ १ ॥ तदेवंदशभिर्ज्ञानभक्तियोगावुदीरितौ ॥ अथपंचभिरध्यायैःकर्मयो
गोऽनुवर्ण्यते ॥ २ ॥ दैत्यपतेःप्रह्लादस्य । साधूनांसभासुसभाजितंस्तुतंईहितंचरितंश्रुत्वापुनर्नारदंपप्रच्छ । कथंभूतस्येहितम् । महत्तमानामग्रण्योमुख्यस्य । तत्रहेतुः उरुक्रमे
( भगवति ) आत्मामनोयस्य १ श्रवणेच्छायाहेतुःयद्यत्रोधर्मात् । अनुष्ठितात्परंज्ञानंभक्तिंचविंदति २ ३ ननुस्मृतिकारैर्धर्मउक्तएवतत्राह नारायणपराइति ४ अजायश्रीनाराय
णाय । तस्यैव ( नारायणस्य ) मुखाच्छ्रुतम् ५ तन्मुखादात्मनःश्रवणंसंभावयन्निरिनष्टि यइति । योभगवान्दाक्षायण्यांमूर्त्यांनारायणसंज्ञयाऽवतीर्यआस्तेतन्मुखात् ६
प्रथमंतावद्धर्मेप्रमाणमाह । धर्मेति । धर्मस्यमूलंप्रमाणम् । तद्विदांवेदविदां ( स्मृतंस्मृतिश्च । चकारात्सदाचारश्च । ) येनचात्माभनःप्रसीदतितुष्यति । तथाचयाज्ञवल्क्यः 'श्रुतिःस्मृ
तिःसदाचारःस्वस्यचप्रियमात्मनः । सम्यक्संकल्पजःकामोधर्ममूलमिदंस्मृतम्'इति । मनुश्च । 'वेदोऽखिलोधर्ममूलंस्मृतिशीलेचतद्विदाम् । आचारश्चैवसाधूनामात्मनस्तुष्टिरेवच'इति ७

एवंविधान्यस्यहरेःस्वमाययाविडंबमानस्यनृलोकमात्मनः ॥ वीर्याणिगीतान्यृषिभिर्जगद्गुरोर्लोकंपुनानान्यपरंवदामिकिम् ७१ ॥ ॥ इतिश्रीभागवते
महापुराणेसप्तमस्कंधेत्रिपुरविजयोनामदशमोऽध्यायः १० ॥ ॥ छ ॥ ॥ श्रीशुकउवाच ॥ श्रुत्वेहितंसाधुसभासभाजितंमहतमाग्रण्यउरुक्रमात्म
नः ॥ युधिष्ठिरोदैत्यपतेर्मुदायुतःपप्रच्छभूयस्तनयंस्वयंभुवः १ ॥ युधिष्ठिरउवाच ॥ भगवन्श्रोतुमिच्छामिनृणांधर्मंसनातनम् ॥ वर्णाश्रमाचारयुतं
यत्पुमान्विंदतेपरम् २ भवान्प्रजापतेःसाक्षादात्मजःपरमेष्ठिनः ॥ सुतानांसंमतोब्रह्मन्तपोयोगसमाधिभिः ३ नारायणपराविप्राधर्मंगुह्यंपरंविदुः ॥ करु
णाःसाधवःशांतास्त्वद्विधानतथापरे ४ ॥ ॥ श्रीनारदउवाच ॥ ॥ नत्वाभगवतेऽजायलोकानांधर्मसेतवे ॥ वक्ष्येसनातनंधर्मंनारायणमुखाच्छ्रुतम् ५
योऽवतीर्यात्मनोंऽशेनदाक्षायण्यांतुधर्मतः ॥ लोकानांस्वस्तयेऽध्यास्तेतपोबदरिकाश्रमे ६ धर्ममूलंहिभगवान्सर्ववेदमयोहरिः ॥ स्मृतंचतद्विदांराजन्ये
नचात्माप्रसीदति ७

एवंरुद्रयशःव्यतनोत् एवंकृष्णवीर्याणिजगत्पावित्राणिबहूनिसंति अपरंकिंवदामि ७१ इतिसप्तमेदशमः ॥ १० ॥ श्रीशुकउवाच ॥ युधिष्ठिरः दैत्यपतेः नृसिंहस्यच आ
ख्यानं श्रुत्वामुदायुतः पुनर्नारदंपप्रच्छ १ ॥ युधिष्ठिरउवाच ॥ हेनारदनृणांवर्णाश्रमाचारयुतंधर्मंश्रोतुमिच्छामि यदाचरणेनपुमान्ज्ञानंभक्तिंचविंदति २ ३ ४ ॥ नारद
उवाच ॥ हेधर्म भगवते नत्वा नारायणमुखात्श्रुतंधर्मंवक्ष्ये ५ ६ येन आत्माप्रसीदति ७

तत्रतावन्नरमात्रसाधारणंधर्ममाह । सत्यमितिपंचभिः । तपएकादश्युपवासादि । ईक्षायुक्तायुक्तविवेकः । शमोमनसःसंयमः । दमोबाह्येंद्रियाणाम् । त्यागोदानम् । स्वाध्यायोयथोचितजपः ८ संतोषोदैवलब्धेनालंबुद्धिः । समदृशांमहतांसेवा । ग्राम्येहोपरमःप्रवृत्तकर्मभ्योनिवृत्तिः । विपर्ययेहेक्षा निष्फलक्रियाणामीक्षणम् । मौनंवृथाप्रलापनिवृत्तिः । आत्मविमर्शनंदेहादिभ्यतिरिक्तात्मानुसंधानम् ९ आत्मेतिदेवतेतिचबुद्धिः १० अस्यश्रीकृष्णस्य । इज्याअर्चनम् ११ एवंत्रिंशल्लक्षणवान्धर्मः १२ इदानींवर्णधर्मान्वक्तुंद्विजानांलक्षणमाह । संस्कारामंत्रवंतोगर्भाधानादयोयस्मिन्नविच्छिन्नाःसद्विजः । तर्हिशूद्रस्यापिसंस्काराविच्छेदेसतिद्विजत्वंस्यात्तत्राह । अजोब्रह्मायंत्रैर्मंत्रसंस्कारयुक्तंजगादमद्विजः । शूद्रंतुनयंत्रवत्संस्कारयुक्तंजगाद । नचोपनयनवत्तं अतोनासाद्विजः । तथाचस्मृतिः । ‘ विवाहमात्रंसंस्कारंशूद्रोपिलभतांसदा । नकेनचित्समसृजच्छंदसातंप्रजापतिः ’ इति । श्रुतिश्च । ‘ गायत्र्याब्राह्मणमसृजत्त्रिष्टुभाराजन्यंजगत्यावैश्यंनकेनचिच्छूद्रम् ’ इति । अतोविवाहव्यतिरिक्तसंस्कारस्यानावश्यकत्वात्उपनयनस्यसुतरांनिषेधान्नतस्यद्विजत्वमित्यर्थः । पाटांतरेवैदिकादयइतिगर्भाधानाद्याइत्यर्थः । त्रैवर्णिकानामावश्यकान्धर्मानाह । इज्येति । जन्मनाविशुद्धेनकुलेनकर्मणाचआचारेणचअवदातानांशुद्धानांदुष्कुलानांदुराचाराणांचनैतानिविहितानीत्यर्थः ब्रह्मचर्याद्याश्रमविहिताःक्रियाश्च शूद्रस्यतुवर्णधर्मएव । आश्रमभेदकृतविशेषाभावात् १३ ब्राह्मणादीनामपिचतुर्णांवृत्तिरूपान्धर्मानाह । विप्रस्येतिसार्धैःसप्तभिः । विप्रस्यषट्कर्माणिविहितानीत्यनुषंगः । तत्रत्वध्यापनंयाजनंप्रतिग्रहश्चजीविका । यथाऽऽहमनुः । ‘ षण्णांतुकर्मणामस्यत्रीणिकर्माणिजीविका । याजनाध्यापनेचैवविशुद्धाच्चप्रतिग्रहः ’ इति । अन्यस्यक्षत्रियस्य अप्रतिग्रहइतिप्रतिग्रहातिरिक्तंयाजनमध्यापनंचापयनुजानाति । वक्ष्यतिचानंतरमेव क्षतेराजन्याभिति । श्रूयतेच । अश्वपतिकैकेयप्रभृतीनांक्षत्रियाणामुपदेष्टृत्वादिति । प्रजापालनेऽधिकृतस्यक्षत्रियस्यवृत्त्यंतरमाह राज्ञइति । आदिशब्देनदंडशुल्कादि १४

सत्यंदयातपःशौचंतितिक्षेक्षाशमोदमः ॥ अहिंसाब्रह्मचर्यंचत्यागःस्वाध्यायआर्जवम् ८ संतोषःसमदृक्सेवाग्राम्येहोपरमःशनैः ॥ नृणांविपर्ययेहेक्षामौनमात्मविमर्शनम् ९ अन्नाद्यादेःसंविभागोभूतेभ्यश्चयथार्हतः ॥ तेष्वात्मदेवताबुद्धिःसुतरांनृषुपांडव १० श्रवणंकीर्तनंचास्यस्मरणंमहतांगतेः ॥ सेवेज्यावनतिर्दास्यंसख्यमात्मसमर्पणम् ११ ॥ नृणामयंपरोधर्मःसर्वेषांसमुदाहृतः ॥ त्रिंशल्लक्षणवान्राजन्सर्वात्मायेनतुष्यति १२ संस्कारायत्राविच्छिन्नाःसद्विजोऽजोजगादयम् ।. इज्याध्ययनदानानिविहितानिद्विजन्मनाम् ॥ जन्मकर्मावदातानांक्रियाश्चाश्रमचोदिताः १३ विप्रस्याध्ययनादीनिषडन्यस्याप्रतिग्रहः ॥ राज्ञोवृत्तिःप्रजागोप्तुरविप्राद्वाकरादिभिः १४

सत्यं १ दया २ तपः ३ शौचं ४ तितिक्षा ५ ईक्षानाम युक्तायुक्तविवेकः ६ शमः ७ दमः ८ अहिंसा ९ ब्रह्मचर्यं १० दानं ११ स्वाध्यायः १२ आर्जवं १३ संतोषः १४ महत्सेवा १५ प्रवृत्तकर्मनिवृत्तिः १६ निष्फलक्रियाणामीक्षणं १७ मौनम् १८ आत्मविमर्शनम् १९ अन्नाद्यादेःसंविभागः २० भूतेषुआत्मदेवताबुद्धिः २१ श्रवणादिभक्तिभेदाः ९ ( ३० ) ८ ९ १० ११ अयंत्रिंशल्लक्षणवान् सर्वेषांपरोधर्मः कथितः १२ द्विजानांलक्षणंआह गर्भाधानादिसंस्कारा यस्मिन्नविच्छिन्नाः सः द्विजः तदितरः शूद्रः द्विजन्मनांइज्याध्ययनदानानिविहितानि शूद्रस्यतुवर्णधर्मएव १३ विप्रस्यअध्ययनादिषट्कर्माणिविहितानि तत्रतु अध्यापनं याजनं शुद्धप्रतिग्रहश्चजीविका १४

वार्ताकृषिवाणिज्यादिलक्षणावृत्तिर्यस्यसः । शूद्रस्याद्द्विजशुश्रूषाविहिता । स्वामिनोद्विजस्यतुशुश्रूषावृत्तिश्चभवेत् । ( स्वामिनःसकाशाद्वृत्तिर्जीवनमितिवा ) १५ विप्रस्यमुख्यानुकल्पभेदेनवृत्त्यंतराण्याह । विचित्राकृष्यादिरूपावार्ता । शालीनंअयाचितंयाचावृत्तिनैवप्राप्तमित्यर्थः । यायावरंप्रत्यहंधान्ययाच्ञा । शिलोंछनामतिद्वयमप्येकीकृत्यचतुर्द्धेत्युक्तम् । तत्राशिलंशालिक्षेत्रादौस्वामित्यक्तकणिशोपादानम् । उंछनमापणादिपतितकणोपादानम् । ‘ उंछःकणशआदानंकणिशोपार्जनंशिलम् ’ इत्यभिधानात् । श्रेयसीउत्तमा १६ वृत्तिव्यवस्थांदर्शयन्आपद्वृत्तीराह । जघन्योनीचःउत्तमांअध्यापनादिरूपांराजन्यवृत्तिंक्षत्रियंविनानभजेत । ( राजन्यस्तुप्रतिग्रहादन्यांभजेत । आपत्सुपर्वंशोवृत्तयःसर्वेषांभवंति । ) १७ चतुर्विधांपूर्वोक्तांविप्रवृत्तिंइतरेषामपिदर्शयन्नाह । ऋतामृताभ्यामिति १८ श्लोकंव्याचष्टेऋतमिति १९ तांश्ववृत्तिम् । सदाआपद्यपि । तयोस्त्यजनेहेतुमाह । सर्ववेदमयइति २० वर्णानामभिव्यंजकरूपान्धर्मानाह शमइतिचतुर्भिः । अच्युतात्मत्वंश्रीविष्णुपरत्वम् २१ शौर्यंयुद्धोत्साहः वीर्यंप्रभावः तेजःप्रागल्भ्यं त्यागोदानं आत्मनोमनसोजयः २२ ( देवेऽभीष्टदेवतेगुरौअच्युतेचभक्तिःत्रिवर्गेणधर्मार्थकामैःपरितोषणम् ) २३ अमंत्रयज्ञःनमस्कारेणैवपंचयज्ञानुष्ठानम् । तथाचयाज्ञवल्क्यः ‘ नमस्कारेणमंत्रेणपंचयज्ञान्नहापयेत् ’ इति २४ स्त्रीधर्मानाह । स्त्रीणामितिपंचभिः । पतिरेवदेवोयासाम् । तस्यपत्युःशुश्रूषातदनुकूलताच । तस्यभर्तुर्बंधुषुभागिनेयादिषुअनुवृत्तिःभर्तृवद्वर्तनम् । यथाभर्तातेषुवर्ततेतथावर्तनमित्यर्थः । तस्यव्रतंनियमस्तस्यधारणम् । एतच्चतुष्टयंपतिव्रतानांलक्षणंधर्मश्च २५

वैश्यस्तुवार्तावृत्तिश्चनित्यंब्रह्मकुलानुगः ॥ शूद्रस्याद्द्विजशुश्रूषावृत्तिश्चस्वामिनोभवेत् १५ वार्ताविचित्राशालीनंयायावरशिलोंछनम् ॥ विप्रवृत्तिश्चतुर्द्धेयंश्रेयसीचोत्तरोत्तरा १६ जघन्योनोत्तमांवृत्तिमनापदिभजेन्नरः ॥ ऋतेराजन्यमापत्सुसर्वेषामपिसर्वशः १७ ऋतामृताभ्यांजीवेतमृतेनप्रमृतेनवा ॥ सत्यानृताभ्यांजीवेतनश्ववृत्त्याकथंचन १८ ऋतमुंछशिलंप्रोक्तममृतंयदयाचितम् ॥ मृतंतुनित्ययाच्ञास्यात्प्रमृतंकर्षणंस्मृतम् १९ सत्यानृतंतुवाणिज्यंश्ववृत्तिर्नीचसेवनम् ॥ वर्जयेत्तांसदाविप्रोराजन्यश्चजुगुप्सिताम् ॥ सर्ववेदमयोविप्रःसर्वदेवमयोनृपः २० शमोदमस्तपःशौचंसंतोषःक्षांतिरार्जवम् ॥ ज्ञानंदयाऽच्युतात्मत्वंसत्यंचब्रह्मलक्षणम् २१ शौर्यंवीर्यंधृतिस्तेजस्त्यागआत्मजयःक्षमा ॥ ब्रह्मण्यताप्रसादश्चरक्षाचक्षत्रलक्षणम् २२ देवगुर्वच्युतेभक्तिस्त्रिवर्गपरितोषणम् ॥ आस्तिक्यमुद्यमोनित्यंनैपुण्यंवैश्यलक्षणम् २३ शूद्रस्यसन्नतिःशौचंसेवास्वामिन्यमायया ॥ अमंत्रयज्ञोह्यस्तेयंसत्यंगोविप्ररक्षणम् २४ स्त्रीणांचपतिदेवानांतच्छुश्रूषानुकूलता ॥ तद्बंधुष्वनुवृत्तिश्चनित्यंतद्व्रतधारणम् २५

क्षत्रियस्य आपदियाजनमध्यापनंच अनापदितुखड्गवृत्तिः वैश्यस्यतुवार्तावृत्तिःशूद्रस्याद्द्विजानांशुश्रूषाविहिता १५ विप्रस्यमुख्यवृत्तिमाह कृष्यादिः अयाचितं प्रत्यहंधान्ययाच्ञा शिलोंछनम् इयंउत्तरोत्तराउत्तमा १६ किंच नीचःअनापदिराजन्यांविनाउत्तमांवृत्तिंनभजेत् आपत्सु सर्वेषामपिसर्वशः १७ अथापिश्ववृत्त्यादिकथंचननजीवेत १८ १९ २० शमःदम तपः शौचंसंतोषः क्षांतिरार्जवम् ज्ञानंदयाच्युतात्मत्वं सत्यंचब्राह्मणलक्षणानि २१ शौर्यंवीर्यंधृतिस्तेजस्त्यागआत्मजयःक्षमा ब्रह्मण्यताप्रसादःरक्षाचक्षत्रलक्षणानि २२ देवादिषुभक्तिः त्रिवर्गपोषणं आस्तिक्यं उद्यमः वैश्यलक्षणम् २३ सेवादिशूद्रलक्षणं २४ स्त्रीणांधर्मः पतिसेवादि तद्बंधुषु अनुवृत्तिश्च २५

किंच । संमार्जनोपलेपाभ्यांइत्यादेः पौर्वापर्ये दिव्युत्तरेणान्वयः ( संमार्जनंमार्जन्यारजोपाकरणम् । उपलेपोगोमयोदकेनलेपनं गृहमंडलवर्तनैर्गृहेरंगवल्ल्याद्यलंकरणैः । मंडिताकुंकुमा दिनाऽलंकृता ) परिमृष्टाउद्वर्तनादिनानिर्मलीकृताःपरिच्छदागृहोपकरणानियया २६ ( उच्चैःप्रयाससाध्यैः अवचैरनायाससाध्यैःकामैर्विषयैः ) २७ किंच । संतुष्टायथालाभेन । तावन्मात्र भोगेष्वलोलुपा । दक्षाअनलसा । प्रियासत्याचवाग्यस्याः । सर्वत्रापिअप्रमत्ताअवहिता । अपतितंमहापातकरहितम् । यथाहयाज्ञवल्क्यः ' आशुद्धेःसंप्रतीक्ष्योहिमहापातकदूषितः ' इति २८ तत्परासतीश्रीर्हरिमिवभजेत् । हर्यात्मनापत्यासह २९ प्रतिलोमजानुलोमजानांवृत्तिमाह ( वृत्तिरिति । संकरजातीनां ) तत्तत्कुलकृताकुलपरंपराप्राप्ता । परंपराप्राप्तमपि चौर्यहिंसादिकंप्रतिषेधति । अचोराणामपापानामिति । तत्रप्रतिलोमजप्रदर्शनार्थंकांश्चिद्विशेषानाह अंत्यजेति ' रजकश्चर्मकारश्चनटोबुरुडएवच । कैवर्तमेदभिल्लाश्चसप्तैते अंत्यजाः स्मृताः । ' अंतेवसायिनस्तुचांडालपुल्कसादयः । तेषांपरंपराप्राप्तावस्त्रनिर्णेजनादिवृत्तिरित्यर्थः ३० श्रेष्ठादपिपरधर्मान्नीचोपिस्वधर्मएवश्रेयानित्याह । प्रायइति । स्वभावेनवर्णा दिप्रकृत्याविहितोधर्मःशर्मकृत्सुखहेतुःस्मृतः । कैः वेदएवदृक्चक्षुर्येषांतैः । भगवताचोक्तम् । ' श्रेयान्स्वधर्मोविगुणःपरधर्मात्स्वनुष्ठितात् ' इति ३१ ननुस्वाभाविकत्यकर्मणोबंधहेतु त्वात्कथंसुखहेतुत्वंतत्राहवृत्त्येति ३२ ननुकाम्यानिकर्माणिकुर्वंतस्तत्फलोपभोगपरस्यकथंनैर्गुण्यंस्यात् । तदुक्तंप्रह्लादेन । ' औपस्थ्यजैह्व्यंबहुमन्यमानःकथंविरज्येतदुरंतमोहः ' इति । तत्राधिकारभेदेनव्यवस्थांसदृष्टांतमाह । उप्यमानमितिद्वाभ्यां । ( मुहुरुप्यमानंबीजसंतानेनयुज्यमानं । ) पुनःसूत्यैसम्यक्प्रसवाय ३३ कामाआशेरतेवासनारूपेणयस्मिन् । तत् ( तथाकामबिंदुभिर्नविरज्येत । ) अयंभावः । उत्कटवासनाविष्टस्यसहसैवकामत्यागासंभवात्वेदोक्तनियमेनबहुशःकामान्भुंजानस्यैवानित्यनैमित्तिकैर्विशुद्धचित्तस्यतद्दोषदर्शनेन ययातिसौभरिप्रमुखानामिवशनैर्विरागोभवति । यथासवीर्यक्षेत्रंशनैर्निर्वीर्यंभवति । यथाचप्रज्वलितोऽग्निर्नघृतबिंदुभिःशाम्यति । महताघृतपूरेणशाम्यत्येव तद्वदिति । प्रह्लादकृतस्तु कौमारएवनिवृत्त्युपदेशोमंदवासनानातेषामधिकारेण । ( संगच्छते ) तदुक्तंतत्रैव । ' बालानदूषितधियोद्वंद्वारामेरितेहितैः ' इति अतःसर्वमनवद्यम् ३४

संमार्जनोपलेपाभ्यांगृहमंडलवर्तनैः ॥ स्वयंचमंडितानित्यंपरिमृष्टपरिच्छदा २६ कामैरुच्चावचैःसाध्वीप्रश्रयेणदमेनच ॥ वाक्यैःसत्यैःप्रियैःप्रेम्णाकाले कालेभजेत्पतिम् २७ संतुष्टाऽलोलुपादक्षाधर्मज्ञाप्रियसत्यवाक् ॥ अप्रमत्ताशुचिःस्निग्धापतिंत्वपतितंभजेत् २८ यापतिंहरिभावेनभजेच्छ्रीरिवतत्प रा ॥ हर्यात्मनाहरेर्लोकेपत्याश्रीरिवमोदते २९ वृत्तिःसंकरजातीनांतत्तत्कुलकृताभवेत् ॥ अचोराणामपापानामंत्यजांतेवसायिनाम् ३० प्रायःस्वभाव विहितोनृणांधर्मोयुगेयुगे ॥ वेददृग्भिःस्मृतोराजन्प्रेत्यचेहचशर्मकृत् ३१ वृत्त्यास्वभावकृतयावर्तमानःस्वकर्मकृत् ॥ हित्वास्वभावजंकर्मशनैर्निर्गुणता मियात् ३२ उप्यमानंमुहुःक्षेत्रंस्वयंनिर्वीर्यतामियात् ॥ नकल्पतेपुनःसूत्याउप्तंबीजंचनश्यति ३३ एवंकामाशयंचित्तंकामानामतिसेवया ॥ विरज्येत यथाराजन्नाग्निवत्कामबिंदुभिः ३४

किंच गृहसंमार्जनादिभिः उच्चावचैः कामैः प्रियवाक्यैः २६ २७ २८ यास्त्रीपतिंहरिभावेनभजते सावैकुंठे पत्यासहश्रीरिवमोदते २९ संकरजातीनांचतत्तत्कुलकृता वृत्तिः ३० हेराजन् अयंनृणांधर्मः इहपरत्रचवेददर्शिभिः सुखहेतु स्मृतः ३१ ३२ ३३ ३४

शमादिभिरेवब्राह्मणादिव्यवहारोमुख्यःनजातिमात्रादित्याह यस्येति । यद्यदिअन्यत्रवर्णांतरेपिदृश्येततर्हितद्वर्णांतरंतेनैवलक्षणनिमित्तेनैववर्णेनविनिर्दिशेत् । नजातिनिमित्ते
नेत्यर्थः । ( यद्वादैववशाज्जातिभेदेपिलक्षणवशाज्जन्मांतरेतेनैववर्णेनविनिर्दिशेत् ) ॥ ३५ ॥ इतिश्रीभागवतेमहापुराणेसप्तमस्कंधेटीकायांयुधिष्ठिरनारदसंवादेसदाचारनिर्णयेएका
दशोऽध्यायः ॥ ११ ॥ ॥ ७ ॥ द्वादशेत्वर्थधर्मोब्रह्मचारिवनस्थयोः ॥ चतुर्णामाश्रमाणांचसाधारण्येनकथ्यन ॥ १ । वर्णादीनांधर्माउक्ताःइदानीमाश्रमधर्माउच्यंते । तत्रादौम
न्द्वादशेऽध्यायेब्रह्मचारिवनस्थयोराचारमाश्रमुर्गासाधारणाश्चोच्यंते त्रयोदशेयतेर्धर्माः चतुर्दशेगृहस्थस्य पंचदशेसर्वधर्मसारसंग्रहः । ब्रह्मचारीगुरुकुलेगुरोःप्रियाःक्रियाःकुर्वीत
दयस्मैप्रयच्छतितस्यगृहेवसन्मनुर्गादीनुपासीतेत्युत्तरेणान्वयः १ ब्रह्मगायत्रींजपन्संध्यात्रयमप्युपासीत । उभेसंध्येतुयतवाक् ( उपासीत ) सायंप्रातःसंध्याकालनिमित्तंमौनंकुर्यादि
त्यर्थः २ सुयंत्रितःसंकुचितावयवःछंदसामुपक्रमादौमुरोश्चरणौनमेत् ३ यथोदितं ( मौंजीब्राह्मणस्य ) पालाशोब्राह्मणस्येत्यादिनियममनतिक्रम्यजटाधारणंतुकेशप्रसाधनाभाव
मात्रम् ४ ५ यावदर्थंयथोपयोगमेव ६ बृहद्व्रतोब्रह्मचर्यवान् । गृहस्थव्यतिरिक्तःसर्वोपिप्रमदानांगाथामपिवर्जयेत् । तत्रहेतुः । इंद्रियाणिचरुवंति । संयतस्यापिमनोहरंतीति ७
केशप्रसाधनंकेशसंस्कारंउन्मर्दमंगमर्दनंअन्याभिरपियुवतिभिस्तरुणीभिः ) ८ नकारयेदित्यत्रहेतुः । नन्विति । रहस्कांते । अन्यदाकेशप्रसाधनादिव्यतिरिक्तावसरेअनेकान्तावसरे
वा । यावदर्थंतदुक्तंकुर्यात् ९

यस्ययल्लक्षणंप्रोक्तंपुंसोवर्णाभिव्यंजकम् ॥ यदन्यत्रापिदृश्येततत्तेनैवविनिर्दिशेत् ३५ ॥ ॥ इतिश्रीभागवतेमहापुराणेसप्तमस्कंधेयुधिष्ठिरनारदसंवा
देसदाचारनिर्णयेएकादशोऽध्यायः ११ ॥ ॥ ७ ॥ ॥ श्रीनारदउवाच ॥ ब्रह्मचारीगुरुकुलेवसन्दांतोगुरोर्हितम् ॥ आचरन्दासवन्नीचोगुरौसुदृ
ढसौहृदः १ सायंप्रातरुपासीतगुर्वग्न्यर्कसुरोत्तमान् ॥ संध्येउभेचयतवाग्जपन्ब्रह्मसमाहितः २ छंदांस्यधीयीतगुरोराहूतश्चेत्सुयंत्रितः ॥ उपक्रमेऽवसानेच
चरणौशिरसानमेत् ३ मेखलाजिनवासांसिजटादंडकमंडलून् ॥ बिभृयादुपवीतंचदर्भपाणिर्यथोदितम् ४ सायंप्रातश्चरेद्भैक्ष्यंगुरवेतन्निवेदयेत् ॥ भुंजी
तयद्यनुज्ञातोनोचेदुपवसेत्क्वचित् ५ सुशीलोमितभुग्दक्षःश्रद्दधानोजितेंद्रियः ॥ यावदर्थंव्यवहरेत्स्त्रीषुस्त्रीनिर्जितेषुच ६ वर्जयेत्प्रमदागाथामगृहस्थो
बृहद्व्रतः ॥ इंद्रियाणिप्रमाथीनिहरंत्यपियतेर्मनः ७ केशप्रसाधनोन्मर्दस्नपनाभ्यंजनादिकम् ॥ गुरुस्त्रीभिर्युवतिभिःकारयेन्नात्मनोयुवा ८ नन्वग्निःप्रम
दानामघृतकुंभसमःपुमान् ॥ सुतामपिरहोजह्यादन्यदायावदर्थकृत् ९

-३५ ॥ इतिसप्तमेएकादशः ११ ॥ ७ ॥ नारदउवाच ॥ ब्रह्मचारीगुरुकुलेवसन्दांतःगुरोर्हितं आचरेत् १ सायंप्रातःगुर्वग्न्यर्कसुरोत्तमान्उपासीत गायत्रींजपन्संध्यात्र
यंउपासीत सायंप्रातःसंध्यानिमित्तंमौनंकुर्यात् २ गुरुणाआहूतश्चेत्छंदांसिअधीयीत आदौअंतेचतच्चरणौनमेत् ३ पक्वपाणिःसन्मेखलाजिनवासांसिजटादंडकमंडलून्
उपवीतंचबिभृयात् ४ सायंप्रातःभैक्ष्यंचरेत् तद्गुरवेनिवेदयेत् तेनानुज्ञातश्चेत्भुंजीतनोचेत्उपवसेत् ५ जितेंद्रियःसन्स्त्रीषुनिर्जितेषुच यावदर्थंव्यवहरेत् ६ प्रमदागाथांवर्जयेत्
७ केशप्रसाधनोन्मर्दस्नपनाभ्यंजनादिकंयुवासन्युवतीभिःगुरुस्त्रीभिःनकारयेत् ८ नन्वग्निःप्रमदानाम घृतकुंभमयःपुमान् अतःसुतामपिरहोजह्यात् ९

ननुमध्यात्मादातकश्मलत्वाचस्त्ययत्यन्तप्रायस्यादातजह्मादातक्रायमतानवस्तत्राह । कल्पयित्वेति । आत्मनास्वरूपसाक्षात्कारेणद्वंद्वेंद्रियादिभासमिदंकल्पयित्वायावत् वसौजीवईश्वरःस्वतंत्रो ( भवेत्तावज्जह्यादयात्रदेवं ) नभवेत् तावद्वैतंअहंपुत्रानियंस्त्रीत्यादिभेदोनविरमेत् । ततःकिमित्यतआह । ततोहिद्वैतादविपर्ययःपुनःध्यासेनयोग्यता बुद्धिः । अतोजह्यादेवेत्यर्थः १० एतत्सर्वंतुशीलइत्याद्युक्तं ( ब्रह्मचारिधर्मजातम् ) गृहस्थस्यविशेषमाह । गुरुवृत्तिरिति ( ऋतुगामिनःऋतौभार्यांगच्छतः ) ११ अंजनादीनांआर्भि षंतानांद्वंद्वैक्यम् । तत्रअंजनंशरीरस्य । अभ्यंजनंशिरसः । स्त्रियंचअत्रलेखंवाचित्रकर्म । स्त्रीणांकुड्यादौलेखनंवा । तन्निरीक्षणंवा । अत्राभ्यंगादिस्वरूपतोनिषिध्यते । पूर्वंतुकथं चिदापदिप्राप्तमपिस्त्रीकर्तृकंनिषिद्धमितिभेदः १२ अंगैःशिक्षादिभिरुपनिषद्भिश्चसहितांवेदत्रयींअधीत्यअवबुध्यचतदर्थंचविचार्य । यावदर्थंस्वाधिकारानुसारेण १३ यदीश्वरःशक्तस्त र्हिगुरोःकामंअपेक्षितंवरंदत्त्वायथाधिकारंगृहस्थाद्याश्रमंस्वीकुर्यात्तत्रैववावसेत् नैष्ठिकःस्यादित्यर्थः १४ स्वधामभिःस्वाश्रयैर्भूतैःजीवैःसहतन्नियंतृतया ( प्रविष्टवदपोत्रजंपश्येत् ) १५ चरन्एवमाचरन्विदितंविज्ञानंविज्ञेयंयेन ( सः ) १६ मुनिर्वानप्रस्थःऋषिलोकंमहर्लोकम् १७ कृष्टपच्यंकर्षणादिनापक्वम् । अकृष्टंअकृष्टपच्यमपिअकालतःपाककालात्पूर्वमेव निष्पन्नमित्यर्थः ( आममपक्वं ) अर्कपक्वंवाफलादिमाहरेत्अश्नीयात् १८ वन्यैर्नीवारादिभिःचरुपुरोडाशादीन्कालेचोदितान् ( तत्तत्कालविहितान्नित्यान् ) पुराणंपूर्वसंचितम् १९ (अभ्यर्थंअग्निरक्षणार्थंउटजंपर्णशालारूपंशरणंगृहम् । स्वयंतु ) हिमादीन्सहतेतथा २० केशादीन्मलंचाप्रक्षालनेनमालिन्यंदधत्कमंडल्वादींश्चदधत् ( अग्निपरिच्छदान्दर्भादीन् )२१

कल्पयित्वात्मनायावदाभासमिदमीश्वरः ॥ द्वैतंतावन्नविरमेत्ततोह्यस्यविपर्ययः १० एतत्सर्वंगृहस्थस्यसमाम्नातंयतेरपि ॥ गुरुवृत्तिर्विकल्पेनगृहस्थस्यर्तुगामिनः ११ अंजनाभ्यंजनोन्मर्दस्त्र्यवलेखामिषंमधु ॥ स्रग्गंधलेपालंकारान्त्यजेयुर्येधृतव्रताः १२ उषित्वैवंगुरुकुलेद्विजोधीत्यावबुध्यच ॥ त्रयींसांगोपनिषदंयावदर्थंयथाबलम् १३ दत्वावरमनुज्ञातोगुरोःकामंयदीश्वरः ॥ गृहंवनंवाप्रविशेत्प्रव्रजेत्तत्रवावसेत् १४ अग्नौगुरावात्मनिचसर्वभूतेष्वधोक्षजम् ॥ भूतैःस्वधामभिःपश्येदप्रविष्टंप्रविष्टवत् १५ एवंविधोब्रह्मचारीवानप्रस्थोयतिर्गृही ॥ चरन्विदितविज्ञानःपरंब्रह्माधिगच्छति १६ वानप्रस्थस्यवक्ष्यामिनियमान्मुनिसंमतान् ॥ यानातिष्ठन्मुनिर्गच्छेदृषिलोकमिहांजसा १७ नकृष्टपच्यमश्नीयादकृष्टंवाप्यकालतः ॥ अग्निपक्वमथामंवाअर्कपक्वमुताहरेत् १८ वन्यैश्चरुपुरोडाशान्निर्वपेत्कालचोदितान् ॥ लब्धेनवेनवेऽन्नाद्येपुराणंतुपरित्यजेत् १९ अग्न्यर्थमेवशरणमुटजंवाद्रिकंदरम् ॥ श्रयेतहिमवाय्वग्निवर्षार्कातपसाट्स्वयम् २० केशरोमनखश्मश्रुमलानिजटिलोदधत् ॥ कमंडल्वजिनेदंडवल्कलाग्निपरिच्छदान् २१

एतत्सर्वंगृहस्थस्ययतेरपिउक्तं १० ११ एववेदशास्त्रादीन्अधीत्यगुरवेदक्षिणांदत्वागृहंवनंवाप्रविशेत् प्रव्रजेत्तत्रवावसेत् १२ १३ १४ १५ एवंविधोब्रह्मचारीवानप्रस्थो यतिर्गृही चरन्विदितविज्ञानःपरंब्रह्माधिगच्छति १६ अथवानप्रस्थस्यनियमान्वक्ष्यामि यान् आतिष्ठन्ऋषिलोकंएति १७ कृष्टपच्यंनाश्नीयात् अग्निपक्वंआमंवाअर्कपक्वं वाअश्नीयात् १८ वन्यैःधान्यैःचरुपुरोडाशान्निर्वपेत् नवेअन्नाद्येप्राप्तेजीर्णंत्यजेत् १९ अग्निसेवार्थंउटजंगुहांवाश्रयेतस्वयंहिमवाय्वग्निवर्षार्कातपान् सहेत २० केशरो मनखश्मश्रुमलानिजटिलोदधत् कमंडल्वजिनेदंडवल्कलाग्निपरिच्छदान् २१

भा०स०७ कृच्छ्रतःतपःक्लेशात्‌यथाबुद्धिर्ननश्येत्ततथाचरेत् २२ द्वादशाब्दाद्यनंतरमपियदिस्वधर्मानुष्ठानेशक्तःतर्हिवनेएववसेत्‌यदितुज्ञानाभ्यासेयोग्यस्तर्हिसंन्यसेदित्युत्तराध्यायेवक्ष्यते । ततुम अ०
यर्हितस्यतुयत्कृत्यंतदाह । यदास्वक्रियायांरोगादिभिरकल्पोअसमर्थः तदाअनशनंअशनत्यागंआदिपद।त्पक्षगतेवाप्राभीयाम्यासेवाऽहनिवागतइत्यादिकंद्रष्टव्यम् २३ अनश
।.३१॥ नादिकरिष्यतोमर्तुकामस्यपूर्वकृत्यमाह । आत्मनीत्यादियावत्समाप्ति । यथार्हतःयथायोग्यं स्वकारणेषुआकाशादिषुसंघातंदेहंन्यसेत्प्रविलापयेत् २४ तदेवविभज्यदर्शयति।खआ ॥१२॥
काशेखानिदेहगतछिद्राणि । आत्मवान्धीमान् । शेषंअस्थिमांसादिकठिनांशं । ( यथोद्भवंउत्पत्त्यनुसारेणलीनंचिंतयेदित्यर्थः ) २५ एवंस्थूलशरीरस्यलयमुक्त्वालिंगशरीररूपस्या
ध्यात्मादित्रयस्यलयमाह वाचमित्यादिना । अत्रयद्यपियथोद्भवंलयस्ययुक्तत्वादध्यात्मादीनांस्वस्वकारणेषुराजसाहंकारादिषुलयोन्याय्यः । तथापीहतेषांलयभावनेयमाद्वितीयात्मप्र
तिपत्तिपरेतियथाकथंचिद्भवेभाव्यदेवतानांप्रवर्तकत्वेनप्राधान्यादिंद्रियतद्विषययोर्देवतासुलयःकथ्यते । वक्तव्यसहितांवाचमग्नौन्यसेत् । एवंसर्वत्र । पदानिपादौविष्णौ गत्यासह
२६ सनादेनशब्देनसह । अध्यात्मनिवायौ । अध्यात्मविदितिपाठेवायावितिज्ञातव्यम् २७ ज्योतिषिआदित्ये । रसगंधयोरिंद्रियाकर्षकत्वेनप्राधान्यविवक्षयादेवतासहितस्येंद्रिय
स्यविषयेलयमाह । प्रचेतसासहजिह्वांरसनंअप्सुरसरूपासु । घ्राणशब्देनाश्विनोरप्युपलक्षणम् । अश्विभ्यांसहघ्राणंक्षितौगंधरूपलक्षितायांक्षितावित्यर्थः २८ परेकवौब्रह्मणि । अध्या
त्मनाअहंकारेणअध्यात्मतामितिपाठेकर्माण्यहंकारंचेत्यर्थः । कथंभूतेरुद्रेयद्यस्मादहंममतापूर्विकाक्रियामत्रावितस्मिन् । सत्त्वेनचेतनया । गुणैःगुणकार्यैः वागादिविशिष्टैर्देवैःसहास
त्वादिभिर्गुणैर्हेतुभूतैर्वैकारिकंभोक्तृत्वादिविकारवंतंक्षेत्रज्ञंपरेनिर्विकारेब्रह्मणि २९ ननुविकारवतःकथंपरेलयःस्यात् । विकारहेतूनांसर्वोपाधीनांलयद्वारेणेत्याह । अप्स्विति । अदो
ज्योतिः । ( वायुंनभसि ) तच्चनमःकूटस्थेऽहंतत्त्वे तच्चकूटस्थंमहतिमहत्तत्त्वे तदव्यक्तेप्रधाने । तच्चाव्यक्तमक्षरेपरमात्मनि ३० सर्वोपाधिलयादेतोःअवशेषितंचिन्मात्रमात्मानंक्षेत्रज्ञम
क्षरतयाज्ञात्वाअद्वयःसन्विरमेत् । दग्धकाष्ठोयथाऽनलः ३१ ॥ ॥ इतिश्रीभागवतेमहापुराणेसप्तमस्कंधेटीकायांद्वादशोऽध्यायः १२ ॥ ॥ ७ ॥ ॥ ॥ ॥

चरेद्वनेद्वादशाब्दानष्टौवाचतुरोमुनिः ॥ द्वावेकंवायथाबुद्धिर्नविपद्येतकृच्छ्रतः २२ यदाऽकल्पःस्वक्रियायांव्याधिभिर्जरयाथवा ॥ आन्वीक्षिक्यांवाविद्या
यांकुर्यादनशनादिकम् २३ आत्मन्यग्नीन्समारोप्यसंन्यस्याहंममात्मताम् ॥ कारणेषुन्यसेत्सम्यक्संघातंतुयथार्हतः २४ खेखानिवायौनिःश्वासांस्तेज
स्यूष्माणमात्मवान् ॥ अप्स्वसृक्श्लेष्मपूयानिक्षितौशेषंयथोद्भवम् २५ वाचमग्नौसवक्तव्यामिंद्रेशिल्पंकरावपि ॥ पदानिगत्यावयसिरत्योपस्थंप्रजाप
तौ २६ मृत्यौपायुंविसर्गंचयथास्थानंविनिर्दिशेत् ॥ दिक्षुश्रोत्रंसनादेनस्पर्शमध्यात्मनित्वचम् २७ रूपाणिचक्षुषाराजन्ज्योतिष्यभिनिवेशयेत् ॥ अ
प्सुप्रचेतसाजिह्वांघ्रेयैर्घ्राणंक्षितौन्यसेत् २८ मनोमनोरथैश्चंद्रेबुद्धिंबोध्यैःकवौपरे ॥ कर्माण्यध्यात्मनारुद्रेयदहंममताक्रिया ॥ सत्त्वेनचित्तंक्षेत्रज्ञंगुणैर्वै
कारिकंपरे २९ अप्सुक्षितिमपोज्योतिष्यदोवायौनभस्यमुम् ॥ कूटस्थेतच्चमहतितदव्यक्तेऽक्षरेचतत् ३० इत्यक्षरतयात्मानंचिन्मात्रमवशेषितम् ॥ ॥३१॥
ज्ञात्वाऽद्वयोथविरमेद्दग्धयोनिरिवानलः ३१ ॥ ॥ इतिश्रीभागवतेमहापुराणेसप्तमस्कंधेद्वादशोऽध्यायः ॥ १२ ॥ ॥ ७ ॥ ॥ ७ ॥

एवंद्वादशाब्दान्अष्टौचतुरःद्वौएकंवामुनिःवनेचरेत् १ २ यदाव्याधिभिःजरयावास्वक्रियायांअसमर्थःतदाअनशनादिकंकुर्यात् २३ २४ किंच आत्मनिअग्नीन्समारोप्य अहंमम
तात्यक्त्वादेहंआकाशादिषुभूतेषुइंद्रियाणिचदेवतासुविलाप्यआत्मानंचिन्मात्रंअवशिष्टंज्ञात्वाअद्वयःसन्विरमेत् २५ २६ २७ २८ २९ ३० ३१ ॥ इतिसप्तमेद्वादशः॥१२॥

यथोक्तलक्षणस्येतेर्धर्मः साधकस्योच्यतेमहान् ॥ अथपूर्वेतिहासेनसिद्धावस्थावर्ण्यते ॥१॥ एवंध्यात्वाऽकल्पोऽनशनादिकंकुर्यात् । आन्वीक्षिक्यांकल्पस्त्वेवंध्यात्वापरिव्रज्येतिसंबंधः । कि
यद्भ्रस्थाज्यंदेहव्यतिरिक्तंसर्वमित्याह । देहमात्रेति । तस्यधर्मानाह । ग्रामैकरात्रेविधिनवाभिः ( एकरात्रंवसेद्ग्रामेनगरेपंचरात्रकमित्यादिविधिना )१ कौपीनंगुह्यमाच्छादयतेयावत्तावत
न्मात्रं (वासः) परंकेवलंअन्यादितिवा । त्यक्तंमेयोयारणात्पूर्वमेवतर्हिकिंचिदपिअनापदिनबिभृयात् । लिंगदंडादेरन्यत् । लिंगरूपंयद्दंडकमंडल्वादितद्विना २अनपाश्रयः अकृतगृहाश्रयः
३ सदसतःपरेकार्यकारणव्यतिरिक्ते । सर्वत्रभवब्याप्तयेपि ४ नन्वात्मानंब्रह्मेतिकथंसामान।विकरण्यनिर्देशः नहिबद्धमुक्तयोरैक्यंसंभवतितत्राह सुप्तेति सुषुप्तोहितमसावृतयात्मत
त्वंजाग्रत्स्वप्नयोस्तुविक्षिप्तंप्रकाशते । संघौतुनतमोना।पिविक्षेपःअतस्तदाआत्मदृक्आत्मानंलक्षीकृत्यस्थितःसन्आत्मनोगतितत्त्वंपश्यन्अतएवबंधमोक्षंचमायामात्रंपश्यन्आत्मानं
परंब्रह्मसर्वत्रपश्येदित्यन्वयः । तदुक्तंयोगग्रंथे । ‘ निद्रादौजागरस्यांतेयोभावउपजायते । तंभावंभावयन्नित्यंमुच्यतेनेतरोयतिः’ इति ५ ( मृत्युंध्रुवंज्ञात्वानाभिनंदेत । नाप्यध्रुवंजीवितं
ज्ञात्वा । ) अस्यदेहस्य । किंतुप्रभवोप्ययश्चयस्मात्तत्कालंपरंकारणंप्रतीक्षेत ६ असच्छास्त्रेषुअनात्मपरेषु । जीविकानक्षत्रविद्यादिवृत्तिं । वादवादान्जल्पवितंडादीनिद्यात् ( तर्कान्
तर्कमाश्रित्य ) कंचनकमपिपक्षंनिर्बंधेननसंश्रयेत ७ नानुबध्नीतप्रलोभनादिनाबलान्नापादयेत् आरंभान्मठादिव्यापारान् ( ग्रंथानसच्छास्त्राण्यपि ) ८ परमहंसस्यविशेषमाह ।
नयतेराश्रमोधर्मार्थः कथंभूतस्यमहात्मनः । तस्यलक्षणंशांतस्येत्यादि । प्रायग्रहणस्यायंभावः । ज्ञानोत्पत्तिपर्यंतंबहूदकादिलिंगमाश्रित्यसत्त्वशुद्ध्यर्थंयथाविधिधर्मांश्चाचरन्नेवज्ञानो
त्पत्त्यैयतेत । उत्पन्नेतुज्ञानेननियमैःकृत्यमस्तियमाश्चस्ववद्वस्तुः । अतस्तदालिंगादिभिःप्रयोजनमावाञ्छाकसंग्रहार्थंधारयेद्वात्यजेद्वेति ९

॥ श्रीनारदउवाच ॥ कल्पस्त्वेवंपरिव्रज्यदेहमात्रावशेषितः ॥ ग्रामैकरात्रविधिनानिरपेक्षश्चरेन्महीम् १ बिभृयाद्यद्यसौवासःकौपीनाच्छादनंपरम् ॥ त्यक्तंनलिंगदंडादेरन्यत्किंचिदनापदि २ एकएवचरेद्भिक्षुरात्मारामोऽनपाश्रयः ॥ सर्वभूतसुहृच्छांतोनारायणपरायणः ३ पश्येदात्मन्यदोविश्वंपरेसदसतोऽव्यये ॥ आत्मानंचपरंब्रह्मसर्वत्रसदसन्मये ४ सुप्तप्रबोधयोःसंधावात्मनोगतिमात्मदृक् ॥ पश्यन्बंधंचमोक्षंचमायामात्रंनवस्तुतः ५ नाभिनंदेध्रुवंमृत्युमध्रुवंवास्यजीवितम् ॥ कालंपरंप्रतीक्षेतभूतानांप्रभवाप्ययम् ६ नासच्छास्त्रेषुसज्जेतनोपजीवेतजीविकाम् ॥ वादवादांस्त्यजेत्तर्कान्पक्षंकंचननाश्रयेत् ७ नशिष्याननुबध्नीतग्रंथान्नैवाभ्यसेद्बहून् ॥ नव्याख्यामुपयुंजीतनारंभानारभेत्क्वचित् ८ नयतेराश्रमःप्रायोधर्महेतुर्महात्मनः ॥ शांतस्यसमचित्तस्यबिभृयादुतवात्यजेत् ९

॥ नारदउवाच ॥ ज्ञानाभ्यासेकल्पश्चेत्तर्हिसंन्यासंगृहीत्वादेहमात्रावशेषितःनिरपेक्षःसन्महींचरेत् १ असौवासःयदिबिभृयात्तर्हिकौपीनाच्छादनंबिभृयात् दंडपात्राभ्यांविनात्यक्तंअन्यत् अनापदिनधारयेत् २ भिक्षुःएकएवचरेत् ३ ४ ५ देहस्यजीवनंमरणंवानाभिनंदेत्कालंप्रतीक्षेत आत्मनिविश्वंपश्येत्आत्मानंपरंब्रह्मपश्येत् बंधंमोक्षंचमायामात्रंपश्येत् ६ असच्छास्त्रेषुनसज्जेत वितंडादिवादान्त्यजेत् ७ कंचनपक्षंनसंश्रयेत् बहून्ग्रंथान्नाभ्यसेत् मठादिव्यापारान्नकुर्यात् ८ ९

तस्यैवज्ञानदार्ढ्यार्थमात्रेयोगभ्रंशपरिहारार्थमाह । नबहिर्व्यक्तंलिंगंयस्य । व्यक्तोऽर्थप्रयोजनमात्मानुसंधानंयस्यसः । मनीष्यपिउन्मत्तवद्बालवच्चकविरपिमूकवदात्मानंनृणांदृष्ट्यादर्शयेत् । यथायथोन्मत्तादिरूपंतेमन्येरंस्तथावर्तेत । स्वदृष्ट्येतिपाठबाह्यानुसंधानाभावेनेत्यर्थः १० परमहंसधर्ममेवेतिहासेनस्फुटयति । अत्रापीतियावदध्यायसमाप्ति । अजगरवृत्तस्यमुनेश्च ११ धरोपस्थेभूपृष्ठे । सह्याद्रेस्तटेरजोभिर्धूसरैस्तनूदेशैर्देहावयवैर्निगूढममलंतेजोयस्यतम् १२ १३ कर्मादिभिर्जनायं(सोसाविति नासावितित्वा निश्चयेन)नविदुःतंपादयोःशिरसास्पृशन्नत्वाऽप्राक्षीदित्युत्तरेणान्वयः १४ (विवित्सुर्जिज्ञासुरिदंपप्रच्छ) १५ उद्यमसहितइवभोगवानिवपीवानंस्थूलंदेहंधारयसि । तत्रहेतुंवदेतितृतीयेनान्वयः। उद्यमंविनैवममभोगोस्तीतिचेत्तत्राहवित्तंचेति । उद्यमवतोहि ( कृषिवाणिज्यादुद्यमवतांवित्तंभवति ) १६ नुइतिनिश्चये । हइतिप्रसिद्धौ । तवार्थोनास्तीतिप्रसिद्धमेवेत्यर्थः यतोर्थादेवभोगः । यतोहेतोःपीवा । क्षमंयोग्यंचेत् १७ किंच । वित्तार्जनासमर्थोप्ययंजनस्तदर्थमुद्यमंकरोतित्वंतुसमर्थोपिकिमितिनकरोषीत्याहकविर्विद्वान्कल्पोदक्षःनिपुणदृक्चतुरःचित्राःप्रियालोकरंजनाःकथावस्यतथापि ( समोरागद्वेषरहितः सन् ) लोकस्यकर्मकुर्वतःसतःशेषे । तद्वीक्षितापिवा तत्तुसर्वंपश्यन्नपि पाठांतरेणद्वेक्षितत्कर्मनद्वेक्षी ( निंदसि ) नवानोपेक्षसेपि १८ तस्यवाग्मेवामृतंतेनयंत्रितोवशीकृतःसन्प्राह १९ अध्यात्मचक्षुषांतर्दृष्ट्याभवानिदंवेदैव । यतआर्याणांज्ञानिनां संमतोनुभवान् । इदमितियदुक्तंतदेवाह । नृणांईहोपरमयोःप्रवृत्तिनिवृत्त्योःपदानिस्थानानिफलानीत्यर्थः २०

अव्यक्तलिंगोव्यक्तार्थोमनीष्युन्मत्तबालवत् ॥ कविर्मूकवदात्मानंस्वंदृष्ट्यादर्शयेन्नृणाम् १० अत्राप्युदाहरंतीममितिहासंपुरातनम् ॥ प्रह्लादस्यचसंवादंमुनेराजगरस्यच ११ तंशयानंधरोपस्थेकावेर्यांसह्यसानुनि ॥ रजस्वलैस्तनूदेशैर्निगूढामलतेजसम् १२ ददर्शलोकान्विचरन्लोकतत्त्वविवित्सया ॥ वृतोऽमात्यैःकतिपयैःप्रह्लादोभगवत्प्रियः १३ कर्मणाऽऽकृतिभिर्वाचालिंगैर्वर्णाश्रमादिभिः ॥ नविदंतिजनायंवैसोसावितिनवेतिच १४ तंनत्वाभ्यर्च्यविधिवत्पादयोःशिरसास्पृशन् ॥ विवित्सुरिदमप्राक्षीत्महाभागवतोऽसुरः १५ ॥ प्रह्लादउवाच ॥ बिभर्षिकायंपीवानंसोद्यमोभोगवान्यथा ॥ वित्तंचैवोद्यमवतांभोगोवित्तवतामिह ॥ भोगिनांखलुदेहोयंपीवाभवतिनान्यथा १६ नतेशयानस्यनिरुद्यमस्यब्रह्मन्नुहार्थोयतएवभोगः ॥ अभोगिनोयंतवविप्रदेहःपीवायतस्तद्वदनःक्षमंचेत् १७ कविःकल्पोनिपुणदृक्चित्राप्रियकथःसमः ॥ लोकस्यकुर्वतःकर्मशेषेतद्वीक्षितापिवा १८ ॥ श्रीनारदउवाच ॥ सइत्थंदैत्यपतिनापरिपृष्टोमहामुनिः ॥ स्मयमानस्तमभ्याहतद्वागमृतयंत्रितः १९ ब्राह्मणउवाच ॥ वेदेदमसुरश्रेष्ठभवान्नन्वार्यसंमतः ॥ ईहोपरमयोर्नृणांपदान्यध्यात्मचक्षुषा २०

अव्यक्तलिंगःसन्मत्तवत्बालवत्कविरपिमूकवत् आत्मानंनृणांदर्शयेत् १० अथपरमहंसधर्ममेवेतिहासेनस्फुटयति अत्राप्युदाहरंतीममितिहासंपुरातनम् प्रह्लादस्यचसंवादंमुनेराजगरस्यच ११ एकदाप्रह्लादःकतिपयैःअमात्यैर्वृतःलोकतत्त्वविवित्सयाविचरन्सन् कावेर्यांसह्याशिखरेशयानंनिगूढामलतेजसंमुनिंदृष्ट्वा १२ १३ यंकर्मणाआकृतिलिंगवर्णाश्रमादिभिःजनाःनाविदुः १४ तंमुनिंनत्वाजिज्ञासुःप्रह्लादःइदंपप्रच्छ १५ ॥ प्रह्लादउवाच ॥ हेब्रह्मन्सोद्यमःपुमान् यथापुष्टंदेहंबिभर्तितथात्वमपितत्रहेतुंवदउद्यमवतांवित्तंतद्वतांभोगःभोगिनांदेहःपीवाभवति अन्यथान १६ अतः हेब्रह्मन्निरुद्यमस्यतवदेहःपीवाकथंएतत्योग्यंचेत्वद १७ १८ १९ ॥ ब्राह्मणउवाच ॥ हेअसुरश्रेष्ठत्वंप्रवृत्तिनिवृत्त्योःफलानिज्ञानचक्षुषावेद २०

केवल्यत्रहेतुः यस्येति । हृदिप्रविष्टःसन्नज्ञानंधुनोति । अर्कोयथाबहिर्ध्वांतं २१ यथाश्रुतमित्यौद्धत्यपरिहारायोक्तं २२ लोकःकर्मसुप्रवर्ततेत्वंनिवृत्तःसन्किंशेषे इतियदुक्तंतत्राह तृष्ण
येतिचतुर्भिः । भवप्रवाहकारिण्यायथोचितैरपिविषयैःपूरयितुमशक्ययातृष्णयाकर्मसुप्रवर्त्यमानोहंपूर्वंनानायोनिषुप्रवेशितः २३ तयैवेमंलोकम् मनुष्यदेहम् यदृच्छयाप्रापितः । कथं
भूतंलोकम् धर्मेणस्वर्गस्यद्वारंसाधनम् अधर्मेणतिरश्चांसूकरादियोनेर्द्वारम् । मिश्राभ्यामाभ्याम् पुनरप्यस्यमनुष्यस्यद्वारम् सर्वतोनिवृत्त्याअपवर्गस्यद्वारमित्यर्थः २४ अत्रापिमनु
ष्यत्वेपिअन्यापनुत्तयेदुःखनिवृत्तये । विपर्ययंदृष्ट्वानिवृत्तोस्मि २५ प्रवृत्त्याकदाचित्सुखंस्यादपि । निवृत्त्यातुकिंस्यादितिचेत्तत्राह । सुखमस्यजीवस्यस्वरूपमेव । तर्हिकिंनप्रकाशते ।
तत्राह । सर्वेति तनोतीतितनुः ( प्रकाशिका ) सर्वक्रियानिवृत्तौस्वतएवप्रकाशतइत्यर्थः भोगांश्चमनःसंस्पर्शजान्मनोरथमात्रजान् अशाश्वतान् दृष्ट्वास्वप्स्यामिनिरुद्यमोस्मीत्यर्थः ।
तर्हिकदाचित्कथंभुंक्षेतत्राह । संविशन्प्रारब्धभोगान् भुंजानइत्यर्थः २६ एवंचेत्कोपिसंसारंनप्राप्नुयात्तत्राह । इत्येतदात्मनःसुखात्मकंरूपंयत् एतद्रूपंस्वार्थं स्वस्मिन्नेवसंतमपुरुषार्थं
विस्मृत्यअसत्यपिद्वैते २७ एतदेवदृष्टांतेनस्पष्टयतिजलमिति तदुद्भवैःतृणशैवालादिभिः जलकाम्ययाजलेच्छयायथा तथास्वतआत्मस्वरूपादन्यत्र पुरुषार्थंपश्यन् ( द्वैतमुपाधा
वतीत्यर्थः ) २८ एवंस्वस्यानिरुद्यमत्वेकारणमुक्त्वा विपर्ययंदृष्ट्वेतियदुक्तं तद्विवृणोतिदेहादिभिरितिपंचभिः । ईहतइच्छतःअनीशस्यनिर्दैवस्य ( कृताः कृताः ) पुनःपुनःप्रारब्धाः
क्रियामोघानिःफलाएवभवंति २९ क्रियाणांसफलत्वेपिफलस्यानुपयोगमाह । आध्यात्मिकादिभिरिति । मर्त्यस्यमरिष्यतः कृच्छ्रेणदुःखेनोपनतैः प्राप्तैः ( कामैर्विषयोपभोगैःसर्पग्र
स्तस्यभेकस्यमक्षिकालाभेनेवकिंक्रियेत ) ३० कृच्छ्रंविनैवप्राप्तेप्यर्थेदुःखंतदवस्थमित्याह । पश्यामीति ३१

यस्यनारायणोदेवोभगवान्हृद्गतःसदा ॥ भक्त्याकेवलयाऽज्ञानंधुनोतिध्वांतमर्कवत् २१ अथापिब्रूमहेप्रश्नांस्तवराजन्यथाश्रुतम् ॥ संभाषणीयोहिभवाना
त्मनःशुद्धिमिच्छताम् २२ तृष्णयाभववाहिन्यायोग्यैःकामैरपूरया ॥ कर्माणिकार्यमाणोहंनानायोनिषुयोजितः २३ यदृच्छयालोकमिमंप्रापितःकर्मभि
र्भ्रमन् ॥ स्वर्गापवर्गयोर्द्वारंतिरश्चांपुनरस्यच २४ अत्रापिदंपतीनांचसुखायान्यापनुत्तये ॥ कर्माणिकुर्वतांदृष्ट्वानिवृत्तोस्मिविपर्ययम् २५ सुखम
स्यात्मनोरूपंसर्वेहोपरतिस्तनुः ॥ मनःसंस्पर्शजान्दृष्ट्वाभोगान्स्वप्स्यामिसंविशन् २६ इत्येतदात्मनःस्वार्थंसंतंविस्मृत्यवैपुमान् ॥ विचित्रामसतिद्वैते
घोरामाप्नोतिसंसृतिम् २७ जलंतदुद्भवैश्छन्नंहित्वाऽज्ञोजलकाम्यया ॥ मृगतृष्णामुपाधावेत्तथान्यत्रार्थदृक्स्वतः २८ देहादिभिर्दैवतंत्रैरात्मनःसुखमीह
तः ॥ दुःखात्ययंचानीशस्यक्रियामोघाःकृताःकृताः २९ आध्यात्मिकादिभिर्दुःखैरविमुक्तस्यकर्हिचित् ॥ मर्त्यस्यकृच्छ्रोपनतैरर्थैःकामैःक्रियेतकिम् ३०
पश्यामिधनिनांक्लेशंलुब्धानामजितात्मनाम् ॥ भयादलब्धनिद्राणांसर्वतोभिविशंकिनाम् ३१

यतःयस्यनारायणःहृद्गतःसन्अज्ञानंधुनोति २१ ध्वांतंअर्कइव अथापिहेदैत्यतवप्रश्नान्ब्रूमहे २२ २३ अहंनानायोनिषुभ्रमन् इमंमनुष्यदेहंस्वर्गापवर्गयोःद्वारंप्रापितः २४
तत्रापिसुखायदुःखनिवृत्त्यैचकर्मकुर्वतांदंपतीनांविपर्ययंदृष्ट्वानिवृत्तोस्मि २५ भोगान् अशाश्वतान्दृष्ट्वानिरुद्यमोस्मि २६ एवं आत्मनःस्वार्थमविद्वान्पुमान् संसारंप्राप्नो
ति २७ २८ २९ ३० किंचभयात्अलब्धनिद्राणांधनिनांक्लेशंराजचोरादिभ्यांनित्यंभयंचपश्यामि ३१

मर्थप्रपंचयति राजतइति । स्वस्मात्स्वतएवकथंचित्त्यागभोगादिस्मरणादिनानाशः स्यादिति । प्राणवतांअर्थवतांचमर्येनित्यम् ३२ अतोऽनर्थहेतुत्वात्प्राणेषार्थेस्पृहानकार्येत्याह । शोके ति । ( याप्राणार्थयोःस्पृहामूलंयेषांतेतथा ) ३३ नन्वनर्थाननुभवंतोपिनकेचिद्विरज्यंतेनचयथालाभेनतुष्यंतित्वंतुकथंवैराग्यादिकंप्राप्तोसितत्राह । मधुकारोमधुमक्षिका । महासर्पोऽजग रस्तयोःशिक्षयातद्वृत्तपर्यालोचनया ३४ मधुकाराच्छिक्षितमाह । विरामइति । वित्तपांविहत्य हन्यन्योवित्तंहरेदित्येवम् ३५ अजगराच्छिक्षितमाह । अनीहइति । नोपनतंचेत् ( अवेत्स्व पिमि ) सत्त्ववान्धैर्यवान् ३६ पीनत्वेहेतुत्वेनयदृच्छयाप्राप्तात्परितोषंप्रपंचयतिकचिदल्पमितिपंक्तिः । ( भूरिगुणोपेतंसोपस्करमधुरादिरसोपेतंवा ) ३७ ( अथकास्मिंश्चिद्दिवाऽह्नि अभु क्त्वायदृच्छयाऽनकंभुंजे । ) ३८ चीरंजीर्णवस्त्रखंडम् । वसेपरिदधे । दिष्टभुक्प्रारब्धभोगी ३९ प्रासादमध्येपर्यंकेतत्रापिकशिपो ४० चरेविचरामि कचिद्द्वहवद्वेतालइवदिगंबरोविच रामि ४१ नचमानापमानकर्तृषुममवैषम्यमित्याह नाहंनिंदामि । नस्तौमिपहात्मनिनिर्विण्णो ४२ एवंभूतत्वेनस्थितायुपायमाह विकल्पमितिद्वाभ्यां चित्तौचिदग्राहकमनोवृत्तौतांचित्तिं अर्थरूपोविभ्रमोयस्मिन् वैकारिकेऽहंकारे अनुअनंतरम् महतत्त्वद्वारेणेत्यर्थः ४३ सत्यमेवपश्यतीतितथा ४४ मंददृष्ट्यालोकशास्त्राभ्यांव्यपेतंनतुतत्त्वदृष्टया हियतोभवान्भगवत्प्रियः ४५

राजतश्चोरतःशत्रोःस्वजनात्पशुपक्षितः ॥ अर्थिभ्यःकालतःस्वस्मान्नित्यंप्राणार्थवद्भयम् ३२ शोकमोहभयक्रोधरागक्लैब्यश्रमादयः ॥ यन्मूलाःस्युर्नृणां जह्यात्स्पृहांप्राणार्थयोर्बुधः ३३ मधुकारमहासर्पौलोकेस्मिन्नोगुरूत्तमौ ॥ वैराग्यंपरितोषंचप्राप्तायच्छिक्षयावयम् ३४ विरामःसर्वकामेभ्यःशिक्षितोमेम धुव्रतात् ॥ कृच्छ्राप्तंमधुवद्वित्तंहत्वाप्यन्योहरेत्पतिम् ३५ अनीहःपरितुष्टात्मायदृच्छोपनतादहम् ॥ नोचेच्छयेबह्वहानिमहाहिरिवसत्त्ववान् ३६ कचि दल्पंकचिद्भूरिभुंजेऽन्नंस्वाद्वस्वादु वा ॥ कचिद्भूरिगुणोपेतंगुणहीनमुतकचित् ३७ श्रद्धयोपाहृतंकापिकदाचिन्मानवर्जितम् ॥ भुंजेऽभुक्त्वाथकस्मिंश्चिद्दि वानक्तंयदृच्छया ३८ क्षौमंदुकूलमजिनंचीरंवल्कलमेववा ॥ वसेऽन्यदपिसंप्राप्तंदिष्टभुक्तुष्टधीरहम् ३९ कचिच्छयेधरोपस्थेतृणपर्णाश्मभस्मसु ॥ कचि त्प्रासादपर्यंकेकशिपौवापरेच्छया ४० कचित्स्नातोऽनुलिप्तांगःसुवासाःस्रग्व्यलंकृतः ॥ रथेभाश्वैश्चरेकापिदिग्वासाग्रहवद्विभो ४१ नाहंनिंदेनचस्तौमि स्वभावविषमंजनम् । एतेषांश्रेयआशासेउतैकात्म्यंमहात्मनि ४२ विकल्पंजुहुयाच्चित्तौतांमनस्यर्थविभ्रमे ॥ मनोवैकारिकेहुत्वातंमायायांजुहोत्यनु ४३ आत्मानुभूतौतांमायांजुहुयात्सत्यदृङ्मुनिः ॥ ततोनिरीहोविरमेत्स्वानुभूत्यात्मनिस्थितः ४४ स्वात्मवृत्तंमयेत्थंतेसुगुप्तमपिवर्णितम् ॥ व्यपेतंलोक शास्त्राभ्यांभवान्हिभगवत्प्रियः ४५

३२ नृणांशोकमोहभयक्रोधादयःअर्थमूलाःस्युःअतोबुधःअर्थेस्पृहांत्यजेत् ३३ अश्लोकेन.मधुकरमहासर्पौद्वौगुरूत्तमौवयंययोःशिक्षयावैराग्यंपरितोषंचप्राप्ताः ३४ ३५ ३६ कचित्अल्पंभूरिप्राप्तंअन्नंभुंजे ३७ ३८ कचित्क्षौमंदुकूलंआजिनंचीरंवल्कलंवापरिदधे ३९ कचित्धरायांकचित्प्रासादपर्यंकेशये ४० कचित्अलंकृतःपरेच्छया रथेभाश्वैःचरे ४१ स्वभावविषमंजनंअहंननिंदेनचस्तौमिसर्वेषांश्रेयःआशासे ४२ ४३ ४४ एवंमयासुगुप्तमपिस्वात्मवृत्तंतुभ्यंवर्णितम् यतःभवान्ममवत्परः ४५

४१ ॥ इतिश्रीभागवतेमहापुराणेसप्तमस्कंधेटीकायांयतिधर्मेत्रयोदशोऽध्यायः १३ ॥ चतुर्दशेगृहस्थस्यपरमोधर्मईर्यते ॥ देशकालादिभेदेनपुनःश्रेयोविशेषकृत् ॥ १॥ गृहस्थधर्मापेक्ष
याभोक्षमत्यंतरंगत्वेनप्रथमंवनस्थयतिधर्मेष्वभिहितेषु तर्हिगृहस्थस्यमोक्षोनस्यादितिशंकितःपृच्छतिगृहस्थइति १ तस्यमोक्षधर्मानाहगृहेष्विदत्यादिचतुर्भिःसाक्षा
द्वासुदेवार्पणम् यथाभवत्येवंकुर्वन्नुपासीत २ ३ स्वयमेवमुच्यमानेषु विमुच्यमानेषु(आत्मादेहःआदिनागृहादयस्तेषु) यथाउत्थितःपुमान्स्वप्नदृष्टेषुपुत्रादिषुसंगंविमुंचतितद्वत् ४ नन्वेवंभूत
स्यदुर्जनैरभिभूयमानस्यकुतोगृहोचिताःक्रियाःस्युस्तत्राह । यावदर्थमिति ( यावत्प्रयोजनंदेहगेहादिषुआसीनोऽनभिनिविष्टः ) अंतरनासक्तोबहिस्त्वासक्तइवनृलोकेजनमध्येनरतांमानु
ष्यंन्यसेत्पुरुषकारमाविष्कुर्यादित्यर्थः ५ आग्रहंतुक्वापिनकुर्यादित्याह । ज्ञातयइति । निर्ममोममताहीनः ६ नन्वेवंसर्वानुमोदनेवित्तक्षयप्रसंगान्नकुतोजीवनंकुतोकर्मादितत्राह दिव्यं
दृष्टयादिभिर्जातंधान्यादि । भौमंनिधानादि । आंतरिक्षंअकस्मादेवधनम् एवंसर्वमेतत्अच्युतनिर्मितंदेवलब्धम् यत् (तत्सर्वमुपभुंजानः) एतत्पूर्णोक्तकर्मादि (कुर्यात्) । देवाधीनंवित्तंन
कथंचित्क्षय्यमित्यर्थः ) ७ देवादधिकलाभेजातेपितत्राभिमानोनकार्यइत्याह । यावदिति भ्रियेतपूर्येत ८ अतएवयंकमपिस्वगृहंप्रविष्टंश्वापदंविषयंजानन्नानिवारयेदित्याह । मृगेति ।
मर्कोमर्कटो ( मार्जारोवा । ) तस्तिनूपर्थः । तैःपुत्रैःएषांपृथगादीनांकियदंतरम् ९ अतिकृच्छ्रेणआपाद्यनभजेत किंतुयत्रदेवोपपादितंतावद्भजेत १०

श्रीनारदउवाच ॥ ॥ धर्मंपारमहंस्यंवैमुनेःश्रुत्वाऽसुरेश्वरः ॥ पूजयित्वाततःप्रीत आमंत्र्यप्रययौगृहम् ४३ ॥ ॥ इतिश्रीभागवतेमहापुराणेसप्तमस्कंधे
यतिधर्मेत्रयोदशोध्यायः १३ ॥ ॥ ७ ॥ ॥ युधिष्ठिरउवाच ॥ ॥ गृहस्थएतांपदवींविधिनायेनचांजसा ॥ यायाद्देवऋषेब्रूहि मादृशोगृहमूढधीः १
श्रीनारदउवाच ॥ गृहेष्ववस्थितोराजन्क्रियाःकुर्वन्गृहोचिताः ॥ वासुदेवार्पणंसाक्षादुपासीतमहामुनीन् २ शृण्वन्भगवतोऽभीक्ष्णमवतारकथामृतम् ॥
श्रद्दधानोयथाकालमुपशांतजनावृतः ३ सत्संगाच्छनकैःसंगमात्मजायात्मजादिषु ॥ विमुच्येन्मुच्यमानेषुस्वयंस्वप्नवदुत्थितः ४ यावदर्थमुपासीनोदेहेगे
हेचपंडितः ॥ विरक्तोरक्तवत्तत्रनृलोकेनरतांन्यसेत् ५ ज्ञातयःपितरौपुत्राभ्रातरःसुहृदोऽपरे ॥ यद्वदंतियदिच्छंतिचानुमोदेतनिर्ममः ६ दिव्यंभौमंचां
तरिक्षंवित्तमच्युतनिर्मितम् ॥ तत्सर्वमुपभुंजानएतत्कुर्यात्स्वतोबुधः ७ यावद्भ्रियेतजठरंतावत्स्वत्वंहिदेहिनाम् ॥ अधिकंयोभिमन्येतसस्तेनोदंडमर्हति
८ मृगोष्ट्रखरमर्काखुसरीसृप्खगमक्षिकाः ॥ आत्मनःपुत्रवत्पश्येत्तैरेषामंतरंकियत् ९ त्रिवर्गंनातिकृच्छ्रेणभजेतगृहमेध्यपि ॥ यथादेशंयथाकालंयाव
द्दैवोपपादितम् १०

॥ नारदउवाच ॥ असुरेश्वरःमुने पारमहंस्यंधर्मंश्रुत्वातंपूजयित्वाआज्ञांगृहीत्वागृहंययौ ४३ ॥ ॥ इतिसप्तमेत्रयोदशः १३ ॥ ॥ ७ ॥ ॥ युधिष्ठिरउवाच ॥
हेदेवर्षेगृहस्थःयेनविधिनाअन्यासेनएतांपदवींयातितंविधिंब्रूहि १ ॥ नारदउवाच ॥ गृहेषुएवास्थितःगृहोचिताःक्रियाः वासुदेवार्पणंयथातथाकुर्वन्मुनीन्उपासीत २
भगवतःअवतारकथामृतं शृण्वन् ३ सत्संगात्आत्मजायात्मजादिषुसंगंत्यजेत् ४ गृहादिषुविरक्तःअनुरक्तवानिवस्थित्वायावद्देहादिभरणंतावत्स्वीकुर्यात् ५ अधिकंयो
भिमन्येतसस्तेनोदंडमर्हति ६ ७ ८ मृगादीन्प्राणिनःआत्मनःपुत्रवत्पश्येत् ९ त्रिवर्गंअतिकृच्छ्रेणनसेवेत १०

श्वानश्च अपाश्च पतिताः अंतेवसायिनश्चांडालादयस्तानभिव्याप्य यथायथार्हं कामान्स्वभोग्यान्संविभजेत् विभज्य दद्यात् यद्यप्येकैव आत्मनो दारा भार्या यस्यामतिथिशुश्रूषणे नियुक्ता
संस्वयशुश्रूषाहायेत यस्यां च नृणां मनुष्याणां स्वत्वग्रहो ममैवेयमित्याग्रहस्तामपि संविभजेत् अतिथ्यादिशुश्रूषणे नियुंजीतेत्यर्थः नत्वन्यथा मंतव्यं यथार्हं संविभजेदित्युक्तत्वात् ११ एवं च
तेनेश्वरो वशीकृतः स्यादित्याह । जह्यादिति । यदर्थे यन्निमित्तं । अन्यैरजितोपीश्वरस्तैर्जित एव १२ कथमेवं तस्यां स्वत्वाभिमानो हातुं शक्यस्तत्राह धारणेनेत्याह किमिविड्भस्मसु नि
ष्ठापर्यवसानमंते यस्य तदीयात देहार्था रतिर्यस्यां सा । स्वमहिम्नानमोपिच्छादयतीति तथा १३ किं च सिद्धैर्दैवलब्धैर्यज्ञावशिष्टार्थैः पंचयज्ञशेषैरन्नादिभिरर्थैः महतां निवृत्तानाम् १४ ( एत
द्विवृण्वन्नाह । ) देवानिति । पंचयज्ञदेवता आत्मानं च एवं पृथक् यजन् पुरुषमंतर्यामिणमेव यजेत् १५ ( वितानो यज्ञविस्तारस्तत्रत्येन त्रिविनायदग्निहोत्रादिकर्मतेन ) १६ नपुनर
तिनिर्बंधो यज्ञार्थं कार्य इत्याह । नहीति । विप्रमुखे हुतैरन्नादिभिर्यथा इज्यते पूज्येत न तथा अग्निमुखे हुतेन हविषा इज्येत १७ ब्राह्मणेषु देवेषु च पंच यज्ञदेवतासु मर्त्यादिषु अन्येष्वपि नरेषु पश्वा
दिषु च क्षेत्रज्ञं अंतर्यामिणं ब्राह्मणानु मर्त्यादिषु जने ब्राह्मणयजनानंतरं च अन्येषु यजस्वेत्यर्थः पाठांतरे ब्राह्मणा आननं यस्य तम् १८ प्रोष्ठपदे भाद्रपदे ( तद्बंधूनां मातामहादीनाम् ) १९
( अयने कर्कमकरसंक्रमणे विषुवे तुलामेषसंक्रमणे । कुह्वां अमावास्यायाम् ) २० तृतीयायां शुक्लपक्षे अक्षयतृतीयायामित्यर्थः हेमंते शिशिरे च मार्गशीर्षादिमासचतुष्टयेपि कृष्णपक्षेयाः
( सप्तम्यादितिथित्रयरूपा चतः )चोऽष्टकास्तासु २१

आश्वाघांतेवसायिभ्यःकामान्संविभजेद्यथा ॥ अप्येकामात्मनोदारांनृणांस्वत्वग्रहोयतः ११ जह्याद्यदर्थेस्वप्राणानहन्याद्वापितरंगुरुम् ॥ तस्यांस्वत्वं
स्त्रियांजह्याद्यस्तेनह्यजितोजितः १२ कृमिविड्भस्मनिष्ठांतंक्वेदंतुच्छंकलेवरम् ॥ क्वतदीयरतिर्भार्याक्वायमात्मानभश्छदिः १३ सिद्धैर्यज्ञावशिष्टार्थैः
कल्पयेद्वृत्तिमात्मनः ॥ शेषेस्वत्वंत्यजन्प्राज्ञःपदवींमहतामियात् १४ देवानृषीन्नृभूतानिपितॄनात्मानमन्वहम् ॥ स्ववृत्त्यागतवित्तेनयजेतपुरुषंपृथक्
१५ यर्ह्यात्मनोधिकाराद्याःसर्वाःस्युर्यज्ञसंपदः ॥ वैतानिकेनविधिनाअग्निहोत्रादिनायजेत् १६ नह्यग्निमुखतोयंवैभगवान्सर्वयज्ञभुक् ॥ इज्येतहवि
षाराजन्यथाविप्रमुखेहुतैः १७ तस्माद्ब्राह्मणदेवेषुमर्त्यादिषुयथार्हतः ॥ तैस्तैःकामैर्यजस्वैनंक्षेत्रज्ञंब्राह्मणाननु १८ कुर्यादापरपक्षीयंमासिप्रौष्ठपदे
द्विजः ॥ श्राद्धंपित्रोर्यथावित्तंतद्बंधूनांचवित्तवान् १९ अयनेविषुवेकुह्वांव्यतीपातेदिनक्षये ॥ चंद्रादित्योपरागेचद्वादश्यांश्रवणेषुच २० तृतीयायांशु
क्लपक्षेनवम्यामथकार्तिके ॥ चतसृष्वप्यष्टकासुहेमंतेशिशिरेतथा २१

आश्वचांडालादिभ्यःस्वभोज्यात्विभज्यदद्यात्एकामपिस्वस्त्रियंअतिथिसेवनेयुंजित ११ यस्यांनृणांस्वत्वगृहःयन्निमित्तंचस्वप्राणान्जह्यात्पितरंगुरुंहन्यात्तस्यांस्त्रियांप
स्वत्वंत्यजेत्तेनअजितोजितएव १२ १३ प्राज्ञःपंचयज्ञशेषैःअन्नादिभिःस्ववृत्तिंकल्पयेत्शेषेस्वत्वंत्यजन्महतांपदवीमियात् १४ स्ववृत्त्याप्राप्तवित्तेनअन्वहंदेवादीन्यजे
त् १५ यदास्वस्ययज्ञसंपदःस्युःतदाअग्निहोत्रादिनायजेत् १६ किंचविप्रमुखेहुतैःयथाभगवान्इज्येततथाअग्नौन १७ अतःब्राह्मणादिषुअंतर्यामिणंयजस्व १८ द्विजः
भाद्रेअपरपक्षिकंश्राद्धंकुर्यात् १९ अयनाविषुवव्यतीपातादिनक्षयचंद्रसूर्यग्रहेषु अक्षय्यतृतीयायांकार्तिकसितनवम्यांअष्टकासु माघासितसप्तम्यांचश्राद्धादिकुर्यात् २० २१

संपूर्णचंद्रापौर्णमासीराका । न्यूनचंद्रासैवानुमतिः । तयामासर्क्षाणितत्न्मासनामप्रवृत्तिनिमित्तभूतानिनक्षत्राणियुतानियदास्युस्तदापि । तदुक्तंत्रिकांडयां । " पुष्ययुक्तापौर्णमासीपौषीमासेतुयत्रसा । नःआसपौषोमाघाद्याश्चैवमेकादशापरे " इति २२ तथाअनुराधाश्रवणउत्तराफाल्गुनीउत्तराषाढाउत्तराभाद्रपदावाद्वादश्यांयदास्यात् । आसूत्तरासुएकादशीवायदास्यात्तदाच । जन्मर्क्षश्रोणयोगयुक् । जन्मनक्षत्रस्यश्रवणस्यवायोगेनयुक्तंदिनंयदातदा । योगग्रहणंसंबंधबाहुल्यार्थम् २३ नकेवलंश्राद्धस्यैवैतेकालाःकिंतुधर्ममात्रस्येत्याह । तएतइतिद्वाभ्यां । ( एतेषुश्रेयःकुर्यात् ) तदेवआयुषः अमोघंसार्थकंसाफल्यमित्यर्थः २४ २५ संस्कारकालइति । जायायाःसंस्कारःपुंसवनादिः अपत्यस्यजातकर्मादिः आत्मनोयज्ञदीक्षादिः । ( तस्यकालः ) प्रेतस्यसंस्थादहनादिः । मृताहश्चसांवत्सरिकंश्राद्धंयदा । अन्यास्मिन्नपिअभ्युदयार्थेकर्मणिश्रेयःकुर्यादित्यनुषंगः २६ यत्रयस्मिन्सर्वमेतच्चराचरमस्तितस्यभगवतोबिंबरूपंसत्पात्रंयत्रलभ्यतेसएवपुण्यतमोदेशः २७ २८ अर्हैरुत्तमैराश्रितानि २९ ३० सीतायारामस्यच आश्रम आदिर्येषां द्वयोः पृथग्ग्रहणंवियोगकालाभिप्रायेण । ३१ अर्चाश्रिताः स्थिरप्रतिमाश्रिताःपूर्वंतुशालग्रामशिलाद्यर्चनदेशउक्तइत्यपौनरुक्त्यम् ३२ अत्रएषुहरेःस्थितःक्षेत्रतःइतरदेशापेक्षयासहस्रगुणस्याधिकस्यफलस्योदयोयस्मात्तथा ३३ हरिरेवपात्रंनिरुक्तंनिर्णीतम् ३४

माघेचसितसप्तम्यांमघाराकासमागमे ॥ राकयाचानुमत्यावामासर्क्षाणियुतान्यपि २२ द्वादश्यामनुराधास्याच्छ्रवणस्तिस्रउत्तराः ॥ तिसृष्वेकादशीवासुजन्मर्क्षश्रोणयोगयुक् २३ तएतेश्रेयसःकालानृणांश्रेयोविवर्द्धनाः ॥ कुर्यात्सर्वात्मनैतेषुश्रेयोऽमोघंतदायुषः २४ एषुदानंजपोहोमोव्रतंदेवद्विजार्चनम् ॥ पितृदेवनृभूतेभ्योयद्दत्तंतद्ध्यनश्वरम् २५ संस्कारकालोजायायाअपत्यस्यात्मनस्तथा ॥ प्रेतसंस्थामृताहश्चकर्मण्यभ्युदयेनृप २६ अथदेशान्प्रवक्ष्यामिधर्मादिश्रेयआवहान् ॥ सवैपुण्यतमोदेशःसत्पात्रंयत्रलभ्यते ॥ बिंबंभगवतोयत्रसर्वमेतच्चराचरम् २७ यत्रहब्राह्मणकुलंतपोविद्यादयान्वितम् ॥ यत्रयत्रहरेरर्चासदेशःश्रेयसांपदम् २८ यत्रगंगादयोनद्यःपुराणेषुचविश्रुताः ॥ सरांसिपुष्करादीनिक्षेत्राण्यर्हाश्रितान्युत २९ कुरुक्षेत्रंगयशिरःप्रयागःपुलहाश्रमः ॥ नैमिषंफाल्गुनंसेतुःप्रभासोथकुशस्थली ३० वाराणसीमधुपुरीपंपाबिंदुसरस्तथा ॥ नारायणाश्रमोनंदासीतारामाश्रमादयः ३१ सर्वेकुलाचलाराजन्महेंद्रमलयादयः ॥ एतेपुण्यतमादेशाहरेरर्चाश्रिताश्चये ३२ एतान्देशान्निषेवेतश्रेयस्कामोह्यभीक्ष्णशः ॥ धर्मोह्यत्रेहितःपुंसांसहस्राधिफलोदयः ३३ पात्रंतत्रनिरुक्तंवैकविभिःपात्रवित्तमैः ॥ हरिरेवैकउर्वीशयन्मयंवैचराचरम् ३४

२२ २३ एतेकालानृणांश्रेयोविवर्द्धनाःएषुश्रेयःकुर्यात्तदेवआयुषःसाफल्यम् २४ किंचएषुयत्कृतंदानहोमजपादितत्अक्षय्यंभवति २५ २६ अथपुण्यदेशान्वक्ष्यामि सवैपुण्यतमोदेशः सत्पात्रंयत्रलभ्यते २७ २८ किंच यत्र हरेः अर्चागंगाद्याःनद्यश्च सः देशः श्रेयसांपदम् २९ यत्रपुष्करादीनिसरांसि तथा कुरुक्षेत्रगयाप्रयागपुलहाश्रमाः ३० नैमिषप्रभासकुशस्थलीवाराणसीमधुरापंपाबिंदुसरः ३१ नारायणाश्रमनंदासीतारामाश्रमादयः सर्वेकुलाचलाःमहेंद्रमलयादयः ३२ एतेयत्रसंतितेपुण्यतमाः देशाः पुण्येच्छुः एतान् सेवेत ३३ हे राजन् सर्वेषु हरिरेव एकं पात्रम् ३४

तदेवाह । देवेषुनरऋषिषुचअर्हत्सुचतपोयोगादिसिद्धेषुब्रह्मात्मजादिषुसनकादिष्वपिसत्सुतत्रत्वदीयेराजसूयेयद्यस्मादच्युतएवपात्रमयासंमतः ३५ संमतत्वेहेतुमाह । जीवराशिभि
र्व्याप्तोब्रह्मांडकोशएववृक्षोंघ्रिपः । ( तस्यमूलत्वात् ) सर्वजीवानामात्मनश्चतर्पणम् ३६ एतदेवरूपनामनिरुक्त्याद्रढयति । पुराणीति । नृतिर्यगादिरूपाणिपुराणिशरीराणितेष्वंतर्या
मिरूपेणप्रत्यगंशेनचशेतेयतःशेतेअतःपुरुषइतिप्रसिद्धम् ३७ तारतम्येनतिर्यगादिभ्यःपुरुषोयस्मादाधिक्येनवर्ततेतस्मात्पुरुषःपात्रं । तत्रापियावानात्मायथेयतेयावानूज्ञानांशोयथाय
थातपआदियोगेनयत्रयत्रप्रतीयतेतथातथासौपात्रमित्यर्थः । तथाचश्रुतिः । 'पुरुषत्वेचाविस्तरामात्मा' इत्यादि ३८ तर्हिप्रतिमादौहरेःपूजांकिमितिकुर्वंतितत्राह । दृष्ट्वेतिद्वाभ्यां ।
मिथोऽवज्ञानमसंमानस्तस्मिन्नात्मबुद्धिर्येषांतेषांमार्दवाक्रियायैपूजाप्रवर्तिता ३९ हरिमुपासते । उपासितापिसर्वापुरुषविद्वेषिणामर्थदानभवति । पुरुषेषुद्वेषंहित्वाऽर्चिनासतीसाभिमंदा
धिकारिणांपुरुषार्थप्रदाभवत्येवेत्यर्थः ४० पुरुषेष्वेवजात्यातपआदिभिश्चपुनर्विशेषांतरमाह । पुरुषेष्वपीति । योधत्तेतनुरात्रविदुः ४१ एतदेवकैमुत्यन्यायेनद्रढयति । नन्वस्येति
( त्रिलोकींपुनंतः ) ४२ ॥ इतिश्रीभागवतेमहापुराणेसप्त० चतुर्दशोऽध्यायः १४ ॥ ७ ॥ ततःपंचदशेसर्ववर्णाश्रमनिबंधनम् ॥ सारतःसंग्रहेणाथवर्ण्यतेमोक्षलक्षणम् ॥१॥ सर्वेषामपिमो
क्षधर्माणांसारसंग्रहार्थमध्यायारंभः । तत्रश्राद्धगतान्विशेषानाह । कर्मनिष्ठाइति । स्वाध्यायादिषुपरिनिष्ठिताइतिशेषः । ( प्रवचनेअध्यापने ) १ कव्यानिपितॄनुद्दिश्यदेयानि । दैवे
चहव्यान्यपितस्मैदेयानि । यथार्हतइतिसर्वत्रज्ञानादितारतम्येन २

देवर्ष्यर्हत्सुवैसत्सुतत्रब्रह्मात्मजादिषु ॥ राजन्यदग्रपूजायांमतःपात्रतयाच्युतः ३५ जीवराशिभिराकीर्णआंडकोशांघ्रिपोमहान् ॥ तन्मूलत्वादच्युते
ज्यासर्वजीवात्मतर्पणम् ३६ पुराण्यनेनसृष्टानिनृतिर्यगृषिदेवताः ॥ शेतेजीवेनरूपेणपुरेषुपुरुषोह्यसौ ३७ तेष्वेषुभगवान्राजंस्तारतम्येनवर्तते ॥
तस्मात्पात्रंहिपुरुषोयावानात्मायथेयते ३८ दृष्ट्वातेषांमिथोनृणामवज्ञानात्मतांनृप ॥ त्रेतादिषुहरेरर्चाक्रियायैकविभिःकृता ३९ ततोऽर्चायांहरिं
केचित्संश्रद्धायसपर्यया ॥ उपासतउपास्तापिनार्थदापुरुषद्विषाम् ४० पुरुषेष्वपिराजेंद्रसुपात्रंब्राह्मणंविदुः ॥ तपसाविद्ययातुष्ट्याधत्तेवेदंहरेस्त
नुम् ४१ नन्वस्यब्राह्मणाराजन्कृष्णस्यजगदात्मनः ॥ पुनंतःपादरजसात्रिलोकींदैवतंमहत् ४२ ॥ ॥ इतिश्रीभागवतेमहापुराणेसप्तमस्कंधेच
तुर्दशोऽध्यायः १४ ॥ ॥ ७ ॥ ॥ श्रीनारदउवाच ॥ कर्मनिष्ठाद्विजाःकेचित्तपोनिष्ठानृपापरे ॥ स्वाध्यायेऽन्येप्रवचनेकेचिज्ज्ञानयोगयोः १
ज्ञाननिष्ठायदेयानिकव्यान्यानंत्यमिच्छता ॥ दैवेचतदभावेस्यादितरेभ्योयथार्हतः २

अच्युतेज्यासर्वेषांतर्पणंभवति ३५ ३६ भगवान्तिर्यगादिपूर्षु अंतर्यामितयाशेते अतः पुरुषइतिप्रसिद्धः ३७ सर्वेषुप्राणिषुभगवान्तारतम्येनवर्तते अतःपुरुषः सत्पात्रम्
३८ तत्रापिब्राह्मणंसुपात्रंविदुः यतःतपआदिना सः हरेस्तनुंवेदंधत्ते ३९ ४० ४१ एवंभूताःद्विजा पादरजसात्रिलोकींपुनंतःएतेकृष्णस्यमहद्दैवतम् ४२ ॥ इतिसप्तमेचतुर्द
शः ॥ १४ ॥ नारदउवाच ॥ केचिद्द्विजाःकर्मनिष्ठाः अपरेतपोनिष्ठाः स्वाध्यायेअन्येप्रवचनेयेकेचित् ज्ञानयोगयोः १ तत्रकव्यानिज्ञाननिष्ठायदेयानि तथाहव्यान्यपि २

३ ( द्रव्यंअन्नादि । अर्हणंपूजनं ) ननुविस्तरःकुतःप्राप्तःयेननिषिध्यतेतत्राह । स्वजनानामर्पणात् जामातापित्रिमंडयतेतास्पित्रादयःकथंवर्ज्याइत्येवंप्रामाद्विस्तरादित्यर्थः ( अतएव
दाक्षिण्येनदेशकालादिसंकोचान्नैतानिसम्यग्भवंतीतिभावः ) ४ मुन्यन्नं अरण्यव्रीह्यादि । हरिदैवतंहरयेनिवेदितंमित्यर्थः । ( अक्षयंमहतीनिश्शेषः ) ५ तद्देवादिपुरुषात्मकंस्वरू
पम् ६ ७ ( धर्मतत्त्वमेवाह ) दंडस्यन्यासःहिंसायास्त्यागोयः एतादृशोऽन्योधर्मोनास्ति ८ अतएवोत्तमाधिकारिणोबाह्यानिकर्माणित्यजंतीत्याह । एकइति । अनीहानिष्कामाज्ञानदी
पिते आत्मस्फूर्तिमति आत्मसंयमने ( मनसःसंयमे ) जुह्वतिमने।नियच्छतदंतरायतयात्यजंतीत्यर्थः तदुक्तम् सर्वज्ञसूक्तेः । 'प्रत्यक्स्फूर्तिरमत्स्फूर्तिरनुनिष्ठाविघातकम् । संलक्ष्यमंत्यजे
त्कर्मत्यजन्विघ्नहतोन्यथा' इति ९ मामाएषःध्रुवंहन्यादिति । कुतःअकरुणःतत्कुतःअसुतृप्प्राणतर्पकःतत्किंअतज्ज्ञःआत्मतत्त्वानभिज्ञः तथाचश्रुतिः । ' तदेषांनप्रियंयदेतन्मनुष्याविद्युः
स्यामकमंतरंबभूव । नीहारेणप्रावृताजल्प्याचासुतृपउक्थशासश्चरंति' इति १० प्रस्तुतमनुवर्तयतितस्मादिति । ( दैवोपपन्नेनअनायाससंप्राप्तेन ) ११ अधर्मवत्तमाश्राद्विषिद्धत्वत् १२
क्रममनाद्दृत्यपंचानामपिस्वयंव्याचष्टे ( सार्धेन ) धर्मबाधोधर्मबुद्ध्यापियस्मिन्क्रियमाणेस्वधर्मबाधः । ( यथाशीतज्वरेस्नानादि ) अन्यस्यचोदितोऽन्यस्यपरधर्मः । उपमेति व्याचष्टे
उपधर्मस्त्विति । ( दंभोदंभेनाक्रियमाणःसवोपधर्मः ) शब्दस्यभित्भेदःअन्यथाकरणशानर्थांतरमित्र यथादशावरान् भोजयेदित्युक्तेदशभ्योऽवरानिति (नवदशावरायेभ्यइति) । शब्द
भृदितिपाठेधर्मशब्दमात्रंबिभर्तीतितथायथागादद्यादित्युक्तेमारिषंत्यागोद्गानम् १३

द्वौदैवेपितृकार्येत्रीनेकैकमुभयत्रवा ॥ भोजयेत्सुसमृद्धोपिश्राद्धेकुर्यान्नविस्तरम् ३ देशकालोचितश्रद्धाद्रव्यपात्रार्हणानिच ॥ सम्यग्भवंतिनैता
निविस्तरात्स्वजनार्पणात् ४ देशेकालेचसंप्राप्तेमुन्यन्नंहरिदैवतम् ॥ श्रद्धयाविधिवत्पात्रेन्यस्तंकामधुगक्षयम् ५ देवर्षिपितृभूतेभ्यआत्मनेस्वज
नायच ॥ अन्नंसंविभजन्पश्येत्सर्वंतत्पुरुषात्मकम् ६ नदद्यादामिषंश्राद्धेनचाद्याद्धर्मतत्त्ववित् ॥ मुन्यन्नैःस्यात्पराप्रीतिर्यथानपशुहिंसया ७
नैतादृशोपरोधर्मोनृणांसद्धर्ममिच्छताम् ॥ न्यासोदंडस्यभूतेषुमनोवाक्कायजस्ययः ८ एकेकर्ममयान्यज्ञान्ज्ञानिनोयज्ञवित्तमाः ॥ आत्मसंय
मनेऽनीहाजुह्वतिज्ञानदीपिते ९ द्रव्ययज्ञैर्यक्ष्यमाणंदृष्ट्वाभूतानिबिभ्यति ॥ एषमाकरुणोहन्यादतज्ज्ञोह्यसुतृप्ध्रुवम् १० तस्माद्दैवोपपन्नेनमुन्यन्नेना
पिधर्मवित् ॥ संतुष्टोऽहरहःकुर्यान्नित्यनैमित्तिकीःक्रियाः ११ विधर्मःपरधर्मश्चआभासउपमाछलः ॥ अधर्मशाखाःपंचेमाधर्मज्ञोऽधर्मवत्त्यजेत् १२ धर्म
बाधोविधर्मःस्यात्परधर्मोऽन्यचोदितः ॥ उपधर्मस्तुपाखंडोदंभोवाशब्दभिच्छलः १३

द्वौदेवेपितृकार्येत्रीन्एकैकमुभयत्रवाभोजयेत् सुसमृद्धोपिश्राद्धेकुर्यान्नविस्तरम् २ देशेकालेचप्राप्तेहरेःअर्पितेनअन्नंविभजन् सर्वंईश्वररूपंपश्येत् ४ ५ ६ किंचधर्मज्ञः
श्राद्धेआमिषंनदद्यात् स्वयंचनाद्यात् यथामुन्यन्नैः हरेः प्रीतिः स्यात् तथापशुहिंसयान ७ किंच नृणांभूतहिंसात्यागसदृशः अन्योधर्मोनास्ति ८ अतः ज्ञानिनः मनो
नियम्यकर्ममयान्त्यजंति ९ ।कचद्रव्ययज्ञैर्यक्ष्यमाणंनरंदृष्ट्वाभूतानिबिभ्यति १० अतः दैवप्राप्तेनमुन्यन्नेनतुष्टःसन्नित्यनैमित्तिकीःक्रियाः कुर्यात् ११ किंच धर्मः १
परधर्मः २ आभासः ३ उपधर्मः ४ छलः ५ इमाः पंच अधर्मशाखाः धर्मज्ञः त्यजेत १२ आसांअर्थमाह धर्मबाधः १ अन्यस्योक्तः २ इच्छयाकृतः ३ पाखंडः ४ शब्दभेदः ५ १३

( आश्रमात्पृथक् आश्रमं विना ) स्वधर्मानुष्ठानानंतरं धर्मभूयस्त्वार्थमपि परधर्मो नानुष्ठेयः अनुपयोगादित्याह । स्वभावविहित इति । स्वस्वधर्माश्रयणे हेतुः १४ किंच । अधनो धर्मार्थमपि धनं नेहेत नापेक्षेत । धनार्थं न व्याप्रियेतेति वा । दैवोपपन्नेनैव स्वधर्मसिद्धेरुक्तत्वात् । यात्रार्थं वा देहादिनिर्वाहार्थमपि नेहेतेत्येतत्प्रपंचयति अनीहेति सार्धैः षड्भिः ( महाहेरजगरस्येव ) १५ ( कामलोभेन काममोगेच्छया या अर्थेहा तया दिशो धावतः ) १६ उपानहौ पादयोर्यस्य स उपानत्पत् तस्य १७ गृहपालः श्वा तद्वदाचरति १८ ( अवकीर्यते नश्यति ) १९ जनः क्षुधा तृषा च कामस्यांतं याति । अन्नोदकातिरिक्तकामपोषकाभावात् । स्मृतिश्च । 'विषया विनिवर्तंते निराहारस्य देहिनः' इति । क्रोधस्य चांतं याति । एतस्य क्रोधस्य यत्फलं हिंसा तस्योदयात्प्राप्तेः । दिशो जित्वापि भुक्त्वापि लोभस्य नैवांतं यातीत्यर्थः २० २१ इदानीं कामादिजयोपायानाह । असंकल्पादिति चतुर्भिः । जयेदिति यथापेक्षमन्वेति । ( असंकल्पाद्विषयसंकल्पाभावेन । कारणनाशे कार्यनाश इत्यर्थः ) अर्थेऽनर्थदर्शनेन लोभं जयेत् । तत्त्वावमर्शनात् अद्वैतानुसंधानेन २२ आन्वीक्षिक्या आत्मानात्मविवेकेन । महतां सात्त्विकानाम् ( उपासया ) सेवया । योगस्यांतरायान् लोकवार्तादीन् । कायाद्यनीहया स्वदेहाद्यनभिमानेनेत्यर्थः २३ येभ्यो भूतेभ्यो दुःखं जायेत तेष्वेव कृपया हितोचरणेन । दैवं दैवोपसर्गनिमित्तं मनःपीडादि विमनाविफलारंभः संसीदत्यनिमित्त इति । आत्मजं देहजं योगवीर्येण प्राणायामादिबलेन । सत्त्वनिषेवया सात्त्विकाहारादिना २४

यस्त्विच्छया कृतः पुंभिराभासो ह्याश्रमात्पृथक् ॥ स्वभावविहितो धर्मः कस्य नेष्टः प्रशांतये १४ धर्मार्थमपि नेहेत यात्रार्थं वाऽधनो धनम् ॥ अनीहानीहमानस्य महाहेरिव वृत्तिदा १५ संतुष्टस्य निरीहस्य स्वात्मारामस्य यत्सुखम् ॥ कुतस्तत्कामलोभेन धावतोऽर्थेहया दिशः १६ सदा संतुष्टमनसः सर्वाः शिवमया दिशः ॥ शर्कराकंटकादिभ्यो यथोपानत्पदः शिवम् १७ संतुष्टः केन वा राजन्न वर्तेतापि वारिणा ॥ औपस्थ्यजैह्व्यकार्पण्याद्गृहपालायते जनः १८ असंतुष्टस्य विप्रस्य तेजो विद्या तपो यशः ॥ स्रवंतींद्रियलौल्येन ज्ञानं चैवावकीर्यते १९ कामस्यांतं च क्षुत्तृड्भ्यां क्रोधस्यैतत्फलोदयात् ॥ जनो याति न लोभस्य जित्वा भुक्त्वा दिशो भुवः २० पंडिता बहवो राजन्बहुज्ञाः संशयच्छिदः ॥ सदसस्पतयोऽप्येके असंतोषात्पतंत्यधः २१ असंकल्पाज्जयेत्कामं क्रोधं कामविवर्जनात् ॥ अर्थानर्थेक्षया लोभं भयं तत्त्वावमर्शनात् २२ आन्वीक्षिक्या शोकमोहौ दंभं महदुपासया ॥ योगांतरायान्मौनेन हिंसां कायाद्यनीहया २३ कृपया भूतजं दुःखं दैवं जह्यात्समाधिना ॥ आत्मजं योगवीर्येण निद्रां सत्त्वनिषेवया २४

१४ किंच स्वयं अधनः धर्मार्थं यात्रार्थं वा धनं नापेक्षेत निरिच्छस्य निरीहा महाहेरिव वृत्तिदा भवति १५ संतुष्टस्य यत् सुखं तत् लोभेन धावतः कुतः १६ सदा संतुष्टमनसः सर्वाः दिशः सुखदाः यथा शर्कराकंटकादिभ्यः उपानत्पदः शिवं १७ १८ असंतुष्टस्य तेजो विद्यादयः इंद्रियलौल्येन स्रवंति १९ जनः क्षुत्तृड्भ्यां कामस्य अंतं याति क्रोधफलेन क्रोधस्य अंतं याति तथापि दिशो जित्वा भुवं भुक्त्वा लोभस्य अंतं न याति २० अथ कामादिजयोपायानाह २१ असंकल्पात् कामं जयेत् कामत्यागात् क्रोधं अर्थे अनर्थदर्शनेन लोभं एवं भयशोकमोहादीन् जयेत् २२ २३ २४ 

२५ ननुकथंगुरोर्भक्त्यासर्वस्यजयःस्यात् । तस्यापिमनुष्यत्वेनतदवस्थत्वात् । तत्राह यस्येति । मर्त्यासद्धीःमनुष्यहातिदुष्टाबुद्धिःतस्यशास्त्रश्रवणंकुंजरस्नानवद्व्यर्थम् २६ ननुगुरोः पितृपुत्रादयस्तेतंनरमेवमन्यंते अतआह । एषगुरुःसाक्षाद्भगवानेवभवेत् । लोकस्यनरोसाविति बुद्धिर्भ्रांतिरित्यर्थः । यद्वा नहि तत्पित्रादेर्मनुष्यबुद्ध्याप्रतीयमानोपिगुरुर्भगवानभवेत् । यथैषश्रीकृष्णइत्यर्थः २७ एवंसर्वैरुपायैःकामादिवेगंजित्वानियतेंद्रियोभूत्वाध्यानपरोभवेत् । अन्यथातंप्रतिसर्वशास्त्रवैफल्यंस्यादित्याहषड्वर्गेति । सर्वाअपिनियमचोदनाइष्टापूर्तादि विषयःषडिंद्रियवर्गस्ययःसंयमस्तास्मिन्नेवैकस्मिन्नंतोयासांतदेकपराइत्यर्थः नचतावतापिचरितार्थाइत्याह । तदंताःसत्योपियदियोगान् धारणाध्यानसमाधीन् नोआवहेयुःनसाधयेयुः तर्हिकेवलंश्रमावहाएवेत्यर्थः २८ एतदेवदृष्टांतेनाह । यथावार्तादयःकृष्यादयःअर्थाःतत्फलानिचयोगस्यार्थं(नाबिभ्रति)मोक्षंनसाधयंतिप्रत्युतअनर्थायसंसारायैव(तेभवेयुः) असतोबाहिर्मुखस्येष्टापूर्तादयपितथा २९ एवंयोगंयुंजतोऽपियस्यकुटुंबासंगेनचित्तंविक्षिप्येततस्यकृत्यमाह । यःचित्तस्यविजयेयत्तउद्युक्तःसभिक्षुःस्यात्संन्यसेत् । तथाचस्मृतिः । 'द्वंद्वाहतस्यगार्हस्थ्यंध्यानभंगादिकारणम् । लक्षयित्वागृहीस्पष्टंसंन्यसेदविचारयन्' इति । भिक्षयाप्राप्तंमितमशनंयस्य ३० ऋजुसममंगंयस्यसऋज्वंगः । सुखंयथाभवत्येवमासीत ॐमित्युच्चारयन्निति शेषः ३१ ३२ ३३ एवमनिशमभ्यसतइहास्ययतेश्चित्तंनिर्वाणंशांतियाति ३४ नचपुनर्विक्षिप्येतेत्याह । कामादिभिरक्षुभितंयच्चित्तंतन्नोत्तिष्ठेत्यतःप्रशांताअखिलावृत्तयोयस्य । कुतःब्रह्मसुखेनस्पृष्टं ३५ यस्तुप्रव्रज्यांकृत्वापिभोगमभिलिप्सुःतंनिंदति । यइति । त्रयाणांधर्मादीनांवर्गःआसमंतादुप्यतेयस्मिंस्तत् (त्रिवर्गावपनं) तस्माद्गृहात्पूर्वंप्रव्रज्य । तान् धर्मादीन् । वांताशीछर्दितभोजी । निर्लज्जश्चसः ३६

रजस्तमश्चसत्त्वेनसत्त्वंचोपशमेनच ॥ एतत्सर्वंगुरोर्भक्त्यापुरुषोह्यंजसाजयेत् २५ यस्यसाक्षाद्भगवतिज्ञानदीपप्रदेगुरौ ॥ मर्त्यासद्धीःश्रुतंतस्यसर्वंकुंजरशौचवत् २६ एषवैभगवान्साक्षात्प्रधानपुरुषेश्वरः ॥ योगेश्वरैर्विमृग्यांघ्रिर्लोकोयंमन्यतेनरम् २७ षड्वर्गसंयमैकांताःसर्वानियमचोदनाः ॥ तदंतायदिनोयोगानावहेयुःश्रमावहाः २८ यथावार्तादयोह्यर्थायोगस्यार्थंनाबिभ्रति ॥ अनर्थायभवेयुस्तेपूर्तमिष्टंतथाऽसतः २९ यश्चित्तविजयेयत्तःस्यान्निःसंगोऽपरिग्रहः ॥ एकोविविक्तशरणोभिक्षुर्भैक्षामिताशनः ३० देशेशुचौसमेराजन्संस्थाप्यासनमात्मनः ॥ स्थिरंसमंसुखंतस्मिन्नासीतर्ज्वंगओमिति ३१ प्राणापानौसन्निरुंध्यात्पूरकुंभकरेचकैः ॥ यावन्मनस्त्यजेत्कामान्स्वनासाग्रनिरीक्षणः ३२ यतोयतोनिःसरतिमनःकामहतंभ्रमत् ॥ ततस्ततउपाहृत्यहृदिरुंध्याच्छनैर्बुधः ३३ एवमभ्यसतश्चित्तंकालेनाल्पीयसायतेः ॥ अनिशंतस्यनिर्वाणंयात्यनिंधनवह्निवत् ३४ कामादिभिरनाविद्धंप्रशांताखिलवृत्तियत् ॥ चित्तंब्रह्मसुखस्पृष्टंनैवोत्तिष्ठेतकर्हिचित् ३५ यःप्रव्रज्यगृहात्पूर्वंत्रिवर्गावपनात्पुनः ॥ यदिसेवेततान्भिक्षुःसवैवांताश्यपत्रपः ३६

सत्त्वेनरजःतमश्च सत्त्वंनिषेवयानिद्राम् उपशमेनसत्त्वम् एतत्सर्वंगुरोर्भक्त्यापुरुषोजयेत् २५ ज्ञानप्रदेगुरौयस्यमनुष्यइतिबुद्धिःतस्यशास्त्रश्रवणंव्यर्थम् २६ एवंकामादिवेगंजित्वाध्यानपरोभवेत् २७ २८ २९ यःचित्तजयेयत्तःसःनिःसंगोभूत्वा ३० शुचौदेशेआसनंसंस्थाप्यतत्रोपविश्य ॐ इत्युच्चारयन् ३१ पूरककुंभकरेचकैःप्राणापानौसन्निरुंध्यात् स्वनासाग्रनिरीक्षणः ३२ किंचयत्रयत्रमनोगच्छतिततःततःआहृत्यहृदिरुंध्यात् ३३ एवंअभ्यसतःयतेःचित्तंशांतियाति ३४ ३५ यःयतिःपुनःधर्मादीन्सेवतेसःवांताशीज्ञेयः ३६

भा०स० नचेदमघटितंदृष्टत्वादित्याह । यैः पूर्वंस्वदेहःअनात्मादिरूपःस्मृतःचिंतितःतएवपुनरेनमात्म(रूप)इतिमत्वाश्लाघयंतिस्तावयंतिहि ३७ यतीनुपलक्षणीकृत्याश्रमानपिस्वधर्मत्यागिनो अ०
निंदति गृहस्थस्येतिद्वाभ्यां (तपस्विनोवानप्रस्थस्य) ३८ (आश्रमानुविडंबयंतिअनुकुर्वंतीतितथा) ३९ नन्वात्मतत्त्वज्ञस्यभिक्षोरिंद्रियलौल्येपिकोदोषस्तत्राह । आत्मानंपरंब्र
ह्यचेज्जानीयात् ज्ञानेनधुतानिरस्ताआशयावासनायस्य । तस्यज्ञानिनोलौल्यमेवनसंभवतीत्यर्थः । तथाचश्रुतिः । 'आत्मानंचेद्विजानीयादयमस्मीतिपूरुषः । किमिच्छन्कस्य
॥ ३७॥ कामायशरीरमनुसंज्वरेत्'इति ४० अज्ञस्यतुलौल्येननरकपातापत्तेरप्रमत्तेनसदातत्त्वज्ञानेयतितव्यमितीममर्थं 'आत्मानंरथिनंविद्धिशरीरंरथमेवच' इत्यादिश्रुत्युक्तरथरूपकेणाह । ॥१५॥
आहुरितिषड्भिः । इंद्रियेशंमनोऽभिषून्रश्मीनाहुः । मात्राःशब्दादीन्वर्त्मानिगंतव्यदेशानाहुः । सत्त्वंचित्तंबृहद्देहव्यापिबंधुरंबंधनं । चित्तंविनाह्यनिबद्धमिवशरीरंभवति । ईश
सृष्टमितिबंधनकर्तास्वीशएवेत्यर्थः ४१ प्राणादयःपंच । 'नागःकूर्मश्चकृकलोदेवदत्तोधनंजयः'इत्येवंदशविधंप्राणमक्षम् । अभिमानंसाहंकारंजीवंरथिनम् शुद्धजीवंशरम् परंब्रह्मलक्ष्यम्
यथाधनुषाशरोलक्ष्येनिपात्यतेतथाप्रणवेनजीवोब्रह्मणिनिपात्यतइत्यर्थः ४२ रागादयोजेतव्याःशत्रवः ४३ तत्ररजोऽभिनिवेशः कथंभूताःशत्रवःरजस्तमःप्रकृतयः ।(तथाक्वचि
दाक्रूरसमावेशःपरोपकारादिप्रवृत्तयोपि सत्त्वप्रकृतयः) शत्रवः ४४ नृकायरूपंरथंआत्मवशउपकल्पइंद्रियादिपरिकरोयस्मिन् तथाभूतंयावद्धत्तेतावदेवमहिष्ठानांगुरूणांचरणसेवयानि
शातंतीक्ष्णंज्ञानखड्गंबिभ्रत्अच्युताश्रयःसन्निरस्तशत्रुरत्रएवोपशांतःस्वानंदेनतुष्टोभूत्वाइदंरथादिकमुपेक्षेतेत्यर्थः ४५

यैःस्वदेहःस्मृतोऽनात्मामर्त्योविट्कृमिभस्मसात् ॥ तएनमात्मसात्कृत्वाश्लाघयंतिह्यसत्तमाः ३७ गृहस्थस्यक्रियात्यागोव्रतत्यागोवटोरपि ॥ तपस्वि
नोग्रामसेवाभिक्षोरिंद्रियलौल्यता ३८ आश्रमापसदाह्येतेखल्वाश्रमविडंबकाः ॥ देवमायाविमूढांस्तानुपेक्षेतानुकंपया ३९ आत्मानंचेद्विजानीयात्परं
ज्ञानधुताशयः ॥ किमिच्छन्कस्यवाहेतोर्देहंपुष्णातिलंपटः ४० आहुःशरीरंरथमिंद्रियाणिहयानभीषून्मनइंद्रियेशम् ॥ वर्त्मानिमात्राधिषणांचसूतं
सत्त्वंबृहद्बंधुरमीशसृष्टम् ४१ अक्षंदशप्राणमधर्मधर्मौचक्रेऽभिमानंरथिनंचजीवम् ॥ धनुर्हितस्यप्रणवंपठंतिशरंतुजीवंपरमेवलक्ष्यम् ४२ रागोलोभश्च
द्वेषश्चशोकमोहौभयंमदः ॥ मानोऽवमानोऽसूयाचमायाहिंसाचमत्सरः ४३ रजःप्रमादक्षुन्निद्राःशत्रवस्त्वेवमादयः ॥ रजस्तमःप्रकृतयःसत्त्वप्रकृतयः
क्वचित् ४४ यावन्नृकायरथमात्मवशोपकल्पंधत्तेगरिष्ठचरणार्चनयानिशातम् ॥ ज्ञानासिमच्युतबलोदधदस्तशत्रुःस्वानंदतुष्टउपशांतइदंविजह्यात् ४५

३७ गृहस्थस्याक्रियात्यागोव्रतत्यागोबटोरपि तपस्विनोग्रामसेवाभिक्षोरिंद्रियलौल्यता १ ३८ एतेआश्रमविडंबकाःअतःसदातत्त्वज्ञानेयतितव्यम् ३९ ४० अथनृदेह
स्यरूपकमाह शरीरंरथंआहुः इंद्रियाणिहयान् बुद्धिंसारथिम् मनःरश्मीन् धर्माधर्मौचक्रे साहंकारंजीवंरथिनम् प्रणवंधनुःशुद्धंजीवंशरम् परंब्रह्मलक्ष्यम् यथाधनुषाशरो
लक्ष्येनिपात्यतेतथाप्रणवेनजीवःब्रह्मणिनिपात्यरागद्वेषादयःजेतव्याः एवंनृकायरूपंरथंपुमान्यावत्धत्तेतावदेवमहत्सेवयाज्ञानासिंदधत् भगवदाश्रयःसन्जितशत्रुःस्वानं ॥ ३५
दतुष्टोभूत्वाइदंरथादिकंउपेक्षेत ४१ ४२ ४३ ४४ ४५

अच्युताश्रयामावेबाधकमाह । नोचेदिति । असंतोबहिर्मुखायेइंद्रियवाजिनःसूतश्च ( बुद्धिः ) तेउत्पथंप्रवृत्तिमार्गंनीत्वाविषयाख्येषु ( दस्युषुचोरेषु ) निक्षिपंति । हयैःसूतेनचसहवर्तते
मानम् । तमोंधितमसाव्याप्ते । उरुमृत्युभयम्यस्मिन् ४६ ननुचवेदविहितेष्टापूर्तादिकारिणःपुंसःकथमेवमनर्थप्राप्तिःस्यादित्याशंक्यवेदोक्तकर्मणोद्वैविध्यंदर्शयन्फलमाहप्रवृत्तंचेतिदशभिः
४७ हिंस्रंश्येनयागादि । द्रव्यमयंपुरोडाशादिप्रधानं अशांतिदंअत्यासक्तिप्रदं ( काम्यंस्वर्गादिकामनयाकृतंअग्निहोत्रादि ) आदिशब्दार्थविवरणंदर्शश्चेति पशुः पशुयागःसुतःसोमयागः
४८ हुतंवैश्वदेवंप्रहुतंबलिहरणंएतत्सर्वमिष्टमुच्यते । एतदेवयदिकाम्यंअशांतिदंचतर्हिप्रवृत्ताख्यमपीत्यर्थः । ( आराम उपवनम् ) आजीव्यंप्रपादि ( इदंपूर्तमुच्यतेप्रवृत्ताख्यमपि ) ४९
प्रवृत्तेनकर्मणाआरोहावरोहाभ्यामावृत्तिप्रकारमाह । द्रव्यस्यचरुपुरोडाशादेःसूक्ष्मोविपाकःपरिणामोदेहांतरारंभको ( भूतसूक्ष्माख्यः ) येनसंपरिष्वक्तोगच्छतियएवश्रुतौअप्शब्दे
नोक्तः 'इतितुपंचम्यामाहुतावापःपुरुषवचसोभवंति' इति । पाठांतरेद्रव्यशब्देनतेजोमात्राशब्दोक्तानिइंद्रियाणि ऊष्मविपाकशब्देनहृदयाग्रप्रद्योतः तथाचश्रुतिः 'सइमास्तेजोमात्राःसमभ्या
ददानोहृदयमेवानुक्रामत' इति तथा 'तस्यहैतस्यहृदयाग्रंप्रद्योततेतेनैषआत्मानिष्क्रामति' इति धूमादिशब्दैस्तत्तदभिमानिन्योदेवताः । तत्रापक्षयःकृष्णपक्षःसोमःसोमलोकःतत्रभुक्त
भोगस्यावरोहणप्रकारमाहअदर्शइत्यादिना ( अदर्शइति ) विपरीतलक्षणाविशिष्टभोगक्षयश्लोकाग्निनादेहलयेनादर्शनमुच्यते । एतदुक्तंभवति । भूतसूक्ष्मयुक्तोधूमाद्यतिवाहिकदेवताभिः
सोमलोकंप्रापितस्तद्भोगावसानेविलीनदेहोवृष्टिद्वारेणौषधिवीरुधादिक्रमेणजायते । एवंपुनर्भवहेतुःपितृयानंप्रवृत्तकर्ममार्गोहाति ( इमेशइमेभूपते । श्रुतिश्च । तेधूममभिसंभवंतिधूमाद्रा
त्रिंरात्रेरपरपक्षम्' इत्यादि । स्मृतिश्च । 'यज्ञेनतपसादानैर्येहिस्वर्गजितोनराःधूमंनिशांकृष्णपक्षंदक्षिणायनमेवच । पितृलोकंचंद्रमसंवायुंवृष्टिजलंमही । क्रमातेसंभवंतीहपुनरेवव्रजंति
वा ' इत्यादि । गीतासुच 'धूमोरात्रिस्तथाकृष्णःषण्मासादक्षिणायनम् । तत्रचांद्रमसंज्योतिर्योगीप्राप्यनिवर्तते ' इति ) ५० पुनर्भवमेवाह । एकैकश्येनप्रत्येकं ( आनुपूर्व्या ) क्रमे
णभूत्वाभूत्वातत्तत्साक्षित्वंप्राप्येहभूमौजायतेतत्राधिकारिणमाह । निषेकेति ( निषेकादिश्मशानांतैःगर्भाधानाद्यंत्येष्टिपर्यंतैः ) अन्यस्त्विष्टादिकार्यप्येवंजन्मलभतइत्यर्थः ५१

नोचेत्प्रमत्तमसदिंद्रियवाजिसूतानीत्वोत्पथंविषयदस्युषुनिक्षिपंति ॥ तेदस्यवःसहयसूतममुंतमोंधेसंसारकूपउरुमृत्युभयेक्षिपंति ४६ प्रवृत्तंचनिवृत्तं
चद्विविधंकर्मवैदिकम् ॥ आवर्ततेप्रवृत्तेननिवृत्तेनाश्नुतेऽमृतम् ४७ हिंस्रंद्रव्यमयंकाम्यमग्निहोत्राद्यशांतिदम् ॥ दर्शश्चपौर्णमासश्चचातुर्मास्यंपशुःसुतः
४८ एतदिष्टंप्रवृत्ताख्यंहुतंप्रहुतमेवच ॥ पूर्तंसुरालयारामकूपाजीव्यादिलक्षणम् ४९ द्रव्यसूक्ष्मविपाकश्चधूमोरात्रिरपक्षयः ॥ अयनंदक्षिणंसोमोदर्श
ओषधिवीरुधः ॥ अन्नंरेतइतिक्ष्मेशपितृयानंपुनर्भवः ५० एकैकश्येनानुपूर्व्यंभूत्वाभूत्वेहजायते ॥ निषेकादिश्मशानांतैःसंस्कारैःसंस्कृतोद्विजः ५१

अन्यथाएतेएवअसदिंद्रियवाजिसूताःप्रमत्तंजनंप्रवृत्तिमार्गंनीत्वाविषयदस्युषुक्षिपंति तेदस्यवः एनं सरथंसंसारकूपे क्षिपंति ४६ एवंप्रवृत्तिमार्गेजसंसारं निवृत्तिमार्गे
णअमृतंअश्नुते ४७ ४८ ४९ ५० ५१

निवृत्तकर्मनिष्ठस्योपासनाविशेषोपदेशन्नार्चिरादिमार्गेण ब्रह्मलोकप्राप्तिमाह इंद्रियेष्वित्यादिना । यद्वा द्रव्ययज्ञेषु हिंसायायुक्तत्वादितिपूर्वं निवृत्तकर्मैव दर्शयन्नाह । ज्ञानेनदीप्यंत इतितथातेषुइंद्रियव्यापाराणांइष्टापूर्तादीनामिंद्रियतावन्मात्रतांभावयंतीत्यर्थः एवमुत्तरत्रापि । इंद्रियेषु कर्मोदर्शनादिसंकल्परूपेमनसि ( इंद्रियाणिजुह्वतिविषयेभ्योनिगृहीतानींद्रियाणिमनोरूपाणिभावयंतीत्यर्थः ) तद्वैकारिकंविकारयुक्तंमनोवाचि । त्रिष्यादिलक्षणयावाचाहिमनःकर्तृत्वादिविकारंभजति ५२ ( वाचं ) वर्णानां ( अकारादीनां ) समाम्नायेसमुदाये । तद्विशेषत्वाद्वाचः स्वरेअकारादिस्वरत्रयात्मके ( तंसमाम्नायंभावयेत् ) ओंकारंबिंदौतंचनादेतंनादंतुप्राणेसूत्रात्मनि । ( अमुंप्राणम् ) महतिब्रह्मणि ५३ अग्निरिति ( अग्न्यादिशब्दैः ) स्ततदभिमानिन्योदेवताः ( लक्ष्यंते ) ताःप्राप्नोतीतिपूर्ववत् । दिवाऽहः । प्राह्नस्तस्यैवांतः राकाशुक्लपक्षस्तयांतः । यद्वा प्राह्णःराकेतिचपुराणमतानुसारेणोक्तम् । उत्तरमयनम् । स्वराड्ब्रह्मा । एवंब्रह्मलोकंगतस्यभोगावसानेमोक्षप्रकारमाह । विश्वइति । विश्वःस्थूलोपाधिकः । तंस्थूलंसूक्ष्मेविलाप्यसूक्ष्मोपाधिकस्तैजसोभवति । सूक्ष्मंचकारणेविलाप्यकारणोपाधिःप्राज्ञोभवति । कारणंचसाक्षिणः ( सर्वत्र ) अन्वयात्साक्षिस्वरूपेविलाप्यतुर्योभवति तेषांचसाक्षिणिलयेशुद्धआत्मा भवतिमुच्यतइत्यर्थः । ( अत्रश्रुतिः । 'तेर्चिरभिसंभवंत्यार्चिषोऽह्नोऽह्नआपूर्यमाणपक्षम् ' इत्यादि । स्मृतिश्च । 'अग्निर्ज्योतिरहःशुक्लःषण्मासाउत्तरायणम् । तत्रप्रयातागच्छंतिब्रह्मब्रह्मविदोजनाः' इति ) ५४ (अनुपूर्वशःअनुक्रमेणअग्न्यादिरूपोभूत्वाभूत्वातत्तद्देवतासांनिध्यंप्राप्येत्यर्थः । यद्वा ) यथेतरो ( भूत्वा ) भूत्वानिवर्ततेतथायंनानिवर्ततइत्यर्थः ५५ (अयनेमार्गौ । ) वेदेननिर्मिते 'तेधूममभिसंभवंतितेर्चिरभिसंभवंति ' इतिश्रुतिभ्यांनिश्चयेनविनिश्चयज्ञापितेइत्यर्थः । जनस्थोपिदेहस्थोपिनमुह्यति । ( 'नैतेसृतीपार्थजानन्योगीमुह्यतिकश्चन 'इतिभगवद्वचनंच ) ५६ तत्रहेतुमाह । आदाविति । जनानांदेवादीनांआदौकारणत्वेनअंतेचावधित्वेनयत्सत् ( सत्यं ) तथाबहिर्मध्यंअंतेभोक्तृपरमवरंचउच्चंनीचं तमोऽप्रकाशःज्योतिःप्रकाशः तत्सर्वंअयंज्ञानीस्वयमेव । नतस्माद्व्यतिरिक्तंकिंचिदस्तियेननमुह्येदित्यर्थः ५७ ननुतर्हिकथंपृथगर्थस्तस्यप्रतीयतेतत्राह । आबाधितःतर्कविरोधेनसर्वतोबाधितोपिआभासःप्रतिबिंबादिःवस्तुतयायथास्मृतःतद्वदैंद्रियकंसर्वंअर्थत्वेनविकल्पितम् । ( प्रातिभासिकस्ययादृशंवस्तुत्वंतादृशमेवव्यावहारिकस्यापीत्यर्थः ) नतुपरमार्थतः । दुर्घटत्वात् ( तर्कविरुद्धत्वादित्यर्थः ) ५८

**इंद्रियेषुक्रियायज्ञान्ज्ञानदीपेषुजुह्वति ॥ इंद्रियाणिमनस्यूर्मौवाचिवैकारिकंमनः ५२ वाचंवर्णसमाम्नायेतमोंकारेस्वरेन्यसेत् ॥ ॐकारंबिंदौनादेतंतंतुप्राणेमहत्यमुम् ५३ अग्निःसूर्योदिवाप्राह्णःशुक्लोराकोत्तरंस्वराट् ॥ विश्वश्चतैजसःप्राज्ञस्तुर्यआत्मासमन्वयात् ५४ देवयानमिदंप्राहुर्भूत्वाभूत्वानुपूर्वशः ॥ आत्मयाज्युपशांतात्माह्यात्मस्थोनानिवर्तते ५५ यएतेपितृदेवानामयनेवेदनिर्मिते ॥ शास्त्रेणचक्षुषावेदजनस्थोपिनमुह्यति ५६ आदावंतेजनानांसद्बहिरंतःपरावरम् ॥ ज्ञानंज्ञेयंवचोवाच्यंतमोज्योतिस्त्वयंस्वयम् ५७ आबाधितोपिह्याभासोयथावस्तुतयास्मृतः ॥ दुर्घटत्वादैंद्रियकंतद्वदर्थविकल्पितम् ५८**



५२ ५३ ५४ ५५ ५६ ५७ ५८

दुर्घटत्वमेवाह । क्षित्यादीनांपंचभूतानांछायाऐक्यबुद्ध्यालंबनरूपंदेहादिसंघातारंभणपरिणामानांमध्येकतमापिअन्यतमापिनसत्राते । तथाहि । सानतेषांसंघातःवृक्षाणामिवव
नम् । एकदेशाकर्षणेसर्वाकर्षणानुपपत्तेः । नह्येकस्मिन्वृक्षआकृष्टेसर्ववनमाकृष्यते । नचाविकारःआरब्धोऽवयवी । अपिआरब्धात्परिणामोपि । कुतः । सकिंस्वावयवेभ्योवाधरिकाते
भ्योवापृथक् । तदन्वितोवा । नतावदस्त्यंतंपृथक्तथाअप्रतीतेः । नचान्वितः । सकिंप्रत्यवयवंसर्वोऽन्वेतिअंशेनवा । आद्येअंगुलिमात्रेपिदेहबुद्धिःस्यात् । द्वितीयेतस्याप्यंशांमीकारे
सत्यनवस्थास्यात् । अतोमृषैवेत्यर्थः ५९ एवंदेहादेर्मिथ्यात्वमुक्त्वातद्धेतूनांक्षित्यादीनामपिमिथ्यात्वमाह । धारयंतीतिधातवोमहाभूतानितन्मात्रैःसूक्ष्मावयवैर्विनानस्युःअवयवित्वाते
षामपि तर्ह्यवयवःसत्यइतिचेत्तत्राह । उक्तप्रकारेणावयविन्यसतिअवयवोऽप्यंततोऽसन्नेवस्यात् । अवयवप्रतीत्यन्यथानुपपत्तिंविनातत्सद्भावेप्रमाणाभावादित्यर्थः । तदुक्तंपंचमस्कंधे ।
'एवंनिरुक्तंक्षितिशब्दवृत्तं' इत्यादि ६० नन्ववयविनोऽभावेआगमापायिषुबाल्यादिषुसोयंदेवदत्तइतिप्रत्यभिज्ञानंनस्यात् तदुक्तंभट्टैः । आविर्भावतिरोभावधर्मकेष्वनपायिवत्
तद्धर्मि' इति तत्राह । स्यादिति । वस्तुनः परमात्मनोविकल्पेभेदेअसति यद्वावस्तुनोऽविद्ययाविकल्पेसतिपूर्वपूर्वारोपसादृश्यात् (सेयंदीपज्वालेतिवत्) सएवेतिभ्रमःस्यात् । सचतावदे
वयावदविद्यानिवृत्तिः । ननुसर्वस्यमिथ्यात्वेशास्त्रस्यविधिनिषेधताकथंतत्राह । स्वप्नमध्ये ( तद्वत्-) जाग्रत्स्वप्नव्यवस्था ( प्रमितामबोधेतुत्रयोपिस्वप्नाएव ) यथातथेति ६१ इदानीमुक्तमे
वाद्वैतंभावनात्रयोपदेशेनदृढीकरोति । भावाद्वैतमितिचतुर्भिः ( आत्मनःभावाद्वैतादिकम् ) वर्तयन्नालोचयन्स्वानुभूत्याआत्मतत्त्वानुभवेनत्रीन्जाग्रदादीन् 'त्रयआवसथास्त्रयःस्वप्नाः'
इतिश्रुतेः यद्वा वस्तुभेदबुद्धिरेकःऽस्वप्नः ततस्तदधिकारभेदेनकर्मबुद्धिर्द्वितीयःततोमत्कर्मसाधितमेतत्फलंममैवभोग्यमितितृतीयःतान्धुनुतेनिवर्तयति (यद्वाप्रपंचलक्षणोदीर्घस्वप्नस्तद्व
तौविधिनिषेधौचेतित्रीन् ) ६२ ( किंतद्भावाद्वैतादिकंतदाह । कार्येति । विकल्पस्यभेदस्यमिथ्यात्वात् ) कार्यकारणयोःवस्त्वैक्यस्यमर्शनंआलोचनम् । तंतुरेवनपटइतिवत् ६३
मनोवाक्तनुभिःकृतानांकर्मणांसमर्पणम् । तैःसमर्पणमितिवा । उद्देश्यफलभेदोहिक्रियाभेदेहेतुः ईश्वरार्पणेचभावात्क्रियाणामद्वैतम् ६४ आत्मनःस्वस्यजायादीनांच ( अन्येषांसर्वदे
हिनांच ) स्वार्थश्चकामश्चतयोः । सर्वेषांदेहादीनांपंचभूतात्मकत्वेनभोक्तृणांचपरमात्मत्वेन ( यत् ) अभेदालोचनंतेनार्थकामयोर्यदैक्यदर्शनंतदित्यर्थः ६५

क्षित्यादीनामिहार्थानांछायानकतमापिहि ॥ नसंघातोविकारोपिनपृथङ्नान्वितोमृषा ५९ धातवोऽवयवित्वाच्चतन्मात्रावयवैर्विना ॥ नस्युर्ह्य
सत्यवयविन्यसन्नवयवोंततः ६० स्यात्सादृश्यभ्रमस्तावद्विकल्पेऽसतिवस्तुनः ॥ जाग्रत्स्वापौयथास्वप्नेतथाविधिनिषेधता ६१ भावाद्वैतंक्रियाद्वैतं
द्रव्याद्वैतंतथात्मनः ॥ वर्तयन्स्वानुभूत्येहत्रीन्स्वप्नान्धुनुतेमुनिः ६२ कार्यकारणवस्त्वैक्यमर्शनंपटतंतुवत् ॥ अवस्तुत्वाद्विकल्पस्यभावाद्वैतंतदु
च्यते ६३ यद्ब्रह्मणिपरेसाक्षात्सर्वकर्मसमर्पणम् ॥ मनोवाक्तनुभिःपार्थक्रियाद्वैतंतदुच्यते ६४ आत्मजायासुतादीनामन्येषांसर्वदेहिनाम् ॥ यत्स्वा
र्थकामयोरैक्यंद्रव्याद्वैतंतदुच्यते ६५

५९ ६० ६१ ६२ किंच कार्यकारणवस्त्वैक्यदर्शनंपटतंतुवत्भावाद्वैतम् १ ६३ परेब्रह्मणिसर्वकर्मार्पणंक्रियाद्वैतम् २ ६४ आत्मनःजायापुत्रादिसर्वप्राणिनां
चअर्थकामयोर्यत्ऐक्यंद्रव्याद्वैतम् ३ ६५

तक्कानाश्रमधर्मान्संक्षिप्याह । यदिति । यत्रदस्मिन्देशेकालेवायेनोपायेनयस्मकाशात ( यत्द्रव्यमनिषिद्धंयस्यपुरुषस्यसपुरुषःतेनद्रव्येण ) ६६ प्रस्तुतमुपसंहरतिएतैरिति । अस्य श्रीकृष्णस्यगतिं । तद्भक्तिभाक्तस्यभक्तः ६७ एतच्चसर्वसाधारणमुक्तम् । भक्तस्यतुभक्तिरेवसर्वपुरुषार्थहेतुरितिपांडवानेवलक्षीकृत्याह । यथाहीति । हेनृपदेव । नृपैर्देवैश्चस हायैर्दुस्त्यजादापदितिवा । आत्मनःप्रभोःश्रीकृष्णादेवहेतोः । उत्तरतउत्कर्षेणातरतेत्यर्थः अडभावआर्षः । यथायथावत् । तमेवभजतेतिशेषः यद्वायथाआपद्गणादुत्तीर्णास्त्वयं थाचक्रतूनहार्षीत्तथासंसारादपियूयंश्रीकृष्णादेवतारकादुत्तरतेत्यर्थः ६८ श्रीकृष्णसेवापिमहतामवज्ञयाभ्रश्यतितत्कृपयाचसिध्यतीतिदर्शयन्स्वपूर्ववृत्तांतमाह । अहमितिसार्धैःपं चभिः । नाम्नाउपबर्हणः ६९ पेशलंसौकुमार्यं । रूपादिभिःप्रियंदर्शनंयस्य । ( तासांस्त्रीणांपुरुकंपटःअतिलोलुपः ) ७० ( हरिगाथानामुपगायनविषये ) ७१ तदाह्वानंविद्वान् अहंचमत्तःसन्नगायन्नेवमतः ७१

यद्यस्यवाऽनिषिद्धंस्याद्येनयत्रयतोनृप ॥ सतेनेहेतकार्याणिनरोनान्यैरनापदि ६६ एतैरन्यैश्चवेदोक्तैर्वर्तमानःस्वकर्मभिः ॥ गृहेप्यस्यगतिंयाया द्राजंस्तद्भक्तिभाङ्नरः ६७ यथाहियूयंनृपदेवदुस्त्यजादापद्गणादुत्तरतात्मनःप्रभोः ॥ यत्पादपंकेरुहसेवयाभवानहार्षीन्निर्जितदिग्गजःक्रतून् ६८ अ हंपुराऽभवंकश्चिद्गंधर्वउपबर्हणः ॥ नाम्नाऽतीतेमहाकल्पेगंधर्वाणांसुसंमतः ६९ रूपपेशलमाधुर्यसौगंध्यप्रियदर्शनः ॥ स्त्रीणांप्रियतमोनित्यंमत्तस्त्वत्पु रलंपटः ७० एकदादेवसत्रेतुगंधर्वाप्सरसांगणाः ॥ उपहूताविश्वसृग्भिर्हरिगाथोपगायने ७१ अहंचगायंस्तद्विद्वान्स्त्रीभिःपरिवृतोमतः ॥ ज्ञात्वावि श्वसृजस्तन्मेहेलनंशेपुरोजसा ॥ याहित्वंशूद्रतामाशुनष्टश्रीःकृतहेलनः ७२

एतत्त्रयंस्वानुभूत्यायःजानातिसःमुनिःत्रीन्जाग्रदादीन्धुनोति ६६ एतैरन्यैश्चवेदोक्तैःकर्मभिर्वर्तमानःगृहेपिकृष्णस्यगतिंयायात् ६७ हेनृप यूयंगृहेवर्तमानाःसंतःश्रीकृ ष्णादेवआपद्गणात्अतरतअतःतंभजतभगवत्सेवामहतांअवज्ञयाभ्रश्यतितत्कृपयासिध्यति ६८ स्वोदाहरणेनदर्शयतिहेधर्मपुराअहंगतकल्पेउपबर्हणोनामगंधर्वःआसम् ६९ एकदादेवसत्रेगंधर्वादयःहरिगाथागायनेविश्वसृग्भिःआहूताःतत्रअहंस्त्रीभिर्वृतःसन्गतःतदामदपराधंज्ञात्वाविश्वसृजःशूद्रोभवेतिशेपुः ७० ७१ ७२ ॥३१॥

( तावत्तदानीम् ) ७३ त्वंतुकृतार्थएवेतिहर्षेणपुनःपूर्वश्लोकानेवपठति । यूयमिति । प्राग्व्याख्यातम् । शेषंस्पष्टं ७४ ७५ ७६ ७७ ७८ ७९ ( यत्रवंशेषु ) ८० सप्तमस्कंधभावार्थदीपिका । संसेव्यतांसदासद्भिर्यतिश्रीधरनिर्मिता ॥ १ ॥ ॥ इतिश्रीभागवतेमहापुराणेसप्तमस्कंधेभावार्थदीपिकायांपंचदशोऽध्यायः १५ ॥ ॥ समाप्तोयंसप्तमस्कंधः ॥७॥

तावद्दास्यामहंजज्ञेतत्रापिब्रह्मवादिनाम् ॥ शुश्रूषयानुषंगेणप्राप्तोऽहंब्रह्मपुत्रताम् ७३ धर्मस्तेगृहमेधीयोवर्णितःपापनाशनः ॥ गृहस्थोयेनपदवीमंजसा न्यासिनामियात् ७४ यूयंनृलोकेबतभूरिभागालोकंपुनानामुनयोऽभियंति ॥ येषांगृहानावसतीतिसाक्षाद्गूढंपरंब्रह्ममनुष्यलिंगम् ७५ सवाअयंब्रह्ममहद्वि मृग्यंकैवल्यनिर्वाणसुखानुभूतिः ॥ प्रियःसुहृद्वःखलुमातुलेयआत्मार्हणीयोविधिकृद्गुरुश्च ७६ नयस्यसाक्षाद्भवपद्मजादिभीरूपंधियावस्तुतयोपवर्णित म् ॥ मौनेनभक्त्योपशमेनपूजितःप्रसीदतामेषससात्वतांपतिः ७७ ॥ श्रीशुकउवाच ॥ इतिदेवर्षिणाप्रोक्तंनिशम्यभरतर्षभः ॥ पूजयामासस्रुप्रीतःकृ ष्णंचप्रेमविह्वलः ७८ कृष्णपार्थावुपामंत्र्यपूजितःप्रययौमुनिः ॥ श्रुत्वाकृष्णंपरंब्रह्मपार्थःपरमविस्मितः ७९ इतिदाक्षायणीनांतेपृथग्वंशाःप्रकीर्तिताः ॥ देवासुरमनुष्याद्यालोकायत्रचराचराः ८० ॥ ॥ इतिश्रीभागवतेमहापुराणेपारमहंस्यांसंहितायांसप्तमस्कंधेपंचदशोऽध्यायः १५ ॥ इतिसप्तमस्कंधः समाप्तः ॥ छ ॥

तावदहंदास्यांजज्ञेतत्रब्रह्मवादिनांसेवयाब्रह्मपुत्रताप्राप्तः ७३ हेराजन्एवंगृहमेधीयोधर्मःतेउक्तःयेनन्यासिनांपदवींइयात् ७४ यूयंनृलोकेअतभूरिभागाःयतःयुष्माकंगृहे षुनराकारंश्रीकृष्णाख्यंब्रह्मसाक्षाद्वसतितद्दर्शनार्थंमुनयःसर्वतःआयांति ७५ किंचसोऽयंब्रह्मैवयुष्माकंप्रियःसुहृन्मातुलेयइत्यादिरूपोभवति ७६ यस्यरूपंशिवादिभिरपि इदमित्थमितिसाक्षान्नोपवर्णितंसःयुष्माकंस्वयमेवप्रसन्नःएवंभूतःभगवान्मेप्रसीदताम् ७७ ॥ श्रीशुकउवाच ॥ एवंदेवर्षिणाप्रोक्तंनिशम्यप्रीतःधर्मराजःकृष्णंनारदंच पूजयामास ७८ पूजितोमुनिःकृष्णपार्थौआमंत्र्यययौ पार्थःकृष्णंपरंब्रह्मश्रुत्वाविस्मितःआसीत् ७९ एवंवेदक्षकन्यानांवंशाःकीर्तिताःयत्रदेवासुरमनुष्याद्याःचराचराःअभव न् ८० ॥ ॥ इति सप्तमस्कंधेचूर्णिकायांपंचदशोऽध्यायः ॥१५॥ ॥ छ ॥ ॥ इतिसप्तमस्कंधःसमाप्तः ॥ ॥ श्रीकृष्णार्पणमस्तु ॥ ॥ शुभंभवतु ॥ ॥ छ ॥ ॥ छ ॥

श्रीगंयति ॥ ॥ ॐ नमःश्रीपरमहंसास्वादितचरणकमलचिन्मकरंदायमक्तजनमानसनिवासायश्रीरामाय ॥ ॥ अथाष्टमेचतुर्विंशत्यध्यायैर्मनुवर्णनम् । तस्तुतेऽर्कोऽपिदेवेंद्रैर्मूर्तिभिश्च
हरेःसह ॥ १ ॥ प्रतिमन्वंतरंचैवमन्वाद्याःषट्पृथक्पृथक् । प्रवर्तयंतिसद्धर्मानूपाल्यंत्यावरंतिच ॥ २ ॥ अतोमन्वंतरस्योक्तंसद्धर्मइतिलक्षणम् । येर्नैविक्रियमाणेननरोगमिरयंव्रजेत् ॥ ३ ॥
तत्रप्रथमेस्वायंभुवःस्वारोचिषस्तथा । उत्तमस्तामसश्चेतिचतुर्मनुनिरूपणम् ॥ ४ ॥ स्वायंभुवेंऽतरेऽनंतपुरंतगुणवर्णनात् । मुदितःपरिपप्रच्छसर्वमन्वंतरस्थितिं ॥ ५ ॥ स्वायंभुवस्ये
तित्रिभिः । यत्र ( वंशे ) मनुकन्यासु विश्वसृजांमरीच्यादीनांसर्गःपुत्रपौत्रादिः ( कथितः ) १ महीयसोहरेः । ( यत्रयत्रमन्वंतरे ) अत्रकाचिद्बहुपाठांतरमस्तितदुपेक्षितमस्माभिः
( विस्तरभीतेः )२ यस्मिन् ( मन्वंतरे ) स्वतीतेमतेयत्कृतवान् । यस्मिन्ननागतेयत्कर्ताकरिष्यति अद्यवावर्तमानेयत्कुरुतेतद्वदेत्यन्वयः ३ अस्मिन्कल्पेषण्मनवोव्यतीतागताः ।
( तत्राद्यः स्वायंभुवः तेकथितःचतुर्थस्कंधे यत्रस्वायंभुवांतरे) ४ तस्यमनोर्दुहित्रोर्देवहूत्यामाकूत्यांचकपिलयज्ञमूर्तिभ्यांपुत्रतांगतःप्राप्तः ५(कृतंसांख्यशास्त्रादि । अनुवर्णितंतृतीयस्कं
धे ) ६ ( शतरूपायाः पतिः स्वायंभुवः ) ७ ( सुनंदायांनद्यांतत्तीरेइत्यर्थः ) घोरंदुश्चरंतपस्तप्यमानः समाधावनुभूतमिदंवक्ष्यमाणंनिद्रितोच्छ्वसितवद्विस्मितइवउपदिशन्निवअनुवद
न्निवचअष्टभिःश्लोकैरन्वाह ८ येनचिदात्मनाविश्वंचेतयते । चेतनीभवति । विश्वंतुयंनचेतयतेनचेतनीकरोति । स्वतएवचिद्रूपत्वात् । तत्रहेतुः । अस्मिन्शयानेस्वपति ( सति )
योजागर्तिसाक्षितयावर्तते । अहोचित्रम् । नायंजनस्तंवेदसतुइमंवेद ९

श्रियैनमः ॥ ॥ राजोवाच ॥ स्वायंभुवस्येहगुरोर्वंशोऽयंविस्तराच्छ्रुतः ॥ यत्रविश्वसृजांसर्गोमनूनन्यान्वदस्वनः १ यत्रयत्रहरेर्जन्मकर्माणिचमही
यसः ॥ गृणंतिकवयोब्रह्मंस्तानिनोवदशृण्वताम् २ यद्यस्मिन्नंतरेब्रह्मन्भगवान्विश्वभावनः ॥ कृतवान्कुरुतेकर्तास्वतीतेऽनागतेऽद्यवा ३ ॥ ॥ ऋ
षिरुवाच ॥ मनवोस्मिन्व्यतीताःषट्कल्पेस्वायंभुवादयः ॥ आद्यस्तेकथितोयत्रदेवादीनांचसंभवः ४ आकूत्यांदेवहूत्यांचदुहित्रोस्तस्यवैमनोः ॥
धर्मज्ञानोपदेशार्थंभगवान्पुत्रतांगतः ५ कृतंपुराभगवतःकपिलस्यानुवर्णितम् ॥ आख्यास्येभगवान्यज्ञोयच्चकारकुरुद्वह ६ विरक्तःकामभोगेषुशतरू
पापतिःप्रभुः ॥ विसृज्यराज्यंतपसेसभार्योवनमाविशत् ७ सुनंदायांवर्षशतंपदैकेनभुवंस्पृशन् ॥ तप्यमानस्तपोघोरमिदमन्वाहभारत ८ ॥ श्रीमनुरु
वाच ॥ येनचेतयतेविश्वंविश्वंचेतयतेनयम् ॥ योजागर्तिशयानेऽस्मिन्नायंतंवेदवेदसः ९

श्रीगणेशायनमः ॥ ॥ श्रीमत्कुलदेवतायैनमः ॥ अथाष्टमस्कंधव्याख्या ॥ राजोवाच ॥ हेगुरोस्वायंभुवमनोःवंशःमयाश्रुतःयत्रमनुकन्यासुमरीच्यादिनांपुत्रादिसर्गः
अन्यान्मनून्वद १ यत्रयत्रहरेःजन्मानिकर्माणिचकवयःगृणंतितानिवद २ तथाभगवान्गतमन्वंतरेयत्कृतवान् भाव्येयत्करिष्यतिवर्तमानेयत्कुरुतेतदपिब्रूहि ३ ॥
श्रीशुकउवाच ॥ अस्मिन्कल्पेस्वायंभुवादयःमनवः ६ गताः तत्राद्यमनुःतेकथितः ४ तस्यकन्ययोःआकूतिदेवहूत्योःधर्मज्ञानोपदेशार्थंहरिःपुत्रतांगतः ५ तत्रकपिलकृतं
उक्तम् यज्ञःयच्चकारतदाख्यास्ये ६ अथस्वायंभुवमनुःविरक्तःसन्राज्यंहित्वासभार्यःवनंप्राविश्य ७ सुनंदायांनद्यांवर्षशतंएकेनपदाभुवंस्पृशन्घोरंतपःतप्यमानःइदंउपदिश
न्निवआह ८ येनविश्वंचेतयते विश्वंतु यंनचेतयते किंच जनेसुप्तेयःजागर्ति तंजनःनवेद सतुइमंवेद ९

तस्येश्वरत्वंदर्शयन्लोकस्यहितमुपदिशति । आत्मनाईश्वरेणआवास्यंप्रवसताचैतन्याभ्यासंव्याप्तंविश्वंसर्वंजगत्यांलोकेयत्किंचिज्जगद्भूतजातंतत् । अतस्तेनैवेश्वरेणयत्किंचित्यक्तंदत्तं धनंतमेवभुंजीथाःभोगान्भुंक्ष्व । यद्वातेनहेतुनात्यक्तेनईश्वरार्पणेनैवभुंजीथाः । नस्वार्थम् । कस्यस्वित्कस्यापिधनंमागृधः माभिकांक्षीः यद्वाकस्यस्वित् अहोकस्यान्यस्यधनम स्तियतोधनाकांक्षाक्रियतइत्यर्थः । तथाचश्रुतिः । ईशावास्यमिति यथाश्लोकमेव १० ननुमसत्रंव्याप्नोतितर्हिचक्षुरादिभिःकिंनप्रतीयतेतत्राह । यंपश्यंतंजनश्चक्षुर्नपश्यतिचक्षुराद्य विषयत्वात् । नहिप्रमातारंप्रमाणंविषयीकरोतीतिभावः । तथाचश्रुतिः ‘ चक्षुषश्चक्षुः श्रोत्रस्यश्रोत्रं ’ इत्यादि । ननुतर्हिघटनाशेदेवदत्तस्यतद्विषयंचाक्षुषंज्ञानमिवेश्वरस्यापिस्वरूपभू तंतद्विषयंज्ञानंनश्येत् । तत्राह । यस्यतुपश्यतः चक्षुर्ज्ञानंनरिष्यतिननश्यति । तत्तदाकारेणोत्पन्नायावृत्तेरेवनाशोनस्वतःसिद्धज्ञानस्य । नहिसवितृप्रकाशः प्रकाश्यनाशेनश्यतीतिभा वः भूतानिनिलयोयस्यतंसर्वांतर्यामिणम् । तथासुपर्णंशोभनपतनंअसंगंउपधावतभजध्वम् ११ ततःस्वरूपस्यनित्यत्वमेवोपपादयन्नाह । नयस्येति । अमूनिआद्यंतादीनिविश्वस्ययस्माद्भ वंति । विश्वंचयत्तद्रूपम् । अतएवात्यंतसन्निधानात्तदंतःसत्यंमहत्परिपूर्णंब्रह्म १२ ननुविश्वंचेत्तद्रूपंतर्हितस्यकुतोजन्माद्यभावः । स्वप्रकाशत्वंवाकुतः । कथंवाजगज्जन्मादिकर्तृ त्वेनअविकारिणःसत्यत्वंपूर्णत्वंवा । तत्राह । सईशः अजः सत्यश्च । स्वप्रकाशश्च पुराणश्चनिर्विकारः । विश्वंकायोयस्यपुरूणिहूतानिनामानियस्यतथाविधोपि यतः । अस्यविश्व स्यजन्मादिस्वशक्त्यामायथाधत्तेतांचनित्यासिद्धयाविद्यया ( ज्ञानेन ) उदस्यतिहित्वानिष्क्रियएवास्ते १३ यस्मादेवमीश्वरःकर्मकृत्वासंत्यज्यनैष्कर्म्येणास्तेअथअस्माद्धेतोःऋषयोप्यग्रे आदौकर्माणिकुर्वंति । किमर्थं । अकर्मेहतवेमोक्षार्थं । पाठांतरेकर्मनाशाय । हियस्मात्तनुईहमानःकुर्वाणःअनीहांअकर्मत्वम् १४ नन्वीहमानःकर्मभिरवगुंठितःकोशकारइवबध्येतेव तत्राह । ईहतइति । अतस्तमनुवर्तमानायेतेनावसीदंतिनलिप्यंते १५ तदेवंलोकानुग्रहायविश्वसृष्ट्यादियःकरोतिश्रीरामकृष्णाद्यवतारैश्चवेदोक्तमप्याचरतितंशरणंप्रनामीत्याह । तमिति । निजंवर्त्मनरावतारानुरूपोमार्गःतत्रसम्यक्स्थितम् । अतईहमानंकर्माचरंतम् । तथापिजीववैलक्षण्यमाह । निरहंकृतंनिराशिषंअनन्यचोदितमिति । निरहंकारत्वेहेतुः बुधं । निराशीष्ट्वेहेतुः पूर्णम् । अनन्यनियुक्तत्वेहेतुः प्रभुं । तथापिकर्मानुष्ठानेहेतुःनृन्स्वाचारेणाशिक्षयंतं तत्किमर्थंतत्राह । अखिलान्धर्मान्भावयतिप्रवर्तयतीतितथातम् १६

आत्मावास्यमिदंविश्वंयत्किंचिज्जगत्यांजगत् ॥ तेनत्यक्तेनभुंजीथामागृधःकस्यस्विद्धनम् १० यन्नपश्यतिपश्यंतंचक्षुर्यस्यनरिष्यति ॥ तंभूत निलयंदेवंसुपर्णमुपधावत ११ नयस्याद्यंतौमध्यंचस्वःपरोनांतरंबहिः ॥ विश्वस्यामूनियद्यस्माद्विश्वंचतदृतंमहत् १२ सविश्वकायःपुरुहूतईशःसत्यः स्वयंज्योतिरजःपुराणः ॥ धत्तेऽस्यजन्माद्यजयाऽऽत्मशक्त्यातांविद्ययोदस्यनिरीहआस्ते १३ अथाग्रेऋषयःकर्माणीहंतेऽकर्महेतवे ॥ ईहमानोहि पुरुषःप्रायोऽनीहांप्रपद्यते १४ ईहतेभगवानीशोनहितत्रविषज्जते ॥ आत्मलाभेनपूर्णार्थोनावसीदंतियेऽनुतम् १५ तमीहमानंनिरहंकृतंबुधंनिराशिषं पूर्णमनन्यचोदितम् ॥ नृन्शिक्षयंतंनिजवर्त्मसंस्थितंप्रभुंप्रपद्येऽखिलधर्मभावनम् १६

१० किंच यंपश्यंतंजनःनपश्यति यस्यपश्यतःज्ञानंननश्यति तंदेवंभजध्वम् ११ किंच यस्यआद्यंतादीनिनसंति विश्वस्यतुतानियस्माद्भवंति १२ सःविश्वकायःअजयामाय स्वस्यजन्मादीनिधत्ते १३ १४ तांविद्ययोदस्यनिरीहआस्तेअतःकर्मसुनविषज्जते १५ तंभगवंतंरामकृष्णाद्यवतारैःवेदोक्तंकर्मआचरंतंनॄन्स्वाचारेणशिक्षयंतं सर्वधर्मप्रवर्तकं प्रभुंप्रपद्ये १६

समाहितमपिसंतंइतिमंत्रोपनिषदंमंत्ररहस्यंव्याहरंतंदृष्ट्वा प्रेतोऽयमितिवद्विवशंमन्वाना असुरायातुधानाश्च ( यक्षरक्षांसि ) क्षुधानिमित्तेनजग्धुमत्तुंअभ्यद्रवन् ( अभिजग्मुः ) १७ ( य थावसितान्अनुकृतनिश्चयान् ) यामैःस्वपुत्रैः । त्रिविष्टपंस्वर्गमपालयत्स्वयमेवेंद्रोबभूवेत्यर्थः तत्रप्रतिमन्वंतरंमन्वादयःषट्अन्येऽन्येभवंति । तथाहिसूतोद्वादशेवक्ष्यति । ' मन्वंतरं मनुर्देवामनुपुत्राःसुरेश्वरः । ऋषयोंशावतारश्चहरेःषड्विधमुच्यते' इति । अत्रमन्वंतरंषड्विधमुच्यतइत्यन्वयः । तत्राद्येंतरेस्वायंभुवोमनुः । प्रियव्रतोत्तानपादौमनुपुत्रौ । यामादयोदे वाः । मरीचिप्रमुखाःसप्तऋषयः । यज्ञोहरेरवतारइंद्रश्चसएवेतितन्मन्वंतरंषड्विधमेव । तच्चतुर्थस्कंधोपक्रमेनिरूपितम् १८ द्वितीयादिषुत्रिषुमन्वंतरेषुमन्वादिषट्कमाह । स्वारोचिषो द्वितीयइत्यादिनायावद्वजेंद्रमोक्षप्रश्नम् १९ २० २१ विभोरसाधारणंचरितमाह । अष्टाशीतिसहस्राणीति २२ २३ २४ ( धर्मस्यपत्न्यां ) २५ सत्यजितःइंद्रस्यसखासन् २६ उत्तमःतृतीयोमनुःतस्यभ्रातातामसश्चतुर्थोमनुरिति २७ ( सत्यकादयोदेवाआसन् ) त्रिशिख ( नामा ) ईश्वरइंद्रः ( आसीत् ) २८

॥ श्रीशुकउवाच ॥ इतिमंत्रोपनिषदंव्याहरंतंसमाहितम् ॥ दृष्ट्वाऽसुरायातुधानाजग्धुमभ्यद्रवन्क्षुधा १७ तांस्तथाऽवसितान्वीक्ष्ययज्ञःसर्वगतोहरिः ॥ यामैःपरिवृतोदेवैर्हत्वाऽशासत्त्रिविष्टपम् १८ स्वारोचिषोद्वितीयस्तुमनुरग्नेःसुतोऽभवत् ॥ द्युमत्सुषेणरोचिष्मत्प्रमुखास्तस्यचात्मजाः १९ तत्रेंद्रोरो चनस्त्वासीद्देवाश्चतुषितादयः ॥ ऊर्जस्तंभादयःसप्तऋषयोब्रह्मवादिनः २० ऋषेस्तुवेदशिरसस्तुषितानामपत्न्यभूत् ॥ तस्यांजज्ञेततोदेवोविभुरित्य भिविश्रुतः २१ अष्टाशीतिसहस्राणिमुनयोयेधृतव्रताः ॥ अन्वशिक्षन्व्रतंतस्यकौमारब्रह्मचारिणः २२ तृतीयउत्तमोनामप्रियव्रतसुतोमनुः ॥ पवनःसृंजयो यज्ञहोत्राद्यास्तत्सुतानृप २३ वसिष्ठतनयाःसप्तऋषयःप्रमदादयः ॥ सत्यावेदश्रुताभद्रादेवाइंद्रस्तुसत्यजित् २४ धर्मस्यसूनृतायांतुभगवान्पुरुषोत्तमः ॥ सत्यसेनइतिख्यातोजातःसत्यव्रतैःसह २५ सोऽनृतव्रतदुःशीलानसतोयक्षराक्षसान् ॥ भूतद्रुहोभूतगणांस्त्ववधीत्सत्यजित्सखः २६ चतुर्थउत्तमभ्रातामनुर्ना म्नाचतामसः ॥ पृथुःख्यातिर्नरःकेतुरित्याद्यादशतत्सुताः २७ सत्यकाहरयोवीरादेवास्त्रिशिखईश्वरः ॥ ज्योतिर्धामादयःसप्तऋषयस्तामसेऽतरे २८

॥ श्रीशुकउवाच ॥ एवंसमाधौमंत्रोपनिषदंउच्चारयंतंमनुंदृष्ट्वाअसुराःयातुधानाःतंजग्धुंअभ्यद्रवन् १७ तदाआकूतिपुत्रोयज्ञःस्वपुत्रैःयामैर्वृतःसन् तान् हत्वास्वर्गंअपालयत् अथमन्वंतराण्याह तत्राद्यम्-स्वायंभुवोमनुः १ प्रियव्रतोत्तानपादौमनुपुत्रौ २ यामादयोदेवाः३ मरीचिप्रमुखाःसप्तर्षयः ४ यज्ञोहरेरवतारः ५ सएवइंद्रः ६ १८ततःद्वितीयम्- अग्नेःपुत्रःस्वारोचिषोमनुः १ द्युमत्सुषेणरोचिष्मदादयःतत्सुताः २ १९ रोचननामाइंद्रः ३ ऊर्जस्तंभादयःसप्तर्षयः ४ २० तुषितादयोदेवाः ५ वेदशिरसःऋषेःतुषिता यांविभुरित्यवतारः ६ २१ तस्मात् अष्टाशीतिसहस्राणि ८८००० ऋषयःब्रह्मचर्यव्रतंअन्वशिक्षन् २२ ततःतृतीयम्-प्रियव्रतसुतःउत्तमोनाममनुः १ पवनसृंजयाद्याःतत् सुताः २ २३ वसिष्ठात्मजाःप्रमदादयःसप्तर्षयः ३ सत्यादयोदेवाः ४ सत्यजित् इंद्रः५ २४ धर्मात् सूनृतायांसत्यसेनोऽवतारः ६ २५ सःयक्षरासान्अवधीत् २६

 ततःचतुर्थम्-उत्तमभ्रातातामसोमनुः १ पृथुःख्यातिःनरःकेतुःइत्याद्याःदशतत्सुताः २७ २ सत्यकाःहरयोवीरादेवाः ३ त्रिशिखःइंद्रः ४ ज्योतिर्धामाद्यसप्तऋषयः ५ २८

अन्यान्नापितत्रविशिष्टपराक्रमान्देवानाह । देवावैधृतयइति २९ ( हरिमेधसःपत्न्यांहरिण्यांनाम्ना )हरिरित्थं । हतोऽगाहतः । ग्रहात्ग्राहात् ( येनहरिणा ) ३० अमूमुचत्मोचयामास ३१ श्रवणेच्छायांहेतुः । तत्कथासुतासुकथासु सांकथैवत्वासुमहत्पुण्यं । पुण्यस्यविशेषणंधन्यमित्यादि ( तत्कथासुधर्मार्थकाममोक्षा अपि भ नाया तेनाप्रियंति अतोमुमुक्षूणामस्माकंतच्छ्रवणमिष्टमितिभावः ) ३२ ( प्रायोपविष्टेनगृहीतानशनव्रतेन । हेविप्राःशौनकादयःमुनीनांशृण्वतांसतां । साधुसाध्वितिप्रतिनंद्य ) ३३ ॥ ॥ इतिश्रीभागवतेमहापुराणेऽष्टमस्कंधेटीकायांमन्वंतरानुचरितंनामप्रथमोऽध्यायः ॥ १ ॥ ॥ छ ॥ ॥ तुर्येमन्वंतरेप्रोक्तंगजेंद्रस्यविमोक्षणम् ॥ द्वितीयादित्रिभिस्तत्तुविस्तरेणोपवर्ण्यते ॥ १ ॥ द्वितीयेतुगजेंद्रस्यगजीभिःक्रीडतोजले ॥ दैवाद्ग्राहगृहीतस्यहरिस्मृतिरुदीर्यते ॥ २ ॥ आसीदस्ति १ तावतायोजनायुतेनसर्वतःपरितः । त्रिकूटस्याख्याबीजमाह । त्रिभिःशृंगैर्मुख्यैः २ अन्यैश्चशृंगैर्निर्झराम्भसांनिर्घोषैश्चककुभःसर्वारोचयन्नास्तइतिपूर्वेणैवान्वयः । कथंभूतैःशृंगैः । रत्नैर्धातुभिश्चविचित्रितैः । ( पुनःकथंभूतैः ) नानाविधाद्रुमलतानांगुल्मायेषुतैः ३ पयसऊर्मिभिःसमंताद्वनिज्यमानाअंघ्रयोमूलप्रांतायस्य । हरिद्भिःपालाशवर्णैः ४ ५ किन्नरादीनांसंगीतसंनादेनदंतयोगुहायस्मिन्प्रदेशेतंअभिगर्जंतिहरयः सिंहाःअमर्षयाअसहनेन । ( परशंकयाप्रतिस्पर्धिसिंहशंकया ) ६

देवावैधृतयोनामविधृतेस्तनयानृप ॥ नष्टाःकालेनयैर्वेदाविधृताःस्वेनतेजसा २९ तत्रापिजज्ञेभगवान्हरिण्यांहरिमेधसः ॥ हरिरित्याहृतोयेनगजेंद्रोमोचितोग्रहात् ३० ॥ ॥ राजोवाच ॥ ॥ बादरायणएतत्तेश्रोतुमिच्छामहेवयम् ॥ हरिर्यथागजपतिंग्राहग्रस्तममूमुचत् ३१ तत्कथासुमहत्पुण्यंधन्यंस्वस्त्ययनंशुभम् ॥ यत्रयत्रोत्तमश्लोकोभगवान्गीयतेहरिः ३२ ॥ सूतउवाच ॥ परीक्षितैवंसतुबादरायणिःप्रायोपविष्टेनकथासुचोदितः ॥ उवाचविप्राःप्रतिनंद्यपार्थिवंमुदामुनीनांसदसिस्मशृण्वताम् ३३ ॥ ॥ इतिश्रीभागवतेमहापुराणेअष्टमस्कंधेमन्वंतरानुचरितंनामप्रथमोऽध्यायः १ ॥ ॥ छ ॥
॥ श्रीशुकउवाच ॥ आसीद्गिरिवरोराजंस्त्रिकूटइतिविश्रुतः ॥ क्षीरोदेनावृतःश्रीमानयोजनायुतमुच्छ्रितः १ तावताविस्तृतःपर्यक्त्रिभिःशृंगैःपयोनिधिम् ॥ दिशःखंरोचयन्नास्तेरौप्यायसहिरण्मयैः २ अन्यैश्चककुभःसर्वारत्नधातुविचित्रितैः ॥ नानाद्रुमलतागुल्मैर्निर्घोषैर्निर्झराम्भसाम् ३ सचावनिज्यमानांघ्रिःसमंतात्पयऊर्मिभिः ॥ करोतिश्यामलांभूमिंहरिन्मरकताश्मभिः ४ सिद्धचारणगंधर्वविद्याधरमहोरगैः ॥ किन्नरैरप्सरोभिश्चक्रीडद्भिर्जुष्टकंदरः ५ यत्रसंगीतसन्नादैर्नदद्गुहममर्षया ॥ अभिगर्जंतिहरयःश्लाघिनःपरशंकया ६

२९ हरिमेधसःविप्रस्यहरिण्यांस्त्रियांहरिःअवतारोजातः ६ येनग्राहात्गजेंद्रोमोचितः ३० ॥ राजोवाच ॥ हेशुक हरिःयथागजपतिंअमूमुचत्तत् वयंश्रोतुमिच्छामहे ३१ ३२ ॥ सूतउवाच ॥ राज्ञाएवंकथासुचोदितःशुकःमुनीनांसदसिपार्थिवंउवाच ३३ ॥ ॥ इत्यष्टमेप्रथमः १ ॥ ॥ छ ॥ ॥ श्रीशुकउवाच ॥ हेराजन्कश्चित्त्रिकूटनामाद्रिःक्षीरोदेनावृतःअयुतयोजनोच्छ्रायविस्तारःआसीत् १ सःरौप्यायसहिरण्मयैःत्रिशृंगैःदिशःखंरोचयन्नास्ते २ ३ हरिन्मरकताश्मभिःश्यामांभूमिंकरोति ४ क्रीडद्भिःसिद्धचारणादिभिःजुष्टकंदरः चित्रद्रुमसुरोद्यानकलकंठविहंगमः स्वच्छोदकैःसरित्सरोभिर्युतःमणिमयवालुकैःपुलिनैर्युतः ५ ६

नानायेआरण्याःपशवःतेषांव्रातैःसंकुलाभिःद्रोणीभिः अलंकृत आस्ते । किंच चित्राद्रुमायेषुतेषुसुरोद्यानेषु कलकंठामधुरस्वनाविहंगमायस्मिन् ७ किंचस्वच्छोदकैःसरित्सरोभिर्युतः । मणयइववालुकायेषुतैःपुलिनैश्चयुतः । देवस्त्रीणांमज्जनेनयआमोदःतेनसौरभयुक्तान्यंबूनिअनिलाश्चतैश्चयुत आस्ते ८ तस्यत्रिकूटस्यद्रोण्यां ( निम्नतटे ) वरुणस्योद्यानमास्ते ( सुरयोषितांआसमंतात्क्रीडायस्मिन् नाम्नाऋतुमत् ) गिरिवनादिसर्वंध्येयमितिवर्णयति अतोगिरिमुपवर्ण्यवनंवर्णयति सर्वतोलंकृतमिति(नित्यंपुष्पाणिफलानिचयेषुतैर्द्रुमैः । अतएवऋतुमदितिसमाख्यायुक्ता) ९ पुनर्गिरिंवर्णयतिमंदारैरितिचतुर्भिः । मंदारादिभिर्वृतइत्यन्वयः(चूताम्रयोरवांतरभेदः)१० ११ १२ (अक्षोबिभीतकः । अभयाहरीतकी । आमलोधात्रीतैः) १३ तस्मिन्गिरौसरअस्तेतद्वर्णयतिसुविपुलमित्यादिसार्धैःपंचभिः । लसंतिकांचनपंकजानियस्मिन् । कुमुदादीनांश्रियाऊर्जितंसमृद्धम् । कलःस्वनोयेषांतैः शकुंतैश्चनिर्घुष्टम् १४ चक्राह्वैश्चक्रवाकैःसारसैरप्याकीर्णम् । जलकुक्कुटादीनांकुलैःकूजितम् १५ मत्स्यानांकच्छपानांचसंचारेण चलतांपद्मानांरजसायुक्तंपयोयस्मिन् ( कदंबनीपयोर्वेतसवंजुलकयोश्चावांतरभेदः ) १६ १७ नित्यंऋतवःफलपुष्पादिसंपत्तिहेतवोयेषुतैर्द्रुमैरलंशोभितम् १८

नानारण्यपशुव्रातसंकुलद्रोण्यलंकृतः ॥ चित्रद्रुमसुरोद्यानकलकंठविहंगमः ७ सरित्सरोभिरच्छोदैःपुलिनैर्मणिवालुकैः ॥ देवस्त्रीमज्जनामोदसौरभांबुनिलैर्युतः ८ तस्यद्रोण्यांभगवतोवरुणस्यमहात्मनः ॥ उद्यानमृतुमन्नामआक्रीडंसुरयोषिताम् ॥ सर्वतोलंकृतंदिव्यैर्नित्यपुष्पफलद्रुमैः ९ मंदारैःपारिजातैश्चपाटलाशोकचंपकैः ॥ चूतैःप्रियालैःपनसैराम्रैराम्रातकैरपि १० क्रमुकैर्नालिकेरैश्चखर्जूरैर्बीजपूरकैः ॥ मधुकैःशालतालैश्चतमालैरसनार्जुनैः ११ अरिष्टोदुंबरप्लक्षैर्वटैःकिंशुकचंदनैः ॥ पिचुमंदैःकोविदारैःसरलैःसुरदारुभिः १२ द्राक्षेक्षुरंभाजंबूभिर्बदर्यक्षाभयामलैः ॥ बिल्वैःकपित्थैर्जंबीरैर्वृतोभल्लातकादिभिः १३ तस्मिन्सरःसुविपुलंलसत्कांचनपंकजम् ॥ कुमुदोत्पलकह्लारशतपत्रश्रियोर्जितम् ॥ मत्तषट्पदनिर्घुष्टंशकुंतैश्चकलस्वनैः १४ हंसकारंडवाकीर्णंचक्राह्वैःसारसैरपि ॥ जलकुक्कुटकोयष्टिदात्यूहकुलकूजितम् १५ मत्स्यकच्छपसंचारचलत्पद्मरजःपयः ॥ कदंबवेतसनलनीपवंजुलकैर्वृतम् १६ कुंदैःकुरबकाशोकैःशिरीषैःकुटजेंगुदैः ॥ कुब्जकैःस्वर्णयूथीभिर्नागपुन्नागजातिभिः १७ मल्लिकाशतपत्रैश्चमाधवीजालकादिभिः ॥ शोभितंतीरजैश्चान्यैर्नित्यर्तुभिरलंद्रुमैः १८

७ ८ एवंभूताचलस्यद्रोण्यांवरुणस्यऋतुमन्नामउद्यानंआस्तेकथंभूतंतत्सुरस्त्रीणामाक्रीडम् ९ किंच मंदारपारिजातपाटलाऽशोकचंपकचूतप्रियालपनसाम्राम्रातकक्रमुकनालिकेरखर्जूरबीजपूरमधुकसालतालतमालासनार्जुनारिष्टोदुंबरप्लक्षवटकिंशुकचंदनपिचुमंदकोविदारसुरदारुद्राक्षेक्षुरंभाजंबुबदरीबिल्वकपित्थजंबीरभल्लातकादिभिः वृक्षैः वृतःत्रिकूटः १० ११ १२ १३ तत्रसरोवरंअद्भुतमास्तेतत् किंभूतम् लसत्कांचनपंकजंकुमुदोत्पलादीनांश्रियाऊर्जितंमत्तषट्पदशकुंतैःनादितंहंसकारंडवादिभिःव्याप्तंजलकुक्कुटादीनांकुलैःकूजितम् मत्स्यकच्छपादीनांसंचारेणचलत्पद्मरजोभिःव्याप्तोदकंकदंबवेतसनलनीपकुंदस्वर्णयूथीपुन्नागजातीमल्लिकादिभिःशोभितम् १४ १५ १६ १७ १८

तत्रैवंसतिएकदातद्गिरिकाननाश्रयोगजयूथपःकरेणुभिःहस्तिनीभिःसहचरन्तृषार्दितेनस्वयूथेनवृतःसरोवरस्यअभ्याशंसमीपमगमदितिपंचमेनान्वयः। किंकुर्वन्। कीचकवेणुवेत्रवंतंविशालं महांतंगुल्मंलतादिसंदर्भंवनस्पतींश्चप्ररुजन्प्रभंजन् १९ कथंभूतः। यस्य (गजेंद्रस्य) गंधमात्रात्हरयःसिंहाःगजेंद्रादयश्चभयात्द्रवंतिपलायंते। (तत्रव्यालाहिंस्रपशवः। गौरकृष्णैर्मृगभेदैःसह) २० वृकादयस्तुक्षुद्राअल्पप्राणिनःअन्यत्रदृष्टिपथंत्यक्त्वाचरंति (ऋक्षाअच्छमल्लाः)। २१ पुनःकीदृगः घर्मतप्तः। मदच्युत्मदस्रावी। (कलभैःकरिशावकैरनुगतः। गरिम्णागुरुत्वेन)। मदमश्नंतितथातैः २२ (पंकजपरागमिश्रंसरःसंबंधिनंवायुंजिघ्रत्) २३ निजेनपुष्करेणकराग्रेणउद्धृतं गतक्लमःसन् निकामंपपौ २४ (घृणीदयावान्उद्धृतकणरूपवारिभिःगजीःस्वकलभांश्चसंस्नपयन्गृहस्थइवकृच्छ्रंपंकटंनापश्यत्) २५ (हेनृपसमहाबलोगजः) २६ (बलीयसाग्राहेणविकृष्यमाणं तथाभूतमातुरंगजेंद्रम्) दीनधियःकरेणवःकेवलं विचुक्रुशुः। (अपरेगजास्तुपार्ष्णिग्राहाःसंतोपितंतारयितुंनाशकन्) २७

तत्रैकदातद्गिरिकाननाश्रयःकरेणुभिर्वारणयूथपश्चरन् ॥ सकंटकान्कीचकवेणुवेत्रवद्विशालगुल्मंप्ररुजन्वनस्पतीन् १९ यद्गंधमात्राद्धरयोगजेंद्राव्याघ्रादयोव्यालमृगाःसखड्गाः ॥ महोरगाश्चापिभयाद्द्रवंतिसगौरकृष्णाःशरभाश्चमर्यः २० वृकावराहामहिषर्क्षशल्यागोपुच्छशालावृकमर्कटाश्च ॥ अन्यत्रक्षुद्राहरिणाःशशादयश्चरंत्यभीतायदनुग्रहेण २१ सघर्मतप्तःकरिभिःकरेणुभिर्वृतोमदच्युत्कलभैरनुद्रुतः ॥ गिरिंगरिम्णापरितःप्रकंपयन्निषेव्यमाणोऽलिकुलैर्मदाशनैः २२ सरोनिलंपंकजरेणुरूषितंजिघ्रन्विदूरान्मदविह्वलेक्षणः ॥ वृतःस्वयूथेनतृषार्दितेनतत्सरोवराभ्याशमथागमद्द्रुतम् २३ विगाह्यतस्मिन्नमृतांबुनिर्मलंहेमारविंदोत्पलरेणुवासितम् ॥ पपौनिकामंनिजपुष्करोद्धृतमात्मानमद्भिःस्नपयन्गतक्लमः २४ स्वपुष्करेणोद्धृतशीकरांबुभिर्निपाययन्संस्नपयन्यथागृही ॥ घृणीकरेणूःकलभांश्चदुर्मदोनाचष्टकृच्छ्रंकृपणोऽजमायया २५ तंतत्रकश्चिन्नृपदैवचोदितोग्राहोबलीयांश्चरणेरुषाग्रहीत् ॥ यदृच्छयैवंव्यसनंगतोगजोयथाबलंसोऽतिबलोविचक्रमे २६ तथातुरंयूथपतिंकरेणवोविकृष्यमाणंतरसाबलीयसा ॥ विचुक्रुशुर्दीनधियोऽपरेगजाःपार्ष्णिग्रहास्तारयितुंनचाशकन् २७

तत्रएकदागिरिकाननाश्रयःगजेंद्रःकरेणुभिःचरन्कंटककीचकवेणुवेत्रादिगुल्मंप्ररुजन्सन्बभ्राम १९ यद्गंधमात्रात्सिंहमजेंद्राव्याघ्रादयःभयात्पलायंते २० क्षुद्राःवृकहरिणादयःतद्दृष्टिपथंहित्वायत्कृपयाअभीताःचरंति २१ एवंभ्रमन्घर्मतप्तः सःगजैःगजीभिःकलभैश्चअनुद्रुतः अलिकुलैःसेव्यमानःस्वगरिम्णागिरिंकंपयन् २२ दूरादेवपंकजरेणुमिश्रंसरोनिलंजिघ्रन्तृषार्दितेनस्वयूथेनवृतःसन्सरोवराभ्याशंअगमत् २३ तत्रविगाह्यगतक्लमः द्रुतः सन् उत्पलरेणुवासितंजलंकामंपपौस्वशुंडाग्रोध्दृताद्भिःआत्मानंस्नपयन्करेणूःकलभांश्चस्नपयन् पाययन् अजमाययाप्राप्तंकष्टंनाचष्ट २४ २५ तत्रकश्चिद्दैवचोदितःबलीयान्ग्राहःरुषातंचरणेअग्रहीत् एवंदुःखंप्राप्तोगजःयथाबलंविचक्रमे २६ तथाविधंतंअन्येगजामोचयितुंनाशकन्करेणवःविचुक्रुशुः २७

( हेमहीपते अंतरतोविकर्षतोनक्रस्यबहिर्विकर्षतोजगजेंद्रस्यचसहस्रंवर्षाणिव्यगमन् । सप्राणयोःप्राणमात्रेणस्थितयोरित्यर्थः ) २८ मनउत्साहशक्तिः । बलंशारीरम् । ओजऐंद्रियम् ।
( तेषांव्ययोमहानभूत् । कस्य । विकृष्यमाणस्यगजेंद्रस्य । जलौकसोग्राहस्यतु ) सकलंबलादि विपर्ययोविपरीतं ( ततो ) अधिकंजलौकसोग्राहस्यइत्यर्थः २९ सइत्थंयदाप्राणस्य
संकटमापयतोदेही ( तदाचिरंदध्यौचिंतितवान् । अथेमांबुद्धिमभ्यपद्यत ) ३० तामेवबुद्धिमाह । नमामीति । ( इमेज्ञातयोनप्रभवंति ) अहंचनप्रभवामि । यतःग्राहरूपेणकेवलं
विधातुःपाशेनआवृत्तःतथापितंपरंपरमेश्वरंपरेषांब्रह्मादीनामयनमाश्रयभूतंयामिशरणंव्रजामि ३१ कोसौयंशरणंयासीत्यत्राह । यःकश्चनेति । अंतकएवोरगस्तस्मात् । तं(शरणं)शर
णमीमहिव्रजेम । यद्भयादित्यत्रश्रुतिः । ' भीषास्माद्वातःपवतेभीषोदेतिसूर्यः । भीषास्मादग्निश्चेंद्रश्चमृत्युर्धावतिपंचमः'इति ३२ ॥ इतिश्रीभागवतेमहापुराणेअष्टमस्कंधेटीकायांगजें
द्रोपाख्यानेद्वितीयोऽध्यायः ॥ २ ॥ ॥ छ ॥ ।' तृतीयेतुगजेंद्रेणस्तुतोहरिरुपेत्यतम् । समुद्धारतंग्राहाद्धादिवलशापतः ॥ १ ॥ ( हृदि चित्ते ) जाप्यंजप्यंस्तोत्रंप्राग्ज
न्मनिइंद्रद्युम्नसंज्ञे १ तस्मैनमोनमनंअभिधीमहिअभिध्यायेमकेवलंग्राहगृहीतत्वेनकायप्रणतेरशक्यत्वात् । स्तुस्यतज्ज्ञानंसंभावयितुंविशिनष्टि । यतश्चिद्रूपात्एतद्देहादिचिदात्मकंचे
तनंभवति तदुक्तम् । येनचेतयतेविश्वमिति । तत्रहेतुः । पुरुषायपूर्वंकारणत्वेनप्रविष्टाय । ननुप्रकृतिपुरुषौकारणंप्रसिद्धंतत्राह । आदिःप्रकृतिःबीजंपुरुषःतद्रूपाय । प्रविष्टत्वेपिजी
ववत्पारतंत्र्यंवारयति परेशायेति २

निर्युध्यतोरेवमिभेंद्रनक्रयोर्विकर्षतोरंतरतोबहिर्मिथः ॥ समाःसहस्रंव्यगमन्महीपतेसप्राणयोश्चित्रममंसतामराः २८ ततोगजेंद्रस्यमनोबलौजसांकालेन
दीर्घेणमहानभूद्व्ययः ॥ विकृष्यमाणस्यजलेऽवसीदतोविपर्ययोभूत्सकलंजलौकसः २९ इत्थंगजेंद्रःसयदापसंकटंप्राणस्यदेहीविवशोयदृच्छया ॥ अपारय
न्नात्मविमोक्षणेचिरंदध्याविमांबुद्धिमथाभ्यपद्यत ३० नमामिमेज्ञातयआतुरंगजाःकुतःकरिण्यःप्रभवंतिमोचितुम् ॥ ग्राहेणपाशेनविधातुरावृतोप्यहं
चतंयामिपरंपरायणम् ३१ यःकश्चनेशोबलिनोंतकोरगात्प्रचंडवेगादभिधावतोभृशम् ॥ भीतंप्रपन्नंपरिपातियद्भयान्मृत्युःप्रधावत्यरणंतमीमहि ३२ ॥
इतिश्रीभागवतेमहापुराणेअष्टमस्कंधेगजेंद्रोपाख्यानेद्वितीयोऽध्यायः ॥ २ ॥ बादरायणिरुवाच ॥ एवंव्यवसितोबुद्ध्यासमाधायमनोहृदि ॥ जजा
पपरमंजाप्यंप्राग्जन्मन्यनुशिक्षितम् १ ॥ गजेंद्रउवाच ॥ ॐनमोभगवतेतस्मैयतएतच्चिदात्मकम् ॥ पुरुषायादिबीजायपरेशायाभिधीमहि २

एवंइभेंद्रनक्रयोःअंतर्बहिःमिथःविकर्षतोःवर्षसहस्रंअगमत् २८ ततोगजेंद्रबलस्यव्ययःअभूत्नक्रस्यतुबलाधिक्यंजातम् २९ एवंगजेंद्रः यदासंकटंआप तदाचिरंध्यात्वा
इमांबुद्धिंप्रत्यपद्यत ३० अहोइमेगजाःआतुरंमांमोचितुंनप्रभवःकरिण्यःकुतः अहंग्राहरूपेणविधातुःपाशेनआवृतोऽपितंशरणंयामि ३१ यःईशःअंतकसर्पात्भीतंजनंपाति
तंशरणंव्रजेम ३२ ॥ इत्यष्टमेद्वितीयः २ ॥ ॥ छ ॥ ॥ श्रीशुकउवाच ॥ एवंबुद्ध्याव्यवसित.गजेंद्रः मनः समाधाय प्राग्जन्मनिअनुशिक्षितंपरमंस्तोत्रंजजाप १
॥ गजेंद्रउवाच ॥ यत.चिद्रूपात्एतत्देहादिकंसचेतनंभवति तस्मैपूर्वंकारणत्वेनप्रविष्टायपरमेशायभगवतेकेवलंनमनंअभिध्यायेम कायप्रणतेःअशक्यत्वात् २

परेशस्त्वंवितृण्वन्नाहयावत्समाप्ति । यस्मिन्नधिष्ठानेयतउपादानात्येनकर्त्रायश्चस्वयमेवेदंविश्वंभाति ( तथापि ) अस्मात्कार्यात्परस्मात्कारणाच्चयः परस्तंस्वयंभुवंस्वतःसिद्धंप्रपद्ये शरणंव्रजामि ३ विश्वहेतुत्वंस्वतःसिद्धत्वंचोक्त्वा । इदानींविश्वप्रकाशकत्वंस्वप्रकाशकत्वंचवर्णयन्प्रार्थयते । यःस्वात्मनीति ( क्वचित् ) विभातंअभिव्यक्तंसत्क्वचित्प्रलयेतिरोहितं लीनंसत् तदुभयंकार्यंकारणंचसाक्षीसन्नीक्षते । साक्षित्वेहेतुः । अविद्धदृक्अलुप्तदृष्टिः आत्ममूलःस्वप्रकाशःकुतःपरस्तत्प्रकाशकाच्चक्षुरादेरपिपरः । तस्यापिप्रकाशकइत्यर्थः 'चक्षुषश्चक्षुः' इत्यादिश्रुतेः ४ तिरोहितमीक्षतेइत्येतत्प्रपंचपूर्वकंदुर्ज्ञेयत्वंवदन्प्रार्थयते । कालेनेतिद्वाभ्यां । पंचत्वमितेषुनाशंप्राप्तेषुगहनंदुरवगाहंगभीरमनंतम् । तस्यतमसः ( पारे ) 'आदित्यवर्णं तमसःपरस्तात्'इतिश्रुतेः ५ अतएवदेवादयोयस्यस्वरूपंनविदुः । जंतुरर्वाचीनःकोपि गंतुंज्ञातुं । ईरितुंवक्तुंवा ! दुरत्ययंदुर्गममनुक्रमणंचरितंकथनंवायस्यसःमामाम् ६ कथंतर्हि'तमेवावि दित्वाऽतिमृत्युमेति'इत्यादिश्रुतिरित्याशंक्यतज्ज्ञानोपायंकथयन्नाह । दिदृक्षवइति । अलोकव्रतंब्रह्मचर्यादिअव्रणमच्छिद्रम् भूतानामात्मभूताभूतेष्वात्मदृष्टयःसंतःसमेगतिरस्तु ७ दुरत्ययानुक्रमणत्वंप्रपंचयन्प्रणमति । नाविद्यतइत्यादिना । ( गुणयुक्दोषःगुणोदोषश्चेत्यर्थः ) लोकानामप्ययःप्रलयःसंभवोजन्मतयोर्द्वंद्वैक्यंतदर्थंयस्तानिजन्मादीनिस्वीकरोतितस्मै नमइत्युत्तरेणान्वयः ८ ब्रह्मणेब्रह्मरूपाय अनंतशक्तये ( अनंतैश्वर्याय । उरुरूपाय ) बहुरूपाय अतआश्चर्याणिकर्माणियस्यतस्मैपरेशायनमः ९ आत्मप्रदीपायप्रकाशांतरस्याविषयाय । कुतः । साक्षिणेप्रकाशकाय । परमात्मनेजीवनियंत्रे । अतएवगिरांविदूरायअप्राप्याय । चेतसांचित्तवृत्तीनां । तथ.चश्रुतिः 'यतोवाचोनिवर्तंतेअप्राप्यमनसासह' इति १०

यस्मिन्निदंयतश्चेदंयेनेदंयइदंस्वयम् । योऽस्मात्परस्माच्चपरस्तंप्रपद्येस्वयंभुवम् ३ यःस्वात्मनीदंनिजमाययार्पितंक्वचिद्विभातंक्वचतत्तिरोहितम् ॥ अविद्धदृक्साक्ष्युभयंतदीक्षतेसआत्ममूलोऽवतुमांपरात्परः ४ कालेनपंचत्वमितेषुकृत्स्नशोलोकेषुपालेषुचसर्वहेतुषु ॥ तमस्तदासीद्गहनंगभीरंयस्तस्य पारेऽभिविराजतेविभुः ५ नयस्यदेवाऋषयःपदंविदुर्जंतुःपुनःकोऽर्हतिगंतुमीरितुम् ॥ यथानटस्याकृतिभिर्विचेष्टतोदुरत्ययानुक्रमणःसमाऽवतु ६ दिदृक्षवोयस्यपदंसुमंगलंविमुक्तसंगामुनयःसुसाधवः ॥ चरंत्यलोकव्रतमव्रणंवनेभूतात्मभूताःसुहृदःसमेगतिः ७ नाविद्यतेयस्यचजन्मकर्मवाननामरूपेगुणदोषएववा ॥ तथापिलोकाप्ययसंभवाययःस्वमाययातान्यनुकालमृच्छति ८ तस्मैनमःपरेशायब्रह्मणेऽनंतशक्तये ॥ अरूपायोरुरूपायनमआश्चर्यकर्मणे ९ नमआत्मप्रदीपायसाक्षिणेपरमात्मने ॥ नमोगिरांविदूरायमनसश्चेतसामपि १०

किंच यःकार्यकारणात्परःतंस्वयंभुवंशरणंव्रजामि ३ सःस्वयंप्रकाशःमांअवतु ४ ५ अहोदेवाःऋषयःयस्यस्वरूपंनविदुःतंकोऽपि जंतुःज्ञातुंवक्तुंवाअर्हतिकिम् सःदुर्गमचरितःमांअवतु ६ यस्यपदंद्रष्टुमिच्छवःमुनय.वनेब्रह्मचर्यादिव्रतंचरंतिसः मेगतिरस्तु ७ अपिचयस्यजन्मादीनिनसंतितथापिलोकाप्ययसंभवार्थंजन्मादीनि यःधत्ते ८ तस्मै परेशाय ब्रह्मणे ९ परमात्मने कैवल्यनाथाय १०

एवमपिविपश्चितानिपुणेननैष्कर्म्येणसंन्यासेनसत्त्वेनशुद्धेन । 'संन्यासयोगाद्यतयःशुद्धसत्त्वाः' इतिश्रुतेः । प्रतिलभ्यायप्रत्यक्त्वेनप्राप्याय । निर्वाणसुखसंविदेमोक्षानंदानुभूतये ११ (शां तायसत्त्वानुसारिणे । घोरायरजोनुसारिणे । मूढायतमोनुसारिणे । यतो) गुणधर्मिणेसत्त्वादिधर्मानुकारिणे ( गुणधर्माःसंतियस्मिन्नधिष्ठानेतस्मैसाम्यायगुणसाम्याश्रयाय । वस्तुतःनि र्विशेषाय ) निर्विशेषत्वेपिप्रधानवैलक्षण्यमुक्तम् । ज्ञानघनायेत्यनेन १२ साक्षिणइतिसर्वाध्यक्षत्वेपिनिर्विकारत्वमुक्तम् । आत्मनांक्षेत्रज्ञानांमूलाय । मूलस्यप्रधानस्यापिप्रकृतयेउद्भव हेतवे । तत्रहेतुःपुरुषायपूर्वमेवसते । यथाचश्रुतिः । 'पूर्वमेवाहमिहासमितितत्पुरुषस्यपुरुषत्वं' इति । पूर्णायेतिवा १३ सर्वेंद्रियाणांयेगुणाविषयास्तेषांद्रष्ट्रे । सर्वेप्रत्ययाइंद्रियवृत्तयाहेतवो ज्ञापकायस्यतस्मै । तदेवाह । असताअहंकारादिप्रपंचेन ( हेतुना ) छाययाऽसद्रूपयाप्रतिबिंबरूपयाउक्ताय । जडस्यप्रतिबिंबेनबिंबंयथासूच्यतेतथासूचिताय । तत्रहेतुः । सद्रूपो विषयेष्वाभासोयस्यतस्मै । तदुक्तंतृतीये 'यथाजलस्थआभासः' इत्यादिना । पाठांतरे । असतःयस्यछायया अध्यासेनअक्ताययुक्ताय । तदधिष्ठानायेत्यर्थः १४ अखिलकारणायसर्व कारणरूपाय । अतएवस्वयंनिष्कारणाय । कारणत्वेपिमृदादिवद्विकारंवारयति । अद्भुतकारणायेति । एवंभूतत्वेप्रमाणमाह । सर्वेआगमाःपंचरात्रादयःआम्नायाश्चवेदाःतेषाम हार्णवायस्रोतसामिवपर्यवस्थानाय । अपवर्गायमोक्षरूपाय । अतःपरायणायउत्तमानामाश्रयाय १५ गुणाएवारणिस्तयाछन्नोश्चिदुष्मपोज्ञानाग्निस्तस्मै । तेषांगुणानांक्षोभेकार्येविस्फू र्जितंबहिर्वृत्तिकंमानसंयस्य ( तस्मै ) 'सोऽकामयतबहुस्याम्' इतिश्रुतेः । नैष्कर्म्यमात्मतत्त्वंतस्यभावेनभावनयाविवर्जिताआगमाविधिनिषेधलक्षणायैस्तेषुस्वयमेवप्रकाशोयस्य तस्मै १६ मादृग्मद्विधःसचासौप्रपन्नःपशुःतस्यपाशोऽविद्यातस्यविशेषेणमोक्षणंयेन । तत्रयोग्यतामाह । मुक्ताय । मोचनेहेतुः । भूरिःकरुणायस्य । अतस्तत्रार्थेअलयायअनलसाय । स्वांशेनअंतर्यामिरूपेणसर्वेषांतनुभृतांमनसिप्रतीतायामस्यग्दृक् दृशेतस्मै । तथाचश्रुतिः । 'यआत्मनितिष्ठन्आत्मानमंतरोयमयति' इति । भगवतेसर्वेषांतनुभृतांनियमने समर्थाय । तेषांमनसिस्थितत्वेपिबृहतेअपरिच्छिन्नाय १७

सत्त्वेनप्रतिलभ्यायनैष्कर्म्येणविपश्चिता ॥ नमःकैवल्यनाथायनिर्वाणसुखसंविदे ११ नमःशांतायघोरायमूढायगुणधर्मिणे ॥ निर्विशेषायसाम्यायनमो ज्ञानघनायच १२ क्षेत्रज्ञायनमस्तुभ्यंसर्वाध्यक्षायसाक्षिणे ॥ पुरुषायात्ममूलायमूलप्रकृतयेनमः १३ सर्वेंद्रियगुणद्रष्ट्रेसर्वप्रत्ययहेतवे ॥ असताच्छाय योक्तायसदाभासायतेनमः १४ नमोनमस्तेऽखिलकारणायनिष्कारणायाद्भुतकारणाय ॥ सर्वागमाम्नायमहार्णवायनमोऽपवर्गायपरायणाय १५ गुणारणि च्छन्नचिदुष्मपायतत्क्षोभविस्फूर्जितमानसाय ॥ नैष्कर्म्यभावेनविवर्जितागमस्वयंप्रकाशायनमस्करोमि १६ मादृक्प्रपन्नपशुपाशविमोक्षणायमुक्तायभूरि करुणायनमोऽलयाय ॥ स्वांशेनसर्वतनुभृन्मनसिप्रतीतप्रत्यग्दृशेभगवतेबृहतेनमस्ते १७

११ शांतायक्षेत्रज्ञायसदाभासाय १२ १३ १४ अखिलकारणायस्वयंप्रकाशायमादृक्प्रपन्नपशुपाशविमोक्षणायभूरिकरुणाय १५ १६ १७

अंतरयत्त्वंपिदेहादिष्वासक्तैः दुष्प्रापणायप्राप्तुमशक्याय । तत्रहेतुःगुणसंगेनविवर्जिताय । अतएवमुक्तात्माभिःदेहादिष्वनासक्तैश्चिंतिताय । तैःपरिभावितंरूपमाह ज्ञानात्मनइति १८
इष्टांगतिकामितंधर्मादिफलंप्राप्नुवंत्येव । नतुतावदेव । किंतुयास्त्वैरकामिताअन्याअप्याशिषोरातिदेहमप्यव्ययंरातिं । एवंयः अदभ्रदयःसमेविमोक्षणमेवकेवलंकरोतुनाधिकंप्रार्थये १९
॥ ३ ॥ एतावदप्यहंभक्तिसुखानभिज्ञत्वेनवांछामि । यस्यत्वेकांतभक्तानकंचिदर्थंवांछंतितंपरेशंपरमेश्वरमीडेस्तौमीत्युत्तरेणान्वयः । तेषांनिष्कामत्वेहेतुः । येवैभगवतःसर्वज्ञान्मुक्तान्प्रपन्नास्ते ॥ ३ ॥
विरक्ताः २० अत्यद्भुतत्वसुमंगलत्वप्रदर्शनार्थंअक्षरत्वादिविशेषणानि ( अध्यात्मशास्त्रोक्तोपायेनगम्यंलभ्यम् ) २१ परिपूर्णत्वंप्रदर्शयन्नाहत्रिभिः । यस्येति । फल्गुरूपयास्वस्यैवक
लयाअंशेनकृताः । सजयतादितितृतीयेनान्वयः २२ कथंकृताइत्यपेक्षायांदृष्टांतौ । यथार्चिषोऽग्नेरितिप्रवाहेदृष्टांतः । सवितुर्गभस्तयइत्यानंत्ये । निर्यांतिउद्गच्छंति । संयांतिलीयंते
( स्वरोचिषःस्वयंप्रकाशात् ) गुणसंप्रवहमेवाह । बुद्धिर्मनःखानिकरणानि । शरीरसर्गाःकार्यदेहप्रवाहाश्चयतोभवंतिसः २३ अतएवदेवादीनांमध्येकोपिनभवति । नजंतुःलिंगत्रयशून्यं
प्राणिमात्रमपि । किंतु । सर्वस्यनिषेधेअवधित्वेनअवशिष्यतइतिनिषेधशेषः । (मायया) अशेषात्मकश्च । जयतात्मद्विमोक्षणायआविर्भवतु २४

आत्मात्मजाप्तगृहवित्तजनेषुसक्तैर्दुष्प्रापणायगुणसंगविवर्जिताय ॥ मुक्तात्मभिःस्वहृदयेपरिभाविताय ज्ञानात्मनेभगवतेनमईश्वराय १८ यंधर्मकामार्थवि
मुक्तिकामाभजंतइष्टांगतिमाप्नुवंति ॥ किंत्वाशिषोरात्यपिदेहमव्ययंकरोतुमेऽदभ्रदयोविमोक्षणम् १९ एकांतिनोयस्यनकंचनार्थंवांछंतियेवैभगवत्प्रप
न्नाः ॥ अत्यद्भुतंतच्चरितंसुमंगलंगायंतआनंदसमुद्रमग्नाः २० तमक्षरंब्रह्मपरंपरेशमव्यक्तमाध्यात्मिकयोगगम्यम् ॥ अतींद्रियंसूक्ष्ममतीवदूरमनंतमा
द्यंपरिपूर्णमीडे २१ यस्यब्रह्मादयोदेवावेदालोकाश्चराचराः ॥ नामरूपविभेदेनफल्ग्व्याचकलयाकृताः २२ यथार्चिषोऽग्नेःसवितुर्गभस्तयोनिर्यांतिसं
यांत्यसकृत्स्वरोचिषः ॥ तथायतोयंगुणसंप्रवाहोबुद्धिर्मनःखानिशरीरसर्गाः २३ सवैनदेवासुरमर्त्यतिर्यङ्नस्त्रीनषंढोनपुमान्नजंतुः ॥ नायंगुणःकर्मनसन्न
चासन्निषेधशेषोजयतादशेषः २४

आत्मात्मजाप्तगृहवित्तजनेषुसक्तैःआप्तुमशक्यायगुणसंगविवर्जितायदेहादिष्वनासक्तैःचिंतितायज्ञानात्मनेईश्वरायनमोऽस्तु १८ किंच यंधर्मकामार्थविमुक्तिकामाःभ
जंतःइष्टांगतिंप्राप्नुवंत्येव किंच अन्याअपिआशिषःअव्ययंदेहंचरातिएवंयःअदभ्रदयःसमेविमोक्षणंकेवलंकरोतु नाधिकंप्रार्थये एतावदपिभक्तिसुखानभिज्ञत्वेनवांछा ॥ ५ ॥
मि १९ अहोयस्यएकांतभक्ताःयेतेकंचनअर्थंनवांछंति २० तंपरिपूर्णअनंतंस्तौमि २१ किंच ब्रह्मादयोदेवाःवेदाःलोकाश्चनामरूपभेदेनयस्यकलयाकृताः २१ २१
सदेवासुरमर्त्यतिर्यङ्न स्त्रीषंढःपुमान्न तर्हिसर्वनिषेधेयःअवशिष्यते सपरमात्मा मद्विमोक्षणायआविर्भवतु २४

यथाग्राहाच्छरीरस्यमोक्षणेननाहंजीवितुमिच्छामि । तत्रहेतुः । अमुयाअंतर्बहिश्चअविवेकेनव्याप्तयाइभजात्याकिंप्रयोजनम् । आत्मलोकस्यआत्मप्रकाशस्ययदावरणमज्ञानंतस्यैवतु
मोक्षमिच्छामि । यस्यमोक्षस्यकालेननाशोनास्ति । यद्वा देहस्यबंधोदेहनाशेगजयोर्निःश्रेयसेदेवकृतम्मोक्षप्रार्थनेन । आत्मलोकावरणस्यतुकालेनविप्लवोनास्ति । ज्ञानैकनिवर्त्यत्वात्
अतस्तस्यैवमोक्षमिच्छामीत्यर्थः २५ सोहंमुमुक्षुःविश्वंविश्वरूपम् । अविश्वंविश्वव्यतिरिक्तंच । विश्वंवेदोधनमुपकरणंयस्यतम् । विश्वस्यात्मानंच । केवलंप्रणतोस्मिनतुतंजानामि २६
योगंविनादुर्ज्ञानत्वादित्याह । योगेनभक्तिधर्मेणरंधितानिदग्धानिकर्माणियेषांतेयंप्रपश्यंति २७ तर्हिसर्वेषियोगमेवकिंनास्थितास्तत्राहनमइतिद्वाभ्याम् । असह्योवेगोरागादिलक्ष
णोयस्यतथाभूतंशक्तित्रयं ( द्रव्यज्ञानक्रियात्मकं ) यस्यतस्मै । बहिश्चअखिलधियांसर्वेंद्रियाणांगुणायशब्दादिरूपेणप्रतीयमानाय । अतःकदिंद्रियाणांकुत्सितानींद्रियाणियेषांते
षामनवाप्यंवर्त्मयस्य २८ यच्छक्त्यायस्यमाययाऽहंधीःतयाहतंआवृतंअयंजनोनवेद । दुरत्ययंमाहात्म्यंयस्यतंइतोस्मिआश्रितोभवामि २९ उपवर्णितंनिर्विशेषंमूर्तिभेदंविनापरंब्र
ह्मयेनतम् । विविधाचासौलिंगभिदामूर्तिभेदःतस्यामभिमानोयेषांअतएतेयदानोपजग्मुःतत्रतदा ( निखिलात्मकत्वात् ) अखिलामरमयः सर्वदेवमयमूर्तिः३० (उपलभ्यज्ञात्वास्तोत्रंच
निशम्यश्रुत्वा ) दिविजैर्देवैःसह । छंदांसिसामानितन्मयेनेतिशीघ्रगामित्वायोक्तम् ३१ उरुबलेनग्राहेण । उपात्तंउद्यतंचक्रंयेन ( तंदृष्ट्वासांबुजकरंसपद्मंहस्तमुद्यम्य ) ३२

जिजीविषेनाहमिहामुयाकिमंतर्बहिश्चावृतयेभयोन्या ॥ इच्छामिकालेननयस्यविप्लवस्तस्यात्मलोकावरणस्यमोक्षम् २५ सोहंविश्वसृजंविश्वमविश्वंविश्व
वेदसम् ॥ विश्वात्मानमजंब्रह्मप्रणतोस्मिपरंपदम् २६ योगरंधितकर्माणोहृदियोगविभाविते ॥ योगिनोयंप्रपश्यंतियोगेशंतंनतोस्म्यहम् २७ नमो
नमस्तुभ्यमसह्यवेगशक्तित्रयायाखिलधीगुणाय ॥ प्रपन्नपालायदुरंतशक्तयेकदिंद्रियाणामनवाप्यवर्त्मने २८ नायंवेदस्वमात्मानंयच्छक्त्याऽहंधियाह
तम् ॥ तंदुरत्ययमाहात्म्यंभगवंतमितोस्म्यहम् २९ ॥ श्रीशुकउवाच ॥ एवंगजेंद्रमुपवर्णितनिर्विशेषंब्रह्मादयोविविधलिंगभिदाभिमानाः ॥ नैतेयदोपससृ
पुर्निखिलात्मकत्वात्तत्राखिलामरमयोहरिराविरासीत् ३० तंतद्वदार्तमुपलभ्यजगन्निवासःस्तोत्रंनिशम्यदिविजैःसहसंस्तुवद्भिः ॥ छंदोमयेनगरुडेनस
मुह्यमानश्चक्रायुधोभ्यगमदाशुयतोगजेंद्रः ३१ सोंतस्सरस्युरुबलेनगृहीतआर्तोदृष्ट्वागरुत्मतिहरिंखउपात्तचक्रम् ॥ उत्क्षिप्यसांबुजकरंगिरमाहकृच्छ्रा
न्नारायणाखिलगुरोभगवन्नमस्ते ३२

अहंग्राहात्शरीरमोक्षणेनजीवितुंनेच्छामि किंतुअज्ञानमोक्षंइच्छामि २५ सोऽहंमुमुक्षुःकेवलंब्रह्मप्रणतोस्मिनतुतंजानामि २६ किंच योगिनःयंहृदिपश्यंतितंनतोऽस्मि
२७ हेईश प्रपन्नपालायतुभ्यंनमोऽस्तु २८ किंच यंस्वमात्मानंअयंजनःनवेद तंईश्वरंआश्रितोऽस्मि २९ ॥ श्रीशुकउवाच ॥ एवंउपवर्णितनिर्विशेषंगजेंद्रंविविधमूर्ति
भेदाभिमानिनःब्रह्मादयःयदानोपजग्मुःतदासर्वदेवमयमूर्तिःहरिःआविरासीत् ३० ततःजगन्निवासःतंआर्तंउपलभ्य तत्स्तोत्रंचनिशम्य स्तुवद्भिःदेवैःसहहरिःवेदोमयगरुडे
नउह्यमानःचक्रायुधःसन्यत्रगजेंद्रःतत्रआशुअभ्यगमत् ३१ तदागजेंद्रःसरसिउरुबलेनग्राहेणगृहीतःआर्तःसन् गरुत्मतिधृतचक्रंहरिंदृष्ट्वा सांबुजकरंऊर्ध्वंकृत्वा हेनारायणअ
खिलगुरोभगवन्नमस्ते इतिदीनांगिरंआह ३२

 गरुडोपिमंदगतिरितितत:सहसाऽवतीर्य(सग्राहंग्राहेणसहितम्) । अरिणाचक्रेणविपाटितंमुखंयस्य तस्मात् । उस्रियाणांदेवानाम् ३३ ॥इतिश्रीमागवतेमहापुराणेअष्टमस्कंधेटीकायांतृ 
तीयोध्यायः ३ ॥७॥ चतुर्थेतुतयोर्ग्राहःप्रापगंधर्वतांपुनः । गजस्त्वपार्षदंकृत्वाहरिर्निन्येनिजंपदम् ॥१॥ १ २ हूहूसंज्ञोगंधर्वसत्तमःअसौदेवलस्यशापेनग्राहोजातः । सएवतत:सद्योमुक्तःस
 नुउत्तमश्लोकमगायतेत्यन्वयः । एवंहीतिहासोत्तमेकथा । सरसिस्त्रीभिःक्रीडन्सोहूहूःस्नातुंप्रविष्टंदेवलंपादेगृहीत्वाविचकर्षसचप्रकुपितोग्राहोभवेतिशशापतेनचप्रसादितःसनुवाच एवमे 
वगजेंद्रंगृह्णीष्वततश्चगजेंद्रमुद्धरन्हरिस्त्वांमोचयिष्यतीति ३ कथंभूतंयशसोधामआश्रयम् । अतःकीर्तन्याकीर्तनीयागुणाःसत्कथाचयस्यतम् ४ स्वंलोकंगंधर्वलोकम् ५ ( पीतांब
रश्चतुर्भुजःसन्भगवतोरूपंप्राप ) ६ ( सगजेंद्रःपूर्वं द्राविडेषुसत्तमःश्रेष्ठःपांड्यदेशाधिपतिःइंद्रद्युम्नइतिख्यातोराजाभूत् ) ७ ( आप्लुतःस्नातः । आत्मवान्नियहीतमनाः ) कुलाचले
मलयाद्रावाश्रमोयस्य ८ ( नकृतमर्हणादिकंयेनतम् ) तूष्णींरहस्युपासीनंवीक्ष्य । (ऋषिरगस्त्यः )९

तंवीक्ष्यपीडितमजःसहसाऽवतीर्यसग्राहमाशुसरसःकृपयोज्जहार ॥ ग्राहाद्विपाटितमुखादरिणागजेंद्रंसंपश्यतांहरिरमूमुचदुस्रियाणाम् ३३ ॥ ॥ इति
श्रीभागवतेमहापुराणेअष्टमस्कंधेतृतीयोऽध्यायः ३ ॥ ॥ ७ ॥ ॥ ॥ श्रीशुकउवाच ॥ तदादेवर्षिगंधर्वाब्रह्मेशानपुरोगमाः ॥ मुमुचुःकुसुमासारंशं
संतःकर्मतद्धरेः १ नेदुर्दुंदुभयोदिव्यागंधर्वाननृतुर्जगुः ॥ ऋषयश्चारणाःसिद्धास्तुष्टुवुःपुरुषोत्तमम् २ योसौग्राहःसवैसद्यःपरमाश्चर्यरूपधृक् ॥ मुक्तोदेवल
शापेनहूहूर्गंधर्वसत्तमः ३ प्रणम्यशिरसाऽधीशमुत्तमश्लोकमव्ययम् ॥ अगायतयशोधामकीर्तन्यगुणसत्कथम् ४ सोनुकंपितईशेनपरिक्रम्यप्रणम्यतम् ॥
लोकस्यपश्यतोलोकंस्वमगान्मुक्तकिल्बिषः ५ गजेंद्रोभगवत्स्पर्शाद्विमुक्तोऽज्ञानबंधनात् ॥ प्राप्तोभगवतोरूपंपीतवासाश्चतुर्भुजः ६ सवैपूर्वमभूद्राजा
पांड्योद्रविडसत्तमः ॥ इंद्रद्युम्नइतिख्यातोविष्णुव्रतपरायणः ७ सएकदाऽऽराधनकालआत्मवान्गृहीतमौनव्रतईश्वरंहरिम् ॥ जटाधरस्तापसआप्लुतोऽच्यु-
तंसमर्चयामासकुलाचलाश्रमः ८ यदृच्छयातत्रमहायशामुनिःसमागमच्छिष्यगणैःपरिश्रितः ॥ तंवीक्ष्यतूष्णीमकृतार्हणादिकंरहस्युपासीनमृषिश्चुकोपह ९

तदाअजःआर्तंतंवीक्ष्यसहसागरुडात्अवतीर्यकृपयाआशुसरसःसग्राहंतंउज्जहार ततःदेवेषुपश्यत्सुहरिःचक्रेणग्राहंविदार्यगजेंद्रममूचत् ३३ ॥ इत्यष्टमेतृतीयः ३ ॥ ७ ॥
॥ श्रीशुकउवाच ॥ तदादेवर्षिगंधर्वाब्रह्मेशानपुरोगमाःतत्हरेःकर्मशंसंतःपुष्पवृष्टिंचक्रुः १ दुंदुभयोनेदुःगंधर्वाःननृतुःजगुश्च ऋषयः चारणाःसिद्धाःतुष्टुवुः २ हेराजन्
योऽयंग्राहःसःहूहूःगंधर्वःअसौदेवलशापेनग्राहोजातः ३ सःसद्यःमुक्तःसन्हरिंप्रणम्यस्तुतिंचक्रे ४ ततःईशेनअनुकंपितःसन्तंपुनःपरिक्रम्यप्रणम्यचस्वंलोकंअगात् ५ 
ततःगजेंद्रःभगवत्स्पर्शात्अज्ञानबंधनात्मुक्तःभगवद्रूपंप्राप्तः ६ हेनृपसःद्रविडदेशेपांड्यःविष्णुव्रतपरायणःपूर्वंइंद्रद्युम्ननामराजाआसीत् ७ सःमलयाद्रौएकदाआराधनकाले
धृतमौनःजटाधरःस्नातःसन्हरिंअर्चयामास ८ तत्रयदृच्छयासशिष्यःअगस्त्यःआगमत् तंअकृतार्हणादिकंतूष्णींस्थितंवीक्ष्यमुनिश्चुकोप ९

शापमेवाह । असाधुरित्यादि । अकृता अशिक्षिता बुद्धिर्यस्य । गजोयथास्तब्धमतिस्तथैवायं अतःसएवगजएवभवत्विति शेषः १० हेनृपदिष्टंदैवप्रापितंतदुपधारयन् आक्रोचयन्कौंजरीं योनिमापन्नः ११ तर्हिपश्चात्कथंस्मृतिर्जातातत्राह । हरेरर्चनस्यानुभावेनेति १२ ( तेनगजेंद्रेणयुक्तः । उपगीयमानंकर्मयस्यसः ) अद्भुतंस्वभवनंअगात् १३ एतद्गजराजमोक्षणंनाम कृष्णानुभावस्तवेरितः । कथंभूतंतत्राह । स्वर्ग्यमित्यादि । दुःस्वप्ननाशयतीतितथा १४ अतःश्रेयस्कामास्तयथावदनुकीर्तयंति १५ अनेनश्रेयोभवतीतिकुतोज्ञातंसाक्षाद्भगवद्वचनादे वेत्याह । इदमाहेत्यादिनायावत्समाप्ति १६ प्रसंगादन्यस्यापिस्मरणेफलमुच्यते ( क्षीरोदमित्यादिना ) सर्वैर्षाद्वितीयांतानांस्मरंतीत्यष्टमेनान्वयः १८ ( शृंगाणिशिखराणि ) ( शोभनंपर्णपतनंयस्यतंपतगेश्वरंगरुडम् ) १९ ( मत्कलांमदंशाम् । अहमाश्रयोयस्यास्तां । मदंतरस्थ ) २०

तस्मादिमंशापमदादसाधुरयंदुरात्माऽकृतबुद्धिरद्य ॥ विप्रावमंताविशतांतमोंधंयथागजस्तब्धमतिःसएव १० ॥ श्रीशुकउवाच ॥ एवंशप्त्वागतोऽगस्त्यो भगवान्नृपसानुगः ॥ इंद्रद्युम्नोपिराजर्षिर्दिष्टंतदुपधारयन् ११ आपन्नःकौंजरींयोनिमात्मस्मृतिविनाशिनीम् ॥ हर्यर्चनानुभावेनयद्गजत्वेप्यनुस्मृतिः १२ एवंविमोक्ष्यगजयूथपमब्जनाभस्तेनापिपार्षदगतिंगमितेनयुक्तः ॥ गंधर्वसिद्धविबुधैरुपगीयमानकर्माऽद्भुतंस्वभवनंगरुडासनोऽगात् १३ एतन्महारा जतवेरितोमयाकृष्णानुभावोगजराजमोक्षणम् ॥ स्वर्ग्यंयशस्यंकलिकल्मषापहंदुःस्वप्ननाशंकुरुवर्यशृण्वताम् १४ यथानुकीर्तयंत्येतच्छ्रेयस्कामाद्विजात यः ॥ शुचयःप्रातरुत्थायदुःस्वप्नाद्युपशांतये १५ इदमाहहरिःप्रीतोगजेंद्रंकुरुसत्तम ॥ शृण्वतांसर्वभूतानांसर्वभूतमयोविभुः १६ ॥ ॥ श्रीभगवानु वाच ॥ ॥ येमांत्वांचसरश्चेदंगिरिकंदरकाननम् ॥ वेत्रकीचकवेणूनांगुल्मानिसुरपादपान् १७ शृंगाणीमानिधिष्ण्यानिब्रह्मणोमेशिवस्यच ॥ क्षीरोदंमे प्रियंधामश्वेतद्वीपंचभास्वरम् १८ श्रीवत्संकौस्तुभंमालांगदांकौमोदकींमम ॥ सुदर्शनंपांचजन्यंसुपर्णपतगेश्वरम् १९ शेषंचमत्कलांसूक्ष्मांश्रियंदेवींमदा श्रयाम् ॥ ब्रह्माणंनारदमृषिंभवंप्रह्लादमेवच २०

आहच अयंअसाधुःविप्रावमंतागजवत्स्तब्धमतिःअतःअयंगजएवभवतु १० ॥ श्रीशुकउवाच ॥ एवंशप्त्वाऋषिःगतःततःइंद्रद्युम्नोपिदैवप्रापितंसर्वपश्यन् ११ आत्म स्मृतिविनाशिनींकौंजरींयोनिमापन्नः तथापिहर्यर्चनानुभावेनगजत्वेऽपिअनुस्मृतिःजाता १२ एवंभगवान्गजेंद्रंविमोक्ष्यपार्षदगतिंगमितेनतेनयुक्तःसन्विबुधादिभिःस्तूय मानःगरुडासनःस्वभवनंअगात् १३ हेराजन् एवंमयातवकृष्णानुभावःवर्णितःइदंगजेंद्रमोक्षणंशृण्वताम् स्वर्ग्यंयशस्यंपापापहंदुःस्वप्ननाशमस्ति १४ अतःएतत्श्रेयस्का माःद्विजाःप्रातःउत्थायदुःस्वप्नाद्युपशांतयेकीर्तयंति १५ हरिःगजेंद्रंइदंआह १६ ॥ श्रीभगवानुवाच ॥ हेगजेंद्रयेमांत्वांइदंसरःगिरिकंदरकाननंवेत्रकीचकवेणूनांगुल्मा निसुरपादपान् १७ब्रह्मणःमेशिवस्यचधिष्ण्यानिइमानिशृंगाणिक्षीरोदंश्वेतद्वीपं१८श्रीवत्संकौस्तुभंमालांगदासुदर्शनंशंखंसुपर्णं१९शेषंश्रियं ब्रह्माणंनारदंभवंप्रह्लादम् २०

२१ अव्यक्तंमायां । अव्ययंधर्मंमक्तिलक्षणम् ( दाक्षायणीर्दक्षकन्याःरूपाधर्मस्यपत्नीः ) सोमकश्यपयोरपिपत्नीर्दाक्षायणीः २२ सितवारणमैरावतम् । ( मानवान्मनुवंश्यान् ) २३ ( अपररात्रांतेब्राह्मेमुहूर्ते प्रयताःशुद्धाः ) सुसमाहिताएकाग्रचित्ताः । ममरूपाणिमद्विभूतीः २४ ( प्रतिबुध्यनिद्रांपरित्यज्यअनेनमत्स्वकृतेनस्तोत्रेण ) २५ जलजोत्तमंशंखवरंप्राध्मायवा दयित्वा २६ ॥ ॥ इतिश्रीभागवतेमहापुराणेअष्टमस्कंधटीकायांचतुर्थोऽध्यायः ४ ॥ ॥ ७ ॥ ॥ अवतारव्याख्यानमष्टाभिरध्यायैरनुवर्ण्यते । स्वभक्तपक्षपातेनयत्रयोपाविलक्षणोः ॥१॥ पं चमेपंचमंचायष्ठंचाकथयन्मनुम् । त्रिभिःपापापहैःश्रीकैःकृतादेवैर्हरेस्तुतिः ॥ २ ॥ १ तामसश्चतुर्थोमनुःतस्यसोदरोभ्राता २ ( द्विजाऋषयः ) ३ ( तयोर्विकुंठाशुभ्रयोः । वैकुंठैः सहकल्याअंशेनजज्ञे ) ४ ( तस्यारमायाःप्रियकाम्ययायेनविकुंठारचयेन ) ५ तस्यवैकुंठसंज्ञस्यहरेरनुभावः । सनकादिशापेनदैत्यतांप्राप्ताभ्यांस्वपार्षदाभ्यांवाराहादिरूपेणयुद्धादिल क्षणः । गुणाश्चब्रह्मण्यतादयःपरमोदयाश्चमहर्द्धयःकथिताःतृतीयस्कंधादिषु ६

मत्स्यकूर्मवराहाद्यैरवतारैःकृतानिमे ॥ कर्माण्यनंतपुण्यानिसूर्यंसोमंहुताशनम् २१ प्रणवंसत्यमव्यक्तंगोविप्रान्धर्ममव्ययम् ॥ दाक्षायणीर्धर्मपत्नीः सोमकश्यपयोरपि २२ गंगांसरस्वतींनंदांकालिंदींसितवारणम् ॥ ध्रुवंब्रह्मऋषीन्सप्तपुण्यश्लोकांश्चमानवान् २३ उत्थायापररात्रांतेप्रयताःसुसमाहि ताः ॥ स्मरंतिममरूपाणिमुच्यंतेह्येनसोऽखिलात् २४ येमांस्तुवंत्यनेनांगप्रतिबुध्यनिशात्यये ॥ तेषांप्राणात्ययेचाहंददामिविमलांमतिम् २५ ॥ श्रीशुकउवाच ॥ इत्यादिश्यहृषीकेशःप्राध्मायजलजोत्तमम् ॥ हर्षयन्विबुधानीकमारुरोहखगाधिपम् २६ ॥ ॥ इतिश्रीभागवतेमहापुराणेअष्टम स्कंधेचतुर्थोऽध्यायः ४ ॥ ॥७॥ ॥ श्रीशुकउवाच ॥ राजन्नुदितमेतत्तेहरेःकर्माघनाशनम् ॥ गजेंद्रमोक्षणंपुण्यंरैवतंत्वंतरंशृणु १ पंचमोरैवतोनाममनु स्तामससोदरः ॥ बलिर्विंध्यादयस्तस्यसुताअर्जुनपूर्वकाः २ विभुरिंद्रःसुरगणाराजन्भूतरयादयः ॥ हिरण्यरोमावेदशिराऊर्ध्वबाह्वादयोद्विजाः ३ पत्नी विकुंठाशुभ्रस्यवैकुंठैःसुरसत्तमैः ॥ तयोस्तुकलयाजज्ञेवैकुंठोभगवान्स्वयम् ४ वैकुंठःकल्पितोयेनलोकोलोकनमस्कृतः ॥ रमयाप्रार्थ्यमानेनदेव्यातत्प्रि यकाम्यया ५ तस्यानुभावःकथितोगुणाश्चपरमोदयाः ॥ भौमान्रेणून्सविममेयोविष्णोर्वर्णयेद्गुणान् ६

अवतारकर्माणिसूर्यंसोमम् २१ अग्निप्रणवंसत्यम् २२ मायांगोविप्रान्दक्षकन्याःगंगांसरस्वतींनंदांकालिंदींऐरावतंध्रुवंसप्तर्षीन्पुण्यश्लोकान्मानवान् २३ इत्यादीनिमेरू पाणिअपररात्रांतेउत्थाययेस्मरंतितेपापात्मुच्यंते २४ किंच प्रातःस्वत्कृतस्तोत्रेणयेमांस्तुवंतितेषांप्राणात्ययेविमलांमतिंददामि २५ ॥ श्रीशुकउवाच ॥ हृषीकेशःइत्यादि शंखंप्राध्मायदेवानीकंहर्षयन्गरुडंआरुरोह २६ इत्यष्टमेचतुर्थः ४ ॥ ॥ ७ ॥ श्रीशुकउवाच ॥ हेराजन्हरेःअघनाशनंकर्मगजेंद्रमोक्षणंतेउदितम् अथरैवतमन्वंतरं शृणु १ पंचमोरैवतोनाममनुःतत्पुत्राःबलिविंध्यादयः २ विभुरिंद्रः भूतरयाद्याःदेवाःहिरण्यरोमाद्याःऋषयः ३ शुभ्रस्यविकुंठायांपत्न्यांवैकुंठःअवतारः ४ लक्ष्याः प्रियकाम्ययायेनवैकुंठलोकःकल्पितः ५ तस्यप्रभावगुणादयःतृतीयस्कंधादिषुकथिताः ६

७ ८ ९ १० यतोहेतोःअंबुचरात्मनाकूर्मरूपेण ११ सुराणांसाधितासुधेत्युक्त्वासुधादायपितृचितंअतःपृच्छतिकिंचान्यदिति १२ १३ ( हेद्विजाः ) १४ ( शितैस्तीक्ष्णैरायुधैःगतप्राणाः) नोत्तिष्ठेरन्नपुनर्जीवंतिस्मेत्यर्थः १५ दुर्वासस्राहिकदाचिन्मार्गेगच्छंतमिंद्रंदृष्ट्वास्वकंठस्थामालांतस्मैदत्ता । तेनचश्रीमदेनअनादृत्यऐरावतस्यकुंभयोर्निक्षिप्तासचगजोमत्तःपद्भ्यांतांमा लांचूर्णीचकार । ततःकुपितोदुर्वासास्त्वंशशापत्रिभिर्लोकैःसहस्त्वंनिःश्रीकोभवेतिवदेवदाह । यदादुर्वासःशापेनेति । इज्यादयःयागादयः १६ १७ १८ असुरान्अथवादे वैवैकक्षण्येन । बलप्रभादियुक्तान्विलोक्येत्यर्थः १९

षष्ठश्चचक्षुषःपुत्रश्चाक्षुषोनाममैमनुः ॥ पुरुपुरुषसुद्युम्नप्रमुखाश्चाक्षुषात्मजाः ७ इंद्रोमंत्रद्रुमस्तत्रदेवाआप्यादयोगणाः ॥ मुनयस्तत्रवैराजन्हविष्म द्वीरकादयः ८ तत्रापिदेवःसंभूत्यांवैराजस्याभवत्सुतः ॥ अजितोनामभगवानंशेनजगतःपतिः ९ पयोधिंयेननिर्मथ्यसुराणांसाधितासुधा ॥ भ्रममाणों ऽमसिधृतःकूर्मरूपेणमंदरः १० ॥ राजोवाच ॥ यथाभगवताब्रह्मन्मथितःक्षीरसागरः ॥ यदर्थंवायतश्चाद्रिंदधारांबुचरात्मना ११ यथाऽमृतंसुरैः प्राप्तंकिंचान्यदभवत्ततः ॥ एतद्भगवतःकर्मवदस्वपरमाद्भुतम् १२ त्वयासंकथ्यमानेनमहिम्नासात्वतांपतेः ॥ नातितृप्यतिमेचित्तंसुचिरंतापतापि तम् १३ ॥ सूतउवाच ॥ संपृष्टोभगवानेवंद्वैपायनसुतोद्विजाः ॥ अभिनंद्यहरेर्वीर्यमभ्याचष्टुंप्रचक्रमे १४ ॥ श्रीशुकउवाच ॥ यदायुद्धेऽसुरैर्देवाःबा ध्यमानाःशितायुधैः ॥ गतासवोनिपतितानोत्तिष्ठेरन्स्मभूयशः १५ यदादुर्वासःशापेनसेंद्रालोकास्त्रयोनृप ॥ निःश्रीकाश्चाभवंस्तत्रनेशुरिज्यादयः क्रियाः १६ निशम्यैतत्सुरगणामहेंद्रवरुणादयः ॥ नाध्यगच्छन्स्वयंमंत्रैर्मंत्रयंतोविनिश्चयम् १७ ततोब्रह्मसभांजग्मुर्मेरोर्मूर्धनिसर्वशः ॥ सर्वंविज्ञापयां चक्रुःप्रणताःपरमेष्ठिने १८ सविलोक्येंद्रवाय्वादीन्निःसत्त्वान्विगतप्रभान् ॥ लोकानमंगलप्रायानसुरानयथाविभुः १९

षष्ठःचाक्षुषोनाममनुःपुरुपुरुषाद्याःतत्पुत्राः ७ मंत्रद्रुमःइंद्रः आप्यादयोदेवाः हविष्मद्वीरकादयोमुनयः ८ वैराजात्संभूत्यांअजितोनामअवतारः ९ येनपयोनिधिंनिर्मथ्य सुराणांसुरासाधिता किंच कूर्मरूपेण अंभसिमंदराद्रिर्धृतः १० ॥ राजोवाच ॥ हेब्रह्मन् यथाभगवताक्षीराब्धिःमथितःयदर्थंअद्रिंदधार ११ यथाचसुरैःअमृतंप्राप्तम् अन्यदपियद्यत् अभवत् तत्हरेःकर्मवद १२ त्वयाकथ्यमानेनहरेर्महिम्नामेचित्तंनतृप्यति १३ ॥ सूतउवाच ॥ एवंपृष्टःशुकःहरेर्वीर्यमभ्याचष्टुंप्रचक्रमे १४ ॥ श्रीशु कउवाच ॥ यदायुद्धेदैत्यैःपीड्यमानाःदेवाःगतासवःनिपतिताःसंतःनपुनर्जीवंतिस्म १५ किंच हेनृप यदादुर्वाससःशापात् सेंद्राःत्रयःलोकाःनिःश्रीकाःअभवन् तदा यागादिक्रियाःनेशुः १६ ततःमहेंद्रवरुणादयःएतत्यज्ञनाशादिकंनिशम्यस्वयंमंत्रयंतःनिश्चयंनप्रापुः १७ ततःमेरुमूर्धनिब्रह्मसभांगत्वाप्रणताःसंतःब्रह्मणेसर्वंविज्ञापयांच क्रुः १८ तदाब्रह्माइंद्रवाय्वादीन्निःसत्त्वान्दृष्ट्वा असुरान्तेजोयुक्तान्दृष्ट्वा १९

हरिंशरणंगताःसंतोयथापूर्वंसर्वंप्राप्स्यामइतिहर्षेणोत्फुल्लैर्विकसितंवदनंयस्य २० मनुष्यादिशब्देनजरायुजांडजोद्भिज्जस्वेदजाःक्रमेणोक्ताःयस्यावतारःपुरुषःतस्यांशोब्रह्मातस्यकलापरी च्यादयःताभिर्विसर्जिताःपुत्रपौत्रादिद्वाराजनिताः २१ ननुतर्हिसर्वेष्वसौसमःस्यात्तत्किंस्वरणाश्रयेण । सत्यं । न ह्यस्येवं ... । नयस्योपे द्वाभ्यां ( उपेक्षणीयादरणीययोःपक्षःपक्षपातः) २२ स्थितिपालनस्यक्षणःकालः । अतःसुरप्रियःसन्स्वीयानांनःशंसुखंकरिष्यति २३ यत्रश्रीराज्ञोहरेर्वासः तदेवतमसःपरं(पदं)स्थान म् यद्वालोकालोकात्परतोयत्तमस्ततःपरंस्थानंजगाम २४ दैवीभिर्लौकेअप्रसिद्धाभिःवैदिकीभिर्गीर्भिःस्तुतिंअकरोत् २५ देववरंत्वांनमामहे । हेदेव वरंत्वांनमामेतित्वा । वरत्वेहेतुः । स त्यं । कुतःअविक्रियम् । तत्कुतः अनंतंआद्यंचअनादिं आद्यंतवंतोहिवृद्ध्यादिविक्रियायुक्ताभवंति । किंच । गुहाशयंसर्वांतरम् । कुतः निष्कलम् निरंशर्थं । तत्कुतः अग्रयानम् मनसो पिजविष्ठम् । मनःप्राप्स्यस्थानेततःप्रागेवविद्यमानत्वात् । तथाचश्रुतिः 'अनेजदेकंमनसोजवीयोनैनद्देवाआप्नुवन्पूर्वमर्शत् । तद्धावतोन्यानत्येतितिष्ठदिति' इत्यादिवचसाअनिरुक्तंअविषय त्वात् 'यद्वाचाऽनभ्युदितंयेनवागभ्युद्यते' इतिश्रुतेः । मनोवचसोरगोचरत्वादप्रतर्क्यं । यथेदंवासर्वेषांहेतुहेतुमद्भावः २६ किंच । प्राणादीनांविपश्चितंज्ञातारम् । आत्माअहंकारोदेहोवा । नतुतद्व्यतिरिक्तंज्ञेयमस्तीत्याह । अर्थोविषयःइंद्रियाणितद्ग्राहकाणि । तदुभयरूपेणआभासतेतथातम् । तथाप्यनिद्रंस्वप्नद्रष्टृवदज्ञानरहितम् । कुतःअव्रणंअदेहम् । अतएवअक्षरंखमा काशमिवव्यापिनंच । सर्वत्रहेतुः । यत्रयास्मिन्गृध्रपक्षोजीवपक्षपातिनोछाया तपौअविद्यातत्त्वनिवर्तिकाविद्याचनास्तितम् । त्रियुगंत्रियुगेष्वाविर्भवंतम् । तंशरणंव्रजामहे २७

समाहितेनमनसासंस्मरन्पुरुषंपरम् ॥ उवाचोत्फुल्लवदनोदेवान्प्रभगवान्परः २० अहंभवोयूयमथासुरादयोमनुष्यातिर्यग्द्रुमघर्मजादयः ॥ यस्यावतारांशकलाविसर्जितान्व्रजामसर्वेशरणंतमव्ययम् २१ नयस्यवध्योनचरक्षणीयोनोपेक्षणीयादरणीयपक्षः ॥ अथापिसर्गस्थितिसंयमार्थंधत्तेरजःसत्त्वतमांसि काले २२ अयंतुतस्यस्थितिपालनक्षणःसत्त्वंजुषाणस्यभवायदेहिनाम् ॥ तस्माद्व्रजामःशरणंजगद्गुरुंस्वानांसनोधास्यतिशंसुरप्रियः २३ ॥ श्रीशुक उवाच ॥ इत्याभाष्यसुरान्वेधाःसहदेवैररिंदम ॥ अजितस्यपदंसाक्षाज्जगामतमसःपरम् २४ तत्रादृष्टस्वरूपायश्रुतपूर्वायवैविभो ॥ स्तुतिमब्रूतदैवीभिर्गीर्भिस्त्ववहितेंद्रियः २५ ॥ ब्रह्मोवाच ॥ अविक्रियंसत्यमनंतमाद्यंगुहाशयंनिष्कलमप्रतर्क्यम् ॥ मनोऽग्रयानंवचसाऽनिरुक्तंनमामहेदेववरंवरेण्यम् २६ विपश्चितंप्राणमनोधियात्मनामर्थेंद्रियाभासमनिद्रमव्रणम् ॥ छायातपौयत्रनगृध्रपक्षौतमक्षरंखंत्रियुगंव्रजामहे २७

मनसाहरिंस्मरन् देवानुवाच २० हेदेवाःअहंभवःयूयंमनुष्यादयश्चएतेसर्वेयस्यांशाःतंसर्वेशरणंव्रजाम किंच अयंकालःस्थितिपालनरूपोवर्ततेअतःतंजगद्गुरुंशरण्यंशर णंव्रजामः २१ २२ २३ ॥ श्रीशुकउवाच ॥ इतिब्रह्मासुरान्आभाष्यदेवैःसहभगवतःस्थानंजगाम २४ तत्रअदृष्टरूपायश्रुतपूर्वायगीर्भिःस्तुतिंअकरोत् २५ ॥ ब्रह्मो वाच ॥ हेईशअविक्रियंसत्यंअनंतंआद्यंगुहाशयंनिरुपाधिंअप्रतर्क्यंवचसाअनिरुक्तंदेववरंत्वांनमाम २६ २७

तथैवमविक्रियत्वादिभिःसर्वज्ञत्वादिभिश्चसत्यत्वंवरेण्यत्वंचोक्तम् । संसारचक्राधारत्वेनापितंदेवंप्रार्थयन्नाह । अजस्यजीवस्यचक्रंचक्रवद्वर्तमानंदेहादिअजयामाययाप्रेर्यमाणम् ( यतू ) यःअक्षोयस्यअदक्षंयदधिष्ठानमाहुःतंऋतंसत्यंप्रपद्ये ( संसारचक्रस्याश्रयभूतंसत्यंशरणंयामीत्यर्थः ) कथंभूतंचक्रम् । मनोमयंमनःप्रधानम् । दशेंद्रियाण्यपिपंचप्राणाश्चत्वेवंपंचदशअरायस्य । आशुशीघ्रवेगंत्रयोगुणानाभिरिवमध्येयस्य विद्युदिवचलं(नस्थिरम् ) अष्टौप्रकृतयोनेमयइवावरणानियस्य २८ सर्वजीवनियंतृत्वादिनाचवरिष्ठत्वमाह । यइति । यउपसुपर्णंजीवसमीपेतन्नियंतृत्वेनआसांचकारआस्तेस्म ‘ द्वासुपर्णासयुजासखायासमानंवृक्षंपरिषस्वजाते ’ इतिश्रुतेः । यद्वाभक्तरक्षार्थंगरुडस्योपरिउपविष्टइत्यर्थः । तर्हिदेहस्थत्वाद्भक्तरक्षणादिक्रियावेशाद्वाजीवसाम्यंस्यात् तत्राह । एकवर्णंज्ञानेकस्वरूपम् । तमसःप्रकृतेःपरम् । अलोकंअदृश्यम् ।अव्यक्तंनिर्विकल्पम् । अनंतपारंकालतोदेशतश्चापरिच्छिन्नम् । तद्ब्रह्मेवयः । अप्रच्युतस्वरूपत्वान्नजीवसाम्यम् । ‘तयोरन्यःपिप्पलंस्वाद्वत्त्यनश्नन्नन्योअभिचाकशीति’इतिविशेषश्रवणादित्यर्थः । अतएवयंधीराःयोगेनरथेनप्राप्तिसाधनेनउपासतेभजंतेतंनमामेत्युत्तरेणान्वयः २९ मायानियंतृत्वेनापिजीवसाम्यंपरिहरन्वरिष्ठत्वमाह । यस्यमायांकश्चनकश्चिदपिनातिवितर्तिनातिक्रामति । कथंभूतांजनोययामुह्यति । अर्थंचात्मस्वरूपंनतुवेद । निर्जितआत्माआत्मशक्तिर्मायातद्गुणाश्चयेनतम् ३० अर्थंनवेदेतियदुक्तंतत्प्रपंचयन्नाह । इमेवयंदेवाऋषयश्चयस्यप्रियतयातन्वासत्त्वेनसृष्टाअपिबहिश्चांतश्चसतामप्रकाशाम्यामाविःप्रकटामपिसूक्ष्मांगतिंनिरुपाधिस्वरूपंनाविद्म । इतरप्रधानारजस्तमोमयाःकुतोविदुःतंनमामेतिपूर्वेणैवान्वयः ३१ इदानींवैराजरूपेणस्तुवन्प्रार्थयतेपादौमहीतिद्वादशभिः । यत्रमह्यांजरायुजादिभूतसर्गःसामहीयस्यपादौ सनःप्रसीदतु । आत्मतंत्रःपादादिमत्त्वेपिनतरपरतंत्रः । कुतः । ब्रह्मअच्युतस्वरूपः । तत्कुतःमहतीविभूतिरैश्वर्यंयस्यसः ३२ उदारंवीर्यंशक्तिर्यस्यतदंभोयस्यरेतःसनःप्रसीदतु । उदारवीर्यतामाह । यतोऽम्भसोलोकादयःसिध्यंतिजायंते ३३ यःसोमोदेवानामंधःअन्नंअतएवबलमायुश्चनमानांवृक्षाणाम् प्रकर्षेणजनयतिवर्धयतीतिप्रजनःतंयस्यमनःसमामनंति । सनःप्रसीदतु ३४

अजस्यचक्रंत्वजयेर्यमाणंमनोमयंपंचदशारमाशु ॥ त्रिणाभिविद्युच्चलमष्टनेमियदक्षमाहुस्तमृतंप्रपद्ये २८ यएकवर्णंतमसःपरंतदलोकमव्यक्तमनंतपारम् ॥ आसांचकारोपसुपर्णमेनमुपासतेयोगरथेनधीराः २९ नयस्यकश्चातितितर्तिमायांययाजनोमुह्यतिवेदनार्थम् ॥ तंनिर्जितात्मात्मगुणंपरेशंनमामभूतेषुसमंचरंतम् ३० इमेवयंयत्प्रिययैवतन्वासत्त्वेनसृष्टाबहिरंतराविः ॥ गतिंनसूक्ष्मामृषयश्चविद्महेकुतोऽसुराद्याइतरप्रधानाः ३१ पादौमहीयंस्वकृतैवयस्यचतुर्विधोयत्रहिभूतसर्गः ॥ सवैमहापूरुषआत्मतंत्रःप्रसीदतांब्रह्ममहाविभूतिः ३२ अंभस्तुयद्रेतउदारवीर्यंसिध्यंतिजीवंत्युतवर्धमानाः ॥ लोकाह्यथोथाखिललोकपालाःप्रसीदतांब्रह्ममहाविभूतिः ३३ सोमंमनोयस्यसमामनंतिदिवौकसांवैबलमंधआयुः ॥ ईशोनगानांप्रजनःप्रजानांप्रसीदतांनःसमहाविभूतिः ३४

२८ २९ किंच यस्यतेमायांकश्चिदपिनातिकामति ययाजनोमुह्यति अतःआत्मस्वरूपंनवेदतंपरेशंत्वाननाम ३० हेदेवइमेदेवा.वयंयस्यतवसत्त्वेनसृष्टाअपिनिरुपाधिस्वरूपंत्वांनाविद्मः रजस्तमोमयाःदैत्याःनविदुरितिकिंवक्तव्यम् ३१ किंच यस्यपादौमही ३२ रेतः अंभः ३३ मनःसोमः ३४

अग्नियंस्यतुमुखंजातःकथंभूतःजातवेदोधर्मयस्मात् । क्रियाकांडंतस्मातिमायकर्मतन्नि मित्तंजन्मयस्य । अंतःसमुद्रेउदरमध्येस्वधा तून्पाकाहानेव अन्नादीन् अनुपचन्प्रसिद्धसमुद्रोपिवडवा नलरूपेणउदकान्येवानुपचन् ( तथाभूतो ) अग्निर्यस्यमुखंसः ३५ एषतरणिरादि त्योयस्यचक्षुरासीत् । कथंभूतःदेवयानंअर्चिरादिमार्गदेवता । त्रयीमयः ' सैषात्रय्येवविद्यातपति' इतिश्रुतेः । ब्रह्मणोधिष्ण्यंउपासनास्थानम् 'यएषोंतरादित्योहिरण्मयःपुरुषः' इति श्रुतेः । मुक्तेर्द्वारंदेवयानत्वात् । अमृतंचपुण्यलोकत्वात् । मृत्युश्चकालात्मकत्वात् । एवंभूतस्तरणि र्यस्यचक्षुःसनःप्रसीदतु ३६ सहआदिचर्मवानूचराचराणांप्राणोवायुर्यस्यप्राणादभूत्सः । यंप्राणंवयंबुद्ध्याद्यधिष्ठातारोदेवाःसंम्राजंभृत्याइव अन्वास्म अनुसृत्यस्थिताः । तत्र सहोमन सउत्साहः । बलंशारीरम् । ओजऐंद्रियम् ३७ खानिदेहगतानिछिद्राणिप्राणःपंचवृत्तिःइंद्रियाणिच आत्मामनश्च असवेोनामकूर्मादयःशरीरंचतेषांकेतंआश्रयभूतंखम् ( अंतरिक्षम् ) यस्यपुरुषस्यनाभ्याःप्रजज्ञेसः ३८ यस्यबलान्महेंद्रोजज्ञे । (त्रिदशादेवाः धिषणाबुद्धेः) छंदांसिऋषयश्चतेभ्यः । कःप्रजापतिः ३९ इतरःअधर्मः ४० विट्वैश्यःओजोनैपुण्यंतस्यवृत्तिश्च अंघ्रेरंघ्रिजइत्यर्थःअवेदशूद्रःवेदव्यतिरिक्तशुश्रूषादिवृत्तिरवेदःतद्वृत्तिमान्शूद्रइत्यर्थः । पाठांतरंसुगमम् ( ऊर्वोर्विडोजोंघ्रेरभवंश्चशूद्राइति ) ४१ उपरिउत्तरोष्ठात् । नस्तःनासिकातोघु तिर्द्युतिः । पशव्यःपशूनांहितःकामःस्पर्शेनाभूत् ४२

अग्निर्मुखंयस्यतुजातवेदाजातःक्रियाकांडनिमित्तजन्मा ॥ अंतःसमुद्रेऽनुपचन्स्वधातून्प्रसीदतांनःसमहाविभूतिः ३५ यच्चक्षुरासीत्तरणिर्देवयानंत्रयीमयोब्रह्मणएषधिष्ण्यम् ॥ द्वारंचमुक्तेरमृतंचमृत्युःप्रसीदतांनःसमहाविभूतिः ३६ प्राणादभूद्यस्यचराचराणांप्राणःसहोबलमोजश्चवायुः ॥ अन्वास्मसम्राजमिवानुगावयंप्रसीदतांनःसमहाविभूतिः ३७ श्रोत्राद्दिशोयस्यहृदश्चखानिप्रजज्ञिरेखंपुरुषस्यनाभ्याः ॥ प्राणेंद्रियात्मासुशरीरकेतंप्रसीदतांनःसमहाविभूतिः ३८ बलान्महेंद्रस्त्रिदशाःप्रसादान्मन्योर्गिरीशोधिषणाद्विरिंच्यः ॥ खेभ्यश्चछंदांस्यृषयोमेढ्रतः कःप्रसीदतांनःसमहाविभूतिः ३९ श्रीर्वक्षसःपितरश्छाययाऽऽसन्धर्मःस्तनादितरःपृष्ठतोऽभूत् ॥ द्यौर्यस्यशीर्ष्णोऽप्सरसोविहारात्प्रसीदतांनःसमहाविभूतिः ४० विप्रोमुखंब्रह्मचयस्यगुह्यंराजन्यआसीद्भुजयोर्बलंच ॥ ऊर्वोर्विडोजोंघ्रिरवेदशूद्रःप्रसीदतांनःसमहाविभूतिः ४१ लोभोऽधरात्प्रीतिरुपर्यभूद्द्युतिर्नस्तःपशव्यःस्पर्शेनकामः ॥ भ्रुवोर्यमःपक्ष्मभवस्तुकालःप्रसीदतांनःसमहाविभूतिः ४२

मुखम् अग्निः ३५ चक्षुःसूर्यः ३६ यस्यप्राणात्चराचराणांप्राणः अभूत् ३७ यस्यश्रोत्रात्दिशःहृदःइंद्रियाणिनाभ्याःखम्बलात्इंद्रः ३८ प्रसादाद्देवाःक्रोधाद्रुद्रः बुद्धेर्ब्रह्मा खेभ्यःवेदाऋषयश्च शिश्नात्प्रजापतिः ३९ श्रीःवक्षसःछायायाःपितरःस्तनात्धर्मःपृष्ठतःअधर्मःशीर्ष्णःद्यौःविहारादप्सरसः ४० यस्यमुखंविप्रः वेदाश्च यस्यभुजयोः क्षत्रंबलंच यस्यऊर्वोःवैश्यःवार्त्ताच यस्यांघ्रिजः शूद्रः शुश्रूषाच ४१ यस्याधरात्लोभः ऊर्ध्वोष्ठात्प्रीतिः नासिकायाद्युतिः स्पर्शेनकामः ४२

द्रव्यंभूतानि। वयःकालं। विशेषंलौकिकप्रपंचम्। यद्यस्मादुर्विभाव्यं प्रबुधापबाधंविद्वद्भिरपोह्यमानम्। पाठांतरेप्रबुधानांप्र.यत्नःयवबोधोयस्मिन्नित्यर्थः (एवंभूतम्)४३ तदेवंसप्रपंचंवपुरुक्त्वं विष्णुपंचमुपवर्णयन्प्रणमतिनमेति। वृत्तिभिर्दर्शनादिभिः। नमस्तान्नत्रायुस्तस्यैवक तेर्लीला(अंशरूपा)यस्य तस्मै ४४ तेसस्मितंमुखांबुजंदिदृक्षूणांनः अस्मच्चक्षुरादिकरणगोचरंयथा भवत्येवमात्मानंदर्शय ४५ भक्तेच्छानुवर्तित्वंचतवयद्गुणोदृष्टमेवेत्याह। तैस्तैरिति। यन्नोदुर्विषहमशक्यंकर्मतद्भवान्स्वयमेवकरोतिहि ४६ नचव.हिर्मुखानामिवस्वक्लृप्तानामस्मा कंस्वदर्पिता निकर्माणिविपरीतफलानिभवितुमर्हंतीत्याह। क्लेशोभूरियेषु अल्पंसारंफलंयेषु (तानिचतानि) यद्वा विफलान्येवसकामानांकर्माणि। त्वय्यर्पितंतुनैवतथा ४७ तत्रवैफल्यमुपपादयति। अवमःअल्पोपिकर्मकल्पःकर्माभासोपिईश्वरार्पितश्चेद्विफलायश्रमाय(अस्य)नकल्पते। हियस्मात्सएषईश्वरःपुरुषस्यात्मा अतएवदयितः(प्रियः)हितः (सुहृत्) नह्यात्मनिदयितेहितेचार्पितंनिष्फलंस्यात् ४८ अनंतफलत्वमाह। यथाहिमूलावसेचनंस्कंधानांशाखानांचभवति ४९ एवंसत्यपित्वदर्पितकर्मणांत्वद्भक्तानामस्माकंयन्निश्रितापिदंदुःखंतत्त्वमेवत्वेत्सीत्याशयेनाह। नमइति। दुर्वितर्क्याणिआत्मकर्माणिस्वभावचेष्टितानियस्यतस्मै (सत्वस्यायहृद्यत्रासिने) ५० ॥ इतिश्रीभागवतेमहापुराणेअष्टमस्कंधेटीकायांपंचमोध्यायः ॥ ५ ॥ षष्ठेपुनःस्तुतैर्विष्णादाविर्भूतेसुरैःकृता। तन्मंत्राच्चासुरैःसाकममृतार्थंमहोद्यमः ॥ १ ॥ सहस्राणांउदयेद्युतिरिवद्युतिर्यस्य १ महसातेजसाप्रतिहतानीक्षणानिचक्षूंषियेषाम् २

द्रव्यंवयःकर्मगुणान्विशेषंयद्योगमायाविहितान्वदंति ॥ यद्दुर्विभाव्यंप्रबुधापबाधंप्रसीदतांनःसमहाविभूतिः ४३ नमोस्तुतस्माउपशांतशक्तयेस्वाराज्यलाभप्रतिपूरितात्मने ॥ गुणेषुमायारचितेषुवृत्तिभिर्नसज्जमानायनभस्वदूतये ४४ सत्त्वंनोदर्शयात्मानमस्मत्करणगोचरम् ॥ प्रपन्नानांदिदृक्षूणांसस्मितंतेमुखांबुजम् ४५ तैस्तैःस्वेच्छाधृतैरूपैःकालेकालेस्वयंविभो ॥ कर्मदुर्विषहंयन्नोभगवांस्तत्करोतिहि ४६ क्लेशभूर्यल्पसाराणिकर्माणिविफलानिच ॥ देहिनांविषयार्तानांनतथैवार्पितंत्वयि ४७ नावमःकर्मकल्पोपिविफलायेश्वरार्पितः ॥कल्पतेपुरुषस्यैवसह्यात्मादयितोहितः ४८ यथाहिस्कंधशाखानांतरोर्मूलावसेचनम् ॥ एवमाराधनंविष्णोःसर्वेषामात्मनश्चहि ४९ नमस्तुभ्यमनंतायदुर्वितर्क्यात्मकर्मणे ॥ निर्गुणायगुणेशायसत्त्वस्थायचसांप्रतम् ५० ॥ इतिश्रीभागवतेमहापुराणेअष्टमस्कंधेपंचमोध्यायः ॥ ५ ॥ ॥ छ ॥ श्रीशुकउवाच ॥ ॥ एवंस्तुतःसुरगणैर्भगवान्हरिरीश्वरः ॥ तेषामाविरभूद्राजन्सहस्रार्कोदयद्युतिः १ तेनैवमहसासर्वेदेवाःप्रतिहतेक्षणाः ॥ नापश्यन्खंदिशःक्षोणीमात्मानंचकुतोविभुम् २

भ्रुवोःयमःपक्ष्मतःकालःएवंभूतः सःनःप्रसीदताम् ४२ किंच भूतानिकालंकर्मगुणान्लौकिकप्रपंचंचयस्य योगमायाविमोहितान्वदंतिसःमहाविभूतिःनःप्रसीदताम् ४३ एवंभूतःत्वंप्रपन्नानांनःआत्मानंदर्शय ४५ ४६ ४७ ४८ ४९ तेअनंतायनिर्गुणायपरेशायसांप्रतंसत्त्वस्थाय तुभ्यंनमः ५० ॥ ॥ इत्यष्टमेपंचमः ५ ॥ ॥ छ ॥ ॥ श्रीशुकउवाच ॥ हेराजन्सुरगणैःएवंस्तुतःभगवान्सहस्रार्कोदयद्युतिःआविरभूत् १ ततःशर्वेणसहब्रह्माऽऽविर्भूतांतनुं स्वच्छां मरकतश्यामां कंजगर्भारुणेक्षणाम् १

तामाविर्भूतांतनुंविरिंचशोदृष्ट्वातुष्टावेतिपंचमेनान्वयः । कंजगर्भवदरुणेईक्षणेयस्याः ३ तप्तहेमवदवदातेनपीतेनलसताकौशेयेनवाससायुक्ताम् । प्रसन्नानिचारूणिसर्वाण्यंगानियस्याः । शोभनंमुखंयस्याः । सुंदरेभ्रुवौयस्याः ४ महांतोमणयोयस्मिन्तेनाकिरीटेन । कर्णाभरणेकुंडलेताभ्यांनिर्भातौयौकपोलौताभ्यांश्रीर्मुखांबुजेयस्याः ५ कौस्तुभमाभरणंकंठेयस्याः लक्ष्मींवक्षसिबिभ्रतीम् ६ वेदप्रवरोब्रह्मा । सर्वामरैर्वाग्निगतैः साष्टांगंप्रणतैः ७ अनाविराविरासेयंनोभूताऽभूदितिब्रुवन् । ब्रह्माभिमैतिनित्यस्यत्विभूतेर्भगवत्तनोः ॥ १ ॥ श्रीमूर्तेस्त्व आविर्भावएवनत्वस्मदादिवज्जन्मादिववास्तीत्याह । नजाताजन्मादयोयस्य । कुतः । अगुणाय । अतोनिर्वाणसुखस्यार्णवाय । अपारमोक्षसुखरूपायेत्यर्थः । तथापिअणोरण्याभि म्नेअतिसूक्ष्माय । दुर्ज्ञानत्वात् । वस्तुतस्तु अपरिगण्यंइयत्तातीतंधाममूर्तिर्यस्यतस्मै । नचैतदसंभावितंयतःमहानचिंत्योऽनुभावोयस्य ८ तन्मूर्तेःसनातनत्वंअपरिमेयत्वंचोपपादयति । रूपमिति । हेपुरुषर्षभहेधातःएतत्तवरूपंवैदिकेनतांत्रिकेणचयोगेनउपायेनश्रेयोर्थिभिःसदाईज्यंपूज्यंअतोनेदमिदानीमपूर्वंजातमितिभावः । ननुयूयंदेवाःपूज्यत्वेनप्रसिद्धाःसत्यंसर्वेप्यत्रै वांतर्भूताइत्याह । उअहोहस्फुटम् । अमुष्मिंस्त्वयिनोऽस्मांस्त्रिलोकांश्चसहपश्यामि । तत्रहेतुः । विश्वंमूर्तौयस्य । अतस्त्वेतद्रूपंपरिच्छिन्नमपिअपरिच्छिन्नमेवेतिभावः ९ विश्वमूर्ति त्वमेवाह । त्वयीति । घटस्यमृत्तिकायथाआदिरंतश्चमध्यंचतथात्वमस्यजगतः । तत्रहेतुः । परस्मात्प्रधानादपिपरः १० मृत्तिकादृष्टांतेनप्राप्तंपरिणामंवारयति । त्वमिति । स्वया स्वाधीनयाअतएवगुणानांव्यवायेपरिणामेप्यगुणमेवत्वांयुक्ताःपश्यंति मनीषिणोविवेकिनः विपश्चितःशास्त्रज्ञाः ११

विरिंच्योभगवान्दृष्ट्वासहशर्वेणतांतनुम् ॥ स्वच्छांमरकतश्यामांकंजगर्भारुणेक्षणाम् ३ तप्तहेमावदातेनलसत्कौशेयवाससा ॥ प्रसन्नचारुसर्वांगींसुमुखीं सुंदरभ्रुवम् ४ महामणिकिरीटेनकेयूराभ्यांचभूषिताम् ॥ कर्णाभरणनिर्भातकपोलश्रीमुखांबुजाम् ५ कांचीकलापवलयहारनूपुरशोभिताम् ॥ कौस्तु भाभरणांलक्ष्मींबिभ्रतींवनमालिनीम् ६ सुदर्शनादिभिःस्वास्त्रैर्मूर्तिमद्भिरुपासिताम् ॥ तुष्टावदेवप्रवरःसशर्वःपुरुषंपरम् ॥ सर्वामरगणैःसाकंसर्वांगैरवनिं गतैः ७ ॥ ब्रह्मोवाच ॥ अजातजन्मस्थितिसंयमायागुणायनिर्वाणसुखार्णवाय ॥ अणोरणिम्नेऽपरिगण्यधाम्नेमहानुभावायनमोनमस्ते ८ रूपंतवैत त्पुरुषर्षभेज्यंश्रेयोर्थिभिर्वैदिकतांत्रिकेण ॥ योगेनधातःसहनस्त्रिलोकान्पश्याम्यमुष्मिन्नुहविश्वमूर्तौ ९ त्वय्यग्रआसीत्त्वयिमध्यआसीत्त्वय्यंतआसीदिदमा त्मतंत्रे ॥ त्वमादिरंतोजगतोस्यमध्यंघटस्यमृत्स्नेवपरःपरस्मात् १० त्वंमाययात्माश्रययास्वयेदंनिर्मायविश्वंतदनुप्रविष्टः ॥ पश्यंतियुक्तामनसामनी षिणोगुणव्यवायेप्यगुणंविपश्चितः ११

वस्त्राभरणैःयुतां ३ ४ ५ ६ मूर्तिमद्भिःसुदर्शनादिभिःउपासितांतांभगवत्तनुंदृष्ट्वासशर्वोब्रह्मापरंपुरुषंतुष्टाव ७ हेईशअजातजन्मस्थितिसंयमायनिर्गुणायअपारमोक्ष सुखरूपायअपरिमितधाम्नेमहानुभावायतुभ्यंनमोनमः ८ हेदेवइदंतवरूपंपूज्यम् ९ अमुष्मिन्त्वयिअस्मान्त्रिलोकांश्चसहपश्यामि किंच इदंविश्वंआदिमध्यांतेषुत्वय्ये वआसीत् १० अरयाद्यंतादिस्त्वमेव त्वंविश्वंनिर्मायतत्रप्रविष्टोऽसि ११

एतदेवसदृष्टांतमाह । यथाग्निंकाष्ठेमथनेन । अमृतमाज्यंगोषुदोहनादिना । भुविअन्नंव्रीह्यादिकर्षणादिना । अंबुखननेन । उद्यमने पुरुषकारेवाणिज्यादिनावृत्तिंजीविकाम् । यद्वाअंबु उद्यमनेघटीयंत्रादिनोद्धरणे । योगैरुपायैर्मनुष्याअधियंतिप्राप्नुवंति । तथाकवयस्त्वांबुद्ध्यागुणेष्वधियंतिवदंतिच १२ हेनाथहेसरोजनाभ अतिचिरादीप्सितमर्थतंयोगैकप्राप्यंत्वांसम्य गुज्जिहानंआविर्भवंतंप्रत्यक्षतोदृष्ट्वाऽद्यवयंनिर्वृतिंसुखंगताः । दवार्तादावाग्निपीडिताः १३ यद्विधेयंतत्कथयेतिचेत्तत्राह सइति हेअंतरात्मन् अशेषसाक्षिणस्तेअस्माभिर्विज्ञाप्यं किंवास्ति १४ यूयमेवकिंचित्कुरुतेतिचेत्तत्राह । अहमिति । अग्नेःकेतवोविस्फुलिंगाइवतेत्वत्तोवयंपृथग्विभाताः संतःआत्मनश्चश्रेयःकिंविद्मःअतस्त्वमेवाद्विजानांदेवानांचमंत्रांकिंचित्त्व इदंकुरुतेत्युपायमुपदिशेत्यर्थः१५ (तत्)हृदयंमंत्र उपदेष्टव्यइत्यभिप्रेतंयथातथैवविज्ञायजगाद । संवृतानिनियमितानिसर्वाणिकारकाणिक्रियाणियैस्तान् १६ ईश्वरस्यापितदेवाभिप्रेतवि त्याह । (सुरेश्वरोभगवान्)एकएवेश्वरःसमर्थो-(पिसुरासुरैःसहविहर्तुकामस्तानाह) १७ हेसुराःहेमंधर्वाहयोग्येषदेवाः १८ वःआत्मनःस्वतोयावद्भवोवृद्धिर्भवति १९ अर्थस्यप्रयोजनस्यअ र्थासिद्धिप्राधेःततःपश्चादहिमूषकवद्व्यघातकभावेनवर्तितव्यमितिशेषः । यद्वा (सर्पग्राहिणा) पेटिकांयांनिरुद्धोहिर्यथानिर्गमद्वारांविधानार्थंप्रथमंमूषकेणसंधिंविधत्तेपश्चात्तमेवकवलीकर क्षयतितथार्थमार्गार्थप्रवृत्तेःप्रथमंसंधेयाइत्यर्थः २०

यथाग्निमेधस्यमृतंचगोषुभुव्यन्नमंबूद्यमनेचवृत्तिम् ॥ योगैर्मनुष्याअधियंतिहित्वांगुणेषुबुद्ध्याकवयोवदंति १२ तंत्वावयंनाथसमुज्जिहानंसरोजनाभाति चिरेप्सितार्थम् ॥ दृष्ट्वागतानिर्वृतिमद्यसर्वेगजादवार्ताइवगांगमंभः १३ सत्वंविधत्स्वाखिललोकपालावयंयदर्थास्तवपादमूलम् ॥ समागतास्तेबहिरंत रात्मन्किंवान्यविज्ञाप्यमशेषसाक्षिणः १४ अहंगिरित्रश्चसुरादयोयेदक्षादयोऽग्नेरिवकेतवस्ते ॥ किंवाविदामेशपृथग्विभाताविधत्स्वशंनोद्विजदेवमंत्रम् १५ ॥ श्रीशुकउवाच ॥ एवंविरिंच्यादिभिरीडितस्तद्विज्ञायतेषांहृदयंतथैव ॥ जगादजीमूतगभीरयागिराबद्धांजलीन्संवृतसर्वकारकान् १६ एकएवे श्वरस्तस्मिन्सुरकार्येसुरेश्वरः ॥ विहर्तुकामस्तानाहसमुद्रोन्मथनादिभिः १७ ॥ श्रीभगवानुवाच ॥ हंतब्रह्मन्नहोशंभोहेदेवाममभाषितम् ॥ शृणुताव हिताःसर्वेश्रेयोवःस्याद्यथासुराः १८ यातदानवदैतेयैस्तावत्संधिर्विधीयताम् ॥ कालेनानुगृहीतैस्तैर्यावद्वोभवआत्मनः १९ अरयोपिहिसंधेयाःसतिकार्य र्थगौरवे ॥ अहिमूषकवद्देवाह्यर्थस्यपदवींगतैः २०

हेकमलनाभ एवंभूतंत्वांदृष्ट्वाअद्यवयंनिर्वृतिंगताः १२ १३ किंच वयंतेपादमूलंयदर्थंप्राप्ताःत्वंतुत्वंविधत्स्व हेअंतरात्मन्अशेषसाक्षिणःतेअन्यैःविज्ञाप्यंकिमस्ति १४ हे ईशाअहंशिवःसुरादयश्चअग्नेःविस्फुलिंगाइवत्वत्तःवयंपृथक् विभाताःसंतःआत्मनःश्रेयःकिंविद्मःअपितुन अतःदेवानांद्विजानांचइदंकुरुतेत्युपायमुपदिश १५ ॥ श्रीशुक उवाच ॥ एवंविरिंच्यादिभिःईडितःभगवान् तेषामभिप्रेतंज्ञात्वाबद्धांजलीन् तान्मेघगंभीरयावाचाजगाद १६ १७ ॥ श्रीभगवानुवाच ॥ हेब्रह्मन्हेशंभोहेदेवाःममभा
१२१ षणंशृणुत १८ वःश्रेयःयथास्यात् यूयंयात वःयावत्वृद्धिःस्यात् तावत्कालानुगृहीतैःदानवदैतेयैःसहसंधिर्विधीयताम् १९ किंच हेदेवाः आदौस्वकार्यार्थगौरवेअर योऽपिसंधेयाः पश्चात्अहिमूषकवत्वर्तितव्यम् २०

ततस्तैःसहयत्कार्यंतदाह । अमृतोत्पादनइति । यस्यामृतस्यपीतस्यसतः २१ नेत्रंरज्जुम् २२ ननुतर्हितेप्यमृतपानेनामराः स्युस्तत्राह क्लेशभाजइति २३ बलिभिःसहकारिभिःसाध्या
अर्थास्तदनुसरणंविनानसिध्यंतीतिकृत्वाक्षमादिकमुपदिशति । यूयमितिद्वाभ्यां । हेसुराःसंरंभेणद्वेषेण । सांत्वयासाममार्गेणयथासिध्यंति २४ वस्तुषुमथनादुत्पन्नेषु ( वःयुष्माभिःलो
मादयोनकार्याःअत्रलोभोऽसंतोषः ) २५ २६ सुरास्तुबलिमुपेयुःउपजग्मुः २७ असंयत्तानयुद्धोद्यतानपिदृष्ट्वा । श्लोक्यःकीर्त्यर्हः २८ वैरोचनिंबलिं । जितमशेषंत्रैलोक्यंयेनतम् २९
तत्सर्वममृतोन्मथनादि ३० तत्रअन्येयेअसुराधिपाःपौलोमकालेयादयःशंबरादयश्चतेभ्यश्चारोचत ३१ संविदंसमयम् ३२ परिघाइवबाहवोयेषां ३३ ( विजहुस्तत्यजुः ) ३४

अमृतोत्पादनेयत्नःक्रियतामविलंबितम् ॥ यस्यपीतस्यवैजंतुर्मृत्युग्रस्तोऽमरोभवेत् २१ क्षिप्त्वाक्षीरोदधौसर्वावीरुत्तृणलतौषधीः ॥ मंथानंमंदरंकृत्वानेत्रंकृत्वातुवासुकिम् २२ सहायेनमयादेवानिर्मंथध्वमतंद्रिताः ॥ क्लेशभाजोभविष्यंतिदैत्यायूयंफलग्रहाः २३ यूयंतदनुमोदध्वंयदिच्छंत्यसुराःसुराः ॥ नसंरंभेणसिध्यंतिसर्वेर्थाःसांत्वयायथा २४ नभेतव्यंकालकूटाद्विषाज्जलधिसंभवात् ॥ लोभःकार्योनवोजातुरोषःकामस्तुवस्तुषु २५ ॥ श्रीशुकउवाच ॥ इतिदेवान्समादिश्यभगवान्पुरुषोत्तमः ॥ तेषामंतर्दधेराजन्स्वच्छंदगतिरीश्वरः २६ अथतस्मैभगवतेनमस्कृत्यपितामहः ॥ भवश्चजग्मतुःस्वंस्वंधामोपेयुर्बलिंसुराः २७ दृष्ट्वारीनप्यसंयत्तान्जातक्षोभान्स्वनायकान् ॥ न्यषेधद्दैत्यराट्श्लोक्यःसंधिविग्रहकालवित् २८ तेवैरोचनिमासीनंगुप्तंचासुरयूथपैः ॥ श्रियापरमयाजुष्टंजिताशेषमुपागमन् २९ महेंद्रःश्लक्ष्णयावाचासांत्वयित्वामहामतिः ॥ अभ्यभाषततत्सर्वंशिक्षितंपुरुषोत्तमात् ३० तदरोचतदैत्यस्यतत्रान्येयेऽसुराधिपाः ॥ शंबरोऽरिष्टनेमिश्चयेचत्रिपुरवासिनः ३१ ततोदेवासुराःकृत्वासंविदंकृतसौहृदाः ॥ उद्यमंपरमंचक्रुरमृतार्थेपरंतप ३२ ततस्तेमंदरगिरिमोजसोत्पाट्यदुर्मदाः ॥ नदंतउदधिंनिन्युःशक्ताःपरिघबाहवः ३३ दूरभारोद्वहश्रांताःशक्रवैरोचनादयः ॥ अपारयंतस्तंवोढुंविवशाविजहुःपथि ३४

किंच अमृतोत्पादनेशीघ्रंयत्नःक्रियताम्यस्यपीतस्यसतःमृत्युग्रस्तोऽपिजंतुःअमरोभवेत् २१ इतिकर्तव्यतामाह हेदेवाः क्षीरोदे वीरुत्तृणलतौषधीःक्षिप्त्वामंदरंमंथानंवासुकिंरज्जुंचकृत्वा २२ मयासहायेननिर्मंथध्वम् एवंकृतेदैत्याःक्लेशभागिनःभविष्यंति यूयंफलभागिनोभविष्यथ २३ असुराःयत्यत्इच्छंति ततत्तदनुमोदध्वम् हेसुराःसर्वेअर्थाः
यथासाममार्गेणसिध्यंतितथासंरंभेणन २४ किंचजलधिभवात्विषात्नभेतव्यम् तथामथनादुत्पन्नेषुवस्तुषुकामरोषलोभाःनकार्याः २५ ॥ श्रीशुकउवाच ॥ एवंभगवान्देवानादिश्यअंतर्दधे २६ अथभगवतेनमस्कृत्यब्रह्माभवश्चस्वंस्वंधामजग्मतुः ततोदेवाःबलिमुपजग्मुः २७ तदाशस्त्रादिरहितानपिदेवान्दृष्ट्वातथास्वनायकान्जातक्षोभान्दृष्ट्वा
श्लोक्यःदैत्यराट्संधिविग्रहकालवित्दैत्यान्न्यषेधत् २८ देवाःबलिंउपागमन् महेंद्रः बलिंसांत्वयित्वापुरुषोत्तमात् शिक्षितंअभाषत २९ ३० तत्वचःबलेःअन्येषां
शंबरारिष्टादीनांचअरोचत ३१ ततोदेवासुरा मिथःसमयंकृत्वाअमृतार्थेउद्यमंचक्रुः ३२ ततस्तेमंदरगिरिंउत्पाट्यअब्धिंनिन्युः ३३ शक्रवैरोचनादयःतंवोढुंअसमर्थाःश्रांताःसंतःअद्रिं पथि विजहुः ३४

३५ ( बभूव आविर्भूतः ) ३६ ( यथापूर्वं व्रणरहितान् ) ३७ ३८ ( पततां पक्षिणां ) विसर्जितः प्रस्थापितः । सुपर्णे तत्र स्थिते वासुकेरागमनायोगात् इति भावः ३९ ॥ ॥ इतिश्रीभाग
वतेमहापुराणेअष्टमस्कंधेटीकायांमंदराचलानयनंनामषष्ठोऽध्यायः ॥ ६ ॥ ॥ ७ ॥ सप्तमेमथनोद्भूतविषपीत्याऽखिलेजनेः । स्तुतःसन्कृपयाचक्रेरूपपौविषमितीर्यते ॥ १ ॥ फलभागे
नतत्राप्यमृतभागोभविष्यतीतिसंमन्त्र्यतेसुरासुरावासुकिंनेत्रंरज्जुभूतंगिरौपरिवीयसंवेष्ट्यअब्धिममथितुमारेभिरे ( यत्तायत्नवंतः ) १ वासुकेर्मुखंतदीयंदैत्यान्ग्राहयितुमेवहरिःपूर्वंपुरस्तान्मुखं
जगृहे (इत्यर्थः) २ (अहेःसर्पस्य) ३ ( सामरःअमरैःसह ) ४ (कृतोधारपस्थानविभागोयैः) ५ (अपोविशत्जलमध्येप्रविष्टः)६ दैवेनहेतुनास्वपौरुषेनष्टेसति (सुतरांनिर्विण्णमनसः)७

निपतन्सगिरिस्तत्रबहूनमरदानवान् ॥ चूर्णयामासमहताभारेणकनकाचलः ३५ तांस्तथाभग्नमनसोभग्नबाहूरुकंधरान् ॥ विज्ञायभगवांस्तत्रबभूवगरुड
ध्वजः ३६ गिरिपातविनिष्पिष्टान्विलोक्यामरदानवान् ॥ ईक्षयाजीवयामासनिर्जरान्निर्व्रणान्यथा ३७ गिरिंचारोप्यगरुडेहस्तेनैकेनलीलया ॥ आरु
ह्यप्रययावब्धिंसुरासुरगणैर्वृतः ३८ अवरोप्यगिरिंस्कंधात्सुपर्णःपततांवरः ॥ ययौजलांतउत्सृज्यहरिणासविसर्जितः ३९ ॥ ॥ इतिश्रीभागवतेमहापुराणे
अष्टमस्कंधेमंदराचलानयनंनामषष्ठोऽध्यायः ६ ॥ ७ ॥ ७ ॥ श्रीशुकउवाच ॥ तेनागराजमामंत्र्यफलभागेनवासुकिम् ॥ परिवीयगिरौतस्मिन्नेत्र
मब्धिंमुदान्विताः ॥ आरेभिरेसुरायत्ताअमृतार्थंकुरूद्वह १ हरिःपुरस्ताज्जगृहेपूर्वंदेवास्ततोऽभवन् ॥ तेनैच्छन्दैत्यपतयोमहापुरुषचेष्टितम् २ नगृह्णीमो
वयंपुच्छमहेरंगममंगलम् ॥ स्वाध्यायश्रुतसंपन्नाःप्रख्याताजन्मकर्मभिः ३ इतितूष्णींस्थितान्दैत्यान्विलोक्यपुरुषोत्तमः ॥ स्मयमानोविसृज्याग्रंपुच्छं
जग्राहसामरः ४ कृतस्थानविभागास्तएवंकश्यपनंदनाः ॥ ममंथुःपरमायत्ताःअमृतार्थंपयोनिधिम् ५ मथ्यमानेऽर्णवेसोऽद्रिरनाधारोह्यपोऽविशत् ॥
ध्रियमाणोऽपिबलिभिर्गौरवात्पांडुनंदन ६ तेसुनिर्विण्णमनसःपरिम्लानमुखश्रियः ॥ आसन्स्वपौरुषेनष्टेदैवेनातिबलीयसा ७

सःकनकाचलःतत्रनिपतन्भारेणदेवादीन्चूर्णयामास ३५ ततःभग्नमनसःभग्नबाहूरुकंधरान्देवासुरान्विज्ञायतत्रगरुडध्वजोभगवान्आविर्भूत्वा ३६ गिरिपातविनिष्पि
ष्टान् अमरादीन्विलोक्यईक्षयाजीवयामास ३७ ततःएकहस्तेनगिरिंगरुडेआरोप्यस्वयंचआरुह्यसुरादीभिःसहअब्धिंययौ ३८ सुपर्णःगिरिंस्कंधात्अवरोप्यजलांतेउत्सृ
ज्यहरिणाप्रस्थापितःययौ ३९ ॥ इत्यष्टमेषष्ठः ६॥ श्रीशुकउवाच ॥ तेदेवाःफलभागेननागराजंआमंत्र्यतंगिरौसंवेष्ट्यचअमृतार्थंअब्धिंमथितुंआरेभिरे १ तत्रदेवैःसहहरिःमु
खंजगृहे २ तत्भगवच्चेष्टितंदैत्यपतयःनेच्छन् ३ हेदेवाःस्वाध्यायश्रुतसंपन्नाःजन्मकर्मभिःप्रख्याताःवयंअहेः इदंअमंगलंपुच्छंनगृह्णीमःएवंउक्त्वातूष्णींस्थितान्दैत्यान्
विलोक्य ४ सामरःहरिःपुच्छंजग्राहएवंकृतस्थानविभागास्तेपयोनिधिंममंथुः ५ एवंअर्णवेमथ्यमानेसतिबलिभिर्ध्रियमाणोऽपिअद्रिःअनाधारःसन्गुरुत्वात् अपआविशत् ६
ततःतेस्वपौरुषेनष्टेसतिखिन्नाःबभूवुः ७

विघ्नेशस्याविधिंतेनरचितंविघ्नम् । अवितथःसत्यःअभिसंधिःसंकल्पोयस्य ( काच्छपंकौर्मं) ८ लक्षयोजनंप्रस्तारोविस्तारोऽस्यास्तीतितथा तेनपृष्ठेन ( सककच्छपःअपरोजंबुद्वीपइव ) ९
(अंगहेराजन् ) तस्यगिरेरावर्तनंभ्रमणंअंगकंडूयनंमेने १० आसुरेणअसुराकारेणदैवेनदेवाकारेणरूपेण ( देवसमूहान् । नागेंद्रंवासुकिंअबोधरूपःतिर्यग्रूपः ) आविशत् ११ ( सहस्र
बाहुःश्रीहरिरन्योगिरिराडिवहस्तेनमंदरमाक्रम्यउपरितस्थौ । सुमनोभिरभिवृष्टः ) १२ ( उपरिसहस्रबाहुरूपेण अधःकूर्मरूपेण) आत्मनिदेवदैत्यमध्ये( तत्तदाकारेण )गोत्रेंद्रेदार्ढ्यरू
पेण नेत्रे ( नागेंद्रे ) अमेयाबोधरूपेण (प्राविशतप्रकर्षेणआसमंताद्विशत्) परेणहरिणा (समेधितास्तेममंथुः) क्षोभितंनक्राणांचक्रंसमूहोयस्मिन् १३ दशश्वमुखानिश्वासश्चअहीं
द्रस्यसाहस्रंअपरिमिताःकठोरायेदृगादयस्तेभ्योनिर्गताभ्यांअग्निधूमाभ्यांआहतंवर्चोयेषांतेसरलादुमविशेषाः १४ देवांस्तुभगवदधीनामेघाःसमभ्यवर्षन् । समुद्रोर्मिभिरुपगूढाश्च
यवश्चशीतलावायुर्वातिस्म । कथंभूतान्तस्याहींद्रस्यश्वासशिखाग्निभिर्हतप्रभायेषाम् । धूम्राण्यंबरादीनियेषाम् १५ १६

विलोक्यविघ्नेशविधिंतदेश्वरोदुरंतवीर्योऽवितथाभिसंधिः ॥ कृत्वावपुःकाच्छपमद्भुतंमहत्प्रविश्यतोयंगिरिमुज्जहार ८ तमुत्थितंवीक्ष्यकुलाचलंपुनः
समुद्यतानिर्मथितुंसुरासुराः ॥ दधारपृष्ठेनसलक्षयोजनप्रस्तारिणाद्वीपइवापरोमहान् ९ सुरासुरेंद्रैर्भुजवीर्यवेपितंपरिभ्रमंतंगिरिमंगपृष्ठतः ॥ बिभ्रत्तदा
वर्तनमादिकच्छपोमेनेऽङ्गकंडूयनमप्रमेयः १० अथासुरानाविशदासुरेणरूपेणतेषांबलवीर्यमीरयन् ॥ उद्दीपयन्देवगणांश्चविष्णुर्दैवेननागेंद्रमबोधरू
पः ११ उपर्यगेंद्रंगिरिराडिवान्यआक्रम्यहस्तेनसहस्रबाहुः ॥ तस्थौदिविब्रह्मभवेंद्रमुख्यैरभिष्टुवद्भिःसुमनोभिवृष्टः १२ उपर्यधश्चात्मनिगोत्रनेत्रयोः
परेणतेप्राविशतासमेधिताः ॥ ममंथुरब्धिंतरसामदोत्कटामहाद्रिणाक्षोभितनक्रचक्रम् १३ अहींद्रसाहस्रकठोरदृङ्मुखश्वासाग्निधूमाहतवर्चसोसुराः ॥
पौलोमकालेयबलील्वलादयोदवाग्निदग्धाःसरलाइवाभवन् १४ देवांश्चतच्छ्वासशिखाहतप्रभान्धूम्रांबरस्रग्वरकंचुकाननान् ॥ समभ्यवर्षन्भगवद्वशाघना
वुःसमुद्रोर्म्युपगूढवायवः १५ मथ्यमानात्तथासिंधोर्देवासुरवरूथपैः ॥ यदासुधानजायेतनिर्ममंथाजितःस्वयम् १६

तदाईश्वरःविघ्नेशकृतंविघ्नंविलोक्यकाच्छपंवपुःकृत्वातोयंप्रविश्यगिरिंउज्जहार ८ एवंकृतेतंगिरिंउत्थितंवीक्ष्यतेमथितुंपुनःउत्थिताःतदाभगवान्लक्षयोजनविस्तृतपृष्ठेनअ
द्रिंदधार ९ ततः सुरासुरेंद्राणांभुजवीर्यकंपितंपृष्ठभ्रमंतंगिरिंकच्छपः अंगकंडूयनंमेने १० ११ यदामथनसमयेगिरिःउपर्युपरिअगात् तदाभगवान् अन्यरूपंधृत्वासहस्र
बाहुस्सन्अद्रिंआक्रम्यब्रह्मभवेंद्रमुख्यैःस्तुतःगिरौतस्थौ १२ ततःउपरिअधश्चदेवदैत्यमध्येगोत्रनेत्रयोःप्रविशतापरेणतेसमेधिताःअब्धिंममंथुः १३ तदाअहींद्रसाहस्रकठो
रदृङ्मुखश्वासाग्निधूमाहतवर्चसःदैत्याः अभवन् १४ किंच तच्छ्वासशिखाहतप्रमान्धूम्रांबरस्रग्वरकंचुकाननान्देवांश्चभगवद्वशाघनाःअभ्यवर्षन्वायुश्चववौ १५ एवंतैः
मथ्यमानेयदासुधानजायततदाभगवान्स्वयंममंथ. १६ 

धृतोऽद्रिर्येनसभगवान्परमपुरुषोऽनंतरमशोभतेत्यन्वयः । कथंभूतः । कनकपरिधिःपीतवासाः (कनकमेखलोवा) कर्णयोर्विद्योतमानाविद्युत्कुंडललक्षणायस्य । तथामूर्ध्निभ्राजंतोविलुलिताः
कचायस्यसतथा । जैत्रैर्जिष्णुभिःदंदशूकंसर्पं(मथ्नामंदराख्येनमंथन्)प्रतिगिरिः प्रतिद्वंद्वीपर्वत (इव) १७ हालहलमित्याह्वानामयस्य । संभ्रांतामीनाउन्नतामकरादयश्चयस्मिन्वस्मा
त्तिमयोमत्स्यास्तदादिभिराकुलाच्च (तत्रद्विपाजलहस्तिनः) तद्विषंअप्रतिअप्रतिमम् । प्रतिक्रियाशून्यमितिवा १८ (अप्रतिमत्वमेवाह) । उग्रोवेगोयस्य । अतएवसर्वासुदिक्षुविसर्पत्
विसारि । यद्वाउग्रावेमारोमांचस्वेदादयोयस्मात् । अतएवासह्यवीर्यंविलोक्यभीताअन्येनकेनाप्यरक्ष्यमाणाःसदाशिवंशरणंदुद्रुवुःजग्मुः १९ त्रिलोक्यामवायउद्भवायदेव्यासहअद्रौ
कैलासेआसीनंतथापिमुनीनामभिमतंतेषामेवापवर्गायतपोजुषाणम् २० निर्गुणंसगुणंचैवशिवंहरिपराक्रमैः । स्तुवंतश्चप्रजेशानानामन्यंतांतरंतयोः ॥ १ ॥ २१ २२ नन्वेवंभूतोविष्णुरि
तिप्रसिद्धंतत्राहुःगुणमय्येति । अस्यजगतोयदासर्गादीन्धत्सेतदाहेभूमन्स्वदृक्स्वतःसिद्धज्ञानःत्वंब्रह्मादिसंज्ञांधत्से २३ तत्रहेतुःत्वंब्रह्मेति । सदसतोभावान्देवतिर्यगादिरूपान्भावयती
तितथा । सृज्यंवुत्वव्यतिरिक्तंनास्तीत्याहुः । आत्मेवत्वंनानाशक्तिभिर्जगद्रूपेणआभातःयस्मादीश्वरः २४

मेघश्यामःकनकपरिधिःकर्णविद्योतविद्युन्मूर्ध्निभ्राजद्विलुलितकचःस्रग्धरोरक्तनेत्रः ॥ जैत्रैर्दोर्भिर्जगदभयदैर्दंदशूकंगृहीत्वामथ्नन्मथ्नाप्रतिगिरिरिवाशोभ
ताथोद्धृताद्रिः १७ निर्मथ्यमानादुदधेरभूद्विषंमहोल्बणंहालहलाह्वमग्रतः ॥ संभ्रांतमीनोन्मकराहिकच्छपात्तिमिद्विपग्राहतिमिंगिलाकुलात् १८ तदुग्र
वेगंदिशिदिश्युपर्यधोविसर्पदुत्सर्पदसह्यवीर्यम् ॥ भीताःप्रजादुद्रुवुरंगसेश्वराअरक्ष्यमाणाःशरणंसदाशिवम् १९ विलोक्यतंदेववरंत्रिलोक्याभवायदेव्या
भिमतंमुनीनाम् ॥ आसीनमद्रावपवर्गहेतोस्तपोजुषाणंस्तुतिभिःप्रणेमुः २० ॥ प्रजापतयऊचुः ॥ देवदेवमहादेवभूतात्मन्भूतभावन ॥ त्राहिनःशर
णापन्नांस्त्रैलोक्यदहनाद्विषात् २१ त्वमेकःसर्वजगतईश्वरोबंधमोक्षयोः ॥ तंत्वामर्चंतिकुशलाःप्रपन्नार्तिहरंगुरुम् २२ गुणमय्यास्वशक्त्याऽस्यसर्गस्थि
त्यप्ययान्विभो ॥ धत्सेयदास्वदृग्भूमन्ब्रह्मविष्णुशिवाभिधाम् २३ त्वंब्रह्मपरमंगुह्यंसदसद्भावभावनः ॥ नानाशक्तिभिराभातस्त्वमात्माजगदीश्वरः २४

तदामेघश्यामःपीतवासाःस्रग्धरःरक्तनेत्रःहरिःदोर्भिःदंदशूकंगृहीत्वामन्थन्पर्वतइवअशोभत १७ ततःमथ्यमानात्उदधेःहालाहालाह्वंविषमभूत् १८ तत्उग्रवेगंदिशिदि
शिउपर्यधःविसर्पत् असह्यवीर्यंदृष्ट्वासेश्वराःप्रजाःभीताःसत्यःकेनापिअरक्ष्यमाणाःशिवंशरणंजग्मुः १९ अद्रौआसीनंतंविलोक्यस्तुतिभिःप्रणेमुः २० ॥ प्रजापतयऊ
चुः ॥ हेदेवदेव हेभूतभावनअस्मात्त्रैलोक्यदहनात्विषात्नःत्राहि २१ हेईशसर्वजगतःबंधमोक्षयोःईश्वरःत्वंएकएव २२ किंच गुह्यंपरंब्रह्मत्वमेव यदाचसर्गादीन्कर्तु
मिच्छसितदागुणमय्यास्वशक्त्याब्रह्मविष्णुशिवाभिधांधत्से २३ २४

स्वतःसिद्धज्ञानत्वमुपपादयंतोजगदात्मनाआभानप्रकारमाहुः । त्वंशब्दइत्यत्रवेदस्ययोनिः । अतःस्वतःसिद्धज्ञानत्त्वं । जगदादिर्महत्तत्त्वं । आत्माचअहंकारः कथंभूतः । प्राणेंद्रियद्रव्याणांकारणभूतागुणायस्य । राजसादित्रिविधइत्यर्थः । स्वभावादयश्चत्वमेव । तत्रक्रतुःसंकल्पः । सत्यमृतंचेतियोधर्मःसचत्वम् । महदादिरूपत्वेहेतुः । त्रिवृत्त्रिगुणात्मकंयदक्षरंप्रधानंतत्त्वयित्वदाश्रयमामनंति । यद्वा एवंभूतेत्वयित्रिवृदक्षरंप्रणवंप्रकाशकमाहुरित्यर्थः २५ अखिलदेवतात्मा । 'अग्निःसर्वादेवता'इतिश्रुतेः । सोऽग्निस्तेमुखं । हेलोकभव । द्वितीयांतेषुविदुरित्यस्यसंबंधः २६ परेअवरेचयेआत्मानोजीवास्तेषांआश्रयस्त्वात्माहंकारः २७ त्रयीमयात्मन्वेदत्रयमूर्ते २८ पंचोपनिषदस्तत्पुरुषाघोरसद्योजातवामदेवेशानरूपामंत्राः । येर्मुखैरष्टोत्तरत्रिंशन्मंत्राणांवर्गःतेषामेवमंत्राणांपदच्छेदविशेषेणअष्टत्रिंशत्कलात्मकामंत्राइत्यर्थः । अत्रस्थितिरुपरतावस्था ( हेदेव ) २९ अधर्मस्योर्मिषुदंभलोभादिषु(तेछाया) । वैरूमिभिर्विसर्गःप्रतिसर्गःसंहारः । यद्वायैःसत्त्वादिभिर्विविधःसर्गस्तानितेनेत्रत्रयम् । हेदेव । छंदोमयऋषिर्वेदःसतवेक्षाईक्षणं । साक्षान्मनुरितिपाठेमनुर्वेदः । तमेवाहछंदोमयइति ३० हेगिरित्र तेपरंज्योतिराखिलानांलोकपालादीनांगम्यंनभवति । कुतः । यत्ररजआदिर्नास्ति । किंतज्ज्योतिःयन्निरस्तभेदंब्रह्म ३१ कामश्च ( मदनः ) अध्वरश्चदक्षयज्ञःत्रिपुरादयश्चयेअनेकभूतद्रुहःतान्क्षपयतःसंहरतस्तेतत्कर्मस्तुतयेनभवति । अत्यल्पमेतदित्यर्थः । गरक्षपणस्याप्यवश्यंभावित्वेनासिद्धवन्निर्देशः । स्तुतयेअलंनभवतीत्यत्रहेतुः । यस्तुभवान्स्वनेत्रवह्निविस्फुलिंगस्याशिखयाइदंजगद्भासितंभस्मजातंनवेदनालोचयत्यपि ३२

त्वंशब्दयोनिर्जगदादिरात्माप्राणेंद्रियद्रव्यगुणस्वभावः ॥ कालःक्रतुःसत्यमृतंचधर्मस्त्वय्यक्षरंयत्त्रिवृदामनंति २५ अग्निर्मुखंतेऽखिलदेवतात्माक्षितिर्विदुर्लोकभवांघ्रिपंकजम् ॥ कालंगतिंतेऽखिलदेवतात्मनोदिशश्चकर्णौरसनंजलेशम् २६ नाभिर्नभस्तेश्वसनंनभस्वान्सूर्यश्चचक्षूंषिजलंस्मरेतः ॥ परावरात्माश्रयणंतवात्मासोमोमनोद्यौर्भगवन्शिरस्ते २७ कुक्षिःसमुद्रागिरयोऽस्थिसंघारोमाणिसर्वौषधिवीरुधस्ते ॥ छंदांसिसाक्षात्तवसप्तधातवस्त्रयीमयात्मन्हृदयंसर्वधर्मः २८ मुखानिपंचोपनिषदस्तवेशयैस्त्रिंशदष्टोत्तरमंत्रवर्गः ॥ यत्तच्छिवाख्यंपरमार्थतत्त्वंदेवस्वयंज्योतिरवस्थितिस्ते २९ छायात्वधर्मोर्मिषुयैर्विसर्गोनेत्रत्रयंसत्त्वरजस्तमांसि ॥ सांख्यात्मनःशास्त्रकृतस्तवेक्षाछंदोमयोदेवऋषिःपुराणः ३० नतेगिरित्राखिललोकपालविरिंचवैकुंठसुरेंद्रगम्यम् ॥ ज्योतिःपरंयत्ररजस्तमश्चसत्त्वंनयद्ब्रह्मनिरस्तभेदम् ३१ कामाध्वरत्रिपुरकालगराद्यनेकभूतद्रुहःक्षपयतःस्तुतयेनतत्ते ॥ यस्त्वंतकालइदमात्मकृतंस्वनेत्रवह्निस्फुलिंगशिखयाभसितंनवेद ३२

२५ हेभगवन् अग्निस्तवमुखम् पृथ्वीपादौ कालोगतिः दिशःकर्णौ वरुणःजिह्वा २६ नभोनाभिः सूर्यश्चक्षूंषि जलंरेतः चंद्रोमनः २७ द्यौःशिरःसमुद्राःकुक्षिःपर्वताःअस्थीनिओषधयोरोमाणि छंदांसिसप्तधातवःसर्वधर्मःहृदयम् २८ हेगिरित्र पंचोपनिषदःतेमुखानि २९ गुणाःनेत्राणि ३० मनुःईक्षणम् किंच ब्रह्मादीनामपितवज्योतिःअगम्यम् ३१ हेमहेश्वर त्वत्तः परं नपश्यामः किंच इयंतेशक्तिः लोकस्यसुखाय अतः नः पाहि ३२

वदेवंनित्यंपरानुग्रहेव्यग्रंत्वांयेनिंदांतेते अतिमूर्खाइत्याहुः । येउग्रयासहचरंतंस्यांमितरारतंकामिनं कत्थंतेप्रलपंति । तथाश्मशानेचरंतंउग्रंक्रूरंपरुषंचर्हिंस्त्रंकत्थंते । कथंभूतम् । आत्मा रामाश्चतेगुरवोविश्वहितोपदेष्टारस्तैर्हृदिचिंतितंअंघ्रिद्वयंयस्य । तथाभूतमपितपसामितम्रमपितेनूनंतवोतिमविदन्निनितिकाकुः । त्वल्लीलांनैवविदुरित्यर्थः ( अविदहतिपाठेनजानंतएव ) भवोहातलज्जाः त्यक्तत्रपाः । कथमात्मारामैःसेवितचरणयुगलस्यक्रामित्वसंभवः । कथंवातपसामितम्रस्यशांतस्योग्रत्वंपरुषत्वंवासंभवतीत्यविचार्यैवप्राळपन्नित्यर्थः ३३ आस्तांताव ज्जिवकानांवार्ता । महांतोपितवतत्त्वंनजानंतीत्याहुः । ततस्यात् ( स्थूलसूक्ष्माभ्यांपरतःप्रधानादपरस्यते ) तवस्वरूपस्यममनेज्ञानेब्रह्मादयोपिनसमर्थाःसंस्तवनेतुकुतःशक्ताःस्युः । तत्रवयंकथंप्रभवाम । यतस्तेषां (सर्गस्यमरीच्यादेर्यःसर्गः सृष्टिस्तद्विधया ब्रह्मादीनां ) सर्गेअत्यंतार्वाचीनाः तथापियदेतत्स्तवनंएतदात्मशक्तिपरिमितमात्रमित्यर्थः ३४ वदेवाहुः । ( हेमहेश्वर । परंकेवलंएतद्भिनेआविरुक्षणंरूपंप्रपश्यामः) नतुपरंरूपम् । तथापित्वद्दर्शनादेवकृतार्थावयमित्याहुः । मृडनायहीति । ( अव्यक्तकर्मणःअतर्क्यलीलस्य ) ३५ ३६ मत्व भावमविचार्यविषपानेप्रवृत्तंमांकथंचिदियंप्रियावारयेदितिशंकयातामनुज्ञापयन्नाह । अहोवतेतिसार्धैश्चतुर्भिः । वैशसंदुःखम् ३७ प्राणपरीप्सूनांप्राणरक्षणेच्छूनां । मेमया । प्रभोः समर्थस्य । अर्थःकार्यं ३८ किंच ( प्राणिनोदीनान् स्वैरपिप्राणैः पांति । यतःक्षणभंगुरैः ) बद्धवैरेषुपरस्परंजिघांसत्सु ३९ कृपयतःकृपांकुर्वतःपुंसः ४० मेमतःस्वस्तिःशोभनासत्तास्तु प्रजानांविवमस्त्वित्यर्थः । जग्धुंअत्तुम् ४१ ( व्यापिसर्वतःप्रसरत् ) करतलीकृत्यकरतलपरिमितमात्रंकृत्वा ४२

येत्वात्मरामगुरुभिर्हृदिचिंतितांघ्रिद्वंद्वंचरंतमुमयातपसाऽभितप्तम् ॥ कत्थंतउग्रपुरुषंनिरतंश्मशानेतेनूनमूतिमविदंस्तवहातलज्जाः ३३ ततस्यतेस दसतोःपरतःपरस्यनांजःस्वरूपगमनेप्रभवंतिभूम्नः ॥ ब्रह्मादयःकिमुतसंस्तवनेवयंतुतत्सर्गसर्गविषयाअपिशक्तिमात्रम् ३४ एतत्परंप्रपश्यामोनपरंतेमहेश्व र ॥ मृडनायहिलोकस्यव्यक्तिस्तेऽव्यक्तकर्मणः ३५ ॥ श्रीशुकउवाच ॥ तद्वीक्ष्यव्यसनंतासांकृपयाभृशपीडितः ॥ सर्वभूतसुहृद्देवइदमाहसतींप्रियाम् ३६ ॥ श्रीमहादेवउवाच ॥ अहोवतभवान्येतत्प्रजानांपश्यवैशसम् ॥ क्षीरोदमथनोद्भूतात्कालकूटादुपस्थितम् ३७ आसांप्राणपरीप्सूनांविधेयमभयं हिमे ॥ एतावान्हिप्रभोरर्थोयद्दीनपरिपालनम् ३८ प्राणैःस्वैःप्राणिनःपांतिसाधवःक्षणभंगुरैः ॥ बद्धवैरेषुभूतेषुमोहितेष्वात्ममायया ३९ पुंसःकृपयतोभ द्रेसर्वात्माप्रीयतेहरिः ॥ प्रीतेहरौभगवतिप्रीयेहंसचराचरः ॥ तस्मादिदंगरंभुंजेप्रजानांस्वस्तिरस्तुमे ४० ॥ श्रीशुकउवाच ॥ एवमामंत्र्यभगवान्भवानीं विश्वभावनः ॥ तद्विषंजग्धुमारेभेप्रभावज्ञाऽन्वमोदत ४१ ततःकरतलीकृत्यव्यापिहालाहलंविषम् ॥ अभक्षयन्महादेवःकृपयाभूतभावनः ४२

३३ ३४ ३५ ॥ श्रीशुकउवाच ॥ प्रजानांतद्व्यसनंवीक्ष्यशिवःदेवीआह ३६ ॥ श्रीमहादेवउवाच ॥ हेभवानिकालकूटात्प्राप्तंप्रजानांदुःखंपश्यपश्य ३७ प्राण परीप्सूनांआसांमयाअभयंविधेयम् किंच यद्दीनपरिपालनंएतदेवश्रेष्ठस्यअर्थः ३८ साधवस्तु क्षणभंगुरैःस्वप्राणैःजीवान्पांति ३९ अतःइदंगरंभुंजे मतःप्रजानांस्व स्त्यस्तु ४० ॥ श्रीशुकउवाच ॥ एवंदेवींपृष्ट्वा विषंजग्धुंआरेभे साअपिप्रभावज्ञाअन्वमोदत ४१ ततःविषंकरतलीकृत्य अभक्षयत् ४२

जलकल्मषःजन्मदोषोविषम् । यस्मात्कंठेनलिंचकार । साधोः कृपालोः (भूतहिते रतस्य) ४३ ४४ ४५ प्रस्कन्नंगलितम् । अपरेचयेसविषास्तेपिजगृहुः । अनेनविषस्यतीव्रतोक्ता ४६
॥ इतिश्रीभागवतेमहापुराणेअष्टमस्कंधेटीकायांअमृतमथनेसप्तमोध्यायः ॥ ७ ॥ ७ ॥ ॥ अष्टमेमथ्यमानेब्धौलक्ष्म्याविष्णोर्वृतेऽसुरैः । धन्वंतरेर्हृतेसोमेमोहिन्यासुरवंचने ॥१॥ हविर्धानीसुरभिः १ देवयानस्यब्रह्मलोकप्रापकस्ययज्ञस्यसंबंधिनेहविषे ( अग्निहोत्रीहविषाऽग्निहोत्रसाधनभूताय ) २ ईश्वरशिक्षयाभागेनकृतया ३ भगवतोयःश्वेताद्रिःकैलासःतस्यमहिमाहिमानं दंतैःशिखरतुल्यैःहरन्नसदृशत्वंपांडुरइत्यनुषंगः ४ ५ ( आर्येनोपाचकान् भवान्परीक्षित ) ६ वल्गुभिर्मत्यादिभिःस्वर्गिणांरमण्यःरतिकर्त्र्यः ७ सुदामापर्वतःतत्रैकस्यांदिशिजातासौदामिनीस्फटिकादिमयगिरिशृंगेषु अधिकंविस्फुरंतीविद्युदिवकांत्यादिशोरंजयंतीश्रीःसंपत्साक्षान्मूर्तिधारिणीसतीसैवभगवत्पराऽऽविरभूदित्यर्थः ८

तस्यापिदर्शयामासस्ववीर्यंजलकल्मषः ॥ यच्चकारगलेनीलंतच्चसाधोर्विभूषणम् ४३ तप्यंतेलोकतापेनसाधवःप्रायशोजनाः ॥ परमाराधनंतद्धिपुरुषस्याखिलात्मनः ४४ निशम्यकर्मतच्छंभोर्देवदेवस्यमीढुषः ॥ प्रजादाक्षायणीब्रह्मावैकुंठश्चशशंसिरे ४५ प्रस्कन्नंपिबतःपाणेर्यत्किंचिज्जगृहुःस्मतत् ॥ वृश्चिकाहिविषौषध्योदंदशूकाश्चयेऽपरे ४६ ॥ ॥ इतिश्रीभागवतेमहापुराणेअष्टमस्कंधेअमृतमथनेसप्तमोऽध्यायः ॥ ७ ॥ ७ ॥ ॥ श्रीशुकउवाच ॥ पीतेगरेवृषांकेणप्रीतास्तेमरदानवाः ॥ ममंथुस्तरसासिंधुंहविर्धानीततोऽभवत् १ तामग्निहोत्रीमृषयोजगृहुर्ब्रह्मवादिनः ॥ यज्ञस्यदेवयानस्यमेध्यायहविषेनृप २ ततउच्चैःश्रवानामहयोभूच्चंद्रपांडुरः ॥ तस्मिन्बलिःस्पृहांचक्रेनेंद्रईश्वरशिक्षया ३ ततऐरावतोनामवारणेंद्रोविनिर्गतः ॥ दंतैश्चतुर्भिःश्वेताद्रेर्हरन्भगवतोमहिम् ४ कौस्तुभाख्यमभूद्रत्नंपद्मरागोमहोदधेः ॥ तस्मिन्मणौस्पृहांचक्रेवक्षोलंकरणेहरिः ५ ततोऽभवत्पारिजातःसुरलोकविभूषणम् ॥ पूरयत्यर्थिनोयोर्थैःशश्वद्भुवियथाभवान् ६ ततश्चाप्सरसोजाताः निष्ककंठ्यःसुवाससः ॥ रमण्यःस्वर्गिणांवल्गुगतिलीलावलोकनैः ७ ततश्चाविरभूत्साक्षाच्छ्रीरमाभगवत्परा ॥ रंजयंतीदिशःकांत्याविद्युत्सौदामिनीयथा ८

ततःविषंतस्यवीर्यंदर्शयामासगलेनीलंचकार तत्साधोःविभूषणंजातम् ४३ ४४ तत्शंभोःकर्मनिशम्यदाक्षायणीब्रह्मावैकुंठश्चशशंसिरे ४५ विषंपिबतःतस्यपाणेःयत्गलितंतत् वृश्चिकाहिविषौषध्योदंदशूकाश्चजगृहुः ४६ ॥ इत्यष्टमेसप्तमः ७ ॥ श्रीशुकउवाच ॥ एवंवृषांकेणगरेपीतेसतिदेवदैत्याः प्रीताःसंतः पुनःतरसाअब्धिंममंथुः ततःसुरभिःअभवत् १ तांऋषयःयज्ञस्यमेध्यायहविषेजगृहुः २ ततःचंद्रपांडुरःउच्चैःश्रवानामहयःअभूत् तस्मिन्बलिःस्पृहांचक्रे प्रागेवाशिक्षितत्वात् इंद्रःन ३
ततःऐरावतोनामचतुर्दंतयुक्तःश्वेतःगजःअभवत् ४ ततःकौस्तुभाख्यंरत्नंअभूत् तस्मिन्हरिःस्पृहांचक्रे ५ ततःपारिजातःकल्पतरुःअभवत् तःस्वर्गविभूषणंअभूत् ६ ॥१२॥
ततःअप्सरसोजाताःताःस्वर्गिणांरमण्यःअभवन् ७ ८

१ ईश्वरशंकयाइत्यपिपाठांतरं । २ तस्मिन्हरिःस्पृहांचक्रेवक्षोलंकरणेमणाविति पाठांतरं मुं० पु० पुस्तके ।

तस्याः रूपादिमहिमा आक्षिप्तं चेतो येषां ९ भगवद्वक्षःस्थितया अथवा विकोकितानां देवानां यथापूर्वं सर्वं संपत्समाधिमसुराणां तद्विपर्ययं चकुं अभिषेकादिमहोत्सवपूर्वकं ब्रह्मादिपरिहारेण
भगवत्प्राप्तिप्रकारमाह । तस्या आसनमित्यादिना अथाक्षीद्वारुणीस्वतःमालनेनग्रंथेन १० आभिषेचनिका अभिषेकोचिताः पंचपवित्राणि पंचगव्यानि । मधुमाधवौ चैत्रवैशाखमयं फल
पुष्पादि । पाठांतरेपिद्वंद्वैकयेसएवार्थः मधुमासेमत्रं ( माधवं ) मध्विहिता ११ आभिषेकोचितांविधिं । नट्योनटानास्त्रियः १२ मृदुरुणोनिःस्वनोयेषांतान्मृदंगादीनशंखते णुवीणाश्चव
नादयन् १३ १४ ( मत्ताः षट्पदायस्यांतां ) १५ ( नागाःकुंडलद्वयमुपाहरन् ) १६ ( कृतंस्वस्त्ययनंययासा । मदंतोद्विरेफायस्यांतां ) १७ ( निरंतरंघनंसमंस्तनद्वयंयस्यवती ) १८
( आत्मनःस्वस्यानिरवद्यंनिर्दोषं ) ध्रुवंनित्यं पदंआश्रयं ( पतिरूपं ) अव्यभिचारिणोनित्याः संतोगुणायस्मिन् तन्नान्वविदत । कचिदपिकस्यचिद्दोषस्यसद्भावात् १९ तदेवाहनूनमि
तित्रिभिः ( यस्यतपस्तस्य ) मन्युनिर्जयोनास्तितपस्विषुदुर्वासःप्रभृतिषु । क्वचिद्गुरुशुक्रादिषुज्ञानमस्तितत्रसंगवर्जितंज्ञानंनास्ति । महत्त्वेपिब्रह्मादिषुकामनिर्जयोनास्ति । परतोप्यपा
श्रयःपरापेक्षइंद्रादिः सकिमीश्वरः २०
तस्यांचक्रुःस्पृहांसर्वेससुरासुरमानवाः ॥रूपौदार्यवयोवर्णमहिमाऽऽक्षिप्तचेतसः ९ तस्या आसनमानिन्येमहेंद्रोमहदद्भुतम् ॥ मूर्तिमत्यःसरिच्छ्रेष्ठाहेम
कुंभैर्जलंशुचि १० आभिषेचनिकाभूमिराहरत्सकलौषधीः ॥ गावःपंचपवित्राणिवसंतोमधुमाधवौ ११ ऋषयःकल्पयांचक्रुराभिषेकंयथाविधि ॥ जगुर्भद्राणि
गंधर्वानट्यश्चननृतुर्जगुः १२ मेघामृदंगपणवमुरजानकगोमुखान् ॥ व्यनादयन्शंखवेणुवीणास्तुमुलनिःस्वनान् १३ ततोभिषिषिचुर्देवींश्रियंपद्मकरांस
तीम् ॥ दिगिभाःपूर्णकलशैःसूक्तवाक्यैर्द्विजेरितैः १४ समुद्रःपीतकौशेयवाससीसमुपाहरत् ॥ वरुणःस्रजंवैजयंतींमधुनामत्तषट्पदाम् १५ भूषणानिवि
चित्राणिविश्वकर्माप्रजापतिः ॥ हारंसरस्वतीपद्ममजोनागाश्चकुंडले १६ ततःकृतस्वस्त्ययनोत्पलस्रजंनदद्द्विरेफांपरिगृह्यपाणिना ॥ चचालवक्त्रंसुकपो
लकुंडलंसव्रीडहासंदधतीसुशोभनम् १७ स्तनद्वयंचातिकृशोदरीसमंनिरंतरंचंदनकुंकुमोक्षितम् ॥ ततस्ततोनूपुरवल्गुशिंजितैर्विसर्पतीहेमलतेवसाबभौ
१८ विलोकयंतीनिरवद्यमात्मनःपदंध्रुवंचाव्यभिचारिसद्गुणम् ॥ गंधर्वयक्षासुरसिद्धचारणत्रैविष्टपेयादिषुनान्वविंदत १९ नूनंतपोयस्यनमन्युनिर्जयो
ज्ञानंक्वचित्तत्रनसंगवर्जितम् ॥ कश्चिन्महांस्तस्यनकामनिर्जयःसईश्वरःकिंपरतोव्यपाश्रयः २०
ततःभगवत्परा श्रीरमाजाता तस्यांसुरासुरमानवाःस्पृहांचक्रुः ९ तस्याः आसनंइंद्रःआनिन्ये सरितःहेमकुंभैःजलंआनिन्युः १० भूमिःअभिषेकोचिताःसर्वौषधीःआह
रत् गावःपंचगव्यानिआहरन् वसंतःफलपुष्पादिआहरत् ११ ऋषयःअभिषेकंचक्रुः गंधर्वाःजगुः नट्यःननृतुः १२ देवाःमृदंगादीन्अवादयन् १३ दिग्गजाःपूर्णकल
शैःअभिषिषिचुः १४ समुद्रःपीतकौशेयवाससीददौ वैजयंतींमालांददौ १५ विश्वकर्माविचित्रभूषणानिददौ सरस्वतीहारंददौ अजःपद्मंददौ नागाःकुंडलेददुः १६ त
तःरमा नदद्विरेफांपद्ममालांपाणिनागृह्यवक्त्रंचचाल १७ साइतस्ततःविसर्पतीहेमलतेवबभौ १८ ततःदेवादिषुआत्मनःध्रुवंआश्रयंविलोकयंतीनान्वविंदत् १९ तदेवाह
यस्यतपःअस्तितस्यक्रोधजयोन यस्यज्ञानंअस्तितत्संगवर्जितंन कश्चित्महान्तस्यकामजयःन २०

नभूतसौहृदं ( यमादिषु ) नमुक्तिकारणंत्यागःशिबिप्रभृतिषु । कार्तवीर्यादेर्वीर्यमस्तितदजरेगनिष्कृतं कालवेगेनप रिहृतंनभवति ( कालचक्रविजयीनभवतीत्यर्थः ) । गुणसंगवर्जितः स
नकादिर्भम द्वितीयो करोनहि समाधिनिष्ठत्वात् २१ चिरायुष्यपिमार्कंडेयादौशीलमंगलंचनास्ति । इंद्रियदमनशीलत्वात् । कचित्तदपि ( शीलंमंगलमप्य- )-स्तितुरालुहविशेषेषु मा
युषस्तुस्थैर्यनवेद्यंदुर्ज्ञातं । भगवद्द्वेषेणअकस्मादेवमृत्युसंभवात् । यत्रकुत्रचश्रीरुद्रेमार्कंडेयादिवत्इंद्रियदमनाद्यभावात्शीलंमंगलंचायुर्नैश्वयश्चेत्युभयमस्तिनचान्यः पूर्वोक्तःकश्चि
द्दोषःतथापिसोप्यमंगलः श्मशानवासाद्यमंगलचेष्टितः । श्रीमुकुंदंलक्ष्मीकृत्याह । कश्चेति । कश्चित्सुमंगलःनिरवद्यश्चसतुमांनहिकांक्षते आत्मारामत्वात् २२ एवंविमृश्यरमानिरपेक्षम
पिमुकुंदमेववरंवव्रे । तत्किं । अव्यभिचारिभिःसद्भिर्धर्मज्ञानादिभिर्गुणैर्निजैकाश्रयतश्चनैरपेक्ष्येणवरंसर्वोत्तमम् । तत्रहेतुः । अगुणाश्रयंप्रकृतिगुणातीतं । पाठांतरेप्ययमेवार्थःअतएवस्व
स्याःईप्सितं । किंच । सर्वैर्गुणैरणिमादिभिरपेक्षितंवृतं । अयंभावः यद्यपिस्वयमात्मारामत्वेनअन्यानिरपेक्षःतथाप्याश्रिताअणिमादिसिद्धीर्यथानोपेक्षते । तथामामपिनोपेक्षेत ।
तावतैवतस्यैवचाहंकृतार्थास्यांकिमन्यैःप्राकृतैरितितमेववव्रइति २३ तदेवाह । तस्य ( हरेः ) अंसदेशेकमनीयांनवकंजमालांनिधायतदनुग्रहंप्रतीक्षमाणातूष्णींतस्यनिकटेतस्थौ ।
कथंभूतांमालां । माद्यंतोयेमधुव्रतास्तेषांवरूथस्यागिराउपघुष्टांनादितां । कथंभूताश्रीः । सव्रीडहासेनविकसत्प्रफुल्लंयन्नयनंतेनतस्यउरःस्वधामयातायासासती । वक्षःप्रतीक्षमाणात
स्थावित्यर्थः २४ भगवानपित्रैलोक्याभिवृद्धयेस्ववक्षस्तस्याःस्थानंददावित्याह । तस्याइति । निशिष्टाभूतयोविभवायस्यास्तस्यास्त्रिजगतोजनन्याः श्रियः ( त्रिजगतोजनकोहरिः )
परमंसुस्थिरं । ( यत्रवक्षसि ) । ऐधयतअवर्धयत २५ ( सस्त्रीणां स्त्रीभिः सहितानां ) २६ तल्लिंगैः विष्णुप्रतिपादकैः । अवितथैर्यथार्थैः २७ २८ २९

धर्मःक्वचित्तत्रनभूतसौहृदंत्यागःक्वचित्तत्रनमुक्तिकारणम् ॥ वीर्यंनपुंसोस्त्यजवेगनिष्कृतंनहिद्वितीयोगुणसंगवर्जितः २१ क्वचिच्चिरायुर्नहिशीलमंगलंक
चित्तदप्यस्तिनवेद्यमायुषः ॥ यत्रोभयंकुत्रचसोप्यमंगलःसुमंगलःकश्चनकांक्षतेहिमाम् २२ एवंविमृश्याव्यभिचारिसद्गुणैर्वरंनिजैकाश्रयतोऽगुणाश्रय
म् ॥ वव्रेवरंसर्वगुणैरपेक्षितंरमामुकुंदंनिरपेक्षमीप्सितम् २३ तस्यांसदेशउशतींनवकंजमालांमाद्यन्मधुव्रतवरूथगिरोपघुष्टाम् ॥ तस्थौनिधायनिकटेतदुरः
स्वधामसव्रीडहासविकसन्नयनेनयाता २४ तस्याःश्रियस्त्रिजगतोजनकोजनन्यावक्षोनिवासमकरोत्परमंविभूतेः ॥ श्रीःस्वाःप्रजाःसकरुणेननिरीक्षणे
नयत्रस्थितैधयतसाधिपतींस्त्रिलोकान् २५ शंखतूर्यमृदंगानांवादित्राणांपृथक्स्वनः ॥ देवानुगानांसस्त्रीणांनृत्यतांगायतामभूत् २६ ब्रह्मरुद्रांगिरोमु
ख्याःसर्वेविश्वसृजोविभुम् ॥ ईडिरेऽवितथैर्मंत्रैस्तल्लिंगैःपुष्पवर्षिणः २७ श्रियावलोकितादेवाःसप्रजापतयःप्रजाः ॥ शीलादिगुणसंपन्नालेभिरेनिर्वृतिं
पराम् २८ निःसत्त्वालोलुपाराजन्निरुद्योगागतत्रपाः ॥ यदाचोपेक्षितालक्ष्म्याबभूवुर्दैत्यदानवाः २९

२१ कश्चिच्चिरायुःतस्यशीलमंगलंन यत्रउभयंसः अमंगलः कश्चित् सुमंगलःसःमांनेच्छति २२ एवंविमृश्यनिरपेक्षमपिसर्वगुणाश्रयंमुकुंदंवव्रे २३ ततस्तस्यांसदेशेन
वकंजमालांनिधायनिकटेतस्थौ २४ भगवान्तस्याः स्ववक्षःस्थानंददौ २५ यत्रस्थिताश्रीःसकरुणेनसाधिपान्त्रिलोकान्अवर्धयत् गायतांगंधर्वाणांवाद्यस्वनःअभूत्
२६ पुष्पवर्षिणःब्रह्माद्याःविभुंईडिरे २७ श्रियावलोकितादेवाद्याःसुखंप्रापुः २८ लक्ष्म्याउपेक्षितादैत्याद्याःनिःसत्त्वाः लोलुपानिर्लज्जाःबभूवुः २९

वारुणीतिमदेवतत्वंचदमंकन्यपीसुरा ( तदभिमानिनीदेवताअर्थः ) ३० ( काश्यपैःसुरासुरैः ) ३१ दीर्घापीवरौदोर्दंडौयस्य । कंबुग्रीवःशंखनाभिरिवत्रिरेखायुक्ताग्रीवायस्य ३२ स्निग्धाःमुकुंचिताःकेशानायंतोपियस्य ३३ इत्थमात्मपन्नमानमपोक्ता ३४ अमृतेनआमृतंपरिपूर्णंय ३५ ३६ मिथःदैत्यानांपरस्परंकलहोत्पादनेन । योगमायया मोहिन्या वो अर्थसाधयिष्या मि । अतोमाखिद्यतेत्याहेतिशेषः ३७ तदेवाहामिथइति । तर्षःकामःतयुक्तानिचेतांसियेषां । इत्येवंसमबलानांकलिरभूत ३८ दुर्बलानांस्वाक्रोशप्रकारमाह । देवाइतिद्वाभ्यां । येदेवाः तुल्येनायासेनहेतवःसाधकाः । तुल्यआयासोहेतुश्चघनादिर्येषामितिवा । सत्रयागेयथासर्वेषांसमंफलंतद्वत् । तथाचश्रुतिः 'ऋद्धिकामाःसत्रमासीरन्' इति 'येयजमानास्तेऋत्विजः' इति च ३९ ४० ४१ तद्रूपंवर्णयतिपंचभिः । प्रेक्षणीयमुत्पलमिवश्यामं । सर्वेष्ववयवेषुसुंदरं । समानयोःकर्णयोराभरणेयस्मिन् । सुकपोलंचतदुत्कृष्टनासिकंचाननंयस्मिन् ४२ नवयौवने ननिर्वृत्तोनिष्पन्नःस्तनयोर्भारोयत्रकृशमुदरंयत्रतच्चतच्च ( मुखामोदेअनुरक्तायेऽलयस्तेषांझंकारैरुद्विग्नेलोचनेयत्रतत् ) ४३

अथासीद्वारुणीदेवीकन्याकमललोचना ॥ असुराजगृहुस्तांवैहरेरनुमतेनते ३० अथोदधेर्मथ्यमानात्काश्यपैरमृतार्थिभिः ॥ उदातिष्ठन्महाराजपुरुषः परमाद्भुतः ३१ दीर्घपीवरदोर्दंडःकंबुग्रीवोऽरुणेक्षणः ॥ श्यामलस्तरुणःस्रग्वीसर्वाभरणभूषितः ३२ पीतवासामहोरस्कःसुमृष्टमणिकुंडलः ॥ स्निग्धकुंचितकेशांतःसुभगःसिंहविक्रमः ३३ अमृतापूर्णकलशंबिभ्रद्वलयभूषितः ॥ सवैभगवतःसाक्षाद्विष्णोरंशांशसंभवः ॥ धन्वंतरिरितिख्यातआयुर्वेदहृगिज्यभाक् ३४ तमालोक्यासुराःसर्वेकलशंचामृताभृतम् ॥ लिप्संतःसर्ववस्तूनिकलशंतरसाऽहरन् ३५ नीयमानेऽसुरैस्तस्मिन्कलशेऽमृतभाजने ॥ विषण्णमनसोदेवाहरिंशरणमाययुः ३६ इतितद्दैन्यमालोक्यभगवान्भृत्यकामकृत् ॥ माखिद्यतमिथोऽर्थंवःसाधयिष्येस्वमायया ३७ मिथःकलिरभूत्तेषांतदर्थेतर्षचेतसाम् ॥ अहंपूर्वमहंपूर्वंनत्वंनत्वमितिप्रभो ३८ देवाःस्वंभागमर्हंतियेतुल्यायासहेतवः ॥ सत्रयागइवैतस्मिन्नेषधर्मःसनातनः ३९ इतिस्वान्प्रत्यषेधन्वैदैतेयाजातमत्सराः ॥ दुर्बलाःप्रबलान्राजन्गृहीतकलशान्मुहुः ४० एतस्मिन्नंतरेविष्णुःसर्वोपायविदीश्वरः ॥ योषिद्रूपमनिर्देश्यंदधारपरमाद्भुतम् ४१ प्रेक्षणीयोत्पलश्यामंसर्वावयवसुंदरम् ॥ समानकर्णाभरणंसुकपोलोन्नसाननम् ४२ नवयौवननिर्वृत्तस्तनभारकृशोदरम् ॥ मुखामोदानुरक्तालिझंकारोद्विग्नलोचनम् ४३

अथवारुणीदेवीकन्याकमललोचनाआसीत्तांअसुराःजगृहुः ३० अथमथ्यमानात्उदधेःअमृतपूर्णकलशंबिभ्रत् स्रग्वीअरुणेक्षणःपीतवासाःसिंहविक्रमःविष्णोःअंशःधन्वंतर्याख्यःपुरुषःआयुर्वेदहृक्इज्यभाक्सन्उत्थितःअसुराःतंअमृतकलशंदृष्ट्वातंकलशंआहरन् असुरैःकलशेनीयमाने ३१ ३२ ३३ ३४ ३५ ३६ खिन्नाःदेवाःहरिंशरणंययुःभगवान्तेषांदैन्यमालोक्यदैत्यानांमिथःकलहोत्पादनेनमोहिन्यावःअर्थंसाधयिष्यामि यूयंमाखिद्यतइत्याह ३७ ततःतेषांअहंपूर्वंनत्वंनत्वमितिमिथःकलहःअभूत् ३८ तत्रयेदुर्बलाःतेस्वभागंदेवाःअर्हंतीत्युक्त्वाधृतकलशान्प्रबलान्प्रत्यषेधन् ३९ ४० एतस्मिन्नंतरेसर्वोपायवित् ईश्वरः अद्भुतंयोषिद्रूपम् ४१ उत्पलश्यामम् ४२ ४३

हेसुरद्विषः (सालावृकाणांक्रोष्टूनां)१० (क्ष्वेलितैःउल्लापैश्चवचनैः) भावेनकेनापिअभिप्रायेणगंभीरंयथाभवत्येवंजहसुः ११ ईषत्स्मितेनशोभायस्यास्तया मयाकृतंसाधुवाअसाधुवायद्यभ्युपेतमंगीकृततर्हिविभजे १२ असुरपुंगवाःदैत्यश्रेष्ठाःअप्रमाणविदतात्त्वज्ञाः १३ १४ यथोपजोषंयथाप्रीति । अहतस्यलक्षणम् । ' अहतंयंत्रनिर्मुक्तंवासःप्रोक्तंस्वयंभुवा । शस्तंतन्मांगलिक्येषुतावन्मात्रे नसर्वदा' इति । प्रागग्रेषुकुशेषुविविशुः१५ धूपैरामोदितायांसुरभीकृतायांशालायाम् (माल्यैर्दीपकैश्च)१६ अथतस्यांशालायां हनरेंद्रसाकलशपाणिराविवेश कथंभूता ' मणिबंधादाकनिष्ठंकरस्यकरभोबहिः ' करभसदृशौसुवृत्तावूरूयस्याःसा । उरुत्कमनीयंदुकूलंयस्मिन्तेनश्रोणीतटेनविशालयाश्रोण्याऽलसामंदागतिर्यस्याःसा । पाठांतरेकरभसदृशयोरूर्वोर्लसत्दुकूलंयस्याःसाचासौ श्रोणीतटेनअलसगतिश्च । मदेनविह्वलेअक्षिणीयस्याः १७ तांश्रियःसखींसंवीक्ष्यदेवासुराःसंमुमुहुः । कथंभूतां । कनकमयेकुंडलेयस्याःसाचासौचारवःकर्णादयोयस्याःसाचतां । विगलितोविस्रस्तःस्तनपट्टिकायाअंतोयस्याः १८ एवंताम्मोहयित्वायत्कृतवान्तदाह त्रिभिः । असुराणांसुधादानंसर्पाणांक्षीरदानमिवदुर्नयम् अन्याय्यंमत्वातांसुधांतेभ्योनव्यभजत् ( सुधापयसिदेवान्नइत्यभिधानम् ) अयंभावः । दैत्यैर्मदीयंसाध्वसाधुवासर्वमनुमतमेव । अतोमद्वाक्यान्देवानेवसुधांपाययिष्यामि नतुतद्वैरिणोनिसर्गक्रूरान्दैत्यान् किंच तैर्यथान्यायंविभजस्वेत्युक्तंअतश्चक्रूरेभ्यस्तेभ्यःसुधांनददामिति १९

सालावृकाणांस्त्रीणांचस्वैरिणीनांसुरद्विषः ॥ सख्यान्याहुरनित्यानिनूत्नंनूत्नंविचिन्वताम् १० ॥ श्रीशुकउवाच ॥ इतितेक्ष्वेलितैस्तस्याआश्वस्तमनसोऽसुराः ॥ जहसुर्भावगंभीरंददुश्चामृतभाजनम् ११ ततोगृहीत्वाऽमृतभाजनंहरिर्बभाषईषत्स्मितशोभयागिरा ॥ यदभ्युपेतंक्वचसाध्वसाधुवाकृतंमयावोविभजेसुधामिमाम् १२ इत्यभिव्याहृतंतस्याआकर्ण्यासुरपुंगवाः ॥ अप्रमाणविदस्तस्यास्तत्तथेत्यन्वमंसत १३ अथोपोष्यकृतस्नानाहुत्वाचहविषाऽनलम् ॥ दत्वागोविप्रभूतेभ्यःकृतस्वस्त्ययनाद्विजैः १४ यथोपजोषंवासांसिपरिधायाहतानिते ॥ कुशेषुप्राविशन्सर्वेप्रागग्रेष्वभिभूषिताः १५ प्राङ्मुखेषूपविष्टेषुसुरेषुदितिजेषुच ॥ धूपामोदितशालायांजुष्टायांमाल्यदीपकैः १६ तस्यांनरेंद्रकरभोरुरुशद्दुकूलश्रोणीतटालसगतिर्मदविह्वलाक्षी ॥ साकूजतीकनकनूपुरसिंजितेनकुंभस्तनीकलशपाणिरथाविवेश १७ तांश्रीसखींकनककुंडलचारुकर्णनासाकपोलवदनांपरदेवताख्याम् ॥ संवीक्ष्यसंमुमुहुरुत्स्मितवीक्षणेनदेवासुराविगलितस्तनपट्टिकांताम् १८ असुराणांसुधादानंसर्पाणामिवदुर्नयम् ॥ मत्वाजातिनृशंसानांनतांव्यभजदच्युतः १९

हेदैत्याःवृकाणांस्वैरिणीनांस्त्रीणांचसख्यानिअनित्यान्याहुः १० ॥ श्रीशुकउवाच ॥ एवंतस्याःनर्मवाक्यैःमोहिताःसंतःजहसुःतस्यैअमृतभाजनंचददुः ११ ततोहरिःअमृतपात्रंगृहीत्वाआह हेदैत्याःमयासाधुवाअसाधुवाकृतंयदिअंगीकुरुततर्हिसुधांविभजे १२ एवंतस्याःवाक्यंश्रुत्वातथेतिअमंसत १३ अथतेसर्वेउपोष्यअग्निंहुत्वादाना
११५ निविप्रादिभ्योदत्वावासांसिधृत्वाभूषिताःसंतःप्रागग्रदर्भेषुप्राविशन् १४ १५ धूपामोदितशालायांसुरासुरेषुप्राङ्मुखेषूपविष्टेषुसत्सु १६ तस्यांसामोहिनीअमृतकलशं
गृहीत्वाआविवेश १७ विस्रस्तस्तनपट्टिकांतां तांदृष्ट्वासर्वेमुमुहुः १८ जात्याक्रूराणांअसुराणांसुधादानंअहीनांक्षीरमिवअन्याय्यंमत्वातेभ्यःसुधांनव्यभजत् १९

पंक्तीःपृथक्विविक्ताःकल्पयित्वाविधायतासुपंक्तिषुस्वेषुस्वेषुतत्सजातीयेषुतांश्चअसुरानविप्रतारणार्थमेवोपवेशयामास२० उपसंचरैर्बहुमानप्रियवाक्यादिनातानतिक्रम्यातिक्रम्यमममेदूर
स्थानपिदेवान् २१ तयाकृतःस्नेहोयेषु । स्त्रियासहविवादस्यजुगुप्सया२२कृतोऽतिप्रणयःस्नेहोयैः । प्रणयापायात्स्नेहनाशात्कातरामीताःएतेतावत्कृपणाःपूर्वकिंचित्पिबंतुकुर्वंतुधीराःप्र
पंप्रतीक्षध्वमित्यादिबहुमानेनच आबद्धानियंत्रिताः । समयपालनादिभिःषड्भिरेतैःकारणैःअप्रियंकिंचिदपिनोचुः । किंतुतूष्णीमासन् २३ देवपंक्तौचंद्रार्कयोर्मध्येप्रविष्टो(राहुः)सोममम्
तमपिबत् २४ हरिस्तस्यशिरोजहार । अप्लावितःअसंस्पृष्टः ( अतोऽपतत् ) २५ ( शिरस्त्वमृतेनप्लावितमतोऽमरतांनीतम् अजोब्रह्मा ) ग्रहंसूर्यादिवद्ग्रहत्वाधिकारिणम् २६ २७
हरिभक्तानामेवोद्यमःफलतिनान्येषामित्येवमाख्यानतात्पर्यमाह । एवमिति । समादेशादयोयेषाम् । हेतुर्मंदराद्रिः अर्थःसमुद्रेक्षिप्तंवीरुत्तृणादि । विविधःकल्पःफलंकेषांचिज्जातंकेषां
चिन्नेतिवैचित्र्यंयेषाम् । फलेवैषम्यवंतोबभूवुरित्यर्थः । तदेवाह । तत्रतेषुयस्यपादपंकजरजःश्रयणाद्देवाअमृतंफलमापुःसएवसेव्यइत्यर्थःयत्तदोर्नित्यसंबंधात् २८ एतदेवोपपादयति ।
असवःप्राणाःवसुधनम् । प्राणादिभिर्देहात्मजादिषुनृभिर्यद्युज्यतेदेहाद्यर्थंयत्क्रियतेइत्यर्थःतदसत्व्यर्थंभवति । कुतःपृथक्त्वात्भेदाश्रयत्वात् । शाखानिषेचनवत् । तैरेवप्राणादिभिरी
श्वरोद्देशेनयत्क्रियतेतत्तुसन्महाफलंभवति । कुतःअपृथक्त्वात् । ईश्वरस्यसर्वत्रानुगतत्वात् । तत्रदृष्टांतः । यत्तरोर्मूलनिषेचनंतद्यथासर्वस्यस्कंधशाखादेरपिभवति । यद्वात्यन्तलोपेपं
चम्यौ । पृथक्त्वंपर्यालोच्यभेददृष्टयादेहाद्युद्देशेनयत्क्रियतेतदसत् । अपृथक्त्वंपर्यालोच्येश्वरदृष्टयातैरेवतेष्वेवचयत्क्रियतेतत्सत्भवतीति । शेषंसमानम् २९ ॥ ॥ इतिश्रीभागवते
महापुराणेअष्टमस्कंधेटीकायांनवमोऽध्यायः ॥ ९ ॥

कल्पयित्वापृथक्पंक्तीरुभयेषांजगत्पतिः ॥ तांश्चोपवेशयामासस्वेषुस्वेषुचपंक्तिषु २० दैत्यान्गृहीतकलशोवंचयन्नुपसंचरैः ॥ दूरस्थान्पाययामासज
रामृत्युहरांसुधाम् २१ तेपालयंतःसमयमसुराःस्वकृतंनृप ॥ तूष्णीमासन्कृतस्नेहाःस्त्रीविवादजुगुप्सया २२ तस्यांकृतातिप्रणयाःप्रणयापायकात
राः ॥ बहुमानेनचाबद्धानोचुःकिंचनविप्रियम् २३ देवलिंगप्रतिच्छन्नःस्वर्भानुर्देवसंसदि ॥ प्रविष्टःसोममपिबच्चंद्रार्काभ्यांचसूचितः २४ चक्रेणक्षुरधारे
णजहारपिबतःशिरः ॥ हरिस्तस्यकबंधस्तुसुधयाऽप्लावितोऽपतत् २५ शिरस्त्वमरतांनीतमजोग्रहमचीक्लृपत् ॥ यस्तुपर्वणिचंद्रार्कावभिधावतिवैरधीः
२६ पतिप्रायेऽमृतेदेवैर्भगवान्लोकभावनः ॥ पश्यतामसुरेंद्राणांस्वंरूपंजगृहेहरिः २७ एवंसुरासुरगणाःसमदेशकालहेत्वर्थकर्ममतयोपिफलेविकल्पाः ॥
तत्रामृतंसुरगणाःफलमंजसाऽऽपुर्यत्पादपंकजरजःश्रयणान्नदैत्याः २८ यद्युज्यतेऽसुवसुकर्ममनोवचोभिर्देहात्मजादिषुनृभिस्तदसत्पृथक्त्वात् ॥ तैरेव
सद्भवतियत्क्रियतेऽपृथक्त्वात्सर्वस्यतद्भवतिमूलनिषेचनंयत् २९ ॥ ॥ इति श्रीभागवते महापुराणे अष्टमस्कंधे अमृतमथनेनवमोऽध्यायः ॥ ९ ॥

एवंदेवदैत्यानांपृथक्पंक्तीःकृत्वास्वस्वपंक्तिषुचतान्उपवेश्य२० गृहीतकलशःहरिःप्रियवाक्यादिनातान्अतिक्रम्यअतिक्रम्यवंचयन्गमनैःदूरस्थानपिदेवान्जरामृत्युहरांसुधां
पाययामास २१ ततोदैत्याःसमयंपालयंतःतस्याःबहुमानेनबद्धाः स्त्रीवादजुगुप्सयाविप्रियंकिंचिदपिनोचुः २२ २३ तदाराहुःदेवसंसदिचंद्रार्कयोर्मध्येस्थितःसन्सुधांप
पौ २४ ताभ्यांसूचितःहरिःचक्रेणतच्छिरःजहार तत्कबंधस्तुसुधयाअस्पृष्टःअपतत् २५ शिरस्त्वमरतांनीतंअजःतंग्रहंअकरोत् यःपर्वणिचंद्रार्कौअभिधावति २६ एवंदे
वैःअमृतेपीतेअसुराणांपश्यतांसतांहरिःस्वंस्वरूपंजगृहे २७ एवंसुरासुराःश्रमेतुल्याअपिफलेविकल्पंआपुः हेनृप देवाःयत्पादपंकजरजःश्रयणात्अमृतंआपुःदैत्याःन
२८ २९ ॥ इत्यष्टमेनवमः ९ ॥

दर्शयेन्मत्सरादैत्यैरारब्धेयुद्धेसुरैः । दैत्यमायाविषण्णेषुदेवेष्वाविर्बभौहरिः ॥ १ ॥ तदेवममृतावाप्तिर्नामक्तानामितीरितम् । भक्तमत्सरतःप्राणहानिःपुनरुदीर्यते॥२॥ ( यत्तायत्तनवंतः सुधाप्यमृतालाभेहेतुः । वासुदेवेति ) १ २ ३ ४ रणःसंग्रामःउदन्वतःसमुद्रस्यरोधसितीरेबभूव ५ अन्योन्यंसमासाद्य ( संरब्धंक्रुद्धंमनोयेषां । खड्गादिभिः) निजघ्नुः ६ ७ (संयुगेरणे) ८ ( वाहनान्याह । उष्ट्रैरितिक्रमेरब्धमप्रैः । द्वीपिभिर्व्याघ्रैः ) ९ ( गोवृषैर्वृषभश्रेष्ठैः ) १० ११ (जलखगाःकारंडवादयःस्थलखगाःकुक्कुटादयस्तैः । विकृतोविग्रहोदेहोयेषांतैःसत्त्वैर्भ्रा णिभिः ) १२ चित्रध्वजपटादिभिश्चवीराणांमालाभिश्चनिरंतरपंक्तिभिः देवदानववीराणांध्वजिन्यौयादसांमालाभिःसागराविवरेजतुरितिक्रियापामन्वयः । यादोभिरितिवा । सिते रमलैश्चातपत्रैः । बार्हैश्चचामरैश्चव्यजनैः १३ वातेनोद्धूतैरुत्तरैरुष्णीषैश्च । सूर्यरश्मिभिःक्षुरवासुतरांस्फुरद्भिः ( वर्मादिभिस्तेषामर्चिर्भिश्च ) १४ १५ संख्येयुद्धे । असुराणांयाचमूः तस्याःपतिःसबलिर्यानमास्थितः १६

॥ श्रीशुकउवाच ॥ इतिदानवदैतेयानाविंदन्नमृतंनृप ॥ युक्ताःकर्मणियत्ताश्चवासुदेवपराङ्मुखाः १ साधयित्वाऽमृतंराजन्पाययित्वास्वकान्सुरान् ॥ पश्यतांसर्वभूतानांययौगरुडवाहनः २ सपत्नानांपरामृद्धिंदृष्ट्वातेदितिनंदनाः ॥ अमृष्यमाणाउत्पेतुर्देवान्प्रत्युद्यतायुधाः ३ ततःसुरगणाःसर्वेसुधया पीतयैधिताः ॥ प्रतिसंयुयुधुःशस्त्रैर्नारायणपदाश्रयाः ४ तत्रदेवासुरोनामरणःपरमदारुणः ॥ रोधस्युदन्वतोराजंस्तुमुलोरोमहर्षणः ५ तत्रान्योन्यंस पत्नास्तेसंरब्धमनसोरणे ॥ समासाद्यासिभिर्बाणैर्निजघ्नुर्विविधायुधैः ६ शंखतूर्यमृदंगानांभेरीडमरिणांमहान् ॥ हस्त्यश्वरथपत्तीनांनदतांनिःस्वनोऽभवत् ७ रथिनोरथिभिस्तत्रपत्तिभिःसहपत्तयः ॥हयाहयैरिभाश्चेभैःसमसज्जंतसंयुगे ८ उष्ट्रैःकेचिदिभैःकेचिदपरेभिययुःखरैः ॥ केचिद्गौरमृगैर्ऋक्षैर्द्वीपिभिर्हरिभिर्भ टाः ९ गृध्रैःकंकैर्बकैरन्येश्येनभासैस्तिमिंगिलैः ॥ शरभैर्महिषैःखड्गैर्गोवृषैर्गवयारुणैः १० शिवाभिराखुभिःकेचित्कृकलासैःशशैर्नरैः ॥ बस्तैरेकेकृष्णसारैर्हं सैरन्येचसूकरैः ११ अन्येजलस्थलखगैःसत्त्वैर्विकृतविग्रहैः ॥ सेनयोरुभयोराजन्विविशुस्तेऽग्रतोग्रतः १२ चित्रध्वजपटैराजन्नातपत्रैःसितामलैः ॥ महाधनैर्वज्रदंडैर्व्यजनैर्बार्हचामरैः १३ वातोद्धूतोत्तरोष्णीषैरर्चिर्भिर्वर्मभूषणैः ॥ स्फुरद्भिर्विशदैःशस्त्रैःसुतरांसूर्यरश्मिभिः १४ देवदानववीराणांध्वजि न्यौपांडुनंदन ॥ रेजतुर्वीरमालाभिर्यादसामिवसागरौ १५ वैरोचनोबलिःसंख्येसोऽसुराणांचमूपतिः ॥ यानंवैहायसंनामकामगंमयनिर्मितम् १६

॥ श्रीशुकउवाच ॥ हेनृप दैतेयाःकर्मणियत्ताःसंतःभगवत्पराङ्मुखाःअतएवअमृतंनाविंदन् १ एवंभगवान्देवान्अमृतंसाधयित्वाययौ २ ततःदेवानांपरांऋद्धिंदृष्ट्वादै त्याःगृहीतायुधाःसंतःयुद्धार्थंययुः ३ ४ तदासमुद्रतीरेदेवासुरोनामतुमुलोरणःअभवत् ५ तत्ररणेसपत्नाःअन्योन्यंआसाद्यआयुधैःजघ्नुः ६ तत्रशंखादीनांस्वनः अभव त् ७ अथरथिनःरथिभिःपत्तयःपत्तिभिःहयाःहयैःइभाःइभैश्चरणेअसज्जंत ८ तथाकेचिद्दैत्यभटाःउष्ट्रभखरसिंहगृध्रकंकबकशरभमहिषगोवृषशिवाखुकुक्कुटबस्तहंससूकर जलस्थलखगादिषुआरूढाःतेष्वारूढैःअन्यैःसहयुयुधुः एवंउभयोःसेनयोर्मध्ये अग्रतोऽग्रतःतेविविशुः ९ १० ११ १२ तदाचित्रध्वजपटातपत्रव्यजनचामरोष्णीषा दिभिः देवदैत्यसेने यादोभिः सागराविव रेजतुः १३ १४ १५ तत्रअसुराणांपतिः बलिः वैहायसंनामका मगं १६

भा०अ० ( सर्वैःसांग्रामिकैर्युद्धसाधनैःशस्त्रादिभिरुपेतं । कृतसाऽप्रतर्क्यं । वाचाऽनिर्देश्यंक्वचिद्दृश्यमानं । क्वचिन्नास्तिदर्शनंयस्य ) १७ उदयेउदयशिखरेस्थितश्चंद्रइवविरेजेइतित्रयाणामन्वयः अ०
१८ १९ २० २१ २२ ( सोमस्यसुधायाःबहुशोभागहारं ) २३ ( बलभिदिंद्रःउत्सिक्तान्बलगर्वितान् ) २४ स्रवंतिप्रस्रवणानियस्मिन्नितिमदधारासाहचर्य २५ नानावाहनादीनियेषाम्
२६ तेदेवाअसुराश्चमिथो ( अभिसंगम्यनामभिर्नामानिगृहीत्वाक्षिपंतस्तिरस्कुर्वंतो ) युयुधुः २७ द्वंद्वान्येवाह युयोधेतिसप्तभिः । अस्यतआस्यतअयुध्यादित्यर्थः २८ २९ सूर्योदेवएकपुत्रशतेनबलिसुतैः ( युयुधे ) बाणोज्येष्ठोयेषांतैः ३० निशुंभशुंभाभ्यांदेवी ३१ ( इल्वलोवातापिश्चब्रह्मपुत्रैर्युयुधाते ) ३२ ॥१८॥ ॥१०॥

सर्वसांग्रामिकोपेतंसर्वाश्चर्यमयंप्रभो ॥ अप्रतर्क्यमनिर्देश्यंदृश्यमानमदर्शनम् १७ आस्थितस्तद्विमानाग्र्यंसर्वानीकाधिपैर्वृतः ॥ वालव्यजनछत्राग्र्यैरेजे चंद्रइवोदये १८ तस्यासन्सर्वतोयानैर्यूथानांपतयोऽसुराः ॥ नमुचिःशंबरोबाणोविप्रचित्तिरयोमुखः १९ द्विमूर्धाकालनाभोथप्रहेतिर्हेतिरिल्वलः ॥ शकुनिर्भूतसंतापोवज्रदंष्ट्रोविरोचनः २० हयग्रीवःशंकुशिराःकपिलोमेघदुंदुभिः ॥ तारकश्चक्रदृक्शुंभोनिशुंभोजंभउत्कलः २१ अरिष्टोऽरिष्टनेमिश्चमयश्चत्रिपुराधिपः ॥ अन्येपौलोमकालेयानिवातकवचादयः २२ अलब्धभागाःसोमस्यकेवलंक्लेशभाजिनः ॥ सर्वएतेरणमुखेबहुशोनिर्जितामराः २३ सिंहनादान्विमुंचंतःशंखान्दध्मुर्महारवान् ॥ दृष्ट्वासपत्नानुत्सिक्तान्बलभित्कुपितोभृशम् २४ ऐरावतंदिक्करिणमारूढःशुशुभेस्वराट् ॥ यथास्रवत्प्रस्रवणमुदयाद्रिमहर्पतिः २५ तस्यासन्सर्वतोदेवानानावाहध्वजायुधाः ॥ लोकपालाःसहगणैर्वाय्वग्निवरुणादयः २६ तेन्योन्यमभिसंसृत्यक्षिपंतोनामभिर्मिथः ॥ आह्वयंतोविशंतोऽग्रेयुयुधुर्द्वंद्वयोधिनः २७ युयोधबलिरिंद्रेणतारकेणगुहोऽस्यत ॥ वरुणोहेतिनाऽयुध्यन्मित्रोराजन्प्रहेतिना २८ यमस्तुकालनाभेनविश्वकर्मामयेनवै ॥ शंबरोयुयुधेत्वष्ट्रासवित्रातुविरोचनः २९ अपराजितेननमुचिरश्विनौवृषपर्वणा ॥ सूर्योबलिसुतैर्देवोबाणज्येष्ठैःशतेनच ३० राहुणाचतथासोमःपुलोम्ना युयुधेऽनिलः ॥ निशुंभशुंभयोर्देवीभद्रकालीतरस्विनी ३१ वृषाकपिस्तुजंभेनमाहिषेणविभावसुः ॥ इल्वलःसहवातापिर्ब्रह्मपुत्रैररिंदम ३२

विमानमास्थितःसन्चंद्रइवरेजे १७ १८ तस्यसर्वतःयानैर्दैत्याःनमुचिःशंबरःविप्रचित्तिःबाणःअयोमुखः १९ द्विमूर्धाकालनाभःप्रहेतिःहेतिःइल्वलःशकुनिः भूतसंतापःवज्रदंष्ट्रःविरोचनः २० हयग्रीवःशंकुशिराःकपिलःमेघदुंदुभिःतारकःचक्रदृक् शुंभःनिशुंभःजंभःउत्कलः २१ अरिष्टःअरिष्टनेमिःमयःअन्येपौलमकालेयनिवातकवचादयः २२ एतेदैत्याःआसन् २३ तथा सिंहनादान्मुंचंतःशंखान्दध्मुःततःशत्रून् दृष्ट्वाइंद्रःकुपितःसन् २४ ऐरावतारूढःसूर्यइवरेजे २५ तस्यसर्वतःनानावाहध्वजायुधाःवाय्वग्निवरुणादयःदेवाः आसन् २६ तेऽन्योऽन्यमभिसंसृत्यक्षिपंतोमर्मभिर्मिथः आह्वयंतोविशंतोऽग्रेयुयुधुर्द्वंद्वयोधिनः २७ तत्रबलिःइंद्रेणयुयोध तारकेण गुहः वरुणःहेतिना मित्रःप्रहेतिना २८ यमःकालनाभेन विश्वकर्मामयेन शंबरःत्वष्ट्रा विरोचनःसवित्रा २९ अपराजितेननमुचिः अश्विनौवृषपर्वणा सूर्यः बलिसुतैः ॥१८॥
३० राहुणासोमः पुलोम्नावायुः निशुंभशुंभाभ्यांदेवी ३१ वृषाकपिःजंभेन विभावसुः महिषेण इल्वलवातापीब्रह्मपुत्रैः ३२

३३ ३४ ( आजौयुदे ) ३५ ( गदाभिर्ऋष्टिभिश्च ) ३६ अरोहंतीत्यारोहावीराःतैःसहिता अन्येचवाहाःपूर्वतुकेवलंगजादयउक्ताः । कथंभूताःनिकृत्ताबाह्वादयोयेषां । छिन्नानिध्वजादीनियेषां ( इष्वासोधनुः । तनुत्रंकवचम् ) ३७ तेषांदिवादीनांपदाघातैःरथ,गैश्चरथचक्रैश्चूर्णितादायोधनाद्रणभूमेरुत्थितोरेणुर्दिशः खंद्युमणिंचसूर्यंछादयंस्तदैवदिगादिभ्योऽन्ववर्तत । ( तत्रहेतुः । ) कथंभूतात् । असृक्स्रुतिभिःरक्तक्षरणैःपरिप्लुतात्सिक्तात् । यद्वा । परिप्लवनाद्धेतोरन्वर्वर्तत । मात्रेकः । रक्तधाराणांउत्पर्यंतमुच्छलनादित्यर्थः । प्रथमांतपाठेरेणोर्विशेषणं ३८ शिरोभिर्महाभुजैश्चकरभसदृशैरूरुभिश्चसारणभूःप्रकर्षेणआस्तृतासतीबभौ । कथंभूतैःशिरोभिःउद्धूतानिउत्पतितानिकिरीटानिकुंडलानिचयेभ्यःतैः । संरंभयुक्तादृशोयेषुतैः । परिदष्टादच्छदाओष्ठायेषुतैः३९ पतितानियानिस्वशिरांसितत्रस्थैरक्षिभिःपश्यंतइत्यर्थः । उद्यतानिआयुधानियस्तैर्दोर्दंडैर्युक्ताः ४० वाहान्ऐरावतपादरक्षकान् । आरोहंमजयंतारुदंआच्छेयत्प्रविव्याध ४१ ( तान्शरान् ) ४२ दुर्मर्षःअसहनोबलिः ४३ ( ऋष्टयःऋष्टीःविभुरिंद्रः ) ४४ ४५ टंकवत्तीक्ष्णाग्रैःशिखरैःसहिताः ४६

कामदेवेनदुर्मर्षउत्कलोमातृभिःसह ॥ बृहस्पतिश्चोशनसानरकेणशनैश्चरः ३३ मरुतोनिवातकवचैःकालेयैर्वसवोऽमराः ॥ विश्वेदेवास्तुपौलोमैरुद्राःक्रोधगणैःसह ३४ तएवमाजावसुराःसुरेंद्राद्वंद्वेनसंहत्यचयुध्यमानाः ॥ अन्योन्यमासाद्यनिजघ्नुरोजसाजिगीषवस्तीक्ष्णशरासितोमरैः ३५ भुशुंडिभिश्चक्रगदर्ष्टिपट्टिशैःशक्त्युल्मुकैःप्रासपरश्वधैरपि ॥ निस्त्रिंशभल्लैःपरिघैःसमुद्गरैःसभिंडिपालैश्चशिरांसिचिच्छिदुः ३६ गजास्तुरंगाःसरथाःपदातयःसारोहवाहाविविधाविखंडिताः ॥ निकृत्तबाहूरुशिरोधरांघ्रयश्छिन्नध्वजेष्वासतनुत्रभूषणाः ३७ तेषांपदाघातरथांगचूर्णितादायोधनादुल्बणउत्थितस्तदा ॥ रेणुर्दिशःखंद्युमणिंचछादयन्न्यवर्ततासृक्स्रुतिभिःपरिप्लुतात् ३८ शिरोभिरुद्धूतकिरीटकुंडलैःसंरंभदृग्भिःपरिदष्टदच्छदैः ॥ महाभुजैःसाभरणैःसहायुधैःसाप्रास्तृताभूःकरभोरुभिर्बभौ ३९ कबंधास्तत्रचोत्पेतुःपश्यंतःस्वशिरोक्षिभिः ॥ उद्यतायुधदोर्दंडैराधावंतोभटान्मृधे ४० बलिर्महेंद्रंदशभिस्त्रिभिरैरावतंशरैः ॥ चतुर्भिश्चतुरोवाहानेकेनारोहमार्च्छयत् ४१ सतानापततःशक्रस्तावद्भिःशीघ्रविक्रमः ॥ चिच्छेदनिशितैर्भल्लैरसंप्राप्तान्हसन्निव ४२ तस्यकर्मोत्तमंवीक्ष्यदुर्मर्षःशक्तिमाददे ॥ तांज्वलंतींमहोल्काभांहस्तस्थामच्छिनद्धरिः ४३ ततःशूलंततःप्रासंततस्तोमरमृष्टयः ॥ यद्यच्छस्त्रंसमादद्यात्सर्वंतदच्छिनद्विभुः ४४ ससर्जाथासुरींमायामंतर्धानगतोऽसुरः ॥ ततःप्रादुरभूच्छैलःसुरानीकोपरिप्रभो ४५ ततोनिपेतुस्तरवोदह्यमानादवाग्निना ॥ शिलाःसटंकशिखराश्चूर्णयंत्योद्विषद्बलम् ४६

कामदेवेनदुर्मर्षः उत्कलःमातृभिः बृहस्पतिःशुक्रेण नरकेणशनिः ३३ मरुतःनिवातकवचैः कालेयैःवसवः विश्वेदेवाःपौलोमैः रुद्राःक्रोधवशैः युयुधुः ३४ तएवंअन्योऽन्यंआसाद्यतीक्ष्णशरासितोमरैःमिथःनिजघ्नुः ३५ ३६ ३७ भूमेःरेणुःउत्थितः ३८ तेषांवाहनानांचशिरोरुबाहुभिःआस्तृताभूःबभौ ३९ तत्रकबंधाःउत्पेतुः ४० ततःबलिः इंद्रंदशभिःशरैः त्रिभिर्गजं चतुर्भिर्गजपादरक्षकान् एकेनगजयंतारंविव्याध ४१ प्राप्तान्शरान्इंद्रःभल्लैःचिच्छेद ४२ ततोबलिःशक्तिंआददे तांइंद्रःचिच्छेद ४३ ततःबलिःयद्यत् जगृहे तत्तदिंद्रःचिच्छेद ४४ ततोबलिःअंतर्धाय मायांससर्ज ततःदेवसेनोपरिशैलःप्रादुरभूत् ४५ ततःतरवःशिलाः सर्पाः ४६

४७ ४८ स्तनयित्नवःसनिर्घातामहामेघाअंगारान्मुमुचुरित्यन्वयः ४९ अधाक्‌आर्षःअधाक्षीदित्यर्थः ५० उद्भूतैस्तरंगैरावर्तैश्चभीषणः ५१ एवमन्यैश्चदैत्यैःसृज्यमानासु ( विषेदुर्विषण्णाबभूवुः ) ५२ यत्र यदा । तत्र तदा तैर्ध्यातःसन् ५३ अष्टौआयुधयुक्ताबाहवोयस्य । श्रीश्चकौस्तुभश्चअनर्घ्यकिरीटंचकुंडलेचउल्लसंतिश्रीकौस्तुभादीनियस्मिन् ५४ असुराणांकूटकर्ममंत्रादिप्रयोगःतस्माज्जाताः । महिनामाहिम्ना । हरेःस्मृतिरेवसर्वासांविपदांविमोक्षणेरूपाकिमुतहरेःप्रवेशइत्यर्थः ५५ इभारिवाहःसिंहवाहःअहिनोत्चिक्षेप । लीलयैवतद्गृहीत्वाऽहनत्अहनत्हेनृप ( त्र्यधीशोविष्णुः ) ५६ यस्यचक्रेणकृत्तशिरसौपेततुः । तंतथाभूतमपि(हरिं)आहत्यसंघट्यअंडजेंद्रंगरुडंयावदहनत्‌हंतुंगदामुद्गिन्यइत्यर्थः । तावदाद्योहरिः ( अरेर्माल्यवतोऽरिणाचक्रेण ) ५७ ॥ ॥ इतिश्रीभागवतेमहापुराणेअष्टमस्कंधेटीकायांदशमोऽध्यायः १० ॥ ॥ ७ ॥ ॥ एकादशेतुदेवेषुदैत्यघातिषुनारदः । देवानवारयच्छुक्रोमृतान्दैत्यानजीवयत् ॥ १ ॥ १

महोरगाःसमुत्पेतुर्दंदशूकाःसवृश्चिकाः ॥ सिंहव्याघ्रवराहाश्चमर्दयंतोमहागजान् ४७ यातुधान्यश्चशतशःशूलहस्ताविवाससः ॥ छिंधिभिंधीतिवादिन्यस्तथारक्षोगणाःप्रभो ४८ ततोमहाघनाव्योम्निगंभीरपरुषस्वनाः ॥ अंगारान्मुमुचुर्वातैराहताःस्तनयित्नवः ४९ सृष्टोदैत्येनसुमहान्वह्निःश्वसनसारथिः ॥ सांवर्तकइवात्युग्रोविबुधध्वजिनीमधाक् ५० ततःसमुद्रउद्वेलःसर्वतःप्रत्यदृश्यत ॥ प्रचंडवातैरुद्धूततरंगावर्तभीषणः ५१ एवंदैत्यैर्महामायैरलक्ष्यगतिभीषणैः ॥ सृज्यमानासुमायासुविषेदुःसुरसैनिकाः ५२ नतत्प्रतिविधिंयत्रविदुरिंद्रादयोनृप ॥ ध्यातःप्रादुरभूत्तत्रभगवान्विश्वभावनः ५३ ततःसुपर्णांसकृतांघ्रिपल्लवःपिशंगवासानवकंजलोचनः ॥ अदृश्यताष्टायुधबाहुरुल्लसच्छ्रीकौस्तुभानर्घ्यकिरीटकुंडलः ५४ तस्मिन्प्रविष्टेऽसुरकूटकर्मजामायाविनेशुर्महिनामहीयसः ॥ स्वप्नोयथाहिप्रतिबोधआगतेहरिस्मृतिःसर्वविपद्विमोक्षणं ५५ दृष्ट्वामृधेगरुडवाहमिभारिवाहआविध्यशूलमहिनोदथकालनेमिः ॥ तल्लीलयागरुडमूर्ध्निपतद्गृहीत्वातेनाहनन्नृपसवाहमरिंत्र्यधीशः ५६ मालीसुमाल्यतिबलौयुधिपेततुर्यच्चक्रेणकृत्तशिरसावथमाल्यवांस्तम् ॥ आहत्यतिग्मगदयाहनदंडजेंद्रंतावच्छिरोच्छिनदरेर्नदतोऽरिणाऽऽद्यः ५७ ॥ इतिश्रीभागवतेमहापुराणेअष्टमस्कंधेदशमोध्यायः ॥ १० ॥ श्रीशुकउवाच ॥ अथोसुराःप्रत्युपलब्धचेतसःपरस्यपुंसःपरयानुकंपया ॥ जघ्नुर्भृशंशक्रसमीरणादयस्तांस्तान्रणेयैरभिसंहताःपुरा १

सिंहव्याघ्रादयःउत्पेतुः ४७ यातुधान्यःछिंधिभिंधीतिवादिन्यःआसन् ४८ मेघाःअंगारकान्मुमुचुः ४९ दैत्येनसृष्टःवह्निः सांवर्तकइवसैन्यंअदहत् ५० समुद्रःउद्वेलःदृश्यत ५१ एवंसृष्टासुमायासुइंद्रादयः तत्प्रतिविधिंअजानंतः ५२ खिन्नाःसंतःहरिंदध्युः ५३ तदाहरिःअष्टबाहुःगरुडारूढःप्रादुरभूत् ५४ तदैवमायाःविनेशुःएवंहरेःस्मृतिःसर्वविपद्विमोक्षणेभवति ५५ कालनेमिःयुद्धेहरिंदृष्ट्वा शूलंचिक्षेपतदागरुडमूर्ध्निपतत् तत्हरिः गृहीत्वातेनैवसवाहंअरिंअहनत् ५६ ततः मालीसुमालीचक्रेणकृत्तशिरसौपेततुः अथमाल्यवान्गदयागरुडंतिहत्यहरिंहंतुंगदांजगृहेतावत् सःतच्छिरःचक्रेणचिच्छेद ५७ ॥ इत्यष्टमेदशमः १० ॥ ७ ॥ ॥ श्रीशुकउवाच ॥ अथोदेवाःहरेःकृपयादैत्यान्निजघ्नुः १

( वैरोचनायबलये ) उदयच्छत्उद्गच्छन्ये २ ३ निबद्धान्यक्षीणियेषांतान्बालान्जित्वानटःकपटवृत्तिर्यथातेषांधनंहरतितथाहेमूढमायेशानस्मान्जेतुमिच्छसि ४ मत्प्रभावंशृण्वित्याह आरुरुक्षंतिआरोढुमिच्छंति । ये(दिवं)उत्सिसृप्संतिउर्ध्वंगंतुमिच्छंतितेमोक्षमिच्छंतीत्यर्थः । अधोविधुनोमिपातयामि(तथाचश्रुतिः 'मायाभिरुत्सिसृप्सतइंद्रद्यामारुरुक्षतः । अवदस्यूरधूनुथा' इति ) ५ ६(कालेनचोदितंपूर्वंकर्मयेषांतेषां । कीर्त्यादयोनुक्रमात्कर्मानुसारेणस्युः ) ७ ततःइदंकीर्त्यादिकालरशनंकालयंत्रितं । अतोनहृष्यंति । तत्रएवंविवेकेयूयमपंडिताःअनिपुणाः ८ तत्रकीर्तिजयादौआत्मानंसाधनंमन्यमानानांवोगिरोनप्रहृष्यामः । मर्मस्पृगताडनंयाभिस्ताः विमुर्मिद्रंवीरोबलिः ९ (पूर्वमधिक्षेपैराहतंपुनःआकर्णपूर्णैःकर्णपर्यंतमाकृष्टैः) १० (निराकृतोऽधिक्षिप्तः ) तोत्रमंकुशस्तेनआहतइव ११ ( तस्मैबलये ) सयानःविमानसहितः १२ १३ ( जत्रौभुजसमीपे) १४ १५ (हरिभिरश्वैः) १६ ( यंतुर्मातलेःतद्रथानयनम् ) १७

वैरोचन्न।यसंरब्धोभगवान्पाकशासनः ॥ उदयच्छद्यदावज्रंप्रजाहाहेतिचुक्रुशुः २ वज्रपाणिस्तमाहेदंतिरस्कृत्यपुरःस्थितम् ॥ मनस्विनंसुसंपन्नंविचरंतंमहामृधे ३ नटवन्मूढमायाभिर्मायेशान्नोजिगीषसि ॥ जित्वाबालान्निबद्धाक्षान्नटोहरतितद्धनम् ४ आरुरुक्षंतिमायाभिरुत्सिसृप्संतियेदिवम् ॥ तान्दस्यून्विधुनोम्यज्ञान्पूर्वस्माच्चपदादधः ५ सोहंदुर्मायिनस्तेद्यवज्रेणशतपर्वणा ॥ शिरोहरिष्येमंदात्मन्घटस्वज्ञातिभिःसह ६ ॥ बलिरुवाच ॥ संग्रामेवर्तमानानांकालचोदितकर्मणाम् ॥ कीर्तिर्जयोऽजयोमृत्युःसर्वेषांस्युरनुक्रमात् ७ तदिदंकालरशनंजगत्पश्यंतिसूरयः ॥ नहृष्यंतिनशोचंतितत्रयूयमपंडिताः ८ नवयंमन्यमानानामात्मानंतत्रसाधनम् ॥ गिरोवःसाधुशोच्यानांगृह्णीमोमर्मताडनाः ९ ॥ श्रीशुकउवाच ॥ इत्याक्षिप्यविभुंवीरोनाराचैर्वीरमर्दनः ॥ आकर्णपूर्णैरहनदाक्षेपैराहतंपुनः १० एवंनिराकृतोदेवोवैरिणातथ्यवादिना ॥ नामृष्यत्तदधिक्षेपंतोत्राहतइवद्विपः ११ प्राहरत्कुलिशंतस्माअमोघंपरमर्दनः ॥ सयानोन्यपतद्भूमौच्छिन्नपक्षइवाचलः १२ सखायंपतितंदृष्ट्वाजंभोबलिसखःसुहृत् ॥ अभ्ययात्सौहृदंसख्युर्हतस्यापिसमाचरन् १३ ससिंहवाहआसाद्यगदामुद्यम्यरंहसा ॥ जत्रावताडयच्छक्रंगजंचसुमहाबलः १४ गदाप्रहारव्यथितोभृशंविह्वलितोगजः ॥ जानुभ्यांधरणींस्पृष्ट्वाकश्मलंपरमंययौ १५ ततोरथोमातलिनाहरिभिर्दशशतैर्वृतः ॥ आनीतोद्विपमुत्सृज्यरथमारुरुहेविभुः १६ तस्यतत्पूजयन्कर्मयंतुर्दानवसत्तमः ॥ शूलेनज्वलतातंतुस्मयमानोहनन्मृधे १७

किंच यदाइंद्रःवलिंहंतुंवज्रंजगृहे तदाप्रजाः हाहेतिचुक्रुशुः २ युद्धेइंद्रः वलिंआह ३ हेमूढमायाभिः मायेशान्नः जेतुमिच्छसि ४ किंच मायाभिः येदिवंआरोढुमिच्छंतितान्दस्यून्पूर्वपदात् अधः पातयामि ५ हेमंदात्मन् अहंवज्रेणतेशिरःहरिष्येज्ञातिभिःसहयत्नंकुरु ६ बलिरुवाच ॥ मृधेवर्तमानानांकीर्तिः जयःपराजयः मृत्युर्वाक्रमात्स्यात् ७ एतत् सर्वंसूरयः कालाधीनंपश्यंति एवंविवेकेयूयं अज्ञाःस्थ ८ अतःयुष्मद्गिरः नगृह्णीमः ९ ॥ श्रीशुकउवाच ॥ एवंबलिः इंद्रंविनिर्यतंबाणैः अहनत् १० तदाइंद्रः तस्मैवज्रंआहरत् ततः वलिः सयानः भूमौपपात ११ १२ बलिंपतितंदृष्ट्वाजंभः सिंहारूढःसन्गदांउद्यम्यशक्रंजत्रौगजंचअताडयत् १३ १४ ततोगजःजानुभ्यांभुवंस्पृष्ट्वाकश्मलंययौ १५ ततः मातलिना सहस्राश्वैर्युक्तःरथः आनीतः इंद्रःरथं आरुरोह १६ तदा यंतुः कर्मअपूजयत् दानवःशूलेनमातलिं अहनत् १७

(सत्वधैर्यम्) १८ नमुचिर्बलःपाकश्चेतित्रयो (नारदवचनात्) आजग्मुः १९ (अर्दयंतः पीडयंतःअस्येंद्रस्य ) २० त्रयाणांपृथग्विक्रमानाह । हरीनितित्रिभिः । हर्यश्वस्यइंद्रस्यतात्रद्वि दशभिःशतैः २१ ( सकृत्संधानमोक्षेणयुगपदेवसंधानाद्वणमोक्षणेनपृथगर्दयामासेतियत्तदद्भुतमभूत ) २२ इंद्रमाहत्य ( तोयदइवजगर्ज) २३ प्रावृट्कालीनंसूर्यमिव २४ वणिक्पथात्र णिजः भिन्नानौर्यथातेभिन्नेनात्रइत्यर्थः २५ तुराषाडिंद्रःअश्वादिसहितोविनिर्गतः । अग्रणीःसारथिः २६ २७ २८ शोकामर्षाभ्यांयुक्तयारुषाक्रोधेनअन्वितःसन्निंद्रंहंतुं ( हेनृपते ) प्रय त्नंचकारेत्यर्थः २९ घंटावत्किंकिणीयुक्तम् ३० ( हारिरिंद्रः तच्छूलंआपतत्सहस्रधाभगनतलएवाविचिच्छिदे । अथकंधरेशिरोहरन्तमाहनत् हेनृप ) ३१ सुरपतिना बलेनप्रेरितोवज्र स्तस्यनमुचेस्त्वचमपिनाचिच्छेद । योवज्रः ) अतिवीर्यवृत्रंबिभेद ( सनमुचिकंधरत्वचातिरस्कृतइतियत्तत्परमद्भुतम् ) ३२ ( अविभेद्भीतः ) ३३

सेहरुजंसुदुर्मर्षांसत्त्वमालंब्यमातलिः ॥ इंद्रोजंभस्यसंक्रुद्धोवज्रेणापाहरच्छिरः १८ जंभंश्रुत्वाहतंतस्यज्ञातयोनारदादृषेः ॥ नमुचिश्चबलःपाकस्तत्रापे युस्त्वरान्विताः १९ वचोभिःपरुषैरिंद्रमर्दयंतोऽस्यमर्मसु ॥ शरैरवाकिरन्मेघाधाराभिरिवपर्वतम् २० हरीन्दशशतान्याजौहर्यश्वस्यबलःशरैः ॥ ताव द्भिरर्दयामासयुगपल्लघुहस्तवान् २१ शताभ्यांमातलिंपाकोरथंसावयवंपृथक् ॥ सकृत्संधानमोक्षेणतदद्भुतमभूद्रणे २२ नमुचिःपंचदशभिःस्वर्णपुंखैर्महे षुभिः ॥ आहत्यव्यनदत्संख्येसतोयइवतोयदः २३ सर्वतःशरकूटेनशक्रंसरथसारथिम् ॥ छादयामासुरसुराःप्रावृट्सूर्यमिवांबुदाः २४ अलक्षयंतस्तम तीवविह्वलाविचुक्रुशुर्देवगणाःसहानुगाः ॥ अनायकाःशत्रुबलेननिर्जितावणिक्पथाभिन्ननवोयथार्णवे २५ ततस्तुराषाडिषुबद्धपंजराद्विनिर्गतःसाश्वरथध्व जाग्रणीः ॥ बभौदिशःखंपृथिवींविरोचयन्स्वतेजसासूर्यइवक्षपात्यये २६ निरीक्ष्यपृतनांदेवःपरैरभ्यर्दितांरणे ॥ उदयच्छद्रिपुंहंतुंवज्रंवज्रधरोरुषा २७ सतेनैवाष्टधारेणशिरसीबलपाकयोः ॥ ज्ञातीनांपश्यतांराजञ्जहारजनयन्भयम् २८ नमुचिस्तद्वधंदृष्ट्वाशोकामर्षरुषान्वितः ॥ जिघांसुरिंद्रंनृपतेचकार परमोद्यमम् २९ अश्मसारमयंशूलंघंटावद्धेमभूषणम् ॥ प्रगृह्याभ्यद्रवत्क्रुद्धोहतोसीतिवितर्जयन् ॥ प्राहिणोद्देवराजायनिनदन्मृगराडिव ३० तदापत द्गगनतलेमहाजवंविचिच्छिदेहरिरिषुभिःसहस्रधा ॥ तमाहनन्नृपकुलिशेनकंधरेरुषान्वितस्त्रिदशपतिःशिरोहरन् ३१ नतस्याहित्वचमपिवज्रऊर्जितोबिभे दयःसुरपतिनौजसेरितः ॥ तदद्भुतंपरमतिवीर्यवृत्रभित्तिरस्कृतोनमुचिशिरोधरत्वचा ३२ तस्मादिंद्रोऽबिभेच्छत्रोर्वज्रःप्रतिहतोयतः ॥ किमिदंदैवयोगेनभूतंलोकविमोहनम् ३३

सः धैर्यधृत्वारुजंसेहे तदैवइंद्रः जंभशिरः वज्रेणअहरत् १८ नारदात् जंभंहतंश्रुत्वानमुचिःबलःपाकःइतित्रयःआगताः १९ तेइंद्रंशरैःअवाकिरन् २० तत्रबलःसहस्रशरैः इंद्राश्वान् पाकःशताभ्याम् २०। मातलिं नमुचिःपंचदशबाणैः इंद्रंविद्ध्वा मेघइवव्यनदत् २१ २२ २३ ततोदैत्याःसरथंइंद्रंशरैःछादयामासुः २४ तदादेवाःविचुक्रुशुः२५ ततःइंद्रःइषुबद्धपंजरात्निर्गतःसूर्यइवबभौ २६ ततःदैत्यैःअर्दितांसेनांवीक्ष्यरिपुंहंतुंवज्रंगृहीत्वा २७ बलपाकयोःशिरसीवज्रेणजहार २८ नमुचिःतद्वधंदृष्ट्वाइंद्रंहंतुं २९ शूलंप्रगृह्यहतोऽसिहतोसीतिवदन्विसर्जयत् ३० तत्शूलंइंद्रः इषुभिः सहस्रधाचिच्छेद अथइंद्रः वज्रेणतंकंधरे अहनत् ३१ तस्यत्वचमपिवज्रः नबिभेद तन्महदद्भुतं अभूत् ३२ तदाशत्रोः भीतः इंद्रः इदं आह ३३

( येमया ) पतत्रैःपक्षैः ( उत्पततांअथमुविभारैर्निविशतांअद्रीणांयेनवज्रेण ) ३४ सारमयंवीर्याधिकंयत्त्वाष्ट्रंतपःतदेववृत्रःसयेनवज्रेणमयाविपाटितः ३५ दंडलकुटतुल्यंकुलिशं । ब्रह्म तेजःदधीचेःसामर्थ्यमपि ३६ ३७ आर्द्रशुष्काभ्यांमृत्युर्नैवेति ३८ ३९ उभयात्मकत्वमेवाह । नशुष्केणनचार्द्रेणफेनेन । तथाचश्रुतिः ' अपांफेनेननमुचेःशिरइंद्रोदवर्तयत् ' इति ४० ४१ ४२ ४३ ४४ ( मन्युसंरंभंक्रोधोद्रेकम् ) अनुचरैरुद्गीयमानाइत्यर्थः । उद्गीयमानैरनुचरैः (सेनानीभिः) सहेतिवा ४५ ४६ अविनष्टाअवयवायेषांविद्यमानाःशिरोधरायेषांतान् ४७ प्रत्यापन्नानि पुनःप्राप्तानिइंद्रियाणिस्मृतिश्चयेनसः ४८ ॥ ॥ इतिश्रीभागवतेमहापुराणेअष्टमस्कंधेटीकायांदेवासुरसंग्रामोनामैकादशोऽध्यायः ॥ ११ ॥ ॥ ५ ॥

येनमेपूर्वमद्रीणांपक्षच्छेदःप्रजात्यये ॥ कृतोनिविशतांभारैःपतत्रैःपततांभुवि ३४ तपःसारमयंत्वाष्ट्रंवृत्रोयेनविपाटितः ॥ अन्येचापिबलोपेताःसर्वास्त्रैरक्ष तत्वचः ३५ सोयंप्रतिहतोवज्रोमयामुक्तोऽसुरेऽल्पके ॥ नाहंतदाददेदंडंब्रह्मतेजोप्यकारणम् ३६ इतिशक्रंविषीदंतमाहवागशरीरिणी ॥ नायंशुष्कैरथो नार्द्रैर्वधमर्हतिदानवः ३७ मयास्मैयद्वरोदत्तोमृत्युर्नैवार्द्रशुष्कयोः ॥ अतोन्यश्चिंतनीयस्तेउपायोमघवन्रिपोः ३८ तांदैवीगिरमाकर्ण्यमघवान्सुसमाहि तः ॥ ध्यायन्फेनमथापश्यदुपायमुभयात्मकम् ३९ नशुष्केणनचार्द्रेणजहारनमुचेःशिरः ॥ तंतुष्टुवुर्मुनिगणामाल्यैश्चावाकिरन्विभुम् ४० गंधर्वमुख्यौजगतु र्विश्वावसुपरावसू ॥ देवदुंदुभयोनेदुर्नर्तक्योननृतुर्मुदा ४१ अन्येप्येवंप्रतिद्वंद्वान्वाय्वग्निवरुणादयः ॥ सूदयामासुरस्त्रौघैर्मृगान्केसरिणोयथा ४२ ब्रह्म णाप्रेरितोदेवान्देवर्षिर्नारदोनृप ॥ वारयामासविबुधान्दृष्ट्वादानवसंक्षयम् ४३ ॥ श्रीनारदउवाच ॥ भवद्भिरमृतंप्राप्तंनारायणभुजाश्रयैः ॥ श्रियासमे धिताःसर्वेउपारमतविग्रहात् ४४ ॥ श्रीशुकउवाच ॥ संयम्यमन्युसंरंभंमानयंतोमुनेर्वचः ॥ उद्गीयमानानुचरैर्ययुःसर्वेत्रिविष्टपम् ४५ येऽवशिष्टारणेतस्मि न्नारदानुमतेनते ॥ बलिंविपन्नमादायअस्तंगिरिमुपागमन् ४६ तत्राविनष्टावयवान्विद्यमानाशिरोधरान् ॥ उशनाजीवयामाससंजीविन्यास्वविद्यया ४७ बलिश्चोशनसास्पृष्टःप्रत्यापन्नेंद्रियस्मृतिः ॥ पराजितोपिनाखिद्यल्लोकतत्त्वविचक्षणः ४८॥ इतिश्रीभा०म०अ०देवासुरसंग्रामोनामैकादशोऽध्यायः॥११॥

मयाअनेनवज्रेणपर्वतपक्षा छिन्नाः ३४ वृत्रश्चहतःसोऽयंमेवज्रः ३५ अल्पकेअसुरेव्यर्थोजातः तस्माद्वज्रंनाहमाददे अहोदधीचेः सामर्थ्यमपिअकारणंजातम् ३६ एवं विषीदंतंशक्रंअशरीरिणीवागाह हेइंद्रअयंदैत्यः शुष्कैःआर्द्रैश्चवधंनार्हति ३७ एवंमया अस्मैआर्द्रशुष्काभ्यांमृत्युर्नैवेतिवरोदत्तः अतःअन्यउपायः चिंत्यः ३८ तांगिरंश्रु त्वाउभयात्मकंउपायंअपांफेनंज्ञात्वा ३९ तेनइंद्रः नमुचेः शिरः जहार तदामुनयःतुष्टुवुः पुष्पैश्चअवाकिरन् ४० दुंदुभयोनेदुःनर्तक्यःननृतुः ४१ ततः वाय्वग्निवरुणा दयःअस्त्रौघैः दैत्यान्सूदयामासुः ४२ तदैवब्रह्मणाप्रेषितःनारदः एत्य दैत्यक्षयंदृष्ट्वादेवान्वारयामास ४३ हेदेवाः नारायणभुजाश्रयैःभवद्भिःअमृतंप्राप्तं श्रियाचसमे धिताः अतः विग्रहात्उपारमत ४४ एवंमुनेर्वचःमानयंतः देवाः अनुचरैःसहस्वर्गंययुः ४५ ततःयुद्धेअवशिष्टायेदैत्याः तेनारदानुमतेनविपन्नंबलिंआदायअस्तंगिरिंउपा गमन् ४६ तत्रशुक्रः अविनष्टावयवान्तान्संजीविन्याविद्ययाजीवयामास४७एवंशुक्रेणस्पृष्टःबलिःपुनःप्राप्तेंद्रियस्मृतिःपराजितोऽपिनाखिद्यत् ४८॥इत्यष्टमेएकादशः११॥

भा०अ० द्वादशेमोहिनीरूपविभ्रमालोकनोत्सुकम् । सर्वसंमोहयामासहरिःपुनरसांत्वयत् ॥ १ ॥ अमुह्यन्त्रसुराविष्णुमाययानतदद्भुतम् । इतिवक्तुंमहादेवमोहोयमुपवर्ण्यते ॥ २ ॥ हरिरमृतमपा अ०
ययदितीदंनिशम्य ( सयत्रास्तेतत्रतद्रूपंद्रष्टुंययावित्युत्तरेणान्वयः ) १ सोमयाउमयासह २ ( सभाजितःपूजितःउमयासह ) ३ त्वयिकिंचिन्नचाश्चर्यंवयंत्वाश्चर्यमानसाः । इतिवक्ष्य
॥२१॥ न्महादेवस्तुष्टावहरिमष्टभिः ॥ त्वयिमहामायाविनिपरमेश्वरेनहिकिल्किंचिदघटितमिव । वयंतुपरमकौतूहलेनद्रष्टुमागताइतिबहुधासंबोधयन्स्तौतिदेवेति । हेदेवदेव । कुतोहंदेवानांदे ॥१२॥
वइत्यतआह । हेजगद्व्यापिन् । तत्कुतः । हेजगन्मय । तर्हिकिंप्रधानम् । नहि । हेजगदीश । तत्रकुतस्तत्राह । सर्वेषामपित्वंहेतुः । अतईश्वरआत्माच । आत्मत्वाच्चनत्वंजडप्रधान
मित्यर्थः ४ ननुजगन्मयस्योत्तयाजगतउत्पत्त्यादिनाऽसत्यत्वेनचजाड्येनचममापिकिंतथात्वंनेत्याह । आद्यंतौमध्यंच अस्यजगतोभवंति । अस्यचअव्ययस्यएतानिआद्यंत
मध्यानिनसंति । यच्चब्रह्म । इदंकारास्पदंदृश्यंअहंकारास्पदंद्रष्टृच । बहिर्भोग्यंअन्यत्भोक्तृच । अयंचधर्मोजगतएवनत्वव्ययस्यतवतत्तस्मात्सत्यंचिद्रूपंचब्रह्मैवभवान्अतोनतवविकारादि
शंकेत्यर्थः ५ तवैवंभूतत्वेमुमुक्षूणामाचारःप्रमाणमित्याह । तवैवेति । उभयतःइहामुत्रचसंगंत्यक्त्वा ६ ननुब्रह्मैवचेदहंतर्ह्यसंगोदासीनस्यममचरणांभोजोपासनयाकिंतेषांतत्राह त्वमि
ति । ब्रह्मत्वेपित्वंनात्यंतमुदासीनःकिंतुविश्वस्यप्रपंचस्योदयादीनांहेतुःशुभाशुभकर्मणांजीवानामीश्वरश्चतत्तत्फलदाता । तर्हिकिंराजादिवत्कयाप्यपेक्षयासेवकेभ्यःफलंददासिनहिन
हि । अनपेक्षएवत्वम् । तर्हिकिमीश्वरत्वेन । तत्राह । तेरात्मभिःतत्फलदानार्थमपेक्ष्यतइतितदपेक्षस्तस्यभावस्तदपेक्षतातया । अनपेक्षत्वंदर्शयितुंतदीयंब्रह्मत्वंविशिनष्टि । पूर्णंआप्त
तंचसुखरूपम् । विषयसुखवैलक्षण्यार्थमाह । अविकारंनित्यंआनंदमात्रंच । कुतःविशोकम् । तत्कुतःविगुणम् । किंच । अनन्यत् । नविद्यतेअन्यद्यस्मात् । ब्रह्मव्यतिरिक्ताभावादपि
निरपेक्षस्त्वमित्यर्थः । तर्हिसर्वात्मकत्वेतत्तद्विकारप्रसंगोदुर्वारःतत्राह । अन्यत्सर्वंतोप्यविरिक्तंचकारणत्वात् । नह्येतन्मृत्सुखात्मकब्रह्मस्वरूपस्यतवान्यापेक्षास्ति । अतःकेवलं
भक्तानुग्रहार्थमेवतवैश्वर्यंनस्वार्थमित्यर्थः ७

॥ श्रीबादरायणिरुवाच ॥ वृषध्वजोनिशम्येदंयोषिद्रूपेणदानवान् ॥ मोहयित्वासुरगणान्हरिःसोममपाययत् १ वृषमारुह्यगिरिशःसर्वभूतगणैर्वृतः ॥
सोमयाचययौद्रष्टुंयत्रास्तेमधुसूदनः २ सभाजितोभगवतासादरंसोमयाभवः ॥ सूपविष्टउवाचेदंप्रतिपूज्यस्मयन्हरिम् ३ ॥ श्रीमहादेवउवाच ॥ देव
देवजगव्द्यापिन्जगदीशजगन्मय ॥ सर्वेषामपिभावानांत्वमात्माहेतुरीश्वरः ४ आद्यंतावस्ययन्मध्यमिदमन्यदहंबहिः ॥ यतोऽव्ययस्यनैतानितत्सत्यंब्र
ह्मचिद्भवान् ५ तवैवचरणांभोजंश्रेयस्कामानिराशिषः ॥ विसृज्योभयतःसंगंमुनयःसमुपासते ६ त्वंब्रह्मपूर्णममृतंविगुणंविशोकमानंदमात्रमविकारमनन्य
दन्यत् ॥ विश्वस्यहेतुरुदयस्थितिसंयमानामात्मेश्वरश्चतदपेक्षतयाऽनपेक्षः ७

॥ श्रीशुकउवाच ॥ हरिःयोषिद्रूपेणदैत्यान्संमोह्यदेवान्सोमंअपाययत् १ इदंश्रुत्वाशिवः देव्यासहवृषंआरुह्ययत्रहरिःआस्तेतत्रययौ २ भगवतासत्कृतः शिवउपविष्टः ॥२१॥
सन् हरिंप्रतिपूज्यइदंआह ३ ॥ शिवउवाच ॥ हेदेवदेव हेजगदीश सर्वभावानांत्वंहेतुः ४ आत्माअसि अस्यजगतः आद्यंतौमध्यंचयतः भवंति तच्चिद्रूपंब्रह्मैवभवान् ५
किंच मुनयः संगंत्यक्त्वातवैवचरणांबुजंउपासते ६ ७

अनन्यत्वमन्यत्वंचैकस्यकुतइत्याशंक्यदृष्टांतेनोपपादयति । सदसत्कार्यकारणरूपंद्वयम् । अद्वयंचपरमकारणंत्वमेवैकः । कृतंकुंडलादिरूपंद्वयम् । अकृतंचकेवलमद्वयंस्वर्णंयथैकमेव
तद्वदेवेहत्वयिवस्तुतोभेदोनास्ति । कथंतर्हिमेद प्रतीतिस्तत्राह । अज्ञानतइति । कुतःयस्मान्निरुपाधिकस्यैवतवायंगुणैर्व्यतिकरोभेदःनस्वतः ८ अतएव ( कवयः ) त्वांबहुधावर्णयं
तितस्त्वतस्तुकोपिनजानंतीत्याह द्वाभ्याम् । त्वांब्रह्मवेदांतिनोश्वयंतिमन्यंते । त्वामेवधर्ममीमांसकामन्यंते । प्रकृतिपुरुषयोःपरंपुमांसंसांख्याः । विमलाउत्कर्षिणीज्ञानाक्रियायोमायः
ह्रीसत्याईशानाअनुग्रहाचेत्येवंनवशक्तियुतंपरंपांचरात्राः । महापुरुषंपातंजलाः ९ परायुर्ब्रह्मा । सत्त्वसर्गाःसत्त्वगुणेनसृष्टाअपियेनत्वयाविरचितंविश्वमपिखलुतत्त्वतोनजानंतिकिंपुन
स्त्वाम् । हेईशअभद्रंराजसंतामसंचवृत्तंउत्पत्तिर्वृत्तिश्चयेषांतेनजानंतीतिकिमुवक्तव्यम् १० किंतु । त्वंसर्वंजानासीत्याह । सःअवरुंत्सेव्याप्नोषिजानासि । किंतत्सर्वं समीहितंस्वकृतम् ।
अदःस्थितिजन्मनाशंअमुष्यजगतोजन्मादि । भूतानामीहितंच । जगतोभवबंधमोक्षंच । व्याप्तौदृष्टांतः । चराचराख्यंदेहजातंखंचयथावायुराविशतितथा ! कथमवरुंत्से । तदात्मकत
यातस्यसर्वस्यात्मतयेत्यर्थः । आत्मत्वेहेतुःअवगमःज्ञानरूपइति ११ एवंस्तुत्वाप्रस्तुतंविज्ञापयति । अवताराइतिद्वाभ्यां । तेत्वया १२ १३ १४ सुरकार्याणियोषिद्वेषेणपाविष्यंतीतिप
श्यता । अवश्यंतावदुन्मत्तान्दैत्यान्वंचयित्वादेवेभ्यो ऽमृतंदेयम् । नचैवंवैषम्यंरूपांतरेणकर्तुमुचितम् । अतोवंचनमोहनादिसारंकामिनीरूपंमयाधृतमिति १५ तद्रूपंदर्शयिष्यामि । सं
कल्पप्रभवः कामस्तस्योदयोयस्मात् ( अतःकामिनांपुंसांबहुमंतव्यम् ) १६

एकस्त्वमेवसदसद्द्वयमद्वयंचस्वर्णंकृताकृतमिवेहनवस्तुभेदः ॥ अज्ञानतस्त्वयिजनैर्विहितोविकल्पोयस्माद्गुणव्यतिकरोनिरुपाधिकस्य ८ त्वांब्रह्मके
चिदवयंत्युतधर्ममेकएकेपरंसदसतोःपुरुषंपरेशम् ॥ अन्येऽवयंतिनवशक्तियुतंपरंत्वांकेचिन्महापुरुषमव्ययमात्मतंत्रम् ९ नाहंपरायुर्ऋषयोनमरीचिमु
ख्याजानंतियद्विरचितंखलुसत्त्वसर्गाः ॥ यन्माययामुषितचेतसईशदैत्यमर्त्यादयःकिमुतशश्वदभद्रवृत्ताः १० सत्वंसमीहितमदःस्थितिजन्मनाशंभूतेहि
तंचजगतोभवबंधमोक्षौ ॥ वायुर्यथाविशतिखंचचराचराख्यंसर्वंतदात्मकतयाऽवगमोऽवरुंत्से ११ अवतारामयादृष्टारममाणस्यतेगुणैः ॥ सोहंतद्द्रष्टुमिच्छा
मियत्तेयोषिद्वपुर्धृतम् १२ येनसंमोहितादैत्याःपायिताश्चामृतंसुराः ॥ तद्दिदृक्षवआयाताःपरंकौतूहलंहिनः १३ ॥ श्रीशुकउवाच ॥ एवमभ्यर्थितोवि
ष्णुर्भगवान्शूलपाणिना ॥ प्रहस्यभावगंभीरंगिरिशंप्रत्यभाषत १४ ॥ ॥ श्रीभगवानुवाच ॥ ॥ कौतूहलायदैत्यानांयोषिद्वेषोमयाकृतः ॥ पश्यतासु
रकार्याणिगतेपीयूषभाजने १५ ततेऽहंदर्शयिष्यामिदिदृक्षोःसुरसत्तम ॥ कामिनांबहुमंतव्यंसंकल्पप्रभवोदयम् १६

८ वेदांतिनः त्वांब्रह्ममन्यंते मीमांसकास्त्वांधर्ममन्यंते इत्यादि ९ किंच त्वद्रचितंविश्वंअस्मदादयः नजानंति अन्येदैत्यादयः नेतिकिम् १० ११ एवंस्तुत्वाविज्ञापयति
हेहरेगुणैःरममाणस्यतेमयाबहवः अवताराः दृष्टाः सोऽहंतवयोषिद्रूपं द्रष्टुंइच्छामि १२ येनदैत्याः मोहिताः सुराः अमृतंपायिताः तद्रूपंदर्शय परंनः कौतूहलमस्ति १३
॥ श्रीशुकउवाच ॥ एवंप्रार्थितःविष्णुः प्रहस्याशिवंअभाषत १४ ॥ श्रीभगवानुवाच ॥ हेशिव दैत्यानांकौतूहलाय अमृतपात्रेगतेसति देवकार्यार्थं योषिद्वेषःकृतः १५
तद्रूपंतेदर्शयिष्यामि १६

१७ विचित्राणिपुष्पाणि अरुणाःपल्लवाश्चयेषांद्रुमायस्मिन् । लसद्दुकूलेनपर्यस्तेपरिहृतेनितंबेमेखलायस्यास्ताम् १८ निपततुत्पतत्कंदुकलीलावशेनयेआवर्तनोद्वर्तने नमनोन्नमनेताभ्यां कंपितयोःस्तनयोःप्रकृष्टहाराणांचोरुभारैःप्रतिपदंभज्यमानामिव । चलत्पदमेवप्रवालवत्कोमलंततस्ततोनयंतीव १९ दिक्षुभ्रमतःकंदुकस्यचापलेश्चांचल्यैःभृशंमोद्विग्नतारेआयते(दीर्घे) लोलेचंचलेलोचनेयस्याः स्वकर्णाभ्यांविभ्राजितेयेकुंडलेताभ्यामुल्लसंतौकपोलौताभ्यांचनीलालकैश्चमंडितमाननंयस्याः २० संनह्यतींबध्नतींजगन्मोहयंतीव २१ तांवीक्ष्यदेवःश्रीरुद्रःआत्मानमंतिकेस्थितामुमांस्वगणांश्चनवेद । कथंभूतः । इतिएवंभूतयाकंदुकलीलयाईषद्व्रीडितयाअस्फुटस्मितंतेनसहविसृष्टोयःकटाक्षःतेनमुष्टोवंचितः । अतएवस्वयंवनितायाःप्रेक्षणंतयाचयत्प्रतिसमीक्षणंताभ्यांविह्वलआत्मामनोयस्य २२ तंकेदुकमनुव्रजंत्याःस्त्रियाःलघुसूक्ष्मंवासः सहसूत्रंकांचीसहितम् २३ निर्भर्त्स्यावकुंचितकटाक्षैरात्मानंगिरीशमाचरंतीम् २४ (भवान्याःअनादरेषष्ठी । तामनादृत्येत्यर्थः) तत्पदंतस्याःसमीपंययौ २५ (नान्वतिष्ठतनानुकूलाभूत्) २६ २७ २८ २९ अंगहेराजन् ३०

श्रीशुकउवाच ॥ इतिब्रुवाणोभगवांस्तत्रैवांतरधीयत ॥ सर्वतश्चारयंश्चक्षुर्भवआस्तेसहोमया १७ ततोददर्शोपवनेवरस्त्रियंविचित्रपुष्पारुणपल्लवद्रुमे ॥ विक्रीडतींकंदुकलीलयालसद्दुकूलपर्यस्तनितंबमेखलाम् १८ आवर्तनोद्वर्तनकंपितस्तनप्रकृष्टहारोरुभरैःपदेपदे ॥ प्रभज्यमानामिवमध्यतश्चलत्पदप्रवालंनयतींततस्ततः १९ दिक्षुभ्रमत्कंदुकचापलैर्भृशंप्रोद्विग्नतारायतलोललोचनाम् ॥ स्वकर्णविभ्राजितकुंडलोल्लसत्कपोलनीलालकमंडिताननाम् २० श्लथद्दुकूलंकबरींचविच्युतांसंनह्यतींवामकरेणवल्गुना ॥ विनिघ्नतींचान्यकरेणकंदुकंविमोहयंतींजगदात्ममायया २१ तांवीक्ष्यदेवइतिकंदुकलीलयेषद्व्रीडास्फुटस्मितविसृष्टकटाक्षमुष्टः ॥ स्त्रीप्रेक्षणप्रतिसमीक्षणविह्वलात्मानात्मानमंतिकउमांस्वगणांश्चवेद २२ तस्याःकराग्रात्सतुकंदुकोयदागतोविदूरंतमनुव्रजत्स्त्रियाः ॥ वासःससूत्रंलघुमारुतोऽहरद्भवस्यदेवस्यकिलानुपश्यतः २३ एवंतांरुचिरापांगींदर्शनीयांमनोरमाम् ॥ दृष्ट्वातस्यांमनश्चक्रेविषज्जंत्यांभवःकिल २४ तयापहृतविज्ञानस्तत्कृतस्मरविह्वलः ॥ भवान्याअपिपश्यंत्यागतह्रीस्तत्पदंययौ २५ सातमायांतमालोक्यविवस्त्राव्रीडिताभृशम् ॥ निलीयमानावृक्षेषुहसंतीनान्वतिष्ठत २६ तामन्वगच्छद्भगवान्भवःप्रमुषितेंद्रियः ॥ कामस्यचवशंनीतःकरेणुमिवयूथपः २७ सोनुव्रज्यातिवेगेनगृहीत्वाऽनिच्छतींस्त्रियम् ॥ केशबंधउपानीयबाहुभ्यांपरिषस्वजे २८ सोपगूढाभगवताकरिणाकरिणीयथा ॥ इतस्ततःप्रसर्पंतीविप्रकीर्णशिरोरुहा २९ आत्मानंमोचयित्वांगसुरर्षभभुजांतरात् ॥ प्राद्रवत्सापृथुश्रोणीमायादेवविनिर्मिता ३०

॥ श्रीशुकउवाच ॥ भगवानृइत्युक्त्वाअंतरधीयत ततोभवः सर्वतश्चक्षुश्चारयन्देव्यासह आस्ते १७ अथविचित्रपुष्पारुणपल्लवद्रुमेउपवनेकंदुकलीलयाक्रीडंतीं १८ १९ २० श्लथद्दुकूलांच्युतकबरींवामकरेणसन्नह्यंतीं अन्येनकंदुकंनिघ्नंतींजगन्मोहयंतीं २१ तांवीक्ष्य भवः तत्प्रेक्षणेनविह्वलःसन्अंतिकस्थांउमांस्वगणांश्चनवेद २२ तस्याः करात्कंदुकः यदादूरंगतः तदानुव्रजंत्याः तस्याः ससूत्रंवासः मारुतःअहरत् २३ एवंभवः तांदृष्ट्वा तस्यांरंतुंमनश्चक्रे २४ ततः तत्कृतस्मरविह्वलः शिवः देव्याःपश्यंत्याः तत्समीपंययौ २५ तदासातंविलोक्यविवस्त्रालज्जयावृक्षेषुनिलीयमानानान्वतिष्ठत् २६ भवः तांअन्वगच्छत् कामवशंनीतः२७ तांअनुव्रज्यअनिच्छंतींस्त्रियंकेशबंधेगृहीत्वापरिषस्वजे २८ आलिंगितासाइतस्ततःप्रसर्पंती तद्भुजात् आत्मानंमोचयित्वा प्राद्रवत् २९ ३०

( पदवींपंथानम् । तामन्वधावदित्यर्थः ) ३१ ( शुष्मिणोमत्तस्ययूथपस्यगजस्य । वासितांमैथुनेच्छावतींकरिणीम् ) ३२ ( रुद्रस्यक्षेत्राणिसांनिध्यकराणिहेमभूक्षेत्राणिआकराआसन् ) ३३ एवं ( यत्रकच) सरित्सरस्सुशैलादिषुच तामनुधावतो ( रेतश्चस्कंदतत्रक्षेत्रयआसन् । यतस्तत्रहरः) संनिहितोबभूव ३४ ३५ (अगदात्मनोऽवगतंमहात्म्यंयेनसआत्मनः) तदुहमायया जडीकरणं(अद्भुतंनयेमे) ३६ (अविक्रतंस्वस्थम्) ३७ आत्मनास्वयंस्वांनिष्ठांमकाविम् ३८ (विषक्तोमोहपाशयंत्रितःस्त्वदृतेत्वांविना । भावान्चेष्टाविशेषान्)३९ कालेनवृद्ध्या दिनिमित्तेनमयाकालरूपेणभागशोरजआद्यंशेन समेतामदृशीनासती ४० ४१ (विष्णोरंशभूतांतांशंसतांस्तुवतांसतांहेभारत) ४२ (अयिहेप्रियेव्यपश्यःदृष्टवत्यसि । कलानांविभूतीनां ऋषभोपिअवशोऽपरवशोपिविमुह्ये ) ४३ ( वर्षसहस्रांतेयोगात्समाधेरुपारतंमार्कंध्यायसीतित्वंयमपृच्छः सएषःयत्रकालोनविशतेअगरिच्छन्नत्वात् । नचवेदःअगोचरत्वात् ) ४४

तस्यासीपदवींरुद्रोविष्णोरद्भुतकर्मणः ॥ प्रत्यपद्यतकामेनवैरिणेवविनिर्मिता ३१ तस्यानुधावतोरेतश्चस्कंदामोघरेतसः ॥ शुष्मिणोयूथपस्येववासिता
मनुधावतः ३२ यत्रयत्रापतन्मह्यांरेतस्तस्यमहात्मनः ॥ तानिरुद्रस्यहेम्नश्चक्षेत्राण्यासन्महीपते ३३ ॥ सरित्समुद्रशैलेषुवनेषूपवनेषुच ॥ यत्रकचा
सन्नृषयस्तत्रसन्निहितोहरः ३४ स्कन्नेरेतसिसोऽपश्यदात्मानंदेवमायया ॥ जडीकृतंनृपश्रेष्ठसंन्यवर्ततकश्मलात् ३५ अथावगतमाहात्म्यआत्मनोजग
दात्मनः ॥ अपरिज्ञेयवीर्यस्यनमेनेतदुहाद्भुतम् ३६ तमविक्लवमव्रीडमालक्ष्यमधुसूदनः ॥ उवाचपरमप्रीतोबिभ्रत्स्वांपौरुषींतनुम् ३७ ॥ श्रीभगवा
नुवाच ॥ दिष्ट्यात्वंविबुधश्रेष्ठस्वांनिष्ठामात्मनास्थितः ॥ यन्मेस्त्रीरूपयास्वैरंमोहितोप्यंगमायया ३८ कोनुमेतितरेन्मायांविषक्तस्त्वदृतेपुमान् ॥ तां
स्तान्विसृजतींभावान्दुस्तरामकृतात्मभिः ३९ सेयंगुणमयीमायानत्वामभिभविष्यति ॥ मयासमेताकालेनकालरूपेणभागशः ४० ॥ श्रीशुकउवाच ॥
एवंभगवताराजन्श्रीवत्सांकेनसत्कृतः ॥ आमंत्र्यतंपरिक्रम्यसगणःस्वालयंययौ ४१ आत्मांशभूतांतांमायांभवानींभगवान्भवः ॥ शंसतामृषिमुख्यानां
प्रीत्याचष्टाथभारत ४२ अयिव्यपश्यस्त्वमजस्यमायांपरस्यपुंसःपरदेवतायाः ॥ अहंकलानामृषभोविमुह्येययाऽवशोन्येकिमुतास्वतंत्राः ४३ यंमामपृ
च्छस्त्वमुपेत्ययोगात्समासहस्रांतउपारतंवै ॥ सएषसाक्षात्पुरुषःपुराणोनयत्रकालोविशतेनवेदः ४४

तांअनुधावतः शिवस्यरेतः पपात ३१ ३२ तद्रेतः महांयत्रयत्रअपततृततद्रूप्यस्यहेम्नश्चक्षेत्राणिआसन् ३३ रेतसिस्कन्नेसतिशिवः आत्मानंमाययाजडीकृतम् अपश्यत् ततोमोहात्न्यवर्तत ३४ ३५ एवंअवगतमाहात्म्यः शिवः विष्णोः मायाजडीकरणंअद्भुतंनमेने ३६ ततोभगवान्स्वतनुंबिभ्रत् प्रीतःसन्शिवंआह ३७ हेदेवमयास्वमाययामोहितोऽपित्वंस्वांप्रकृतिंस्थितः ३८ एतत्दिष्ट्यामेमायांत्वदृतेकोनुपुमान् अतितरेत् ३९ सेयंमेमायात्वांनाभिभविष्यति४०॥श्रीशुकउवाच ॥ एवंभगवतासत्कृतः शिवःतं आमंत्र्यपरिक्रम्यस्वालयंययौ ४१ ततोभवः भवानींऋषीणांमध्येइदंसर्वंआह ४२ अयित्वंअजस्यमायांव्यपश्यः अहंश्रेष्ठोऽपिययाविमुह्येअन्येअस्वतंत्राःकिमुत ४३ ४४

१ रूप्यस्येतिपाठः मु. पु.

अष्टाध्याय्यर्थनिगमनंइतीति ४५ एतत्कीर्तनादौफलमाह । एतदिति ( नरिष्यतेननश्यति ) ४६ भगवताकृतंभक्तपक्षपातंस्मरन्नमस्करोति । असतामविषयम् । भावोभजनंतेनग म्यमंघ्रिंप्रपन्नान्शरणागतान् । सिंधुमथ्यंसिंधौमंथनेजातममृतंयआशयत्अभोजयत् ४७ ॥ ॥ इतिश्रीभागवतेमहापुराणेअष्टमस्कंधेटीकायांद्वादशोध्यायः ॥ १२ ॥ ॥ ७ ॥ ॥ त्रयोदशेतुवर्ण्यंतेसप्तमादीन्यनुक्रमात् । मन्वंतराणिसर्वाणिषड्विधानिपृथक्पृथक् ॥ १ ॥ सप्तमादिमन्वंतराण्याहमनुरित्यादिना यावदध्यायसमाप्ति ( इदानींवर्तमानोयःसप्तमो मनुः ) १ ( इक्ष्वाकुप्रभृतयोदशैतेवैवस्वतस्यश्राद्धदेवस्यपुत्राः ) २ ३ आदित्यादयोदेवाइत्यन्वयः ( ऋषभःश्रेष्ठः ) ४ ५ भगवतोजन्मअवतारः । तमेवाह । आदित्यानांविवस्वा नर्यमापूषेत्याद्युक्तानांमध्येअवरंजन्मयस्यसः ६ शक्त्याअवतारेणअन्वितानि ७ अष्टमंमनुंवक्तुंकथायाहविवस्वतइतित्रिभिः ८

श्रीशुकउवाच ॥ इतितेऽभिहितस्तातविक्रमःशार्ङ्गधन्वनः ॥ सिंधोर्निर्मथनेयेनधृतःपृष्ठेमहाचलः ४५ एतन्मुहुःकीर्तयतोऽनुशृण्वतोनरिष्यतेजातुसमु द्यमःक्वचित ॥ यदुत्तमश्लोकगुणानुवर्णनंसमस्तसंसारपरिश्रमापहम् ४६ असदविषयमंघ्रिंभावगम्यंप्रपन्नानमृतममरवर्यानाशयत्सिंधुमथ्यम् ॥ कपट युवतिवेषोमोहयन्यःसुरारींस्तमहमुपसृतानांकामपूरंनतोस्मि ४७ ॥ ॥ इतिश्रीभागवतेमहापुराणेअष्टमस्कंधेद्वादशोऽध्यायः १२ ॥ ॥ ७ ॥ ॥ श्रीशुकउवाच ॥ मनुर्विवस्वतःपुत्रःश्राद्धदेवइतिश्रुतः ॥सप्तमोवर्तमानोयस्तदपत्यानिमेशृणु १ इक्ष्वाकुर्नभगश्चैवधृष्टःशर्यातिरेवच ॥ नरिष्यंतोथना भागःसप्तमोदिष्टउच्यते २ करूषश्चपृषध्रश्चदशमोवसुमान्स्मृतः ॥ मनोर्वैवस्वतस्यैतेदशपुत्राःपरंतप ३ आदित्यावसवोरुद्राविश्वेदेवामरुद्गणाः ॥ अ श्विनावृषभोराजन्निंद्रस्तेषांपुरंदरः ४ कश्यपोऽत्रिर्वसिष्ठश्चविश्वामित्रोथगौतमः ॥ जमदग्निर्भरद्वाजइतिसप्तर्षयःस्मृताः ५ अत्रापिभगवज्जन्मकश्यपाददि तेरभूत् ॥ आदित्यानामवरजोविष्णुर्वामनरूपधृक् ६ संक्षेपतोमयोक्तानिसप्तमन्वंतराणिते ॥ भविष्याण्यथवक्ष्यामिविष्णोःशक्त्यान्वितानिच ७ विव स्वतश्चद्वेजायेविश्वकर्मसुतेउभे ॥ संज्ञाछायाचराजेंद्रयेप्रागभिहितेतव ८

॥ श्रीशुकउवाच ॥ हेनृप एवंते हरेः विक्रमः उक्तः ४५ इदंउत्तमश्लोकगुणानुवर्णनंशृण्वतः कीर्तयतः पुंसः उद्यमोननश्यति ४६ एवंकपटयुवतिवेषः दैत्यान्मोहयन् सन् अंघ्रिंप्रपन्नान्देवान् अमृतं अभोजयत् तंकामपूरंनतोऽस्मि ४७ ॥ इत्यष्टमेद्वादशः ॥ १२ ॥ ॥ ७ ॥ ॥ श्रीशुकउवाच ॥ अथविवस्वतःपुत्रःश्राद्धदेवः सप्तमोमनुः १ इक्ष्वाकुः नभगः धृष्टः शर्यातिः नरिष्यंतः नाभागः दिष्टः करूषः पृषध्रः वसुमान् एतेतत्सुताः २ ३ आदित्याः वसवः रुद्राविश्वेदेवाः मरुद्गणाः अश्विनौ ऋभवः एतेदेवाः पुरंदरः इंद्रः ४ कश्यपाद्याः सप्तर्षयः ५ कश्यपाददित्यांवामनावतारः ६ एवंसप्तमन्वंतराणिउक्तानि भाव्यानिवक्ष्ये ७ विवस्वतःमनोः द्वेभार्ये छाया संज्ञाचेति ८

एकेवडवांतृतीयामाहुः । ममतुसंज्ञैवक्वडवेतिमतम् । तदुक्तंषष्ठे । सैवभूत्वातुवडवानासत्यौसुषुवेभुवि ' इति । यमोयमीश्राद्धदेवश्चेतित्रयः ( संज्ञायाःसुताः ) यमीयमुना ९ सावर्णिः पुत्रः ( यातपतीसंवरणस्यभार्यासीत् । वडवायाःपुत्रौतुअश्विनौ ) १० ११ १२ पदत्रयंयाचमानायइमासर्वांमहींसप्तमेमन्वंतरे । विष्णोःप्रसादेनराद्धंकल्पंइंद्रपदंहित्वेत्यर्थः १३ ( स्वर्गा अष्टमेमन्वंतरे । स्वर्गादधिकेसुतलेऽधुनाऽऽस्ते ) १४ रामःपरशुरामः । द्रोणपुत्रोऽश्वत्थामा १५ इदानींतुस्वयोमतआसते १६ ( सरस्वत्यांजातःप्रभुःस्थानंस्वर्गंहृत्वाबलायदास्य ) १७ १८ श्रुतसंज्ञकइंद्रः १९ ( संराद्धांसंसिद्धां ) २० २१ हविष्मत्प्रमुखाइत्युक्तानामेवकेषांचिन्नामान्याहहविष्मानिति २२

तृतीयांवडवामेकेतासांसंज्ञासुतास्त्रयः ॥ यमोयमीश्राद्धदेवश्छायायाश्चसुतान्शृणु ९ सावर्णिस्तपतीकन्याभार्यासंवरणस्ययां ॥ शनैश्चरस्तृतीयोभूदश्विनौवडवात्मजौ १० अष्टमेऽतरआयातेसावर्णिर्भवितामनुः ॥ निर्मोकविरजस्काद्याःसावर्णेस्तनयान्नृप ११ तत्रदेवाःसुतपसोविरजाअमितप्रभाः ॥ तेषांविरोचनसुतोबलिरिंद्रोभविष्यति १२ दत्त्वेमांयाचमानायविष्णवेयःपदत्रयम् ॥ राद्धमिंद्रपदंहित्वाततःसिद्धिमवाप्स्यति १३ योसौभगवताबद्धःप्रीतेनसुतलेपुनः ॥ निवेशितोऽधिकेस्वर्गादधुनाऽऽस्तेस्वराडिव १४ गालवोदीप्तिमान्रामोद्रोणपुत्रःकृपस्तथा ॥ ऋष्यशृंगःपिताऽस्माकंभगवान्बादरायणः १५ इमेसप्तर्षयस्तत्रभविष्यंतिस्वयोगतः ॥ इदानीमासतेराजन्स्वेस्वआश्रममंडले १६ देवगुह्यात्सरस्वत्यांसार्वभौमइतिप्रभुः ॥ स्थानंपुरंदराद्धृत्वाबलयेदास्यतीश्वरः १७ नवमोदक्षसावर्णिर्मनुर्वरुणसंभवः ॥ भूतकेतुर्दीप्तिकेतुरित्याद्यास्तत्सुतान्नृप १८ पारामरीचिगर्भाद्यादेवाइंद्रःश्रुतःस्मृतः ॥ द्युतिमत्प्रमुखास्तत्रभविष्यंत्यृषयस्ततः १९ आयुष्मतोंबुधारायामृषभोभगवत्कला ॥ भवित्रीयेनसंराद्धांत्रिलोकींभोक्ष्यतेश्रुतः २० दशमोब्रह्मसावर्णिरुपश्लोकसुतोमहान् ॥ तत्सुताभूरिषेणाद्याहविष्मत्प्रमुखाद्विजाः २१ हविष्मान्सुकृतिःसत्योजयोमूर्तिस्तदाद्विजाः ॥ सुवासनविरुद्धाद्यादेवाःशंभुःसुरेश्वरः २२

तृतीयावडवा । यमःयमी श्राद्धदेवः एतेत्रयः संज्ञासुताः ९ सावर्णिः तपती शनैश्चरः एतानिछायापत्यानि अश्विनौवडवासुतौ १० अष्टमेंऽतरेसावर्णिर्मनुर्भविष्यति निर्मोकविरजस्काद्याः तत्सुताः ११ सुतपसः विरजाः अमृतप्रभाः एतेदेवाः बलिः इंद्रोभविष्यति १२ यः सप्तमेंऽतरेपदत्रयंयाचमानायविष्णवेमहींदत्वा अष्टमेंऽतरेविष्णोःप्रसादेनलब्धंइंद्रपदंहित्वाततः सिद्धिंप्राप्स्यति १३ सः अधुनासुतले आस्ते १४ गालवः दीप्तिमान् परशुरामः अश्वत्थामा कृपः ऋष्यशृंगःव्यासः १५ एते सप्तऋषयः १६ सार्वभौमः हरेरवतारः सः इंद्रात्स्वर्गंहृत्वाबलयेदास्यति १७ अथदक्षसावर्णिः नवमोमनुःभूतकेतुः दीप्तिकेत्वादयः पुत्राः १८ पारामरीचिगर्भाद्याः देवाः श्रुतः इंद्रः द्युतिमत्प्रमुखाः ऋषयः १९ आयुष्मतः अंबुधारायांपत्न्यांऋषभावतारः येनराद्धांत्रिलोकींश्रुतनामाइंद्रःभोक्ष्यति २० अथब्रह्मसावर्णिः दशमोमनुः भूरिषेणाद्याःतत्सुताः २१ हविष्मान्सुकृतः सत्यः जयः मूर्तिः एतेऋषयः सुवासनविरुद्धाद्याःदेवाः शंभुःइंद्रः २२

विषूच्यांजातःसन् २३ एकादशमइत्यादिरार्थः ( अनागतोभविष्यन् ) २४ २५ ( आर्यकस्यवैधृतायांसुतःधर्मसेतुसंज्ञकः ) २६ २७ २८ तस्यमन्वंतरंसाधयिष्यति । सत्यसहसो यासूनृतायांतस्याःसुतःसन् २९ ३० ३१ दिवस्पतेरिंद्रस्योपहर्तासंपादको (देवहोत्रस्यबृहत्यां) संभविष्यति ३२ ३३ ३४ (वितानायांसंभूतः) क्रियातंतून्कर्मसंततीःवितायवितायविस्तार यिष्यति ३५ युगसाहस्रेणपर्ययःपरिवर्तोयस्य । युगसहस्रप्रमाणइत्यर्थः ॥ ३६ ॥ ॥ इतिश्रीभागवतेमहापुराणेअष्टमस्कंधेटीकायांत्रयोदशोऽध्यायः १३ ॥ ७ ॥

विष्वक्सेनोविषूच्यांतुशंभोःसख्यंकरिष्यति ॥ जातःस्वांशेनभगवान्गृहेविश्वसृजांविभुः २३ मनुर्वैधर्मसावर्णिरेकादशमआत्मवान् ॥ अनागतास्तत्सुता श्चसत्यधर्मादयोदश २४ विहंगमाःकामगमानिर्वाणरुचयःसुराः ॥ इंद्रश्चवैधृतस्तेषामृषयश्चारुणादयः २५ आर्यकस्यसुतस्तत्रधर्मसेतुरितिस्मृतः ॥ वैधृतायांहरेरंशस्त्रिलोकींधारयिष्यति २६ भवितारुद्रसावर्णीराजन्द्वादशमोमनुः ॥ देववानुपदेवश्चदेवश्रेष्ठादयःसुताः २७ ऋतधामाचतत्रेंद्रोदेवाश्चह रितादय ॥ ऋषयश्चतपोमूर्तिस्तपस्याग्नीध्रकादयः २८ स्वधामाख्योहरेरंशःसाधयिष्यतितन्मनोः ॥ अंतरंसत्यसहसःसूनृतायाःसुतोविभुः २९ मनु स्त्रयोदशोभाव्योदेवसावर्णिरात्मवान् ॥ चित्रसेनविचित्राद्यादेवसावर्णिदेहजाः ३० देवाःसुकर्मसुत्रामसंज्ञाइंद्रोदिवस्पतिः ॥ निर्मोकतत्त्वदर्शाद्याभवि ष्यंत्यृषयस्तदा ३१ देवहोत्रस्यतनयउपहर्तादिवस्पतेः ॥ योगेश्वरोहरेरंशोबृहत्यांसंभविष्यति ३२ मनुर्वाइंद्रसावर्णिश्चतुर्दशमएष्यति ॥ उरुगंभी रबुध्नाद्याइंद्रसावर्णिवीर्यजाः ३३ पवित्राश्चाक्षुषादेवाःशुचिरिंद्रोभविष्यति ॥ अग्निर्बाहुःशुचिःशुद्धोमागधाद्यास्तपस्विनः ३४ सत्रायणस्यतनयोबृह द्भानुस्तदाहरिः ॥ वितानायांमहाराजक्रियातंतून्वितायिता ३५ राजंश्चतुर्दशैतानित्रिकालानुगतानिते ॥ प्रोक्तान्येभिर्मितःकल्पोयुगसाहस्रपर्ययः ३६ ॥ ॥ इतिश्रीभागवतेमहापुराणेअष्टमस्कंधेमन्वंतरानुवर्णनंनामत्रयोदशोऽध्यायः १३ ॥ ॥ ७ ॥

विष्वक्सेनअवतारः सः शंभोःसख्यंकरिष्यति २३ एकादशःमनुःधर्मसावर्णिः सत्यधर्मादयोदश तत्सुताः २४ विहंगमाःकामगमाःनिर्वाणरुचयोदेवाःवैधृतिःइंद्रः अरु णादयः ऋषयः २५ धर्मसेतुरवतारः सः त्रिलोकींधारयिष्यति २६ द्वादशोमनुः रुद्रसावर्णिः देववान् उपदेवः देवश्रेष्ठादयः तत्सुताः २७ ऋतधामाइंद्रः हरितादयो देवाः आग्नीध्रकादयः ऋषयः २८ स्वधामाख्यः अवतारः २९ त्रयोदशोमनुः देवसावर्णिः चित्रसेनविचित्राद्याः तत्सुताः ३० सुकर्मसुत्रामसंज्ञाः देवाः दिवस्पतिरिं द्रः निर्मोकतत्त्वदर्शाद्याऋषयः ३१ योगेश्वरः अवतारः ३२ चतुर्दशोमनुः इंद्रसावर्णिःउरुगंभीरबुध्नाद्याः तत्सुताः ३३ पवित्राश्चाक्षुषाः देवाः शुचिरिंद्रः अग्निर्बाहुः शुचिः शुद्धः मागधाद्याऋषयः ३४ बृहद्भानुरवतारः सः कर्मसंततीर्विस्तारयिष्यति ३५ हेराजन् एतानिमन्वंतराणि ( १४ ) एभिर्युगसहस्रप्रमाणः कल्पोमितः ३६ ॥ इत्यष्टमेत्रयोदशः १३ ॥ ७ ॥

चतुर्दशे तु तेषां मन्वादीनां कथा यथा । पृथक्कर्माणि वर्ण्यंते भगवद्ब्रह्मशर्मविनाय ॥ १ ॥ ( भगवान्यथा येन प्रकारेण प्रवृत्तः । येइमेमन्वादयश्च यस्मिन् कर्मणि येनपुरुषेण नियुक्तास्तत्सर्वं ) १ पुरुषेण इन्द्रेण यज्ञाद्यवतारैः शास्यंते नियुज्यंते इति तथा २ तदेवाह यज्ञादयइति ( आभिस्तनूभिः प्रचोदिता मन्वादयः जगद्यात्रां नयंति ) ३ ऋष्यादीनां कर्माण्याह । चतुर्युगांत इति चतु र्भिः । यतः येभ्यः श्रुतिगणेभ्यः ( धर्मस्तान् श्रुतिगणान् यथावत् ) ४ उदिताः उक्ताः संयताः संतो महांधर्मं संचारयंति । महांधर्मं प्रवर्तयंतीत्यर्थः ( तपः शौचं दया सत्यमिति पादाः प्रकीर्ति ताः ) ५ प्रजापाला मनुपुत्रास्तं धर्मं पालयंति । यावदंतं यावन्मन्वंतरावसानं । त्रिभागशः पुत्रपौत्रादिक्रमेण । येचान्ये यात्राणं थिव्यादयो यत्र कर्मणि भोक्तृत्वेनान्विताः स्तैश्च सह ६ ( प्रव र्षतिवृष्टिं करोति ) ७ प्रसंगाद्रूपांतरेणापि जगद्यात्राप्रवर्तनमाह ज्ञानमिति द्वाभ्यां । सिद्धाः सनकादयः । ऋषयो याज्ञवल्क्यादयः योगेशा दत्तात्रेयादयः तत्तद्रूपः सन् ज्ञानं कर्मयोगं च ब्रूते ८ प्रजेशा मरीच्यादयस्तेन रूपेण सर्गं करोतीति शेषः । स्वराट् प्रभुः राजमूर्तिः । सर्वेषाममावाय भवति । पृथग्विधा गुणाः शीतोष्णादयो यस्य ९ नामरूपात्मिकया मायया विमोहितात्मभिः पुभिर्जनैः नानादर्शनैः अनेकशास्त्रैः स्तूयमानो निरूप्यमाणोपि नैव दृश्यत इत्यर्थः १० प्रासंगिकं निरूप्य प्रस्तुतमेवोपसंहरति । एतदिति । कल्पविकल्पस्य कल्पभेदस्य एतत्प्रमाणमुक्तं यत्र चतुर्दश मन्वंतराण्याहुः ॥ ११ ॥ इतिश्रीभागवते महापुराणे अष्टमस्कंधे टीकायां चतुर्दशोऽध्यायः ॥ १४ ॥

राजोवाच ॥ मन्वंतरेषु भगवान्यथा मन्वादयस्त्विमे ॥ यस्मिन्कर्मणि येयेन नियुक्तास्तद्वदस्व मे १ ॥ ऋषिरुवाच ॥ मनवो मनुपुत्राश्च मुनयश्च महीपते ॥ इंद्राः सुरगणाश्चैव सर्वे पुरुषशासनाः २ यज्ञादयो याः कथिताः पौरुष्यस्तनवो नृप ॥ मन्वादयो जगद्यात्रां नयंत्याभिः प्रचोदिताः ३ चतुर्युगांते कालेन ग्रस्ता न्श्रुतिगणान्यथा ॥ तपसा ऋषयोऽपश्यन्यतो धर्मः सनातनः ४ ततो धर्मं चतुष्पादं मनवो हरिणोदिताः ॥ युक्ताः संचारयंत्यद्धा स्वे स्वे काले महीं नृप ५ पालयंति प्रजापाला यावदंतं विभागशः ॥ यज्ञभागभुजो देवा येच तत्रान्विताश्च तैः ६ इंद्रो भगवता दत्तां त्रैलोक्यश्रियमूर्जिताम् ॥ भुंजानः पाति लोकांस्त्रीन् कामं लोके प्रवर्षति ७ ज्ञानं चानुयुगं ब्रूते हरिः सिद्धस्वरूपधृक् ॥ ऋषिरूपधरः कर्म योगं योगेशरूपधृक् ८ सर्गं प्रजेशरूपेण दस्यून्हन्यात्स्वराड्वपुः ॥ काल रूपेण सर्वेषामभावाय पृथग्गुणः ९ स्तूयमानो जनैरेभिर्मायया नामरूपया ॥ विमोहितात्मभिर्नानादर्शनैर्न च दृश्यते १० एतत्कल्पविकल्पस्य प्रमाणं प रिकीर्तितम् ॥ यत्र मन्वंतराण्याहुश्चतुर्दश पुराविदः ११ ॥ ॥ इतिश्रीभागवते महापुराणे अष्टमस्कंधे मनुवर्णनं नाम चतुर्दशोऽध्यायः १४ ॥ ७ ॥

॥ राजोवाच ॥ ॥ हे भगवन् मन्वंतरेषु इमे मन्वादयः यस्मिन्कर्मणि येन नियुक्ताः संतः यत्कुर्वंति तद्वद १ ॥ ॥ ऋषिरुवाच ॥ मनवः मनुपुत्राः मुनयः इंद्राः सुरग णाः एते सर्वे २ यज्ञाद्यवतारैः प्रचोदिताः संतः जगद्यात्रां नयंति ३ तेषां कर्माण्याह चतुर्युगांते कालग्रस्तान् वेदान् ऋषयः तपसा अपश्यन् ४ ततो मनवः चतुष्पादं धर्मं महां प्रवर्तयंति ५ मनुपुत्राः तं धर्मं पालयंति देवाः यज्ञभागान् भुंजंति ६ इंद्रः भगवद्दत्तां श्रियं भुंजानः सन् त्रिलोकान् पाति लोके प्रवर्षति ७ सिद्धरूपधृक् हरिः अनुयुगं ज्ञानं ब्रूते ऋषिरूपधरः हरिः कर्म ब्रूते योगरूपधृक् हरिः योगं ब्रूते ८ प्रजेशरूपेण सर्गं करोति राजमूर्तिः सन् दस्यून् हन्यात् कालरूपेण सर्वेषां नाशाय भवति ९ मायया मोहितात्मभिर्ज नैः नानाशास्त्रैः स्तूयमानोऽपि नैव दृश्यते १० एतत् अवांतरकल्पस्य प्रमाणं ते कीर्तितम् यत्र मन्वंतराण्याहुश्चतुर्दश पुराविदः ११ ॥ इत्यष्टमे चतुर्दशः १४ ॥

बलिंपंचदशेविश्वजिताऽऽचार्याअयाजयन् । ततोऽसौस्वर्गमजयद्भयाद्देवानिलिल्यिरे ॥ १ ॥ अथैयंतेनवाध्याध्यायात्रामंवामनचेष्टितं । निग्रहश्छलतोयत्रबलेर्भूयाननुग्रहः ॥ २ ॥ ई श्वरःस्वयंकृपणवत्कस्माद्धेतोरयाचत । लब्धार्थोभूत्वापितंकस्माद्बबंध १ ( पूर्णस्ययाच्ञा । अनागसोबलेर्बंधनंचैतत् ) २ तत्रतावद्बलेःत्रिलोकीमपहर्तुंयाच्ञादिच्छलंकर्तव्यानितिव कुंब्राह्मणाराधनबलेनबलेरकांडएवस्वर्गविजयक्रममाह । पराजितश्रीरित्यादिनायावदध्यायसमाप्ति । युद्धेपराजिताश्रीर्भूर्येनमः । इंद्रेणअसुभिश्चत्याजितःसन्भृगून्भृगोर्वंशजाञ्छुक्रा दीन् महात्मांउदाराचित्तः । अर्थानांनिवेदनेनअर्पणेन ३ त्रिणाकंस्वर्गंजेतुमिच्छंतंविश्वजितायागेनअयाजयन् । महाभिषेकणऐंद्रेणबहृचब्राह्मणप्रसिद्धेन ४ हर्यश्वस्यैंद्रस्ययेतुरंगास्तेषा मिववर्णोहरितोयेषाम् ५ पुरटंसुवर्णं तूणीइषुधी । अरिक्तौअक्षयशरौ । पितामहःप्रह्लादःजलजंशंखम् ६ विप्रैरर्जितःसंपादितोयोधनार्थोयुद्धपरिकरोयस्य । तैरेवकल्पितंस्वस्त्ययनंमंग लवाचनादियस्य । आमंत्र्यपृष्ट्वा ७ अथारुह्यरराजेतिद्वयोरन्वयः । सुत्रग्धरःशोभनमालाधरः संनद्धकवचंयस्य ८ हेमांगदाभ्यांलसंतौबाहूयस्य । धिष्ण्यस्थःकुंडस्थआहवनीयइव । अधिष्ण्यस्थोऽरण्येप्रज्वलितइवविवा ९ तुल्यमैश्वर्यं ( नियंतृत्वं ) बलंचश्रीश्चयेषांतैर्निजयूथमूतैर्दैत्ययूथपैर्वृतोययाविवितिद्वयोरन्वयः । परिधीन्दिशः १०

॥ राजोवाच ॥ बलेःपदत्रयंभूमेःकस्माद्धरिरयाचत ॥ भूत्वेश्वरःकृपणवल्लब्धार्थोपिबबंधतम् १ एतद्वेदितुमिच्छामोमहत्कौतूहलंहिनः ॥ याच्ञेश्वरस्य पूर्णस्यबंधनंचाप्यनागसः २ ॥ श्रीशुकउवाच ॥ पराजितश्रीरसुभिश्चहापितइंद्रेणराजन्भृगुभिःसजीवित ॥ सर्वात्मनातानभजद्भृगून्बलिःशिष्योम हात्माऽर्थनिवेदनेन ३ तंब्राह्मणाभृगवःप्रीयमाणाअयाजयन्विश्वजितात्रिणाकम् ॥ जिगीषमाणंविधिनाऽभिषिच्यमहाभिषेकेणमहानुभावाः ४ ततो रथःकांचनपट्टनद्धोहयाश्चहर्यश्वतुरंगवर्णाः ॥ ध्वजश्चसिंहेनविराजमानोहुताशनादासहविर्भिरिष्टात् ५ धनुश्चदिव्यंपुरटोपनद्धंतूणावरिक्तौकवचंचदि व्यम् ॥ पितामहस्तस्यददौचमालामम्लानपुष्पांजलजंचशुक्रः ६ एवंसविप्रार्जितयोधनार्थस्तैःकल्पितस्वस्त्ययनोथविप्रान् ॥ प्रदक्षिणीकृत्यकृतप्र णामःप्रह्लादमामंत्र्यनमश्चकार ७ अथारुह्यरथंदिव्यंभृगुदत्तमहारथः ॥ सुस्रग्धरोथसंनह्यधन्वीखड्गीधृतेषुधिः ८ हेमांगदलसद्बाहुःस्फुरन्मकरकुंडलः ॥ रराजरथमारूढोधिष्ण्यस्थइवहव्यवाट् ९ तुल्यैश्वर्यबलश्रीभिःस्वयूथैर्दैत्ययूथपैः ॥ पिबद्भिरिवखंदृग्भिर्दहद्भिःपरिधीनिव १०

॥ राजोवाच ॥ ईश्वरः कृपणवत्भूत्वाबलेः सकाशाद्भूमेः पदत्रयंकस्मादयाचत किंच लब्धार्थोऽपिहरिः कस्मात्तंबबंध १ एतद्वेदितुमिच्छामः २ ॥ श्रीशुकउवाच ॥ हेराजन्युद्धेइंद्रेण पराजितश्रीः बलिःभृगुभिः जीवितःसन् पश्चात्तान् सर्वात्मना अभजत् ३ ततः प्रसन्नाः भृगवः स्वर्गंजिगीषमाणंतंबलिंविश्वजितायागेनअयाजयन् ४ ततः हविर्भिरिष्टात्हुताशनात्कांचनपट्टनद्धः रथः इंद्राश्ववत् अश्वाः सिंहांकितध्वजः ५ धनुः तूणीकवचंचआस अथप्रह्लादः तस्मै अम्लानपुष्पांमालां शुक्रः शंखंच ददौ ६ एवंविप्रैः संपादितयुद्धपरिकरोबलिः तान्प्रदक्षिणीकृत्यप्रणम्यप्रह्लादंपृष्ट्वानमश्चकार ७ ततः महारथोबलिः शस्त्रालंकारादिधृत्वाभृगुदत्तरथं आरुह्यधिष्ण्यस्थः अग्निरिवशुशुभे ८ ९ अथतुल्यैश्वर्यबलश्रीभिः दैत्ययूथपैःवृतःसन् महतींआसुरींसेनांविकर्षन् १०

स्वर्द्धां अतिसमृद्धां (ययौप्रतस्थे) ११ धिक्धाम्यनुस्तंतथा त्रिषामपिपुरीं अकस्मादेवपरित्यज्यदेवेंद्रादय :पलायिताइतिवैराग्यार्थमिंद्रपुरीमनुवर्णयति । रम्यामितिसार्धैरेकादशभिः । उपव
नानिफलप्रधानानिनिकुंजानिवा । उद्यानानिपुष्पप्रधानानिदूरस्थानिवा तैः रम्यां कूजंतिविहंगमिथुनानियेषु । जायंतोमत्तामधुव्रतायेषुतैः १२ प्रवालादीनामुरुभारोयासुताःशाखायेषां
तेअमरद्रुमायेषुतैः । यत्रयासुपुरसेविताःप्रमदाःक्रीडंतिताःहंसादिकुलैराकुलाःपद्मानानलिन्यःसरांसियत्रयेषुसंततैरुपवनोद्यानैरम्यामितिपूर्वेणैवान्वयः १३ किंचपरिखाभूतयाआ
काशगंगयाआवृतां । प्राकारेणसौवर्णेनचआवृतां । अट्टालाःप्राकारोपरिरचितान्युन्नतानियुद्धस्थानानितत्सहितेन १४ पट्टःपरिबंधः । रुक्मपट्टानियेषुतैर्द्वारैरत्नांतरैःस्फटिकमयैर्गोपुरै
श्चपुरद्वारैर्जुष्टां । विभक्ताःप्रपथाराजमार्गायस्यां १५ सभाउपवेशस्थानानि । चत्वराण्यंगणानि । रथ्याउपमार्गाः । तैराढ्यांसंपन्नां । न्यर्बुदंदशकोट्यः तैर्भूषणीयैरपरिवैर्विमानैर्युतां । वज्र
विद्रुममरकतवेदयोयेषुतैःशृंगाटकैश्चतुष्पथैर्युक्ताम् १६ वयस्ताचण्यंरूपंसौकुमार्यंनित्यैववयोरूपेयासांताः । श्यामाःषोडशवर्षाः । विरजानिदिव्यानिवासांसियासांताः रूपवन्नार्यःस्वलं
कृताःस्त्रियःयत्रयस्यांभ्राजंते ( अलंकाराणांअर्चिषउपमानं । यद्वारूपवतांदेवानांनार्यः । तदादेवानांवह्नयोनारीणामर्चिषउपमानंचयुक्तम् ) १७ सुरस्त्रीणांकेशेभ्योविभ्रष्टानांनवसौगं
धिकस्रजांआमोदंउपादाय १८ हेमजालाक्षेभ्योहिरण्मयगवाक्षेभ्योनिर्गच्छताधूमेन । सुरप्रियाःअप्सरसः १९ मुक्तामयैर्वितानैःमणिहेममयैःकेतुभिश्चध्वजैः । नानावर्णपताकायुक्ता
भिर्वलभीभिःविमानानांपुरोभागैःआवृतांव्याप्तां । वैमानिकस्त्रीणांकलगीतैर्मंगलाम् २०

वृतोविकर्षन्महतीमासुरींध्वजिनींविभुः ॥ ययाविंद्रपुरींस्वर्द्धांकंपयन्निवरोदसी ११ रम्यामुपवनोद्यानैःश्रीमद्भिर्नंदनादिभिः ॥ कूजद्विहंगमिथुनैर्गाय
न्मत्तमधुव्रतैः १२ प्रवालफलपुष्पोरुभारशाखामरद्रुमैः ॥ हंससारसचक्राह्वकारंडवकुलाकुलाः ॥ नलिन्योयत्रक्रीडंतिप्रमदाःसुरसेविताः १३ आकाश
गंगयादेव्यावृतांपरिखिभूतया ॥ प्राकारेणाग्निवर्णेनसाट्टालेनोन्नतेनच १४ रुक्मपट्टकपाटैश्चद्वारैःस्फाटिकगोपुरैः ॥ जुष्टांविभक्तप्रपथांविश्वकर्मविनि
र्मिताम् १५ सभाचत्वररथ्याढ्यांविमानैर्न्यर्बुदैर्युताम् ॥ शृंगाटकैर्मणिमयैर्वज्रविद्रुमवेदिभिः १६ यत्रनित्यवयोरूपाःश्यामाविरजवाससः ॥ भ्राजंतेरू
पवन्नार्योह्यर्चिभिरिववह्नयः १७ सुरस्त्रीकेशविभ्रष्टनवसौगंधिकस्रजाम् ॥ यत्रामोदमुपादायमार्गआवातिमारुतः १८ हेमजालाक्षनिर्गच्छद्धूमेनागुरुगं
धिना ॥ पांडुरेणप्रतिच्छन्नमार्गेयांतिसुरप्रियाः १९ मुक्तावितानैर्मणिहेमकेतुभिर्नानापताकावलभीभिरावृताम् ॥ शिखंडिपारावतभृंगनादितांवैमा
निकस्त्रीकलगीतमंगलाम् २०

अतिसमृद्धां इंद्रपुरींययौ ११ किंभूतांतांउपनोद्यानैः १२ चंदनादिभिःरम्यांपरिखभूतया आकाशगंगयावृतां १३ १४ रुक्मपट्टकपाटैःद्वारैः जुष्टांसभाचत्वररथ्या
ढ्यां न्यर्बुदविमानैर्युताम् १५ १६ यस्यांस्वलंकृताःनिर्मलवाससःनार्यःभ्राजंतेताम् १७ किंचयस्यांदेवस्त्रीकेशच्युतानांस्रजांआमोदमादायमार्गेवायुर्वातिताम् १८ शि
खंडिपारावतभृंगनादितां मृदंगशंखादिस्वनैःगंधर्वादीनांगीतैश्चमनोरमाम् १९ २०

( कृष्टिर्वाद्यविशेषः ) उपदेवानांगंधर्वादीनांगीतकैर्मनोरमां । जिताप्रभासाप्रभाहीप्स्यविहात्रीदेवतायया तां । अन्यैरजितप्रभाभितिवा । पाठांतरेजितायहाःसूर्यादयोयया २१ यथाम् २२ पृतन्यदासंख्या २३ २४ केनहेतुनाएवंतेजसाऊर्जितआसीत् २५ ( यथप्रलयाग्निरिवोत्थितःएनं ) प्रतिव्योढुंअपाकर्तुम् २६ यतःकारणादेतस्यओजआदिवलंकारणंब्रूहि । यतओजआदे एतस्यबलेःसमुद्यमः २७ उपभृतंसंचितं ( हेमघवन् ) २८ २९ अत्रोचितंमंत्रमाह । तस्माद्यूयंत्रिविष्टपमुत्सृज्यनिलयमदर्शनंयात । यतःकालात् ३० केनास्यविपर्ययः स्यादित्यतआहएषइति विप्राणांबलेनउदर्कउत्तरोत्तरंअधिकंफलंयस्यसः ३१ सुमंत्रितःअर्थःकार्यंयेषांतेनिलयंजग्मुः ३२ ३३

मृदंगशंखानकदुंदुभिस्वनैःसतालवीणामुरजर्ष्टिवेणुभिः ॥ नृत्यैःसवाद्यैरुपदेवगीतकैर्मनोरमांस्वप्रभयाजितप्रभाम् २१ यांनव्रजंत्यधर्मिष्ठाःखलाभूतद्रुहःशठाः ॥ मानिनःकामिनोलुब्धाएभिर्हीनाव्रजंतियत् २२ तांदेवधानींसवरूथिनीपतिर्बहिःसमंताद्रुरुधेपृतन्यया ॥ आचार्यदत्तंजलजंमहास्वनंदध्मौप्रयुंजन्भयमिंद्रयोषिताम् २३ मघवांस्तदभिप्रेत्यबलेःपरममुद्यमम् ॥ सर्वदेवगणोपेतोगुरुमेतदुवाचह २४ भगवन्नुद्यमोभूयान्बलेर्नःपूर्ववैरिणः ॥ अविषह्यमिमंमन्येकेनासीत्तेजसोर्जितः २५ नैनंकश्चित्कुतोवापिप्रतिव्योढुमधीश्वरः ॥ पिबन्निवमुखेनेदंलिहन्निवदिशोदश ॥ दहन्निवदिशोदृग्भिःसंवर्ताग्निरिवोत्थितः २६ ब्रूहिकारणमेतस्यदुर्धर्षत्वस्यमद्रिपोः ॥ ओजःसहोबलंतेजोयतएतत्समुद्यमः २७ ॥ गुरुरुवाच ॥ जानामिमघवञ्शत्रोरुन्नतेरस्यकारणम् ॥ शिष्यायोपभृतंतेजोभृगुभिर्ब्रह्मवादिभिः २८ भवद्विधोभवान्वापिवर्जयित्वेश्वरंहरिम् ॥ नास्यशक्तःपुरःस्थातुंकृतांतस्ययथाजनाः २९ तस्मान्निलयमुत्सृज्ययूयंसर्वेत्रिविष्टपम् ॥ यातकालंप्रतीक्षंतोयतःशत्रोर्विपर्ययः ३० एषविप्रबलोदर्कःसंप्रत्यूर्जितविक्रमः ॥ तेषामेवापमानेनसानुबंधोविनंक्ष्यति ३१ एवंसुमंत्रितार्थास्तेगुरुणार्थानुदर्शिना ॥ हित्वात्रिविष्टपंजग्मुर्गीर्वाणाःकामरूपिणः ३२ देवेष्वथनिलीनेषुबलिर्वैरोचनःपुरीम् ॥ देवधानीमधिष्ठायवशंनिन्येजगत्त्रयम् ३३

२१ यांपुरींअधर्मिष्ठाःखलाः भूतद्रुहादयश्चनव्रजंति २२ इत्यादिविशिष्टांतांदेवधानींगत्वासेनयारुरुधेततःमृदुदंतंशंखंस्त्रीणांभयंजनयन्सन्दध्मौ २३ अथइंद्रःबलेःपरमंउद्यमंअभिप्रेत्यसर्वदेवगणोपेतःगुरुमुवाच २४ हेभगवन्पूर्ववैरिणःबलेःभूयान्अयंउद्यमःअतःइदंअविषह्यंमन्ये इदंकेनहेतुनाअद्भुतप्रभावादिसर्वंजातम् २५ २६ एतस्यकारणंब्रूहि २७ ॥ गुरुरुवाच ॥ हेमघवन्तेशत्रोःउन्नतेःकारणंजानामि अस्मैशिष्यायभृगुभिःतेजःसंचितम् २८ भवद्विधःभवान्वाअपिअस्यपरतःस्थातुंईश्वरंविनानकोपिसमर्थः २९ कृतांतस्ययथाजनाः अतःहेदेवाःयूयंस्वर्गंहित्वाकालंप्रतीक्षंतःअदर्शनंयात ३० अधुनाअयंबलिःविप्रबलोदर्कोस्ति कालेनएषामेवअपमानात् सानुबंधःनंक्ष्यति ३१ एवंगुरुणासुमंत्रितार्थाःदेवाः स्वर्गंहित्वाकामरूपिणःसंतः जग्मुः ३२ देवेषुलीनेषुसत्सु बलिःदेवधानींआस्थाय जगत्त्रयंवशंनिन्ये ३३

एवंप्राप्तमिंद्रपदंस्थिरीकर्तुमयाजयन् । अनुव्रतंअनुवर्तिनम् ३४ ३५ द्विजदेवैर्ब्राह्मणैरुपलंभितांप्रापिताम् ॥ ३६ ॥ इतिश्रीभागवतेमहापुराणेअष्टमस्कंधेटीकायांपंचदशोऽध्यायः १५ ॥
॥ ७ ॥ ॥ षोडशेपुत्रनाशेनशोचंत्याअदितेःपतिः । प्रार्थितःकश्यपःप्राहपयोव्रतमितीर्यते ॥ १ ॥ इदानींश्रीवामनावतारमपंचमाह । एवमित्यादियावत्समाप्ति । नष्टेषुभ्रष्टेषुसत्सु
१ ( निरुत्सवःउपरतःउत्थितइत्यर्थः ) २ सःकश्यपः ( समाजितःपूजितः ) पत्नीमिदमाह ३ दीनवदनत्वादिकमालक्ष्य बहुधाविकल्पयन्पृच्छति अप्यभद्रमितिसप्तभिः । हेभद्रेमृत्योः
छंदमिच्छामनुवर्ततइतितथामृत्युवशवर्तिनोजनस्येत्यर्थः (अपिकिं) ४ हेगृहमेधिनि अपिवाकिंवागृहेषुधर्मादेःकिंचिदकुशलमितिकाकाप्रश्नः यत्रयेषुगृहेषुअयोगिनामपियोगःस्वधर्मादि
नायोगफलंभवति ५ किंवात्वयाऽपूजिताएवगृहाद्याताः (प्रत्युत्थानेनअपूजितावा) ६ नार्चिताअनर्चिताःसंतोयविनिर्यांतितेगृहाःफेरुराजःशृगालाधिपःतद्गिरस्तुल्याः ७ वेलायांहो
मकालेकर्हिचित् ( कदाचित् ) नहुताःकिं ८ गृहान्वितःगृहस्थःयेषांअतिथीनांअग्नेश्चपूजया । यस्माद्ब्राह्मणोग्निश्चविष्णोर्मुखं ) ९

तंविश्वजयिनंशिष्यंभृगवःशिष्यवत्सलाः ॥ शतेनहयमेधानामनुव्रतमयाजयन् ३४ ततस्तदनुभावेनभुवनत्रयविश्रुताम् ॥ कीर्तिंदिक्षुवितन्वानः सरेजउडुराडिव ३५ बुभुजेचश्रियंस्वृद्धांद्विजदेवोपलंभिताम् ॥ कृतकृत्यमिवात्मानंमन्यमानोमहामनाः ३६ ॥ इतिश्रीभागवतेमहापुराणेअष्टमस्कंधेपंचदशोऽध्यायः १५ ॥ ॥ श्रीशुकउवाच ॥ एवंपुत्रेषुनष्टेषुदेवमाताऽदितिस्तदा ॥ हृतेत्रिविष्टपेदैत्यैःपर्यतप्यदनाथवत् १ एकदाकश्यपस्तस्याआश्रमंभगवानगात् ॥ निरुत्सवंनिरानंदंसमाधेर्विरतश्चिरात् २ सपत्नींदीनवदनांकृतासनपरिग्रहः ॥ सभाजितोयथान्यायमिदमाहकुरूद्वह ३ अप्यभद्रंनविप्राणांभद्रेलोकेऽधुनागतम् ॥ नधर्मस्यनलोकस्यमृत्योश्छंदानुवर्तिनः ४ अपिवाऽकुशलंकिंचिद्गृहेषुगृहमेधिनि ॥ धर्मस्यार्थस्यकामस्ययत्रयोगोह्ययोगिनाम् ५ अपिवाऽतिथयोऽभ्येत्यकुटुंबासक्तयात्वया ॥ गृहादपूजितायाताःप्रत्युत्थानेनवाक्वचित् ६ गृहेषुयेष्वतिथयोनार्चिताःसलिलैरपि ॥ यदिनिर्यांतितेनूनंफेरुराजगृहोपमाः ७ अप्यग्नयस्तुवेलायांनहुताहविषासति ॥ त्वयोद्विग्नधियाभद्रेप्रोषितेमयिकर्हिचित् ८ यत्पूजयाकामदुघान्यातिलोकान्गृहान्वितः ॥ ब्राह्मणोग्निश्चवैविष्णोःसर्वदेवात्मनोमुखम् ९

अथभृगवः विश्वजयिनंशिष्यंहयमेधानांशतेनइंद्रपदंस्थिरीकर्तुंअयाजयन् ३४ तदनुभावेनत्रैलोक्यविश्रुतांकीर्तिंदिक्षुवितन्वानःसन्उडुराडिवरेजे ३५ ततोबलिःआत्मानंकृतकृत्यमिवमन्वानः ब्राह्मणैःसंपादितांसमृद्धांश्रियंबुभुजे ३६ ॥ इत्यष्टमेपंचदशः १५ ॥ ॥ श्रीशुकउवाच ॥ एवंपुत्रेषुनष्टेषुदैत्यैश्चस्वर्गेहृतेसतिदेवमाताअदितिः अनाथवत्पर्यतप्यत् १ एकदाकश्यपः तस्याः निरुत्सवंनिरानंदं आश्रमंअगात् २ कृतासनपरिग्रहः सः दीनवदनांपत्नींइदंआह ३ हेभद्रेअधुनाविप्राणांधर्मस्यअभद्रंनागतंकिम् किंवात्रिवर्गस्यअकुशलंकिम् अपिवाअतिथयः त्वद्गृहंएत्यत्वयाअपूजिताःसंतःगताःकिम् किंवावेलायांअग्नयोनहुताःकिम् ४ ५ ६ ७ ८ ९

भा०अ० भवत्याआत्मानंमनःअस्वस्थंअप्रकृतिस्थं । लक्षणैर्मुखम्लान्यादिभिर्लक्षयामि १० अस्वास्थ्यकारणमन्यदस्तीतिवक्तुंस्वपृष्टमभद्रादिकंनास्तीत्याह । भद्रमितिद्वाभ्यां । इमेगृहाः अ०
त्रिवर्गस्य ( धर्मार्थकामानां ) परंक्षेत्रं उद्भवस्थानंत्रिवर्गोयथावद्वर्ततइत्यर्थः ११ भवतस्तवानुध्यानंयन्मयाक्रियतेतस्मात् अग्नयोऽतिथयइत्यादिसर्वनरिष्यतिनहीयते १२ प्रस्तुतंवि
॥२७॥ ज्ञापयितुमाह । कोन्विति । ( मानसःमनसिस्थितः । यस्याःमे ) १३ संपाद्यंकाममाहतवैवेतिचतुर्भिः ( हेमारीचमनसःशरीराच्चजाताःतवैवअतस्तासुसर्वासुभवान्समःतथापिभक्तंभज ॥१६॥
ते ) १४ सपत्नैर्दैत्यैर्हृताश्रीर्येषांहृतंस्थानंयेषांतानितिबहुवचनंपुत्राभिप्रायेण १५ १६ १७ कःकश्यपः । प्रथमंतावत्पुत्रस्नेहंत्याजयितुंविस्मयव्याजेनतत्त्वमुपदिशतिअहोइतिसार्धेन १८
१९ अत्रापरितुष्यंतीमित्याह । उपतिष्ठस्वेतिद्वाभ्याम् २० नन्वेवंभूतकामप्राप्तिहेतुर्देवांतरसेवाप्रसिद्धातत्राह । अमोघेति २१

अपिसर्वेकुशलिनस्तवपुत्रामनस्विनि ॥ लक्षयेऽस्वस्थमात्मानंभवत्यालक्षणैरहम् १० ॥ अदितिरुवाच ॥ भद्रंद्विजगवांब्रह्मन्धर्मस्यास्यजनस्यच ॥
त्रिवर्गस्यपरंक्षेत्रंगृहमेधिन्गृहाइमे ११ अग्नयोऽतिथयोभृत्याभिक्षवोयेचलिप्सवः ॥ सर्वंभगवतोब्रह्मन्ननुध्यानान्नरिष्यति १२ कोनुमेभगवन्कामोनसं
पद्येतमानसः ॥ यस्याभवान्प्रजाध्यक्षएवंधर्मान्प्रभाषते १३ तवैवमारीचमनःशरीरजाःप्रजाइमाःसत्त्वरजस्तमोजुषः ॥ समोभवांस्तास्वसुरादिषुप्रभो
तथापिभक्तंभजतेमहेश्वरः १४ तस्मादीशभजंत्यामेश्रेयश्चिंतयसुव्रत ॥ हृतश्रियोहृतस्थानान्सपत्नैःपाहिनःप्रभो १५ परैर्विवासितासाहंमग्नाव्यसन
सागरे ॥ ऐश्वर्यंश्रीर्यशःस्थानंहृतानिप्रबलैर्मम १६ यथातानिपुनःसाधोप्रपद्येरन्ममात्मजाः ॥ तथाविधेहिकल्याणंधियाकल्याणकृत्तम १७ ॥ श्री
शुकउवाच ॥ एवमभ्यर्थितोऽदित्याकस्तामाहस्मयन्निव ॥ अहोमायाबलंविष्णोःस्नेहबद्धमिदंजगत् १८ क्वदेहोभौतिकोऽनात्माक्वचात्माप्रकृतेःपरः ॥
कस्यकेपतिपुत्राद्यामोहएवहिकारणम् १९ उपतिष्ठस्वपुरुषंभगवंतंजनार्दनम् ॥ सर्वभूतगुहावासंवासुदेवंजगद्गुरुम् २० सविधास्यतितेकामान्हरिर्दी
नानुकंपनः ॥ अमोघाभगवद्भक्तिर्नेतरेतिमतिर्मम २१

अथवातेसर्वेपुत्राःकुशलिनःअहंभवत्यःमनःअस्वस्थंलक्षये १० ॥ अदितिरुवाच ॥ हेब्रह्मन् द्विजगवांधर्मस्यचभद्रमस्ति ११ तवअनुध्यानाद्धेतोःअग्नयोऽतिथयइत्यादि
सर्वनहीयते १२ किंच भवान्एवंधर्मान्यस्याःप्रभाषतेतस्याःकामःकोनुनसंपद्यते १३ हेमारीच तवैवसर्वाःइमाःप्रजाःतासुत्वंसमःअसितथापिईश्वरःभक्तंभजते १४ अत
एवहेस्वामिन् भजंत्यामेश्रेयश्चिंतय सपत्नैःहृतश्रियःहृतस्थानानःपाहि १५ किंचप्रबलैर्दैत्यैःऐश्वर्यादीनिहृतानि १६ तानिमेपुत्राः यथापुनःप्रपद्येरन्तथामेकल्याणंकुरु ॥२७॥
१७ ॥ श्रीशुकउवाच ॥ एवंप्रार्थितःकश्यपःतांआहअहोस्नेहबद्धंजगत्इदंविष्णोर्मायाबलं १८ किंच अयंभौतिकःदेहः क्व प्रकृतेःपरःआत्मा क्व कस्यकेपतिपुत्राद्याःअत्र
मोहएवकारणम् १९ अतःजनार्दनंवासुदेवंउपतिष्ठस्व २० सःतेकामान्विधास्यतियतःभगवद्भक्तिःअमोघा २१

तथात्वमेमनोरथंविदध्यात् २२ यथाचमेआशुतुष्यतितथातस्सेवाप्रकारमादिश (आज्ञापय) २३ मेमयापृष्टःपद्मजः ( प्रजाकामस्य ) मेयद्व्रतमाहएततेप्रवक्ष्यामीत्यन्वयः २४ अमलेशुक्ले ( द्वादशदिनंपयएवव्रतंभक्षणंयस्य ) २५ तत्रादौपूर्वेद्युःकृत्यमाहसिनीवाल्यामित्यादिनाब्रह्मचार्यथतद्राज्ञामित्यंतेनग्रंथेन । यदिलभ्यतेतर्हिक्रोडविदीर्णयावन्यवराहोत्खातया आलिप्य २६ तत्रमंत्रः । त्वंदेवीति हेदेवित्वंरसायाःउद्धृतासि २७ निर्वर्तितआत्मनियमोनित्यनैमित्तिक-(-लक्षणो ) येन २८ तत्रावाहनादौनवमंत्रानाह । नमस्तुभ्यमिति । प्रधानादौविशेषतस्तुद्वादशाक्षरंवक्ष्यति २९ चतुर्विंशद्गुणाश्चतुर्विंशतितत्त्वानितानिजानातितथातस्मै । गुणसंख्यानहेतवेसांख्यप्रवर्तकाय ३० एवंसामान्यतोनत्वागुणावतारान्प्रणमति त्रिभिः । तत्रादौमंत्रोक्तयज्ञरूपेणविष्णोःप्रणामोनमइति द्वेशीर्षेयस्य । त्रयःपादायस्य । तंतवेफलविस्तारकाय । त्रय्यांविद्यायामात्मायस्येतित्रिधाबद्धइत्यस्यार्थउक्तः । तथाचमंत्रः ' चत्वारिशृंगात्रयोअस्यपादाद्वेशीर्षेसप्तहस्तासोअस्य । त्रिधाबद्धोवृषभोरोरवीतिमहोदेवोमर्त्यांआविवेश ' इति (निरुक्तंयास्केन । चत्वारिशृंगेतिवेदावाएतउक्तास्त्रयोस्यपादाइतिसवनानित्रीणिद्वेशीर्षेप्रायणीयेसप्तहस्तासःसप्तछंदांसित्रिधाबद्धस्त्रेधाबद्धोमंत्रब्राह्मणकल्पैर्वृषभोरोरवीतिरोरवणमस्यसवनक्रमेणऋग्भिर्यजुर्भिःसामभिर्यदेनमृग्भिः शंसंतियजुर्भिर्यजंतिसामभिःस्तुवंतिमहोदेवइत्येषहिमहान्देवोयद्यज्ञोमर्त्यांआविवेशेत्येषहिमनुष्यानाविशतियजनायेति ) ३१ ३२ प्राणायसूत्रात्मने । योगैश्वर्यंशरीरंयस्य ३३ ३४

॥ अदितिरुवाच ॥ केनाहंविधिनाब्रह्मन्उपस्थास्येजगत्पतिम् ॥ यथामेसत्यसंकल्पोविदध्यात्समनोरथम् २२ आदिशत्वंद्विजश्रेष्ठविधिंतदुपधावनम् ॥ आशुतुष्यतिमेदेवःसीदंत्याःसहपुत्रकैः २३ ॥ कश्यपउवाच ॥ एतन्मेभगवान्पृष्टःप्रजाकामस्यपद्मजः ॥ यदाहतेप्रवक्ष्यामिव्रतंकेशवतोषणम् २४ फाल्गुनस्यामलेपक्षेद्वादशाहंपयोव्रतः ॥ अर्चयेदरविंदाक्षंभक्त्यापरमयान्वितः २५ सिनीवाल्यांमृदालिप्यस्नायात्क्रोडविदीर्णया ॥ यदिलभ्येतवैस्रोतस्येतंमंत्रमुदीरयेत् २६ त्वंदेव्यादिवराहेणरसायाःस्थानमिच्छता ॥ उद्धृतासिनमस्तुभ्यंपाप्मानंमेप्रणाशय २७ निर्वर्तितात्मनियमोदेवमर्चेत्समाहितः ॥ अर्चायांस्थंडिलेसूर्येजलेवह्नौगुरावपि २८ नमस्तुभ्यंभगवतेपुरुषायमहीयसे ॥ सर्वभूतनिवासायवासुदेवायसाक्षिणे २९ नमोऽव्यक्तायसूक्ष्मायप्रधानपुरुषायच ॥ चतुर्विंशद्गुणज्ञायगुणसंख्यानहेतवे ३० नमोद्विशीर्ष्णेत्रिपदेचतुःशृंगायतंतवे ॥ सप्तहस्ताययज्ञायत्रयीविद्यात्मनेनमः ३१ नमःशिवायरुद्रायनमःशक्तिधरायच ॥ सर्वविद्याधिपतयेभूतानांपतयेनमः ३२ नमोहिरण्यगर्भायप्राणायजगदात्मने ॥ योगैश्वर्यशरीरायनमस्तेयोगहेतवे ३३ नमस्तेआदिदेवायसाक्षिभूतायतेनमः ॥ नारायणायऋषयेनरायहरयेनमः ३४

॥ अदितिरुवाच ॥ हेब्रह्मन् केनविधिनाजगत्पतिंउपस्थास्येपुत्रैःसहसीदंत्याःमेमनोरथंयथाविदध्यात् २२ तथातस्सेवाप्रकारंआदिश २३ ॥ कश्यपउवाच ॥ प्रजाकामेनमयापृष्टः ब्रह्मायत्व्रतंआहतत्तेवक्ष्यामि २४ फाल्गुनस्यशुक्लपक्षेद्वादशाहंपयोव्रतःसन्हरिं अर्चयेत् २५ सिनीवाल्यांक्रोडविदीर्णयामृदाअंगंलिप्यप्रवाहेस्नायात् २६ त्वंदेव्यादिवराहेणरसायाःस्थानमिच्छता उद्धृतासिनमस्तुभ्यंपाप्मानंमेप्रणाशय ॥ इमंमंत्रंमृल्लेपनेउच्चारयेत् २७ ततःनित्यनैमित्तिकंकर्मकृत्वाप्रतिमादिषुदेवंअर्चयेत् २८ नमस्तुभ्यंभगवतेपुरुषायमहीयसे सर्वभूतनिवासायवासुदेवायसाक्षिणे ॥ २९ प्रधानपुरुषाययज्ञायशिवायहिरण्यगर्भायनारायणायपतिवासतेकेशवायनमः ३० ३१ ३२ ३३ ३४

अधिगताप्राप्ताश्रीर्यतस्मै ३५ (सर्वेषांवराणांदाता । हेवरेण्ययतोवरदर्षभोसि) ३६ तत्पादपद्मयोः आमोदंस्पृहयंतइवदेवाश्च श्रीश्चयमन्ववर्तंतसमेप्रसीदतु ३७ आवाहनेनपुरस्कृतंसंमानितं (हृषीकेशं । पाद्याचमनादिभिः ) ३८ ३९ पयसिशृतंपक्वंपायसं । मूलविद्ययाद्वादशाक्षरेणैव ४० ४१ पूर्वोक्ताभिरन्याभिश्चस्तुतिभिः ४२ तच्छेषंनिर्माल्यं । द्वौअवरौयेषांतान् (अधिका-) संभवेद्वावपिभोजयेदित्यर्थः ४३ समाजितैस्तैरनुज्ञातःसन्शेषंबंधुभिःसहितः ( शेषं । ) तस्यांरात्र्यांब्रह्मचारीसन् । श्वोभूतेप्रभातेप्राते ४४ ४५ पयएवभक्षआहारोयस्य ४६ ४७ अधःस्वप्नंशयनं ( त्रिषवणंत्रिकालं ) ४८ ४९ पंचकैःपंचामृतैः ५० ( शिपिविष्टायजीवातयामिणे । यद्वा । शिपिषुरश्मिषुविष्टःशिपिविष्टस्तस्मै ) ५१

नमोमरकतश्यामवपुषेऽधिगताश्रिये ॥ केशवायनमस्तुभ्यंनमस्तेपीतवाससे ३५ त्वंसर्ववरदःपुंसांवरेण्यवरदर्षभः ॥ अतस्तेश्रेयसेधीराःपादरेणुमुपासते ३६ अन्ववर्ततयंदेवाःश्रीश्चतत्पादपद्मयोः ॥ स्पृहयंतइवामोदंभगवान्मेप्रसीदताम् ३७ एतैर्मंत्रैर्हृषीकेशमावाहनपुरस्कृतम् ॥ अर्चयेच्छ्रद्धयायुक्तःपाद्योपस्पर्शनादिभिः ॥ अर्चित्वागंधमाल्याद्यैःपयसास्नपयेद्विभुम् ३८ वस्त्रोपवीताभरणपाद्योपस्पर्शनैस्ततः ॥ गंधपुष्पादिभिश्चार्चेद्द्वादशाक्षरविद्यया ३९ शृतंपयसिनैवेद्यंशाल्यन्नंविभवेसति ॥ ससर्पिःसगुडंदत्त्वाजुहुयान्मूलविद्यया ४० निवेदितंतद्भक्तायदद्याद्भुंजीतवास्वयम् ॥ दत्त्वाचमनमर्चित्वातांबूलंचनिवेदयेत् ४१ जपेदष्टोत्तरशतंस्तुवीतस्तुतिभिःप्रभुम् ॥ कृत्वाप्रदक्षिणंभूमौप्रणमेद्दंडवन्मुदा ४२ कृत्वाशिरसितच्छेषंदेवमुद्वासयेत्ततः ॥ द्व्यवरान्भोजयेद्विप्रान्पायसेनयथोचितम् ४३ भुंजीततैरनुज्ञातःशेषंसेष्टःसमाजितैः ॥ ब्रह्मचार्यथतद्रात्र्यांश्वोभूतेप्रथमेऽहनि ४४ स्नातःशुचिर्यथोक्तेनविधिनासुसमाहितः ॥ पयसास्नापयित्वार्चेद्यावद्व्रतसमापनम् ४५ पयोभक्षोव्रतमिदंचरेद्विष्ण्वर्चनादृतः ॥ पूर्ववज्जुहुयादग्निंब्राह्मणांश्चापिभोजयेत् ४६ एवंत्वहरहःकुर्याद्द्वादशाहंपयोव्रतः ॥ हरेराराधनंहोममर्हणंद्विजतर्पणम् ४७ प्रतिपद्दिनमारभ्ययावच्छुक्लत्रयोदशी ॥ ब्रह्मचर्यमधःस्वप्नंस्नानंत्रिषवणंचरेत् ४८ वर्जयेदसदालापंभोगानुच्चावचांस्तथा ॥ अहिंस्रःसर्वभूतानांवासुदेवपरायणः ४९ त्रयोदश्यामथोविष्णोःस्नापनंपंचकैर्विभोः ॥ कारयेच्छास्त्रदृष्टेनविधिनाविधिकोविदः ५० पूजांचमहतींकुर्याद्वित्तशाठ्यविवर्जितः ॥ चरुंनिरूप्यपयसिशिपिविष्टायविष्णवे ५१

३५ हेईशत्वंपुंसांसर्ववरदः ३६ अतोवीरास्तवपादरेणुमुपासते इत्यादिमंत्रैः द्वादशाक्षरविद्ययाचहृषीकेशंआवाहनपाद्यादिभिः अर्चयेत् ३७ ३८ ततःपयसास्नापयित्वावस्त्राद्युपचारैः अर्चयेत् ३९ ततः ससर्पिः सगुडंपायसंनैवेद्यंदत्त्वामूलविद्ययाजुहुयात् ४० निवेदितंतद्भक्तायदद्यात् स्वयंवाभुंजीत ततः आचमनंदत्त्वातांबूलंनिवेद्य ४१ अष्टोत्तरशतंमंत्रंजपेत् स्तुतिभिःप्रभुंस्तुत्वाप्रदक्षिणानमस्कारंकृत्वा ४२ निर्माल्यंशिरसिधृत्वादेवंविसर्जयेत् पायसेनद्व्यवरान्विप्रान्भोजयेत् ४३ ततः बंधुभिःसहभुंजीत ४४ इदंव्रतंपयोभक्षःसन्द्वादशाहंकुर्यात् ४५ ४६ ४७ शुक्लप्रतिपदमारभ्यत्रयोदशींयावत्हरेःआराधनंहोमंअर्हणंद्विजतर्पणंब्रह्मचर्यादिनियमान् आचरेत् ४८ ४९ त्रयोदश्यांपंचामृतैः स्नाप्य विष्णोः ५० महापूजांकृत्वा चरुंनिरूप्य तेनपुरुषंइष्ट्वा पुरुषतुष्टिदं नैवेद्यंदत्त्वा ५१

( घृतेनपयसा । अतिगुणवत्मधुरादिरसयुक्तसोपस्करम् ) ५२ ( विदितज्ञानिन्दि ) ५३ ५४ ( आश्वपाकानश्वपचानपि ) ५५ ५६ ५७ मयाकथितमुदाहृतम् ५८ ५९ सर्वयज्ञरूपोऽर्थ एतत्तपः सर्वतपसामित्यनुवृत्तमेतदुक्तम् ६० ६१ ६२ इतिश्रीभागवतेमहापुराणेअष्टमस्कंधेटीकायांषोडशोऽध्यायः ॥ १६ ॥ ॥ ततःसप्तदशेऽदित्याकृतेव्रते भगवत्तोषितेहरिः । तत्सुतत्वम्पयावाचीत्पुत्रांस्मृविदीर्यते ॥ १ ॥ ( एकयाएकाग्रया । इंद्रियरूपान्दुष्टाश्वानरांइमतुल्येनमनसानियम्यतत्प्रबुद्धिरेवसारथिर्यस्याः ) २ ३ ४ ५

घृतेनतेनपुरुषंयजेतसुसमाहितः ॥ नैवेद्यंचातिगुणवद्दद्यात्पुरुषतुष्टिदम् ५२ आचार्यज्ञानसंपन्नंवस्त्राभरणधेनुभिः ॥ तोषयेदृत्विजश्चैवतद्विद्ध्याराधनंहरेः ५३ भोजयेत्तान्गुणवतासदन्नेनशुचिस्मिते ॥ अन्यांश्चब्राह्मणान्शक्त्यायेचतत्रसमागताः ५४ दक्षिणांगुरवेदद्यादृत्विग्भ्यश्चयथार्हतः ॥ अन्नाद्येनाश्वपाकांश्चप्रीणयेत्समुपागतान् ५५ भुक्तवत्सुचसर्वेषुदीनांधकृपणादिषु ॥ विष्णोस्तत्प्रीणनंविद्वान्भुंजीतसहबंधुभिः ५६ नृत्यवादित्रगीतैश्चस्तुतिभिःस्वस्तिवाचकैः ॥ कारयेत्तत्कथाभिश्चपूजांभगवतोऽन्वहम् ५७ एतत्पयोव्रतंनामपुरुषाराधनंपरम् ॥ पितामहेनाभिहितंमयातेसमुदाहृतम् ५८ त्वंचानेनमहाभागेसम्यक्चीर्णेनकेशवम् ॥ आत्मनाशुद्धभावेननियतात्माभजाव्ययम् ५९ अयंवैसर्वयज्ञाख्यःसर्वव्रतमितिस्मृतम् ॥ तपःसारमिदंभद्रेदानंचेश्वरतर्पणम् ६० तएवनियमाःसाक्षात्तएवचयमोत्तमाः ॥ तपोदानंव्रतंयज्ञोयेनतुष्यत्यधोक्षजः ६१ तस्मादेतद्व्रतंभद्रेप्रयताश्रद्धयाचर ॥ भगवान्परितुष्टस्तेवरानाशुविधास्यति ६२ ॥ ॥ इतिश्रीभागवतेमहापुराणेअष्टमस्कंधेकश्यपादितिसंवादेषोडशोऽध्यायः १६ ॥ ॥ छ ॥ ॥ श्रीशुकउवाच ॥ इत्युक्तासाऽदितीराजन्स्वभर्त्राकश्यपेनवै ॥ अन्वतिष्ठद्व्रतमिदंद्वादशाहमतंद्रिता १ चिंतयंत्येकयाबुद्ध्यामहापुरुषमीश्वरम् ॥ प्रगृह्येंद्रियदुष्टाश्वान्मनसाबुद्धिसारथिः २ मनश्चैकाग्रयाबुद्ध्याभगवत्यखिलात्मनि ॥ वासुदेवेसमाधायचचारहपयोव्रतम् ३ तस्मात्प्रादुरभूत्तातभगवानादिपूरुषः ॥ पीतवासाश्चतुर्बाहुःशंखचक्रगदाधरः ४ तंनेत्रगोचरंवीक्ष्यसहसोत्थायसादरम् ॥ ननामभुविकायेनदंडवत्प्रीतिविह्वला ५

५२ आचार्यादीन्वस्त्रादिनाप्रतोष्य ५३ अन्यांश्चब्राह्मणान्भोजयेत् ५४ ततःगुरवे ऋत्विग्भ्यश्चदक्षिणांदत्वा अन्नादिना आश्वपाकादीन् प्रीणयेत् ५५ ततःबंधुभिःसहस्वयंभुंजीत ५६ नृत्यादिभिः प्रत्यहंभगवतः पूजांकारयेत् ५७ एतत्पयोव्रतंमेपितामहेनोक्तंतत्तेकथितम् ५८ हेमहाभागेत्वंअनेनकेशवंभज ५९ ६० येनहरिःतुष्यति तदेवतपोनियमादि ६१ अतः श्रद्धयाइदंव्रतमाचर अनेनतुष्टः भगवान्तववरान्आशुविधास्यति ६२ ॥ इत्यष्टमेषोडशः १६ ॥ ॥छ॥ श्रीशुकउवाच ॥ हेनृप एवंभर्त्रोक्तेनतकाअदितिः मनसाइंद्रियदुष्टाश्वान्निगृह्य एकाग्रबुध्याईश्वरंचिंतयतीसती मनःवासुदेवेसमाधाय पयोव्रतंचचार १ २ ३ हेतात तस्मात्प्रादुरभूत् भगवान्पीतवासाः चतुर्भुजः शंखचक्रगदाधरः प्रादुरभूत् ४ तंवीक्ष्य भुवि कायेन दंडवत्ननाम ५

श्रीशिविहलत्वादेवसाबद्धांजलिःसतीस्थितापीडितुंपुनर्नोत्सेहे नशशाक । अपितुतूष्णींबभूव कथंभूता । आनंदजलैराकुलेईक्षणेयस्याः पुलकैराकुला आकृतिर्देहोयस्याः तस्यदर्शने
उत्सवःसुखंतेनगात्रेवेपथुःकंपोयस्याः ६ तुष्टाव पिबतीवोद्वीक्षमाणेतिचक्रियाभेदात्सेत्यस्यद्विरुक्तिरदोषः ७ अयंततोविनिर्जित्यदैत्यानस्पूर्जितानपि । मत्कान्प्रतिपुमीशस्त्वमि
त्यस्तौददितिस्त्रिभिः ॥ यज्ञेशेत्यादिदशभिःसंबोधनैस्तत्राशक्यंकिमपिनास्तीतिवदंतीप्रार्थयते । शंनःकृधिकुरु । यतोदीनानांनाथोऽसित्वं । तीर्थश्रवःकीर्तिर्यस्य । श्रवणमेवमंगलंय
स्यतन्नामधेयंयस्य । आपन्नानांशरणागतानां ( लोकानां ) वृजिनोपशमायउदयोयस्य । (हेआद्य) ८ भूम्नेमहतेनमः । महत्त्वेहेतवः । विश्वायविश्वस्यजन्मस्थितिसंयमायस्वैरंगृहीताः
पुरुशक्तेर्मायायाःगुणायेनतस्मै । तथापिस्वस्थायअप्रच्युतस्वरूपाय । कुतःशश्वदुपबृंहितोनित्योजितोयःपूर्णोबोधस्तेनव्यापादितंनित्यनिरस्तंआत्मनितमोयायरुक्षणंयेनतस्मै ९
अस्यवीवपनोरप्यपूर्णइत्करमेवतवेतिकैमुतिकन्यायेनाह । परंआयुःब्रह्मायुः । पुनरपि । द्यौश्चभूश्चरसाश्चकंपयोभूरसाः । द्यौरितिपृथक्पाठेभूश्चरसाश्चाविलक्षणाद्दिविषयः इत्येति
पाठेतुत्रीणिपदानि । सकलायोगगुणाअणिमादयः १० क्षेत्रज्ञःअंतर्यामी ११ सपत्नैर्हृताश्रीर्येषां ( तेषां ) स्वधामतश्च्यावितानांचपुत्राणांसंबंधियत्तद्भवत्याश्चिरमाकांक्षितंमयाविज्ञा
तम् १२ कांक्षितमेवाहतानितित्रिभिः । प्रतिलब्धोजयश्चश्रीश्चयैःतैःपुत्रैःसहउपासितुंएकत्रस्थातुमिच्छसि १३

सोत्थायबद्धांजलिरीडितुंस्थितानोत्सेहआनंदजलाकुलेक्षणा ॥ बभूवतूष्णींपुलकाकुलाकृतिस्तद्दर्शनात्युत्सवगात्रवेपथुः ६ प्रीत्याशनैर्गद्गदयागिराहरिं
तुष्टावसादेव्यदितिःकुरूद्वह ॥ उद्वीक्षतीसापिबतीवचक्षुषारमापतिंयज्ञपतिंजगत्पतिम् ७ ॥ अदितिरुवाच ॥ यज्ञेशयज्ञपुरुषाच्युततीर्थपादतीर्थ
श्रवःश्रवणमंगलनामधेय ॥ आपन्नलोकवृजिनोपशमोदयाद्यशंनःकृधीशभगवन्नसिदीननाथः ८ विश्वायविश्वभवनस्थितिसंयमायस्वैरंगृहीतपुरुशक्तिगु
णायभूम्ने ॥ स्वस्थायशश्वदुपबृंहितपूर्णबोधव्यापादितात्मतमसेहरयेनमस्ते ९ आयुःपरंवपुरभीष्टमतुल्यलक्ष्मीर्द्योभूरसाःसकलयोगगुणास्त्रिवर्गः ॥ ज्ञा
नंचकेवलमनंतभवंतितुष्टात्त्वत्तोनृणांकिमुसपत्नजयादिराशीः १० ॥ श्रीशुकउवाच ॥ अदित्यैवंस्तुतोराजन्भगवान्पुष्करेक्षणः ॥ क्षेत्रज्ञःसर्वभूताना
मितिहोवाचभारत ११ ॥ श्रीभगवानुवाच ॥ देवमातर्भवत्यामेविज्ञातंचिरकांक्षितम् ॥ यत्सपत्नैर्हृतश्रीणांच्यावितानांस्वधामतः १२ तान्विनिर्जित्य
समरेदुर्मदानसुरर्षभान् ॥ प्रतिलब्धजयश्रीभिःपुत्रैरिच्छस्युपासितुम् १३

ततः साउत्थायबद्धांजलिः स्थितासतीस्तोतुंनोत्सहे ६ पश्चाद्गद्गदयागिराहरिंतुष्टाव ७ ॥ अदितिरुवाच ॥ हेयज्ञेशहेयज्ञपुरुषनःशंकुरु त्वंदीननाथोऽसि ८ जगतः उ
त्पत्तिस्थितिसंहारार्थंगृहीतमायागुणायहरयेतेनमोस्तु ९ हेअनंतत्वंतुष्टाच्चत्वत्तः नृणांब्रह्मायुः इष्टवपुः इत्यादिसर्वंभवति शत्रुजयाद्याशीः किमुत १० ॥ श्रीशुकउवाच ॥
एवंअदित्यास्तुतः हरिःउवाच ११ हेदेवमातः भवत्याचिरकांक्षितंयत्तत् मयाविज्ञातम् १२ किंच युद्धेदैत्यान्निर्जित्यप्राप्तजयश्रीभिः पुत्रैः सहएकत्रस्थातुंइच्छसि १३

१४ प्रत्याहृतं यशश्च श्रीश्च यैस्तान् १५ अपारणीया अनतिक्रमणीयाः । यद्यस्मदनुकूल ईश्वरः कालो येषां तैर्विभैर्गुप्तारक्षिताः अनुकूलैरीश्वरैः समर्थैर्विप्रैर्गुप्ता इति वा १६ अथ अपि उपायः
ब्रह्मदेवः संतोषितस्येत्यादि श्रद्धानुरूपं संकल्पानुसारेण फलहेतुत्वात् १७ मारीचस्य तपसि अधिष्ठाय स्थितः सन् गोप्तास्मि पालयिष्यामि १८ अतः पतिमुपधाव भजस्व १९ देवानां सुरत
स्वंसर्वं सुसंवृतं गुप्तं गुप्तं सत् संपद्यते सिध्यति २० प्रभोर्हरेर्जन्म च आत्मनि लब्ध्वा २१ अवितथवीक्षणं दृष्टिर्यस्य सः २२ अनिलो यथा सर्वत्र समो पि दारुणि संघर्षेण वनदाहकमग्निं माधत्ते एवं त्वत्त्वं
(सर्वेषु) पुत्रेषु समो पि दैत्यघाति वीर्यं माधत्ते इत्यर्थः २३ ( अदितेर्गर्भ- ) धिष्ठितं च अधिष्ठाय स्थितं सर्पीडेगुहा त्वित्यर्थः २४ ( उरुभिर्गीयते उरुगाय इत्युरसंबोधनं) २५

इंद्रज्येष्ठैः स्वतनयैर्हतानां युधि विद्विषाम् ॥ स्त्रियो रुदंतीरासाद्य द्रष्टुमिच्छसि दुःखिताः १४ आत्मजान् सुसमृद्धांस्त्वं प्रत्याहृतयशःश्रियः ॥ नाकपृष्ठम
धिष्ठाय क्रीडतो द्रष्टुमिच्छसि १५ प्रायोऽधुना तेऽसुरयूथनाथा अपारणीया इति देवि मे मतिः ॥ यत्तेऽनुकूलेश्वरविप्रगुप्ता न विक्रमस्तत्र सुखं ददाति १६ अ
थाप्युपायो मम देवि चिंत्यः संतोषितस्य व्रतचर्यया ते ॥ ममार्चनं नार्हति गंतुमन्यथा श्रद्धानुरूपं फलहेतुकत्वात् १७ त्वयार्चितश्चाहमपत्यगुप्तये पयोव्रतेना
नुगुणं समीडितः ॥ स्वांशेन पुत्रत्वमुपेत्य ते सुतान् गोप्तास्मि मारीचतपस्यधिष्ठितः १८ उपधाव पतिं भद्रे प्रजापतिमकल्मषम् ॥ मां च भावयती पत्यावेवंरू
पमवस्थितम् १९ नैतत्परस्मा आख्येयं पृष्टयापि कथंचन ॥ सर्वं संपद्यते देवि देवगुह्यं सुसंवृतम् २० ॥ श्रीशुक उवाच ॥ एतावदुक्त्वा भगवांस्तत्रैवांतर
धीयत ॥ अदितिर्दुर्लभं लब्ध्वा हरेर्जन्मात्मनि प्रभोः २१ उपाधावत्पतिं भक्त्या परया कृतकृत्यवत् ॥ स वै समाधियोगेन कश्यपस्तदबुध्यत ॥ प्रविष्टमात्म
नि हरेरंशं ह्यवितथेक्षणः २२ सोऽदित्यां वीर्यमाधत्त तपसा चिरसंभृतम् ॥ समाहितमना राजन् दारुण्यग्निं यथानिलः २३ अदितेर्धिष्ठितं गर्भं भगवंतं सनात
नम् ॥ हिरण्यगर्भो विज्ञाय समीडे गुह्यनामभिः २४ ॥ ब्रह्मोवाच ॥ जयोरुगाय भगवन्नुरुक्रम नमोऽस्तु ते ॥ नमो ब्रह्मण्यदेवाय त्रिगुणाय नमो नमः २५

तथा इंद्रमुख्यैः देवैः युधि हतानां विद्विषां दुःखिताः रुदंतीः स्त्रियः द्रष्टुमिच्छसि १४ तथा स्वर्गं अधिष्ठाय क्रीडतः स्वपुत्रान् द्रष्टुमिच्छसि १५ हे देवि दैतेयाः अधुना अनतिक्रमणीयाः
तत्र विक्रमः सुखं न ददाति एवं मम मतिः १६ अथापि मया उपायः चिंत्यः यतः ते व्रतचर्यया तुष्टस्य मम अर्चनं अन्यथा गंतुं नार्हति १७ हे मातः यतः त्वया अपत्य गुप्तये व्रतेन
अर्चितः अहं कश्यप तपसि स्थितः सन् स्वांशेन पुत्रत्वं एत्य तव सुतान् गोप्तास्मि १८ हे देवि पत्यौ मां भावयती सती पतिं भजस्व १९ एतत् अन्यस्मै नाख्येयम् अनेन सर्वं सिध्यति २०
॥ श्रीशुक उवाच ॥ इत्युक्त्वा भगवान् अंतर्दधे अथ अदितिः आत्मनि दुर्लभं हरेः जन्म लब्ध्वा पतिं अभजत् कश्यपः समाधियोगेन २१ २२ आत्मनि हरेः प्रविष्टं अंशं ज्ञात्वा अ
दित्यां वीर्यं आधत्त अनिलः दारुणि अग्निं यथा २३ ततो ब्रह्मा अदितेः गर्भं अधिष्ठाय स्थितं हरिं विज्ञाय गुह्यनामभिः स्तुष्टाव २४ ॥ ब्रह्मोवाच ॥ हे भगवन् त्वं जय ब्रह्मण्यदेवाय २५

अदितेरेवपृश्निःस्विमजन्मनिपृश्निरितिनाम तस्मागर्भायगर्भरूपाय । अथवापिवेदागर्भेयस्य । यद्वावेदानांगर्भायवेदेषुप्रकाशमानायेत्यर्थः । त्रयोलोकानाभीयस्यसत्रिणाभस्तस्मै । त्रयाणांलोकानांपृष्ठेउपरिस्थिताय । शिपिशब्देनपशवोजीवास्तेषुअंतर्यामितयाप्रविष्टाय 'यज्ञोवैविष्णुःपशवःशिपिर्यज्ञएवपशुषुप्रतितिष्ठति'इतिश्रुतेः । यद्वाशिपयोरश्मयस्तैर्वेष्टितायेत्यर्थः तथापिविष्णवेव्यापिने २६ अंतःपतितंतृणादियथागभीरंस्रोतआक्षिपतिआकर्षतितथाकालात्माभवान्विश्वमाक्षिपति २७ प्रजापतीनांपत्यमेवसंभविष्णुरुत्पादनशीलोसि । अर्यमावः । नह्येवंभूतस्यतवजन्मादिसंभवः । किंतुदेवादीनांपरमाश्रयत्वेनतत्कार्यसाधनायावतारोयंअतस्तान्स्वर्गच्युतान्पुनःस्वर्गेस्थापयेति २८ ॥ इतिश्रीभागवतेटीकायांअदितिवरप्रदानंनामसप्तदशोध्यायः ॥१७॥ ततस्त्वष्टादशेभूत्वावामनःसत्कृतोऽखिलैः । यज्ञंगतस्ततस्तेनसत्कृत्योक्तोवरान्बहून् ॥१॥ इत्थंविरिंच्येनस्तुतंकर्मचदेवकार्यलक्षणंवीर्यंयस्यसप्रत्यक्षतयाविरदित्यांप्रादुर्बभूवेतिप्रथमान्वयः । अमृतभूःमृत्युजन्मशून्यः । शंखगदापद्मचक्राणिअस्यसंतीतितथा । अर्शआदित्वेनमत्वर्थीयोऽच्प्रत्ययः । अविसर्गपाठेसमासांतोपिसंभवत्यसावच् १ श्यामावदातःश्यामेषुप्रवरः । झषराजोमकरस्तदाकारयोःकुंडलयोस्त्विषाउल्लसंतीश्रीर्वदनांबुजेयस्य । श्रीवत्सोवक्षसियस्य । वलयैरंगदैश्चसहोल्लसंतिकिरीटादीनियस्य २ श्रीमत्यावनमालयाविराजितः । वेश्मतत्तमः ३ अग्निजिह्वादेवाः । नगाःपर्वताः ४ तत्प्रादुर्भावसमयमाह । श्रोणायामिति । भाद्रपदशुक्लद्वादशीश्रवणद्वादशीतिप्रसिद्धातस्यांतत्रापिश्रोणायांश्रवणस्थेचंद्रइत्यर्थः तत्रापिश्रवणस्यप्रथमांशेअभिजितिनक्षत्रे । तच्चश्रुत्यादर्शितं । 'अभिजिन्नामनक्षत्रंउपरिष्टादाषाढानांअधस्ताच्छ्रोणायाः'इति । एवंविशिष्टेमुहूर्ते (सुसमये) प्रभुःप्रादुर्बभूव । किंचनक्षत्राण्यश्विन्यादीनिताराशब्देनताराग्रहाभौमादयस्तेआद्यायेषांतेसूर्योदयोपिसर्वेतस्यजन्मदाक्षिण्यं ( आनुकूल्येन ) उदारंचक्रुः । जन्ममुहूर्तेबहवोगुणाबभूवुरित्यर्थः ५

नमस्तेपृश्निगर्भायवेदगर्भायवेधसे ॥ त्रिणाभायत्रिपृष्ठायशिपिविष्टायविष्णवे २६ त्वमादिरंतोभुवनस्यमध्यमनंतशक्तिंपुरुषंयमाहुः ॥ कालोभवानाक्षिपतीशविश्वंस्रोतोयथांतःपतितंगभीरम् २७ त्वंवैप्रजानांस्थिरजंगमानांप्रजापतीनामसिसंभविष्णुः ॥ दिवौकसांदेवदिवश्च्युतानांपरायणंनौरिवमज्जतोऽप्सु २८ ॥ ॥ इतिश्रीभागवतेमहापुराणेअष्टमस्कंधेअदितिवरप्रदानंनामसप्तदशोऽध्यायः ॥ १७ ॥ ॥ ध ॥ ॥ श्रीशुकउवाच ॥ इत्थंविरिंच्यस्तुतकर्मवीर्यःप्रादुर्बभूवामृतभूरदित्याम् ॥ चतुर्भुजःशंखगदाब्जचक्रःपिशंगवासानलिनायतेक्षणः १ श्यामावदातोझषराजकुंडलत्विषोल्लसच्छ्रीवदनांबुजःपुमान् ॥ श्रीवत्सवक्षावलयांगदोल्लसत्किरीटकांचीगुणचारुनूपुरः २ मधुव्रतव्रातविघुष्टयास्वयाविराजितःश्रीवनमालयाहरिः ॥ प्रजापतेर्वेश्मतमःस्वरोचिषाविनाशयन्कंठनिविष्टकौस्तुभः ३ दिशःप्रसेदुःसलिलाशयास्तदाप्रजाःप्रहृष्टाऋतवोगुणान्विताः ॥ द्यौरंतरिक्षंक्षितिरग्निजिह्वागावोद्विजाश्चंजहृषुर्नगाश्च ४ श्रोणायांश्रवणद्वादश्यांमुहूर्तेऽभिजितिप्रभुः ॥ सर्वेनक्षत्रताराद्याश्चक्रुस्तज्जन्मदक्षिणम् ५

पृश्निगर्भायविष्णवेतेनमः २६ २७ त्वंदेवानांपरमायनअसि एवंभूतस्यतेजन्मादिनास्तिअथापिदेवादीनांकार्यसाधनायअयमवतारः अतः स्वर्गच्युतान्देवान्पुनःस्वर्गेस्थापय २८ ॥ इत्यष्टमेसप्तदशः १७ ॥ ॥ श्रीशुकउवाच ॥ एवंब्रह्मणास्तुतः भगवान् चतुर्भुजः शंखगदाब्जचक्रः पीतवासाः १ श्रीवत्सवक्षाः २ वनमालयायुतः कंठनिविष्टकौस्तुभः हरिः प्रादुरभूत् ३ तदादिशः प्रसेदुः सलिलाशयाःप्रजाश्चप्रहृष्टाः द्यौः अंतरिक्षंक्षितिः देवाः गावः द्विजाः पर्वताःजहृषु ४ हरेः प्रादुर्भावसमयमाह श्रवणद्वादश्यांश्रवणस्थेचंद्रेअभिजिन्नक्षत्रेप्रभुःप्रादुर्बभूव सर्वेनक्षत्रग्रहाःजन्ममुहूर्तेबहुगुणाःबभूवुः ५

विलोभितस्माह । दस्यांद्वादश्यांहरेर्जन्मतस्यामहन्यैवविदुःतदाचमध्यंदिनगतःसविताऽतिष्ठत् । अनेन अभिजिन्मुहूर्तेजन्मोक्तम् । साचद्वादशीविजयानामप्रोक्तेत्यन्वयः ६ शंखादयो
( भेदुरितिक्षेपः ) येतेषांचित्रतूर्याणांचनिर्घोषोऽभवत् ७ देवामनवइत्यादीनांकुसुमैःसमवाकिरन्नितितृतीयेनान्वयः ८ ९ १० ( प्रजापतिःकश्यपः ) ११ चिरमधारयत् । बालइति
यत्तद्वपुर्हरिरधारयत्प्रकटितवान् । तेनवपुषामातापित्रोःसंपश्यतोरेववामनोबटुर्बभूव । दिव्यगतिःअद्भुतचेष्टितः । स्वयंकथंभूतःअव्यक्तचिद्रूपः । कथमधारयत् । भाविदीप्तिः ( शाप )
विभूषणानिच आयुधानिचतैर्व्यक्तम् यथाभवतितथा १२ कर्माणिजातकर्मादीनि १३ १४ वनस्पतिर्वनानांपतिःसोमः १५ ( वेदगर्भोब्रह्मा ) १६ ( यक्षराट्कुबेरः ) पात्रिकांभिक्षापा
त्रम् १७ एवंसंभाविताभोमारिषःश्रेष्ठोबटुर्ब्रह्मवर्चसेनब्रह्मर्षिगणैःसंजुष्टांतांसभामतिक्रम्यारोचत १८ ( तत्रवह्निंसमिद्धंप्रज्वलितंकृत्वापरिसमूहनंचकृत्वा ) १९

द्वादश्यांसवितातिष्ठन्मध्यंदिनगतोनृप ॥ विजयानामसाप्रोक्तायस्यांजन्मविदुर्हरेः ६ शंखदुंदुभयोभेर्योमृदंगपणवानकाः ॥ चित्रवादित्रतूर्याणांनिर्घो
षस्तुमुलोऽभवत् ७ प्रीताश्चाप्सरसोऽनृत्यन्गंधर्वप्रवराजगुः ॥ तुष्टुवुर्मुनयोदेवामनवःपितरोग्नयः ८ सिद्धविद्याधरगणाःसकिंपुरुषकिन्नराः ॥ चारणा
यक्षरक्षांसिसुपर्णाभुजगोत्तमाः ९ गायंतोतिप्रशंसंतोनृत्यंतोविबुधानुगाः ॥ अदित्याआश्रमपदंकुसुमैःसमवाकिरन् १० दृष्ट्वाऽदितिस्तंनिजगर्भसंभवं
परंपुमांसंमुदमापविस्मिता ॥ गृहीतदेहंनिजयोगमाययाप्रजापतिश्चाहजयेतिविस्मितः ११ यत्तद्वपुर्भातिविभूषणायुधैरव्यक्तचिद्व्यक्तमधारयद्धरिः ॥
बभूवतेनैवसवामनोबटुःसंपश्यतोर्दिव्यगतिर्यथानटः १२ तंबटुंवामनंदृष्ट्वामोदमानामहर्षयः ॥ कर्माणिकारयामासुःपुरस्कृत्यप्रजापतिम् १३ तस्यो
पनीयमानस्यसावित्रींसविताऽब्रवीत् ॥ बृहस्पतिर्ब्रह्मसूत्रंमेखलांकश्यपोऽददात् १४ ददौकृष्णाजिनंभूमिर्दंडंसोमोवनस्पतिः ॥ कौपीनाच्छादनंमाता
द्यौश्छत्रंजगतःपतेः १५ कमंडलुंवेदगर्भःकुशान्सप्तर्षयोददुः ॥ अक्षमालांमहाराजसरस्वत्यव्ययात्मनः १६ तस्माइत्युपनीताययक्षराट्पात्रिकामदा
त् ॥ भिक्षांभगवतीसाक्षादुमाऽदादंबिकासती १७ सब्रह्मवर्चसेनैवसभांसंभावितोबटुः ॥ ब्रह्मर्षिगणसंजुष्टामत्यरोचतमारिषः १८ समिद्धमाहितंवह्निंकृ
त्वापरिसमूहनम् ॥ परिस्तीर्यसमभ्यर्च्यसमिद्भिरजुहोद्द्विजः १९

यस्यांद्वादश्यांहरेर्जन्मजातंतस्यांमध्यंदिनगतः सूर्यः आसीत् विजयानामसाप्रोक्ता ६ तदाशंखादयोनेदुः ७ वाद्यनादः अभूत् अप्सरसःननृतुः गंधर्वाःजगुः ८ मुनयः
तुष्टुवुः देवादयः अदित्याश्रमपदंकुसुमैः अवाकिरन् ९ १० अदितिः तंदृष्ट्वामुदंआप कश्यपः जयइत्याह ११ हरिः यद्वपुः पूर्वंदधारतेनवपुषापित्रोःपश्यतोरेववामनो
बटुर्बभूव १२ ऋषयः बटुंदृष्ट्वाकश्यपंपुरस्कृत्यकर्माणिकारयामासुः १३ उपनीयमानस्यतस्यवामनस्यसूर्यःसावित्रींअब्रवीत् बृहस्पतिःब्रह्मसूत्रम् कश्यपः मेखलाम् १४
भूमिः अजिनम् सोमःदंडम् माताकौपीनम् द्यौः छत्रम् १५ ब्रह्माकमंडलुम् सप्तर्षयः कुशान् सरस्वतीअक्षमालाम् १६ कुबेरःभिक्षापात्रीम् उमाभिक्षांददौ १७ एवं
बटुः वामनः ब्रह्मवर्चसेन अरोचत १८ ततः बटुः वह्निंसमिध्यपरिसमूह्य परिस्तीर्याभ्यर्च्य समिद्भिः अजुहोत् १९

यदर्थंवटुर्बभूवतदाह । श्रुत्वेत्यादियावत्समाप्ति । यजमानंयजंतम् । भृगूणांभृगुभिरुपकाल्पितैःप्रवर्तितैः अखिलेनसारेणबलेनसंभृतःसंपूर्णः ( गांपृथ्वीं ) २० नर्मदायाउत्तरेतटेभृगुकच्छसंज्ञकेक्षेत्रे क्रतूत्तमंप्रवर्तयंतोयेबलेर्ऋत्विजोभृगवस्तेतंवामनमपश्यन् आरात्समीपएवउदितंरविमिव २१ तेऋत्विगादयःसूर्यःकिलेत्येवमादिव्यतर्कयन्निर्विशेषः २२ हयमेधवाटंअश्वमेधमंडपंविवेश २३ ( मौंज्यामुंजैर्निर्मितया ) उपवीताजिनंउपवीतवत्कृतंअजिनमेवउत्तरीयंयस्यतम् ( माययामाणवकंवटुम् ) २४ संक्षिप्ताअभिभूताःसंतः २५ रूपस्यअनुरूपाअवयवायस्यतंदृष्ट्वेतिशेषः २६ ( मुक्तसंगानामपिमनोरमम् ) २७ चंद्रमौलिश्चेत्यन्वयः । अप्यर्थेचकारः । चंद्रमौलिरपिगंगारूपंयन्मूर्ध्नादधारेत्यर्थः २८ हेआर्यत्वात्त्वांसाक्षात्मूर्तंब्रह्मर्षीणांतपएवमन्ये । कथंभूतंतपः । वपुर्धरंमूर्तिधारि २९ ३० त्वच्चरणावनेजनैर्वार्भिःहतमंहोयस्यतस्यमे पुनीतापवित्रीकृता ३१

श्रुत्वाश्वमेधैर्यजमानमूर्जितंबलिंभृगूणामुपकल्पितैस्ततः ॥ जगामतत्राखिलसारसंभृतोभारेणगांसंनमयन्पदेपदे २० तंनर्मदायास्तटउत्तरेबलेर्यऋत्विजस्तेभृगुकच्छसंज्ञके ॥ प्रवर्तयंतोभृगवःक्रतूत्तमंव्यचक्षतारादुदितंयथारविम् २१ तऋत्विजोयजमानःसदस्याहतत्विषोवामनतेजसानृप ॥ सूर्यःकिलायात्युतवाविभावसुःसनत्कुमारोथदिदृक्षयाक्रतोः २२ इत्थंसशिष्येषुभृगुष्वनेकधावितर्क्यमाणोभगवान्सवामनः ॥ छत्रंसदंडंसजलंकमंडलुंविवेशबिभ्रद्धयमेधवाटम् २३ मौंज्यामेखलयावीतमुपवीताजिनोत्तरम् ॥ जटिलंवामनंविप्रंमायामाणवकंहरिम् २४ प्रविष्टंवीक्ष्यभृगवःसशिष्यास्तेसहाग्निभिः ॥ प्रत्यगृह्णन्समुत्थायसंक्षिप्तास्तस्यतेजसा २५ यजमानःप्रमुदितोदर्शनीयंमनोरमम् ॥ रूपानुरूपावयवंतस्माआसनमाहरत् २६ स्वागतेनाभिनंद्याथपादौभगवतोबलिः ॥ अवनिज्यार्चयामासमुक्तसंगमनोरमम् २७ तत्पादशौचंजनकल्मषापहंसधर्मविन्मूर्ध्न्यदधात्सुमंगलम् ॥ यद्देवदेवोगिरिशश्चंद्रमौलिर्दधारमूर्ध्नापरयाचभक्त्या २८ ॥ बलिरुवाच ॥ स्वागतंतेनमस्तुभ्यंब्रह्मन्किंकरवामते ॥ ब्रह्मर्षीणांतपःसाक्षान्मन्येत्वाऽऽर्यवपुर्धरम् २९ अद्यनःपितरस्तृप्ताअद्यनःपावितंकुलम् ॥ अद्यस्विष्टःक्रतुरयंयद्भवानागतोगृहान् ३० अद्याग्नयोमेसुहुतायथाविधिद्विजात्मजत्वच्चरणावनेजनैः ॥ हतांहसोवार्भिरियंचभूरहोतथापुनीतातनुभिःपदैस्तव ३१

एतर्हिअश्वमेधैर्यजंतंबलिंश्रुत्वातत्रजगाम २० ततःनर्मदोत्तरतीरेभृगुकच्छक्षेत्रेयज्ञंप्रवर्तयंतःभृगवः रविमिवभास्वरंतंदृष्ट्वाव्यतर्कयन् २१ अहोक्रतुदिदृक्षयासूर्यः अग्निः सनत्कुमारोवाआयातिकिम् २२ एवंभृगुषुवितर्कयत्सुवामनः हयमेधमंडपंविवेश २३ भृगवः तंवामनंजटिलंमौंजीमेखलायुक्तंवीक्ष्यउत्थायअग्निभिः सह प्रत्यगृह्णन् २४ २५ यजमानोबलिस्तस्मैवटवेआसनंदत्त्वा २६ स्वागतेनअभिनंद्यतत्पादौअवनिज्यआनर्च २७ जन्मकल्मषापहंतत्पादशौचंगंगारूपंमूर्ध्निधृत्वाऽऽह २८ हेब्रह्मन् तेस्वागतंतुभ्यंनमःत्वत्कृतेकिंकरवाम २९ अद्यनः पितरः तृप्ताः कुलंचपावितम् अयंक्रतुः स्विष्टः यतः त्वंगृहान् आगतः ३० अद्य मे अग्नयः सुहुताः त्वत्पदैः मेभूमिः पावित्रीकृता ३१

मेमत्तः प्रतीच्छ गृहाण हे अर्हत्तम पूज्यतम ( गुणवत्सं समृद्धियुक्तम् । मृष्टं शुद्धम् । अन्नं च पेयं च क्षीरादि ) ॥ ३२ ॥ इति श्रीभागवते महापुराणे अष्टमस्कंधे टीकायां अष्टादशोऽध्यायः ॥ १८ ॥
॥ ७ ॥ क्रमविशेषेण हरिणा याचितो बलिः पदत्रये । प्रतिश्रुत्य ततस्तेन बलिर्न ज्ञानं भूगुरुर्बोधयत् ॥ १ ॥ ( सूनृतं प्रियसत्यवचनं सहितम् ) १ दातुः स्तुतिः स्वयं तु हरिरित्यादिप्रस्तुतोचितम् । वक्ष्य
मितिमिक्षं तु शिक्षयन्नाह वामनः ॥ वचस्तवैतदिति षोडशभिः । हे जनदेव । सांपरायेपारलौकिके धर्मे पितामहश्च प्रह्लादः प्रमाणम् २ निःसत्त्वस्य लक्षणम् । यो द्विजातये याचकाय प्रत्याख्या
तानदद्दामीति विवक्ता । कृपणस्य लक्षणम् ( ददामीति ) प्रथमं प्रतिश्रुत्य यो वा न ददाति ३ तीर्थे दानावसरे । यत्र यस्मिन् युष्मत्कुले ४ यतो यस्मिन् जातः ( एकोऽसहायः ) ५ क्ष्मोद्धा
रे भूम्या उद्धरणे ६ ७ ८ पराग्दृशो बहिर्दृष्टेः ९ अतो हृदये स्थितं मां न द्रक्ष्यतीत्येवं निश्चित्य श्वासानिलेऽन्तर्हितः सूक्ष्मो देहो यस्य । विग्नमतिः कंपितं च चेतो यस्य अकंपितचित्त इति वास्त्वर्थः १०

यद्यद्वटो वाञ्छसि तत्प्रतीच्छ मे त्वामर्थिनं विप्रसुतानुतर्कये ॥ गां काञ्चनं गुणवद्धाम मृष्टं तथान्नपेयमुत वा विप्रकन्याम् ॥ ग्रामान्समृद्धांस्तुरगान्गजान्वा रथां
स्तथार्हत्तम संप्रतीच्छ ३२ ॥ ॥ इति श्रीभागवते महापुराणे अष्टमस्कंधे अष्टादशोऽध्यायः १८ ॥ ॥ श्रीशुक उवाच ॥ इति वैरोचनेर्वाक्यं धर्मयुक्तं स सू
नृतम् ॥ निशम्य भगवान्प्रीतः प्रतिनंद्येदमब्रवीत् १ ॥ श्रीभगवानुवाच ॥ वचस्तवैतज्जनदेव सूनृतं कुलोचितं धर्मयुतं यशस्करम् ॥ यस्य प्रमाणं भृगवः
सांपराये पितामहः कुलवृद्धः प्रशान्तः २ न ह्येतस्मिन्कुले कश्चिन्निःसत्त्वः कृपणः पुमान् ॥ प्रत्याख्याता प्रतिश्रुत्य यो वाऽदाता द्विजातये ३ न सन्ति तीर्थे युधि
चार्थिनार्थिताः पराङ्मुखा ये त्वमनस्विनो नृपाः ॥ युष्मत्कुले यद्यशसामलेन प्रह्लाद उद्भाति यथोडुपः खे ४ यतो जातो हिरण्याक्षश्चरन्नेक इमां महीम् ॥ प्र
तिवीरं दिग्विजये नाविंदत गदायुधः ५ यं विनिर्जित्य कृच्छ्रेण विष्णुः क्ष्मोद्धार आगतम् ॥ नात्मानं जयिनं मेने तद्वीर्यं भूर्यनुस्मरन् ६ निशम्य तद्वधं भ्राता
हिरण्यकशिपुः पुरा ॥ हंतुं भ्रातृहणं क्रुद्धो जगाम निलयं हरेः ७ तमायांतं समालोक्य शूलपाणिं कृतांतवत् ॥ चिंतयामास कालज्ञो विष्णुर्मायाविनां वरः ८
यतो यतोऽहं तत्रासौ मृत्युः प्राणभृतामिव ॥ अतोऽहमस्य हृदयं प्रवेक्ष्यामि पराग्दृशः ९ एवं स निश्चित्य रिपोः शरीरमाधावतो निर्विविशेऽसुरेंद्र ॥ श्वासानिलांत
र्हितसूक्ष्मदेहस्तत्प्राणरंध्रेण विविग्नचेताः १०

हे बटो यद्वाञ्छसि तत् मे मत्तः गृहाण त्वां अर्थिनं तर्कये गां काञ्चनं गुणवद्धाम अन्नपेयं कन्यां ग्रामान् तुरगगजरथान् इदं सर्वं हे सात्वो मत्तः गृहाण ३२ ॥ इत्यष्टमे अष्टादशः १८ ॥
॥ श्रीशुक उवाच ॥ एवं धर्मयुक्तं बलेर्वाक्यं श्रुत्वा प्रीतः वामनः इदं आह १ हे जनदेव एतत् तव वचः कुलोचितं सूनृतं धर्मयुक्तं चास्ति २ अस्मिन् कुले कश्चित् कृपणः निःसत्त्वः
ब्राह्मणाय ददामीत्युक्त्वा प्रत्याख्याता पिन ३ किंच दानकाले युद्धे च अर्थिना अर्थिताः त्वत्कुलजाः पराङ्मुखाः न यत्र प्रह्लादः यशसा चंद्रवद्विराजे ४ यत्र जातो हिरण्याक्षः
दिग्विजये प्रतियोद्धारं नाविंदत ५ यं निर्जित्य विष्णुः तद्वीर्यं स्मरन् नात्मानं जयिनं मेने ६ ततः हिरण्यकशिपुः भ्रातृवधं श्रुत्वा हरेः निलयं जगाम ७ आयांतं दैत्यं आलो
क्य विष्णुः चिंतयामास ८ यतो यतोऽहं तत्रासौ मृत्युः अतोऽस्य हृदयं प्रवेक्ष्यामि ९ एवं निश्चित्य रिपोः शरीरं विवेश १०

भा०अ० (शून्यंस्वामिरहितंपरिमृश्यविचार्य ) नददर्शअंतःप्रविष्टत्वात् ११ (अन्विष्टमशेषितम् ) पुमान्यतः अकामात्मानवर्ततेतद्गतोनूनंगतः ॥ इत्युक्तत्वादितिवास्तवोर्थः ( एवंमृत्युपर्यंतमवातं अ०
विष्णोर्वैरंयत्कृतवान्तदुचितमेव । तस्यात्रातिहंतुस्यमहाबलपराक्रमस्यासुरादंमानविजृंभितक्रोधानुबंधस्य ) १२ कथंतामासोसुरशिरोमणिर्जीवद्येवकातरवद्वैरमुपेक्षितवानित्याशंक्या
॥३२॥ ह ( वैरेति ) वैरानुबंधएतावान् आमृत्योर्भवति (वैरिणिमृतेतुतन्नोचितइत्यर्थः) देहिनांदेहेनिमूढाभिमानवतामसुराणाम् । तथाहंमानेनोपबृंहितो मन्युश्चप्रवर्तेत(तावत्) । यतोऽज्ञानप्रभ ॥१९॥
वःयतोअज्ञानानिवृत्तेर्भ्राकृपौरुषस्यामोमांद्यमेवेत्यर्थः १३ तदेवंपूर्ववान्स्तुत्वातरिपवरंस्तौति । पितेति (तवपिता) द्विजवेषधारिणोमद्वैरिणोदेवाएवेतज्जुद्विजाइतिविद्वानपितयाचितस्स
न्स्वीयमायुरपिदेवेभ्यो(ऽपिवैरिभ्यो)ददौ (यतोद्विजवत्सलः) १४ १५ ममपदासंमितानीतित्रिविक्रमपदाभिप्रायेण । यथानुवादःतथापिस्वपदत्वानपगमात् १६ यावदर्थएवप्रतिग्रहो
यस्यसः ( यावतामतिग्रहेणस्वप्रयोजनंसिध्यतितावतःप्रतिग्रहादित्यर्थः ) १७ ईश्वरस्यापिंयाचप्रकारमुक्त्वाबलेर्वचनमभोतरत्वेनतस्यगर्वातिरेकेणापिविशेषप्रकारमाह । अहोइतित्रि
भिः । तववाचोवृद्धानांसंमताः ( हेब्राह्मणपुत्र ) त्वंतुबालोबालिशमतिश्च बालिशानामज्ञानांमतिरिवमतिर्यस्य । अतएवस्वार्थंप्रतियथावदबुधः । वस्तुतोबालइव । अबालिशमति
श्चेतिच्छेदः । स्वार्थंप्रत्यबुधइतिचमकानामेवार्थंबुध्यसेनतुस्वार्थं ( बुध्यसे ) परिपूर्णस्यतवतद्व्यतिरेकेणस्वार्थाभावादित्यर्थः १८ अबुधत्वमेवाहमामिति । द्वीपस्यदाशुषंदातारम् ।
अबुद्धिमान् । वस्तुतस्तुबुद्धिमानित्येवच्छेदः १९ कामंयथेच्छम् ( वस्तुतः ) सम्यक्पादप्रसारणेनेत्यर्थः अतएवतथाकरिष्यति २०

सतन्निकेतंपरिमृश्यशून्यमपश्यमानःकुपितोननाद ॥ क्ष्मांद्यांदिशःखंविवरान्समुद्रान्विष्णुंविचिन्वन्नददर्शवीरः ११ अपश्यन्नितिहोवाचमयाऽन्वि
ष्टमिदंजगत् ॥ भ्रातृहामेगतोनूनंयतोनावर्ततेपुमान् १२ वैरानुबंधएतावानामृत्योरिहदेहिनाम् ॥ अज्ञानप्रभवोमन्युरहंमानोपबृंहितः १३ पिताप्र
ह्लादपुत्रस्तेतद्विद्वान्द्विजवत्सलः ॥ स्वमायुर्द्विजलिंगेभ्योदेवेभ्योऽदात्सयाचितः १४ भवानाचरितान्धर्मानास्थितोगृहमेधिभिः ॥ ब्राह्मणैःपूर्वजैःशूरै
रन्यैश्चोद्दामकीर्तिभिः १५ तस्मात्त्वत्तोमहीमीषद्वृणेऽहंवरदर्षभात् ॥ पदानित्रीणिदैत्येंद्रसंमितानिपदामम १६ नान्यत्तेकामयेराजन्वदान्याज्जगदीश्वरा
त् ॥ नैनःप्राप्नोतिवैविद्वान्यावदर्थप्रतिग्रहः १७ ॥ बलिरुवाच ॥ अहोब्राह्मणदायादवाचस्तेवृद्धसंमताः ॥ त्वंबालोबालिशमतिःस्वार्थंप्रत्यबुधोयथा ॥
१८ मांवचोभिःसमाराध्यलोकानामेकमीश्वरम् ॥ पदत्रयंवृणीतेयोऽबुद्धिमान्द्वीपदाशुषम् १९ नपुमान्मामुपव्रज्यभूयोयाचितुमर्हति ॥ तस्माद्वृत्ति
करींभूमिंवटोकामंप्रतीच्छमे २०

दैत्यः तत्रहरिमपश्यन्क्रुद्धः ननाद ततःक्ष्मादिषुविष्णुंविचिन्वन्नददर्श ११ एवमपश्यन्नाह मेभ्रातृहाविष्णुः यतः पुमान्नावर्ततेतद्व्रजेगतः १२ १३ किंच तेपिताविरो ॥३२॥
चनःद्विजैर्याचितःसन्द्विजलिंगेभ्योदेवेभ्यः स्वमायुरदात् १४ १५ हेवत्से एवंभूतकल्पोस्यतात्त्वत्तईषत्महीममपदानुल्यानित्रीणिपदानिवृणे १६ वदान्यात्त्वत्तः नान्य
कामये यावदर्थपरिग्रहःविद्वानेनोनप्राप्नोति १७ ॥ बलिरुवाच ॥ अहोब्राह्मणपुत्रत्वंबालः स्वार्थंप्रत्यबुधः असि १८ द्वीपदातारंमांवचोभिःआराध्ययःपदत्रयंवृणीतेसः
अबुधः १९ यतः पुमान्मामुपव्रज्यपुनर्याचितुंनार्हति तस्माद्वटोवृत्तिकरींभूमिंगृहाण २०

पुनरपि निःस्पृहत्वमेवाविष्कुर्वन्नाह । यावंतइति सप्तभिः ( अजितेंद्रियंपुरुषं ) २१ (क्रमैःपदन्यासैः) नववर्षसमेतेनद्वीपेनापि । सप्तानांद्वीपवराणांइच्छया २२ तृष्णायाअंतंनगता इत्यस्माभिःश्रुतम् ( कामैर्विषयभोगैः ) २३ असंतुष्टस्तुसंपादितैस्त्रिभिर्लोकैरपिनसुखंवर्तते ( असंतोषेहेतुःअजितात्मेति ) २४ २५ आशुशुक्षणिरग्निः २६ सिद्धःकृतार्थः । एतावतैव सर्वस्वापहारसिद्धेरितिगूढोभिप्रायः । तदेवाह । त्रिपदीयावत्प्रयोजनंमेतावद्भव । अधिकस्यक्लेशावहत्वादित्यर्थः २७ २८ २९ ३० अनयोरन्यायः ३१ अन्यायमेवाह । एषवइति ( आच्छिद्यआकृष्य ) ३२ अशुभयापदत्रयमेवप्रतिश्रुतंनाधिकंत्वयाहत्रिभिरिति । क्रमतांनितिवेनप्राहस्वर्गश्चमिति ३३

॥ श्रीभगवानुवाच ॥ यावंतोविषयाःप्रेष्ठास्त्रिलोक्यामजितेंद्रियम् ॥ नशक्नुवंतितेसर्वेप्रतिपूरयितुंनृप २१ त्रिभिःक्रमैरसंतुष्टोद्वीपेनापिनपूर्यते ॥ नव वर्षसमेतेनसप्तद्वीपवरेच्छया २२ सप्तद्वीपाधिपतयोनृपावैन्यगयादयः ॥ अर्थैःकामैर्गतानांतंतृष्णायाइतिनःश्रुतम् २३ यदृच्छयोपपन्नेनसंतुष्टोवर्त तेसुखम् ॥ नासंतुष्टस्त्रिभिर्लोकैरजितात्मोपसादितैः २४ पुंसोऽयंसंसृतेर्हेतुरसंतोषोर्थकामयोः ॥ यदृच्छयोपपन्नेनसंतोषोमुक्तयेस्मृतः २५ यदृच्छा लाभतुष्टस्यतेजोविप्रस्यवर्धते ॥ तत्प्रशाम्यत्यसंतोषादंभसेवाशुशुक्षणिः २६ तस्मात्त्रीणिपदान्येववृणेत्वद्वरदर्षभात् ॥ एतावतैवसिद्धोहंवित्तंयावत्प्रयोज नम् २७ ॥ श्रीशुकउवाच ॥ इत्युक्तःसहसन्नाहवांछातःप्रतिगृह्यताम् ॥ वामनायमहींदातुंजग्राहजलभाजनम् २८ विष्णवेक्ष्मांप्रदास्यंतमुशनाअसु रेश्वरम् ॥ जानंश्चिकीर्षितंविष्णोःशिष्यंप्राहविदांवरः २९ ॥ शुक्रउवाच ॥ एषवैरोचनेसाक्षाद्भगवान्विष्णुरव्ययः ॥ कश्यपाददितेर्जातोदेवानां कार्यसाधकः ३० प्रतिश्रुतंत्वयैतस्मैयदनर्थमजानता ॥ नसाधुमन्येदैत्यानांमहानुपगतोऽनयः ३१ एषतेस्थानमैश्वर्यंश्रियंतेजोयशःश्रुतम् ॥ दास्य त्याच्छिद्यशक्रायमायामाणवकोहरिः ३२ त्रिभिःक्रमैरिमाँल्लोकान्विश्वकायःक्रमिष्यति ॥ सर्वस्वंविष्णवेदत्त्वामूढवर्तिष्यसेकथम् ३३

॥ वामनउवाच ॥ हेराजन्त्रैलोक्येयावंतोविषयाः संति तेअजितेंद्रियंयाचकंपूरयितुंनसमर्थाः २१ किंच पदत्रयेण यः असंतुष्टः सः वर्षेणद्वीपेनापिचनतुष्यति २२ एवंवैन्यादिनृपाः अर्थकामैः तृष्णांतंनगताःइतिश्रुतम् २३ यदृच्छयोपपन्नेनसंतुष्टःसुखंवर्तते असंतुष्टस्तुन २४ किंच पुंसोऽसंतोषः संसृतिहेतुः संतोषस्तुमुक्तयेस्मृतः २५ तथा यदृच्छालाभतुष्टस्यविप्रस्यतेजःवर्द्धते असंतोषान्नश्यति २६ तस्मात्त्रिपदान्येववृणे एतावतैवसिद्धोऽहम् २७ ॥ श्रीशुकउवाच ॥ एवमुक्तःबलिःहसन्आह हेबटो वांछातः प्रतिगृह्यताम् एवमुक्त्वावामनायमहींदातुंजलपात्रंजग्राह २८ विष्णवेक्ष्मांप्रदास्यंतंशिष्यंशुक्रः उवाच २९ हेवैरोचनेएषः साक्षाद्विष्णुः देवानां कार्यसाधकःकश्यपात् अदित्यांजातः ३० किंच अस्मैयत्प्रतिश्रुतंतत् अहंसाधुनमन्ये ३१ एषः स्वतः स्थानैश्वर्यादिकंआच्छिद्य इंद्रायदास्यति ३२ अयंविश्वकायः त्रिभिः क्रमैः इमान्लोकान् क्रमिष्यति हेमूढ विष्णवेसर्वस्वंदत्त्वा कथंवर्तिष्यसे ३३

यद्यपियशोनजिहासतितथाहंयुद्धेअयंमामांहत्वाएनांभूमिंहरेत् ( एवंयथानिहतः ) शयीतवा । मितरांज्ञातःसन्नयममपितेशयीतेतिवास्तवोर्थः ( तस्मादस्याभीप्सितंकास्याम्येवे
तिभावः ) १३ अश्रद्धितं(अजातश्रद्धितं)अजातश्रद्धम् १४ १५ १६ जालकंमुक्ताभरणविशेषस्तन् ( मालिनी । मौक्तिक-)मालावती अवनेजनीभवयपां भृतम् ( पात्रीमेकेन पूर्णं )
कलशम् १७ १८ ( आर्यंज्ञानवृद्धंअसुरेंद्रम् ) १९ ( रिपुरितिविद्वानपिजगत्त्रयमपि ) २० अवर्द्धत । वांच्छातःप्रतिग्रहीतामितिवाकेनापूर्वंगुणकत्वात् । गुणत्रयमयत्वमित्यस्यपाठः । यत्र
भूःखंदिशइत्यादयोयस्मिन्नासतस्थितवंतः २१ कायेविगतदिशिताविबलिःतस्यहरेःकायेएतद्विश्वंददर्श २२ तदेव प्रपंचयतिरसामितिपादोनैःसप्तभिः ( रसायपद्ममलम ) पातवं
मपंत्राणसंघम् । इंद्रस्यसेनैवसेनायस्यसःइंद्रपदेस्थितत्वात् । अचष्टपश्यत २३

एषवाउत्तमश्लोकोनजिहासातियद्यशः ॥ हत्वामैनांहरेद्युद्धेशयीतनिहतोमया १३ ॥ श्रीशुकउवाच ॥ एवमश्रद्धितंशिष्यमनादेशकरंगुरुः ॥ शशा
पदैवप्रहितःसत्यसंधंमनस्विनम् १४ दृढंपंडितमान्यज्ञःस्तब्धोस्यस्मदुपेक्षया ॥ मच्छासनातिगोयस्त्वमचिराद्भ्रश्यसेश्रियः १५ एवंशप्तःस्वगुरुणासत
त्यान्नचलितोमहान् ॥ वामनायददावेनामर्चित्वोदकपूर्वकम् १६ विंध्यावलिस्तदागत्यपत्नीजालकमालिनी ॥ आनिन्येकलशंहैममवनेजन्यपांभृतम्
१७ यजमानःस्वयंतस्यश्रीमत्पादयुगंमुदा ॥ अवनिज्यावहन्मूर्ध्नितदपोविश्वपावनीः १८ तदासुरेंद्रंदिविदेवतागणागंधर्वविद्याधरसिद्धचारणाः ॥
तत्कर्मसर्वेपिगृणंतआर्जवंप्रसूनवर्षैर्ववृषुर्मुदान्विताः १९ नेदुर्मुहुर्दुंदुभयःसहस्रशोगंधर्वकिंपूरुषकिन्नराजगुः ॥ मनस्विनाऽनेनकृतंसुदुष्करंविद्वानदाद्य
द्रिपवेजगत्त्रयम् २० तद्वामनंरूपमवर्धताद्भुतंहरेरनंतस्यगुणत्रयात्मकम् ॥ भूःखंदिशोद्यौर्विवराःपयोधयस्तिर्यङ्नृदेवाऋषयोयदासत २१ कायेब
लिस्तस्यमहाविभूतेःसहर्त्विगाचार्यसदस्यएतत् ॥ ददर्शविश्वंत्रिगुणंगुणात्मकेभूतेंद्रियार्थाशयजीवयुक्तम् २२ रसामचष्टांघ्रितलेथपादयोर्महींमहीध्रान्
पुरुषस्यजंघयोः ॥ पतत्त्रिणोजानुनिविश्वमूर्तेरूर्वोर्गणंमारुतमिंद्रसेनः २३

॥ श्रीशुकउवाच ॥ एवंआनादेशकरंशिष्यंगुरुः शशाप १४ हेबलेपंडितमानी मदाज्ञातिगः त्वमासि अतःशीघ्रं श्रियः भ्रश्यसे १५ एवंगुरुणाशप्तोऽपिसत्यान्नचलितः
बलिः वामनाय अर्चित्वाएनांददौ १६ तदाविंध्यावलिः हेमंजलपूर्णकलशं आनिन्ये १७ ततः स्वयंयजमानः भगवतः श्रीमत्पादयुगंमुदाप्रक्षाल्य तदपः विश्वपा
वनीःमूर्ध्निदधौ १८ तदाऽसुरेंद्रंस्वर्गेदेवगंधर्वादयः तत्कर्मगृणंतः संतः पुष्पैःववृषुः १९ दुंदुभयोनेदुः गंधर्वादयोजगुः अनेनबलिनारिपवेजगत्त्रयंदत्तं इदंदुष्करंकृतम् २०
एवंवदतिसति तद्वामनंरूपं अद्भुतं अवर्धत यत्ररूपे भूः खं द्यौः दिशःविवराः सागरादयश्च आसत २१ ततोबलिः तस्यदेहेइदंविश्वंसकलारमकंददर्श २२ तत्रतस्यांघ्रि
३३१ तलेरसातलं पादयोर्महीं जंघयोर्वृक्षान् जानुनिपक्षिणः ऊर्वोर्मरुतः २३

१ [illegible]मिति पाठः ।

भा०अ० आत्मारवयंबालिर्दृष्ट्यायेषांतानसुरान् ( जघनेऐक्षदपश्यत् ) ऋक्षमालांनक्षत्रपंक्तिम् २४ २५ अंगहेराजन्समस्तान्रेफांश्चशब्दान्योऽश्ययाव २६ रसेरसने २७ रेतसोरेतसि । क्रमणे अ०
षुपादन्यासेषु । ओषधजातयऔषधिजातीश्च २८ प्राणेषु इंद्रियेषु ( देवगणान् ) २९ (एवंसर्वात्मनीदंनिरीक्ष्यासुराःकश्मलमापुः) सुदर्शनमित्यादीनांईशंउपतस्थुरित्युत्तरेणान्वयः
३० ( अक्षयाःसायकायत्रतौ ) विद्याधरसंज्ञोऽसिः ३१ मीनकुंडलेमकरकुंडले । स्फुरंतिकिरीटादीनियस्यसः । ३२ मधुव्रतानांस्त्रजोयस्यांउपात्तवनमालयाश्रीवत्सादिभिश्चावृतो ॥२०॥
॥३५॥ व्याप्तः ( रत्नोत्तमंकौस्तुभः ) उरुक्रमत्वमेवाह । क्षितिमिति । ३३ द्वितीयंपदंक्रमतोविक्षिपतस्त्रिविष्टपंतदीयंकिंचिन्मात्रंजातम् । तृतीयायतुनकिंचिदपि तत्रहेतुः उरुक्रमस्यां
घ्रिस्त्रिविष्टपादुपर्युपरिगच्छन्महर्जनलोकाभ्यांतपसश्चपरंगतःसत्यलोकंप्राप्तः ॥ ३४ ॥ इतिश्रीभागवतेमहापुराणेऽष्टमस्कंधेटीकायांविंशतितमोऽध्यायः ॥ २० ॥

संध्यांविभोर्वाससिगुह्यऐक्षत्प्रजापतीन्जघनेआत्ममुख्यान् ॥ नाभ्यांनभःकुक्षिषुसप्तसिंधूनुरुक्रमस्योरसिऋक्षमालाम् २४ हृद्यंगधर्मंस्तनयोर्मुरारेर्ऋ
तंचसत्यंचमनस्यथेंदुम् ॥ श्रियंचवक्षस्यरविंदहस्तांकंठेचसामानिसमस्तरेफान् २५ इंद्रप्रधानानमरान्भुजेषुतत्कर्णयोःककुभोद्यौश्चमूर्ध्नि ॥ केशेषुमे
घान्श्वसनंनासिकायामक्ष्णोश्चसूर्यंवदनेचवह्निम् २६ वाण्यांचछंदांसिरसेजलेशंभ्रुवोर्निषेधंचविधिंचपक्ष्मसु ॥ अहश्चरात्रिंचपरस्यपुंसोमन्युंललाटेऽध
रएवलोभम् २७ स्पर्शेचकामंनृपरेतसोंऽभःपृष्ठेत्वधर्मंक्रमणेषुयज्ञम् ॥ छायासुमृत्युंहसितेचमायांतनूरुहेष्वोषधिजातयश्च २८ नदीश्चनाडीषुशिलान
खेषुबुद्धावजंदेवगणानृषींश्च ॥ प्राणेषुगात्रेस्थिरजंगमानिसर्वाणिभूतानिददर्शवीरः २९ सर्वात्मनीदंभुवनंनिरीक्ष्यसर्वेऽसुराःकश्मलमापुरंग ॥ सुदर्शनं
चक्रमसह्यतेजोधनुश्चशार्ङ्गंस्तनयित्नुघोषम् ३० पर्जन्यघोषोजलजःपांचजन्यःकौमोदकीविष्णुगदातरस्विनी ॥ विद्याधरोऽसिःशतचंद्रयुक्तस्तूणोत्त
मावक्षयसायकौच ३१ सुनंदमुख्याउपतस्थुरीशंपार्षदमुख्याःसहलोकपालाः ॥ स्फुरत्किरीटांगदमीनकुंडलःश्रीवत्सरत्नोत्तममेखलांबरैः ३२ मधुव्रतस्र
ग्वनमालयाऽऽवृतोरराजराजन्भगवानुरुक्रमः ॥ क्षितिंपदैकेनबलेर्विचक्रमेनभःशरीरेणदिशश्चबाहुभिः ३३ पदंद्वितीयंक्रमतस्त्रिविष्टपंनवैतृतीयायतदी
यमण्वपि ॥ उरुक्रमस्यांघ्रिरुपर्युपर्यथोमहर्जनाभ्यांतपसःपरंगतः ३४ ॥ इति श्रीभागवतेमहापुराणेअष्टमस्कंधेविंशतितमोऽध्यायः ॥ २० ॥

गुह्येप्रजापतीन् जघनेदैत्यान् नाभौनभः कुक्षिषुसमुद्रान् उरसिनक्षत्राणि २४ हृदिधर्मम् स्तनयोः ऋतसत्ये मनसिइंदुम् वक्षसिश्रियम् २५ भुजेषुलोकपालान् कर्ण
योः दिशः मूर्ध्निद्यौः केशेषुमेघान् नासिकायांवायुम् अक्ष्णोः सूर्यम् मुखेअग्निम् २६ वाण्यांछंदांसि भ्रुवोर्विधिनिषेधौ पक्ष्मसुअहोरात्रं ललाटेमन्युंअधरेलोभम् २७ रे
तसिजलंपृष्ठेअधर्मंछायासुमृत्युंहास्येमायांरोमसुओषधीः २८ नाडीषुनदीः नखेषुशिलाः बुद्धौ अजंदेवगणानृषींश्च इंद्रियेषुगात्रेषुस्थिरजंगमानिसर्वाणिभूतानि २९ ए
वंसर्वात्मनिइदं त्रिभुवनंवीक्ष्य सर्वे असुराः कश्मलंआपुः ३० तदासुदर्शनंशार्ङ्गंधनुः कौमोदकीगदा विद्याधरः असिः तूणौ सुनंदमुख्याः पार्षदाः ईशंउपतस्थुः ३१ हेरा ॥३५॥
जन्तदाउरुक्रमः किरीटांगदमीनकुंडलः श्रीवत्सकौस्तुभमेखलांबरवनमालाभिः वृतः रराज ३२ ततःत्रिविक्रमः बलेः भूमिंएकेन पदाविचक्रमे शरीरेणनभः बाहुभिःदिशः
द्वितीयेनपदास्वर्गं तृतीयायतदीयमण्वपिनावशिष्टम् ३३ एवंउरुक्रमस्यअंघ्रिः उपर्युपरिगच्छन्महर्जनाभ्यांतपसःपरंसत्यलोकंगतः ॥ ३४ इत्यष्टमेविंशः ॥ २० ॥

दद्विशेपदापूर्तिमिषेणबलिबंधनम् । विष्णुनाकृतमुत्कर्षंत स्यख्यापयितुंजने ॥ १ ॥ उरुक्रमस्यांघ्रिस्तपसःपरंमतइत्युक्तंततःकिंवृत्तंतदाह । सत्यंसत्यलोकंप्राप्तमंघ्रिमब्जभवःसमीक्ष्या
भ्यगात् ( यद्वा सहइतिपृथक्पदम् स्यंतमंघ्रिम् । ) तथामरीच्यादयश्चेतिद्वयोरन्वयः । कथंभूतोऽब्जभवःहरेरंघ्रेर्नखाएवेंदवस्तैर्हतास्वधाम्नोद्युतिर्यस्यसः स्वकंबलेराहतलक्षणाः । हेनरदेवबृ
हद्व्रतायोगिनश्च १ अंगानिशिक्षादीनि । पुराणानितत्संहिताश्च । योगएवसमीरस्तेनदीपितंज्ञानमेवाग्निस्तेनरंधितंदग्धंकर्मकल्मषंकर्मफलंयेषाम् २ तेचसर्वेतमंघ्रिंववंदिरे । यत्पदांघ्रेः
स्मरणानुभावतःअकर्मकंकर्मभिरप्राप्यं विष्णोरंघ्रये । स्वयंयन्नाभिपंकेरुहसंभवःतस्यविष्णोरंघ्रिंसमभ्यर्च्य ३ ( पादस्यावनेजनंप्रक्षालनंतेनपवित्रतयास्वर्धुन्यभूत् । यानभसिपतती )
लोकत्रयंनिर्मार्ष्टिपवित्रयति ४ संक्षिप्ताउपसंहृताआत्मविभूतिःस्वविस्तारोयेनतस्मैयथापूर्वंवामनरूपेअवस्थितायेत्यर्थः (बलिंपूजाम् ) ५ (समर्हणैःपादप्रक्षालनादिसाधनभूतैरुदकैः ) ६
७ ( महानुत्सवोयस्मिंस्तंविजयम् । ऋक्षाणामृक्षमल्लानांराजा ) ८ त्रिपदव्याजयाच्ञयात्रिपदविषययाकपटयाच्ञयास्वभर्तुर्हृतांमहींदृष्ट्वाअत्यमर्षिताःसंतऊचुः ९ किमूचुस्तदाह ।
नवैइतिसार्धैस्त्रिभिः १०

॥ श्रीशुकउवाच ॥ सत्यंसमीक्ष्याब्जभवोनखेंदुभिर्हतस्वधामद्युतिरावृतोऽभ्यगात् ॥ मरीचिमिश्राऋषयोबृहद्व्रताःसनंदनाद्यानरदेवयोगिनः १ वेदोप
वेदानियमायमान्वितास्तर्केतिहासांगपुराणसंहिताः ॥ येचापरेयोगसमीरदीपितज्ञानाग्निनारंधितकर्मकल्मषाः २ ववंदिरेयत्स्मरणानुभावतःस्वायंभुवं
धामगताअकर्मकम् ॥ अथांघ्रयेप्रोन्नमितायविष्णोरुपाहरत्पद्मभवोऽर्हणोदकम् ॥ समर्च्यभक्त्याऽभ्यगृणाच्छुचिश्रवायन्नाभिपंकेरुहसंभवःस्वयं ३ धातुः
कमंडलुजलंतदुरुक्रमस्यपादावनेजनपवित्रतयानरेंद्र ॥ स्वर्धुन्यभून्नभसिसापततीनिमार्ष्टिलोकत्रयंभगवतोविशदेवकीर्तिः ४ ब्रह्मादयोलोकनाथाः
स्वनाथायसमादृताः ॥ सानुगाबलिमाजह्रुःसंक्षिप्तात्मविभूतये ५ तोयैःसमर्हणैःस्रग्भिर्दिव्यगंधानुलेपनैः ॥ धूपैर्दीपैःसुरभिभिर्लाजाक्षतफलांकुरैः ६
स्तवनैर्जयशब्दैश्चतद्वीर्यमहिमांकितैः ॥ नृत्यवादित्रगीतैश्चशंखदुंदुभिनिःस्वनैः ७ जांबवानृक्षराजस्तुभेरीशब्दैर्मनोजवः ॥ विजयंदिक्षुसर्वासुमहो
त्सवमघोषयत् ८ महींसर्वांहृतांदृष्ट्वात्रिपदव्याजयाच्ञया ॥ ऊचुःस्वभर्तुरसुरादीक्षितस्यात्यमर्षिताः ९ नवाअयंब्रह्मबंधुर्विष्णुर्मायाविनांवरः ॥
द्विजरूपप्रतिच्छन्नोदेवकार्यंचिकीर्षति १०

॥ श्रीशुकउवाच ॥ अथसत्यलोकेप्राप्तंअंघ्रिंवीक्ष्यब्रह्मातथामरीच्यादयः सनंदनाद्याः योगिनश्च १ वेदोपवेदनियमयमतर्केऽतिहासांगपुराणसंहिताःतत्रअगमन् ततः ववं
दिरे २ अथविष्णोः प्रोन्नतायअंघ्रयेअर्हणोदकमानीयभक्त्यासमर्च्यब्रह्माअभ्यगृणात् ३ धातुः कमंडलुजलमुरुक्रमस्यपादावनेजनंपवित्रतयास्वर्धुनीअभूत् सालोकत्रयंपावि
त्रयति ४ ततः ब्रह्मादयोलोकपालाः स्वनाथायत्रिविक्रमायबलिंदत्वा ५ तोयैः स्रग्भिः गंधपुष्पधूपदीपैः६ स्तुतिजयशब्दवाद्यादिभिः पूजयामासुः ७ तदाजांबवान्भेरी
नादैःदिक्षुमहोत्सवंअघोषयत् ८ सर्वांमहींत्रिपदयाच्ञामिषेणहृतांदृष्ट्वा क्रुद्धाः दैत्याः ऊचुः ९ अहो अयंब्रह्मबंधुर्न तर्हिद्विजरूपच्छन्नः विष्णुः देवकार्यंचिकीर्षति १०

( बर्हिषियज्ञेव्रतस्यस्वीकृयस्तदंडस्यनोस्माकंभर्तुः ) ११ ( ब्रह्मण्यस्यब्राह्मणेभ्योहितस्य ) १२ अनुचराश्चतेअसुराश्च १३ १४ १५ १६ ( नागानांहस्तिनांअयुतंतत्तुल्यबलवंतः ) १७
( पुरुषस्यभगवतोनुचरैः ) १८ अर्थकृत् अनुकूलः १९ ( हेदैत्याः ) पौरुषैः ( पुरुषकारैः ) तंकालमतिवर्तितुंपुमानीश्वरःसमर्थोनभवति २० ( तद्विपर्ययंयथास्यात्तथावर्तते ) २१ २२
हरेरनुचरादेवाः । दैवेनऋद्धैःसमृद्धैर्भवद्भिः २३ अर्थत्वाय आनुकूल्याय २४ ( रसामधस्तलम् ) २५

अनेनयाचमानेनशत्रुणाबटुरूपिणा ॥ सर्वस्वंनोहृतंभर्तुर्न्यस्तदंडस्यबर्हिषि ११ सत्यव्रतस्यसततंदीक्षितस्यविशेषतः ॥ नानृतंभाषितुंशक्यंब्रह्मण्य
स्यदयावतः १२ तस्मादस्यवधोधर्मोभर्तुःशुश्रूषणंचनः ॥ इत्यायुधानिजगृहुर्बलेरनुचरासुराः १३ तेसर्वेवामनंहंतुंशूलपट्टिशपाणयः ॥ अनिच्छतोबले
राजन्प्राद्रवन्जातमन्यवः १४ तानभिद्रवतोदृष्ट्वादितिजानीकपान्नृप ॥ प्रहस्यानुचराविष्णोःप्रत्यषेधन्नुदायुधाः १५ नंदःसुनंदोथजयोविजयःप्रबलो
बलः ॥ कुमुदःकुमुदाक्षश्चविष्वक्सेनःपतत्रिराट् १६ जयंतःश्रुतदेवश्चपुष्पदंतोऽथसात्वतः ॥ सर्वेनागायुतप्राणाश्चमूंतेजघ्नुरासुरीम् १७ हन्यमानान्स्व
कान्दृष्ट्वापुरुषानुचरैर्बलिः ॥ वारयामाससंरब्धान्काव्यशापमनुस्मरन् १८ हेविप्रचित्तेहेराहोहेनेमेश्रूयतांवचः ॥ मायुध्यतनिवर्तध्वंननःकालोयमर्थ
कृत् १९ यःप्रभुःसर्वभूतानांसुखदुःखोपपत्तये ॥ तंनातिवर्तितुंदैत्याःपौरुषैरीश्वरःपुमान् २० योनोभवायप्रागासीदभवायदिवौकसां ॥ सएवभगवानद्य
वर्ततेतद्विपर्ययम् २१ बलेनसचिवैर्बुद्ध्यादुर्गैर्मंत्रौषधादिभिः ॥ सामादिभिरुपायैश्चकालंनात्येतिवैजनः २२ भवद्भिर्निर्जिताह्येतेबहुशोनुचराहरेः ॥ दैवेन
र्द्धैस्तएवाद्ययुधिजित्वानदंतिनः २३ एतान्वयंविजेष्यामोयदिदैवंप्रसीदति ॥ तस्मात्कालंप्रतीक्षध्वंयोनोऽर्थत्वायकल्पते ॥ २४ ॥ श्रीशुकउवाच ॥
पत्युर्निगदितंश्रुत्वादैत्यदानवयूथपाः ॥ रसांनिर्विविशूराजन्विष्णुपार्षदताडिताः २५

अनेनशत्रुरूपिणाअस्मद्भर्तुः सत्यव्रतस्यबलेःसर्वस्वंहृतम् ११ १२ अतःअस्यवधोधर्मः भर्तुःशुश्रूषणंचस्यात् एवमुक्त्वाबलेःसेवकाः १३ वामनंहंतुंआयुधानिगृहीत्वाबलेः
अनिच्छतःसर्वःप्राद्रवन् १४ धावमानान्तान्दृष्ट्वाप्रहस्यविष्णुदूताः १५ नंदसुनंदजयविजयप्रबलबलकुमुदकुमुदाक्षविष्वक्सेनगरुडजयंतश्रुतदेवाद्याः सर्वेनागायुत
बलाः उदायुधाःसंतः दैत्यचमूंजघ्नुः १६ १७ अथबलिःस्वकान्हन्यमानान्दृष्ट्वाशुक्रशापंस्मरन्तान्वारयामास १८ हेविप्रचित्ते हेराहो हेनेने मेवचःश्रूयताम् यूयंमायु
ध्यत निवर्तध्वम् १९ अयंकालःनःअर्थकृत् न २० यःपूर्वंदेवानांअभवायआसीत् सःकालःअद्यविपरीतोवर्तते २१ किंच अयंजनःबलसचिवबुद्धिदुर्गादिभिःसामाद्यु
पायैश्चकालंनअत्येति २२ हेदैत्याःएतेदेवाःपूर्वंबहुशःजिताः अधुनाएतेनःजित्वानदंति २३ यदिअस्मद्दैवंप्रसादितिर्तर्हिएतान्जेष्यामः तावत्पूर्वंप्रतीक्षध्वम् २४ ॥
॥ श्रीशुकउवाच ॥ एवंबलेर्वचःश्रुत्वादैत्यादानवाः पार्षदैस्ताडिताः संतःरसांविविशुः २५ 

विष्णुपक्षिपुराजवइतिविराट्गरुडः प्रभोश्चिकीर्षितंज्ञात्वा । अथमर्थः । अहमस्यसर्वस्वापहारेणममेत्यभिमानंसंत्याज्यैदानींदेहस्वीकारेणाहंकारमपित्याजयित्वापरमानुग्रहंकर्तुमिच्छतिन चानेनतुल्यःकोपिसत्यसंधोवीरोवास्तीतितद्यशःप्रख्यापनार्थंकिंचित्पातयितुमपीच्छतीतिप्रभोरभिप्रायंज्ञात्वातंबबंधेति । सौत्येऽहनिसोमाभिषवदिने २६ रोदस्योर्द्यावापृथिव्योः( प्र भविष्णुनाप्रभावशीलेन ) २७ ( स्थिरप्रज्ञंस्थिरबुद्धिम् ) २८ ( दत्तानिप्रतिश्रुतानि ) २९ असौसूर्यः ( तावत्येवतवेयंभूः अतःकिंदास्यसीतिभावः ) ३० मयाआत्मनेत्यन्वयः । तथा पिनेत्यर्थः । संचदिशश्चतनोस्तन्वा ( आक्रांताः ) तस्वंस्वदीयंसर्वंस्वम् ( तद्रूपःस्वर्लोकः ) ३१ गुरुणाशुक्रेणानुमोदितःसन् ३२ सएवमुक्तोपिनिरयपरिहारार्थंस्वर्गार्थंशापपरिहारार्थंच दर्पोरुबंधंकुर्वंतंप्रत्याह । वृथेति । यःप्रतिश्रुतस्यअदानेनयाचकंविप्रलंभतेतस्यमनोरथोवृथैव । स्वर्गश्चतस्यदूरएव । सचाधःपतत्येव ३३ त्वयाचाहंविप्रलब्धःतस्माद्व्यलीकफलंअनृतस्य फलंनिरयंभुंक्ष्व ३४ इतिश्रीभागवतेमहापुराणेअष्टमस्कंधेटीकायांबलिनिग्रहोनामैकविंशोऽध्यायः २१ ॥ ८ ॥ द्वाविंशेतुप्रसन्नःसन्प्रस्थाप्यसुतलंबलिम् । दत्त्वावरान्हरिर्न्यूनंमरुत्वात द्वारपोऽभवत् ॥ १ ॥ सप्रपितृसनूवित्तनिर्मलाचलभक्तितः ॥ छलितोबलिनापित्रं स्वमेवार्पयदच्युतः ॥ २ ॥ विप्रकृतःअपहृतः । भिद्यमानःसत्याच्चाल्यमानः १

अथताक्ष्यंसुतोज्ञात्वाविराट्प्रभुचिकीर्षितम् ॥ बबंधवारुणैःपाशैर्बलिंसौत्येऽहनिक्रतौ २६ हाहाकारोमहानासीद्रोदस्योःसर्वतोदिशम् ॥ गृह्यमाणेऽसुरपतौविष्णुनाप्रभविष्णुना २७ तंबद्धंवारुणैःपाशैर्भगवानाहवामनः ॥ नष्टश्रियंस्थिरप्रज्ञमुदारयशसंनृप २८ पदानित्रीणिदत्तानिभूमेर्मह्यंत्वयासुर ॥ द्वाभ्यांक्रांतामहीसर्वातृतीयमुपकल्पय २९ यावत्तपत्यसौगोभिर्यावदिंदुःसहोडुभिः ॥ यावद्वर्षतिपर्जन्यस्तावतीभूरियंतव ३० पदैकेनमयाऽऽक्रांतोभूर्लोकःखंदिशस्तनोः ॥ स्वर्लोकस्तुद्वितीयेनपश्यतस्तेस्वमात्मना ३१ प्रतिश्रुतमदातुस्तेनिरयेवासइष्यते ॥ विशत्वंनिरयंतस्माद्गुरुणाचानुमोदितः ३२ वृथामनोरथस्तस्यदूरेस्वर्गःपतत्यधः ॥ प्रतिश्रुतस्यादानेनयोर्थिनंविप्रलंभते ३३ विप्रलब्धोददामीतित्वयाहंचाढ्यमानिना ॥ तद्व्यलीकफलंभुंक्ष्वनिरयंकतिचित्समाः ३४ ॥ ॥ इतिश्रीभागवतेमहापुराणेअष्टमस्कंधेबलिनिग्रहोनामैकविंशोऽध्यायः २१ ॥ ८ ॥ श्रीशुकउवाच ॥ एवंवि प्रकृतोराजन्बलिर्भगवताऽसुरः ॥ भिद्यमानोप्यभिन्नात्माप्रत्याहाविक्लवंवचः १

अथगरुडः प्रभुचिकीर्षितंज्ञात्वाबलिंवारुणैःपाशैःसोमाभिषवदिनेबबंध २६ तदाद्यावापृथिव्योःहाहाकारःआसीत् २७ ततःपाशैः बद्धं उदारयशसंबलिंवामनः आह २८ हेबले त्वया भूमःत्रिपदानि मेदत्तानि तेसर्वामहीद्वाभ्यांक्रांतातृतीयंकल्पय २९ यावत् असौसूर्यःगोभिःतपतितावतीतवभूमिः ३० एवंतेभूर्लोकः एकेनपदाक्रांतः ३१ तन्वाखं दिशः द्वितीयेन स्वर्लोकः तृतीयस्यअभावात् प्रतिश्रुतं अदातुस्तेनरकवासःइष्टः अतः गुरुणानुमोदितः सन् नरकंविश ३२ किंच विप्रलब्धोददामीतित्वयाऽहंचाढ्य मानिना तद्व्यलीकफलंभुंक्ष्वनिरयंकतिचित्समाः ३३ ३४ ॥ इत्यष्टमेएकविंशः २१ ॥ ॥ ८ ॥ ॥ श्रीशुकउवाच ॥ एवंभगवतासत्याच्चाल्यमानः बलिः अविक्लवं वच आह १

हेउत्तमश्लोकेतिकटाक्षः । ममवचईरितंप्रतिश्रुतंनतावद्व्यलीकंत्वयाकपटेनवामनतयाभिक्षित्वारूपांतरस्याविष्कृतत्वा त् । एवमपियदिभवान्व्यलीकंमन्यतेतथापि (तत्) ऋतमेवाहंक रोमि मेशीर्ष्णिनिजंतृतीयंपदंकुरु मदुक्तंप्रलंभनंनभवेत् । नपद्भ्यांविश्वंक्रांतवतस्तवमेशिरःपादपर्याप्तंनभवतीतिमन्येथाः । वित्तेनचेत्पदद्वयजातंतर्हीदमधिकमेवस्यात् । वित्तादपिवि त्ततोऽधिकत्वादितिभावः २ ननुच 'आपदर्थेधनंरक्षेद्दारान्रक्षेद्धनैरपि । आत्मानंसततंरक्षेद्दारैरपिधनैरपि' इत्यादिवचनादात्मभयपरिहारायसर्वस्वंत्यज्यतेत्वंतुकुतोभीतःसन्आत्मा नमर्पयसीत्यतआहबिभेमीति । (स्थानभ्रष्टोऽप्यहं) असाधुवादादपकीर्तेर्यथाभृशमुद्विजेतथानिरयादिभ्योनबिभेमि । (व्यसनाद्दुःखात् । अर्थकृच्छ्राद्दारिद्र्यात् । निग्रहाद्दंडादपि) ३ ननु मयानिग्रहात्तवापकीर्तिर्जातैवनत्वेत्याह । पुंसामिति । अर्हत्तमेनार्पितम् । यंदंडंमात्रादयोपिमहांतोविप्रंतिनैवार्पयंति । हितैषिणात्वयानिगृहीतोहंश्लाघ्यएवास्मीतिभावः ४ नन्वहंदेवा नांहितैषीनासुराणांतत्राह । त्वमिति । पारोक्ष्यःशत्रुच्छलेनवर्तमानः (चक्षुर्दृष्टिम्) ५ शत्रुत्वंपुनर्मत्कानिवास्माकमनुग्रहीनुमेवेत्याह यस्मिन्निति । उ अहो । इमसिद्धम् ६ अतोनात्रम मतल्लज्जानापिदुःखमित्याह । तेनगुरुणाभवता७ किंच । योयंदंडरूपोममानुग्रहस्त्वयाकृतः सतुत्वत्कृपैवात्वेनतत्रहमनुग्रहस्यपात्रमित्याशयेनाह पितामहइति । भवदीयानांसंमतःय तःआविष्कृतःसाधुवादोयस्य । त्वमेवपरमआश्रयोयस्यसः । अतोत्विपक्षेणविद्विषाहिरण्यकशिपुनाविविधैर्वैशसंहिंसांप्रापितोपिदेहादीनामसारतांनिश्चित्याकुतोभयंभुवंचभवतःपादपद्म मेवप्रपेदे अथतस्मादहमपिदैवेनतस्यैवभाग्येनतवांतिकंनीतइतिचतुर्णामन्वयः ८ (आत्मनादेहेन) अंततःआयुरंते । रिक्थहारैःपुत्रैः । इहगेहेषुकेवलमायुषोव्ययएवनतुसुखंकिंचित् ९

॥ बलिरुवाच ॥ यद्युत्तमश्लोकभवान्ममेरितंवचोव्यलीकंसुरवर्यमन्यते ॥ करोम्यृतंतन्नभवेत्प्रलंभनंपदंतृतीयंकुरुशीर्ष्णिमेनिजम् २ बिभेमिनाहंनिरयात्प दच्युतोनपाशबंधाद्व्यसनाद्दुरत्ययात् ॥ नैवार्थकृच्छ्राद्भवतोविनिग्रहादसाधुवादाद्भृशमुद्विजेयथा ३ पुंसांश्लाघ्यतमंमन्येदंडमर्हत्तमार्पितम् ॥ यंनमातापि ताभ्रातासुहृदश्चादिशंतिहि ४ त्वंनूनमसुराणांनःपारोक्ष्यःपरमोगुरुः ॥ योनोऽनेकमदांधानांविभ्रंशंचक्षुरादिशत् ५ यस्मिन्वैरानुबंधेनव्यूढेनविबुधेतराः ॥ बहवोलेभिरेसिद्धिंयामुहैकांतयोगिनः ६ तेनाहंनिगृहीतोस्मिभवताभूरिकर्मणा ॥ बद्धश्चवारुणैःपाशैर्नातिव्रीडेनचव्यथे ७ पितामहोमेभवदीयसंमतः प्रह्लादआविष्कृतसाधुवादः ॥ भवद्विपक्षेणविचित्रवैशसंसंप्रापितस्त्वत्परमःस्वपित्रा ८ किमात्मनाऽनेनजहातियोंततःकिंरिक्थहारैःस्वजनाख्यदस्यु भिः ॥ किंजाययासंसृतिहेतुभूतयामर्त्यस्यगेहैःकिमिहायुषोव्ययः ९

॥ बलिरुवाच ॥ हेभगवन् मेप्रतिज्ञातंमिथ्यान यतःत्वयावामनतयाभिक्षित्वारूपांतरस्याविष्कृतत्वात् अथापित्वंयदिमिथ्यामन्यसेतर्हिऋतंकरोमिमेशीर्ष्णितृतीयंपदंकुरु २ हेभगवन् अहंनिरयात्दुःखात्भवन्निग्रहात्चनाबिभेमि असाधुवादात्यथा ३ किंच श्रेष्ठैःअर्पितंदंडंअहंसाधुमन्ये यतः मात्रादयः तंदंडंनार्पयंति ४ किंच त्वंअसुराणां नः शत्रुच्छलेनवर्तमानःगुरुःअसि ५ यस्मिन्त्वयिवैरानुबंधेनबहवोदैत्याः सिद्धिंप्राप्ताः ६ तेनगुरुणात्वयानिगृहीतः बद्धश्चाहं नातिव्रीडे नचव्यथे ७ किंच मेपितामहः प्रह्लादः पित्रा हिंसां प्रापितोपि ८ देहादीनामसारतां निश्चित्यतेध्रुवं चरणारविंदं प्रपेदे ९ ॥३७॥

सप्रसिद्धोमहान्स्वपक्षंदैत्यकुलंक्षपयतीतितथातस्यापि १० ( अथतस्मादहमपिदैवेनतवांतिकंनीतः ) प्रसभंबलात्त्याजिताश्रीर्यस्य यथाश्रियास्तब्धमतिःसन्पुमानिदंजीवितमध्रुवं नबुध्यते । कथंभूतम् । कृतांतस्यांतिकवर्ति । मृत्योःसंनिहितम् ११ राकापतिःपूर्णेन्दुः १२ ( इंद्रसेनोबलिः ) अंजनत्विषंश्यामम् १३ स्वकृताहंकारादिरूपापराधस्मरणेन सव्रीडनीचीनमधोमुखंयस्यसः १४ शिरसानमन्नेवउपेत्यमूर्ध्नाननाम । बलेस्तत्कृतमनुग्रहंदृष्ट्वापुलकैरश्रुभिश्चविक्लवोविह्वलः १५ त्वयैवेति । नहिऐंद्रंपदमेतदीयंत्वयापहृतं किंतुत्वीयमेवपुनःस्वीकृतंतच्चशोभनमेवकृतम् । तत्रहेतुः मन्यइति यद्यस्मात् ( श्रियः ) श्रीरूपात्आत्ममोहनाद्विभ्रंशितः १६ मोहनत्वमेवाह । ययाश्रिया विद्वानपियतःसंयतोपिमुह्यतेतत्तस्याःसत्त्यांकोन्यःपुमानात्मनोगतिंतत्त्वंयथावद्विचष्टेपश्यति । तस्मैमहाकारुणिकाय १७ तस्यप्रह्लादस्यानुशृण्वतःउवाचेतिकिंचिद्वक्तुमुद्यतइत्यर्थः १८ तदेवविंध्यावलिरपिवक्तुमुद्यता । तांचसंमानयन्हिरण्यगर्भःक्षणंतूष्णींस्थितःअतस्तस्याएववाक्यंप्रथममवतारयति । बद्धंवीक्ष्येति १९

इत्थंसनिश्चित्यपितामहोमहानमाघवेघोमवतःपादपद्मम् ॥ ध्रुवंप्रपेदेह्यकुतोभयंजनाद्भीतःस्वपक्षक्षपणस्यसत्तमः १० अथाहमप्यात्मरिपोस्तवांतिकंदैवेननीतःप्रसभंत्याजितश्रीः ॥ इदंकृतांतांतिकवर्तिजीवितंययाऽध्रुवंस्तब्धमतिर्नबुध्यते ११ ॥श्रीशुकउवाच॥ तस्येत्थंभाषमाणस्यप्रह्लादोभगवत्प्रियः ॥ आजगामकुरुश्रेष्ठराकापतिरिवोत्थितः १२ तमिंद्रसेनःस्वपितामहंश्रियाविराजमानंनलिनायतेक्षणम् ॥ प्रांशुंपिशंगांबरमंजनत्विषंप्रलंबबाहुंसुभगं समैक्षत १३ तस्मैबलिर्वारुणपाशयंत्रितःसमर्हणंनोपजहारपूर्ववत् ॥ ननाममूर्ध्नाऽश्रुविलोललोचनःसव्रीडनीचीनमुखोबभूव १४ सतत्रहासीनमुदीक्ष्य सत्पतिंसुनंदनंदाद्यनुगैरुपासितम् ॥ उपेत्यभूमौशिरसामहामनाननाममूर्ध्नापुलकाश्रुविक्लवः १५ ॥ प्रह्लादउवाच ॥ त्वयैवदत्तंपदमैंद्रमूर्जितंहृतंतदेवाद्यतथैवशोभनम् ॥ मन्येमहानस्यकृतोह्यनुग्रहोविभ्रंशितोयच्छ्रियआत्ममोहनात् १६ ययाहिविद्वानपिमुह्यतेयतस्तत्कोविचष्टेगतिमात्मनोयथा ॥ तस्मैनमस्तेजगदीश्वरायवैनारायणायाखिललोकसाक्षिणे १७ ॥ श्रीशुकउवाच ॥ तस्यानुशृण्वतोराजन्प्रह्लादस्यकृतांजलेः ॥ हिरण्यगर्भोभगवानुवाच मधुसूदनम् १८ बद्धंवीक्ष्यपतिंसाध्वीतत्पत्नीभयविह्वला ॥ प्रांजलिःप्रणतोपेंद्रंबभाषेऽवाङ्मुखीनृप १९

१० अतः तस्यैवभाग्येन अहंतवांतिकंनीतः ११ ॥ श्रीशुकउवाच ॥ एवंबलेःउक्तवतः सतः प्रह्लादः आजगाम १२ ततःपाशबद्धोबलिः तस्मैपूर्ववत्पूजांनजहार केवलंमूर्ध्नाननाम १३ किंच स्वकृताहंकारादिरूपापराधस्यस्मरणेनसव्रीडावाङ्मुखोबभूव १४ ततःप्रह्लादः वामनंवीक्ष्यननाम १५ ॥ प्रह्लादउवाच ॥ हेभगवन् अस्मैत्वयाइंद्रपदंदत्तंतत्तदृहृतम् तत्रशोभनंकृतम् अहो त्वया एषः श्रीमदात् भ्रंशितःअयंमहान् अनुग्रहःकृतइत्यहं मन्ये १६ एवंरूपायतेतुभ्यंनमः १७ ॥ श्रीशुकउवाच प्रह्लादस्यशृण्वतः सतःब्रह्माभगवंतंकिंचिद्वक्तुंप्रवृत्तः तदेवविंध्यावलिरपिवक्तुंप्रवृत्ता तांसंमानयन्सःब्रह्मा क्षणंतूष्णींस्थितः १८ ततः साविंध्यावलिःबद्धंपतिंवीक्ष्य प्रांजलिः सती उपेंद्रं बभाषे १९

भा० अ० त्रिजगतःकर्तुःप्रभोःपालकस्य अस्यतःसंहर्तुश्चईश्वरस्यतवान्येकिंआवहंतिकिंसमर्पयंति । त्वयाअवरोपितो ( विचालितः ) कर्तृवादःकर्तारःस्वतंत्रावयमितिवादमात्रमपियेषांते । (त अ०
थापित्यक्तलज्जास्तत्रस्वाम्यंकुर्युः । अयंभावः । लोकत्रयंमयार्पितंतृतीयपादायदेहंसमर्प्यप्रतिश्रुतंसत्यंकरोमीतिदेहादिषुस्वाम्याविष्कारेणब्रुवन्नयंकुबुद्धिर्निर्लज्जश्च । यतस्त्वमेवसर्वस्या
।.२८।। पिस्वामी अतोमंदबुद्धिमेनंकेवलंकृपयाविमुच्यपालयेति २० तदेवंप्रह्लादस्यविंध्यावलेश्चपरमार्थोक्त्याप्रसन्नोऽभूद्धरिःब्रह्मातुलोकदृष्ट्यैवाविज्ञापयति ( भगवदभिप्रायप्रकाशनाय ) भूत ॥२२॥
भावनेतित्रिभिः२१ निग्रहानर्हत्वेहेतुःकृत्स्नेति । सर्वस्वमेवाह (आत्मेति) अविक्लवयाअविह्वलया २२तदेवकैमुत्यन्यायेनाह । यस्यतवपादयोःसलिलमात्रमपिप्रदायसर्वोपिजनःउत्तमांग
तिंप्राप्नोति । तस्मैतुभ्यमसौबलिःत्रिलोकींदाश्वान्दत्तवान्सआर्तिंकथंप्राप्नुयात् २३ तस्यविशःअर्थान् । नन्वर्थापहारःकोयमनुग्रहःतत्राह । यन्मदःश्रीरैश्वर्यमदोयस्यसःअतएवस्तब्धः
अनम्रःसन् । मंदस्तंभहेतूनामर्थानामपहारएवानुग्रहइत्यर्थः २४ दुर्लभंमनुष्यजन्मकथंचिल्लब्धवतोजीवस्यजन्मादिनिमित्तोगर्वोमहाहानिकरस्तस्यचनाशोमदनुग्रहादेवेत्याह । यदे
तिद्वाभ्याम् अनीशःपरतंत्रःसन्निजैःकर्मभिर्नानायोनिषुकृमिकीटादिषुसंसरन् २५ तत्रपौरुष्यांगतौजन्मादिभिरस्ययदिस्तंभोनभवेत्तर्हिअयंमदनुग्रहएव २६

॥ विंध्यावलिरुवाच ॥ क्रीडार्थमात्मनइदंत्रिजगत्कृतंतेस्वाम्यंतुतत्रकुधियोऽपरईशकुर्युः ॥ कर्तुःप्रभोस्तवकिमस्यतआवहंतित्यक्तह्रियस्त्वदवरोपितकर्तृवादाः २० ॥ ब्रह्मोवाच ॥ भूतभावनभूतेशदेवदेवजगन्मय ॥ मुंचैनंहृतसर्वस्वंनायमर्हतिनिग्रहम् २१ कृत्स्नातेऽनेनदत्ताभूर्लोकाःकर्मार्जिताश्चये ॥ निवेदितंचसर्वस्वमात्माऽविक्लवयाधिया २२ यत्पादयोरशठधीःसलिलंप्रदायदूर्वांकुरैरपिविधायसतींसपर्याम् ॥ अप्युत्तमांगतिमसौभजतेत्रिलोकींदाश्वानविक्लवमनाःकथमार्तिमृच्छेत् २३ ॥ श्रीभगवानुवाच ॥ ब्रह्मन्यमनुगृह्णामितद्विशोविधुनोम्यहम् ॥ यन्मदःपुरुषःस्तब्धोलोकंमांचावमन्यते २४ यदाकदाचिज्जीवात्मासंसरन्निजकर्मभिः ॥ नानायोनिष्वनीशोयंपौरुषींगतिमाव्रजेत् २५ जन्मकर्मवयोरूपविद्यैश्वर्यधनादिभिः ॥ यद्यस्यनभवेत्स्तंभस्तत्रायंमदनुग्रहः २६

हेईश इदंजगत् त्वयाक्रीडार्थंकृतम् तत्रान्येकुबुद्धयःस्वाम्यंकुर्युः अस्तु हेईश अयंबलिःएवंवदाति किंतत् मयातेलोकत्रयंअर्पितंतृतीयपादायदेहंसमर्प्यप्रतिश्रुतंसत्यंकरोमी
त्येवंदेहादिषुस्वाम्याविष्कारेणब्रुवन् अयंकुबुद्धिःनिर्लज्जः यतः त्वमेवसर्वस्वामी अतः मंदबुद्धिंएनंकेवलंकृपयापालय २०॥ ब्रह्मोवाच ॥ हेदेवदेव हृतसर्वस्वंएनंमुंचमुंच
अयंनिग्रहंनार्हति २१ अनेननतुभ्यंभूःसर्वस्वंदेहश्चनिवेदितः २२ अहोयस्यतेपादयोः सलिलमात्रंदत्त्वाजनःसद्गतिंयाति तस्मैतुभ्यं अयंबलिः त्रिलोकींदत्तवान् सकथंआ
र्तिं अर्हति २३ ॥ श्रीभगवानुवाच ॥ हेब्रह्मन् अहंयंअनुगृह्णामितदर्थान्विधुनोमि यतः द्रव्यमतः पुमान्लोकंमांचअवमन्यते २४ कथंतर्हिध्रुवादिभ्यः अर्थसंपदःद ॥२८॥
दासिइतिचेत्तत्राह हेब्रह्मन् यः मत्परःसःजन्मकर्मवयोरूपविद्यैश्वर्यादिभिः पुमान्नमुह्यति अतः भक्तेभ्यःउपासंपदोददामि अभक्तस्तुमुह्येत् अतः तदपाहाररूपमेवतस्या
नुग्रहं करोमि २५ २६

कांतर्हिमुबाविभ्योर्वसंवदोददासीतिचेच्छृणु। मानएवस्तंभःअनम्रतातस्यनिमित्तभूतानांतमंततःसर्वश्रेयःप्रतिकूलानांजन्मादीनांसत्त्वेपिजन्मादिभिरितिवा हंत हेब्रह्मन् मत्परोनमुह्येत्। यद्यपिमकस्येत्थंयासंपदोपिददामि (देवयोमादिच्छाया मपिरागद्वेषाभावान्नमोहः) अमकस्तुमुह्येदेवेतितदपहाररूपमेवतस्यानुग्रहंकरोमीतिभावः २७ अस्य चेदानींमत्परत्वादन्येर्दु र्लाभमपिदास्यामीतिवक्तुंतस्यमोहाभावमाह एषइति त्रिभिः। (नजयोयस्यास्तं। अतःसीदन् स्थानंप्राप्नुवन्) २८ (क्षीणंरिक्थंधनंयस्य। क्षिप्तःतिरस्कृतः अनुयापितःत्रिशत्वंनिरयं तस्मादित्यादिना) २९ नह्येतस्मिन्कलेकश्चिन्निःसत्त्वःकृपणःपुमानित्यादिनाछलैरेवमयाधर्मउक्तःतथापितंधर्ममयंनत्यजतिअतःसत्यवाक् ३० मेमया। अहमेवाश्रयःपालकोयस्यसः ३१ स्थानंप्रापितइतियदुक्तंतदेवस्थानमाह। तावत्सावर्णिमन्वंतरपर्यंतंसुतलमध्यास्ताम्। तत्राधिवसत्वित्यर्थः। यस्मिन्निवसतांआध्यादयोममेक्षयानसंभवंति ३२ एवंब्रह्माणं प्रस्तुवस्त्वाकरुणापरवशःसाक्षाद्बलिमत्याहइंद्रसेनेतिचतुर्भिः ३३ त्वच्छासनंअतिगच्छंतिआतिवर्तंतेतान् ३४ तथापिभगवद्वियोगात्तदनिच्छंतंमत्याह सदेति ३५ संगात्यआसुरोभावः स (सद्यःकुंठोमंदःसन्) विनंक्ष्यति ॥ ३६ ॥ ॥ इतिश्रीभागवतेमहापुराणेअष्टमस्कंधेटीकायांबलिमोक्षणंनामद्वाविंशोऽध्यायः २२ ॥ ॥ छ ॥

मानस्तंभनिमित्तानांजन्मादीनांसमंततः॥ सर्वश्रेयःप्रतीपानांहंतमुह्येन्नमत्परः २७ एषदानवदैत्यानामग्रणीःकीर्तिवर्धनः॥ अजैषीदजयांमायांसीद न्नपिनमुह्यति २८ क्षीणरिक्थश्च्युतःस्थानात्क्षिप्तोबद्धश्चशत्रुभिः॥ ज्ञातिभिश्चपरित्यक्तोयातनामनुयापितः २९ गुरुणाभर्त्सितःशप्तोजहौसत्यंनसुव्र तः॥छलैरुक्तोमयाधर्मोनायंत्यजतिसत्यवाक् ३०एषमेप्रापितःस्थानंदुष्प्रापममरैरपि॥ सावर्णेरंतरस्यायंभवितेंद्रोमदाश्रयः ३१ तावत्सुतलमध्यास्तां विश्वकर्मविनिर्मितम्॥ यत्राधयोव्याधयश्चक्लमस्तंद्रापराभवः॥ नोपसर्गानिवसतांसंभवंतिममेक्षया ३२ इंद्रसेनमहाराजयाहिभोभद्रमस्तुते॥ सुतलं स्वर्गिभिःप्रार्थ्यंज्ञातिभिःपरिवारितः ३३ नत्वामभिभविष्यंतिलोकेशाःकिमुतापरे॥ त्वच्छासनातिगान्दैत्यांश्चक्रंमेसूदयिष्यति ३४ रक्षिष्येसर्वतोऽहं त्वांसानुगंसपरिच्छदम्॥ सदासन्निहितंवीरतत्रमांद्रक्ष्यतेभवान् ३५ तत्रदानवदैत्यानांसंगात्तेभावआसुरः॥ दृष्ट्वामदनुभावंवैसद्यःकुंठोविनंक्ष्यति ३६ ॥ इतिश्रीभागवतेमहापुराणेअष्टमस्कंधेबलिमोक्षणंनामद्वाविंशोऽध्याय ॥ २२ ॥ ॥ छ ॥

किंच एषःदानवेंद्रः मेमायांअजैषीत् यतः सीदन्नपिनमुह्यति किंच २८ अयंक्षीणवित्तःस्थानात् च्युतःबद्धः २९ गुरुणाशप्तोऽपिसत्यंनजहौ तथासत्यवाक्अयंधर्मंनत्यज ति ३० एषःसावर्ण्यंतरे मदाश्रयः इंद्रःभविता ३१ तावत्सुतलंअध्यास्ताम् यत्रआध्यादयः नसंति ३२ हेबलेत्वंज्ञातिभिः सह सुतलं याहि तेभद्रम् ३३ यत्र त्वांलोकेशाः नाभिभविष्यंति त्वदाज्ञालंघिनःदैत्यान् मेचक्रंसूदयिष्यति ३४ सर्वतःसानुगंत्वामहंरक्षिष्ये हेवीर तत्रमांभवान्द्रक्ष्यते ३५ दैत्यानांसंगात् तेआसुरः भावः मदनुभावंदृष्ट्वा सद्यः नंक्ष्यति ३६ ॥ इत्यष्टमेद्वाविंशः २२ ॥ ॥ छ ॥ ॥

मा॰अ॰ ॥ त्रयोविंशेबलीयातेसुतलंसपितामहे । उपेंद्रेणादितंगत्वापूर्ववन्मोदतेहरिः ॥१॥ बाष्पस्यकलाभिर्बिंदुभिराकुलेईक्षणेयस्य । भक्त्याउद्गलःउत्कंठः १अहोत्वत्प्रणामस्यमहिमा यदर्थंकृतः अ॰
समुद्यमएवप्रपन्नानांभक्तानांयोऽर्थःतस्यविधौअभक्केपितस्यसंपादनेसमाहितःअप्रमत्ततयास्थितः । कुतःयद्येनोद्यमेनलोकपालैरमरैःसत्त्वप्रधानैरपिअलब्धपूर्वस्त्वदनुग्रहःअपसदेनीचेऽ
॥२१॥ सुरेराजसेमयिअर्पितः । अयंभावः । परमेश्वरायतुभ्यमहंत्रैलोक्यंदत्तवानित्येतदास्तां । प्रणामोपिनसम्यक्कृतःकिंतुतदर्थमुद्यममात्रंकृतंतेनचतपोदानादिकोटिभिरप्यलभ्यस्त्व ॥२३॥
नुग्रहःसंपादितःअहोत्वत्प्रणामप्रभावआश्चर्यंकरइति २ (सभवंसशिवम् । प्रत्यानीयसमर्प्य) ३ अशासत्उपेंद्रःसन्पालयामास ४ (निशाम्यआलोच्य) ५ (तेतवप्रसादम्) । दुर्गपालो
सिरक्षिष्येसर्वतोहमित्युक्तत्वात् ६ हेशरणदआश्रयप्रद । येकुसृतयःदुर्वृत्ताःखलयोनयउग्रजातयश्चतेवयंतस्यभवतोदाक्षिण्यदृष्टेःपदवींकस्माद्धेतोःप्रणीताः । बहुमानेनचितानु-(-सारं)
वर्तनंदाक्षिण्यंतेनयादृष्टिस्तद्विषयतांप्रापिताः ७ भक्तप्रियस्त्वादितिचेत्तर्हिएवंतवेहितंअहोचित्रम् । किंतत् । सर्वात्मनःसमदृशश्चस्वभावोविषमइतियत् । सर्वात्मत्वेचित्रचरितत्वेचहे
तुः । अमिताअचिंत्यायोगमायातस्यायालीलातयाविसृष्टानिविरचितानिभुवनानियेनतस्य । अहोइत्यत्रसंधिरार्षः । समदृक्त्वेहेतुः । विशारदस्यसर्वज्ञस्य । अथवाभक्तप्रियत्वेपितव
वैषम्यंनास्त्येवयतःकल्पतरुस्वभावःसन्भक्तप्रियोसि । नहिकल्पतरुराश्रितानामेवकामान्पूरयन्नपिविषमोभवतीत्यर्थः ८

॥ श्रीशुकउवाच ॥ इत्युक्तवंतंपुरुषंपुरातनंमहानुभावोऽखिलसाधुसंमतः ॥ बद्धांजलिर्बाष्पकलाकुलेक्षणोभक्त्युद्गलोगद्गदयागिराऽब्रवीत् १ ॥ ब
लिरुवाच ॥ अहोप्रणामायकृतःसमुद्यमःप्रपन्नभक्तार्थविधौसमाहितः ॥ यल्लोकपालैस्त्वदनुग्रहोमरैरलब्धपूर्वोऽपसदेऽसुरेऽर्पितः २ ॥ श्रीशुकउवाच ॥
इत्युक्त्वाहरिमानम्यब्रह्माणंसभवंततः ॥ विवेशसुतलंप्रीतोबलिर्मुक्तःसहासुरैः ३ एवमिंद्रायभगवान्प्रत्यानीयत्रिविष्टपम् ॥ पूरयित्वाऽदितेःकामम
शासत्सकलंजगत् ४ लब्धप्रसादंनिर्मुक्तंपौत्रंवंशधरंबलिम् ॥ निशाम्यभक्तिप्रवणःप्रह्रादइदमब्रवीत् ५ ॥ प्रह्राद उवाच ॥ नेमंविरिंच्योलभतेप्रसादं
नश्रीर्नशर्वःकिमुतापरेते ॥ यन्नोऽसुराणामसिदुर्गपालोविश्वाभिवंद्यैरभिवंदितांघ्रिः ६ यत्पादपद्ममकरंदनिषेवणेनब्रह्मादयःशरणदाश्नुवतेविभूतीः ॥
कस्माद्वयंकुसृतयःखलयोनयस्तेदाक्षिण्यदृष्टिपदवींभवतःप्रणीताः ७ चित्रंतवेहितमहोऽमितयोगमायालीलाविसृष्टभुवनस्यविशारदस्य ॥ सर्वात्मनः
समदृशोविषमःस्वभावोभक्तप्रियोयदसिकल्पतरुस्वभावः ८

॥ श्रीशुकउवाच ॥ एवंब्रुवाणंभगवंतंबद्धांजलिः बाष्पकलाकुलेक्षणःबलिः सगद्गदयागिराअब्रवीत् १ ॥ बलिरुवाच ॥ हेभगवन् अहंतुभ्यंत्रिलोकींदत्तवान् इदंतावदा
स्ताम् प्रणामोपिनसम्यक्कृतः किंतुतदर्थमुद्यममात्रंकृतम् तेनचकर्मतपोदानादिकोटिभिरपिअलभ्यस्त्वदनुग्रहः संपादितः अहोत्वत्प्रणामप्रभावाश्चर्यमिति २ ॥श्रीशुकउ
वाच॥ एवमुक्त्वाबलिः हरिंनत्वा ब्रह्माणंशिवंचनत्वा मुक्तःसन्दैत्यैः सहसुतलंविवेश ३ एवंभगवान्इंद्रायस्वर्गंदत्त्वा अदितेः कामंचपूरयित्वा सकलंजगत्पालयामास
४ ततः लब्धप्रसादंपौत्रंदृष्ट्वाप्रह्रादःइदंआह ५ ॥ प्रह्रादउवाच ॥ हेभगवन्इमंप्रसादंब्रह्माभवःश्रीश्चनलभतेकोसौतमाह यःत्वंनःदुर्गपालोसि ६ किंच हेआश्रयप्रद ब्र ॥२५
ह्मादयः यत्पादपद्मरससेवनात्विभूतीःअश्नुवते तस्यतेदाक्षिण्यदृष्टिमार्गं वयंउग्रजातयः कस्माद्धेतोःप्रापिताः एवं तवेहितंअहोचित्रम् ७ ८

मद्दर्शनेनयोमहाह्लादस्तेनध्वस्तंकर्मबंधनमज्ञानंयस्य १० ११ १२ १३ कर्मवितन्वतःशिष्यस्य (बलेः) यच्छिद्रंअंतरंन्यूनंजातंतत्संतनुविस्तारयसंधत्स्व । यजमानंविनाकथंसंधातव्य मितिनवाच्यमित्याह । यत्तदिति । ब्रह्मदृष्टंब्राह्मणैर्दृष्टमेवसमंभवेत् । किंपुनर्न्यूनितमित्यर्थः १४ भवान्यस्यसर्वेणापिभावेन(देहगेहादिना)वस्तुमात्रेणपूजितःतस्यकर्मसुकुतोवैषम्यमपकथंमु तःकर्मणामीश्वरःप्रवर्तकः । यज्ञेशोयज्ञफलदः । यज्ञमयश्चपुरुषः १५ आस्तांतावत्पूजा । यस्मान्मंत्रतःस्वरादिभ्रंशेनतंत्रतःव्युत्क्रमादिनादेशतःकालतश्चअर्हतःपात्रतश्चवस्तुतोदक्षिणा दिनायच्छिद्रंतत्सर्वंतवानुसंकीर्तनमात्रमेवनिश्छिद्रंकरोति १६ १७ ( इति ) हरेराज्ञामभिनंद्यबठे यज्ञच्छिद्रं ( ब्रह्मर्षिभिःसहोशना ) समाधत्त संदधे पाठांतरेसमाधायतदाज्ञांसं पादितवानितिशेषः १८ ( त्रिदिवंत्रिविष्टपम् ) १९ देवाश्चऋषयश्चभूमिपाश्चमनवःतैःसहितः ( प्रजापतीनांदक्षादीनांपतिः ) २० २१

श्रीभगवानुवाच ॥ वत्सप्रह्लादभद्रंतेप्रयाहिसुतलालयम् ॥ मोदमानःस्वपौत्रेणज्ञातीनांसुखमावह ९ नित्यंद्रष्टासिमांतत्रगदापाणिमवस्थितम् ॥ म
द्दर्शनमहाह्लादध्वस्तकर्मनिबंधनः ॥ १० ॥ श्रीशुकउवाच ॥ आज्ञांभगवतोराजन्प्रह्लादोबलिनासह ॥ बाढमित्यमलप्रज्ञोमूर्ध्न्याऽऽधायकृतांजलिः ११
परिक्रम्यादिपुरुषंसर्वासुरचमूपतिः ॥ प्रणतस्तदनुज्ञातःप्रविवेशमहाबिलम् १२ अथाहोशनसंराजन्हरिर्नारायणोंऽतिके ॥ आसीनमृत्विजांमध्येसद
सिब्रह्मवादिनाम् १३ ब्रह्मन्संतनुशिष्यस्यकर्मच्छिद्रंवितन्वतः ॥ यत्तत्कर्मसुवैषम्यंब्रह्मदृष्टंसमंभवेत् ॥ १४ ॥ शुकउवाच ॥ कुतस्तत्कर्मवैषम्यंयस्य
कर्मेश्वरोभवान् ॥ यज्ञेशोयज्ञपुरुषःसर्वभावेनपूजितः १५ मंत्रतस्तंत्रतश्छिद्रंदेशकालार्हवस्तुतः ॥ सर्वंकरोतिनिश्छिद्रमनुसंकीर्तनंतव १६ तथापि
वदतोभूमन्करिष्याम्यनुशासनम् ॥ एतच्छ्रेयःपरंपुंसांयत्तवाज्ञानुपालनम् १७ श्रीशुकउवाच ॥ अभिनंद्यहरेराज्ञामुशनाभगवानिति ॥ यज्ञच्छिद्रंस
माधत्तबलेर्विप्रर्षिभिःसह १८ एवंबलेर्महींराजन्भिक्षित्वावामनोहरिः ॥ ददौभ्रात्रेमहेंद्रायत्रिदिवंयत्परैर्हृतम् १९ प्रजापतिपतिर्ब्रह्मादेवर्षिपितृभूमिपैः ॥
दक्षभृग्वंगिरोमुख्यैःकुमारेणभवेनच २० कश्यपस्यादितेःप्रीत्यैसर्वभूतभवायच ॥ लोकानांलोकपालानामकरोद्वामनंपतिम् २१

॥ श्रीभगवानुवाच ॥ हेवत्सप्रह्लाद तेभद्रम् त्वंपौत्रेणसहसुतलंयाहि ९ तत्रगदापाणिंस्थितंमांद्रक्ष्यसि १० ॥ श्रीशुकउवाच ॥ एवंभगवदाज्ञांगृहीत्वाबलिनासहप्रह्लादः ११ तंप्रणम्यनम्रःसन्महाबिलंविवेश १२ अथश्रीहरिःऋत्विक्मध्येस्थितंभृगुंआह १३ हेब्रह्मन्यजमानस्ययज्ञेयत्न्यूनंतत्संधत्स्व ब्राह्मणैर्दृष्टंसमंभवेत् १४ ॥ शुकउवाच ॥ हेईशयस्यकर्मेश्वरःत्वंतस्यकर्मवैषम्यंकुतः १५ किंचत्वन्नामकीर्तनात्मंत्रतंत्रादिषुयत्छिद्रंतत्सर्वंअच्छिद्रंभवति १६ अथापितेआज्ञांकरिष्यामितेआज्ञापालनमेवपुंसांश्रेयइति १७ ॥ श्रीशुकउवाच ॥ हेनृप शुक्रः भगवदाज्ञांस्वीकृत्ययज्ञाच्छिद्रंसंदधे १८ हेराजन्एवंबलेः महींभिक्षित्वा भ्रात्रेइंद्रायदिवंददौ १९ ततः ब्रह्मादेवर्षिपितृमनुकुमारभवदक्षमरीच्यादिभिः सह २० कश्यपस्यादितेः प्रीत्यैसलोकलोकपालानांपतिंवामनं अकरोत् २१

नतु लोकादीनांपतिरिंद्रएवसत्यम् । तथापिवेदादीनांकल्पंपालनेदक्षंवामनमुपेंद्रंकल्पयांचक्रे २२ २३ देवयानेनतत्संज्ञकमार्गेणविमानेनेतिवा २४ ( गतसाध्वसोनिर्भयः ) २५ २६ २७ २८ एतच्चरितंसर्वमाख्यातमितिविशेषोक्तया अन्यान्यपिसंतीत्युक्तम् । तानितर्हिनिःशेषाणिवर्णनीयानीत्यपेक्षायामाह । पारमिति । उरुधाबहुधाविक्रमतोविष्णोर्महिम्नःपारंयो गृणानोभवतिसमर्त्यःपार्थिवानिरजांसिविममेगणितवान् । यथापार्थिवपरमाणुगणनमशक्यंतथाविष्णोर्गुणगणनमशक्यमित्यर्थः । तथाचमंत्रः । 'विष्णोर्नुकंवीर्याणिप्रवोचं'इति । मं त्रांतरार्थंसूचयन्नेतदेवाह । यस्यपुरुषस्यपूर्णस्यमहिम्नःपारंमंत्रदृक्काश्यपोवसिष्ठइतिएवमाह । कथम् । किंजायमानोजातोवाउपैतिनकोपीतिवदन्ननंतत्वेनैवाहेत्यर्थः । तथामंत्रः ' नतेवि ष्णोजायमानोनजातोदेवमहिम्नःपरमंतमाप'इति २९ यइदंशृण्वन्भवतिसपरांगतिंयाति ३० ( यत्रयत्रकर्मणीदमनुकीर्त्यते । ततत् ) सुकृतंयथावत्कृतंविदुः ३१ ॥ इतिश्रीभागवते महापुराणेअष्टमस्कंधेटीकायांवामनावतारचरितेत्रयोविंशः २३ ॥ ७ ॥ चतुर्विंशेप्रसंगेनमत्स्यरूपस्यशार्ङ्गिणः । लीलोच्यतेयतःसत्यव्रतरक्षामहार्णवे ॥ १ ॥ चनुंतनुंनिदर्शयद्यैनि जैश्वर्यनिदर्शनात् । मत्स्यंपृच्छतिपृथ्वीशोलीलयावामनोपमम् ॥ २ ॥ मायया मत्स्यविडंबनंमत्स्यानुकरणंयस्यतां ताम् १

वेदानांसर्वदेवानांधर्मस्ययशसःश्रियः ॥ मंगलानांव्रतानांचकल्पंस्वर्गापवर्गयोः २२उपेंद्रंकल्पयांचक्रेपतिंसर्वविभूतये ॥ तदासर्वाणिभूतानिभृशंमुमुदि रेनृप २३ ततस्त्विंद्रःपुरस्कृत्यदेवयानेनवामनम् ॥ लोकपालैर्दिवंनिन्येब्रह्मणाचानुमोदितः २४ प्राप्यत्रिभुवनंचेंद्रउपेंद्रभुजपालितः ॥ श्रियापरम याजुष्टोमुमुदेगतसाध्वसः २५ ब्रह्माशर्वःकुमारश्चभृग्वाद्यामुनयोनृप ॥ पितरःसर्वभूतानिसिद्धावैमानिकाश्चये २६ सुमहत्कर्मतद्विष्णोर्गायंतःपरमाद्भुत म् ॥ धिष्ण्यानिस्वानितेजग्मुरदितिंचशशंसिरे २७ सर्वमेतन्मयाख्यातंभवतःकुलनंदन॥ उरुक्रमस्यचरितंश्रोतॄणामघमोचनम् २८ पारंमहिम्नउरुवि क्रमतोगृणानोयःपार्थिवानिविममेसरजांसिमर्त्यः ॥ किंजायमानउतजातउपैतिमर्त्यइत्याहमंत्रदृगृषिःपुरुषस्ययस्य २९ यइदंदेवदेवस्यहरेरद्भुतकर्मणः॥ अवतारानुचरितंशृण्वन्यातिपरांगतिम् ३० क्रियमाणेकर्मणीदंदैवेपित्र्येऽथमानुषे ॥ यत्रयत्रानुकीर्त्येततत्तेषांसुकृतंविदुः ॥ ३१ ॥ इतिश्रीभा॰अ॰ स्कंधेवामनावतारचरितेत्रयोविंशोध्यायः ॥ २३ ॥ राजोवाच ॥ भगवञ्छ्रोतुमिच्छामिहरेरद्भुतकर्मणः ॥ अवतारकथामाद्यांमायामत्स्यविडंबनाम् १

सर्वेषांईशेइंद्रेसत्यपिवेददेवादीनांपालने २२ दक्षंउपेंद्रंकल्पयांचक्रे तदासर्वभूतानिमुमुदिरे २३ ततः इंद्रः विमानेनवामनंपुरस्कृत्यदिवंनिन्ये २४ किंच वामनभुजगुप्त इंद्रः त्रिभुवनंप्राप्यमुमुदे २५ ततो ब्रह्मभवाद्याः २६ सर्वेहरेस्तत्कर्मगायंतःसंतः स्वस्थानानिजग्मुः अदितिंचशशंसिरे २७ हेनृपएवंतेश्रोत्रघहरं त्रिविक्रमचरितं कथि तम् २८ अहोविष्णोर्महिम्नः पारंयोगृणानःभवतिसःभूरजांस्यपिगणितवान् यथाभूरजोगणनं अशक्यंतथाहरिगुणानुवर्णनमिति २९ यः इदंहरेरवतारचरितंशृणोति सःपरांगतिंयाति ३० क्रियमाणेकर्मणीदंदैवेपित्र्येथमानुषे यत्रयत्रानुकीर्त्येततत्तेषांसुकृतंविदुः ३१ ॥ ॥ इत्यष्टमेत्रयोविंशः २३ ॥ ॥ ७ ॥ राजोवाच ॥ हेभग वन् हरेः आद्यांमत्स्यावतारकथांश्रोतुमिच्छामि १

ननु कस्मादकस्मादेव मत्स्यावतारश्रवणेच्छा श्रीवामनसादृश्यादित्याह । यदर्थमिति द्वाभ्याम् ( तमःप्रकृतिजडस्वभावं ) दुर्मर्षं सोढुमशक्यम् ( कर्मग्रस्तो जीव इव ) २ बलेरनुग्रहाय जुगुप्सितमपि याचकरूपं धृत्वा वामनवद्धृतमिति युक्तमुक्तम् । यदर्थं तु लोकजुगुप्सितं मात्स्यं रूपं धृत्वा वद्धे एतन्नो यथावद्वक्तुमर्हसीत्यर्थः ३ ४ सामान्येनावतारप्रयोजनमाह । ( गोविप्रादीनां रक्षामिच्छंस्तनूर्धत्ते ) ५ जुगुप्सितत्वं परिहरति । धियो गुणैर्यान्युच्चावचानि रूपाणि तेषु नियन्तृत्वेन चरन्नपीश्वरो नोच्चावचत्वं भजते निर्गुणत्वात् कुतः पुनः शुद्धसत्त्वमये मत्स्याद्याकारे तु वार्त्ता स्वशक्त्येति भावः ६ विशेषतो मत्स्यावतारप्रयोजनमाह । आसीदिति त्रिभिः । ब्रह्मणो निद्रायां भवो ब्राह्मः । तेनैव निमित्तेन जातो नैमित्तिकः । समुद्रे उपप्लुता निमग्नाः ७ ( आगतनिद्रस्यात एव शायितुमिच्छोः ) अंतिके निःसृतान् ८ शफरीरूपं मत्स्याकृतिम् ९ प्रयोजनांतरं लीलाप्रकारं चाह । तत्र राजऋषिरित्यादि यावत्समाप्ति ( सलिलमशनं यस्य सः ) १० ( योऽसौ सत्यव्रतः ) स एव श्राद्धदेव इति ख्यातः ११ कृतमालायां नद्याम् ( शफरी सूक्ष्मो मत्स्यः ) १२ १३ १४

यदर्थमदधाद्रूपं मात्स्यं लोकजुगुप्सितम् ॥ तमःप्रकृतिदुर्मर्षं कर्मग्रस्त इवेश्वरः २ एतन्नो भगवन्सर्वं यथावद्वक्तुमर्हसि ॥ उत्तमश्लोकचरितं सर्वलोकसुखावहम् ॥ ३ ॥ सूत उवाच ॥ इत्युक्तो विष्णुरातेन भगवान्बादरायणिः ॥ उवाच चरितं विष्णोर्मत्स्यरूपेण यत्कृतम् ॥ ४ श्रीशुक उवाच ॥ गोविप्रसुरसाधूनां छंदसामपि चेश्वरः ॥ रक्षामिच्छंस्तनूर्धत्ते धर्मस्यार्थस्य चैव हि ५ उच्चावचेषु भूतेषु चरन्वायुरिवेश्वरः ॥ नोच्चावचत्वं भजते निर्गुणत्वाद्धियो गुणैः ६ आसीदतीतकल्पांते ब्राह्मो नैमित्तिको लयः ॥ समुद्रोपप्लुतास्तत्र लोका भूरादयो नृप ७ कालेनागतनिद्रस्य धातुः शिशयिषोर्बली ॥ मुखतो निःसृतान्वेदान्हयग्रीवोऽन्तिकेऽहरत् ८ ज्ञात्वा तद्दानवेंद्रस्य हयग्रीवस्य चेष्टितम् ॥ दधार शफरीरूपं भगवान्हरिरीश्वरः ९ तत्र राजऋषिः कश्चिन्नाम्ना सत्यव्रतो महान् ॥ नारायणपरोऽतप्यत्तपः स सलिलाशनः १० योऽसावस्मिन्महाकल्पे तनयः स विवस्वतः ॥ श्राद्धदेव इति ख्यातो मनुत्वे हरिणार्पितः ११ एकदा कृतमालायां कुर्वतो जलतर्पणम् ॥ तस्यांजल्युदके काचिच्छफर्येकाभ्यपद्यत १२ सत्यव्रतोंऽजलिगतां सह तोयेन भारत ॥ उत्ससर्ज नदीतोये शफरीं द्रविडेश्वरः १३ तमाह सातिकरुणं महाकारुणिकं नृपम् ॥ यादोभ्यो ज्ञातिघातिभ्यो दीनां मां दीनवत्सल ॥ कथं विसृजसे राजन्भीतामस्मिन्सरिज्जले १४

किंच इदं लोकनिंद्यं मात्स्यं रूपं यदर्थं धृतं एतन्नो वक्तुमर्हसि २ ३ ॥ सूत उवाच ॥ राज्ञा एवमुक्तः शुकः विष्णोश्चरितं प्राह ४ ॥ श्रीशुक उवाच ॥ गोविप्रसुरसाधूनां छंदसां च रक्षां इच्छन् हरिः तनूर्धत्ते ५ हरेः जुगुप्सितत्वं परिहरति उच्चनीचभूतेषु वायुरिव चरन् ईश्वरः निर्गुणत्वात् नोच्चावचत्वं भजते इति ६ अथ गतकल्पांते नैमित्तिको लयः आसीत् तत्र भूरादयो लोकाः समुद्रे मग्नाः आसन् ७ तत्र लये प्राप्तनिद्रस्य धातुः मुखतो निर्गतान् वेदान् हयग्रीवः अहरत् ८ तत् ज्ञात्वा हरिः मात्स्यं रूपं दधार ९ तत्र कश्चित् सत्यव्रतः नाम राजर्षिः तपः अतप्यत् १० यः अस्मिन् महाकल्पे विवस्वतः तनयः श्राद्धदेव इति ख्यातो मनुत्वे हरिणार्पितः ११ एकदा कृतमालायां नद्यां जलतर्पणं कुर्वतः सत्यव्रतस्य अंजल्युदके एका शफरी अभ्यपद्यत १२ सः तां नदीतोये उत्ससर्ज १३ सा तं नृपं आह हे दीनवत्सल ज्ञातिघातिभ्यो यादोभ्यो भीतां मां कथं विसृजसे १४

( शफर्यारक्षणार्थाय ) १५ १६ १७ ( वस्तुंत्रासंकर्तुं ) यत्राहंसुखंनिवसामितदोकःस्थानंकल्पय १८ औदंचनोदकेमणिकस्थेजले १९ ( मेमह्यंनालम् । पदंस्थानम् । त्वात्वाम् ) २० (तद्वायमाहत्यव्याप्य) २१ रक्षायायोगेनउपायेनयथामहाह्रदप्राप्तेःपूर्वंजलंविनानशुष्येयंताहशेनोपायेन (शीघ्रमित्यर्थः) नेषेहि अविदासिनि अनुपक्षये (अमावेइत्यर्थः)२२ संमितंततज्जलाशयपरिमितं ( संतंझषंमत्स्यम् ) २३ २४ २५ अभिव्यानशेअभितोव्याप्तवान् २६ २७ मुख्यःसत्यः । आत्माचमतिश्चआश्रयः २८ २९ हेअरविंदाक्ष । पृथगात्मनांदेहाद्यभिमानिनांसतामितरेषांपादोपसर्पणंयथामृषा ( निष्फलं ) भवेत् । तथासुहृत्प्रियात्मनस्तवपादोपसर्पणंमृषानभवेत् । यद्यस्मान्नःभक्तानांअद्भुतंवपुरदीदृशःदर्शितवानसि । पाठांतरेपृथगात्मनोभेददर्शिनःपुंसःअसतापरिच्छिन्नानांपादोपसर्पणंयथामृषेत्यर्थः ३०

तमात्मनोऽनुग्रहार्थंप्रीत्यामत्स्यवपुर्धरम् ॥ अजानन्रक्षणार्थायशफर्याःसमनोदधे १५ तस्यादीनतरंवाक्यमाश्रुत्यसमहीपतिः ॥ कलशाप्सुनिधायैनां दयालुर्निन्यआश्रमम् १६ सातुतत्रैकरात्रेणवर्धमानाकमंडलौ ॥ अलब्ध्वात्मावकाशंचइदमाहमहीपतिम् १७ नाहंकमंडलावस्मिन्कृच्छ्रंवस्तुमिहोत्सहे ॥ कल्पयौकःसुविपुलंयत्राहंनिवसेसुखम् १८ सएनांततआदायन्यधादौदंचनोदके ॥ तत्रक्षिप्तामुहूर्तेनहस्तत्रयमवर्धत १९ नमएतदलंराजन्सुखंवस्तुमुदंचनम् ॥ पृथुदेहिपदंमह्यंयत्त्वाहंशरणंगता २० ततआदायसाराज्ञाक्षिप्ताराजन्सरोवरे ॥ तदावृत्यात्मनातोयंमहामीनोऽन्ववर्धत २१ नैतन्मेस्वस्तयेराजन्उदकंसलिलौकसः ॥ निधेहिरक्षायोगेनह्रदेमामविदासिनि २२ इत्युक्तःसोनयन्मत्स्यंतत्रतत्राविदासिनि ॥ जलाशयेसंमितंतंसमुद्रेप्राक्षिपज्झषम् २३ क्षिप्यमाणस्तमाहेदमिहमांमकरादयः ॥ अदंत्यतिबलावीरमांनेहोत्स्रष्टुमर्हसि २४ एवंविमोहितस्तेनवदतावल्गुभारतीम् ॥ तमाहकोभवानस्मान्मत्स्यरूपेणमोहयन् २५ नैवंवीर्योजलचरोदृष्टोऽस्माभिःश्रुतोपिवा ॥ योभवान्योजनशतमह्नाऽभिव्यानशेसरः २६ नूनंत्वंभगवान्साक्षाद्धरिर्नारायणोऽव्ययः ॥ अनुग्रहायभूतानांधत्सेरूपंजलौकसाम् २७ नमस्तेपुरुषश्रेष्ठस्थित्युत्पत्त्यप्ययेश्वर ॥ भक्तानांनःप्रपन्नानांमुख्योह्यात्मगतिर्विभो २८ सर्वेलीलावतारास्तेभूतानांभूतिहेतवः ॥ ज्ञातुमिच्छाम्यदोरूपंयदर्थंभवताधृतम् २९ नतेरविंदाक्षपदोपसर्पणंमृषाभवेत्सर्वसुहृत्प्रियात्मनः ॥ यथेतरेषांपृथगात्मनांसतामदीदृशोयद्वपुरद्भुतंहिनः ३०

तद्दीनवाक्यंश्रुत्वाकलशाप्सुतांनिधायआश्रमंनिन्ये १५ १६ साएकरात्रेणवर्द्धमानातंआह १७ अहंकमंडलौवस्तुंनउत्सहे विपुलंस्थानंकल्पय १८ ततःमणिकस्थेजले तांन्यधात् तत्रापिमुहूर्तेनहस्तत्रयंअवर्धत १९ एतत्उदकंमेअलंन पृथुपदंदेहि २० ततः तांआदायसरोवरे प्राक्षिपत् तदपिसरःप्राप्यअवर्धत २१ इदंसरःमेनस्वस्तयेअतःमेअशुष्कह्रदेनिधेहि २२ एवमुक्तःसःयत्रयत्रजलाशयेनीतवान् तत्रतत्रवर्धमानांतांदृष्ट्वा समुद्रेप्राक्षिपत् २३ क्षिप्यमाणासाइदं आह हेवीर अत्रमांमकरादयः अदंति अतः इहउत्स्रष्टुंनार्हसि २४ एवंमोहितोराजामत्स्यंआह नःमत्स्यरूपेणमोहयन् त्वंकोऽसि २५ एवंवीर्योजलचरः अस्माभिः पूर्वंनदृष्टः नश्रुतः यः त्वं अह्ना योजनशतंसरः व्याप्तवान् २६ त्वंसाक्षाद्भगवान्भूतानांअनुग्रहाय जलचररूपं धत्से २७ अतस्तुभ्यंनमः २८ किंच त्वयायदर्थमिदंरूपंधृतं तत्ज्ञातुमिच्छामि २९ ३०

एकांतजनाः कामाः प्रियाः यस्य ३१ अप्ययांभोधौ प्रलयार्णवे । भूर्भुवआदिकमित्यर्थः ( निमंक्ष्यतिमग्नंभविष्यति ) ३२ संवर्ताम्भसिप्रलयोदके त्वामुपस्थास्यतिप्राप्स्यति ३३ ओषधीः आदा
वेतिशेषः ( सर्वैःसत्वैःप्राणिभिरुपबृंहितः ) ३४ ऋषीणामेवालोकेनविचरिष्यसि ३५ महाहिनावासुकिना ( यतोदोधूयमानांभृशंकंप्यमानाम् ) ३६ ३७ मेमयाअनुगृहीतंप्रसादीकृतं
हृदिअपरोक्षंवेत्स्यसि (ज्ञास्यसि ) । त्वयाकृतैःसंप्रश्नैर्मयाविवृतंप्रकाशितंसंतम् ३८ ( अन्वैक्षतप्रतीक्षतेस्म ) ३९ ( प्रागुदङ्मुखःईशानदिङ्मुखः ) ४०४१ ( नावंनौकाम्ओषधीःवी
रुधश्चलताः ) ४२ ( नोऽस्माकम् ) ४३ ( नियुतंलक्षम् ) ४४

॥श्रीशुकउवाच ॥ इतिब्रुवाणंनृपतिंजगत्पतिःसत्यव्रतंमत्स्यवपुर्युगक्षये ॥ विहर्तुकामःप्रलयार्णवेऽब्रवीच्चिकीर्षुरेकांतजनप्रियःप्रियम् ३१ ॥ श्रीभगवानु
वाच ॥ सप्तमेद्यतनादूर्ध्वमहन्येतदरिंदम ॥ निमंक्ष्यत्यप्ययांभोधौत्रैलोक्यंभूर्भुवादिकम् ३२ त्रिलोक्यांलीयमानायांसंवर्तांभसिवैतदा ॥ उपस्थास्य
तिनौःकाचिद्विशालात्वांमयेरिता ३३ त्वंतावदोषधीःसर्वाबीजान्युच्चावचानिच ॥ सप्तर्षिभिःपरिवृतःसर्वसत्त्वोपबृंहितः ३४ आरुह्यबृहतींनावंविचरि
ष्यस्यविक्लवः ॥ एकार्णवेनिरालोकेऋषीणामेववर्चसा ३५ दोधूयमानांतांनावंसमीरेणबलीयसा ॥ उपस्थितस्यमेशृंगेनिबध्नीहिमहाहिना ३६ अहंत्वा
मृषिभिःसाकंसहनावमुदन्वति ॥ विकर्षन्विचरिष्यामियावद्ब्राह्मीनिशाप्रभो ३७ मदीयंमहिमानंचपरंब्रह्मेतिशब्दितम् ॥ वेत्स्यस्यनुगृहीतंमेसंप्रश्नैर्विवृतं
हृदि ३८ इत्थमादिश्यराजानंहरिरंतरधीयत ॥ सोन्ववैक्षततंकालंयंहृषीकेशआदिशत् ३९ आस्तीर्यदर्भान्प्राक्कूलान्राजर्षिःप्रागुदङ्मुखः ॥ निषसाद
हरेःपादौचिंतयन्मत्स्यरूपिणः ४० ततःसमुद्रउद्वेलःसर्वतःप्लावयन्महीम् ॥ वर्धमानोमहामेघैर्वर्षद्भिःसमदृश्यत ४१ ध्यायन्भगवदादेशंददृशेनावमाग
ताम् ॥ तामारुरोहविप्रेंद्रैरादायौषधिवीरुधः ४२ तमूचुर्मुनयःप्रीताराजन्ध्यायस्वकेशवम् ॥ सवैनःसंकटादस्मादविताशंविधास्यति ४३ सोनु
ध्यातस्ततोराज्ञाप्रादुरासीन्महार्णवे ॥ एकशृंगधरोमत्स्योहैमोनियुतयोजनः ४४

॥ श्रीशुकउवाच ॥ एवंब्रुवाणंसत्यव्रतंमत्स्यवपुःहरिःआह ३१ ॥ श्रीभगवानुवाच ॥ हेनृप अद्यतनादूर्ध्वंसप्तमेहनि अर्णवेत्रैलोक्यंनंक्ष्यति ३२तस्मिन्लीनेसतिकाचि
त्नौः त्वांप्राप्स्यति ३३ त्वंचओषधिबीजानिआदायसप्तर्षिभिःसह ३४ नावंआरुह्यएकार्णवेचरिष्यसि ३५ तत्रवायुवेगेनचंचलांनावंप्राप्तस्यमेशृंगेवासुकिनाबध्नीहि ३६
अहंसप्तर्षिभिः साकंसनावंत्वांविकर्षन् यावत्ब्राह्मीनिशातावत्चरिष्यामि ३७ मन्महिमानंत्वंवेत्स्यसि ३८ इत्थंराजानंआदिश्य हरिः अंतर्दधे सःतंकालंअन्वैक्षत ३९ अ
थराजाप्राग्ग्रान्दर्भानास्तीर्यतत्रस्थितः हरेः पादौचिंतयन्निषसाद ४० ततःवर्षद्भिर्मेघैःवर्द्धमानःसमुद्रः महीं प्लावयन्सन् अदृश्यत ४१ तदासत्यव्रतः भगवदाज्ञांध्यायन्
तावत्नावंदृष्ट्वाओषधिवीरुधः आदाय ऋषिभिःसहतांआरुरोह ४२ तदाप्रीताःमुनयःतंऊचुः हेराजन्केशवंध्यायस्व सःअस्मात्संकटात्नःशंविधास्यति ४३ ततःराज्ञाध्यातः
हरिः प्रलयार्णवे एकशृंगधरः हैमः नियुतयोजनो मत्स्यः प्रादुर्बभूव ४४

वरत्रेणदोरकरूपेण ४५ सामरंतारयिष्यंततरिष्यान्निवसागरम् । सत्यव्रतोगुरुत्वेनतुष्टावहरिमष्टभिः ॥ अथेदंचिंत्यम् । किमयंमहाप्रलयोदैनंदि नोवेति । तत्रतावद्ब्राह्मोलयइतियोसाव
स्मिन्महाकल्पइतिचोक्तेर्महाप्रलयइतिमाप्तम् नेतिब्रूमः । महाप्रलयेपृथिव्यादीनामवशेषाभावात् । यावद्ब्राह्मीनिशेत्याद्युक्तिविरोधाच्च । अतोदैनंदिन इतियुक्तंन चैतदपिसंगच्छते ।
सांवर्तकैरनावर्षणादिभिर्विना अकस्मादेवसप्तमे ऽहनित्रैलोक्यंनिमंक्ष्यतीतिमत्स्योक्तेरनुपपत्तेः । यच्चोक्तंप्रथमस्कंधे । रूपंसजगृहेमात्स्यंचाक्षुषांतरसंप्लवे । नाव्यारोप्यमहीमय्यामपाद्वैव
स्वतंमनुमितितदपितदादुर्घटम् । नहिप्रलयद्वयेपिमहीमय्यांनाव्यारोहःसंभवति । नचचाक्षुषमन्वंतरेप्रलयोस्ति । तथाचसतिसप्तमोमनुर्वैवस्वतइत्यपिदुर्घटंस्यात् । त्वंतावदोषधीःस
र्वाइत्यादिनिर्देशोपिनसंगच्छते । नहितदाओषध्यादीनांसत्त्वानांचावशेषःसंभवति । तस्मादन्यथावर्ण्यते । नैवायंवास्तवःकोपिप्रलयः । किंतुसत्यव्रतस्यज्ञानोपदेशायाविर्भूतोभगवा
न्वैराग्यार्थमकस्मात्प्रलयमिवदर्शयामास । यथास्मिन्नेववैवस्वतमन्वंतरेमार्कंडेयायदर्शितवान् । तदपेक्षयैवचमहाकल्पेऽस्मिन्नितिविशेषणंसंगच्छते । तथाच । ततःसमुद्रउद्वेलःसर्वतः
समदृश्यतेतितस्यैवतथादर्शनमुक्तमित्येषादिक् । प्रस्तुतंस्तोत्रंव्याख्यास्यामः । तत्रनानायोनिषुसंसरतःस्वस्यभगवत्कृपयैवतत्प्राप्तिंदृष्ट्वामुक्तयेतमेवप्रार्थयते(अनादीति)अनादिर्याअविद्या
तयाउपहताआवृताआत्मसंविद्येषांते । अतएवाविद्यामूलैःसंसारपरिश्रमैरातुराः । इहसंसारेयदृच्छयायदनुग्रहादेवउपसृताआश्रिताःसंतोयंप्राप्नुयुः । सभवानेवसाक्षान्नोगुरुःसन्ग्रंथिंभिं
द्यादित्युत्तरेणान्वयः ४६ ननुवैराग्यंविनाकुतोमुक्तिःतर्हितस्यत्वत्सेवैकफलत्वात्सेवामादिशेत्याशयेनाह । जनइति । अबुधोयंजनः असुखंयथाभवतितथाकर्मसमीहते । तांसुखेच्छाम् ।
नो ( अस्माकं ) हृदयरूपंग्रंथिंसभिंद्यात् । यतःसएवपरमोगुरुः ४७ ननुयज्ञदानादिभिःसत्त्वशुद्धिंविनाग्रंथिःकथंभेद्यःस्यात्तत्राह । यदिति । यस्यसेवयैवपुमान्आत्मनोमनसोम
लंतमोविजह्यात् । एवंहीनमलोनिजंवर्णंचस्वरूपंभजेत् । सईशोनोगुरुर्भूयात् यतःसएवगुरोरपिपरमोगुरुः । मलहानेदृष्टांतः । रुद्ररोदनंरजतम् । 'यदरोदीत्तद्रुद्रस्यरुद्रत्वंयदश्रुवशी
र्यतद्रजतंहिरण्यमभवत्' इतिश्रुतेः । तद्यथाग्नेःसंपर्कान्मलंजहाति । स्वंवर्णंचभजतेनतुक्षालनादिभिःतथानयज्ञादिभिर्मलत्यागःकिंतुत्वत्सेवयैव । तेषांतुसेवांगत्वमितिभावः ४८ पर
मेश्वरत्वंपरमगुरुत्वंचप्रपंचयन्नाह । नयदिति । यत्प्रसादस्यायुतभागस्यलेशमात्रमपिअन्येदेवादयःसर्वेसमेताअपिस्वयंतन्निरपेक्षाःसंतःकर्तुंनप्रभवंति ४९

निबध्यनावंतच्छृंगेयथोक्तोहरिणापुरा ॥ वरत्रेणाहिनातुष्टस्तुष्टावमधुसूदनम् ४५ ॥ राजोवाच ॥ अनाद्यविद्योपहतात्मसंविदस्तन्मूलसंसारपरिश्र
मातुराः ॥ यदृच्छयेहोपसृतायमाप्नुयुर्विमुक्तिदोनःपरमोगुरुर्भवान् ४६ जनोऽबुधोऽयंनिजकर्मबन्धनःसुखेच्छयाकर्मसमीहतेऽसुखम् ॥ यत्सेवयातां
विधुनोत्यसन्मतिंग्रंथिंसभिंद्याद्धृदयंसनोगुरुः ४७ यत्सेवयाग्नेरिवरुद्ररोदनंपुमान्विजह्यान्मलमात्मनस्तमः ॥ भजेतवर्णंनिजमेषसोऽव्ययोभूयात्सईशः
परमोगुरोर्गुरुः ४८ नयत्प्रसादायुतभागलेशमन्येचदेवागुरवोजनाःस्वयम् ॥ कर्तुंसमेताःप्रभवंतिपुंसस्तमीश्वरंत्वांशरणंप्रपद्ये ४९

ततोराजातस्यशृंगेअहिनानावंनिबध्यहरिंतुष्टाव ४५ ॥ राजोवाच ॥ अनाद्यविद्यावृतात्मसंविदःजनाःयदनुग्रहात्यंप्राप्नुवंति सःत्वंगुरुःसन्हृदयग्रंथिंभिंद्यात् ४६ किंच
यस्यसेवया पुमान् मनोमलं त्यक्त्वा स्वरूपंभजेत् सईशः नोगुरुर्भूयात् ४७ ४८ किंच देवादयः यत्प्रसादलेशमपि कर्तुं नसमर्थाः तंईश्वरं त्वां शरणं प्रपद्ये ४९

तदेवदृष्टांतेनस्पष्टयन्नाह । अचक्षुरिति(यथांऽधस्यांधोऽग्रणीःअग्रेनयतीत्यग्रणीःकृतस्तथैव) अविदुषोजनस्यअबुधोऽविद्वान्गुरुः । तथैवत्वंतुअर्कप्रकाशवत्स्वतएवदृक्ज्ञानंयस्यसःअर्कदृक् अतःसर्वदृशांसर्वेंद्रियाणांसमीक्षणःप्रकाशकःअतएवस्वमार्गंबोद्धुमिच्छद्भिःनोस्माभिर्गुरुर्वृतोसि ५० किंच । प्राकृतोगुरुरनर्थहेतुरेवेत्याह । जनइति । आदिशतेउपदिशति । असतींमतिंअर्थकामादिमतिंम् । तमःसंसारम् ५१ ननुतर्हिसर्वोपि लोकोमामेवार्किंनोपसरति । अज्ञानादित्याह त्वंसर्वेति । प्रियश्चासावभिश्वरश्च ५२ अहंतुत्वामेवशरणंयामीत्याह । त्वामिति प्रतिबोधनायउपदेशाय । अर्थदीपैःपरमार्थप्रकाशकैः । हृदयभवान्ग्रंथीन्अहंकारादीन् । स्वमोकःस्वंरूपंविवृणुप्रकाशय ५३ नृपतिंप्रति ५४ पुराणसंहितांमत्स्यपुराणंअशेषतोऽब्रवीदित्यनुषंगः ( सांख्यंतत्त्वविवेकः योगश्चित्तनिरोधोपायः । क्रियानित्यनैमित्तिकादिकंकर्म तद्वतीं आत्मगुह्यमात्मरहस्यं चाशेषतोऽब्रवीत् ) ५५ ५६

अचक्षुरंधस्ययथाग्रणीःकृतस्तथाजनस्याविदुषोऽबुधोगुरुः ॥ त्वमर्कदृक्सर्वदृशांसमीक्षणोवृतोगुरुर्नःस्वगतिंबुभुत्सताम् ५० जनोजनस्यादिशतेऽसतींमतिंययाप्रपद्येतदुरत्ययंतमः ॥ त्वंत्वव्ययंज्ञानममोघमंजसाप्रपद्यतेयेनजनोनिजंपदम् ५१ त्वंसर्वलोकस्यसुहृत्प्रियेश्वरोह्यात्मागुरुर्ज्ञानमभीष्टसिद्धिः ॥ तथापिलोकोनभवंतमंधधीर्जानातिसंतंहृदिबद्धकामः ५२ तंत्वामहंदेववरंवरेण्यंप्रपद्यईशंप्रतिबोधनाय ॥ छिंध्यर्थदीपैर्भगवन्वचोभिर्ग्रंथीन्हृदय्यान्विवृणुस्वमोकः ५३ ॥ श्रीशुकउवाच ॥ इत्युक्तवंतंनृपतिंभगवानादिपूरुषः ॥ मत्स्यरूपीमहांभोधौविहरंस्तत्त्वमब्रवीत् ५४ पुराणसंहितांदिव्यांसांख्ययोगक्रियावतीम् ॥ सत्यव्रतस्यराजर्षेरात्मगुह्यमशेषतः ५५ अश्रौषीदृषिभिःसाकमात्मतत्त्वमसंशयम् ॥ नाव्यासीनोभगवताप्रोक्तंब्रह्मसनातनम् ५६

५० किंच अयंजनः जनस्य असतींमतिं आदिशते यया संसारंप्राप्नोति ५१ त्वंतु अमोघंज्ञानंआदिशसे येननिजंपदंप्राप्नोति हेईश्वर त्वंसर्वलोकस्यगुरुः सुहृत्प्रियेश्वरश्चअसि तथापिजनःअंधधीःसन्हृदिसंतं त्वांनजानाति ५२ एवंभूतंत्वांअहंशरणंप्रपद्ये हेभगवन् परमार्थप्रकाशकैःवचोभिः नःहृद्ग्रंथीन्छिंधि स्वंरूपंप्रकाशय ५३ ॥ श्रीशुकउवाच ॥ एवंब्रुवाणंनृपं हरिः तत्त्वं मत्स्यपुराणंच अब्रवीत् ५४ ५५ नावि स्थितः सः ऋषिभिःसह तत्अश्रौषीत् ५६

अतीतः पूर्वोयःप्रलयःतस्यापाये अवसाने ( उत्थिताय ततः प्रबुद्धायवेधसेब्रह्मणेप्रत्याहरत्प्रत्याह्रत्यदत्तवानित्यर्थः ) ५७ ५८ ५९ योयंहरेरवतारस्तंयः कीर्तयेत् ६० ( दितिजंहयग्रीवंहत्वातेनापनीतंश्रुतिगणंप्रत्युपादत्तप्रत्यानीतवान् ) । सत्यव्रतानांसत्यव्रतस्यऋषीणांच । ऊचिणोयांतीतिवर्त्तिगसमन्त्रायाद्बहुवचनम् । जिह्ममीनंमायामत्स्यम् ॥ ६१ ॥ ॥ इतिश्री

॥४३॥ भागवतभावार्थदीपिकायांश्रीधरस्वामिविरचितायांअष्टमस्कंधटीकायांमत्स्यावतारचरितानुवर्णनंनामचतुर्विंशोऽध्यायः ॥ २४ ॥ श्रीः ( श्रीधरैर्नैहयर्त्किचिद्व्याख्यातंसुगमत्वतः । बालानांसुखबोधार्थंतद्व्याचष्टमहेश्वरः ) ॥ १ ॥ शिवम् ॥ ॥ ७ ॥ ॥ ७ ॥ ॥ ७ ॥ अ० ॥२४॥

अतीतप्रलयापाय उत्थिताय स वेधसे ॥ हत्वाऽसुरं हयग्रीवं वेदान्प्रत्याहरद्धरिः ५७ सतु सत्यव्रतो राजा ज्ञानविज्ञानसंयुतः ॥ विष्णोः प्रसादात्कल्पेस्मिन्नासीद्वैवस्वतो मनुः ५८ सत्यव्रतस्य राजर्षेर्मायामत्स्यस्य शार्ङ्गिणः ॥ संवादं महदाख्यानं श्रुत्वा मुच्येत किल्बिषात् ५९ अवतारो हरेर्योयं कीर्तयेदन्वहं नरः ॥ संकल्पास्तस्य सिध्यंति स याति परमां गतिम् ६० प्रलयपयसि धातुः सुप्तशक्तेर्मुखेभ्यः श्रुतिगणमपनीतं प्रत्युपादत्त हत्वा ॥ दितिजमकथयद्यो ब्रह्म सत्यव्रतानां तमहमखिलहेतुं जिह्ममीनं नतोस्मि ६१ इतिश्रीभागवते महापुराणे पारमहंस्यां संहितायामष्टमस्कंधे मत्स्यावतारचरितानुवर्णनं नाम चतुर्विंशोऽध्यायः ॥ २४ ॥ अष्टमस्कंधः समाप्तः ॥ ८ ॥ ॥ श्रीकृष्णार्पणमस्तु ॥ ॥ ७ ॥

ततः प्रलयांते उत्थितवेधसे हरिः हयग्रीवंहत्वावेदानानीयददौ ५७ सतुसत्यव्रतः अस्मिन्कल्पेहरेःप्रसादात्वैवस्वतोमनुःआसीत् ५८ मत्स्यरूपिणःहरेः राज्ञश्चसंवादंश्रुत्वापातकात्मुच्यते ५९ अयंहरेःअवतारः तंअन्वहंयःकीर्तयेत्तस्यसंकल्पाः सिध्यंति सःपरमांगतियाति ६० किंच हेराजन् यः प्रलयपयसि दैत्यंहत्वा तेनब्रह्मणःमुखेभ्यः अपनीतंश्रुतिगणंउपादायसत्यव्रतस्यऋषीणांच ब्रह्म अकथयत् तंजिह्ममीनंनतोस्मि ६१ ॥ इत्यष्टमेचूर्णिकायांचतुर्विंशोऽध्यायः २४ ॥ ॥ समाप्तोयमष्टमःस्कंधः ॥७॥ ॥४३॥

॥ अथ सटीकसचूर्णिकश्रीमद्भागवत—नवमस्कंधः प्रारभ्यते ॥

श्रीगणपतिसरस्वतीभ्यांनमः । श्रीजैयतिवराय । गुणार्थंगुणतावास्यैवृणवेकरुणानिधिम् । वमहंशरणंयामिपरमानंदमाधवम् ॥ १ ॥ त्रिगुणाष्टमिरध्यायैर्वैवस्वतसुतान्वयः । नवमेक
ण्वसंकीर्तिमसंगार्थंविवन्य ते ॥ २ ॥ एवमुक्त्वाष्टमस्कंधेसद्धर्मःसत्वशोधकः । कर्तृपालकवक्ता।दिमन्वादीनांनिरूपणैः ॥ ३ ॥ सद्धर्मशुद्धसत्वानांमंतरंगेश्वसत्कथा । सूर्यसोमान्वयाख्या
नैरघुनासंगतोच्यते ॥ ४ ॥ त्रयोदशभिरध्यायैः सूर्यवंशोऽनुवर्ण्यते । एकादशमिरध्यायैः सोमवंशस्ततः परैः ॥ ५ ॥ तत्र प्रथमेऽध्यायेवैवस्वतसुतान्वये । सोमवंशप्रवेशोक्त्यैसुद्युम्न
स्त्रीत्वमुच्यते ॥ ६ ॥ उक्तानुवादपूर्वकंवैवस्वतमनोर्वंशंपृच्छति मन्वंतराणीतिपंचभिः । मेमया । ( तत्रमन्वंतरेषुकृतानिहरेर्वीर्याणिप्रभावाश्च ) १ ( पुरुषस्यहरेः सेवया ) २ ३ ( शु
श्रूषतांश्रोतुमिच्छतां ) ४ ( येचाद्यतनाःसंति ) ५ ६ ( प्राचुर्येणसंक्षेपेण ) ७ अनुक्तंवंशंवक्तुंपूर्वोक्तमेवतावद्वंशंतत्प्रवर्तकंश्रीनारायणमारभ्यानुस्मरति परावरेषामितिपंचभिः ८ ९
१० ११ नाभागंचोतिपाठेनभगएवनाभागः १२

॥ श्रीगणेशायनमः ॥ राजोवाच ॥ मन्वंतराणिसर्वाणित्वयोक्तानिश्रुतानिमे ॥ वीर्याण्यनंतवीर्यस्यहरेस्तत्रकृतानिच १ योऽसौसत्यव्रतोनामराजर्षिर्द्र
विडेश्वरः ॥ ज्ञानंयोतीतकल्पांतेलेभेपुरुषसेवया २ सवैविवस्वतःपुत्रोमनुरासीदितिश्रुतम् ॥ त्वत्तस्तस्यसुताश्चोक्ताइक्ष्वाकुप्रमुखानृपाः ३ तेषांवंशं
पृथग्ब्रह्मन्वंश्यानुचरितानिच ॥ कीर्तयस्वमहाभागनित्यंशुश्रूषतांहिनः ४ येभूतायेभविष्याश्चभवंत्यद्यतनाश्चये ॥ तेषांनःपुण्यकीर्तीनांसर्वेषांवदवि
क्रमान् ५ ॥ सूतउवाच ॥ एवंपरीक्षिताराज्ञासदसिब्रह्मवादिनाम् ॥ पृष्टःप्रोवाचभगवाञ्शुकःपरमधर्मवित् ६ ॥ श्रीशुकउवाच ॥ श्रूयतांमानवोवंशः
प्राचुर्येणपरंतप ॥ नशक्यतेविस्तरतोवक्तुंवर्षशतैरपि ७ परावरेषांभूतानामात्मायःपुरुषःपरः ॥ सएवासीदिदंविश्वंकल्पांतेऽन्यन्नकिंचन ८ तस्यनाभेः
समभवत्पद्मकोशोहिरण्मयः ॥ तस्मिन्जज्ञेमहाराजस्वयंभूश्चतुराननः ९ मरीचिर्मनसस्तस्यजज्ञेतस्यापिकश्यपः ॥ दाक्षायण्यांततोऽदित्यांवि
वस्वानभवत्सुतः १० ततोमनुःश्राद्धदेवःसंज्ञायामासभारत ॥ श्रद्धायांजनयामासदशपुत्रान्सआत्मवान् ११ इक्ष्वाकुनृगशर्यातिदिष्टधृष्टकरूषकान् ॥
नरिष्यंतंपृषध्रंचनभगंचकविंविभुः १२

श्रीगणेशाय नमः ॥ अथ नवमस्कंधार्थो लिख्यते ॥ राजोवाच ॥ हे शुक त्वया उक्तानि सर्वमन्वंतराणि श्रुतानि तेषु हरेः कृतानि वीर्याणि च श्रुतानि १ योसौ स
त्यव्रतोनाम राजर्षिः सः गतकल्पांते २ विवस्वतः पुत्रः मनुः आसीत् इति श्रुतम् ३ हे ब्रह्मन् तस्य इक्ष्वाकुप्रमुखपुत्राणां वंशं वंश्यानुचरितानि च वद ३ किंच ये
भूताः येभाव्याः ये अद्यतनाः तेषां पुण्यकीर्तीनां विक्रमान् वद ॥ ५ ६ ॥ श्रीशुक उवाच ॥ हे राजन् मानवो वंशः प्राचुर्येण श्रूयताम् ७ कल्पांते नारायणः एक
एवासीत् ८ तस्य नाभिकमलात् ब्रह्माजज्ञे ९ तस्य मनसः मरीचिः तस्य कश्यपः तस्मात्अदित्यां विवस्वान् अभवत् १० तस्मात् संज्ञायां श्राद्धदेवःमनुः तस्मात्
श्रद्धायांदशपुत्राः ११ इक्ष्वाकुः प्रथमः नृगः द्वितीयः शर्यातिः तृतीयः दिष्टःचतुर्थः धृष्टः पंचमः करूषकः षष्ठः नरिष्यंतः सप्तमः पृषध्रः अष्टमः नभगः नवमः कविः दशमः १२

सूर्यपौत्रस्य सुद्युम्नस्य स्त्रीत्वे मतिपुत्र इक्ष्वाकुप्रभृतिसोमवंशसंचारं वक्तुं समस्तावामिलोपाख्यानमाह अप्रजस्य मनोः पूर्वमित्यादि नायावदध्यायसमाप्ति पूर्वइच्छा कुमारीणामुत्पत्तेः प्राक् १३ दुहित्रर्थं मम कन्या यथा भवेत्तथा यजेति होतारं (गत्वा नम स्कृत्य) सम्यग्मयाचत । पयएव व्रतमाहारो नियतो यस्याः १४ अध्वर्युणा होतर्यजेति प्रेरितो होता तेन स्वहृदि होहिविषि सिवषट्कारं उच्चार्य ध्यायन् व्यचरत अयजत् । पाठांतरे तद्ध्यायन् तत्राचारंत् ग्रारंगृणन् वषडित्युच्चारयन् १५ १६ब्रह्मविक्रिया मंत्रान्यथात्वं १७ १८प्रपितामहो वसिष्ठः १९ २० २१ २२ २३ २४ २५ २६ २७ २८

॥ १७

अप्रजस्य मनोः पूर्वं वसिष्ठो भगवान्किल ॥ मित्रावरुणयोरिष्टिं प्रजार्थमकरोद्विभुः १३ तत्र श्रद्धा मनोः पत्नी होतारं समयाचत ॥ दुहित्रर्थमुपागम्य प्रणिपत्य पयोव्रता १४ प्रेरितोऽध्वर्युणा होता ध्यायंस्तत्सुसमाहितः ॥ हविषि व्यचरत्तेन वषट्कारं गृणन्द्विजः १५ होतुस्तद्व्यभिचारेण कन्येला नाम साऽभवत् ॥ तां विलोक्य मनुः प्राह नातिहृष्टमना गुरुम् १६ भगवन्किमिदं जातं कर्म वो ब्रह्मवादिनाम् ॥ विपर्ययमहो कष्टं मैवं स्याद्ब्रह्मविक्रिया १७ यूयं मंत्रविदो युक्तास्तपसा दग्धकिल्बिषाः ॥ कुतः संकल्पवैषम्यमनृतं विबुधेष्विव १८ तन्निशम्य वचस्तस्य भगवान्प्रपितामहः ॥ होतुर्व्यतिक्रमं ज्ञात्वा बभाषे रविनंदनम् १९ एतत्संकल्पवैषम्यं होतुस्ते व्यभिचारतः ॥ तथापि साधयिष्ये ते सुप्रजास्त्वं स्वतेजसा २० एवं व्यवसितो राजन्भगवान्स महायशाः ॥ अस्तौषीदादिपुरुषमिलायाः पुंस्त्वकाम्यया २१ तस्मै कामवरं तुष्टो भगवान्हरिरीश्वरः ॥ ददाविलाऽभवत्तेन सुद्युम्नः पुरुषर्षभः २२ स एकदा महाराज विचरन्मृगयां वने ॥ वृतः कतिपयामात्यैरश्वमारुह्य सैंधवम् २३ प्रगृह्य रुचिरं चापं शरांश्च परमाद्भुतान् ॥ दंशितोनुमृगं वीरो जगाम दिशमुत्तराम् २४ स कुमारो वनं मेरोरधस्तात्प्रविवेश ह ॥ यत्रास्ते भगवान्शर्वो रममाणः सहोमया २५ तस्मिन्प्रविष्ट एवासौ सुद्युम्नः परवीरहा ॥ अपश्यत्स्त्रियमात्मानमश्वं च वडवां नृप २६ तथा तदनुगाः सर्वे आत्मलिंगविपर्ययम् ॥ दृष्ट्वा विमनसोऽभूवन्वीक्षमाणाः परस्परम् ॥ २७ ॥ राजोवाच ॥ ॥ कथमेवं गुणो देशः केन वा भगवन्कृतः ॥ प्रश्नमेनं समाचक्ष्व परं कौतूहलं हि नः २८

एषां पुत्राणां उत्पत्तेः प्राक् अप्रजस्य मनोः प्रजार्थं वसिष्ठः मित्रावरुणयोः इष्टिं चकार १३ तदा श्रद्धा नाम मनोः पत्नी होतारं प्रति मम कन्या भवत्विति अयाचत १४ १५ तदा होतुर्मंत्रव्यभिचारेण इला नाम कन्या अभवत् तदा मनुः कन्यां दृष्ट्वा उवाच १६ हे वसिष्ठ किमिदं विपरीतं जातं १७ १८ ततो वसिष्ठः होतुर्व्यतिक्रमं ज्ञात्वा तं उवाच १९ हे मनो होतुर्व्यभिचारतः इदं संकल्पवैषम्यं जातं तथापि ते सुप्रजास्त्वं साधयिष्ये २० इत्युक्त्वा हरिं अस्तौत् २१ तदा प्रसन्नः हरिः इलामेव सुद्युम्नं अकरोत् २२ सः सुद्युम्नः एकदा अश्वं आरुह्य आमात्यादिभिः सह मृगयां गतः सन् २३ २४ मेरोः अधस्तात् वनं विवेश यत्र उमया सह शिवः रममाणः आस्ते २५ तस्मिन्प्रविष्टे सति आत्मानं स्त्रियं अश्वं च वडवां अपश्यत् २६ तदनुगाः सर्वे आत्मलिंगविपर्ययं दृष्ट्वा स्त्रियो भूताः संतः विमनसः अभूवन् २७ राजोवाच ॥ कथमेवंगुणो देशः केन वा भगवन् कृतः तद्वद २८

विगतंतिमिरंआभासः प्रकाशश्चाभ्यस्ययासुतथाभूतादिशः कुर्वंतः २९ ३० प्रसंगंरत्यार्थाभिनिवेशं अभिसंदर्शनकलुषितमनसः संतस्तत्प्रसंगशून्यंनरनारायणाश्रमंप्रययुः ३१ ३२ प्रासंगि
कमुक्त्वाप्रस्तुतमनुवर्णयति ( ततइति ) अनुचरीसंयुक्तेतिवक्तव्ये भूतपूर्वगत्या पुंस्त्वनिर्देशः ३३ ३४ ३५ ३६ आशयन्इच्छन् ३७ ३८ ३९ नाभ्यनंदन्स्त्रीत्वेलब्धयामासंयासांनेक्षी
यावस्थानात् ४० ४१ ४२ ॥ ॥ इतिश्रीभागवतेमहापुराणेनवमस्कंधेटीकायांप्रथमोऽध्यायः ॥ १ ॥

श्रीशुकउवाच ॥ एकदागिरिशंद्रष्टुमृषयस्तत्रसुव्रताः ॥ दिशोवितिमिराभासाःकुर्वंतस्समुपागमन् २९ तान्विलोक्यांबिकादेवीविवस्त्राव्रीडिताभृशम् ॥
भर्तुरंकात्समुत्थायनीवीमाश्वथपर्यधात् ३० ऋषयोपितयोर्वीक्ष्यप्रसंगंरममाणयोः ॥ निवृत्ताःप्रययुस्तस्मान्नरनारायणाश्रमम् ३१ तदिदंभगवानाह
प्रियायाःप्रियकाम्यया ॥ स्थानंयःप्रविशेदेतत्सवैयोषिद्भवेदिति ३२ ततऊर्ध्वंवनंतद्वैपुरुषावर्जयंतिहि ॥ साचानुचरसंयुक्ताविचचारवनाद्वनम् ३३
अथतामाश्रमाभ्याशेचरंतींप्रमदोत्तमाम् ॥ स्त्रीभिःपरिवृतांवीक्ष्यचकमेभगवान्बुधः ३४ सापितंचकमेसुभ्रूःसोमराजसुतंपतिम् ॥ सतस्यांजनयामास
पुरूरवसमात्मजम् ३५ एवंस्त्रीत्वमनुप्राप्तस्सुद्युम्नोमानवोनृपः ॥ सस्मारस्वकुलाचार्यंवसिष्ठमितिशुश्रुम ३६ सतस्यतांदशांदृष्ट्वाकृपयाभृशपीडितः ॥
सुद्युम्नस्याशयन्पुंस्त्वमुपाधावतशंकरम् ३७ तुष्टस्तस्मैसभगवानृषयेप्रियमावहन् ॥ स्वांचवाचमृतांकुर्वन्निदमाहविशांपते ३८ मासंपुमान्समविता मा
संस्त्रीतवगोत्रजः ॥ इत्थंव्यवस्थयाकामंसुद्युम्नोवतुमेदिनीम् ३९ आचार्यानुग्रहात्कामंलब्ध्वापुंस्त्वंव्यवस्थया ॥ पालयामासजगतींनाभ्यनंदन्स्मतंप्र
जाः ४० तस्योत्कलोगयोराजन्विमलश्चसुतास्त्रयः ॥ दक्षिणापथराजानोबभूवुर्धर्मतत्पराः ४१ ततःपरिणतेकालेप्रतिष्ठानपतिःप्रभुः ॥ पुरूरवसउत्सृ
ज्यगांपुत्रायगतोवनम् ॥ ४२ ॥ ॥ इतिश्रीभागवतेमहापुराणेनवमस्कंधेइलोपाख्यानेप्रथमोऽध्यायः ॥ १ ॥ ॥ ध ॥

श्रीशुक उवाच ॥ एकदा ऋषयः गिरिशं द्रष्टुं तत्र अगमन् २९ तान् दृष्ट्वा विवस्त्रा देवी व्रीडिता सती भर्तुरंकात् उत्थाय वासः पर्यधात् ३० ऋषयोपि रममाण
योस्तयोः प्रसंगं दृष्ट्वा निवृत्ताः संतः नरनारायणाश्रमं प्रययुः ३१ तदा शिवः प्रियायाः प्रियकाम्यया इदं आह एतत् स्थानं यः प्रविशेत् सः योषित् भवेत् ३२
तत ऊर्ध्वं पुरुषाः तद्वनं वर्जयंति सा इला कन्या वनात् वनं चचार ३३ ततो बुधः स्वाश्रमसमीपे चरंतीं तां वीक्ष्य चकमे ३४ सापि तं चकमे तस्यां बुधः पुरू
रवसं पुत्रं जनयामास ३५ एवं स्त्रीत्वं प्राप्तः सुद्युम्नः वसिष्ठं सस्मार ३६ ततो वसिष्ठः तस्य तां अवस्थां दृष्ट्वा तस्य पुंस्त्वं इच्छन् शंकरं उपाधावत ३७ सभग
वान् वसिष्ठाय तुष्टः सन् स्वां वाचं ऋतां कुर्वन् तत्प्रियंचकुर्वन् इदं आह ३८ अयं मासं पुमान् मासं स्त्री भविता ३९ इत्थं व्यवस्थया गुरोः कृपया सुद्युम्नः भूमिं
पालयामास तं प्रजाः नाभ्यनंदन् ४० तस्य उत्कलः प्रथमः गयः द्वितीयः विमलः तृतीयः एते त्रयः पुत्राः दक्षिणापथगोप्तारः बभूवुः ४१ ततः प्रतिष्ठानपतिः
सुद्युम्नः पुरूरवसे पुत्राय गां उत्सृज्य वनं गतः ४२ ॥ ॥ इतिनवमे प्रथमः १ ॥ ॥

द्वितीये मनुपुत्राणांद्वावपुत्रौविरागतः । करूषकादिपंचानांवंशानाहलघुक्रमात् ॥१॥ १ इक्ष्वाकुः पूर्वजोयेषांतान् २ तत्रपृषध्रस्त्यत्रंशोनाभवादिति सहेतुकमाह पृषध्रस्त्वित्यादिना कविः
कनीयानित्यतः प्राक्तनग्रंथेन । यत्तःसावधानः खङ्गपाणेःसतस्तिष्ठतोजागरयंवीरासनमुच्यतेतदेवव्रतं (नियमोयस्यएवंभूतः) यत्तोऽत्राहितः सन्गाःपालयामास ३ शार्दूलोव्याघ्रः ४ ५
प्रलीनाउडुगणा यस्मिन्तस्मिन्समयेबभ्रोः कपिलायागोः ६ गांक्रामतोनजघानेतिख्यापयितुंछिन्नकर्णश्रवणइत्याद्युक्तं ७व्युष्टायांप्रभातायां ८ क्षत्रबंधुः क्षत्रियाधमोपित्वंनभविताअपितु
शूद्रोभवितेति ९ १० ११ १२ १३ उपयुक्तकरणः १४ दग्धदेहः कवेरपिवंशोनाभवदित्याह । कविरिति बंधुभिः सह राज्यंविसृज्य १५

॥ श्रीशुकउवाच ॥ एवंगतेथसुद्युम्नेमनुर्वैवस्वतःसुते ॥ पुत्रकामस्तपस्तेपेयमुनायांशतंसमाः १ ततोयजन्मनुर्देवमपत्यार्थंहरिंप्रभुम् ॥ इक्ष्वाकुपूर्वजान्पुत्रान्लेभेस्वसदृशान्दश २ पृषध्रस्तुमनोःपुत्रोगोपालोगुरुणाकृतः ॥ पालयामासगायत्तोरात्र्यांवीरासनव्रतः ३ एकदाप्राविशद्गोष्ठंशार्दूलोनिशिवर्षति ॥ शयानागावउत्थायभीतास्ताबभ्रमुर्व्रजे ४ एकांजग्राहबलवान्साचुक्रोशभयातुरा ॥ तस्यास्तत्क्रंदितंश्रुत्वापृषध्रोभिससाराह ५ खड्गमादायसहसाप्रलीनोडुगणेनिशि ॥ अजानन्नहनद्बभ्रोःशिरःशार्दूलशंकया ६ व्याघ्रोपिछिन्नकर्णश्रवणोनिस्त्रिंशाग्राहतस्ततः ॥ निश्चक्रामभृशंभीतोरक्तंपथिसमुत्सृजन् ७ मन्यमानोहतंव्याघ्रंपृषध्रःपरवीरहा ॥ अद्राक्षीत्स्वहतांबभ्रुंव्युष्टायांनिशिदुःखितः ८ तंशशापकुलाचार्यःकृतागसमकामतः ॥ नक्षत्रबंधुःशूद्रस्त्वंकर्मणाभवितामुना ९ एवंशप्तस्तुगुरुणाप्रत्यगृह्णात्कृतांजलिः ॥ अधारयद्व्रतंवीरऊर्ध्वरेतामुनिप्रियम् १० वासुदेवेभगवतिसर्वात्मन्यमलेपरे ॥ एकांतित्वंगतोभक्त्यासर्वभूतसुहृत्समः ११ विमुक्तसंगःशांतात्मासंयताक्षोऽपरिग्रहः ॥ यदृच्छयोपपन्नेनकल्पयन्वृत्तिमात्मनः १२ आत्मन्यात्मानमाधायज्ञानतृप्तःसमाहितः ॥ विचचारमहीमेतांजडांधबधिराकृतिः १३ एवंवृत्तोवनंगत्वादृष्ट्वादावाग्निमुत्थितम् ॥ तेनोपयुक्तकरणोब्रह्मप्रापपरंमुनिः १४ कविःकनीयान्विषयेषुनिःस्पृहोविसृज्यराज्यंसहबंधुभिर्वनम् ॥ निवेश्यचित्तेपुरुषंस्वरोचिषंविवेशकैशोरवयाःपरंगतः १५

॥ श्रीशुक उवाच ॥ ॥ एवंसुद्युम्ने सति वैवस्वतो मनुः पुत्रकामः सन् यमुनायां शतं समाः तपः तेपे १ ततो मनुः अपत्यार्थं हरिं ईजे ततः इक्ष्वाकुप्रमुखान् पूर्वोक्तदशपुत्रान् लेभे २ तत्र पृषध्रस्तु अष्टमः गुरुणा गोपालः कृतः सः गाः पालयामास ३ एकदा निशि वर्षति सति गोष्ठं व्याघ्रः प्राविशत् भीताः गावः व्रजे बभ्रमुः ४ व्याघ्रः एकां जग्राह सा भयातुरा चुक्रोश ५ तदा पृषध्रः खड्गं आदाय शार्दूलशंकया न ज्ञात्वा बभ्रोः शिरः अहरत् ६ व्याघ्रोपि छिन्नकर्णः भीतः सन् रक्तं पथि उत्सृजन् निश्चक्राम ७ पृषध्रः व्याघ्रं हतं मन्यमानः व्युष्टायां निशि स्वहतां बभ्रुं दृष्ट्वा दुःखितः जातः ८ तदा सः गुरुः पृषध्रं शशाप अनेन कर्मणा त्वं शूद्रो भव इति ९ एवं गुरुणाशप्तः सः ऊर्ध्वरेताः मुनिप्रियं व्रतं दधार १० स वासुदेवे मनः समाधाय जडांधबधिराकृतिः सन् कालेन दावाग्निदग्धः ब्रह्मप्राप ११ १२ १३ १४ ततः कनिष्ठः कविः दशमः विषयेषु निरिच्छः सन् राज्यं हित्वा वने गत्वा चित्ते पुरुषं निवेश्य परं गतः १५

१६ ब्रह्मभूयंब्राह्मणत्वं ( ब्रह्मत्वरूपंक्षतंप्राप्तं ) नृगस्यवंशःपुत्रः सुमतिस्ततो भूतज्योतिःततोवसुः १७ ओघवतःपितातत्पुत्रो प्योघवानेवेत्यर्थः १८ तदेवंत्रिभिःश्लोकैःकरूषधृष्टनृगाणांत्र
याणांवंशाउक्ताः । नरिष्यंतस्यवंशमाह चित्रसेनइतिसार्धैस्त्रिभिः १९ ततइत्यादेर्यत्राधिक्यंस्यात्तत्रानंतर्यंततइत्यादिपदं०शाख्येयंयत्रतुन्यूनत्वंतत्रपूर्वपदानुषंगेणव्याख्येयं २० अग्नि
वेशएवकानीनइतिजातूकर्ण्यइतिचविख्यातः २१ २२ दिष्टस्यपुत्रोनाभागोवक्ष्यमाणान्नाभागादन्यइतिभ्रांति०गुदासार्थं अनुवादमात्रं २३ २४ २५ अंगिरसःसुतोमहायोगीसंवर्तोयम
याजयत्समरुत्तः २६ अस्ययत्किंचपात्रादिकमस्तितत्सर्वंहिरण्मयंशोभनमासीत् २७ अमाद्यत् अहृष्यत् २८

करूषान्मानवादासन्कारूषाःक्षत्रजातयः ॥ उत्तरापथगोप्तारोब्रह्मण्याधर्मवत्सलाः १६ धृष्टाद्धार्ष्टमभूत्क्षत्रंब्रह्मभूयंक्षतंगतम् ॥ नृगस्यवंशःसुमतिर्भूत
ज्योतिस्ततोवसुः१७वसोःप्रतीकस्तत्पुत्रओघवानोघवत्पिता ॥ कन्याचोघवतीनामसुदर्शनउवाहताम् १८ चित्रसेनोनरिष्यंताद्दक्षस्तस्यसुतोभवत् ॥
तस्यमीढ्वांस्ततःकूर्चोइंद्रसेनस्तुतत्सुतः १९ वीतिहोत्रस्त्विंद्रसेनात्तस्यसत्यश्रवाअभूत् ॥ उरुश्रवाःसुतस्तस्यदेवदत्तस्ततोभवत् २० ततोग्निवे
शोभगवानग्निःस्वयमभूत्सुतः ॥ कानीनइतिविख्यातोजातूकर्ण्योमहानृषिः २१ ततोब्रह्मकुलंजातमाग्निवेश्यायनंनृप ॥ नरिष्यंतान्वयःप्रोक्तोदिष्टवं
शमतःशृणु २२ नाभागोदिष्टपुत्रोन्यःकर्मणावैश्यतांगतः ॥ भलंदनःसुतस्तस्यवत्सप्रीतिर्भलंदनात् २३ वत्सप्रीतेःसुतःप्रांशुस्तत्सुतंप्रमतिंविदुः ॥
खनित्रःप्रमतेस्तस्माच्चाक्षुषोथविविंशतिः२४ विविंशतिसुतोरंभःखनिनेत्रोस्यधार्मिकः ॥ करंधमोमहाराजतस्यासीदात्मजोनृप २५ तस्याविक्षित्सुतो
यस्यमरुत्तश्चक्रवर्त्यभूत् ॥ संवर्तोयाजयद्यंवैमहायोग्यंगिरःसुतः २६ मरुत्तस्ययथायज्ञोनतथान्योस्तिकश्चन ॥ सर्वंहिरण्मयंत्वासीद्यत्किंचास्यस्यशो
भनम् २७ अमाद्यदिंद्रःसोमेनदक्षिणाभिर्द्विजातयः ॥ मरुतःपरिवेष्टारोविश्वेदेवाःसभासदः २८

अथ करूषात् षष्ठात् कारूषाः क्षत्रियाः ते उत्तरदेशपालकाःआसन् १६ ततः धृष्टात् पंचमात् धार्ष्टं क्षत्रं अभूत् तत् ब्राह्मणत्वं गतं नृगस्य द्वितीयस्य सुमतिः ततः
भूतज्योतिः ततः वसुः१७ततः प्रतीकः ततः ओघवान् ओघवती कन्या च तां सुदर्शनः उवाह ओघवतः पुत्रः ओघवान् १८ततो नरिष्यंतात् सप्तमात् चित्रसेनः ततो
दक्षः तस्य मीढ्वान् तस्मात् कूर्चः तस्मात्इंद्रसेनः १९ तस्मात् वीतिहोत्रः तस्य सत्यश्रवाः तस्मात् उरुश्रवाः तस्मात् देवदत्तः २० तस्य अग्निवेश्यः नाम स्वयं अग्निः
सुतोभूत् स एव कानीनः जातूकर्ण्यः इति २१ तस्मात् ब्रह्मकुलं जातं दिष्टात् चतुर्थात् नाभागः स च वैश्यतां गतः तस्मात् भलंदनः तस्मात् वत्सप्रीतिः २२
२३ तस्मात्प्रांशुः तस्मात् प्रमतिः तस्मात् खनित्रः तस्मात् चाक्षुषः तस्मात् विविंशतिः २४ ततःरंभः तस्य खनिनेत्रः तस्य करंधमः २५ तस्य आविक्षित् तस्य मरुत्तः
चक्रवर्तीअभूत् २६ यस्य यज्ञ इव अन्यस्य यज्ञः न जातः तस्य यज्ञेसर्वं हिरण्मयं आसीत् २८

२९ ३० यतःयस्यांतृणबिंदोःपुत्राअभवन् ( ननुदेवीकस्माद्भेजेइत्यतआहभजनीयेति ) ३१ ( यस्यांइडविडायांविश्रवाऋषियोगेश्वरात्पितुःपुलस्त्यात्विद्यांमादायधनदंकुबेरंपुत्रमुत्पादयामास ) ३२ तृणबिंदोःपुत्रानाह विशालइति । तस्यतृणबिंदोःसुताः ३३ सहदेवजःदेवजेनसहितः ( देवजोपिसंयमस्यपुत्रइत्यर्थः ) पाठांतरेनामान्यत्वमात्रंअर्थस्तुसएव ३४ ३५ ( सौमदत्तिः सोमदत्तपुत्रःसुमतिः ) वैशालभूपालाविशालस्यान्वयेजाताः ३६ ॥ ॥ इतिश्रीभागवतेमहापुराणेनवमस्कंधेटीकायांद्वितीयोऽध्यायः २ ॥ ॥ ७ ॥ ॥ तृतीयेमनुपुत्रस्यशर्यातेःकीर्त्यतेऽन्वयः । यत्रलौकन्यामाख्यानरैवतंचमहाद्भुतं ॥ १ ॥ ब्रह्मिष्ठःवेदार्थतत्त्वज्ञः तदेवाह योवाइति द्वितीयमहः द्वितीयेऽह्निक्रियमाणंकर्मऊचिवानुवाच । तस्यवंशंउत्तानबर्हिरानर्तइत्यादिनावक्ष्यति १ आदौ तावत्कन्यावृत्तांतमाह सुकन्येति २

मरुत्तस्यदमःपुत्रस्तस्यासीद्राजवर्धनः ॥ सुधृतिस्तत्सुतोजज्ञेसौधृतेयोनरःसुतः २९ तत्सुतःकेवलस्तस्माद्बंधुमान्वेगवांस्ततः ॥ बुधस्तस्याभवत्तस्यतृणबिंदुर्महीपतिः ३० तंभेजेऽलंबुसांदेवीभजनीयगुणालयम् ॥ वराप्सरायतःपुत्राकन्याचेडविडाऽभवत् ३१ यस्यामुत्पादयामासविश्रवाधनदंसुतम् ॥ मादायविद्यांपरमांऋषियोंगेश्वरात्पितुः ३२ विशालःशून्यबंधुश्चधूम्रकेतुश्चतत्सुताः ॥ विशालोवंशकृद्राजावैशालींनिर्ममेपुरीम् ३३ हेमचंद्रःसुतस्तस्यधूम्राक्षस्तस्यचात्मजः ॥ तत्पुत्रात्संयमादासीत्कृशाश्वःसहदेवजः ३४ कृशाश्वात्सोमदत्तोभूद्योऽश्वमेधैरिडस्पतिम् ॥ इष्ट्वापुरुषमापाग्र्यांयोगेश्वराश्रितः ३५ सौमदत्तिस्तुसुमतिस्तत्सुतोजनमेजयः ॥ एतेवैशालभूपालास्तृणबिंदोर्यशोधराः ॥३६॥ ॥ इतिश्रीभागवतेमहापुराणेनवमस्कंधेद्वितीयोऽध्यायः ॥ २ ॥ ॥ ७ ॥ ॥ श्रीशुकउवाच ॥ शर्यातिर्मानवोराजाब्रह्मिष्ठःसबभूवह ॥ योवाअंगिरसांसत्रेद्वितीयमहऊचिवान् ॥ १ ॥ सुकन्यानामतस्यासीत्कन्याकमललोचना ॥ तयासार्धंवनगतोह्यगमच्च्यवनाश्रमम् २

तस्य दमः तस्य राज्यवर्धनः तस्य सुधृतिःतस्यनरः २९ तस्यकेवलः तस्य बंधुमान् तस्य वेगवान् तस्य बंधुः तस्य तृणबिंदुः ३० तं अलंबुषा अप्सरा भेजे तस्यां तृणबिंदोः पुत्राः त्रयः विशालः शून्यबंधुः धूम्रकेतुरिति इडविडा कन्याच जाता ३१ तस्यां विश्रवा कुबेरं जनयामास ३२ तृणबिंदुसुतेन विशालेन वैशाली पुरी निर्मिता ३३ विशालात् हेमचंद्रः तस्य धूम्राक्षः तस्य संयमः तस्य कृशाश्वदेवजौ पुत्रौद्वौ ३४ कृशाश्वात् सोमदत्तः ३५ सः अश्वमेधैः पुरुषं इष्ट्वा अग्र्यां गतिं आप सोमदत्तात् सुमतिः तस्य जनमेजयः एते वैशालभूपालाः तृणबिंदोर्यशोधराः ३६ इति नवमे द्वितीयः २ ॥ ॥ ७ ॥ श्रीशुक उवाच ॥ मानवः शर्यातिः तृतीयः ब्रह्मिष्ठो बभूव सः आंगिरसां सत्रे द्वितीयेह्नि क्रियमाणं कर्म उवाच १ तस्य सुकन्या नाम कन्या आसीत् तया सह च्यवनाश्रमं वनं गतः २ ॥ ३ ॥

१ 'तंभेजेऽलंबुषादेवी' इतिक्वचित्पाठोदृश्यते

३ ४ ५ भार्गवस्यच्यवनस्य अभद्रं अपराधः ६ ७ ८ मुग्धेयंममकन्याक्षंतव्यंत्वयेतु च्यवानेकतिवर्षाण्यस्याःविवाहःकृतोनवेत्यादिवाक्यैस्तदाभिप्रायंज्ञात्वातस्मैतांदुहितरंप्रादात् ९ १० हेईश्वरौसद्वैद्यौयुवांमह्यंवयस्तारुण्यंदत्तंसंपादयतम् ११ असोमपोःसोमपानरहितयोरपिवांयुवयोःसोमस्यग्रहं सोमपूर्णपात्रंग्रहीष्येदास्यामि। युवांसोमेनयक्ष्यइत्यर्थः'ऐंद्रवायवं गृह्णाति' इत्यादिषुद्रव्यदेवतासंबंधानुपपत्त्याग्रहणातिर्यागपर्यंतसाधित्वात् १२ बाढमित्यभिनंद्यमवा नस्मिन्निमज्जतामित्यूचतुः १३ ह्रदंप्रवेशितःतावपितमतिवृद्धंगृहीत्वाप्रविष्टा वित्यर्थः १४ ( अपीच्याःसुंदराः ) १५

सासखीभिःपरिवृताविचिन्वंत्यांघ्रिपान्वने ॥ वल्मीकरंध्रेददृशेखद्योतेइवज्योतिषी ३ तद्दैवचोदिताबालाज्योतिषीकंटकेनवै[१] ॥ अविध्यन्मुग्धभावेन सुस्रावासृक्ततोबहु ४ शकृन्मूत्रनिरोधोभूत्सैनिकानांचतत्क्षणात् ॥ राजर्षिस्तमुपालक्ष्यपुरुषान्विस्मितोऽब्रवीत् ५ अप्यभद्रंनयुष्माभिर्भार्गवस्यविचेष्टितम् ॥ व्यक्तंकेनापिनस्तस्यकृतमाश्रमदूषणम् ६ सुकन्याप्राहपितरंभीताकिंचित्कृतंमया ॥ द्वेज्योतिषीअजानंत्यानिर्भिन्नेकंटकेनवै ७ दुहितुस्तद्वचःश्रुत्वाशर्यातिर्जातसाध्वसः ॥ मुनिंप्रसादयामासवल्मीकांतर्हितंशनैः ८ तदभिप्रायमाज्ञायप्रादाद्दुहितरंमुनेः ॥ कृच्छ्रान्मुक्तस्तमामंत्र्यपुरंप्रायात्समाहितः ९ सुकन्याच्यवनंप्राप्यपतिंपरमकोपनम् ॥ प्रीणयामासचित्तज्ञाअप्रमत्ताऽनुवृत्तिभिः १० कस्यचित्त्वथकालस्यनासत्यावाश्रमागतौ ॥ तौपूजयित्वाप्रोवाचवयोमेदत्तमीश्वरौ ११ ग्रहंग्रहीष्येसोमस्ययज्ञेवामप्यसोमपोः ॥ क्रियतांमेवयोरूपंप्रमदानांयदीप्सितम् १२ बाढमित्यूचतुर्विप्रमभिनंद्यभिषक्तमौ ॥ निमज्जतांभवानस्मिन्ह्रदेसिद्धविनिर्मिते १३ इत्युक्तोजरयाग्रस्तदेहोधमनिसंततः ॥ ह्रदंप्रवेशितोऽश्विभ्यांवलीपलितविप्रियः १४ पुरुषास्त्रयउत्तस्थुरपीच्यावनिताप्रियाः ॥ पद्मस्रजःकुंडलिनस्तुल्यरूपाःसुवाससः १५

सा सखीभिः सह वने वृक्षान् विचिन्वती सती वल्मीकरंध्रे खद्योत इवद्वेज्योतिषी दृष्ट्वा ३ दैवेननोदिता कंटकेन अविध्यत् ततःअसृक्सुस्राव ४ तदैव सैनिकानां शकृन्मूत्रनिरोधः अभूत् तदा राजर्षिः सैनिकान् अब्रवीत् ५ युष्माभिःभार्गवस्य अपराधः कृतः किंतु तदा सुकन्या पितरं प्राह ६ अजानंत्या मया द्वे ज्योतिषी कंटकेन निर्भिन्ने ७ तच्छ्रुत्वा शर्यातिः मुनिं प्रसादयामास ८ मुनेः अभिप्रायं ज्ञात्वा कन्यां मुनये दत्त्वा कृच्छ्रान्मुक्तः पुरं ययौ ९ ततः सुकन्या मुनिं प्रीणयामास १० कस्मिंश्चित्समये नासत्यौ स्वाश्रमं प्राप्तौ तौ पूजयित्वा मुनिः प्रोवाच ११ हे सद्वैद्यौ मे तारुण्यं संपादयतं अहं भवतोः असोमपोःसतोः युवां सोमेन यक्ष्ये मे प्रमदानांईप्सितं वयो रूपं चेत् क्रियतां १२ तौ बाढमित्यूचतुः हे ऋषे अस्मिन् ह्रदे निमज्जताम् १३ इत्युक्तो मुनिः जरया ग्रस्तदेहः अश्विभ्यां सह ह्रदं विवेश १४ ततः ह्रदात् सूर्यवर्चसः त्रयः पुरुषाः उत्तस्थुः १५

---

१ 'तेदैवचोदिताबाला' इतिमु० पु० पाठः ।

अश्विनौशरणंययौयुवांपृथक्स्थित्वामत्पतिंदर्शयतामितिप्रार्थयामासेत्यर्थः १६ १७ १८ १९ प्रलंभितोवंचितःहेअसति(दुष्टे)असंमतंअनभीष्टम् २० हेसतांकुलप्रसूते तेतवमतिरन्यथाव
द्विपर्ययेणकथमवगता अध्यसन्नात्त्वयाऽध्यवसितेतिवा । तदेवाह । कुलदूषणंत्विदमित्यादि २१ २२ २३ ( अश्विनोरपिसोमस्यग्रहं अग्रहीत्ददौ ) २४ सद्यस्तत्क्षणमेवमन्युर्यस्यसइंद्रः
( सवज्रंवज्रेणसहितं ) २५ २६ २७ विषयान्देशान् अभुंक्त अपालयत् २८ ककुद्मीःज्येष्ठोयास्मिंस्तत् । विभुंब्रह्माणम् २९ नलब्धःक्षणोऽवसरोयेन ३०

तान्निरीक्ष्यवरारोहासरूपान्सूर्यवर्चसः ॥ अजानतीपतिंसाध्वीअश्विनौशरणंययौ १६ दर्शयित्वापतिंतस्यैपातिव्रत्येनतोषितौ ॥ ऋषिमामंत्र्यययतु
र्विमानेनत्रिविष्टपम् १७ यक्ष्यमाणोथशर्यातिश्च्यवनस्याश्रमंगतः ॥ ददर्शदुहितुःपार्श्वेपुरुषंसूर्यवर्चसम् १८ राजादुहितरंप्राहकृतपादाभिवंदनाम् ॥
आशिषश्चाप्रयुंजानोनातिप्रीतमनाइव १९ चिकीर्षितंतेकिमिदंपतिस्त्वयाप्रलंभितोलोकनमस्कृतोमुनिः ॥ यत्त्वंजराग्रस्तमसत्यसंमतंविहायजारंभज
सेऽमुमध्वगम् २० कथंमतिस्तेऽवगतान्यथासतांकुलप्रसूतेकुलदूषणंत्विदम् ॥ बिभर्षिजारंयदपत्रपाकुलंपितुश्चभर्तुश्चनयस्यधस्तमः २१ एवंब्रुवाणं
पितरंस्मयमानाशुचिस्मिता ॥ उवाचतातजामातातवैषभृगुनंदनः २२ शशंससापित्रेतत्सर्वंवयोरूपाभिलंभनम् ॥ विस्मितःपरमप्रीतस्तनुजांपरिषस्व
जे २३ सोमेनयाजयन्वीरंग्रहंसोमस्यचाग्रहीत् ॥ असोमपोरप्यश्विनोश्च्यवनःस्वेनतेजसा २४ हंतुंतमाददेवज्रंसद्योमन्युरमर्षणः ॥ सवज्रंस्तंभयामा
सभुजमिंद्रस्यभार्गवः २५ अन्वजानंस्ततःसर्वेग्रहंसोमस्यचाश्विनोः ॥ भिषजावितियत्पूर्वंसोमाहुत्याबहिष्कृतौ २६ उत्तानबर्हिरानर्तोभूरिषेणइतित्रयः ॥
शर्यातेरभवन्पुत्राआनर्ताद्रेवतोभवत् २७ सोंतःसमुद्रेनगरींविनिर्मायकुशस्थलीम् ॥ आस्थितोऽभुंक्तविषयानानर्तादीनरिंदम २८ तस्यपुत्रशतंजज्ञेक
कुद्मिज्येष्ठमुत्तमम् ॥ ककुद्मीरेवतींकन्यांस्वामादायविभुंगतः २९ कन्यावरंपरिप्रष्टुंब्रह्मलोकमपावृतम् ॥ आवर्तमानेगांधर्वेस्थितोऽलब्धक्षणःक्षणं ३०

ताम् दृष्ट्वा पतिं अजानती साध्वी अश्विनौ शरणंययौ १६ तौ तस्यै पतिंदर्शयित्वा ऋषिंआमंत्र्य स्वर्गं ययतुः १७ कालेन यक्ष्यमाणः शर्यातिः च्यवनाश्रमं गतः त
त्र कन्यासमीपे दिव्यं पुरुषं दृष्ट्वा दुहितरं प्राह १८ १९ हे सुकन्ये त्वंवृद्धं पतिं हित्वा जारं भजसे २० पितुः भर्तुश्च कुलं अधो नयसि २१ इति श्रुत्वा सुक
न्योवाच हे तात एषः भृगुनंदनः तव जामाता २२ इत्युक्त्वा सर्वं पूर्ववृत्तं पित्रे शशंस तत् श्रुत्वा तनयां परिषस्वजे २३ च्यवनः वीरं सोमेन याजयन् अश्विनोः
सोमपूर्णपात्रं अग्रहीत् २४ तदा क्रुद्धः इंद्रः शर्यातिं हंतुं वज्रं आददे च्यवनः सवज्रं हस्तं स्तंभयामास २५ ततः सर्वे अश्विनोः सोमग्रहं अजानन् २६ शर्यातेः उ
त्तानबर्हिः आनर्तः भूरिषेणः इति त्रयःपुत्राः अनर्तात् रेवतो जातः २७ सः अंतःसमुद्रे कुशस्थलीं निर्माय आस्थितः सन् आनर्तादीन् बुभुजे २८ तस्य ककुद्मिज्येष्ठं
पुत्रशतं अभवत् ककुद्मी स्वां रेवतीं कन्यां आदाय २९ वरं प्रष्टुं ब्रह्माणं गतः तत्र गांधर्वे आवर्तमाने सति क्षणं स्थित्वा ३०

आयंब्रह्माणम् ३१ तेस्त्वयाहृदियेकृतास्तेसर्वेनृपाःकालेननिरुद्धाःसंहृताः ३२ त्रिणवसप्तविंशतिश्चतुर्युगानितैर्विकल्पितोविभक्तः ३३ देवस्यांशोस्ति तस्मैनररत्नायदेहि ३४ तदेवाह
३५ पुण्यजनत्रासाद्यक्षभयात्पूर्वमेवयश्चिरंपुरंतद्भ्रातृभिस्त्यक्तं ३६ इतिश्रीभागवतेमहापुराणेनवमस्कंधेटीकायांतृतीयोध्यायः ॥ ३ ॥॥४॥ चतुर्थेमनुपुत्रस्यनाभागस्यकथोच्यते।
तत्सूनोश्चांबरीषस्यकृत्याप्रविहतायतः ॥१॥ नभगस्यवंशमाह।नभमस्यापत्यंनाभागः । नाभागादंबरीषोमहाभागवतोभूदितिवक्ष्यन्तद्धेतुत्वेननाभागस्यनिष्कपटंचरितंतेनश्रीरुद्रप्रसा
दंचाह । यंततमित्यादिना । ब्रह्मचारिणंबहुकालगुरुकुलेवसंतं । नैष्ठिकोसावितिमत्वाविभागसमयेतस्यभागमप्रकल्प्यैव भ्रातारःसर्वदायं विभज्यगृहीत्वा पश्चाद्गुरुकुलादागतंभागार्थिनं
कविंविद्वांसंयविष्ठं (नाभागं) प्रति ततंतातंपितरंदायंव्यभजन् ( पितृरूपंभागंकल्पयामासुरित्यर्थः ) १ एतदेवप्रश्नोत्तराभ्यांदर्शयति तत्रनाभागःपृच्छतिहेभ्रातरःमह्यंकिमभक्त व्यम
जंतकंभागंमदर्थंयूयंकल्पितवंतः भ्रातरआहुःतदाविस्मृतमस्माभिः इदानींतुतवपितरंभजामविभजामस्त्वंपितरंगृहाणेत्यर्थः सचपितरंगत्वाह ततहेतात आर्याःश्रेष्ठाःमम त्वाममांस्तुभागं
चक्रुः मदीयोभागस्त्वमित्यर्थः । पाठांतरे हेतात किमिदंममाभांक्षुः । भजामपितरंतवेत्युक्तवंतः आर्यास्त्वांमह्यंकिमर्थंददुरित्यर्थः । पिताऽऽह । हेपुत्रकतवतैरुक्तंमाआद्यथाःप्रतारण
मात्रंतैस्कृतंतस्मिन्नादरंमाकार्षीः । नह्यहंदायइव भोगसाधनमित्यर्थः २

तदंतआद्यमानम्यस्वाभिप्रायंन्यवेदयत् ॥ तच्छ्रुत्वाभगवान्ब्रह्माप्रहस्यतमुवाचह ३१ अहोराजन्निरुद्धास्तेकालेनहृदियेकृताः ॥ तत्पुत्रपौत्रनप्तृणांगो
त्राणिचनशृण्महे ३२ कालोभियातस्त्रिणवचतुर्युगविकल्पितः ॥ तद्गच्छदेवदेवांशोनरदेवोमहाबलः ३३ कन्यारत्नमिदंराजन्नररत्नायदेहिभो ॥ भुवो
भारावतारायभगवान्भूतभावनः ३४ अवतीर्णोनिजांशेनपुण्यश्रवणकीर्तनः ॥ इत्यादिष्टोभिवंद्याजंनृपःस्वपुरमागतः ३५ त्यक्तंपुण्यजनत्रासात्भ्रातृ
भिर्दिक्ष्ववस्थितैः ॥ सुतांदत्वाऽनवद्यांगींबलायबलशालिने ॥ बदर्याख्यंययौराजातप्तुंनारायणाश्रमम् ३६ ॥ इतिश्रीभा०म०नवमस्कंधेतृतीयोऽ
ध्यायः ३ ॥ ४ ॥ श्रीशुकउवाच ॥ नाभागोनभगापत्यंयंततंभ्रातरःकविम् ॥ यविष्ठंव्यभजन्दायंब्रह्मचारिणमागतम् १ भ्रातरोऽभंक्तकिंमह्यंभजा
मपितरंतव ॥ त्वांममार्यास्तताभांक्षुर्मापुत्रकतदादृथाः २

तदंते स्वाभिप्रायं न्यवेदयत् तत् श्रुत्वा ब्रह्मा प्रहस्य आह ३१ अहो राजन् ये त्वया हृदि कृताः ते सर्वे कालेन संहृताः ३२ चतुर्युगविकल्पितः त्रिणवामितः
कालो गतः इदानीं देवदेवांशः बलदेवः अस्ति ३३ तस्मै इदं कन्यारत्नं देहि इत्यादिष्टः अजं अभिवंद्य स्वपुरं आगत्य ३४ ३५ बलरामाय कन्यां दत्वा तप्तुं
बदर्याश्रमं जगाम ३६ इति नवमे तृतीयः ॥३॥ श्रीशुक उवाच॥ मनुपुत्रः नभगः नवमः तस्य पुत्रो नाभागः सः गुरुकुले चिरं अवसत् तदा तस्य सर्वे भ्रातरः एवं
नैष्ठिकं मत्वा तस्य भागं अप्रकल्प्य पितृधनं विभज्य जगृहुः कालेनसः आगत्य भ्रातृन् प्रति स्वभागं अपृच्छत् १ ते ऊचुः अयं उर्वरितः पिता ते भागः तदा पितरं
गत्वा उवाच हे पितः त्वमेव मम भागः इति आर्याः कथयंति तदा पिता उवाच हे पुत्र तेषां आदरं माकार्षीः २

तथापितैःभागत्वेनदत्तोहंतवजीवनोपायंउपदेक्ष्यामीत्याह इमइतिसपादाभ्यांद्वाभ्यां । 'अभिप्लवःषडहोभवति पृष्ठ्यःषडहोभवति' इतिविहितेषुषडहेषुआवर्त्यमानेषुषष्ठंषष्ठमहः कर्मोपेत्य प्राप्यकर्मणितदनुष्ठानेसुमेधसोपितेसूक्तविशेषाज्ञानेनमुह्यंति कवेहेविद्वन् ३ तान्महात्मनोपित्वं'इदमित्थारौद्रम्'इतिच'येयज्ञेनदक्षिणया'इतिच वैश्वदेवेद्वेसूक्तेशंसयपाठय । ततः कर्मणिसमाप्तेसतितेस्वर्यंतःस्वर्गंगच्छंतःस्वसत्रेपरिशेषितमवशिष्टमात्मनोधनंतेतुभ्यंदास्यंति ४ अथतस्मात्तान्गच्छेतितथेत्यापितुर्वाक्यंयथायथावत्कृतवान्सत्रपरिशेषणंसत्रावशिष्टंधनं ५ पुरुषःश्रीरुद्रःदृश्यतइतिदर्शनंकृष्णंदर्शनंयस्यसःवास्तुकंयज्ञभूमिगतंवसुधनंममेत्युवाच ६ तर्हिस्मतदेवममेदमितिमानवोनाभागउवाच । पुनश्चरुद्रउवाच नौआवयोरस्मिन्विवादेतेपितरिप्रश्नःस्यादिति । पृष्टवानितिशुकोक्तिः ७ पृष्टस्य मनोर्वाक्यं । यज्ञवास्तुगतमितिउच्छिष्टंउर्वरितंकंचिदितिदक्षाध्वरे 'उच्छेषणभागोवै रुद्रः'इतिश्रुतेश्चकिंचसदेवईश्वरःसर्वमप्यर्हतीति । किंपुनर्यज्ञावशिष्टमित्यर्थः ८ ९ श्रीरुद्रआह यत्तइति १०(मत्सकाशाद्गृहाण)इदमाख्यानंश्रुतिप्रसिद्धम् । तथाहि । बह्वृचब्राह्मणम् । 'नाभानेदिष्ठंमानवंब्रह्मचर्यंवसंतंभ्रातरोनिरभजन्सोब्रवीत्'इत्यादि ११

इमेआंगिरसःसत्रमासतेद्यसुमेधसः ॥ षष्ठंषष्ठमुपेत्याहःकवेमुह्यंतिकर्मणि ३ तांस्त्वंशंसयसूक्तेद्वेवैश्वदेवेमहात्मनः ॥ तेस्वर्यंतोधनंसत्रपरिशेषितमात्मनः४ दास्यंत्यथततोगच्छतथासकृतवान्यथा ॥ तस्मैदत्त्वाययुःस्वर्गंतेसत्रपरिशेषणम् ५ तंकश्चित्स्वीकरिष्यंतंपुरुषःकृष्णदर्शनः ॥ उवाचोत्तरतोभ्येत्यममेदंवास्तुकंवसु ६ ममेदमृषिभिर्दत्तमितितर्हिस्ममानवः ॥ स्यान्नौतेपितरिप्रश्नःपृष्टवान्पितरंतथा ७ यज्ञवास्तुगतंसर्वमुच्छिष्टमृषयःक्वचित् ॥ चक्रुर्हिभागंरुद्रायसदेवःसर्वमर्हति ८ नाभागस्तंप्रणम्याहतवेशकिलवास्तुकम् ॥ इत्याहमेपिताब्रह्मञ्शिरसात्वांप्रसादये ९ ॥ श्रीरुद्रउवाच ॥ यत्तेपिताऽवदद्धर्मंत्वंचसत्यंप्रभाषसे ॥ ददामितेमंत्रदृशोज्ञानंब्रह्मसनातनम् १० गृहाणद्रविणंदत्तंमत्सत्रेपरिशेषितम्[1] ॥ इत्युक्त्वांतर्हितोरुद्रोभगवान्सत्यवत्सलः ११

ते जीवनोपायं उपदेक्ष्यामि हे विद्वन् इमे आंगिरसः सत्रं कुर्वंति ते षष्ठदिने कर्मणि मुह्यंति ३ तान् त्वं द्वे सूक्ते शंसय ते स्वर्यंतः आंगिरसः सत्रशेषितं बहु धनं तुभ्यं दास्यंति ४ तत् श्रुत्वा सः तथाकरोत् तदा आंगिरसः सत्रेपरिशेषितं सर्वंधनं तस्मैदत्त्वा स्वर्गं ययुः ५ स्वीकरिष्यंतं तं कश्चित् पुरुषः उवाच इदं मदीयं वसु ६ तदानाभागः उवाच मा इदं ऋषिभिर्दत्तम् ॥ तदा रुद्र उवाच ।। इदं कस्यद्रव्यमिति पितरं पृच्छ सः तं गत्वा पृष्टवान् ७ ॥ पितोवाच ।। ऋषयः यज्ञवास्तुगतं शेषं भागं रुद्राय चक्रुः ८ एवं श्रुत्वा नाभागः रुद्रमागत्य प्रणम्य आह हे ईश वास्तुकं सर्वं तव भाग इति मे पिता आह अहं त्वां शिरसा प्रसादये ९ ॥ तदा रुद्र उवाच ॥ यतः ते पिता धर्मं अवदत् त्वं सत्यं भाषसे अतः तुभ्यं ज्ञानं ददामि १० मद्दत्तं द्रविणं च गृहाण इत्युक्त्वा शिवः अंतर्दधे ११

१ परिशेषितमितिक्वचित्पाठः ।

अस्याख्यानस्यफलमाह । यइतिआत्मनेगतिंचप्राप्नोतीतिशेषः १२ क्वचिदपिनप्रतिहतो ब्रह्मशापोपिब्राह्मणेनदुर्वाससा निर्मितःकृत्यानलोपियंनास्पृशत् । अतोसौमहाभागवतःअत
एवकृतीपुण्यवान् १३ तस्यश्रोतुमिच्छामि चरितमितिशेषः ब्रह्मदंडः कृत्यानलःनप्राभूत्नसमर्थोबभूव १४ श्रियंसंपदंविभवमैश्वर्यंअतुलंनिरुपमम् १५ पुंसांअतिदुर्लभमपिवस्तसर्वंस्वप्न
वत्संस्तुतंनिरूपितंअनुपादेयंमेने तत्रहेतुःविभवस्यनिर्वाणनाशंविद्वान् यत् येनाविभवेनतन्नाशे नवापुमानूतमोविशति मोहेनिमज्जति १६ नन्वेवंजानंतोपिविभवोविषयोदृश्यंतेतत्राह वासुदे
वइति । भावंभक्तिंप्राप्तःयेनभावेनइदंविश्वम् लोष्टवद्वितुच्छंस्मृतम् १७ भक्तिमेवसर्वेंद्रियाणांभगवत्परत्वकथनेनप्रपंचयति । सवाइतित्रिभिः ।(सोंबरीषः)श्रुतिंश्रोत्रम् । अच्युतस्यसत्क
थानांउदयेश्रवणेचकारेत्यस्यसर्वत्रान्वयः १८ मुकुंदस्यलिंगानांआलयानिस्थानानितेषांदर्शनेदृशौनेत्रे । श्रीमत्यास्तुलस्यास्तत्पादसरोजेनयत्सौरभंतस्मिन्(तत्पादसरोजवायत्सौरभं
तत्र )। तदर्पितेतस्मैनिवेदितान्नादौ (रसनांचकार) १९ (हरेः क्षेत्ररूपंयत्पदंस्थानं पाठेक्षेत्रेयःपंथास्तदनुगमनेपादौ)। दास्येनिमित्ते कामंविषयसेवांतत्प्रसादस्वीकाराय स्रक्चंदना
दिसेवनंचकारेत्यर्थः नतुकामकाम्ययाविषयसुखाभिलाषेण । कथंचकार । उत्तमश्लोकजनाश्रयारतिर्यथायेनप्रकारेणस्यात्तथा । अनेनतद्भक्तेषुचपरंभावंप्राप्तइत्येतत्स्फुटीकृतम् २०
सर्वत्रात्मेतिभावोभावनायस्मिन्तम् । आत्मनःस्वस्यकर्मणांकलापंसमूहंभगवतिविदधत्समर्पयन्तन्निष्ठैर्भागवतैर्विप्रैरभिहितःशिक्षितःसन्महींशशासपालयामास अनेनाधिकृतोधर्मो
पियथावदनुष्ठितः २१

यएतत्संस्मरेत्प्रातःसायंचसुसमाहितः ॥ कविर्भवतिमंत्रज्ञोगतिंचैवतथात्मनः १२ नाभागादंबरीषोऽभून्महाभागवतःकृती ॥ नास्पृशद्ब्रह्मशापोपियंन
प्रतिहतःक्वचित् १३ ॥ ॥ राजोवाच ॥ भगवन्श्रोतुमिच्छामिराजर्षेस्तस्यधीमतः ॥ नप्राभूद्यत्रनिर्मुक्तोब्रह्मदंडोदुरत्ययः १४ ॥ श्रीशुकउवाच ॥
अंबरीषोमहाभागःसप्तद्वीपवतींमहीम् ॥ अव्ययांचश्रियंलब्ध्वाविभवंचातुलंभुवि १५ मेनेतिदुर्लभंपुंसांसर्वंतत्स्वप्नसंस्तुतम् ॥ विद्वान्विभवनिर्वाणंत
मोविशतियत्पुमान् १६ वासुदेवेभगवतितद्भक्तेषुचसाधुषु ॥ प्राप्तोभावंपरंविश्वंयेनेदंलोष्टवत्स्मृतम् १७ सवैमनःकृष्णपदारविंदयोर्वचांसिवैकुंठगुणा
नुवर्णने ॥ करौहरेर्मंदिरमार्जनादिषुश्रुतिंचकाराच्युतसत्कथोदये १८ मुकुंदलिंगालयदर्शनेदृशौतद्भृत्यगात्रस्पर्शेऽगसंगमम् ॥ घ्राणंचतत्पादसरोजसौर
भेश्रीमत्तुलस्यारसनांतदर्पिते १९ पादौहरेःक्षेत्रपदानुसर्पणेशिरोहृषीकेशपदाभिवंदने ॥ कामंचदास्येनतुकामकाम्ययायथोत्तमश्लोकजनाश्रयारतिः
२० एवंसदाकर्मकलापमात्मनःपरेऽधियज्ञेभगवत्यधोक्षजे ॥ सर्वात्मभावंविदधन्महीमिमांतन्निष्ठविप्राभिहितःशशासह २१

इदं आख्यानं यः संस्मरेत् सः आत्मगतिं प्राप्नोति १२ अथ नाभागात् अंबरीषः अभूत् तस्य ब्रह्मशापोपि न अस्पृशत् १३ ॥ राजोवाच ॥ हे भगवन् तस्य राजर्षेः
ब्रह्मदंडः कुतः न प्रादुरभूत इदं श्रोतुमिच्छामि १४ ॥ श्रीशुक उवाच ॥ महाभागः अंबरीषः सर्वां महीं अव्ययां श्रियं च लब्ध्वा १५ सर्वं स्वप्नवत् मत्वा वासु
देवे तद्भक्तेषु च सर्वात्मभावं प्राप्तः सन् १६ १७ कृष्णपदारविंदयोः मनश्चकार भगवद्गुणानुवर्णने वचांसि इत्यादि १८ १९ २० एवं भक्तिं कुर्वन् महीं शशास २१

---

१ 'क्षेत्रपथानुसर्पणे' इतिपाठोपि क्वचित्.

किंच । यज्ञाधिष्ठातारमीश्वरमश्वमेधैरीजे आराधयामास । महाविभूत्या उपचितानि अंगानि दक्षिणाश्च येषु तैः वसिष्ठादिभिर्हेतुभूतैस्ततैर्विस्तृतैः धन्वनि धन्वदेशे निरुदके सरस्वतीमभिस्रोतं तस्याः प्रतिलोममित्यर्थः २२ किंच । यस्य क्रतुषु सदस्यादयो गीर्वाणैः सह भूषणादिभिस्तुल्यरूपा व्यदृश्यंत । सइत्थमिति चतुर्थेनान्वयः । नच देवानामनिमिषामात्राद्वैलक्षण्यम् । यतः अनिमिषाश्च व्यदृश्यंत । ननिमिषंतीत्यनिमिषाः आश्चर्यदर्शनौत्सुक्येन तेषामिमेषोपरमादिति भावः २३ यस्य यदीयैर्मनुजैरपि स्वर्गो न प्रार्थितः तस्य तु का वार्ता २४ आस्तां स्वर्गप्रार्थनशंकापि । यद्यतः मुकुंदं हृदि पश्यतस्तान् जनान् कामा विषयान समर्धयंतिन हर्षयंति । कथंभूताः स्वाराज्येन स्वरूपसुखेन परिभाविताः अतिशायिताः अतएव सिद्धानामपि दुर्लभाः । यानितिपाठे यान्मनुजान् स्वाराज्येत्यत्रापि द्वितीयांतपाठे मनुजानां विशेषणम् । यमितिपाठे यमंबरीषं पश्यतामिति पाठे सिद्धानां विशेषणम् २५ एवं भगवदाराधनपरस्य कामाद्युपेक्षा नैवाचित्रमित्युपसंहरति सइत्थमिति द्वाभ्याम् २६ २७ नन्वेवंभूतोसौ कथं प्रतिपक्षान् जयेत्तत्राह तस्मा इति (प्रत्यनीकभयावहं शत्रूणां भयंकरं भृत्याभिरक्षणं भक्तसंरक्षणकरं चक्रं तस्मै ददौ) २८ तदेवं तस्य वैराग्यादिकं हरिभक्तिं चोक्त्वा ब्रह्मदंडो यत्र न प्राभूदिति यदुक्तं तदेव द्वादशीव्रतनिष्ठां कथयन्नाह आरिराधयिषुरित्यादिना यावदध्यायसमाप्ति २९ अर्चयत् आर्षः ३० (अंबराकल्पैर्वस्त्रालंकारैः) ३१ ब्राह्मणांश्च पूजयामास सिद्धार्थान् आप्तकामान् पूजानपेक्षानपीत्यर्थः ३२ (पयः क्षीरं शीलं साधुत्वं वयस्तारुण्यं रूपं सौंदर्यं वत्सं दुकूलादि उपस्कारा गंधमाल्यादयः) रूप्यंघ्रीणां रूप्यखुराणां पयःशीलादिसंपदोयासां तासाम् ३३

ईजेश्वमेधैरधियज्ञमीश्वरंमहाविभूत्योपचितांगदक्षिणैः ॥ ततैर्वसिष्ठासितगौतमादिभिर्धन्वन्यभिस्रोतमसौसरस्वतीम् २२ यस्यक्रतुषुगीर्वाणैःसदस्या ऋत्विजोजनाः ॥ तुल्यरूपाश्चानिमिषाव्यदृश्यंतसुवाससः २३ स्वर्गोनप्रार्थितोयस्यमनुजैरमरप्रियः ॥ शृण्वद्भिरुपगायद्भिरुत्तमश्लोकचेष्टितम् २४ समर्धयंतितान्कामाःस्वाराज्यपरिभाविताः ॥ दुर्लभानापिसिद्धानांमुकुंदंहृदिपश्यतः २५ सइत्थंभक्तियोगेनतपोयुक्तेनपार्थिवः ॥ स्वधर्मेणहरिंप्रीणन्सर्वान्कामान्शनैर्जहौ २६ गृहेषुदारेषुसुतेषुबंधुषुद्विपोत्तमस्यंदनवाजिपत्तिषु ॥ अक्षय्यरत्नाभरणायुधादिष्वनंतकोशेष्वकरोदसन्मतिम् २७ तस्माअदाद्धरिश्चक्रंप्रत्यनीकभयावहम् ॥ एकांतभक्तिभावेनप्रीतोभृत्याभिरक्षणम् २८ आरिराधयिषुःकृष्णंमहिष्यातुल्यशीलया ॥ युक्तःसांवत्सरंवीरोदधारद्वादशीव्रतम् २९ व्रतांतेकार्तिकेमासित्रिरात्रंसमुपोषितः ॥ स्नातःकदाचित्कालिंद्यांहरिंमधुवनेऽर्चयत् ३० महाभिषेकविधिनासर्वोपस्करसंपदा ॥ अभिषिच्यांबराकल्पैर्गंधमाल्यार्हणादिभिः ३१ तद्गतांतरभावेनपूजयामासकेशवम् ॥ ब्राह्मणांश्चमहाभागान्सिद्धार्थानपिभक्तितः ३२ गवांरुक्मविषाणीनांरूप्यांघ्रीणांसुवाससाम् ॥ पयःशीलवयोरूपवत्सोपस्करसंपदाम् ३३

अश्वमेधैः हरिं ईजे २२ २३ यस्य प्रजाभिः स्वर्गो न प्रार्थितः २४ सः सर्वेंद्रियैः हरिं अभजत् २५ २६ २७ तस्य भक्त्या तुष्टः हरिः संरक्षणाय चक्रं अदात् २८ सः सपत्नीकः सांवत्सरं द्वादशीव्रतं दधार २९ व्रतांते कार्तिके द्वादशीदिने कालिंद्यां स्नात्वा मधुवने हरिं ब्राह्मणांश्च संपूज्य ३० ३१ ३२ तेभ्यः षट्न्यर्बुदानि गाः दत्वा तान् भोजयित्वा ३३

न्यर्बुदानिषट् षष्टिकोटीः (गुणवत्तमं अतिशयेन घृतक्षीरादिगुणैर्युक्तं स्वाद्वन्नं अग्रे प्रथमं द्विजान् भोजयित्वा लब्धाभीष्टैस्तैरनुज्ञातः पारणायोपचक्रमे ) ३४ तर्हि तदैव दुर्वासा आतिथिः साक्षात्प्रत्यक्षोऽभूत् ३५ आनर्च अर्चितवान् ( भूयः अधिकं यथास्यात्तथा ) अभ्यवहाराय भोजनाय ३६ आवश्यकं नैत्यमिकं माध्याह्निकं कर्तुं गतः बृहद्ब्रह्म ३७ ३८ धर्मसंकटमेवाह । यत्र तत्र ब्राह्मणातिक्रमे दोषः अधर्मः । द्वादश्यामपारणेपि दोषः व्रतवैगुण्यम् । यत्कृत्वायस्मिन्कृते ३९ एवं द्विजैः सहविचार्य निश्चिनोति अंभसेति व्रतस्य पारणं समाप्तिम् । तत्र अशितं आहुः अशितं नेति चाहुः । श्रुतिश्च । " अपोश्नातितन्नैवाशितं नैवानशितम् " इति ४० प्रत्यचष्ट प्रत्यैक्षत ४१ ४२ प्रचलत्कंपमानं गात्रं यस्य भृकुटीभ्यां कुटिलमाननं यस्य ४३ ४४ ( तस्य ते सद्यः फलं दर्शये ) ४५ ४६ ४७ क्रुद्धमहिं पावको दावाग्निरिव ४८

प्राहिणोत्साधुविप्रेभ्यो गृहेषु न्यर्बुदानिषट् ॥ भोजयित्वा द्विजानग्रे स्वाद्वन्नं गुणवत्तमम् ३४ लब्धकामैरनुज्ञातः पारणायोपचक्रमे ॥ तस्य तर्ह्यतिथिः साक्षाद्दुर्वासा भगवानभूत् ३५ तमानर्चातिथिं भूपः प्रत्युत्थानासनार्हणैः ॥ ययाचेऽभ्यवहाराय पादमूलमुपागतः ३६ प्रतिनंद्य स तद्याच्ञां कर्तुमावश्यकं गतः ॥ निममज्ज बृहद्ध्यायन्कालिंदीसलिले शुचौ ३७ मुहूर्तार्धावशिष्टायां द्वादश्यां पारणं प्राति ॥ चिंतयामास धर्मज्ञो द्विजैस्तद्धर्मसंकटे ३८ ब्राह्मणातिक्रमे दोषो द्वादश्यां यदपारणे ॥ यत्कृत्वा साधु मे भूयादधर्मो वा न मां स्पृशेत् ३९ अंभसा केवलेनाथ करिष्ये व्रतपारणम् ॥ प्राहुरब्भक्षणं विप्रा ह्यशितं नाशितं च तत् ४० इत्यपः प्राश्य राजर्षिश्चिंतयन्मनसाऽच्युतम् ॥ प्रत्यचष्ट कुरुश्रेष्ठ द्विजागमनमेव सः ४१ दुर्वासा यमुनाकूलात्कृतावश्यक आगतः ॥ राज्ञाभिनंदितस्तस्य बुबुधे चेष्टितं धिया ४२ मन्युना प्रचलद्गात्रो भृकुटीकुटिलाननः ॥ बुभुक्षितश्च सुतरां कृतांजलिमभाषत ४३ अहो अस्य नृशंसस्य श्रियोन्मत्तस्य पश्यत ॥ धर्मव्यतिक्रमं विष्णोरभक्तस्येशमानिनः ४४ यो मामतिथिमायातमातिथ्येन निमंत्र्य च ॥ अदत्त्वा भुक्तवांस्तस्य सद्यस्ते दर्शये फलम् ४५ एवं ब्रुवाण उत्कृत्य जटां रोषविदीपितः ॥ तया स निर्ममे तस्मै कृत्यां कालानलोपमाम् ४६ तामापतंतीं ज्वलतीमसिहस्तां पदा भुवम् ॥ वेपयंतीं समुद्वीक्ष्य न चचाल पदान्नृपः ४७ प्राग्दिष्टं भृत्यरक्षायां पुरुषेण महात्मना ॥ ददाह कृत्यां तां चक्रं क्रुद्धाहिमिव पावकः ४८

३४ तदाज्ञया पारणां कर्तुं उद्यतः तदैव दुर्वासाः अतिथिः प्राप्तः ३५ तं संपूज्य भोजनाय न्यमंत्रयत् ३६ सः राजनं प्रतिनंद्य. माध्याह्निकं कर्तुं यमुनां गत्वा बृहत् ध्यायन् निममज्ज ३७ पारणां प्रति मुहूर्तार्धावशिष्टायां द्वादश्यां धर्मज्ञः द्विजैःसह चिंतयामास ३८ ब्राह्मणातिक्रमे पराणातिक्रमे च दोषः एवं विचार्य निश्चिनोति ३९ हे विप्राः केवलेनांभसा पारणां करिष्ये अब्भक्षणं अशितं नाशितं चाहुः ४० एवं चिंतयन् अपः प्राश्य द्विजागमनं प्रत्यैक्षत ४१ तदैव दुर्वासाः आगत्य राजचेष्टितं ज्ञात्वा चुक्रोध ४२ त्वं मां आतिथ्येन निमंत्र्य अदत्त्वा भुक्तवान् तस्य फलं दर्शये ४३ ४४ ४५ इत्युक्त्वा जटामुत्पाट्य तया कृत्यां निर्ममे ४६ नृपः तां आपतंतीं वीक्ष्य स्थानात् न चचाल ४७ तदा विष्णुचक्रं कृत्यां दग्ध्वा ऋषिं अन्वधावत् ४८

निष्फलमुद्वीक्ष्य ४९ अनुषक्तंपृष्ठतःसंसक्तम् । मेरोर्गुहांविविक्षुरन्वधावत् ५० ५१ अरणमेषमाणःशरणमिच्छन् अजिततेजसःहरेश्चक्रात् ५२ एतत्सर्वयस्यभ्रूभंगमात्रेणतिरोभविष्यति ।
कदा क्रीडाया अवसानेतदापिकदा द्विपरार्धसंज्ञेकाले ५३ अतोवयंसर्वेयस्यनियममाज्ञांप्रपन्नाःप्राप्ताःसंतोलोकहितंयथाभवत्येवंतन्नियमंमूर्ध्नार्पितंवहाम अत्र तस्तद्भक्तद्रोहिणंत्वांनराक्षितुं
समर्थोहमितिशेषःयत्तदोर्नित्यसंबंधात् ५४ ५५ श्रीरुद्रोपिप्रत्याचष्टे वयमितिचतुर्भिः । भूम्निमहति । महत्त्वमेवाह । यस्मिन्परेपरमेश्वरे अजाब्रह्माणस्तएवजीवास्तेषांकोशाउपाधि
भूताब्रह्मांडविग्रहाईदृशाःदृश्यमानब्रह्मांडप्रमाणाअन्येऽपिभवंतिजायंतेनश्यंतिच । यत्रयेषुब्रह्मांडेषुलोकेशाभिमानिनोवयंभ्रमामः ५६ ननुसर्वज्ञस्यतवभ्रमःकुतस्तत्राहअहमिति ५७
पारदर्शिनःसर्वज्ञाअपियस्यमायांनविद्मः ५८ ५९ ६० हेसत्ताभीप्सित मा मां अव पाहि ६१ अपराधंनिवेदयन्प्रार्थयते अजानतेतिअघंदुःखंअपचितिंमद्भक्तद्रोहेनिष्कृतिम् ( वां )
नपश्यामिइतिचेत्तत्राह यस्यतवनाम्निकीर्तिते नरकस्थोपिमुच्येत तस्यतवाक्रमशक्यमितिभावः ६२

तदभिद्रवदुद्वीक्ष्यस्वप्रयासंचनिष्फलम् ॥ दुर्वासादुद्रुवेभीतोदिक्षुप्राणपरीप्सया ४९ तमन्वधावद्भगवद्रथांगंदावाग्निरुद्धूतशिखोयथाहिम् ॥ तथानुषक्तं
मुनिरीक्षमाणोगुहांविविक्षुःप्रससारमेरोः ५० दिशोनभःक्ष्मांविवरान्समुद्रांल्लोकान्सपालांस्त्रिदिवंगतःसः ॥ यतोयतोधावतितत्रतत्रसुदर्शनंदुष्प्रसहंददर्
श ५१ अलब्धनाथःसयदाकुतश्चित्संत्रस्तचित्तोऽरणमेषमाणः ॥ देवंविरिंच्यंसमगाद्विधातस्त्राह्यात्मयोनेऽजिततेजसोमाम् ५२ ॥ ब्रह्मोवाच ॥
स्थानंमदीयंसहविश्वमेतत्क्रीडावसानेद्विपरार्धसंज्ञे ॥ भ्रूभंगमात्रेणहिसंदिधक्षोःकालात्मनस्तस्यातिरोभविष्यति ५३ अहंभवोदक्षभृगुप्रधानाःप्रजेशभू
तेशसुरेशमुख्याः ॥ सर्वेवयंयन्नियमंप्रपन्नामूर्ध्न्यर्पितंलोकहितंवहामः ५४ ॥ श्रीशुकउवाच ॥ प्रत्याख्यातोविरिंचेनविष्णुचक्रोपतापितः ॥ दुर्वासाः
शरणंयातःशर्वंकैलासवासिनम् ५५ ॥ श्रीशंकरउवाच ॥ वयंनतातप्रभवामभूम्नियस्मिन्परेऽन्येऽप्यजजीवकोशाः ॥ भवंतिकालेनभवंतिहीदृशाःसहस्र
शोयत्रवयंभ्रमामः ५६ अहंसनत्कुमारश्चनारदोभगवानजः ॥ कपिलोऽपांतरतमोदेवलोधर्मआसुरिः ५७ मरीचिप्रमुखाश्चान्येसिद्धेशाःपारदर्शिनः ॥ विदा
मनवयंसर्वेयन्मायांमाययावृताः ५८ तस्यविश्वेश्वरस्येदंशस्त्रंदुर्विषहंहिनः ॥ तमेवशरणंयाहिहरिस्तेशंविधास्यति ५९ ततोनिराशोदुर्वासाःपदंभगवतो
ययौ ॥ वैकुंठाख्यंयदध्यास्तेश्रीनिवासःश्रियासह ६० संदह्यमानोऽजितशस्त्रवह्निनातत्पादमूलेपतितःसवेपथुः ॥ आहाच्युतानंतसदीप्सितप्रभोकृतागसं
माऽवहिविश्वभावन ६१ अजानतातेपरमानुभावंकृतंमयाघंभवतःप्रियाणाम् ॥ विधेहितस्यापचितिंविधातर्मुच्येतयन्नाम्न्युदितेनारकोपि ६२

तदा ऋषिः भीतःसन् प्राणपरीप्सया दिक्षु दुद्रुवे ४९ यतो यतो याति तत्र तत्र चक्रं ददर्श एवं सर्वत्र भ्रमित्वा ब्रह्माणं शरणं जगाम ५० ५१ ५२ तदा नाहं
समर्थ इतिब्रह्मवाक्यं श्रुत्वा शंकरं जगाम ५३ ५४ ५५ तदा शंकरः त्वद्रक्षणे नाहं समर्थः यस्य चक्रं तमेव शरणं याहीत्युवाच ५६ ५७ ५८ ५९ तदा विष्णुं
गत्वा त्राहि इति प्रार्थयामास ६० ६१ ६२

(श्रुतै।जैतेंद्रियैः) ६३ नआशासेनस्पृहयामि ६४ इमंपरंचलोकंहित्वा ६५ ६६ प्रतीतंप्राप्तमपि ६७ ६८ आत्मनस्तवैवअभिचारोहिंसायतोऽभूत् तमेवयातु अशिवमनर्थम् ६९ तपो
विद्यासंपन्नस्यममकथमनर्थः समजनीति मास्मविस्मयंकार्षीरित्याह तपइति ७० ७१ ॥ ॥ इतिश्रीभागवतेमहापुराणेनवमस्कंधेटीकायांअंबरीषचरितेचतुर्थोऽध्यायः ॥ ४ ॥ ॥
पंचमेविष्णुचक्रंतुप्रसाद्यमाणसंकटात् ॥ दुर्वासारक्षितस्तेनयथातत्स्तूयतेऽर्थ्यते ॥ १ ॥ (सउद्यमनमितिविच्छेदः सुलोपःपादपूरणार्थःउद्यमनंधावनादियत्नम्) २ ज्योतिषांनक्षत्राणांपतिःसो
मस्त्वंमात्राणिइंद्रियाणिच त्वच्छक्त्यैवाग्न्यादयःस्वंस्वंकार्यंकुर्वंतीत्यर्थः ३ सहस्रंअरायस्यहेसहस्रार स्वस्तिशरणंभूयाःइडस्पतेपृथ्वीपते ४

॥ श्रीभगवानुवाच ॥ अहंभक्तपराधीनोह्यस्वतंत्रइवद्विज ॥ साधुभिर्ग्रस्तहृदयोभक्तैर्भक्तजनप्रियः ६३ नाहमात्मानमाशासेमद्भक्तैःसाधुभिर्विना ॥
श्रियंचात्यंतिकींब्रह्मन्येषांगतिरहंपरा ६४ येदारागारपुत्राप्तान्प्राणान्वित्तमिमंपरम् ॥ हित्वामांशरणंयाताःकथंतांस्त्यक्तुमुत्सहे ६५ मयिनिर्बद्धहृदयाः
साधवःसमदर्शनाः ॥ वशीकुर्वंतिमांभक्त्यासत्स्त्रियःसत्पतिंयथा ६६ मत्सेवयाप्रतीतंचसालोक्यादिचतुष्टयम् ॥ नेच्छंतिसेवयापूर्णाःकुतोऽन्यत्कालवि
द्रुतम् ६७ साधवोहृदयंमह्यंसाधूनांहृदयंत्वहम् ॥ मदन्यत्तेनजानंतिनाहंतेभ्योमनागपि ६८ उपायंकथयिष्यामितवविप्रशृणुष्वतत् ॥ अयमात्माभिचार
स्तेयतस्तंयातुवैभवान् ॥ साधुषुप्रहितंतेजःप्रहर्तुःकुरुतेऽशिवम् ६९ तपोविद्याचविप्राणांनिःश्रेयसकरेउभे ॥ तेएवदुर्विनीतस्यकल्पेतेकर्तुरन्यथा ७०
ब्रह्मंस्तद्गच्छभद्रंतेनाभागतनयंनृपम् ॥ क्षमापयमहाभागंततःशांतिर्भविष्यति ७१ ॥ ॥ इतिश्रीभागवतेमहापुराणेनवमस्कंधेअंबरीषचरितेचतुर्थोऽ
ध्यायः ४ ॥ ॥ श्रीशुकउवाच ॥ एवंभगवताऽऽदिष्टोदुर्वासाश्चक्रतापितः ॥ अंबरीषमुपावृत्यतत्पादौदुःखितोऽग्रहीत् १ तस्यसोद्यमनंवीक्ष्यपाद
स्पर्शविलज्जितः ॥ अस्तावीत्तद्धरेरस्त्रंकृपयापीडितोभृशम् २ ॥ अंबरीषउवाच ॥ त्वमग्निर्भगवान्सूर्यस्त्वंसोमोज्योतिषांपतिः ॥ त्वमापस्त्वंक्षिति
र्व्योमवायुर्मात्रेंद्रियाणिच ३ सुदर्शननमस्तुभ्यंसहस्राराच्युतप्रिय ॥ सर्वास्त्रघातिन्विप्रायस्वस्तिभूयाइडस्पते ४

विष्णुःउवाच ॥ अहंभक्तपराधीनः ६३ ये दारादीन् हित्वा मां शरणं याताः तान् त्यक्तुं कथं उत्सहे ६४ ६५ ६६ ६७ साधवः मम हृदयं साधूनां अहं हृदयं
मदन्यत्ते न जानंति इत्यादि ६८ हे विप्र ते उपायं कथयामि शृणु ६९ ७० हे ब्रह्मन् राजानं गत्वा क्षमापय ततः ते शांतिर्भविष्यति ७१ ॥ इतिनवमे
चतुर्थः ॥ ४ ॥ ॥ ध ॥ ॥ श्रीशुकउवाच ॥ एवं भगवता आदिष्टःदुर्वासाः चक्रतापितः सन् अंबरीषं एत्य तत्पादौ अग्रहीत् १ तदा पादस्पर्शविलज्जि
तः राजा चक्रं अस्तौत् २ त्वं अग्निः सूर्यः ज्योतिषांपतिरित्यादि ३ ४

ब्राह्मणरक्षणंतवयुक्तमेवेत्याह । त्वंधर्मइति ( ऋतंतुसूनृतावाणी ) नचतवेयमतिस्तुतिरित्याह । पौरुषंपुरुषस्येश्वरस्यपरंतेजःसामर्थ्यत्वं अयंभावः'सऐक्षत'इत्यादिश्रुतिप्रसिद्धंभगवतः शोभनंदर्शनंहिसुदर्शनंततएवसर्वंजातंअतस्त्वमेवसर्वात्मेति ५ हेसुनाभ अद्भुतकर्माणंरं वांकः स्तोतुंसमर्थःअतस्तुभ्यंकेवलंनमोगृणइत्यन्वयः अद्भुतकर्मत्वमेवाह । अखिलानांधर्माणांसेतवे मर्यादारूपाय । अतएवाधर्मशीलानामसुराणांधूमकेतवेदाहकाय । त्रैलोक्यंगोपायतीतितथा । विशुद्धमत्युज्ज्वलंवर्चस्तेजोयस्यतस्मै तदेवप्रपंचयति त्वत्तेजसेतिद्वाभ्याम् । सूर्यादीनां प्रकाशश्च ( त्वत्तेजसाधृतः ) त्वयैवरूप्यतेप्रकाश्यतइतित्वद्रूपं ( सदसत्कार्यकारणात्मकं हेगिरांपते तवमहिमामहात्मनामपिदुरत्ययः ) ७ हेअजित अनंजनेनश्रीहरिणायदाविसृष्टः त्वं तदादैत्यदानवानांबलंप्रविष्टःसन् तेषांबाह्वादीन् वृश्चन् विराजसे । पाठांतरेऽर्जितादैत्यदानवायस्मिन्तद्बलं पूर्वपदेनसंधिरार्षः८ किंच त्वयाभगवन्नियुक्तेनखलानामेवदंडःकार्यः साधवस्तुरक्षणीयाःअतोविप्ररक्षणेनास्माननुगृहाणेत्याह सत्वमिति । हेजगत्त्राण । सएवंभूतःस्त्वंखलानामेवप्रहरणार्थं निरूपितोनियुक्तः । अतोस्मत्कुलस्यदैवहेतवेभाग्यलाभायविप्रस्यमद्रंविधेहि । तदेवनोऽनुग्रहः ९ सर्वसुकृतार्पणेनविप्ररक्षांप्रार्थयते यद्यस्तीतिद्वाभ्यां द्विप्रोदैवंदेवतायस्मिन्तत् १० ११ तस्यैवराज्ञोयाच्ञया ( अशाम्यत् शशाम ) १२ १३ १४ ( कोर्थोदुष्करः कोवाविषयोदुस्त्यजः विप्ररक्षणंकामक्रोधादित्यागश्चसाधुत्वमातएवेत्यर्थः ) १५ १६

त्वंधर्मस्त्वमृतंसत्यंत्वंयज्ञोऽखिलयज्ञभुक् ॥ त्वंलोकपालःसर्वात्मात्वंतेजःपौरुषंपरम् ५ नमःसुनाभाखिलधर्मसेतवेह्यधर्मशीलासुरधूमकेतवे ॥ त्रैलोक्यगोपायविशुद्धवर्चसेमनोजवायाऽद्भुतकर्मणेगृणे ६ त्वत्तेजसाधर्ममयेनसंहृतंतमःप्रकाशश्च धृतोमहात्मनाम् ॥ दुरत्ययस्तेमहिमागिरांपतेत्वद्रूपमेतत्सदसत्परावरम् ७ यदाविसृष्टस्त्वमनंजनेनवैबलंप्रविष्टोऽजितदैत्यदानवम् ॥ बाहूदरोर्वंघ्रिशिरोधराणिवृश्चन्नजस्रंप्रधनेविराजसे ८ सत्वंजगत्त्राणखलप्रहाणये निरूपितःसर्वसहोगदाभृता ॥ विप्रस्यचास्मत्कुलदैवहेतवेविधेहिभद्रंतदनुग्रहोहिनः ९ यद्यस्तिदत्तमिष्टंवास्वधर्मोवास्वनुष्ठितः ॥ कुलंनोविप्रदैवंचेद्द्विजोभवतुविज्वरः १० यदिनोभगवान्प्रीतएकःसर्वगुणाश्रयः ॥ सर्वभूतात्मभावेनद्विजोभवतुविज्वरः ११ ॥ श्रीशुकउवाच ॥ इतिसंस्तुवतोराज्ञोविष्णुचक्रंसुदर्शनम् ॥ अशाम्यत्सर्वतोविप्रंप्रदहत्राजयाच्ञया १२ समुक्तोऽस्त्राग्नितापेनदुर्वासाःस्वस्तिमांस्ततः ॥ प्रशशंसतमुर्वीशंयुंजानःपरमाशिषः १३ ॥ दुर्वासाउवाच ॥ अहोअनंतदासानांमहत्त्वंदृष्टमद्यमे ॥ कृतागसोपियद्राजन्मंगलानिसमीहसे १४ दुष्करःकोनुसाधूनांदुस्त्यजोवामहात्मनाम् ॥ यैःसंगृहीतोभगवान्सात्वतामृषभोहरिः १५ यन्नामश्रुतिमात्रेणपुमान्भवतिनिर्मलः ॥ तस्यतीर्थपदः किंवादासानामवशिष्यते १६

५ त्वांस्तोतुं कः समर्थः अतः तुभ्यं केवलं नमःउच्चारितवान् अस्मि । इत्यादि स्तुत्वा प्रार्थयामास ६ ७ ८ ९ यद्यस्ति दत्तमिष्टं वा स्वधर्मो वा स्वनुष्ठितः कुलं नो विप्रदैवंचेद्द्विजो भवतु विज्वरः १० यदि नः सर्वभूतात्मभावेन भगवान्प्रीतश्चेत् तर्हि अयं द्विजः विज्वरोभवतु ११ एवं स्तुवतः राज्ञःचक्रं अशाम्यत् १२ अस्त्राग्नितापेन मुक्तः दुर्वासाः स्वस्तिमान् सन् राजानं प्रशशंस १३ अहो अनंतदासानां महत्वं अद्यमया दृष्टं कृतागसोपि मम मंगलानि ईहसे इत्यादि १४ १५ १६

१७ राजेत्यादिश्लोकद्वयंशुकोक्तिः १८ ( आतिथ्यंअतिथयेहितंअन्नादिकंमिष्टमशित्व ।भुक्त्वा ) १९ प्रीतोस्मीतिश्लोकद्वयंपुनश्चविमोक्तिः । आत्मनिविषयेमेधावेन ( भवति ) तेना तिथ्येन २० ( स्वःस्त्रियोदेवांगनाःगायंतिगास्यंति । ) भूरियंतत्रास्थितोजनःकीर्तयिष्यति २१ ( अहेतुकंयथास्यात्तथाययौयदृच्छयेत्यर्थः ) २२ तस्यधैर्यातिशयमाह । भतोमुनिर्या वतानागतस्तावत्संवत्सरोऽतिक्रांतइति ( अब्भक्षोजलमात्राशनः ) २३ द्विजस्योपयोगेनभोजनेनअतिपवित्रमाहरत्बुभुजे । स्ववीर्यंचधैर्यादिलक्षणं ( ऋषेर्व्यसनंसंकटंततोविमोक्षंचसर्वं ) परानुभावंभगवतःप्रभावंमेने २४ एवंविधाअनेकेगुणायस्यसः आविरिंच्यान् विरिंचपदसहितान्भोगान्निरयप्रायानपश्यदित्यर्थः २५ २६ २७ ॥ ॥ इतिश्री भागवतेमहापुराणेनवमस्कंधेटीकायां पंचमोऽध्यायः ॥ ५ ॥ ॥ छ ॥ ॥

राजन्ननुगृहीतोहंत्वयातिकरुणात्मना ॥ मदघंपृष्ठतःकृत्वाप्राणायन्मेभिरक्षिताः १७ राजातमकृताहारःप्रत्यागमनकांक्षया ॥ चरणावुपसंगृह्यप्रसाद्य समभोजयत् १८ सोशित्वाहृतमानीतमातिथ्यंसार्वकामिकम् ॥ तृप्तात्मानृपतिंप्राहभुज्यतामितिसादरम् १९ प्रीतोस्म्यनुगृहीतोस्मितवभागवतस्य वै ॥ दर्शनस्पर्शनालापैरातिथ्येनात्ममेधसा २० कर्मावदातमेतत्तेगायंतिस्वःस्त्रियोमुहुः ॥ कीर्तिंपरमपुण्यांचकीर्तयिष्यतिभूरियम् २१ ॥ श्रीशुक उवाच ॥ ॥ एवंसंकीर्त्यराजानंदुर्वासाःपरितोषितः ॥ ययौविहायसाऽऽमंत्र्यब्रह्मलोकमहैतुकम् २२ संवत्सरोऽत्यगात्तावद्यावतानागतोगतः ॥ मुनिस्त द्दर्शनाकांक्षोराजाऽब्भक्षोबभूवह २३ गतेचदुर्वाससिसोंबरीषोद्विजोपयोगातिपवित्रमाहरत् ॥ ऋषेर्विमोक्षंव्यसनंचबुद्ध्वामेनेस्ववीर्यंचपरानुभावम् २४ एवंविधानेकगुणःसराजापरात्मनिब्रह्मणिवासुदेवे ॥ क्रियाकलापैःसमुवाहभक्तिंययाविरिंच्यान्निरयांश्चकार २५ अथांबरीषस्तनयेषुराज्यंसमानशीलेषुविसृज्यधीरः ॥ वनंविवेशात्मनिवासुदेवेमनोदधद्ध्वस्तगुणप्रवाहः २६ इत्येतत्पुण्यमाख्यानमंबरीषस्यभूपतेः ॥ संकीर्तयन्ननुध्यायन्भक्तोभगवतोभ वेत् २७ ॥ ॥ इतिश्रीभागवतेमहापुराणेनवमस्कंधेअंबरीषचरितेपंचमोऽध्यायः ५ ॥

हे राजन् अहं त्वयानुगृहीतः मदघं पृष्ठतःकृत्वा मे प्राणाः रक्षिताः १७ ततः अकृताहारः राजा ऋषेः चरणौसंप्रगृह्य प्रसाद्य समभोजयत् १८ सःआशिषः दत्वा नृपतिं भुज्यतामित्याह १९ तव दर्शनादिभिः प्रीतोस्मि २० हे राजन् एतत् तव कर्म स्वस्त्रियः गायंति ते पुण्यां कीर्तिं इयं भूः कीर्तयिष्यति २१ ॥ श्रीशुक उवाच ॥ एवंउक्त्वा ऋषिः ब्रह्मलोकं ययौ २२ संवत्सरोत्यगात्तावत् यावतानागतोगतः मुनिस्तद्दर्शनाकांक्षोराजाब्भक्षोवभूवह २३ एवं दुर्वाससिगतेसाति स्वयं बुभुजे एतत्भगवदनुभावं मेने २४ एवंविधो राजा वासुदेवे क्रियाकलापैः भक्तिंकुर्वन् आविरिंच्यान् भोगान् निरयवत् मत्वा २५ कालेन तनयेषु राज्यं विसृज्य वासुदेवे मनोनिवेश्य वनं विवेश २६ एतत् पुण्यं आख्यानं यः कीर्तयेत् ध्यायेत् सः भगवतः भक्तो भवेत् २७ ॥ ॥ इति नवमे पंचमः ॥ ५ ॥ छ ॥

षष्ठेऽम्बरीषस्यवंशमुक्त्वाततःपरम् । षष्ठाद्यष्टभिरध्यायैरिक्ष्वाकोर्वंश उच्यते ॥ १ ॥ तत्रषष्ठेशशादादिर्मांधात्रंतोनिरूप्यते । प्रसंगात्सौभरेराख्यामांधातृतनयारतेः ॥ २ ॥ १ तंतवे संतानार्थम् २ येअंगिरसाजनिताएतेरथीतरस्यक्षेत्रेप्रसूतत्वेनरथीतरगोत्राःसंतः अंगिरसोवीर्येणप्रसूतत्वादांगिरसाश्च । पुनरपिरथीतराणामन्येषांजातानांप्रवरामुख्याः स्मृताः यतः क्षत्रोपेताब्राह्मणाइत्यर्थः ३ तदेवं मनोर्दशसु पुत्रेषु पृषध्रश्च कविश्च विरक्तत्वान्नवंशप्रवर्तकौ । करूषादीनां सप्तानां च वंशास्तारतम्यक्रमेणोक्ताः इदानीमतिविततमिक्ष्वाकोर्वंशमाह । क्षुवतइत्यादिनायावत्सोमवंशप्रस्तावः । क्षुतंकुर्वतोमनोर्घ्राणतोजज्ञे । 'श्रद्धायांजनयामासदशपुत्रान्' इतिपूर्वोक्तंबाहुल्याभिप्रायेणेतिद्रष्टव्यम् । पुत्राणांशतेज्येष्ठाः ४ 'आर्यावर्तःपुण्यभूमिर्मध्यंविंध्यहिमालयोः' तस्मिन्पुरस्तात्समुद्रपर्यंतंमंडलविभागेनपंचविंशतिर्नृपाअभवन् हेनृपतथैवपश्चाच्चपंचविंशतिः । मध्येतुज्येष्ठास्त्रयः । अपरेतुअन्यत्रदक्षिणोत्तरादिषु ५ विकुक्षिरेवशशादइति विश्रुतइतिवक्ष्यति तत्रहेतुमाह सएकदेतिचतुर्भिः ६ क्रियार्हणान् श्राद्धार्हान् आदत्त अभक्षयत् ७ तद्गुरुर्वसिष्ठः प्रोक्षणायश्राद्धोचितसंस्कारायच ८ त्यक्तोविधिः सदाचारोयेनतम् ९ सतुइक्ष्वाकुः जापकेनवसिष्ठेन । राज्यभोगेनविरक्तोयोगीसन् तेनयोगेनकलेवरंत्यक्त्वासयत्परंतत्त्वंतदवाप १० शासत्पालयन् हरिमीजे ११

॥ श्रीशुकउवाच ॥ विरूपःकेतुमान्शंभुरंबरीषसुतास्त्रयः ॥ विरूपात्पृषदश्वोभूत्तत्पुत्रस्तुरथीतरः १ रथीतरस्याप्रजस्यभार्यायांतंतवेऽर्थितः ॥ अंगिराजनयामासब्रह्मवर्चस्विनःसुतान् २ एतेक्षेत्रप्रसूतावैपुनस्त्वांगिरसाःस्मृताः ॥ रथीतराणांप्रवराःक्षत्रोपेताद्विजातयः ३ क्षुवतस्तुमनोर्जज्ञेइक्ष्वाकुर्घ्राणतःसुतः ॥ तस्यपुत्रशतज्येष्ठाविकुक्षिनिमिदंडकाः ४ तेषांपुरस्तादभवन्नार्यावर्तेनृपानृप ॥ पंचविंशतिःपश्चाच्चत्रयोमध्येऽपरेन्यतः ५ सएकदाऽष्टकाश्राद्धइक्ष्वाकुःसुतमादिशत् ॥ मांसमानीयतांमेध्यंविकुक्षेगच्छमाचिरम् ६ तथेतिसवनंगत्वामृगान्हत्वाक्रियार्हणान् ॥ श्रांतोबुभुक्षितोवीरःशशंचाददपस्मृतिः ७ शेषंनिवेदयामासपित्रेतेनचतद्गुरुः ॥ चोदितःप्रोक्षणायाहदुष्टमेतदकर्मकम् ८ ज्ञात्वापुत्रस्यतत्कर्मगुरुणाभिहितंनृपः ॥ देशान्निःसारयामाससुतंत्यक्तविधिंरुषा ९ सतुविप्रेणसंवादंजापकेनसमाचरन् ॥ त्यक्त्वाकलेवरंयोगीसतेनावापयत्परम् १० पितर्युपरतेभ्येत्यविकुक्षिःपृथिवीमिमाम् ॥ शासदीजेहरिंयज्ञैःशशादइतिविश्रुतः ११

॥ श्रीशुक उवाच ॥ अंबरीषस्य पुत्राः त्रयः विरूपः केतुमान् शंभुः विरूपात् पृषदश्वः तस्य रथीतरः १ सः अनपत्यः तस्य भार्यया अंगिराः अपत्यार्थं प्रार्थितः सन् तस्यां पुत्रान् जनयामास ते ब्रह्मवर्चस्विनः बभूवुः २ एतेरथीतरक्षेत्रे अंगिरसः वीर्येण जाताः अतो आंगिरसा रथीतराश्च अभवन् ३ ततः वैवस्वतमनोः क्षुवतः नासिकातः इक्ष्वाकुः जज्ञे तस्य विकुक्षिः निमिः दंडकाद्याः शतपुत्राः बभूवुः ४ ५ एकदा इक्ष्वाकुः अष्टकाश्राद्धे मांसानयनार्थं विकुक्षिं आदिशत् ६ सः वनं गत्वा मृगान् हत्वा बुभुक्षितः सन् शशं भक्षयित्वा ७ शेषंमांसं पित्रे निवेदयामास तदा इक्ष्वाकुणा नोदितः वसिष्ठः प्रोक्षणकाले तत्कर्म ज्ञात्वा राज्ञे निवेदयामास ८ तदा इक्ष्वाकुः पुत्रं देशान्निःसारयामास ९ इक्ष्वाकुः योगेन देहं हित्वा तत्त्वं अवाप १० अथ विकुक्षिः पितर्युपरते सति इमां पृथ्वीं पालयामास स एवशशाद इति विश्रुतः अभूत् ११

वैकुक्षस्यसुतः पुरंजयः इंद्रोवाहोयस्येतींद्रवाहःककुदिस्थितत्वात्ककुत्स्थः इतिशब्दादुतस्यत्रीणिनामानितत्कर्मनिमित्तानि १२ तान्येवंव्याचक्षाणआह कृतांतइतिसप्तभिः कृतं स्विकंयस्मतीतितथा । पार्ष्णिग्राहःसहायः १३ इंद्रोयदिममवाहनंस्यात् तर्हिदैत्यान् हनिष्यामीतितेनवाहनत्वेवृतःसन्निंद्रोलज्जयातदनंगीकुर्वन् विष्णोर्वचनात्तस्यवाहनत्वायमहान्वृषोबभूवेत्यर्थः १४ १५ १६ येभिमुखंययुःतान् यमंदर्शयित्वासदेहानेवमल्लैरनयदित्यर्थः १७ तद्वदग्धाऽन्येदुद्रुवुः स्वमालयंपातालम् १८ इतिएतैः कर्मभिः पुरंजयादिनामभिराहूतः पाठांतरेआहूतइत्यर्थः १९ २० शावस्तिः शावस्तस्यपुत्रः २१ कुवलयाश्वकएवधुंधुमारइतिख्यातस्तत्र कारणमाह यइति । सुतानामेकविंशत्यासहस्रैर्वृतः सन् हतवान् २२ धुंधुमार इतिचेतिचकारस्यान्वयः ( मुख्याग्निनामुखोद्भवेनवह्निना ) २३ २४

पुरंजयस्तस्यसुतइंद्रवाहइतीरितः ॥ ककुत्स्थइतिचाप्युक्तःशृणुनामानिकर्मभिः १२ कृतांतआसीत्समरोदेवानांसहदानवैः ॥ पार्ष्णिग्राहोवृतोवीरोदेवैर्दैत्यपराजितैः १३ वचनाद्देवदेवस्यविष्णोर्विश्वात्मनःप्रभोः ॥ वाहनत्वेवृतस्तस्यबभूवेंद्रोमहावृषः १४ ससन्नद्धोधनुर्दिव्यमादायविशिखाञ्शितान् ॥ स्तूयमानःसमारुह्ययुयुत्सुःककुदिस्थितः १५ तेजसाप्यायितोविष्णोःपुरुषस्यपरात्मनः ॥ प्रतीच्यांदिशिदैत्यानांन्यरुणत्त्रिदशैःपुरम् १६ तैस्तस्य चाभूत्प्रधनंतुमुलंरोमहर्षणम् ॥ यमायभल्लैरनयद्दैत्यान्येऽभिययुर्मृधे १७ तस्येषुपाताभिमुखंयुगांताग्निमिवोल्बणम् ॥ विसृज्यदुद्रुवुर्दैत्याहन्यमानाःस्वमालयम् १८ जित्वापुरंधनंसर्वंसश्रीकंवज्रपाणये ॥ प्रत्ययच्छत्सराजर्षिरितिनामभिराहृतः १९ पुरंजयस्यपुत्रोभूदनेनास्तत्सुतःपृथुः ॥ विश्वरंधिस्ततश्चंद्रोयुवनाश्वश्चतत्सुतः २० शावस्तस्तत्सुतोयेनशावस्तीनिर्ममेपुरी ॥ बृहदश्वस्तुशावस्तिस्ततःकुवलयाश्वकः २१ यःप्रियार्थमुतंकस्यधुंधुनामासुरंबली ॥ सुतानामेकविंशत्यासहस्रैरहनद्वृतः २२ धुंधुमारइतिख्यातस्तत्सुतास्तेचजज्वलुः ॥ धुंधोर्मुखाग्निनासर्वेत्रयएवावशेषिताः २३ दृढाश्वःकपिलाश्वश्चभद्राश्वइतिभारत ॥ दृढाश्वपुत्रोहर्यश्वोनिकुंभस्तत्सुतःस्मृतः २४

तस्य पुत्रःपुरंजयः इंद्रवाहः ककुत्स्थः इति नामत्रयेण अभूत् तस्य कर्मभिर्नामानि शृणु १२ पुरा देवदैत्यसमरे देवैर्वृतः सः उवाच इंद्रो यदि मम वाहनं स्यात् तर्हि दैत्यान्हनिष्यामि १३ एवं वाहनत्वेन वृतः इंद्रः लज्जया तदनंगीकुर्वन् विष्णोर्वचनात् वृषभो बभूव १४ तदा वृषरूपेंद्रस्य ककुदि स्थित्वा १५ सःदैत्यान्हत्वा तेषां सर्वं धनं इंद्राय प्रायच्छदिति १६ १७ १८ १९ पुरंजयात् अनेनाः तस्य पृथुः तस्य विश्वरंधिः तस्य चंद्रः तस्य युवनाश्वः २० तस्य शावस्तः येन शावस्ती पुरी निर्मिता तस्यबृहदश्वः तस्य कुवलयाश्वः २१ सः एकविंशतिसहस्रपुत्रैः सह वृतः धुंधुनामासुरं अहनत् २२ तेन धुंधुमार इति विख्यातः धुंधोर्मुखाग्निना तत्सुताः सर्वे दग्धाः २३ दृढाश्वः कपिलाश्वः भद्राश्व इति त्रयः अवशिष्टाः दृढाश्वात् हर्यश्वः तस्य निकुंभः २४

भा०न० ( अथ ) तस्मात् निकुंभात् कृशाश्वः २५ भार्याणांशतेनसह अस्यपुत्रार्थमैंद्रदैवत्यामिष्टिंवर्तयामासुःस्मेत्याश्चर्ये २६ तदेवाह राजेतिषड्भिः । तर्षितःतृषितःसन्जलार्थंप्रविष्टः मं त्राभिमंत्रितंजलंपत्न्यैदेयंस्वयंपपौ २७ व्युदकंनिरुदकंपुंसवनंपुत्रोत्पादिकारणम् २८ अहो दैवबलमेवमुख्यंबलं पुरुषबलंतुनकिंचिदितिवदंतःईश्वरायनमस्कारंचक्रुः २९ ३० अयंकंधा स्यतीतिद्विजैःस्तितैर्विप्रैरुक्तेसति तस्यामिष्ट्यामाराधितइंद्रोमांधातापास्यति हेवत्स मारोदीरितिब्रुवन्प्रदेशिनींतर्जनीमदात् (तन्मुखेनिक्षिप्तवानित्यर्थः) ३१ तस्यपितायुवनाश्वोभिन्नकुक्षि अ०

॥१०॥ रपिनममार । किंतुकालांतरेतपसासिद्धिमन्वगात् ३२मांधातुर्महिमानमाह त्रसदस्युरितिषड्भिः अंगहेराजन् यस्मात्मांधातुर्दस्यवउद्विग्नाः कंपिताः संतस्त्रसंति अतइंद्रोयस्यत्रसदस्युरि ॥ ६ ॥

तिनामविदधेसमांधाता।अवनिमेकःशशासेत्युत्तरेणान्वयः ३३ अच्युत स्यतेजसाअप्रच्युतस्यतेजसेतिवा ३४ आत्मविदापिसःयज्ञंविष्णुमीजे तमेवविशिनष्टि सर्वदेवमयमितिसार्धेन३५ ३६

बर्हणाश्वोनिकुंभस्यकृशाश्वोथास्यसेनजित् ॥ युवनाश्वोभवत्तस्यसोनपत्योवनंगतः २५ भार्याशतेननिर्विण्णऋषयोस्यकृपालवः ॥ इष्टिंस्मवर्तयांचक्रुरैंद्रींतेसुसमाहिताः २६ राजातद्यज्ञसदनंप्रविष्टोनिशितर्षितः ॥ दृष्ट्वाशयानान्विप्रांस्तान्पपौमंत्रजलंस्वयम् २७ उत्थितास्तेनिशम्याथव्युदकंकलशंप्रभो ॥ पप्रच्छुःकस्यकर्मेदंपीतंपुंसवनंजलम् २८राज्ञापीतंविदित्वाथईश्वरप्रहितेनते ॥ ईश्वरायनमश्चक्रुरहोदैवबलंबलम् २९ततःकालउपावृत्तेकुक्षिंनिर्भिद्यदक्षिणम् ॥ युवनाश्वस्यतनयश्चक्रवर्तीजजानह ३० कंधास्यतिकुमारोयंस्तन्येरोरूयतेभृशम् ॥ मांधातावत्समारोदीरितींद्रोदेशिनीमदात् ३१ नममारपितातस्यविप्रदेवप्रसादतः ॥ युवनाश्वोथतत्रैवतपसासिद्धिमन्वगात् ३२ त्रसदस्युरितींद्रोंगविदधेनामतस्यवै ॥ यस्मात्त्रसंतिह्युद्विग्नादस्यवोरावणादयः ३३ यौवनाश्वोथमांधाताचक्रवर्त्यवनींप्रभुः ॥ सप्तद्वीपवतीमेकःशशासाच्युततेजसा ३४ ईजेचयज्ञंक्रतुभिरात्मविद्भूरिदक्षिणैः ॥ सर्वदेवमयंदेवंसर्वात्मकमतींद्रियम् ३५ द्रव्यंमंत्रोविधिर्यज्ञोयजमानस्तथर्त्विजः ॥ धर्मोदेशश्चकालश्चसर्वमेतद्यदात्मकम् ३६

तस्य पुत्रौ द्वौ बर्हणाश्वकृशाश्वौ कृशाश्वात् सेनजित् तस्य युवनाश्वःसः अनपत्यः भार्याशतेन सह वनंगतः तस्य पुत्रार्थं ऋषयः ऐंद्रीं इष्टिं चक्रुः २५ २६ निशि तृषितो राजा शयानान् विप्रान् दृष्ट्वा अभिमंत्रितं जलं पत्न्यै देयंस्वयं पपौ २७ प्रातः ते मुनयः व्युदकं कलशं दृष्ट्वा राज्ञा पीतं विदित्वा अहो दैवबलं बलं इत्यु क्त्वा ईश्वराय नमश्चक्रुः २८ २९ ततः काले प्राप्ते सति युवनाश्वस्य दक्षिणं कुक्षिं भित्वा निर्गतः अयं कुमारः कं पास्यति ३० इति विप्रैः उक्ते सति तस्यां इष्ट्यां आराधितः इंद्रः मां धाता इति ब्रुवन् तन्मुखे तर्जनीमदात् ३१ तस्य पिता भिन्नकुक्षिरपि विप्रदेवप्रसादतः नममार कालांतरेण तत्रैव सः सिद्धिं अन्वगात् ३२ इंद्रः पुत्रस्य नाम त्रसदस्युरिति विदधे यस्मात् रावणादयः त्रसंति ३३ असौ मांधाता अवनिं शशास ३४ सः शशबिंदोः कन्यायां बिंदुमत्यां पुरुकुत्सं अंब रीषं मुचुकुंदं पंचाशत्कन्याश्च उत्पादयामास ३५ ३६ ॥१०॥

प्रतितिष्ठतिअस्तंगच्छति ३७ प्रसंगात्सौभरेश्चरितमाह तेषामितियावत्समाप्ति ( नृपोमांधाता ) तेषांस्वसारोमांधातुः कन्याः ३८ ननु महातापसस्यकुतोविवाहप्रसंगः कथंवाजराज कन्याभिर्वव्रिरे तदाह यमुनेतिषड्भिः ( निर्वृतिंसुखम्) ३९ नृपंमांधातारम् सोपिमांधातास्वयंवरे कामंगृह्यतामित्याह । सइति ४० सविप्रःस्त्रीणांअप्रियमाविचिंत्यानेननृपेणाहंव चामत्युक्तः अतआत्मानंतथासाधयिष्यइतिव्यवसितोनिश्चितवान् इतिद्वयोरन्वयः । अप्रियत्वेहेतुःजरठोवृद्धः । वलीभिर्युक्तः पलितश्च । एजत्कः कंपमानशिराः । तापसत्वादिना वाअसंमतोहमितिकृत्वा ४१ तथेत्यस्यप्रपंचःसुरस्त्रीणामपीप्सितम् । किंपुनर्मनुजेंद्राणांयाःस्त्रियः तासामिति ४२ ततःकिंवृत्तंतदाह मुनिरितिद्वाभ्याम् । क्षत्राप्रतिहारेण पंचाशता पिराजकन्याभिः सएकएववरोवृतः ४३(अयंवरोममैवानुरूपःनतुयुष्माकमितितासांकलहोभूत्) ४४ तस्यगार्हस्थ्यंवर्णयति सइतिचतुर्भिः बह्वृचइतिमंत्रसामर्थ्ययुक्तं ताभिः सह रेमेइत्यु त्तरेणान्वयः । करेमे । अपारणीयंदुरंतंयत्तपः तस्यश्रियासमृद्धयाअनर्घ्याःपरिच्छदायेषुतेषु गृहेषु तथानानाविधेषूपवनेषुचअमलान्यंभांसियेषांतेषुसरस्सुच । कथंभूतेषुसौगंधिकानांक ह्लाराणांकाननानिस्तोमायेषु ४५ कथंभूतेषुगृहादिषुस्वलंकृताः स्त्रियः पुरुषाश्चयेषुअनुगायंतोद्विजाश्चपक्षिणोभृंगाश्चवंदिनश्चयेषु कथंभूतः महार्हशय्यादिभिरुपलालितः सन् ( अभ्यवहारोभोजनं ) ४६ स्तंभंगर्वं ४७

यावत्सूर्यउदेतिस्मयावच्चप्रतितिष्ठति ॥ सर्वंतद्यौवनाश्वस्यमांधातुःक्षेत्रमुच्यते ३७ शशबिंदोर्दुहितरिबिंदुमत्यामधान्नृपः ॥ पुरुकुत्समंबरीषंमुचुकुंदंच योगिनम् ॥ तेषांस्वसारःपंचाशत्सौभरिंवव्रिरेपतिम् ३८ यमुनांतर्जलेमग्नस्तप्यमानःपरंतपः ॥ निर्वृतिंमीनराजस्यवीक्ष्यमैथुनधर्मिणः ३९ जात स्पृहोनृपंविप्रःकन्यामेकामयाचत ॥ सोप्याहगृह्यतांब्रह्मन्कामंकन्यास्वयंवरे ४० सविचिंत्याप्रियंस्त्रीणांजरठोयमसंमतः ॥ वलीपलितएजत्कइत्यहंप्र त्युदाहृतः ४१ साधयिष्येतथात्मानंसुरस्त्रीणामपीप्सितम् ॥ किंपुनर्मनुजेंद्राणामितिव्यवसितःप्रभुः ४२ मुनिःप्रवेशितःक्षत्रान्कन्यांतःपुरमृद्धिमत् ॥ वृतश्चराजकन्याभिरेकःपंचाशतावरः ४३ तासांकलिरभूद्भूयांस्तदर्थेपोह्यसौहृदम् ॥ ममानुरूपोनायंवइतितद्गतचेतसाम् ४४ सबह्वृचस्ताभिरपारणीय तपःश्रियाऽनर्घ्यपरिच्छदेषु ॥ गृहेषुनानोपवनामलांभःसरस्सुसौगंधिककाननेषु ४५ महार्हशय्यासनवस्त्रभूषणस्नानानुलेपाभ्यवहारमाल्यकैः ॥ स्वलं कृतस्त्रीपुरुषेषुनित्यदारेमेऽनुगायद्द्विजभृंगवंदिषु ४६ यद्गार्हस्थ्यंतुसंवीक्ष्यसप्तद्वीपवतीपतिः ॥ विस्मितःस्तंभमजहात्सार्वभौमश्रियान्वितम् ४७

३७ ३८ ३९ ताः सौभरिं पतिं वव्रिरे एकदा सौभरिः ऋषिः यमुनांतर्जले मैथुनधर्मिणः मीनराजस्य निर्वृतिं वीक्ष्य जातस्पृहः सन् मांधातारं गत्वा एकां कन्यां अयाचत ४० तदा राजासौभरिं वृद्धं दृष्ट्वा स्वयंवरे कन्या कामं गृह्यतामित्युवाच ४१ तत् श्रुत्वा ऋषिः अहं जरठः अतः राज्ञा एवं उक्तं तस्मात् सुरस्त्रीणामपि
१३८ ईप्सितं रूपं साधयिष्यामि ४२ इति निश्चित्य तथा रूपं धृतवान् ततो राज्ञा कन्यांतःपुरे निवेशितः सन् सर्वाभिः एक एव वृतः ४३ तद्गतचेतसां तासां ममायं अनुरूपः नायं वः इति कलहः अभूत् ४४ ततः सौभरिः ताभिः सह अनेककालं गृहकाननादिषु रेमे ४५ ४६ ४७

१३ राजन्हेवरुण राजन्यः पशुः यदासान्नाहिकः कवचबंधार्हः संग्रामसमर्थः अथतदाशुचिः १४ इत्येवंततंकालंवंचयताराज्ञाउक्तःप्रार्थितोदेवोवरुणः ततंकालंप्रत्यैक्षतेत्यर्थः १५
चिकीर्षितंआत्मनापशुनावरुणयजनं १६ ततश्चकुपितेनवरुणेनग्रस्तंअतएवजातंमहदुदरंयस्यतंपितरंश्रुत्वा १७ ( तीर्थक्षेत्रनिषेवणैः पुण्यरूपं भूमेः पर्यटनं ) सर्वावर्षं । १८ द्वितीये
चवर्षेंद्रेंद्रहाभ्येत्याभेत्यतथैवतंप्रतिषेधन्किंचित्किंचिदाह १९ ( पुत्रत्रयमध्यमं ) २० २१ वरुणेनमुक्तमुदरंयस्यसः महत्सुकथायस्यसः आत्मवान् २२ जमदग्निरध्वर्युरभूत् अयास्योमु
निःसामगउद्गाताऽभूदित्यर्थः २३ उपरिष्टाद्विश्वामित्रसुताख्यानप्रसंगे २४ अविहतांगतिंज्ञानम् तामेवगतिमाह सार्धाभ्यां मनः पृथिव्यांधारयन् ज्ञानकलांध्यात्वातयाऽज्ञानंविनिर्दह
न् तांचहित्वामुक्त्वामुक्तबंधनस्तस्थावित्यन्वयः मनोमूलोहिसंसारः मनश्चान्नमयम् । 'अन्नमयंहिसोम्यमनः' इतिश्रुतेःअतोऽन्नशब्दवाच्यायांपृथिव्यांमनोधारयन् एकीकुर्वन् तांपृ
थिवीमद्भिरेकीकुर्वन् अपस्तेजसातत्तेजोऽनिलेन २५

पशोर्निपतितादंतायजस्वेत्याहसोब्रवीत् ॥ यदापशोःपुनर्दंताजायंतेथपुनःशुचिः १३ पुनर्जातायजस्वेतिसप्रत्याहाथसोऽब्रवीत् ॥ सान्नाहिकोयदारा
जन्राजन्योथपशुःशुचिः १४ इतिपुत्रानुरागेणस्नेहयंत्रितचेतसा ॥ कालंवंचयतातंतमुक्तोदेवस्तमैक्षत १५ रोहितस्तदभिज्ञायपितुःकर्मचिकीर्षित
म् ॥ प्राणप्रेप्सुर्धनुष्पाणिररण्यंप्रत्यपद्यत १६ पितरंवरुणग्रस्तंश्रुत्वाजातमहोदरम् ॥ रोहितोग्राममेयायतमिंद्रःप्रत्यषेधत १७ भूमेःपर्यटनंपुण्यंती
र्थक्षेत्रनिषेवणैः ॥ रोहितायादिशच्छक्रःसोप्यरण्येऽवसत्समाम् १८ एवंद्वितीयेतृतीयेचतुर्थेपंचमेतथा ॥ अभ्येत्याभ्येत्यस्थविरोविप्रोभूत्वाहवृत्रहा १९
षष्ठंसंवत्सरंतत्रचरित्वारोहितःपुरीम् ॥ उपव्रजन्नजीगर्तादक्रीणान्मध्यमंसुतम् २० शुनःशेपंपशुंपित्रेप्रदायसमवंदत ॥ ततःपुरुषमेधेनहरिश्चंद्रोमहाय
शाः २१ मुक्तोदरोऽयजद्देवान्वरुणादीन्महत्कथः ॥ विश्वामित्रोऽभवत्तस्मिन्होताचाध्वर्युरात्मवान् २२ जमदग्निरभूद्ब्रह्मावसिष्ठोऽयास्यसामगः ॥ त
स्मैतुष्टोददाविंद्रःशातकौंभमयंरथम् २३ शुनःशेपस्यमाहात्म्यमुपरिष्टात्प्रचक्ष्यते ॥ सत्यसारांधृतिंदृष्ट्वासभार्यस्यचभूपतेः २४ विश्वामित्रोभृशंप्रीतो
ददावविहतांगतिम् ॥ मनःपृथिव्यांतामद्भिस्तेजसाऽपोऽनिलेनतत् २५

पुनर्दंता जाता यजस्वेत्याहसोब्रवीत् यदा युद्धयोग्यः स्यात् १३ १४ एवं पुनः पुनः वरुणः आगत्य यजस्वेत्युक्तवान् तदा राजा पुत्रानुरागेण कालं वंचयन् इत्यु
वाच १५ ततः रोहितःपितुः चिकीर्षितं ज्ञात्वा धनुष्पाणिः वनं अगात् तत् ज्ञात्वा वरुणः राज्ञे महोदरं विदधे १६ तदा रोहितः पितरं वरुणग्रस्तं श्रुत्वा ग्रामं
इयाय तदा इंद्र० मार्गे तं भूमेः पर्यटनं पुण्यं तीर्थक्षेत्रनिषेवणैरित्युक्त्वा प्रत्यषेधत १७ एवं पंचवर्षपर्यंतं इंद्रः वृद्धो भूत्वा तं न्यवर्तयत् १८ १९ एवंषट् संवत्सराणि
तत्र चरित्वा पुरीं उपव्रजन् अजीगर्तात् शुनःशेपं मध्यमं पुत्रं क्रीत्वा २० पित्रे दत्वा ववंदे ततो हरिश्चंद्रः मुक्तोदरः सन् पुरुषमेधेन २१ वरुणादीन् अयजत् यत्र यज्ञे
विश्वामित्रो होता २२ जमदग्निरध्वर्युः वसिष्ठो ब्रह्मा अयास्यऋषिः उद्गाता अभूत् तत्र यज्ञे तुष्टः शक्रः तस्मै सौवर्णं रथं ददौ २३ शुनःशेपस्य महात्म्यं उपरिष्टात्
प्रचक्षते २४ सभार्यस्य भूपतेः प्रीतः विश्वामित्रः ज्ञानं ददौ अनुहरिश्चंद्रः मनः भूमौ धारयन् तां अद्भिरेकीकुर्वन् ताआपः तेजसा तत् वायुना तमाकाशे तत् अहंकारे तं
महत्तत्वे तस्मिन् ज्ञानांशं ध्यात्वा तेन अज्ञानं दहन् २५

तेषुलीनआकाशेतच्चभूतादावहंकारंतंचभूतादिंअहंकारं महात्मनिमहत्तत्वेतस्मिन्विषयाकारंशान्तत्यज्ञानकलाज्ञानांशमात्मत्वेनध्यात्वातयाध्यानवृत्तिरूपयाआत्मावरकमज्ञानंविनिर्दहन् २६ निर्वाणसुखसंविदातांचहित्वामुक्तबंधनःसन् अनिर्देश्येनाप्रतर्क्येणस्वेनभावेनस्वस्वरूपेणतस्थौ ॥२७॥ ॥ इतिश्रीभागवतेमहापुराणेनवमस्कंधेटीकायांहरिश्चंद्रोपाख्यानेसप्तमोऽध्यायः ॥ ७ ॥ ॥ ७ ॥ अष्टमेरोहितस्योक्तोवंशोयत्राभवन्नृपः ॥ सगरः कपिलाक्षेपान्निर्दग्धायस्यसूनवः ॥ १ ॥ चंपस्तस्माद्धरितादमूद्येनचंपापुरीविनिर्मिता । अतश्चंपात्सुदेवः १ हृताभूर्यस्य २ औवेणऋषिणा आत्मानंदेहं प्रजावंतंसगर्भम् ३ गरोविषंतेनगरेणसहैवजातः ४ ५ गुरुवाक्येनऔर्ववचनेन । कांश्चिदहत्वैवविकृतवेषिणश्चक्रे । तदेवाह मुंडानिति मुक्तकेशानर्धमुंडितांश्च ६ ७ और्वेणोपदिष्टोयोगउपायस्तेन ८ तस्यद्वेभार्येसुमतिःकेशिनीच तत्रसुमत्याः पुत्राणांप्रभावंमृत्युंचाह सुमत्याइतिषड्भिः ९

खेवायुंधारयंस्तच्चभूतादौतंमहात्मनि ॥ तस्मिन्ज्ञानकलांध्यात्वातयाऽज्ञानंविनिर्दहन् २६ हित्वातांस्वेनभावेनानिर्वाणसुखसंविदा ॥ अनिर्देश्याप्रतर्क्येणतस्थौविध्वस्तबंधनः २७ ॥ इतिश्रीभागवतेमहापुराणेनवमस्कंधेहरिश्चंद्रोपाख्यानेसप्तमोऽध्यायः ७ ॥ ॥ ७ ॥ ॥ श्रीशुकउवाच ॥ ॥ हरितोरोहितसुतश्चंपस्तस्माद्विनिर्मिता ॥ चंपापुरीसुदेवोततोविजयोयस्यचात्मजः १ भरुकस्तत्सुतस्तस्माद्वृकस्तस्यापिबाहुकः ॥ सोऽरिभिर्हृतभूराजासभार्योवनमाविशत् २ वृद्धंतंपंचतांप्राप्तंमहिष्यनुमरिष्यती ॥ औवेणजानतात्मानंप्रजावंतंनिवारिता ३ आज्ञायास्यैसपत्नीभिर्गरोदत्तोऽन्धसासह ॥ सहतेनैवसंजातःसगराख्योमहायशाः ४ सगरश्चक्रवर्त्यासीत्सागरोयत्सुतैःकृतः ॥ यस्तालजंघान्यवनान्शकान्हैहयबर्बरान् ५ नावधीद्गुरुवाक्येनचक्रेविकृतवेषिणः ॥ मुंडान्श्मश्रुधरान्कांश्चिन्मुक्तकेशार्धमुंडितान् ६ अनंतर्वाससःकांश्चिदबहिर्वाससोपरान् ॥ सोऽश्वमेधैरयजतसर्ववेदसुरात्मकम् ७ और्वोपदिष्टयोगेनहरिमात्मानमीश्वरम् ॥ तस्योत्सृष्टंपशुंयज्ञेजहाराश्वंपुरंदरः ८ सुमत्यास्तनयादृप्ताःपितुरादेशकारिणः ॥ हयमन्वेषमाणास्तेसमंतान्न्यखनन्महीम् ९

२६ तं च हित्वा मुक्तबंधः सन् स्वस्वरूपेण तस्थौ ॥२७॥ इति नवमे सप्तमोध्यायः ७ ॥ ॥ ७ ॥ ॥ श्रीशुक उवाच ॥ रोहितात् हरितः तस्य चंपः येन चंपा पुरी निर्मिता तस्य सुदेवः तस्य विजयः १ तस्य भरुकः तस्य वृकः तस्य बाहुकः सः शत्रुभिः हृतराज्यः सन् वनं गत्वा २ कालेन मृतः तस्य पत्नीं अग्निं प्रवेष्टुकामां दृष्ट्वा और्वऋषिणा सगर्भां ज्ञात्वा निवारिता ३ तत् ज्ञात्वा तस्यै सपत्नीभिः गरो दत्तः तेन सह सा कुमारं सुषुवे ४ सः सगराख्यः चक्रवर्ती आसीत् यत्सुतैः सागरः कृतः किंच यः और्ववचसा तालजंघान् यवनान् शकान् हैहयबर्बरान् अहत्वैव विकृतवेषिणश्चक्रे ५ ६ ७ सः और्वोपदिष्टयोगेन अश्वमेधैर्हरिं अयजत् इंद्रः तस्य अश्वं जहार ८ राज्ञः षष्टिसहस्राणि पुत्राः हयं अन्वेषमाणाः संतः महीं न्यखनन् ९

भा० न० १० एषवाजिहरइतिब्रुवंतोभिययुः । षष्टिसहस्राणिपरिच्छेदकतयासंतियेषां । उन्मिमेष लोचनोन्मीलनंचकार ११ १२ केचित्तुकपिलस्यकोपाग्निनादग्धाइतिवर्णयंतितन्निराकरोति अ०
नेति कुतइत्यतआह । सत्त्वधामनिशुद्धसत्त्वमूर्तौ जगतः पवित्रंशुद्धिकरआत्मायस्यतस्मिन् कथंविभाव्यतेसंभाव्यते । असंभावनायांदृष्टांतः । भुवोरजः खेकथंसंभाव्यतइति १३ किंच ।
॥ १३॥ यस्ययेनईरितामवर्तितातस्यविपश्चितः सर्वज्ञस्यकथंपृथङ्मतिः अरिमित्रादिभेददृष्टिः १४ तदेवंसुमत्याः पुत्रेषुमृतेषुकेशिन्याःपौत्रेणाश्वःसमानीतः तिपूर्वमुद्दिष्टमप्रसंगतोदर्श ॥ ८ ॥
यितुमाह । योऽसमंजसइतिउक्तःकेवलमज्ञैः वस्तुतस्तुसमंजसएव सतुकेशिन्याः सुतः तेनजातंपिवप्रतीतंवारयति । तस्यैवपुत्रस्यात्मनोदेहाज्जातः १५ तस्यकथामाहचतुर्भिः । असमं
जसः पुरापूर्वजन्मनियोगीसन् संगाद्धेतोः योगाद्विचालितः १६ अतइदानींजातिस्मरःसन्संगपरिहारायजनमुद्वेजयन् लोकेगर्हितंज्ञातीनांचविप्रियंकर्माचरन् क्रीडतोबालान् सरय्वां
प्रास्यत् प्राक्षिपदितिद्वयोरन्वयः १७ एवंविधंवृत्तंकर्मयस्यसः १८ १९ पितृव्यखातमनुपंथास्तंययौ । भस्मांतिभस्मसमीपे २० २१

प्रागुदीच्यांदिशिहयंददृशुःकपिलांतिके ॥ एषवाजिहरश्चौरआस्तेमीलितलोचनः १० हन्यतांहन्यतांपापइतिषष्टिसहस्रिणः ॥ उदायुधाअभिययुरु
न्मिमेषतदामुनिः ११ स्वशरीराग्निनातावन्महेंद्रहृतचेतसः ॥ महद्व्यतिक्रमहतामस्मसादभवन्क्षणात् १२ नसाधुवादोमुनिकोपभर्जितानृपेंद्रपुत्राइति
सत्त्वधामनि ॥ कथंतमोरोषमयंविभाव्यतेजगत्पवित्रात्मनिखेरजोभुवः १३ यस्येरितासांख्यमयीदृढेहनौर्ययामुमुक्षुस्तरतेदुरत्ययम् ॥ भवार्णवंमृत्युपथं
विपश्चितःपरात्मभूतस्यकथंपृथङ्मतिः १४ योऽसमंजसइत्युक्तःसकेशिन्यांनृपात्मजः ॥ तस्यपुत्रोंऽशुमान्नामपितामहहितेरतः १५ असमंजसआत्मानं
दर्शयन्नसमंजसम् ॥ जातिस्मरःपुरासंगाद्योगीयोगाद्विचालितः १६ आचरन्गर्हितंलोकेज्ञातीनांकर्मविप्रियम् ॥ सरय्वांक्रीडतोबालान्प्रास्यदुद्वेजय
न्जनम् १७ एवंवृत्तःपरित्यक्तःपित्रास्नेहमपोह्यवै ॥ योगैश्वर्येणबालांस्तान्दर्शयित्वाततोययौ १८ अयोध्यावासिनःसर्वेबालकान्पुनरागतान् ॥ दृ
ष्ट्वाविसिस्मिरेराजन्राजाचाप्यन्वतप्यत १९ अंशुमांश्चोदितोराज्ञातुरगान्वेषणेययौ ॥ पितृव्यखातानुपथंभस्मांतिददृशेहयम् २० तत्रासीनंमुनिंवी
क्ष्यकपिलाख्यमधोक्षजम् ॥ अस्तौत्समाहितमनाःप्रांजलिःप्रणतोमहान् २१

ईशान्यां दिशि कपिलांतिकेहरिंददृशुः अहो एषः वाजिहरः चोरः मीलितलोचनः आस्ते १० एषः हन्यतां हन्यतां इत्युक्त्वा उदायुधाः अभिययुः तदा मुनिः
लोचनोन्मीलनं चकार ११ तदा महद्व्यतिक्रमात् तेषामेव शरीरात् उत्पन्नेन अग्निना ते सर्वे भस्मसात् अभवन् १२ केचित्तु कपिलस्य कोपाग्निना दग्धा इति वदं
ति तदसंगतम् कुतः सत्वमूर्तौ कपिले भेदस्य असंभवात् नैश्चिंतिति १३ १४ सगरस्य केशिन्यां अन्यभार्यायां असमंजस इति पुत्रो जातः तस्य अंशुमान् १५ सः
असमंजसः लोके आत्मनं असमंजसंदर्शयन् १६ ज्ञातीनां अप्रियं आचरन् सरय्वां बालान् प्राक्षिपत् १७ एवं वृत्तः पुत्रः पित्रा त्यक्तःसन् योगबलेन मृतबालान् दर्श
यित्वा ततो ययौ १८ सर्वे अयोध्यावासिनः पुनःप्राप्तान् बालान् दृष्ट्वा विसिस्मिरे राजा अन्वतप्यत १९ ततः राज्ञा अश्वान्वेषणे चोदितः अंशुमान् पितृव्यमार्गं गत्वा ॥ ११ ॥
भस्मसमीपे हयं ददर्श २० तत्रासीनं कपिलं दृष्ट्वा अस्तौत् २१

अजानंतोऽत्रजानंतोप्यनुकंप्यावयंत्विति । तुष्टावपाङ्गिरीशानमंशुमानेवमाशयः ॥ अजनः अजोब्रह्मापित्वामद्यापिनपश्यतिनचबुध्यते कथंभूतं आत्मनः स्वस्मात्परंपरमेश्वरं । कैर्हेतुभिः समाधियुक्तिभिः । समाधिनाप्यपरोक्षंनपश्यति युक्तिभिः परोक्षमपिसम्यक् नबुध्यतइत्यर्थः । अपरे अर्वाचीनास्तुकुतस्त्वांपश्येयुः । अर्वाचीनत्वेहेतुः तस्यब्रह्मणः मनश्चशरीरंचधी अस्वत्वतमोरजःकार्याणितामिर्येविविधादेवतिर्यङ्नराणांसर्गास्तेषुसृष्टास्तत्रापिवयमप्रकाशाअज्ञाः कुतः पश्यामेत्यर्थः २२ अपरेतर्हिकिंपश्यंतितत्राह । येदेहभाजस्तेत्वास्मिन्सम्यक् स्थितमपित्वांनविदुः किंतुगुणानेव विपश्यंति । अथवानगुणानपितुतमएवपश्यंति यतस्त्रिगुणाबुद्धिरेवप्रधानंयेषां अतो बहिरेवप्रकाशोज्ञानंयेषां । बुद्धिपरतंत्रतयाजाग्रत्स्वप्नयोर्विषया न्पश्यंति । सुषुप्तौतमएवकेवलं नतुनिर्गुणंत्वां । सर्वत्रहेतुः । यत्यतः यस्यतवमाययेतित्वामोहितंचेतोयेषांते २३ तथाप्यहं विचारेणज्ञास्यामीतिचेत्तत्राह । तंत्वामहंविमूढःकथंपरिभाव यामि विचारयामि कथंभूतं ज्ञानघनं शुद्धज्ञानमूर्तिं स्वतएवप्रध्वस्तौमायागुणनिमित्तौभेदमोहौयेनतंविभाव्यंविचिंत्यं । अयंभावः ज्ञानघनत्वान्नतावत् ज्ञानाविषयस्त्वम् । विचाराविषयस्त्वे ऽपिमायागुणैरभिभूतोहंनविचारेसमर्थइति २४ तस्मात् । हेप्रशांत त्वांपुराणंपुरुषंकेवलंनमामेत्यन्वयः । पुराणपुरुषत्वेहेतुः मायायागुणाः कर्माणिविश्वसृष्ट्यादीनिलिंगानिचब्र ह्मादिरूपाणियस्यतं । प्रशांतत्वेहेतुः सदसद्भ्यां कार्यकारणाभ्यांपुण्यपापाभ्यांवाविमुक्तं अतः अनामरूपंतत्कृतनामरूपशून्यं । किंतुज्ञानोपदेशायगृहीतः प्रकटितोदेहः शुद्धसत्त्वमू र्तिर्येनतं । यद्वा । हेप्रशांतमाय हेअगुणेतिचसंबोध्यकर्मभिः सृष्ट्यादिकार्यैः लिंग्यानियस्येतियोज्यं । यद्वा प्रशांतामायागुणादयोयस्मिन्नतमित्येकमेवपदम् २५ स्वमाग्यंश्लाघते त्वन्मायेतिद्वाभ्याम् । कामादिभिर्विभ्रांतानिचेतांसियेषांतेइमेसर्वेगृहादिषुभ्रमंति २६ हेसर्वभूतात्मन् नः अस्माकंतुत्वत्कृपयैवघटितात्त्वद्दर्शनात् दृढोपियोमोहमयः पाशः छिन्नः कथंभूतः कामादीनांपाशयआश्रयः त्वत्प्रसादेनकृतार्थोस्मीत्यर्थः २७ २८ अश्वंलब्ध्वापिसकाशंप्रत्याह । इमेचेति २९

॥ अंशुमानुवाच ॥ नपश्यतित्वांपरमात्मनोऽजनोनबुध्यतेऽद्यापिसमाधियुक्तिभिः ॥ कुतोपरेतस्यमनःशरीरधीविसर्गसृष्टावयमप्रकाशाः २२ येदेहभाजस्त्रिगुणप्रधानागुणानविपश्यंत्युतवातमश्च ॥ यन्माययामोहितचेतसस्तेविदुःस्वसंस्थंनबहिःप्रकाशाः २३ तंत्वामहंज्ञानघनंस्वभावप्रध्वस्तमायागुणभेदमोहैः ॥ सनंदनाद्यैर्मुनिभिर्विभाव्यंकथंविमूढःपरिभावयामि २४ प्रशांतमायागुणकर्मलिंगमनामरूपंसदसद्विमुक्तम् ॥ ज्ञानोपदेशायगृहीतदेहंनमामहेत्वांपुरुषंपुराणम् २५ त्वन्मायारचितेलोकेवस्तुबुद्ध्यागृहादिषु ॥ भ्रमंतिकामलोभेर्ष्यामोहविभ्रांतचेतसः २६ अद्यनःसर्वभूतात्मन्कामकर्मेंद्रियाशयः ॥ मोहपाशोदृढश्छिन्नोभगवंस्तवदर्शनात् २७ ॥श्रीशुकउवाच॥ इत्थंगीतानुभावस्तंभगवान्कपिलोमुनिः ॥ अंशुमंतमुवाचेदमनुगृह्यधियानृप २८ ॥ श्रीभगवानुवाच ॥ अश्वोयंनीयतांवत्सपितामहपशुस्तव ॥ इमेचपितरोदग्धागंगांभोऽर्हंतिनेतरत् २९

हे कपिल ब्रह्मापि ईश्वरं त्वां न पश्यति २२ तं ज्ञानघनं सनंदनादिमुनिभिर्भाव्यं त्वां अहं मूढः कथं परिभावयामि २३ २४ हे प्रशांत तस्मात् ज्ञानोपदेशाय
१३९ गृहीतदेहं त्वां नमाम इत्यादि २५ २६ २७ तदा प्रसन्नः कपिलः उवाच २८ हे वत्स ते पितामहपशुः अयं अश्वः नीयतां इमे तव पितरो दग्धाः गंगांभः अर्हं
ति नेतरत् २९

तंपरिक्रम्येतिशुकोक्तिः ॥ ३० ३१ ॥ ॥ इतिश्रीभागवतेमहापुराणेटीकायांनवमस्कंधेसगरोपाख्यानेऽष्टमोऽध्यायः ॥ ८ ॥ ॥ नवमेंऽशुमतोवंशः खट्वांगावधिवर्ण्यते । गंगांभूतलमानिन्ये यस्यपौत्रोभगीरथः ॥१॥ यथासगरः पौत्रायराज्यंदत्वा तपस्तेपे तथा अंशुमांश्चस्वपुत्रायराज्यंदत्वा महांतंकालंतपस्तेपेइतिचकारस्यार्थः नाशक्नोद्गंगामानेतुमितिशेषः संस्थितः मृतः १ कालंमृत्युं एयिवान्प्राप्तः २ तंप्रत्यात्मानंदर्शयामास । तेवरदास्मीतिगंगयोक्तः सन् स्वमभिप्रायंपूर्वजोद्धरणंशशंसकथयामास ३ आहगंगा कोपिगगनात्पतंत्यामेवेगंधारयिताधारयिष्यति ४ किंच । आमृजंतिक्षालयंतितत्रोपायोविचिंत्यताम् ५ अघंहरंतिहरिष्यंति । अघंभिनत्तीत्यघभित् ६ आत्माकर्थंभूतः यस्मिन्निदंविश्वंओतंग्रथितंऊर्ध्वतंतुषुशाटीवपटइव । प्रोतंचतिर्यक्तंतुषुपटइव असौसर्वात्मारुद्रस्त्वद्वेगंधारयिष्यतीत्यर्थः ७ इतिएवंगंगामुक्त्वातपस्वेतिपाठेभावयित्वेत्यर्थः ८ राज्ञाभिहितंतथेत्यंगीकृत्यहरेःपादेनपूतंजलंयस्यास्ताम् ९ १० ११

तंपरिक्रम्यशिरसाप्रसाद्यहयमानयत् ॥ सगरस्तेनपशुनाक्रतुशेषंसमापयत् ३० राज्यमंशुमतिन्यस्यानिःस्पृहोमुक्तबंधनः ॥ और्वोपदिष्टमार्गेणलेभेगतिमनुत्तमाम् ३१ इतिश्रीभागवतेमहापुराणेनवमस्कंधेसगरोपाख्यानेऽष्टमोऽध्यायः ॥८॥ श्रीशुकउवाच ॥ अंशुमांश्चतपस्तेपेगंगानयनकाम्यया ॥ कालंमहांतंनाशक्नोत्ततःकालेनसंस्थितः १ दिलीपस्तत्सुतस्तद्वदशक्तःकालमेयिवान् ॥ भगीरथस्तस्यपुत्रस्तेपेससुमहत्तपः २ दर्शयामासतंदेवीप्रसन्नावरदास्मिते ॥ इत्युक्तःस्वमभिप्रायंशशंसावनतोनृपः ३ कोपिधारयितावेगंपतंत्यामेमहीतले ॥ अन्यथाभूतलंभित्त्वानृपयास्येरसातलम् ४ किंचाहंनभुवंयास्येनराममय्यामृजंत्यघम् ॥ मृजामितदघंक्वाहंराजंस्तत्रविचिंत्यताम् ५ ॥ भगीरथउवाच ॥ साधवोन्यासिनःशांताब्रह्मिष्ठालोकपावनाः ॥ हरंत्यघंतेंऽगसंगात्तेष्वास्तेह्यघभिद्धरिः ६ धारयिष्यतितेवेगंरुद्रस्त्वात्माशरीरिणाम् ॥ यस्मिन्नोतमिदंप्रोतंविश्वंशाटीवतंतुषु ७ इत्युक्त्वासनृपोदेवंतपसाऽतोषयच्छिवम् ॥ कालेनाल्पीयसाराजंस्तस्येशश्चाश्वतुष्यत ८ तथेतिराज्ञाभिहितंसर्वलोकहितःशिवः ॥ दधारावहितोगंगांपादपूतजलांहरेः ९ भगीरथःसराजर्षिर्निन्येभुवनपावनीम् ॥ यत्रस्वपितृणांदेहाभस्मीभूताःस्मशेरते १० रथेनवायुवेगेनप्रयांतमनुधावती ॥ देशान्पुनंतीनिर्दग्धानासिंचत्सगरात्मजान् ११

इति श्रुत्वा तं परिक्रम्य शिरसा नमस्कृत्य हयं आनयत् सगरः तेन क्रतुशेषं समापयत् ३० ततः अंशुमति राज्यं न्यस्य मुक्तबंधनः राजा और्वोपदिष्टमार्गेण अनुत्तमां गतिं लेभे ३१ ॥ इति नवमेष्टमः ८ ॥ ॥ ध ॥ ॥ श्रीशुक उवाच ॥ अंशुमान् गंगानयनकाम्यया तपस्तेपे कालेन मृतः १ तत्सुतः दिलीपः तद्वत्तपस्तेपे सोपि मृतः भगीरथस्तस्यपुत्रः स सुमहत्तपः तेपे २ तं प्रति गंगा आत्मानं दर्शयामास हे भगीरथ ते अहं वरदास्मि एवं गंगया उक्तः राजा स्वाभिप्रायं तस्यै शशंस ३ तत् श्रुत्वा गंगा आह गगनात् महीतले पतंत्याः मम वेगं कोपि धारयिष्यति अन्यथा रसातलं यास्ये ४ किंच नराः मयि अघं मृजंति तत् कुत्र मृजामि हे राजन् तत्र उपायो विचिंत्यताम् ५ ॥ भगीरथ उवाच ॥ साधवः ते अघं हरंति रुद्रः ते वेगं धारयिष्यति ६ ७ इत्युक्त्वा सः तपसा शिवं अतोषयत् ततः प्रसन्नः शिवः ८ गंगां दधार ९ भगीरथः यत्र पितॄणां देहाः भस्मीभूताः तत्र गंगां निन्ये १० वायुवेगेन रथेन प्रयांतं अनुधावंती देशान् पुनंती सगरात्मजान् आसिंचत् ११

गंगामाहात्म्यमाह चतुर्भिः । यस्यांजलस्पर्शमात्रेणतत्रकेवलंदेहमस्मभिरेवनसाक्षात् । ब्रह्मणिस्वकृतेनदंडेनहताअपि तांश्रद्धयासेवतेतिशेषः १२ तत्प्रपंचयति भस्मीभूतेनांगेन
यः संस्पर्शस्तेन १३ १४ अनंतस्यविशेषणं संनिवेश्येति त्रैगुण्यंदेहसंबंधम् १५ १६ नलस्यसखाअयात्प्राप्तः । तत्सुतः ऋतुपर्णस्यपुत्रः १७ तत्पुत्रः सौदासः (यंमित्रसहंकल्माषपादंचाहुः
तत्रकारणमाह वसिष्ठशापादिति) १८ नरहः नरहत्यम १९ मृगयांचरन् कंचिद्राक्षसंजघान । तस्यभ्रातरंमुमोचसभ्रातापलाय्यगतः २० अघंअनिष्टं सूदः पाचकः तद्रूपधरःसन् रा
ज्ञोगृहेवर्तमानः २१ ( पात्रेपरिवेक्ष्यमाणं ) अभक्ष्यमंजसाविलोक्यएवंनरमांसव्यवहारेण २२ वसिष्ठएवंतं शापंद्वादशवार्षिकंचक्रे ( कृतवान् )२३ रुशतीः तीक्ष्णा अपः स्वपादयोर्ज
हौ नान्यत्र तत्रहेतुः दिशइति । एवमनेनमित्रसहत्वमपिदर्शितम् । मित्रस्यकलत्रस्यवाचः सहनात् २४

यज्जलस्पर्शमात्रेणब्रह्मदंडहताअपि ॥ सगरात्मजादिवंजग्मुःकेवलंदेहमस्मभिः १२ भस्मीभूतांगसंगेनस्वर्याताःसगरात्मजाः ॥ किंपुनःश्रद्धयादेवींयेसे
वंतेधृतव्रताः १३ नह्येतत्परमाश्चर्यंस्वर्धुन्यायदिहोदितम् ॥ अनंतचरणांभोजप्रसूतायाभवच्छिदः १४ संनिवेश्यमनोयस्मिन्श्रद्धयामुनयोऽमलाः ॥
त्रैगुण्यंदुस्त्यजंहित्वासद्योयातास्तदात्मताम् १५ श्रुतोभगीरथाज्जज्ञेतस्यनाभोऽपरोभवत् ॥ सिंधुद्वीपस्ततस्तस्मादयुतायुस्ततोभवत् १६ ऋतुप
र्णोनलसखोयोऽश्वविद्यामयान्नलात् ॥ दत्त्वाक्षहृदयंचास्मैसर्वकामस्तुतत्सुतः १७ ततःसुदासस्तत्पुत्रोमदयंतीपतिर्नृप ॥ आहुर्मित्रसहंयंवैकल्माषां
घ्रिमुतक्वचित् ॥ वसिष्ठशापाद्रक्षोऽभूदनपत्यःस्वकर्मणा १८ ॥ राजोवाच ॥ किंनिमित्तोगुरोःशापःसौदासस्यमहात्मनः ॥ एतद्वेदितुमिच्छामिकथ्यतां
नरहोयदि १९ श्रीशुकउवाच ॥ सौदासोमृगयांकंचिच्चरन्रक्षोजघानह ॥ मुमोचभ्रातरंसोथगतःप्रतिचिकीर्षया २० सचिंतयन्नघंराज्ञःसूदरूपधरोगृ
हे ॥ गुरवेभोक्तुकामायपक्त्वानिन्येनरामिषम् २१ परिवेक्ष्यमाणंभगवान्विलोक्याभक्ष्यमंजसा ॥ राजानमशपत्क्रुद्धोरक्षोह्येवंभविष्यसि २२ रक्षःकृतंतद्वि
दित्वाचक्रेद्वादशवार्षिकम् ॥ सोऽप्यपोंऽजलिनादायगुरुंशप्तुंसमुद्यतः २३ वारितोमदयंत्यापोरुशतीःपादयोर्जहौ ॥ दिशःखमवनींसर्वंपश्यञ्जीवमयंनृपः २४

यस्याः जलस्पर्शमात्रेण ब्रह्मदंडहता अपि सगरात्मजाः दिवं जग्मुः १२ ये तु श्रद्धया गंगां सेवंते ते स्वर्गं गच्छंतीति किं वक्तव्यम् १३ १४ १५ भगीरथात्
श्रुतः तस्य नाभः तस्य अपरः तस्य सिंधुद्वीपः तस्य अयुतायुः १६ तस्य ऋतुपर्णः यः नलाय अक्षहृदयं दत्वा तस्मात् अश्वविद्यां प्राप्तः तस्य सर्वकामः १७ तस्मात्
सुदासः तस्मात् मदयंतीपतिः सौदासः एनं मित्रसहं कल्मषांघ्रिं आहुः सः वसिष्ठशापात् राक्षसः अनपत्यश्च अभूत् १८ ॥ राजोवाच ॥ सौदासस्य गुरोःशापः कुतः
एतत् कथ्यताम् १९ ॥ श्रीशुक उवाच ॥ सौदासः मृगयां चरन् कंचित् राक्षसं जघान तस्य भ्राता पलाय्य गतः २० सः राज्ञः अघं चिंतयन् सूदरूपो भूत्वा त
द्गृहे वर्तमानः सन् भोक्तुकामाय गुरवे नरामिषं पक्त्वा आनिन्ये २१ वसिष्ठः तत्परिवेक्ष्यमाणं अभक्ष्यं नृमांसं विलोक्य क्रुद्धः सन् राजानं रक्षो भविष्यसीति अशपत्
२२ अग्रे रक्षःकृतं तद्विदित्वा द्वादशवार्षिकं शापं चक्रे ततः राजा गुरुं शप्तुं अंजलौ अपः गृहीत्वा उद्यतः २३ तदा तत्पत्न्या मदयंत्या निवारितः ततः ताः तीक्ष्णा
अपः सर्वं जीवमयं पश्यन् स्वपादयोः जहौ २४

तदेवं राक्षसत्वेन कल्माषांघ्रित्वे च कारणमुक्त्वा स्वकर्मणाऽनपत्य इति यदुक्तं तत्प्रपंचयति व्यवायकाल इत्यादिना कर्मणाऽप्रज इत्यंतेन । वनमोकोनिवासो ययोस्तौ वनौकसौ तौ च तौ दंपती च । पृथक्पदत्वे सकारलोप आर्षः २५ अकृतार्थवद्दीनवत् २६ अकृतार्थं असमाप्तरतिम् २७ २८ सर्वभूतानामात्मेति भावनया आराधयितुमिच्छुः । यद्वा सर्वभूतानामात्मभावेन भूतेषु स्थितम् पितुर्गुणैः तर्हितं ब्रह्मेति संबंधः पाठांतरे अंतर्हितः सोयमित्युत्तरेणान्वयः २९ ३० भ्रूणस्य श्रोत्रियस्य गर्भस्य सतइ इतिवा । वभ्रोः गोः । सतां मतो भवान् वधं कथं साधु मन्यते इत्यर्थः ३१ क्षण मपि येन विना न जीविष्यामि सोयं यदि भक्षः क्रियते तर्हि मृतकं यथा मृतप्रायां मां पूर्वं भक्षय ३२ ३३ दिधिषुं गर्भाधानकर्तारम् ३४ आधानात् मैथुनात् । हे अकृतप्रज्ञ मृत्युर्मैथुनादर्शितः ३५ ३६ ३७ तदेवं कर्मणा अप्रजः ३८

राक्षसं भावमापन्नः पादे कल्माषतां गतः ॥ व्यवायकाले ददृशे वनौकौ दंपती द्विजौ २५ क्षुधार्तो जगृहे विप्रं तत्पत्न्याहाकृतार्थवत् ॥ न भवान्राक्षसः साक्षादिक्ष्वाकूणां महारथः २६ मदयंत्याः पतिर्वीर नाधर्मं कर्तुमर्हसि ॥ देहि मेऽपत्यकामाया अकृतार्थं पतिं द्विजम् २७ देहोयं मानुषो राजन्पुरुषस्याखिलार्थदः ॥ तस्मादस्य वधो वीर सर्वार्थवध उच्यते २८ एष हि ब्राह्मणो विद्वांस्तपःशीलगुणान्वितः ॥ आरिराधयिषुर्ब्रह्म महापुरुषसंज्ञितम् ॥ सर्वभूतात्मभावेन भूतेष्वंतर्हितं गुणैः २९ सोयं ब्रह्मर्षिवर्यस्ते राजर्षिप्रवराद्विभो ॥ कथमर्हति धर्मज्ञ वधं पितुरिवात्मजः ३० तस्य साधोरपापस्य भ्रूणस्य ब्रह्मवादिनः ॥ कथं वधं यथा बभ्रोर्मन्यते सन्मतो भवान् ३१ यद्ययं क्रियते भक्षस्तर्हि मां खाद पूर्वतः ॥ न जीविष्ये विना येन क्षणं च मृतकं यथा ३२ एवं करुणभाषिण्या विलपंत्या अनाथवत् ॥ व्याघ्रः पशुमिवाखादत्सौदासः शापमोहितः ३३ ब्राह्मणी वीक्ष्य दिधिषुं पुरुषादेन भक्षितम् ॥ शोचंत्यात्मानमुर्वीशमशपत्कुपिता सती ३४ यस्मान्मे भक्षितः पाप कामार्तायाः पतिस्त्वया ॥ तवापि मृत्युराधानादकृतप्रज्ञ दर्शितः ३५ एवं मित्रसहं शप्त्वा पतिलोकपरायणा ॥ तदस्थीनि समिद्धेऽग्नौ प्रास्य भर्तुर्गतिं गता ३६ विशापो द्वादशाब्दांते मैथुनाय समुद्यतः ॥ विज्ञाप्य ब्राह्मणीशापं महिष्या स निवारितः ३७ तत ऊर्ध्वं स तत्याज स्त्रीसुखं कर्मणाऽप्रजः ॥ वसिष्ठस्तदनुज्ञातो मदयंत्यां प्रजामधात् ३८

ततः राक्षसं भावं आपन्नः पादे कल्माषतां गतः सः एकदा वने मैथुनासक्तौ वनौकसौ दंपती दृष्ट्वा २५ क्षुधार्तः सन् तत्रत्यं विप्रं जगृहे तदा तत्पत्नी उवाच भवान् राक्षसः न किंतु इक्ष्वाकूणां वंशजोसि २६ मदयंत्याः पतिस्त्वं अधर्मं कर्तुं नार्हसि अपत्यकामायाः मे अपूर्णरतिं पतिं देहि २७ अयं ब्रह्मवेत्ता यदि एनं भक्षयसि तर्हि मां पूर्वं खाद २८ २९ ३० ३१ ३२ एवं अनाथवत् विलपंत्याः सत्याः शापमोहितः सौदासः तं अखादत् ३३ सा स्त्री राक्षसेन भक्षितं पतिं वीक्ष्य कुपिता सती आह ३४ हे पाप कामार्तायाः मे पतिः यतस्त्वया भक्षितः तस्मात् स्त्रीसंगात्त्वं मरिष्यसि ३५ एवं सौदासं शप्त्वा भर्तुः गतिं गता ३६ ततः राजा द्वादशाब्दांते विशापः सन् मैथुनाय उद्यतः तदा ब्राह्मणीशापं विज्ञाय महिष्या निवारितः ३७ तत ऊर्ध्वं स्त्रीसुखं तत्याज तेन कर्मणा अप्रजः तेनानुज्ञातः वसिष्ठः मदयंत्यां गर्भं अधात् ३८

गर्भमेव दधारेत्यर्थः अश्मजायतनप्रासूतं । वसिष्ठएवतस्याउदरमश्मना जघान उत्पन्नः सुतोऽश्मकः ३९ स्त्रीभिः स्ववेषदानेन परशुरामात्परिरक्षितः अतोनारीकवचइत्युक्तः निःक्षत्रे सति क्षत्रवंशस्यमूलमभवत् अतोमूलकइतिचोक्तः ४० ४१ सुप्रसन्नैर्देवैर्वरंवृणीष्वेत्युक्ते खट्वांगेनोक्तं प्रथमंतावन्ममायुः कथ्यतामिति देवैश्चोक्तंमुहूर्तमात्रमितितज्ज्ञात्वादेवैर्दत्तेनविमानेनस्वपुरमेत्यमनःपरमेश्वरेसंदधे ४२ एतदेवस्वसाधुत्वानुस्मरणपूर्वकंतत्कृतेनानिश्चयेनदर्शयति नमइतिसप्तभिः । कुलदैवात् ब्रह्मकुलात्सकाशान्मेप्राणादयोनातिवल्लभाः नातिप्रियाः ४३ मह्यंमम ४४ भूतभावनोहरिस्तस्मिन्नेवभावनायस्यसोहंतंकामंनवृणे ४५ तत्रहेतुः यइति शिथिलानींद्रियाणिधीश्चयेषांतेदेवाअपि ४६ अथतस्मात्प्रकृत्यास्वभावेनात्मनिरूढंगुणेषुसंगंविश्वकर्तुर्भावेनहित्वातमेवाहंप्रपद्ये ४७ अन्यभावंदेहाद्यभिमानरूपमज्ञानंहित्वा ४८ स्वंभावमेवाह यतदिति शून्यवत्कल्पितं वाचामविषयत्वात् । वासुदेवइतियं गृणंति । ब्रह्मणएवभक्तानुग्रहार्थमाविष्कृतत्वात्केवलंसुदेवत्वात् ४९ इतिश्रीभागवतेमहापुराणेनवमस्कंधेटीकायांनवमोऽध्यायः ॥ ९ ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥

सविससप्तसमागर्भमबिभ्रद्व्यजायत ॥ जघ्नेऽश्मनोदरंतस्याःसोश्मकस्तेनकथ्यते ३९ अश्मकान्मूलकोजज्ञेयःस्त्रीभिःपरिरक्षितः ॥ नारीकवचइत्युक्तोनिःक्षत्रेमूलकोऽभवत् ४० ततोदशरथस्तस्मात्पुत्रऐडविडस्ततः ॥ राजाविश्वसहोयस्यखट्वांगश्चक्रवर्त्यभूत् ४१ योदेवैरर्थितोदैत्यानवधीद्युधिदुर्जयः ॥ मुहूर्तमायुर्ज्ञात्वैत्यस्वपुरंसंदधेमनः ४२ नमेब्रह्मकुलात्प्राणाःकुलदैवान्नचात्मजाः ॥ नश्रियोनमहीराज्यंनदाराश्चातिवल्लभाः ४३ नबाल्येपिमतिर्मह्यमधर्मेरमतेक्वचित् ॥ नापश्यमुत्तमश्लोकादन्यत्किंचनवस्त्वहम् ४४ देवैःकामवरोदत्तोमह्यंत्रिभुवनेश्वरैः ॥ नवृणेतमहंकामंभूतभावनभावनः ४५ येविक्षिप्तेंद्रियधियोदेवास्तेस्वहृदिस्थितम् ॥ नविंदंतिप्रियंशश्वदात्मानंकिमुतापरे ४६ अथेशमायारचितेषुसंगंगुणेषुगंधर्वपुरोपमेषु ॥ रूढंप्रकृत्यात्मनिविश्वकर्तुर्भावेनहित्वातमहंप्रपद्ये ४७ इतिव्यवसितोबुद्ध्यानारायणगृहीतया ॥ हित्वान्यभावमज्ञानंततःस्वंभावमाश्रितः ४८ यत्तद्ब्रह्मपरंसूक्ष्ममशून्यंशून्यकल्पितम् ॥ भगवान्वासुदेवेतियंगृणंतिहिसात्वताः ४९ ॥ ॥ इतिश्रीभागवतेमहापुराणेनवमस्कंधेनवमोऽध्यायः ९ ॥ ॥ छ ॥

सा सप्तवर्षाणिगर्भं दधार ततः वसिष्ठः अश्मना उदरं भित्त्वा निष्कासितः तेन अश्मकः कथ्यते ३९ तस्य मूलकः यः स्त्रीभिः स्ववेषं दत्त्वा परशुरामात् रक्षितः अतो नारीकवचइति नामांतरं सः निःक्षत्रे सति क्षत्रस्य मूलं अतो मूलक इति च उक्तः ४० तस्मात् दशरथः तस्मात् ऐडविडः तस्मात् विश्वसहः तस्मात् खट्वांगः चक्रवर्ती अभवत् ४१ यः देवैः अर्थितः दैत्यान् अवधीत् प्रसन्नदेवैः वरं वृणीष्वेत्युक्ते प्रथमंतावत् आयुः कथ्यतामित्याह देवैः उक्तं मुहूर्तमात्रं आयुर्ज्ञात्वा विमानेन स्वपुरं एत्य परमेश्वरे मनः संदधे ४२ एतत् दर्शयति मम ब्रह्मकुलात्प्राणात्मजादयोन वल्लभाः ४३ मे मतिः बाल्येपि अधर्मे न रमते विष्णोरन्यत् वस्तु नपश्ये ४४ मह्यं देवैः वरो दत्तः तं अहं न वृणे ४५ ये देवास्तेपि स्वहृत्स्थं आत्मानं न पश्यंति ४६ अतः अहं गुणेषु संगं हित्वा तमेव प्रपद्ये ४७ इति बुद्ध्याव्यवसितः अज्ञानं हित्वा यं वासुदेवः इति गृणंति तं स्वं भावं आश्रितः ४८ ४९ ५० ॥ ॥ इति नवमस्कंधे नवमोऽध्यायः ९ ॥ ॥ छ ॥

दशमेप्राहखट्वांगवंशेश्रीरामसंभवम् ॥ तच्चरित्रंचलंकेशंहत्वाऽयोध्यागमात्तथा ॥ १ ॥ खट्वांगाद्दीर्घबाहुः ( तस्मात्पृथुश्रवामहायशारघुरासीत् ततोरघोर्महाराजोऽजः तस्मादजाद्दश रथः ) १ ( एषतेध्यानप्रत्यक्षोभगवान् यथा वसुदेवस्य तथा तस्यदशरथस्यापिरामादिसंज्ञयाअंशविभागेनपुत्रत्वमगात् ) २ ऋषिभिर्वाल्मीकिमुख्यैःभूरिवर्णितंत्वयामुहुःश्रुतंतथा पिसंक्षेपतःकथ्यमानंशृणु ३ ग्रंथकोटिभिराकीर्णमद्भुतंरामविक्रमं । अध्यायद्वयतोवक्ष्येएककश्लोकेसमस्यति ॥ सकोशलेंद्रःश्रीरामःनोऽस्मान्अवतादवतात् । कथंभूतः । योगुर्वर्थेपितुःसत्य स्यपालनार्थंत्यक्तराज्यःसन्पद्भ्यांवदातिसुकुमाराभ्यांपद्भ्याम् । तदेवाह । प्रियायाःपाण्योरपिस्पर्शेनाक्षितश्रमाययोस्ताभ्यांपतिव्रतेनंऽचरत् । हरींद्रोहनुमान् सुग्रीवोवा अनुजोलक्ष्मण स्ताभ्यां । नुदितापनीताप्यथजामार्गश्रमोयस्यसः । शूर्पणखायावैरूप्यात्कर्णनासिकच्छेदाद्धेतोः तयाप्रलोभितेनरावणेनापहारात् प्रियेणकलत्रेणविरहोवियोगस्तेनरुट्तयाआरोपि तयाभ्रूविजृंभेणैवत्रस्तोब्धिर्यस्मात्सः ततस्तद्विज्ञापनेनबद्धःसेतुर्येन ततः खला रावणादयएवदवोवनंतस्यदहनः ४ (ततउत्तरचरितंकोशलेंद्रशब्देनव्याख्यातम् ) संक्षेपतोवर्णितंरामचरि तंआदितआरभ्यविस्तरेणाह विश्वामित्रइत्यादिनायावदुत्तराध्यायसमाप्ति । पश्यतएवलक्ष्मणस्यतमप्यनपेक्ष्यैवहताइत्यर्थः । यष्ठ्कदानांसकोशलेंद्रोवतादित्यनेनान्वयः ५ लोके येवीरास्तेषांसमितौसमाजे। ऐशंशैवंधनुः इक्षुयष्टिमिवलीलयैवादायसज्जीकृतंभारोपितंविकृष्यमध्येबभंज हेनृप उग्रंकठिनंगरिष्ठंतदाह त्राहकानांत्रिभिःशतैरुपनीतंबालगजस्यलीलेवलीलायस्यसः ६ अनुरूपाणिस्वयोग्यानिगुणशीलादीनियस्याः तांसीतासंज्ञांपूर्वमुरसिअतिलब्धोमानोययातांश्रियंजित्वा धनुर्भंगमहानादश्रवणक्षुभितस्यभृगुपतेः दर्पंव्यनयत् अपनीतवान् कथंभूतस्य । त्रिःत्रिःसप्तकृत्वः राजबीजशून्यांमहींयोऽकरोत्तस्य ( त्रिशब्देनसप्तकप्रयंताःसितम् ) ७

॥ श्रीशुकउवाच ॥ खट्वांगाद्दीर्घबाहुश्चरघुस्तस्मात्पृथुश्रवाः ॥ अजस्ततोमहाराजस्तस्माद्दशरथोऽभवत् १ तस्यापिभगवानेषसाक्षाद्ब्रह्ममयोहरिः ॥ अंशांशेनचतुर्धाऽगात्पुत्रत्वंप्रार्थितःसुरैः ॥ रामलक्ष्मणभरतशत्रुघ्नाइतिसंज्ञया २ तस्यानुचरितंराजन्नृषिभिस्तत्त्वदर्शिभिः ॥ श्रुतंहिवर्णितंभूरित्वयासीतापतेर्मुहुः ३ गुर्वर्थेत्यक्तराज्योव्यचरदनुवनंपद्मपद्भ्यांप्रियायाःपाणिस्पर्शाक्षमाभ्यांमृजितपथरुजोयोहरींद्रानुजाभ्याम् ॥ वैरूप्याच्छूर्पणख्याः प्रियविरहरुषारोपितभ्रूविजृंभत्रस्ताब्धिर्बद्धसेतुःखलदवदहनःकोशलेंद्रोऽवतान्नः ४ विश्वामित्राध्वरेयेनमारीचाद्यानिशाचराः ॥ पश्यतोलक्ष्मणस्यैवहतानैर्ऋतपुंगवाः ५ योलोकवीरसमितौधनुरैशमुग्रंसीतास्वयंवरगृहेत्रिशतोपनीतम् ॥ आदाययालगजलीलइवेक्षुयष्टिंसज्जीकृतंनृपविकृष्यबभंजमध्ये ६ जित्वानुरूपगुणशीलवयोंगरूपांसीताभिधांश्रियमुरस्यभिलब्धमानाम् ॥ मार्गेव्रजन्भृगुपतेर्व्यनयत्प्ररूढंदर्पंमहीमकृतयस्त्रिरराजबीजाम् ७

॥ श्रीशुक उवाच ॥ खट्वांगाद्दीर्घबाहुः तस्य रघुः तस्य अजः तस्य दशरथः १ तस्य देवैः प्रार्थितो हरिः रामलक्ष्मणभरतशत्रुघ्नाः इति चतुर्धा पुत्रत्वं अगात् तस्य चरितं ऋषिभिर्वर्णितम् त्वया श्रुतं १ २ ३ यः श्रीरामः गुर्वर्थे राज्यं त्यक्त्वा वनं विवेश तत्र शूर्पणख्याः वैरूप्यकरणात् सीता रावणेन हृता तेन क्रुद्धःसः समुद्रं गत्वा सेतुं बबंध ततः रावणादीन् अहन् एवं भूत ईश्वरः नः अवतु ४ किंच यः गच्छन् पथि ताटिकां हत्वा विश्वामित्राध्वरे मारीचादीन् अहनत् ५ यः जनक गृहे शैवधनुः भंक्त्वा ६ सीतां जित्वा पथि परशुरामदर्पं अपनयत् ७ 

इदानींमुर्वंइतिश्लोकत्रयंविवृण्वन्नाह यः इति कदाचित्कैकेय्याःतुष्टेन राज्ञा त्वदपेक्षितं दास्यामीति प्रतिश्रुतं ततः श्रीरामस्ययुवराज्याभिषेकसमये तया भरतस्यराज्यं रामस्यवने वासः प्रार्थितः तस्यसत्यपाशेनपरिवीतस्यपितुर्निदेशम् आज्ञांशिरसाजगृहे तथोराज्यादिकंत्यक्त्वासभार्योवनंययौ । दुस्त्यजस्यापितत्त्वदर्शनात् ततः मुक्तसंगोयोगीभवन् प्राप्तानिवेति ८ रक्षसोरावणस्यस्वसुः शूर्पणखायाः अशुद्धबुद्धेः सीताजिघृक्षोः कामातुरायाइतिवा रूपंव्यक्तंविकारमनयत । तस्याःखरत्रिशिरोदूषणमुरूयाबांधवायेयुताश्चतुर्दशसहस्रंजघान । अपारवीर्यमसह्यंमसह्यंकोदंडंपाणौयस्ययः ९ सीतायाः कथाश्रवणेनदीपितो हृच्छयः (कामो) यस्यतेनसीताहरिष्यतास्वस्माद्भीतेन (रावणेन) स्वस्याश्रमादपकर्षणार्थं प्रेषितंमारीचंविक्रोश्यजघान । कथंभूतं अद्भुतेनवपुषास्वर्णहरिणदेहेनोपलक्षितम् । अतएव प्रलोभनेनाश्रमतस्तेनापकृष्टः सन् कंदसंघयाउग्रः श्रीरुद्रः १० ततश्चरक्षोधमेनरावणेन(वृकवत् श्व वत्) असमक्षंपनीतायाः । प्रिययावियुक्तो भ्रात्रालक्ष्मणेनसह कृपणवत् वनेविचचार । किंभिप्रायः सन् । इतिअनेनप्रकारेणस्त्रीसंगिनांदुःखोदर्कांगतिंप्रकटयापयन् ११ आत्मार्थेनकृत्येनकर्मणारावणेनसहयुद्धे(लक्ष्मणे) । नहतंकृत्यंशास्त्रीयंदहनादिकंयस्यतंजटायुषंपुत्रवद्दग्ध्वा कबंधंस्वग्रहणायप्रसारितबाहुंराक्षसमहन् (अवधीत्) अथानंतरंवालिनिहतेतैःकपिभिर्दर्शितायाः मार्गेबुध्वा अजभवाभ्यामर्चितावंघ्रीयस्यसमनुजो वेलांसमुद्रतीरमगात् १२ तत्रत्रिरात्रमुपवासेन प्रतीक्षितोपिसिंधुः यदानोपस्थितः तदा यस्यरोषविभ्रमेणक्रोधलीलयाविवृत्तःकटाक्षः तस्यपातेनसंभ्रांतानक्रामकराश्रयस्मिन् भयेनगीर्णः ग्रस्तः स्तंभितोघोषोयेनसः सिंधुः एतद्वक्ष्यमाणंबभाषे अर्हणमर्घादिकं रूपीमूर्तिमान् १३

यःसत्यपाशपरिवीतपितुर्निदेशंस्त्रैणस्यचापिशिरसाजगृहेसभार्यः ॥ राज्यंश्रियंप्रणयिनःसुहृदोनिवासंत्यक्त्वाययौवनमसूनिवमुक्तसंगः ८ रक्षःस्वसुर्व्यकृतरूपमशुद्धबुद्धेस्तस्याःखरत्रिशिरदूषणमुख्यबंधून ॥ जघ्नेचतुर्दशसहस्रमपारणीयकोदंडपाणिरटमानउवासकृच्छ्रम् ९ सीताकथाश्रवणदीपितहृच्छयेनसृष्टंविलोक्यनृपतेदशकंधरेण ॥ जघ्नेऽद्भुतैणवपुषाश्रमतोऽपकृष्टोमारीचमाशुविशिखेनयथाकमुग्रः १० रक्षोधमेनवृकवद्विपिनेऽसमक्षंवैदेहराजदुहितर्यपयापितायाम् ॥ भ्रात्रावनेकृपणवत्प्रिययावियुक्तःस्त्रीसंगिनांगतिमितिप्रथयंश्चचार ११ दग्ध्वात्मकृत्यहतकृत्यमहन्कबंधंसख्यंविधायकपिभिर्दयितागतिंतैः ॥ बुद्ध्वाथवालिनिहतेप्लवगेंद्रसैन्यैर्वेलामगात्समनुजोऽजभवार्चितांघ्रिः १२ यद्रोषविभ्रमविवृत्तकटाक्षपातसंभ्रांतनक्रमकरोभयगीर्णघोषः ॥ सिंधुःशिरस्यर्हणंपरिगृह्यरूपीपादारविंदमुपगम्यबभाषएतत् १३

ततः भरतं एत्य पितुराज्ञया सीतालक्ष्मणसहितः वनं ययौ ८ शूर्पनखाया रूपं व्यकृत ततः खरत्रिशिरादिचतुर्दशसहस्रराक्षसान् हत्वा दंडकारण्ये उवास ९ ततः

१४० मृगवपुषं मारीचं जघ्ने १० तदा रामः रावणेन सीता हृता अतः शोचन् सन् सलक्ष्मणः वने चचार ११ तत्र जटायुषं पुत्रवत् दग्ध्वा स्वग्रहणाय प्रसारितबाहुं कबंधं हत्वा कपिभिः सख्यं विधाय वालिनि हतेसति तैः सीतागतिं ज्ञात्वा समुद्रतीरं अगात् १२ तत्र त्रिरात्रोपवासेन प्रतीक्षितोपि सिंधुर्यदा नोपस्थितः तदा यस्य रोषेण भीतः सिंधुः अर्हणं परिगृह्य पादारविंदं उपगम्य इदं उवाच १३

मापपश्चेवाह । नत्वा मितिद्वाभ्याम् । एतावत्पर्यंतं मुनिश्चितं त्वांनविदामनजानीमइत्यर्थः इदानींतुज्ञातोसीत्याह । यदितिपृथक्पदं यस्येत्यर्थः । यद्वशेभ्यः सत्त्वादिभ्यः सुरगणाद योभवंति सभवानिति । ( गुणेशोगुणानांयंता )१४कामंयथेच्छंजलमाक्रम्यापिप्रयाहि । अवमेहंपुरीषमायम् । त्रैलोक्यंरावयतिआक्रंदयतीतितथातंजहि । हेवीरयद्यपितवजलंप्रतिबं धकंनभवतितथापीहसेतुंबध्नीहि । तर्हिकिमर्थम् । तेयशोविस्ताराय(तवयशःश्रवणेनअन्येषामपिमहापातकानांक्षयःस्यात्)। तदेवाह । यंसेतुमुपेत्यदुष्करंकर्मविस्यत्वद्यशोगास्यंतिभूपा स्तम् १५तद्वाक्यमभिनंद्ययत्कृतंतदाह बध्द्वेति । विविधैरद्रीणांकूटैः शृंगैः सेतुंबध्द्वाअग्रेसीतान्वेषणेहनुमतेवदग्धांलंकामाविशत् । कथंभूतैः शृंगैः कपींद्राणांकरैः कंपितानिभूरुहाणामंगानि शाखादीनियेषुतैः । विभीषणस्यदृशाबुद्धया । कैःसहाविशत् सुग्रीवादयः प्रमुखायेषांतैरनीकैः १६ ततश्चसालंकापूर्णाप्रचलिताबभूव कथंभूता । वानरेंद्राणांबलैरुद्धाविहारादयोयस्यां निर्भज्यमानाधिषणादयोयस्यांसा । तत्रविहारः क्रीडस्थानम् । कोष्ठंधान्यागारादिः । श्रीःकोशः । द्वारंगृहादीनाम् । गोपुरंपुरद्वारम् । सदःसभा । वलभी प्रासादादिपुरोभाग च्छादिनी । विटंकः कपोतपालिका । धिषणंवेदिकादि । शृंगाटकंचतुष्पथम् १७ रक्षस्पतीरावणः पुत्रमिंद्रजितंप्रहस्तादींश्चसमादिनोत् प्रायुंक १८ ( तां ) असिशूलादिभिर्दुर्गांदुर्गमां तांयातुधानपृतनांसुग्रीवादिभिरन्वितः श्रीरामोऽभ्यगात् । मरुत्सुतोहनुमान् । ऋक्षोजांबवान् १९ तेरघुपतेरनीकपाअंगदाद्याः सर्वेरावणस्यइभादिभिर्यद्वरूथंचतुरंगसैन्यंतत्त द्वंद्वंयथाभवतितथाऽभिपत्यसंगम्ययद्रुमादिभिर्जघ्नुः । कान् । सीतायाः अभिमर्शेनहतंमंगलंयस्यतस्यरावणस्यशोच्यान्तान् २०

नत्वांवयंजडधियोनुविदामभूमन्कूटस्थमादिपुरुषंजगतामधीशम् ॥ यत्सत्त्वतःसुरगणारजसःप्रजेशामन्योश्चभूतपतयःसभवान्गुणेशः १४ कामंप्रया हिजहिविश्रवसोऽवमेहंत्रैलोक्यरावणमवाप्नुहिवीरपत्नीम् ॥ बध्नीहिसेतुमिहतेयशसोवितत्यैगायंतिदिग्विजयिनोयमुपेत्यभूपाः १५ बध्द्वोदधौरघुपतिर्विविधा द्रिकूटैःसेतुंकपींद्रकरकंपितभूरुहांगैः ॥ सुग्रीवनीलहनुमत्प्रमुखैरनीकैर्लंकांविभीषणदृशाऽविशदग्रदग्धाम् १६ सावानरेंद्रबलरुद्धविहारकोष्ठश्रीद्वारगो पुरसदोवलभीविटंका ॥ निर्भज्यमानधिषणध्वजहेमकुंभशृंगाटकागजकुलैर्ह्रदिनीवघूर्णा १७ रक्षस्पतिस्तदवलोक्यनिकुंभकुंभधूम्राक्षदुर्मुखसुरांतनरांतका दीन् ॥ पुत्रंप्रहस्तमतिकायविकंपनादीन्सर्वाननुगान्समहिनोदथकुंभकर्णम् १८ तांयातुधानपृतनामसिशूलचापप्रासर्ष्टिशक्तिशरतोमरखड्गदुर्गाम् ॥ सु ग्रीवलक्ष्मणमरुत्सुतगंधमादननीलांगदर्क्षपनसादिभिरन्वितोऽगात् १९ तेऽनीकपारघुपतेरभिपत्यसर्वेद्वंद्वंवरूथमिभपत्तिरथाश्वयोधैः ॥ जघ्नुर्द्रुमैर्गिरिगदे षुभिरंगदाद्याःसीताभिमर्शहतमंगलरावणेशान् २०

हे भूमन् वयं जडधियः त्वां नविदाम इत्यादि १४ हे राम त्वं जलं आक्रम्य कामं याहि तथा रावणं जहि पत्नीं प्राप्नुहि हे वीर इदं जलं ते प्रतिबंधकं न तथापि यशो विस्ताराय सेतुं बध्नीहि १५ ततो रामः उदधौ सेतुं बद्ध्वा विभीषणदृशा लंकां विवेश १६ सा लंका वानरेंद्रसैन्यैः घूर्णा बभूव १७ तद् दृष्ट्वा रावणः निकुंभ कुंभधूम्राक्षादीन् इंद्रजितं कुंभकर्णं च प्राहिणोत् १८ तान् रामदूता वानराः गिरिगदेषुभिः जघ्नुः १९ततो रुष्टः रावणः पुष्पकं विमानं आरुह्य रामं अभ्यधावत् २०

स्वबलस्यनष्टिंनाशमवेक्ष्यरुष्ट क्रुद्धःसन्यानकंपुष्पकाविमानंरथंवा आरुह्य श्रीराममभिससार । अथ ( तं ) स्वःस्यंदनेस्वर्गस्थेइंद्रस्यरथे मातलिनाइंद्रसारथिनोपनीते द्युमतिदीप्तियुक्ते विभ्राजमानं। अहनत् अहन् २१ हेपुरुषादपुरीषराक्षसविष्ठाप्राय यद्यस्मादपहृता श्ववत् श्वायथाअसमक्षंगृहंप्रविश्यकिंमपिहरतितद्वत् तस्माज्जुगुप्सितस्यकर्मणःकर्तुस्तेद्यकालइवालंघ्य वीर्योहंफलंयच्छामि अधर्मकर्तुः पुंसः कालोयथायच्छतीतिवा २२ रिक्तःक्षीणपुण्यःसुकृतीविमानादिव । विमानात्पुष्पकाद्रथाद्वेतिवा २३ राक्षसस्त्रीणांविलापमाह ववइतिपंचभिः मंदंस्वल्पमुदरंयस्यास्तयारावणभार्ययासह २४ २५ परैरार्दिता २६ २७ गृध्राणांभक्षः नरकहेतवेनरकभोगाय २८ सांपरायिकंऔर्ध्वदेहिकम् २९ ३० आत्मनः स्वस्यदर्शनेनयआह्लादस्तेनविकसन्मुखपंकजंयस्यास्ताम् ३१ यानंपुष्पकंभ्रातृभ्यांलक्ष्मणसुग्रीवाभ्याम् ३२ (कल्पांतं) आयुश्चदत्वातेनापिसहैवययौ । ( चीर्णव्रतंवनवासनियमोयेन ) ३३

रक्षस्पतिःस्वबलनष्टिमवेक्ष्यरुष्ट आरुह्य यानकमथाभिससाररामम् ॥ स्वःस्यंदनेद्युमतिमातलिनोपनीतेविभ्राजमानमहनान्निशितैःक्षुरप्रैः२१ रामस्तमाह पुरुषादपुरीषयन्नःकांताऽसमक्षमसताऽपहृताश्ववत्ते ॥ त्यक्तत्रपस्यफलमद्यजुगुप्सितस्ययच्छामिकालइवकर्तुरलंघ्यवीर्यः २२ एवंक्षिपन्धनुषिसंधितमुत्ससर्जबाणंसवज्रमिवतद्धृदयंबिभेद ॥ सोऽसृग्वमन्दशमुखैर्न्यपतद्विमानाद्धाहेतिजल्पतिजनेसुकृतीवरिक्तः २३ ततोनिष्क्रम्यलंकायायातुधान्यःसहस्रशः ॥ मंदोदर्यासमंतस्मिन्प्ररुदंत्यउपाद्रवन् २४ स्वान्स्वान्बंधून्परिष्वज्यलक्ष्मणेषुभिरार्दितान् ॥ रुरुदुःसुस्वरंदीनाघ्नंत्यआत्मानमात्मना २५ हाहताःस्मवयंनाथलोकरावणरावण ॥ कंयायाच्छरणंलंकात्वद्विहीनापरार्दिता २६ नैवंवेदमहाभागभवान्कामवशंगतः ॥ तेजोनुभावंसीतायायेननीतोदशामिमाम् २७ कृतैषाविधवालंकावयंचकुलनंदन ॥ देहःकृतोऽन्नंगृध्राणामात्मानरकहेतवे २८ ॥ श्रीशुकउवाच ॥ स्वानांविभीषणश्चक्रेकोशलेंद्रानुमोदितः ॥ पितृमेधविधानेनयदुक्तंसांपरायिकम् २९ ततोददर्शभगवानशोकवनिकाश्रमे ॥ क्षामांस्वविरहव्याधिंशिंशपामूलमास्थिताम् ३० रामःप्रेयतमांभार्यांदीनांवीक्ष्यान्वकंपत ॥ आत्मसंदर्शनाह्लादविकसन्मुखपंकजाम् ३१ आरोप्यारुरुहेयानंभ्रातृभ्यांहनुमद्युतः ॥ विभीषणायभगवान्दत्त्वारक्षोगणेशताम् ३२ लंकामायुश्चकल्पांतंययौचीर्णव्रतःपुरम् ॥ अवकीर्यमाणःकुसुमैर्लोकपालार्पितैःपथि ३३

२१ २२ ततो रामः तं बहुधाक्षिपन् धनुषि संधितं बाणमुत्सृज्य तेन तद्धृदयं बिभेद सः दशमुखैः असृक् वमन् न्यपतत् २३ ततो मंदोदर्याद्याः स्त्रियः रुदंत्यः तत्र एत्य २४ स्वपतीन् आलिंग्य रुरुदुः ऊचुश्च २५ हे रावण वयं हताःस्म त्वद्विहीना लंका कं शरणं यायात् २६ भवान् कामवशं गतः सीतायास्तेजोनुभावं न वेद येन इमां दशां प्राप्तः२७एषा लंका विधवा कृता वयं च। इत्यादि विलापं चक्रुः २८ ॥ श्रीशुक उवाच ॥ रामाज्ञया विभीषणः स्वानां और्ध्वदेहिकं चक्रे २९ ततः रामः सीतां गृहीत्वा यानं आरुरुहे ३० ३१ ३२ रामः विभीषणाय रक्षोगणेशतां कल्पांतं आयुश्च दत्वा स्वपुरीं ययौ ३३

गोमूत्रयावकंगोमूत्रपकयवान्नभोजिनंभ्रातरंभरतम् ३४ ३५ स्वशिबिरात्रामंविनाऽयोध्यामप्रविशन्स्वस्यवासंयत्रानिर्मितवान्तस्मात्सकाशात् गीतादिभिर्युक्तोरामंप्रत्युद्यतः अभिमु
खंययौ ३६ ब्रह्मघोषेणबृहताघोषेणपठद्भिर्ब्राह्मणैः स्वर्णरसाक्ताःकक्षाः प्रांतायासांताभिः पताकाभिः हैमैरितिचत्वारिरथविशेषणानि ३७ (पुरटवर्मभिर्हिरण्मयकवचैरितिभटविशेष
णम्) ३८ पारमेष्ठ्यानिराजार्हाणिछत्रचामरादीनि(पण्यानिक्रयेणसंपादितान्युपायनानिच) । प्रेम्णाप्रक्लिन्नंहृदयंईक्षणेनेत्रेचयस्य ३९ नेत्रजैर्जलैः स्नापयन्नाश्लिष्य ४० (लक्ष्मणेनसीत
याचसहरामो) येऽर्हसत्तमाः कुलवृद्धास्तेभ्योपिस्वयंनमनंचक्रे४१ (उत्तरासंगान् उत्तरीयांबराणिप्रेमातिशयवशाद्धुन्वंतः कंपयंतः उत्तराःकोशलाअयोध्यावासिनइत्यर्थः माल्यैःपुष्पैः)
४२अयोध्याप्रवेशप्रकारमाहपादुकेइतिसार्धैस्त्रिभिः४३ धनुश्चनिषंगौचतान् । ऋक्षराड्जांबवान्४४ ४५ गुरुपत्नीःकैकेय्याद्याः ४६ वयस्यानवरजांश्च । यथावत् अनुक्रमेणसमुपेयतुः४७

उपगीयमानचरितःशतधृत्यादिभिर्मुदा ॥ गोमूत्रयावकंश्रुत्वाभ्रातरंवल्कलांबरम् ३४ महाकारुणिकोऽतप्यज्जटिलंस्थंडिलेशयम् ॥ भरतःप्राप्तमाकर्ण्यपौ
रामात्यपुरोहितैः ३५ पादुकेशिरसिन्यस्यरामंप्रत्युद्यतोग्रजम् ॥ नंदिग्रामात्स्वशिबिराद्गीतवादित्रनिःस्वनैः ३६ ब्रह्मघोषेणचमुहुःपठद्भिर्ब्रह्मवादिभिः ॥
स्वर्णकक्षपताकाभिर्हैमैश्चित्रध्वजैरथैः ३७ सदश्वैरुक्मसन्नाहैर्भटैःपुरटवर्मभिः ॥ श्रेणीभिर्वारमुख्याभिर्भृत्यैश्चैवपदानुगैः ३८ पारमेष्ठ्यान्युपादायप
ण्यान्युच्चावचानिच ॥ पादयोर्न्यपतत्प्रेम्णाप्रक्लिन्नहृदयेक्षणः ३९ पादुकेन्यस्यपुरतःप्रांजलिर्बाष्पलोचनः ॥ तमाश्लिष्यचिरंदोर्भ्यांस्नापयन्नेत्रजैर्जलैः
४० रामोलक्ष्मणसीताभ्यांविप्रेभ्योयेऽर्हसत्तमाः ॥ तेभ्यःस्वयंनमश्चक्रेप्रजाभिश्चनमस्कृतः ४१ धुन्वंतउत्तरासंगान्पतिंवीक्ष्यचिरागतम् ॥ उत्तराःको
शलामाल्यैःकिरंतोननृतुर्मुदा ४२ पादुकेभरतोऽगृह्णाच्चामरव्यजनोत्तमे ॥ विभीषणःससुग्रीवःश्वेतच्छत्रंमरुत्सुतः ४३ धनुर्निषंगाञ्शत्रुघ्नःसीतातीर्थक
मंडलुम् ॥ अबिभ्रदंगदःखड्गंहैमंचर्मर्क्षराण्नृप ४४ पुष्पकस्थोन्वितःस्त्रीभिःस्तूयमानश्चवंदिभिः ॥ विरेजेभगवान्राजन्ग्रहैश्चंद्रइवोदितः ४५भ्रातृभिर्नंदितः
सोपिसोत्सवांप्राविशत्पुरीम्॥प्रविश्यराजभवनंगुरुपत्नीःस्वमातरम्४६गुरून्वयस्यावरजान्पूजितःप्रत्यपूजयत्॥वैदेहीलक्ष्मणश्चैवयथावत्समुपेयतुः४७

तदा गोमूत्रयावकं जटिलं वल्कलांबरं भरतं श्रुत्वा ३४ अतप्यत् । भरतः प्राप्तं रामं श्रुत्वा पादुके शिरसि धृत्वा पौरामात्यपुरोहितैः ब्राह्मणैः सह ३५ ३६ राजार्हा
ण्युपादाय रामं एत्य पादुके पुरतः न्यस्य प्रेम्णा पादयोः न्यपतत् ३७ ३८ ३९ रामः तं चिरं आश्लिष्य नेत्रोदकैः स्नापयामास ४० विप्रेभ्यः नमश्चक्रे ४१
चिरागतं रामं वीक्ष्य जनाः माल्यैः किरंतः ननृतुः ४२ भरतः पादुके अगृह्णात् विभीषणः चामरं सुग्रीवः व्यजनं मारुतिः श्वेतच्छत्रं ४३ शत्रुघ्नः धनुर्निषंगान् सीता
तीर्थकमंडलुं अंगदः खड्गं जांबवान् चर्म ४४ एवंविधः रामः बंदिभिः स्तूयमानः पुष्पकस्थः ग्रहैश्चंद्र इव रेजे ४५ ततः स्वपुरं प्रविश्य गुरुं स्वमातुः ननाम ४६ मा
तरः तं अंके आरोप्य बाष्पौघैः सिंचंत्यः शुचः जहुः ४७

वाष्पौघैरभिषिंचंत्यः शुचःशोकानविजहुः । शेषंस्पष्टम् ४८ ४९ ५० आसनंसिंहासनंभ्रात्राभरतेन ५१ ५२ ५३ ५४ ५५ ५६ ॥ ॥ इतिश्रीभागवतेमहापुराणेनवमस्कंधेटीकायांद शमोऽध्यायः ॥ १० ॥ ॥ ७ ॥ ततएकादशेऽध्योध्यामावसन्ननुजेऽस्मह । यज्ञादिवक्षकारेशोरामस्तदनुवर्ण्यते ॥ १ ॥ आचार्यवान् आचार्याधीनः । उत्तमकल्पकैः मुख्यकल्पेनविहितैः १ २ तदंतरातासांदिशांमध्येयावतीभूःतां(शेषभूताम् इदंसर्वं)ब्राह्मणएवार्हतीतिमन्यमानः ३ अयंश्रीरामः ततदाऽलंकारवासोभ्यामेवावशेषितोऽभूत् । सौमंगल्यंकंठसूत्रादियावदावश्यकं तावन्मात्रमवशेषितंयस्यास्तव्द्यतिरिक्तंहिरण्यादिसर्वंददावित्यर्थः ४ ५

पुत्रान्स्वमातरस्तास्तुप्राणांस्तन्वइवोत्थिताः ॥ आरोप्यांकेभिषिंचंत्योबाष्पौघैर्विजहुःशुचः ४८ जटानिर्मुच्यविधिवत्कुलवृद्धैःसमंगुरुः ॥ अभ्यषिंच द्यथैवेंद्रंचतुःसिंधुजलादिभिः ४९ एवंकृताशिरःस्नानःसुवासास्रग्व्यलंकृतः ॥ स्वलंकृतैःसुवासोभिर्भ्रातृभिर्भार्ययाबभौ ५० अग्रहीदासनंभ्रात्राप्रणिपत्यप्रसा दितः ॥ प्रजाःस्वधर्मनिरतावर्णाश्रमगुणान्विताः ५१ जुगोपपितृवद्रामोमेनिरेपितरंचतम् ॥ त्रेतायांवर्तमानायांकालःकृतसमोऽभवत् ५२ रामेराजनि धर्मज्ञेसर्वभूतसुखावहे ॥ वनानिनद्योगिरयोवर्षाणिद्वीपसिंधवः ॥ सर्वेकामदुघाआसन्प्रजानांभरतर्षभ ५३ नाधिव्याधिजराग्लानिदुःखशोकभयक्ल माः ॥ मृत्युश्चानिच्छतांनासीद्रामेराजन्यधोक्षजे ५४ एकपत्नीव्रतधरोराजर्षिचरितःशुचिः ॥ स्वधर्मंगृहमेधीयंशिक्षयन्स्वयमाचरत् ५५ प्रेम्णानु वृत्त्याशीलेनप्रश्रयावनतासती ॥ धियाह्रियाचभावज्ञाभर्तुःसीताऽहरन्मनः ५६ ॥ ॥ इतिश्रीभागवतेमहापुराणेनवमस्कंधेरामचरितेदशमोध्यायः ॥१०॥ ॥७॥ ॥ श्रीशुकउवाच ॥ भगवानात्मनात्मानंरामउत्तमकल्पकैः ॥ सर्वदेवमयंदेवमीजआचार्यवान्मखैः १ होत्रेऽददाद्दिशंप्राचींब्रह्मणेदक्षिणां प्रभुः ॥ अध्वर्यवेप्रतीचींचउदीचींसामगायसः २ आचार्यायददौशेषांयावतीभूस्तदंतरा ॥ मन्यमानइदंकृत्स्नंब्राह्मणोऽर्हतिनिस्पृहः ३ इत्ययंतदलंकार वासोभ्यामवशेषितः ॥ तथाराज्ञ्यपिवैदेहीसौमंगल्यावशेषिता ४ तेतुब्रह्मण्यदेवस्यवात्सल्यंवीक्ष्यसंस्तुतम् ॥ प्रीत्याक्लिन्नधियस्तस्मैप्रत्यर्प्येदंबभाषिरे ५

४८ वसिष्ठः रामं सिंहासने अभ्यषिंचत् ४९ ५० रामः पितृवत् प्रजाः जुगोप प्रजाः तं पितरं मेनिरे ५१ रामे राज्ञि सति कालः कृतसमः अभवत् ५२ सर्वे व नादयः कामदुघा आसन् ५३ यत्र आध्यादयो न संति ५४ स्वयं गृहधर्मं लोकान् शिक्षयन् आचरत् ५५ भावज्ञा सीता प्रेमादिभिः भर्तुर्मनः अहरत् ५६ ॥ ॥ इति नवमे दशमः १० ॥ ७ ॥ श्रीशुकउवाच ॥ ॥ भगवान् रामः मखैः सर्वदेवमयं आत्मानं ईजे १ यत्र यज्ञे होत्रे प्राचीं दिशं ददौ ब्रह्मणे दक्षिणां अध्वर्यवे प्रती चीं सामगाय उदीचीं २ शेषां सर्वां आचार्याय इदं सर्वं ब्राह्मण एव अर्हतीति मन्यमानः ३ वासोभ्यां अवशेषितः तथा सीता अपि सौभाग्यद्रव्यावशेषिता आ सीत् ४ ते ऋत्विजः रामस्य वात्सल्यं वीक्ष्य प्रीताः संतः तस्मै सर्वं दत्वा ऊचुः ५

अप्रत्तंअदत्तंकिं सर्वदत्तमित्यर्थः । विश्यप्रविश्य ६ न्यस्तदंडैर्मुनिभिरर्पितौचिते=यस्तौअंघ्रीयस्य तस्मै तेष्वार्पितावंघ्रीयेनेतिवा ७ ८ ९ असंविदः अज्ञात् १० अंतर्वत्नीगर्भिणीसती
प्राचेतसोवाल्मीकिस्तस्याश्रमंप्राप्ता । कियाजातकर्माद्याः ११ १२ १३ १४ १५ ईश्वरोपिशुचोरोद्धुनाशक्नोत् १६ नचातिचित्रमेतदित्याह । स्त्रीपुंसो प्रसंगआसक्तिःत्रासमावहती
तितथा विभक्तेरलुगार्षः ( एव ) भयावहइतिपाठःसुगमः । किमुतेतिप्रासंगिकोक्तिः १७ अग्निहोत्रमजुहोत् प्रभुःरामः १८ आत्मज्योतिर्निजंधाम १९

अप्रत्तंनस्त्वयाकिंनुभगवन्भुवनेश्वर ॥ यन्नोंऽतर्हृदयंविश्यतमोहंसिस्वरोचिषा ६ नमोब्रह्मण्यदेवायरामायाकुंठमेधसे ॥ उत्तमश्लोकधुर्यायन्यस्तदं
डार्पितांघ्रये ७ कदाचिल्लोकजिज्ञासुर्गूढोरात्र्यामलक्षितः ॥ चरन्वाचोऽशृणोद्रामोभार्यामुद्दिश्यकस्यचित् ८ नाहंबिभर्मित्वांदुष्टामसतींपर
वेश्मगाम् ॥ स्त्रीलोभीबिभृयात्सीतांरामोनाहंभजेपुनः ९ इतिलोकाद्बहुमुखाद्दुराराध्यादसंविदः ॥ पत्याभीतेनसात्यक्ताप्राप्ताप्राचेतसाश्रमम् १०
अंतर्वत्न्यागतेकालेयमौसासुषुवेसुतौ ॥ कुशोलवइतिख्यातौतयोश्चक्रेक्रियामुनिः ११ अंगदश्चित्रकेतुश्चलक्ष्मणस्यात्मजौस्मृतौ ॥ तक्षःपुष्कलइत्या
स्तांभरतस्यमहीपते १२ सुबाहुःश्रुतसेनश्चशत्रुघ्नस्यबभूवतुः ॥ गंधर्वान्कोटिशोजघ्नेभरतोविजयेदिशाम् १३ तदीयंधनमानीयसर्वंराज्ञेन्यवेदयत् ॥ श
त्रुघ्नश्चमधोःपुत्रंलवणंनामराक्षसम् ॥ हत्वामधुवनेचक्रेमथुरांनामवैपुरीम् १४ मुनौनिक्षिप्यतनयौसीताभर्त्राविवासिता ॥ ध्यायंतीरामचरणौविवरंप्र
विवेशह १५ तच्छ्रुत्वाभगवान्रामोरुंधन्नपिधियाशुचः ॥ स्मरंस्तस्यागुणांस्तांस्तान्नाशक्नोद्रोद्धुमीश्वरः १६ स्त्रीपुंप्रसंगएतादृक्सर्वत्रत्रासमावहः ॥
अपीश्वराणांकिमुतग्राम्यस्यगृहचेतसः १७ ततऊर्ध्वंब्रह्मचर्यंधारयन्नजुहोत्प्रभुः ॥ त्रयोदशाब्दसाहस्रमग्निहोत्रमखंडितम् १८ स्मरतांहृदिविन्यस्य
विद्धंदंडककंटकैः ॥ स्वपादपल्लवंरामआत्मज्योतिरगाततः १९

हे भगवन् त्वया किं नु न दत्तम् त्वं नः अंतर्हृदयं विश्य तमः हंसि ६ तस्मै तुभ्यं नमः ७ कदाचित् लोकवार्तां जिज्ञासुः रामः रात्र्यां गूढः चरन् कस्यचिद्भार्यां उ
द्दिश्य वाचं अशृणोत् ८ नाहं बिभर्मि त्वां दुष्टामसतीं परवेश्मगाम् स्त्रीलोभी बिभृयात्सीतां रामो नाहं भजे पुनः ९ इति लोकापवादात् भीतेन रामेण त्यक्ता सीता
अंतर्वत्नी सती वाल्मीकेः आश्रमं कालेन प्राप्ता १० काले प्राप्ते कुशलवौ सुषुवे तयोः जातकर्माद्याः क्रिया मुनिश्चक्रे ११ अंगदः चित्रकेतुश्च लक्ष्मणपुत्रौ तक्षपु
ष्कलौ भरतपुत्रौ १२ सुबाहुश्रुतसेनौ शत्रुघ्नपुत्रौ भरतः दिग्विजये कोटिशः गंधर्वान् जघ्ने १३ शत्रुघ्नःमधोः पुत्रं लवणासुरं हत्वा मधुवने मथुरां नाम पुरीं चक्रे १४ सीता
मुनौ पुत्रौ स्थाप्य रामचरणौ ध्यायती विवरं प्रविवेश १५ १६ रामःतद्गुणान् स्मरन् तत ऊर्ध्वं ब्रह्मचर्यं धारयन् त्रयोदशसहस्रवर्षाणि अग्निहोत्रं अजुहोत् १७ १८ ततः
भक्तानां हृदि स्वपादपल्लवं विन्यस्य निजं धाम प्रत्यगात् १९

जलधिबंधनंअस्त्रपुगैश्चरक्षसांवधइतीदंकविभिराश्चर्यमिवज्ञायैतमारियशः स्तुतिर्नभवति । तत्रहेतुः । अधिकसाम्याभ्यांविमुक्तंधामप्रभावोयस्यतस्यकिंकपयः सहायाः । अतःसुग्रीवा याश्चपवंषवालीलामात्रंतथैवेदमपि । पुंकंचैतविस्याह । सुराणांयाश्च याभ्यातास्त्वीकृताडीलार्थातनुर्येनतस्य २० एवंविधलीलयायोजनंदर्शयन्प्रणमति । यस्ययशः नृपाणांमुकिष्ठिरा दीनांसदःसु ऋषयोमार्कंडेयादयो गायंति । दिगिभेंद्राणांपट्टवदाचरणरूपम् । तत्पर्श्चं ॐग्राममित्यर्थः । नाकपालादेवाः वसुपालाश्चवसुधापालाः । तेषांकिरीटैर्जुष्टंपादांबुजंयस्यतंरघुव र्ति । पाठांतरेतस्यरघुपतेः नाकपालादिभिः जुष्टंपादांबुजं प्रपद्यइत्यर्थः २१ सरामः संविष्टः उपवेशितःअनुगतोवायैः तेकोशलदेशवासिनः सर्वेपि यत्रयोगिनोगच्छंतितत्स्थानंययुः २२ आनृशंस्यपरःउपशमनिष्ठः सन् विमुच्यते २३ सरामःकथंस्वयंअवर्तत । भ्रातृन्वाप्रतिकथमवर्तत । कथंभूतान् आत्मनः आत्मांशभूतान् । अस्मिन्वाईश्वरेतेभ्रात्रादयःअनु अनंतरं कथमवर्ततेतिप्रश्नत्रयम् । २४ तत्रश्रीरामस्यभ्रात्रादिषुप्रवृत्तिप्रकारमाह अथेति । अनेनैवभ्रातृणामपि दाज्ञानुवर्तितया प्रतिरुक्ता । अथसिंहासनस्वीकारानंतरम् २५ पुरींवर्णयतित्रि भिः । गंधोदकैर्मदबिंदुभिश्च आसिक्तामार्गायस्यांसुतरांमत्तामिवसमृद्धां वेतिवितर्के । पाठांतरे वासितांकामोन्मत्तांगामिवेत्यर्थः २६ ( चैत्यंपाषाणादिभिर्बद्धंमार्गस्थवृक्षमूलादि ) २७ ( सवृंतैःसमस्तैरित्यर्थः ) २८ पौराणांतस्मिन्वृत्तिमाह । तमुपेयुरिति । वराहरूपेणत्वयोद्धृतांइमांपृथ्वीं पाहि २९

नेदंयशोरघुपतेःसुरयाञ्चयात्तलीलातनोरधिकसाम्यविमुक्तधाम्नः ॥ रक्षोवधोजलधिबंधनमस्त्रपूगैःकिंतस्यशत्रुहननेकपयःसहायाः २० यस्यामलंनृपसद स्सुयशोऽधुनापिगायंत्यघघ्नमृषयोदिगिभेंद्रपट्टम् ॥ तन्नाकपालवसुपालकिरीटजुष्टपादांबुजंरघुपतेःशरणंप्रपद्ये २१ यैःसंस्पृष्टोऽभिदृष्टोवासंविष्टोऽनुगतोपि वा ॥कोशलास्तेययुःस्थानंयत्रगच्छंतियोगिनः २२ पुरुषोरामचरितंश्रवणैरुपधारयन् ॥ आनृशंस्यपरोराजन्कर्मबंधैर्विमुच्यते २३॥ राजोवाच॥ कथंसभ गवान्रामोभ्रातृन्वास्वयमात्मनः ॥ तस्मिन्वातेऽन्ववर्तंतप्रजाःपौराश्चईश्वरे २४ ॥ श्रीशुकउवाच ॥ अथादिशद्दिग्विजयेभ्रातृंस्त्रिभुवनेश्वरः ॥ आत्मा नंदर्शयन्स्वानांपुरीमैक्षतसानुगः २५ आसिक्तमार्गांगंधोदैःकरिणांमदसीकरैः ॥ स्वामिनंप्राप्तमालोक्यमत्तांवासुतरामिव २६ प्रासादगोपुरसभाचैत्यदेव गृहादिषु ॥ विन्यस्तहेमकलशैःपताकाभिश्चमंडिताम् २७ पूगैःसवृंतैरंभाभिःपट्टिकाभिःसुवाससाम् ॥ आदर्शैरंशुकैःस्रग्भिःकृतकौतुकतोरणाम् २८ तमु पेयुस्तत्रतत्रपौराअर्हणपाणयः ॥ आशिषोयुयुजुर्देवपाहीमांप्राक्त्वयोद्धृताम् २९

२० २१ यैः संस्पृष्टोभिदृष्टोवा संविष्टोनुगतोपि वा कोसलास्ते ययुः स्थानं यत्र गच्छंति योगिनः २२ हे राजन् पुरुषः रामचरितं शृण्वन् कर्मबंधादिमुच्यते २३ ॥ राजोवाच ॥ हे शुक सः रामः स्वयं भ्रातृन् वा कथं अवर्तत तथा तस्मिन् रामे ते भ्रातरः प्रजाश्च कथं अवर्तंत तद्वद २४ ॥ श्रीशुकउवाच ॥ रामः भ्रातृन् दि ग्विजये आदिशत् ततः पुरीमैक्षत २५ कथंभूतां तां गंधोदकादिभिः सिक्तमार्गां २६ पताकादिभिर्मंडितां पूगरंभादिभिः शोभितां २७ ततः तं रामं पौराः उपेयुः आशिषो ददुः हे देव पृथ्वीं पाहि २८ २९

प्रजानांतस्मिन्वृत्तिमाह ततःप्रजाइति ३० स्वयंकथमवर्ततेत्यस्योत्तरमाह अथेतियावत्समाप्ति । स्वगृहंप्रविष्टःसन्तस्मिन्रेमे इतिपंचमेनान्वयः गृहंवर्णयतिसार्धाभिः अनंतायेआखि
लारत्नादीनांकोशास्तैराढ्यंअनर्घ्याउरवःपरिच्छदायस्मिन् ३१ विद्रुममयाउदुंबरादेहल्योयेषुतैर्द्वारैःस्वच्छैःस्थलैः तृतीयांतानांमंडितमितितृतीयेनान्वयः ३२ वाससांमणिगणानांच
अंशुकैर्दीप्तिभिः चिदुल्लासैः चिच्चैतन्यंतद्वदुल्लासैरुज्ज्वलैः । यद्वा चित् (इत्यव्ययं क्वचित्-)-क्वचित्वैदूर्यस्तंभादिषुययाशोभंउज्ज्वलैःमुक्ताफलैर्मंडितमित्यर्थः । कांताःकमनीयाः कामोपप
त्तयोभोगसाधनानिताभिः ३३ ( स्त्रीपुंभिःस्त्रीपुंसैरित्यर्थः ) भूषणानांभूषणभूतैः ३४ ( स्वस्मिन्नारामआरमणंनतुविषयेषुयेषांतेषतेषीराश्चतेषाम) ३५ नृणांमध्ये । यद्वा नृभिरभिध्या
तंअंघ्रिपल्लवंयस्येति ३६ ॥ ॥ इतिश्रीभागवतेमहापुराणेनवमस्कंधेटीकायांएकादशोऽध्यायः ॥ ११ ॥ ॥ ७ ॥ द्वादशेरामपुत्रस्यकुशस्यान्वयउच्यते ॥ एवमिक्ष्वाकुवंशस्यशशाद
स्येरितोऽन्वयः ॥ १ ॥ कुशस्यश्रीरामसुतस्यातिथिःसुतोभवत् १ अर्कसंभवःअर्कस्यांशात्संभूतः २ हिरण्यनाभःकथंभूतः जैमिनेःशिष्योयोगाचार्यः ३ तदाह । ततःसकाशात्कोश
ल्योयाज्ञवल्क्यऋषिराध्यात्मयोगमध्यगात् । महांतउदयाःसिद्धयोयस्मिंस्तं । हृदयग्रंथेर्भेदकंच ४

ततःप्रजावीक्ष्यपतिंचिरागतंदिदृक्षयोत्सृष्टगृहाःस्त्रियोनराः ॥ आरुह्यहर्म्याण्यरविंदलोचनमतृप्तनेत्राःकुसुमैरवाकिरन् ३० अथप्रविष्टःस्वगृहंजुष्टंस्वैःपू
र्वराजभिः ॥ अनंताखिलकोशाढ्यमनर्घ्योरुपरिच्छदम् ३१ विद्रुमोदुंबरद्वारैर्वैदूर्यस्तंभपंक्तिभिः ॥ स्थलैर्मारकतैःस्वच्छैर्भ्राजत्स्फटिकभित्तिभिः ३२
चित्रस्रग्भिःपट्टिकाभिर्वासोमणिगणांशुकैः ॥ मुक्ताफलैश्चिदुल्लासैःकांतकामोपपत्तिभिः ३३ धूपदीपैःसुरभिभिर्मंडितंपुष्पमंडनैः ॥ स्त्रीपुंभिःसुरसंकाशैर्जुष्टं
भूषणभूषणैः ३४ तस्मिन्सभगवान्रामःस्निग्धयाप्रिययेष्टया ॥ रेमेस्वारामधीराणामृषभःसीतयाकिल ३५ बुभुजेचयथाकालंकामान्धर्ममपीडयन् ॥ वर्ष
पूगान्बहून्नृणामभिध्यातांघ्रिपल्लवः ३६ ॥ इतिश्रीभागवतेमहापुराणेनवमस्कंधेएकादशोऽध्यायः ११ ॥ ॥ ध ॥ ॥ श्रीशुकउवाच ॥ कुशस्यचाति
थिस्तस्मान्निषधस्तत्सुतोनभः ॥ पुंडरीकोथतत्पुत्रःक्षेमधन्वाऽभवत्ततः १ देवानीकस्ततोऽनीहःपारियात्रोऽथतत्सुतः ॥ ततोबलस्थलस्तस्माद्वज्र
नाभोऽर्कसंभवः २ खगणस्तत्सुतस्तस्माद्विधृतिश्चाभवत्सुतः ॥ ततोहिरण्यनाभोभूद्योगाचार्यस्तुजैमिनेः ३ शिष्यःकौशल्यआध्यात्मंयाज्ञवल्क्योऽ
ध्यगात्ततः ॥ योगंमहोदयमृषिर्हृदयग्रंथिभेदनम् ४

ततः प्रजाः चिरागतं पतिं वीक्ष्य हर्म्याणि अरुह्य कुसुमैः अवाकिरन् ३० अथ अनेकोपस्करैर्युक्तं स्वगृहं प्रविष्टः रामः प्रियया सीतयासह रेमे ३१ ३२ ३३ ३४
३५ किंच यथाकालं बहून् वर्षपूगान् कामान् बुभुजे ३६ ॥ ॥ इति नवमे एकादशः ११ ॥ ॥ ध ॥ ॥ श्रीशुकउवाच ॥ कुशस्यपुत्रः अतिथिः तस्य निषधः
तस्य नभः तस्य पुंडरीकः तस्य क्षेमधन्वा अभवत् १ तस्य देवानीकः तस्य अनीहः तस्यपारियात्रः तस्य बलः तस्य स्थलः तस्य अर्कसंभूतः तस्य वज्रनाभः २
तस्य खगणः तस्य विधृतिः तस्य हिरण्यनाभः सः जैमिनेः शिष्योभूत् ३ तस्य याज्ञवल्क्यः अध्यात्मयोगं प्राप ४

५ मरुर्विशेषमाह । योसाविति । पुनर्भावयिता भावयिष्यति ६ ७ पित्रा अभिमन्युना ८ ९ १० ११ ततस्मादमित्रजित् १२ १३ १४ निष्ठा वंशस्यस्थितिः तस्या अंतः ( अंतिमः ) १५ तदेवाह इक्ष्वाकूणामिति ॥ १६ ॥ ॥ इतिश्रीभागवतेमहापुराणेनवमस्कंधेटीकायांद्वादशोऽध्यायः ॥ १२ ॥ ७ ॥ इक्ष्वाकोरेवपुत्रस्यनिमेर्वंशत्रयोदशे ॥ १ ॥ वर्ण्यतेजज्ञिरेयत्रब्रह्मज्ञाजनकादयः ॥ १ ॥ निरौरसःपुत्रोनामूदितिदर्शयन्कथामाह निमिरित्येकादशभिः । सत्रमारभ्यवसिष्ठंऋत्विजं अवृत वव्रे १

पुष्योहिरण्यनाभस्यध्रुवसंधिस्ततोऽभवत् ॥ सुदर्शनोथाग्निवर्णश्शीघ्रस्तस्यमरुःसुतः ५ योसावास्तेयोगसिद्धःकलापग्राममाश्रितः ॥ कलेरंतेसूर्यवंशंनष्टंभावयितापुनः ६ तस्मात्प्रसुश्रुतस्तस्यसंधिस्तस्याप्यमर्षणः ॥ महस्वांस्तत्सुतस्तस्माद्विश्वसाह्वोऽन्वजायत ७ ततःप्रसेनजित्तस्मात्तक्षकोभवितापुनः ॥ ततोबृहद्बलोयस्तुपित्रातेसमरेहतः ८ एतेहीक्ष्वाकुभूपालाअतीताःशृण्वनागतान् ॥ बृहद्बलस्यभवितापुत्रोनाम्नाबृहद्रणः ९ उरुक्रियस्ततस्तस्यवत्सवृद्धोभविष्यति ॥ प्रतिव्योमस्ततोभानुर्दिवाकोवाहिनीपतिः १० सहदेवस्ततोवीरोबृहदश्वोथभानुमान् ॥ प्रतीकाश्वोभानुमतःसुप्रतीकोथतत्सुतः ११ भवितामरुदेवोथसुनक्षत्रोथपुष्करः ॥ तस्यांतरिक्षस्तत्पुत्रःसुतपास्तदमित्रजित् १२ बृहद्राजस्तुतस्यापिबर्हिस्तस्मात्कृतंजयः ॥ रणंजयस्तस्यसुतःसंजयोभविताततः १३ तस्माच्छाक्योथशुद्धोदोलांगलस्तत्सुतःस्मृतः ॥ ततःप्रसेनजित्तस्मात्क्षुद्रकोभविताततः १४ रणकोभवितातस्मात्सुरथस्तनयस्ततः ॥ सुमित्रोनामनिष्ठांतएतेबार्हद्बलान्वयाः १५ इक्ष्वाकूणामयंवंशःसुमित्रांतोभविष्यति ॥ यतस्तंप्राप्यराजानंसंस्थांप्राप्स्यतिवैकलौ १६ ॥ इतिश्रीभागवतेमहापुराणेनवमस्कंधेद्वादशोऽध्यायः १२ ॥ ॥ ७ ॥ ॥ श्रीशुकउवाच ॥ निमिरिक्ष्वाकुतनयोवसिष्ठमवृतर्त्विजम् ॥ आरभ्यसत्रंसोप्याहशक्रेणप्राग्वृतोस्मिभोः १

तस्य पुष्यः तस्य ध्रुवसंधिः तस्य सुदर्शनः तस्य अग्निवर्णः तस्य शीघ्रः तस्य मरुः ५ यः योगसिद्धः सन् कलापग्रामंस्थितः कलेरंते नष्टं सूर्यवंशं पुनर्भावयिष्यति ६ तस्य प्रसुश्रुतः तस्य संधिः तस्य अमर्षणः तस्य महस्वान् तस्य विश्वसाह्वः तस्य प्रसेनजित् तस्य तक्षकः ७ ८ तस्य बृहद्बलः एते ऐक्ष्वाकुभूपालाः अतीताः अनागतान् शृणु तस्य बृहद्रणः ९ तस्य उरुक्रियः तस्य वत्सवृद्धः तस्य प्रतिव्योमः तस्य भानुः तस्य दिवाकः १० तस्य सहदेवः तस्य बृहदश्वः तस्य भानुमान् तस्य प्रतीकाश्वः तस्य सुप्रतीकः ११ तस्य मरुदेवः तस्य सुनक्षत्रः तस्य पुष्करः तस्य अंतरिक्षः तस्य सुतपाः तस्य अमित्रजित् १२ तस्य बृहद्राजः तस्य बर्हिः तस्य कृतंजयः तस्य रणंजयः तस्य संजयः १३ तस्य शाक्यः तस्य शुद्धोदः तस्य लांगलः तस्य प्रसेनजित् तस्य क्षुद्रकः १४ तस्य रणकः तस्य सुरथः तस्य सुमित्रः १५ इक्ष्वाकूणामयं वंशः सुमित्रांतो भविष्यति यतस्तं प्राप्य राजानं संस्थां प्राप्स्यति वैकलौ १६ ॥ इति नवमे द्वादशः १२ ॥ श्रीशुक उवाच ॥ इक्ष्वाकुपुत्रो निमिः सत्रं आरभ्य वसिष्ठं ऋत्विजं वव्रे तदा वसिष्ठः आह अहं शक्रेण प्राक् वृतोस्मि १

वंशक्रस्यमखंनिर्वर्त्य । प्रतिपालयप्रतीक्षस्वेति गृहपतिर्निमिः इदंजीवितंचलंअस्थिरं विद्वान् २ ३ इंद्रस्यमखंनिर्वर्त्यागतोगुरुःशिष्यस्यव्यतिक्रममन्यायंवीक्ष्यनिमेर्देहःपततादित्यशपत्
४ ५ (इतिशापंदत्त्वानिमिस्तंदेहंत्यक्तवान् ) उर्वशीदर्शनात्स्कन्नंरेतोमित्रावरुणाभ्यांकुंभेनिपिक्तंतस्माद्वसिष्ठोजज्ञेतदाह मित्रावरुणयोरिति । ६ पितामहोवसिष्ठः सहि शुकाचार्यस्यप्र
पितामहसमः तथाचश्रुतिः । ' कुंभेरेतःसिषिचतुःसमानम् ' इति ६ गंधवत्सुपुलुगंधद्रव्येषु ७ यदिप्रसन्नाः प्रभवःसमर्थाश्च तर्हिजीवत्वित्यूचुः८ यस्यदेहस्ययोगंनवाञ्छंति । अपितुमोक्षाये
वभजंति हरिमेधसोभागवताः । ( हरौमेधायेषांतइतिवा ) ९ १० निमिर्विदेहःसनउष्यतांवसतु । कामंयथेच्छम् । एवंसतियुष्माभिःप्रार्थितंजीवितमस्यभविष्यति नचदेहसंबंधइतिभावः ।
सचअध्यात्मसंस्थितःलोचनयोःस्थितःसन् उन्मेषणनिमेषाभ्यांतत्प्रवर्तकत्वेनलक्षितोवर्ततेइतिशेषः ११ तदेवंमृतादपिनिमेर्देहाद्वंशप्रवृत्तिंदर्शयति अराजकभयमिति १२ तस्यान्वया
र्थानि त्रीणिनामान्याह । जन्मना असाधारणेनजनएवजनकः यद्वा स्वदेहद्वारा जनकत्वात्सनिमिर्जनकोभूदित्यर्थः । मिथिलायेननिर्मितेत्यनेनव्युत्पत्त्यंतरमर्थादुक्तम् १३

तंनिर्वर्त्यागमिष्यामितावन्मांप्रतिपालय ॥ तूष्णीमासीद्गृहपतिःसोपींद्रस्याकरोन्मखम् २ निमिश्चलमिदंविद्वान्सत्रमारभतात्मवान् ॥ ऋत्वि
ग्भिरपरैस्तावन्नागतोयावतागुरुः ३ शिष्यव्यतिक्रमंवीक्ष्यनिर्वर्त्यगुरुरागतः ॥ अशपत्पततादेहोनिमेःपंडितमानिनः ४ निमिःप्रतिददौशापंगुरवेऽधर्म
वर्तिने ॥ तवापिपततादेहोलोभाद्धर्ममजानतः ५ इत्युत्ससर्जतंदेहंनिमिरध्यात्मकोविदः ॥ मित्रावरुणयोर्जज्ञेउर्वश्यांप्रपितामहः ६ गंधवस्तुषुतद्देहं
निधायमुनिसत्तमाः ॥ समाप्तेसत्रयामेथदेवानूचुःसमागतान् ७ राज्ञोजीवतुदेहोयंप्रसन्नाःप्रभवोयदि ॥ तथेत्युक्तेनिमिःप्राहमाभून्मेदेहबंधनम् ८ यस्य
योगंनवांछंतिवियोगभयकातराः ॥ भजंतिचरणांभोजंमुनयोहरिमेधसः ९ देहंनावरुरुक्षेहंदुःखशोकभयाश्रयम् ॥ सर्वत्रास्ययतोमृत्युर्मत्स्यानामुदकेय
था १० ॥ देवाऊचुः ॥ विदेहउष्यतांकामंलोचनेषुशरीरिणाम् ॥ उन्मेषणनिमेषाभ्यांलक्षितोध्यात्मसंस्थितः ११ अराजकभयंनृणांमन्यमानामहर्ष
यः ॥ देहंममंथुःस्मनिमेःकुमारःसमजायत १२ जन्मनाजनकःसोभूद्वैदेहस्तुविदेहजः ॥ मिथिलोमथनाज्जातोमिथिलायेननिर्मिता १३

अतः तं क्रतुं कृत्वा आगमिष्ये तावत् मां प्रतीक्षस्व इत्युक्त्वा इंद्रस्यमखं अकरोत् २ निमिः इदं अनित्यं शरीरं ज्ञात्वा अपरैः ऋत्विग्भिः यावत् गुरुर्नागतः तावत्
सत्रं आरभत ३ वसिष्ठः इंद्रमखं निर्वर्त्य आगतः सन् शिष्यस्य अन्यायं दृष्ट्वा निमेर्देहः पततु इति अशपत् ४ तदा निमिः लोभात् धर्मं अजानतः तवापि देहः
पततु इति गुरवे अशपत् ५ इत्युक्त्वा स्वदेहं उत्ससर्ज ततः उर्वशीदर्शनात् मित्रावरुणयोः स्कन्नं रेतः ताभ्यां कुंभे निक्षिप्तं तस्मात् वसिष्ठो जज्ञे ६ मुनयः गंधद्र
व्ये निमेर्देहं स्थाप्य सत्रं समाप्य प्राप्तान् देवान् प्रति राज्ञः अयं देहः जीवतु इत्यूचुः ७ देवैः तथेत्युक्ते सति निमिः जीवन् सन् प्राह मे देहबंधनं माभूत् ८ यतः
वियोगभयकातराः मुनयः यस्य योगं न वांछंति ९ १० ॥ देवा उचुः ॥ विदेहः देहिनां नेत्रेषु वसतु एवं सति युष्माभिः प्रार्थितं जीवितं अस्य भवेत् देहबंधश्च न
११ ततः उन्मेषनिमेषाभ्यां लक्षितः अवर्तत ऋषयः अराजके नृणां भयं मत्वा निमेर्देहं ममंथुः तदा कुमारः समजायत १२ स एव जन्मना जनकः अभूत् विदेह
जः अतः वैदेहोऽभूत् मथनाज्जातः अतः मिथिलः अभूत् येन मिथिला निर्मिता १३

१४ सुद्दवसुधृतिःतस्यपिता १५ १६ १७ १८ १९ २० कृतोगतः । तस्यकेशिध्वजस्यभानुमान् २१ २२ ततस्मात्सुपार्श्वकः २३ अग्निभवः अग्नेरंशात्संभूतः २४ ययस्मात्सुभाषणः
२५ २६ योगेश्वरायाज्ञवल्क्यादयः तेषांप्रसादेन ॥ २७ ॥ ॥ इतिश्रीभागवतेमहापुराणेनवमस्कंधेटीकायांजनकवंशेत्रयोदशोऽध्यायः ॥ १३ ॥ ॥ ७ ॥

तस्मादुदावसुस्तस्यपुत्रोऽभून्नंदिवर्धनः ॥ ततः सुकेतुस्तस्यापिदेवरातोमहीपते १४ तस्माद्बृहद्रथस्तस्यमहावीर्यःसुधृत्पिता ॥ सुधृतेर्धृष्टकेतुर्वैहर्य
श्वोथमरुस्ततः १५ मरोःप्रतीपकस्तस्माज्जातःकृतरथोयतः ॥ देवमीढस्तस्यसुतोविश्रुतोथमहाधृतिः १६ कृतिरातस्ततस्तस्मान्महारोमाथतत्सु
तः ॥ स्वर्णरोमासुतस्तस्यह्रस्वरोमाऽव्यजायत १७ ततःसीरध्वजोजज्ञे यज्ञार्थंकर्षतोमहीम् ॥ सीतासीराग्रतोजातातस्मात्सीरध्वजःस्मृतः १८ कु
शध्वजस्तस्यपुत्रस्ततोधर्मध्वजोनृपः ॥ धर्मध्वजस्यद्वौपुत्रौकृतध्वजमितध्वजौ १९ कृतध्वजात्केशिध्वजःखांडिक्यस्तुमितध्वजात् ॥ कृतध्वजसुतो
राजन्आत्मविद्याविशारदः २० खांडिक्यःकर्मतत्त्वज्ञोभीतःकेशिध्वजाद्द्रुतः ॥ भानुमांस्तस्यपुत्रोभूत्शतद्युम्नस्तुतत्सुतः २१ शुचिस्ततनयस्त
स्मात्सनद्वाजस्ततोऽभवत् ॥ ऊर्ध्वकेतुःसनद्वाजादजोथपुरुजित्सुतः २२ अरिष्टनेमिस्तस्यापिश्रुतायुस्तत्सुपार्श्वकः ॥ ततश्चित्ररथोयस्यक्षेमावेर्मि
थिलाधिपः २३ तस्मात्समरथस्तस्यसुतःसत्यरथस्ततः ॥ आसीदुपगुरुस्तस्मादुपगुप्तोग्निसंभवः २४ वस्वनंतोथतत्पुत्रोयुयुधानात्सुभाषणः ॥ श्रु
तस्ततोजयस्तस्माद्विजयोस्मादृतःसुतः २५ शुनकस्तत्सुतोजज्ञेवीतहव्योधृतिस्ततः ॥ बहुलाश्वोधृतेस्तस्यकृतिरस्यमहावशी २६ एतेवैमैथिला
राजन्नात्मविद्याविशारदाः ॥ योगेश्वरप्रसादेनद्वंद्वैर्मुक्तागृहेष्वपि २७ इतिश्रीभागवतेमहापुराणेनवमस्कंधेजनकवंशेत्रयोदशोऽध्यायः ॥१३॥ ॥ ७ ॥

विदेहात् उदावसुः तस्य नंदिवर्धनः तस्य सुकेतुः तस्य देवरातः १४ तस्य बृहद्रथः तस्य महावीर्यः तस्य सुधृतिः तस्य धृष्टकेतुः तस्यहर्यश्वः तस्य मरुः १५ तस्य प्रदीपकः
तस्य कृतिरथः तस्य देवमीढः तस्य विश्रुतः तस्य महाधृतिः १६ तस्य कृतिरातः तस्य महारोमा तस्य स्वर्णरोमा तस्य ह्रस्वरोमा १७ तस्य सीरध्वजः सः यज्ञार्थं महीं कर्षतः
सतः लांगलाग्रात् सीता जाता अत एव सीरध्वजः इति तस्य नाम १८ तस्मात् कुशध्वजः तस्य धर्मध्वजः तस्य द्वौ पुत्रौ कृतध्वजमितध्वजौ १९ कृतध्वजात् केशिध्व
जः मितध्वजात् खांडिक्यः केशिध्वजस्य भानुमान् तस्य शतद्युम्नः २० २१ तस्यः शुचिः तस्य सनद्वाजः तस्य ऊर्ध्वकेतुः तस्य अजः तस्य पुरुजित् २२ तस्य अ
रिष्टनेमिः तस्य श्रुतायुः तस्य सुपार्श्वकः तस्य चित्ररथः तस्य क्षेमधिः २३ तस्य समरथः तस्य सत्यरथः तस्य उपगुरुः तस्य उपगुप्तः २४ तस्य वस्वनंतः तस्य
युयुधानः तस्य सुभाषणः तस्य श्रुतः तस्य जयः तस्य विजयः तस्य ऋतः २५ तस्य शुनकः तस्य वीतिहव्यः तस्य धृतिः तस्मात् बहुलाश्वः तस्मात् कृतिः तस्य म
हावशी २६ हे राजन् एते मैथिलाः योगेश्वरप्रसादेन गृहेष्वपि द्वंद्वैर्मुक्ता आसन् २७ ॥ इति नवमे त्रयोदशः १३ ॥ ॥ ७ ॥

चतुर्दशादिभिःसोमवंशमाहासमाप्तितः ॥ यस्मिन्नैलादयोभूपाःकीर्त्यंतेपुण्यकीर्तयः ॥१॥ चतुर्दशेगुरोःपत्न्यांतारायांसोम आहुभात ॥ जातश्चैलःषडुर्वश्यामायुर्मुख्यानजीजनत् ॥२॥ १
२ दृग्भ्यःआनंदाश्रुभ्यः अतएवामृतमयः किलेत्याश्चर्ये । पाठांतरेदृशोनेत्रात् । वक्ष्यमाणदर्पस्यकारणमाह विप्रेति ३ सोमस्यपुत्रोबुधइतिकथाद्वारेणाह । पत्नीमितिसार्धैर्नवभिः ४
तत्कृतेतन्निमित्तम् ५ सुराणांदानवानांचविग्रहेकारणमाह शुक्रइति असुरैःसहितउडुपमग्रहीदित्यर्थः । संघिरार्थः । गुरोःसुतंबृहस्पतिं अग्रहीत् । अंगिरसःसकाशात्प्राप्तविद्योहरइतिहि
प्रसिद्धिः ६ (तारकानक्षत्राणितैनिकरूपाणितत्प्रधानस्तारकामयः यद्वा तारकातारातदर्थप्रवृत्तइत्यर्थः )७ निवेदितोविज्ञापितोविश्वकृतब्रह्मा । अंतर्वत्नीं अबुध्यत ८ बृहस्पतिराह त्य
जत्यजेति । परैराहितंगर्भम् । गर्भेत्यक्तेमस्मीकरिष्यतीतिविभ्यतींप्रत्याह । नाहमिति । सांतानिकःसंतानार्थी सांतानिकेइतिपाठेहेसत्पुत्रेइत्यर्थः ९ १० ११ ( वोचसित्रदसि ) १२

॥ श्रीशुकउवाच ॥ अथातःश्रूयतांराजन्वंशःसोमस्यपावनः ॥ यस्मिन्नैलादयोभूपाःकीर्त्यंतेपुण्यकीर्तयः १ सहस्रशिरसःपुंसोनाभिहृदसरोरुहात् ॥ जातस्यासीत्सुतोधातुरत्रिःपितृसमोगुणैः २ तस्यदृग्भ्योऽभवत्पुत्रःसोमोऽमृतमयःकिल ॥ विप्रौषध्युडुगणानांब्रह्मणाकल्पितःपतिः ३ सोऽयजद्राजसूयेनविजित्यभुवनत्रयम् ॥ पत्नींबृहस्पतेर्दर्पात्तारांनामाहरद्बलात् ४ यदासदेवगुरुणायाचितोऽभीक्ष्णशोमदात् ॥ तत्कृतेतजज्ञेसुरदानवविग्रहः ५ शुक्रोबृहस्पतेर्द्वेषादग्रहीत्सासुरोडुपम् ॥ हरोगुरुसुतंस्नेहात्सर्वभूतगणावृतः ६ सर्वदेवगणोपेतोमहेंद्रोगुरुमन्वयात् ॥ सुरासुरविनाशोभूत्समरस्तारकामयः ७ निवेदितोऽथांगिरसासोमंनिर्भर्त्स्यविश्वकृत् ॥ तारांस्वभर्त्रेप्रायच्छदंतर्वत्नीमवैत्पतिः ८ त्यजत्यजाशुदुष्प्रज्ञेमत्क्षेत्रादाहितंपरैः ॥ नाहंत्वांभस्मसात्कुर्यांस्त्रियंसांतानिकःसति ९ तत्याजव्रीडिताताराकुमारंकनकप्रभम् ॥ स्पृहामांगिरसश्चक्रेकुमारेसोमएवच १० ममायंनतवेत्युच्चैस्तस्मिन्विवदमानयोः ॥ पप्रच्छुर्ऋषयोदेवानैवोचेव्रीडितातुसा ११ कुमारोमातरंप्राहकुपितोऽलीकलज्जया ॥ किंनवोचस्यसद्वृत्तेआत्मावद्यंवदाशुमे १२

॥ श्रीशुक उवाच ॥ हे राजन् सोमस्य पावनः वंशः श्रूयताम् यस्मिन् ऐलादयः भूपाः कीर्त्यंते १ आदौ नारायणस्य नाभिपद्मात् ब्रह्मा आसीत् तस्मात् अत्रिः २ तस्य दृग्भ्यः सोमः अभवत् सः विप्रौषध्युडुगणानां ब्रह्मणा पतिः कल्पितः ३ सः सोमः भुवनत्रयं जित्वा राजसूयेन अयजत् सः बृहस्पतेः भार्यां तारां दर्पात् अहरत् ४ यदा देवगुरुणा याचितः चंद्रः तां न अदात् तत्कृते देवदैत्यविग्रहो जज्ञे ५ ततः बृहस्पतेः द्वेषात् दैत्यैः सह शुक्रः चंद्रसहायः अभूत् सर्वभूतगणावृतः हरः देवैः सहितः इंद्रश्च गुरुं अन्वयात् ६ तस्मिन् युद्धे देवदैत्यनाशः अभूत् ७ अंगिरसा प्रार्थितो ब्रह्मा सोमं निर्भर्त्स्य तारां गुरवे प्रायच्छत् गुरुः अंतर्वत्नीं तां ज्ञात्वा आह ८ हे दुष्प्रज्ञे परैः आहितं गर्भं आशु त्यज त्यज संतानार्थी अहं अतस्त्वां भस्मसान्नकुर्याम् ९ ततः व्रीडिता सा कनकप्रभं कुमारं तत्याज तं दृष्ट्वा बृहस्पतिसोमौ इच्छां चक्राते १० ममायं नच तवेति उच्चैर्विवदतुः तदा देवैः ऋषिभिः पृष्टा सा किमपि नोचे ११ तदा कुमारः कुपितः सन् मातरं वदेत्याह १२

१ सांतानिकेऽसतिहृत्यापिपाठः ।

रहःएकांते १३ १४ पुरूरवसउर्वश्यांआयुप्रमुखाःषट्पुत्राजाताइतिवक्ष्यंकथामाह तस्येत्यादिनायावत्समाप्ति १५ ननु देवांकुतोमनुष्यस्यांतिकमुपगच्छेत्तत्राह । मित्रावरुणयोःशापान्नर लोकतांमनुष्यत्वमापन्नासती १६ १७ १८ नौआवयोः रतिरस्त्विति १९ यस्यतवअंगांतरंवक्षः आसाद्य रिरंसयारंतुमिच्छयाहस्फुटंच्यवते ( धैर्यं ) नोपयाति यद्यस्मादितिवा २० शापावसानेभाषाभंगमिषेणजिगमिषोस्तस्यभाषाबंधमाह । एतावितिद्वाभ्याम् । उरणकौमेषौन्यासौनिःक्षेपरूपौरक्षस्व । यःश्लाघ्यः सएवस्त्रीणांवरःस्मृतः अतोविजातीयत्वं नदोषइ तिभावः २१ हेवीरघृतंमेभक्षः स्यात् । 'अमृतंवाआज्यं' इतिश्रुतेः । देवानांचामृताशित्वात् । मैथुनादन्यत्रविवाससं ( नग्नं त्वा ) त्वांनेक्षिष्यइति प्रतिपेदे अंगीकृतवान् । तदेवाह अहोइति २२ २३ ( यथेच्छमहतोऽनिवारितःरेमे ) २४ पद्मकिंजल्कगंधइवगंधोयस्याः तस्यामुखामोदेनसुखितःप्रलोभितःसन् २५ मद्यंमम २६

ब्रह्मातांरहआहूयसमप्राक्षीच्चसांत्वयन् ॥ सोमस्येत्याहशनकैःसोमस्तंतावदग्रहीत् १३ तस्यात्मयोनिरकृतबुधइत्यभिधांनृप ॥ बुद्ध्यागंभीरयायेनपुत्रेणापोडुराट्मुदम् १४ ततःपुरूरवाजज्ञेइलायांयउदाहृतः ॥ तस्यरूपगुणौदार्यशीलद्रविणविक्रमान् १५ श्रुत्वोर्वशींद्रभवनेगीयमानान्सुरर्षिणा ॥ तदंतिकमुपेयायदेवीस्मरशरार्दिता ॥ मित्रावरुणयोःशापादापन्नानरलोकताम् १६ निशम्यपुरुषश्रेष्ठंकंदर्पमिवरूपिणम् ॥ धृतिंविष्टभ्यललनाउपतस्थेतदंतिके १७ सतांविलोक्यनृपतिर्हर्षेणोत्फुल्ललोचनः ॥ उवाचश्लक्ष्णयावाचादेवींहृष्टतनूरुहः १८ ॥ राजोवाच ॥ स्वागतंतेवरारोहेआस्यतांकरवामकिम् ॥ संरमस्वमयासाकंरतिर्नौशाश्वतीःसमाः १९ ॥ उर्वश्युवाच ॥ कस्यास्त्वयिनसज्जेतमनोदृष्टिश्चसुंदर ॥ यदंगांतरमासाद्यच्यवतेहरिरंसया २० एतावुरणकौराजन्न्यासौरक्षस्वमानद ॥ संरंस्येभवतासाकंश्लाघ्यःस्त्रीणांवरःस्मृतः २१ घृतंमेवीरभक्षःस्यान्नेक्षेत्वान्यत्रमैथुनात् ॥ विवाससंतत्तथेतिप्रतिपेदेमहामनाः २२ अहोरूपमहोभावोनरलोकविमोहनम् ॥ कोनसेवेतमनुजोदेवींत्वांस्वयमागताम् २३ तयासपुरुषश्रेष्ठोरमयंत्यायथाऽर्हतः ॥ रेमेसुरविहारेषुकामंचैत्ररथादिषु २४ रममाणस्तयादेव्यापद्मकिंजल्कगंधया ॥ तन्मुखामोदसुखितोमुमुदेऽहर्गणान्बहून् २५ अपश्यन्नुर्वशीमिंद्रोगंधर्वान्समचोदयत् ॥ उर्वशीरहितंमह्यमास्थानंनातिशोभते २६

ततः ब्रह्मा तां रहसि अपृच्छत् सा सोमस्य पुत्रः इत्याह तं सोमः अग्रहीत् १३ ब्रह्मा तस्य बुध इति नाम चक्रे चंद्रः पुत्रेण मुदं आप १४ ततः बुधात् इलायां पुरूरवा जज्ञे १५ उर्वशी इंद्रभुवने नारदात् तद्रूपगुणादीन् श्रुत्वा १६ मित्रावरुणयोः शापात् भुवं एत्य पुरूरवसमीपं गत्वा १७ धैर्यं धृत्वा तदंतिके उपतस्थे सः तां विलोक्य मोहितः सन् उवाच १८ हेउर्वशि अत्रास्यतां ते भद्रं मया साकं रमस्व १९ ॥ उर्वश्युवाच ॥ हे सुंदर कस्याः मनः त्वयि नसज्जेत तथापि
१४२ मम नियमपर्यंतं अत्र स्थास्यामि २० हे राजन् एतौ उरणकौ रक्षस्व २१ मे भक्ष्यं घृतं । मैथुनादन्यत्र विवाससं त्वां नेक्षिष्ये तथेति राजा अंगीकृतवान् २२ २३
ततः सुरविहारादिषु तया स कामं रेमे २४ किंच तया सह रममाणः बहूनहर्गणान् मुमुदे २५ इंद्रः एकदा उर्वशीं अपश्यन् सन् तां आनेतुं गंधर्वान् अचोदयत् २६

महारात्रेमध्यरात्रे । "महानिशाद्वेघटिकेरात्रेर्मध्यमयामयोः" इतिश्रुतेः २७ जिगमिषोस्तस्याःपदेषोक्तिमाह हतास्मीतिसार्धेन । नपुंसा नपुंसकेन २८ यथानारीतथा ( यःपुमान् दिवानिशि ) संत्रस्तो ( भीतः ) शेते २९ ३० विद्युतोविशिष्टद्युतिमंतः । व्यद्योतंत दीप्तिमकुर्वत । यद्वा ( ते ) तदैव तडितः प्रकाशंतेस्मेत्यर्थः नग्नमैक्षत अतोभाषाभंगान्निर्जगा मेतिज्ञेयम् ३१ ३२ तस्याःसखीश्चपंचवीक्ष्य सूक्तंशोभनंवचनं हयेजायइत्यादि (प्राह) ३३ तदेवार्थतआह । अहोइतिद्वाभ्याम् । अनिर्वृत्य मत्कृतांनिर्वृतिमप्राप्य मांत्यक्तुंनार्हसि । पा ठांतरेमांनिर्वृतिमगमयित्वा । मंत्राननुक्तेतिवा वर्षासिकृणवावहै । गोष्ठीःकरवावहै ३४ सुदेहोऽतिकमनीयोममदेहोत्रपतेत् ३५ पुरूरवोमामृथाइत्यादितस्याः सूक्तंतदप्यर्थतआह । मामृथाइतिचतुर्भिः। मामृथामाम्रियस्व।पुरुषोसिधैर्यमात्रहस्वेतिभावः३६प्रियेनिमित्तेसाहसं यासां ३७ ३८ तं सांत्वयति । संवत्सरांतइति अपराणीतिवचनादंतर्वत्नीमुपालक्ष्य ज्ञात्वा३९ ४०

तउपेत्यमहारात्रेतमसिप्रत्युपस्थिते ॥ उर्वश्या उरणौ जन्हुर्न्यस्तौ गजानिजायया २७ निशम्याक्रंदितंदेवीपुत्रयोर्नीयमानयोः ॥ हतास्म्यहंकुनाथेननपुं सावीरमानिना २८ यद्विश्रंभादहंनष्टाहृतापत्याचदस्युभिः ॥ यःशेतेनिशिसंत्रस्तोयथानारीदिवापुमान् २९ इतिवाक्सायकैर्विद्धःप्रतोत्रैरिवकुंजरः ॥ निशिनिस्त्रिंशमादायविवस्त्रोभ्यद्रवद्रुषा ३० तेविसृज्योरणौतत्रव्यद्योतंतस्मविद्युतः ॥ आदायमेषावायांतंनग्नमैक्षतसापतिम् ३१ ऐलोपिशयनेजाया मपश्यन्विमनाइव ॥ तच्चित्तोविह्वलःशोचन्बभ्रामोन्मत्तवन्महीम् ३२ सतांवीक्ष्यकुरुक्षेत्रेसरस्वत्यांचतत्सखीः ॥ पंचप्रहृष्टवदनाःप्राहसूक्तंपुरूरवाः ३३ अहोजायेतिष्ठतिष्ठघोरेनत्यक्तुमर्हसि ॥ मांत्वमद्याप्यनिर्वृत्यवचांसिकृणवावहै ३४ सुदेहोयंपतत्यत्रदेविदूरंहृतस्त्वया ॥ खादंत्येनंवृकागृध्रास्त्वत्प्रसादस्य नास्पदम् ३५ ॥ उर्वश्युवाच ॥ मामृथाःपुरुषोसित्वंमास्मत्वाद्युर्वृकाइमे ॥ क्वापिसख्यंनवैस्त्रीणांवृकाणांहृदयंयथा ३६ स्त्रियोह्यकरुणाःक्रूरादुर्मर्षाःप्रिय साहसाः ॥ घ्नंत्यल्पार्थेपिविस्रब्धंपतिंभ्रातरमप्युत ३७ विधायालीकविस्रंभमज्ञेषुत्यक्तसौहृदाः ॥ नवंनवमभीप्संत्यःपुंश्चल्यःस्वैरवृत्तयः ३८ संवत्सरांते हिमवानएकरात्रंमयेश्वर ॥ वत्स्यस्यपत्यानिचतेभविष्यंत्यपराणिभोः ३९ अंतर्वत्नीमुपालक्ष्यदेवींसप्रययौपुरम् ॥ पुनस्तत्रगतोब्दांतउर्वशींवीरमातरम् ४०

ते महारात्रे एत्य उर्वश्याः उरणौ जन्हुः २७ देवी तयोः पुत्रयोः आक्रंदितं श्रुत्वा शुशोच २८ २९ तदा राजा खड्गं गृहीत्वा नग्न एव अभ्यद्रवत् ३० गंधर्वाः तं दृष्ट्वा उरणौ विसृज्य दीप्तिं अकुर्वत मेषौ आदाय आयांतं नग्नं दृष्ट्वा सा अगच्छत् ततः भाषाभंगात् सा निर्जगाम ३१ राजापि शयने तां अदृष्ट्वा उन्मत्तवत् महीं बभ्राम ३२ बहुकालेन कुरुक्षेत्रे तां दृष्ट्वा उवाच ३३ अहो जाये तिष्ठ तिष्ठ मांत्यक्तुंनार्हसि ३४ हे देवि अयं देहः पतति त्वया दूरं हृतः अतः एनं वृकाद्याः खादं ति ३५ ॥ उर्वश्युवाच ॥ हे राजन् त्वं पुरुषोसि धैर्यं आवह मा म्रियस्व स्त्रियः स्वभावतः क्रूराः तासां सख्यं क्वापि न ३६ वृकाणां हृदयं यथा याः अल्पार्थे पतिं भ्रातरं घ्नंति ३७ तासां सख्यं सत्यं न ३८ अथ संवत्सरांते एकरात्रं मया सह त्वं वत्स्यसि ते अपराणि अपत्यानि भविष्यंति ३९ ॥ श्रीशुकउवाच ॥ राजा तां अंतर्वत्नीं ज्ञात्वा पुरं ययौ पुनः अब्दांते कुरुक्षेत्रं गत्वा ४०

( उपधाव संस्तुहि ) ४१ अनेनाग्निना कर्मकृत्वा तद्वशादुर्वशीं प्राप्स्यसीत्यभिप्रायेणाग्निस्थालीं ददुः । सतु तांस्थालीमेवोर्वशीं मन्यमानस्तया सहितोवनेविचरन् नेयमुर्वशीकिंत्व
ग्निस्थालीत्यबुध्यत ४२ ततश्चतांस्थालींवनेन्यस्य पश्चात्स्वगृहं गत्वा निशिनिरंतरं तामेवध्यायतस्तस्य मनसि त्रेतायां त्रयी अवर्तत कर्मबोधकं वेदत्रयं प्रादुरभूत् ४३ ततःस्थालीस्थानंगतःसन्
तत्रशम्यागर्भेजातमश्वत्थं विलक्ष्य अस्मिन्नसावग्निरस्तीति विशेषेणलक्षयित्वा तेनाश्वत्थेनद्वेअरणीकृत्वा अग्निममंथेति शेषः । 'शमीगर्भादग्निंमंथति' इतिश्रुतेः । मथनप्रकारमाह ।
अधरारणिमुर्वशीं ध्यायन् उत्तरां चारणिमात्मानं ध्यायन् उभयोररण्योर्मध्ये यत्काष्ठं तत् प्रजननं प्रजासाधनं ध्यायन् । तथाचमंत्रः । 'उर्वश्यसि पुरूरवा' इति ४५ तस्यतेनकृताग्नि
मंथनाद्विभावसुरग्निर्जातः कथंभूतः जातवेदाधनं भोग्यं यस्मात् सचत्रय्याविद्यया विहितेनाधानसंस्कारेण त्रिवृत् आहवनीयादिरूपः सन् राज्ञापुरूरवसा पुत्रत्वेकल्पितः पुण्यलोकप्राप
कत्वात् ४७ नन्वनादिवेदत्रयबोधितो ब्राह्मणादीनामिंद्राद्यनेकदेवतायजनेन स्वर्गप्राप्तिहेतुः कर्ममार्गः कथंसादिरिवकथ्यतेतत्राह । एकएवेतिद्वाभ्याम् । पुराकृतयुगेसर्ववाङ्मयः सर्वासां
वाचांबीजभूतः प्रणवएकएववेदः । देवश्चनारायणएकएव । अग्निश्चैकएव लौकिको वर्णश्चैकएव हंसोनाम ४८ वेदत्रयीतुपुरूरवःसकाशादासीत् । एवंविवान्प्राप । अयंभावः कृतयुगेसत्त्वप्र
धानाःप्रायशः सर्वेपिध्याननिष्ठाः । रजःप्रधानेतुत्रेतायुगेवेदादिविभागेनकर्ममार्गःप्रकटोबभूवेति ४९॥ इतिश्रीभागवतेमहापुराणेनवमस्कंधेटीकायांश्रीधरी ऐलोपाख्यानेचतुर्दशोऽध्यायः ॥१४॥

उपलभ्यमुदायुक्तःसमुवासतयानिशाम् ॥ अथैनमुर्वशीप्राहकृपणंविरहातुरम् ॥ गंधर्वानुपधावेमांस्तुभ्यंदास्यंतिमामिति ४१ तस्यसंस्तुवतस्तुष्टाअ
ग्निस्थालींददुर्नृप ॥ उर्वशींमन्यमानस्तांसोऽबुध्यतचरन्वने ४२ स्थालींन्यस्यवनेगत्वागृहानाध्यायतोनिशि॥ त्रेतायांसंप्रवृत्तायांमनसित्रय्यवर्तत ४३
स्थालीस्थानंगतोऽश्वत्थंशमीगर्भंविलक्ष्यसः ॥ तेनद्वेअरणीकृत्वाउर्वशीलोककाम्यया ४४ उर्वशींमंत्रतोध्यायन्नधरारणिमुत्तराम् ॥ आत्मानमुभयोर्मध्ये
यत्तत्प्रजननंप्रभुः ४५ तस्यनिर्मंथनाज्जातोजातवेदाविभावसुः ॥ त्रय्यासविद्ययाराज्ञापुत्रत्वेकल्पितस्त्रिवृत् ४६ तेनायजतयज्ञेशंभगवंतमधोक्षजम् ॥
उर्वशीलोकमन्विच्छन्सर्वदेवमयंहरिम् ४७ एकएवपुरावेदःप्रणवःसर्ववाङ्मयः ॥ देवोनारायणोनान्यएकोग्निर्वर्णएवच ४८ पुरूरवसएवासीत्त्रयीत्रेतामु
खेनृप ॥ अग्निनाप्रजयाराजालोकंगांधर्वमेयिवान् ४९ ॥ इतिश्रीभागवतेमहापुराणे नवमस्कंधेऐलोपाख्यानेचतुर्दशोऽध्यायः १४॥ ॥ छ ॥

तया सह एकरात्रं रेमे उर्वशी तं प्राह त्वं गंधर्वान् उपधाव ते मां तुभ्यं दास्यंति ४१ सः तथा चक्रे गंधर्वाः तं अग्निस्थालीं ददुः सः तां उर्वशीं मत्वा वने
विचरन् पश्चात् अग्निस्थाली इत्यबुद्ध्यत ४२ ततः तां स्थालीं वने न्यस्य गृहे गतः ततः त्रेतायां संप्रवृत्तायां मनसि वेदत्रयी अवर्तत ४३ पुनः राजा स्थालीस्थानं
गत्वा तत्र शमीगर्भं अश्वत्थं दृष्ट्वा तेन द्वे अरणी कृत्वा उर्वशीलोककाम्यया ममंथ ४४ ४५ तस्मादग्निः उत्पन्नः सः राज्ञा पुत्रत्वे कल्पितः ४६ ततः उर्वशीलोकं
इच्छन् तेन अग्निना हरिं अयजत् ४७ आदौ कृतयुगे प्रणवः एक एव वेदः एकएव देवः नारायणः एक एव अग्निश्च लौकिकः एक एव वर्णश्च हंसो नाम एक एव आ
सीत् ४८ हेनृप त्रेतामुखे पुरूरवस एव वेदत्रयी आसीत् राजा अग्निना प्रजया गांधर्वलोकं प्राप ४९ ॥ ॥ इति नवमे चतुर्दशः ॥ १४ ॥

ततःपंचदशेगाधिरैलपुत्रान्वयेजनिः ॥ दशैहिप्रसुतोरामःकार्तवीर्यमहनकृषा॥१॥१तुग्रहत्वायतावदायोर्वंशमनुक्त्वाऽन्यादिक्रमेणश्रुतायुःप्रभृतिषण्णांवंशानाह श्रुतायोरित्यादिना।एकः एकसंज्ञः २ ३ जह्नोःपुरुःतस्यबलाकःतस्यअजकःतस्यकुशःतस्यकुशांबुप्रमृतयश्चत्वारःपुत्राःतत्र कुशांबुसुतोगाधिरासीत् ४ गाधेःपुत्रोविश्वामित्रोब्रह्मर्षिरभूदित्युत्तराध्यायांतेवक्ष्यति'गाधेरभून्महातेजा'इत्यादिना तत्रतावत्तदुपोद्घाततेन भृगुवंशमवरयऋचीकस्यचरितंप्रसक्तानुप्रसक्तत्वेनचपरशुरामावतारचरितंचाह तस्यसत्यवतीमित्यादिना॥ विसदृशंअननुरूपंभार्गवंऋचीकम् ५ दक्षिणवामयोरेकत(एकतःश्यामः) कर्णोयेषाम् । सर्वस्मिन्नंगेचंद्रस्येववर्चोयेषांतेषाम् । नचेदमपिपर्याप्तमस्मत्कन्यायाः यतोवयंकौशिका महेच्छाः६ ७उभयैःमंत्रैः। पत्न्यैब्राह्मैर्मंत्रैः श्वश्र्वैतुक्षात्रैरित्यर्थः ८ यावत्स्नातुंमुनिर्निर्गतः तावत् भार्यायांभर्तृस्नेहाधिक्यात् तस्याश्चरुंश्रेष्ठंमत्वामात्रायाचितासासत्यवतीब्राह्ममंत्राभिमंत्रितंस्वचरुंमात्रेऽयच्छत्प्रादात् । मातुश्चरुंक्षात्रमंत्राभिमंत्रितंस्वयमदत्तआदत्त ९ कष्टंजुगुप्सितंतदेवाह । तेपुत्रोघोरोभविष्यति । भ्राताचब्रह्मवित्तमोभविष्यतीति १०

॥ श्रीशुकउवाच ॥ ऐलस्यचोर्वशीगर्भात्षडासन्नात्मजानृप ॥ आयुःश्रुतायुःसत्यायूरयोथविजयोजयः १ श्रुतायोर्वसुमान्पुत्रःसत्यायोश्चश्रुतंजयः ॥ रयस्यसुतएकश्चजयस्यतनयोऽमितः २ भीमस्तुविजयस्याथकांचनोहोत्रकस्ततः ॥ तस्यजन्हुःसुतोगंगांगंडूषीकृत्ययोऽपिबत् ३ जह्नोःपुरुश्चतत्पुत्रो बलाकश्चात्मजोऽजकः ॥ ततःकुशःकुशस्यापिकुशांबुर्मूर्तयोवसुः ॥ कुशनाभश्चचत्वारोगाधिरासीत्कुशांबुजः ४ तस्यसत्यवतींकन्यामृचीकोऽयाचतद्विजः ॥ वरंविसदृशंमत्वागाधिर्भार्गवमब्रवीत् ५ एकतःश्यामकर्णानांहयानांचंद्रवर्चसाम् ॥सहस्रंदीयतांशुल्कंकन्यायाःकुशिकावयम् ६ इत्युक्तस्तदभिप्रायंज्ञात्वागतः सवरुणांतिकम् ॥ आनीयदत्त्वातानश्वानुपयेमेवराननाम् ७ सऋषिःप्रार्थितःपत्न्याश्वश्र्वाचापत्यकाम्यया ॥ श्रपयित्वोभयैर्मंत्रैश्चरुंस्नातुंगतोमुनिः ८ तावत्सत्यवतीमात्रास्वचरुंयाचितासती ॥ श्रेष्ठंमत्वातथाऽयच्छन्मात्रेमातुरदत्स्वयम् ९ तद्विज्ञायमुनिःप्राहपत्नींकष्टमकारषीः ॥ घोरोदंडधरः पुत्रोभ्रातातेब्रह्मवित्तमः १०

श्रीशुक उवाच ॥ ऐलस्य उर्वशीगर्भात् षट् पुत्रा आसन् आयुः प्रथमः श्रुतायुः द्वितीयः सत्यायुः तृतीयः रयः चतुर्थः विजयः पंचमः जयः षष्ठः इति १ तत्र श्रुतायोः वसुमान् पुत्रः सत्यायोः श्रुतंजयः रयस्य एकसंज्ञः जयस्य अमितः २ विजयस्य भीमः ततः कांचनः ततः होत्रकः तस्य जन्हुः यः गंगां गंडूषीकृत्य अपिबत् तस्य पुरुः तस्य बलाकः तस्य अजकः ३ तस्य कुशः तस्य पुत्राः चत्वारः कुशांबुः प्रथमः मूर्तरयः द्वितीयः वसुः तृतीयः कुशनाभः चतुर्थः इति । कुशांबोः गाधिः ४ तस्य सत्यवती कन्या अभूत् तां ऋचीकः अयाचत गाधिः विसदृशं वरं मत्वा भार्गवं ऋचीकं अब्रवीत् ५ हे ऋषे एकतः श्यामकर्णानां हयानां सहस्रं शुल्कं दीयताम् इदमपि मे कन्यायाः पर्याप्तं न ६ एवमुक्तः ऋषिः तन्मतं ज्ञात्वा वरुणात् अश्वान् आनीय गाधये दत्त्वा सत्यवतीमुपयेमे ७ ऋचीकः पत्न्या श्वश्र्वा च अपत्यकामनया प्रार्थितः सन् उभयमंत्रैः चरुं श्रपयित्वा स्नातुं गतः ८ यावत्स्नात्वा सः नागतः तावत्सत्यवती मात्रा स्वचरुं याचिता सती श्रेष्ठं मत्वा तुभ्यं मात्रे अयच्छत् मातुरदत्स्वयम् ९ मुनिः तद्विज्ञाय पत्नीमाह तव पुत्रः दंडधरो भविष्यति तव भ्राता ब्रह्मवित्तमः भवेत् १०

एवंमाभूदितिप्रसादितोभार्गवआह । अथतर्हिपौत्रोघोरोभविष्यतीति । (ततऋचीकात्) जमदग्निःपुत्रोऽभवदित्यर्थः ११ साचसत्यवतीकौशिकीनदीअभूत् १२भार्गवऋषेर्जमदग्नेःसुताः १३
१४ अनीनशत् नाशयामास । तदेवाह रजस्तमोवृतमिति । पाठांतरंतुसुगमम् १५ (अभीक्ष्णशःएकविंशतिवारम्)१६ कार्तवीर्यार्जुनेनकृतमपराधंवक्तुंतस्यदर्पहेतुमैश्वर्यादिकमाह हैह
यानामितिषड्भिः । परिकर्मभिःपरिचर्याभिः दत्तंदत्तात्रेयंआराध्य १७ अव्याहतमिंद्रियादिकंचलेभे ( ओजःप्राणशक्तिःश्रीःसंपत्वीर्यंपराक्रमः ) १८ यत्रयस्मिन्नैश्वर्ये अणिमादयोगु
णाः १९ रेवांभसिनर्मदाजलेसरितंनर्मदाम् २० रावणोदिग्विजयेमाहिष्मत्याः समीपेनर्मदायांदेवपूजांकुर्वन् तेनप्रवाहस्यावरोधात् प्रतिस्रोतसःसत्यास्तस्याः सरितोजलैर्विप्लावितं
स्वशिबिरमालक्ष्य तस्यतद्वीर्यंनसेहे २१ ततश्चकृतकिल्बिषःक्रीडंतमभिमावितुंप्रवृत्तःसन् गृहीतः माहिष्मत्यांस्वपुर्यांकपिरिवसंनिरुद्धश्चपुनश्चावज्ञयायेन(मर्कटइवस्वनगरात्)मुक्तः२२

प्रसादितःसत्यवत्यामैवंभूदितिभार्गवः ॥ अथतर्हिभवेत्पौत्रोजमदग्निस्ततोऽभवत् ११ साचाभूत्सुमहापुण्याकौशिकीलोकपावनी ॥ रेणोःसुतांरेणु
कांवैजमदग्निरुवाहयाम् १२ तस्यांवैभार्गवऋषेःसुतावसुमदादयः ॥ यवीयान्जज्ञएतेषांरामइत्यभिविश्रुतः १३ यमाहुर्वासुदेवांशंहैहयानांकुलां
तकम् ॥ त्रिःसप्तकृत्वोयइमांचक्रेनिःक्षत्रियांमहीम् १४ दुष्टंक्षत्रंभुवोभारमब्रह्मण्यमनीनशत् ॥ रजस्तमोवृतमहन्फल्गुन्यपिकृतेऽंहसि १५ ॥
॥ राजोवाच ॥ किंतदंहोभगवतोराजन्यैरकृतात्मभिः ॥ कृतंयेनकुलंनष्टंक्षत्रियाणामभीक्ष्णशः १६ ॥ श्रीशुकउवाच ॥ हैहयानामधिपतिरर्जुनःक्ष
त्रियर्षभः ॥ दत्तंनारायणस्यांशमाराध्यपरिकर्मभिः १७ बाहून्दशशतंलेभेदुर्धर्षत्वमरातिषु ॥ अव्याहतेंद्रियौजःश्रीस्तेजोवीर्ययशोबलम् १८ योगे
श्वरत्वमैश्वर्यंगुणायत्राणिमादयः ॥ चचाराव्याहतगतिर्लोकेषुपवनोयथा १९ स्त्रीरत्नैरावृतःक्रीडन्रेवांभसिमदोत्कटः ॥ वैजयंतींस्रजंबिभ्रद्रोधसरि
तंभुजैः २० विप्लावितंस्वशिबिरंप्रतिस्रोतःसरिज्जलैः ॥ नामृष्यत्तस्यतद्वीर्यंवीरमानीदशाननः २१ गृहीतोलीलयास्त्रीणांसमक्षंकृतकिल्बिषः ॥ मा
हिष्मत्यांसंनिरुद्धोमुक्तोयेनकपिर्यथा २२

ततः एवं माभूदिति सत्यवत्या प्रार्थितः ऋषिः आह एवं चेत्तर्हि पौत्रो घोरो भविष्यति ततः ऋचीकात् जमदग्निः अभूत् ११ सत्यवती कौशिकी नाम नदी अभू
त् जमदग्निः रेणोः सुतां रेणुकां उवाह १२ तस्यां वसुमदादयः पुत्राः अभवन् तेषां कनीयान् वासुदेवांशः रामः जज्ञे १३ यः एकविंशतिवारं महीं निः
क्षत्रियां चक्रे १४ किंच क्षत्रेण फल्गुन्यपि अंहसि कृते दुष्टक्षत्रं नाशयामास १५ ॥ राजोवाच ॥ राजन्यैः तस्य अंहः किं कृतं येन क्षत्रियाणां कुलं नष्टं १६
॥ श्रीशुकउवाच ॥ हे नृप हैहयानामधिपः अर्जुनः दत्तात्रेयं आराध्य १७ बाहूनां सहस्रं शत्रुषु दुर्धर्षत्वं योगेश्वरत्वं अणिमाद्यैश्वर्यं च लेभे १८ १९ सः
अव्याहतगतिः चचार यदा सः स्त्रीभिः सह रेवांभसि क्रीडन् सन् भुजैः नदीं रुरोध २० तदा रावणोपि दिग्विजयं कृत्वा तत्तीरे अर्चां कुर्वन् जलैः प्ला
वितं स्वशिबिरं आलक्ष्य तद्वीर्यं न सेहे २१ क्रीडंतं तमभिभावितुं प्रवृत्तः तदा स्त्रीणां समक्षं रावणं धृत्वा माहिष्मत्यां निरुद्धः पुनः अवज्ञया मुक्तः २२

इदानीं तत्कृतमपराधं दर्शयन्नाह सएकदेत्यादिना २३ अर्हणेनातिथ्यादि । हविष्मत्या कामधेन्वा २४ तत्र अर्हणं नाद्रियत तस्मिन्नातुष्यत् यतोऽग्निहोत्र्यां होमधेनौ साभिलाषः । स हैहयः हैहयैः सह वर्तमानः २५ दर्पोद्रेकोः ऋषेर्हविर्धानीं अग्निहोत्रधेनुं हर्तुं नरानचोदयत् प्रेरितवान् २६ (आहतश्चरणादिनाताडितः) २७ सतूणं कार्मुकं चर्म चादाय २८ ऐणेयचर्म कृष्णाजिनमंबरं यस्य तम् ( अर्कधामभिः रविकिरणनिभाभिर्जटाभिर्युतम् ) २९ ( हस्त्यादिभिर्गदादिभिश्चातिभीषणाभयंकरी असूदयत् निहतवान् ) ३० प्रहरन् परश्वधो यस्य । मनश्च अनिलश्च तयोरिवौजो वीर्यं यस्य । परेषां चक्रं सैन्यं सूदयतीति तथा । छिन्ना भुजा ऊरवः कंधराश्च येषां हताः सूता वाहनानि च येषां ते वीरा निपेतुः ३१ विवृक्णा वर्मादयो यस्य ३२ पंचशतेषु धनुष्षु सोऽर्जुनः रामाय संदधे । एकमेव धनुर्यस्य स एकधन्वा । पाठांतरे एक एव बंधः संधानं येषां तैः इषुभिः तानि धनूंषि समं सहैव तत्क्षणमेवाच्छिनत् ३३

सएकदातुमृगयांविचरन्विपिनेवने ॥ यदृच्छयाश्रमपदंजमदग्नेरुपाविशत् २३ तस्मैसनरदेवायमुनिरर्हणमाहरत् ॥ ससैन्यामात्यवाहायहविष्मत्यातपोधनः २४ सवीरस्तत्रतंदृष्ट्वाआत्मैश्वर्यातिशायिनम् ॥ तन्नाद्रियताग्निहोत्र्यांसाभिलाषःसहैहयः २५ हविर्धानीमृषेर्दर्पान्नरान्हर्तुमचोदयत् ॥ तेचमाहिष्मतींनिन्युःसवत्सांक्रंदतींबलात् २६ अथराजनिनिर्यातेरामआश्रममागतः ॥ श्रुत्वातत्तस्यदौरात्म्यंचुक्रोधाहिरिवाहतः २७ घोरमादायपरशुंसतूणंचर्मकार्मुकम् ॥ अन्वधावतदुर्मर्षोमृगेंद्रइवयूथपम् २८ तमापतंतंभृगुवर्यमोजसाधनुर्धरंबाणपरश्वधायुधम् ॥ ऐणेयचर्मांबरमर्कधामभिर्युतंजटाभिर्ददृशेपुरींविशन् २९ अचोदयद्धस्तिरथाश्वपत्तिभिर्गदासिबाणर्ष्टिशतघ्निशक्तिभिः ॥ अक्षौहिणीःसप्तदशातिभीषणास्तारामएकोभगवानसूदयत् ३० यतोयतोऽसौप्रहरत्परश्वधोमनोऽनिलौजाःपरचक्रसूदनः ॥ ततस्ततश्छिन्नभुजोरुकंधरानिपेतुरुर्व्यांहतसूतवाहनाः ३१ दृष्ट्वास्वसैन्यंरुधिरौघकर्दमेरणाजिरेरामकुठारसायकैः ॥ विवृक्णवर्मध्वजचापविग्रहंनिपातितंहैहयआपतद्रुषा ३२ अथार्जुनःपंचशतेषुबाहुभिर्धनुःषुबाणान्युगपत्ससंदधे ॥ रामायरामोऽस्त्रभृतांसमग्रणीस्तान्येकधन्वेषुभिराच्छिनत्समम् ३३

अथ एकदार्जुनः मृगयां विचरन् जमदग्नेःआश्रमं अगमत् २३ जमदग्निः कामधेन्वा ससैन्यस्य तस्य आतिथ्यं चक्रे २४ राजा आत्मैश्वर्यादधिकं कामधेनोः सामर्थ्यं दृष्ट्वा तदर्हणं नाद्रियत यतःधेन्वां साभिलाषः २५ ततः अर्जुनेन चोदिताः दूताः सवत्सां क्रंदतीं धेनुं बलात् माहिष्मतीं निन्युः २६ अथ राजनि गते सति रामः आश्रमं एत्य तस्य तत् दौरात्म्यं श्रुत्वा अहिरिव चुक्रोध २७ ततः घोरं परशुं सतूणं चापं चर्म च आदाय अर्जुनं अन्वधावत् २८ राजा आपतंतं रामं वीक्ष्य सप्तदश अक्षौहिणीः सेनाः अचोदयत् २९ ताः भगवान् रामः एक एव असूदयत् ३० ३१ अर्जुनः स्वसैन्यं हतं दृष्ट्वा ३२ स्वयं पंचशतेषु धनुष्षु बाणान् युगपत्संदधे तदा इषुभिः तानि धनूंषि चिच्छेद ३३

मृधे सायकभुजान् अचलान् अंघ्रिपांश्चोत्क्षिप्य अभिधावतस्तस्य भुजान् चिच्छेद । अहेः ( भुजान् ) फणानिव ३४ ३५ समर्पयत् समार्पयत् ३६ ३७ ३८ अर्हणतां पूज्यतां
( लोकगुरुर्ब्रह्मा ) ३९ ( ब्राह्मी लक्ष्मीः ब्राह्मणस्य श्रीः ) सौरी सूर्यस्यप्रभेव ४० तीर्थसंसेवया चकारात् यमनियमैश्च । अच्युते चेतना चित्तं यस्यसः ४१ ॥ ॥ इति श्रीमद्भागवते महापुरा
णेनवमस्कंधटीकायां पंचदशोऽध्यायः ॥ १५ ॥ ॥ ७ ॥ ॥ षोडशे कार्तवीर्यसुतैर्जमदग्नेर्वधहेतुकः । रामस्य क्षत्रवधप्रोक्तो विश्वामित्रस्य चान्वयः ॥ १ ॥ १ २ किंचित् ईषत् चि
त्ररथे गंधर्वराजे स्पृहा यस्याः सा किंचिन्नसस्मारेतिवा ३ कलशं पुरोधाय अग्रे निधाय ४ व्यभिचारं मानसं ज्ञात्वा ५

पुनःस्वहस्तैरचलान्मृधेंऽघ्रिपानुत्क्षिप्यवेगादभिधावतोयुधि ॥ भुजान्कुठारेणकठोरनेमिनाचिच्छेदरामःप्रसभंत्वहेरिव ३४ कृत्तबाहोःशिरस्तस्यगिरेः
शृंगमिवाहरत् ॥ हतेपितरितत्पुत्राअयुतंदुद्रुवुर्भयात् ३५ अग्निहोत्रीमुपावर्त्यसवत्सांपरवीरहा ॥ समुपेत्याश्रमंपित्रेपरिक्लिष्टांसमर्पयत् ३६ स्वकर्मतत्कृतं
रामःपित्रेभ्रातृभ्यएवच ॥ वर्णयामासतच्छ्रुत्वाजमदग्निरभाषत ३७ रामराममहाबाहोभवान्पापमकारषित् ॥ अवधीन्नरदेवंयत्सर्वदेवमयंवृथा ३८ वयं
हिब्राह्मणास्तातक्षमयार्हणतांगताः ॥ ययालोकगुरुर्देवःपारमेष्ठ्यमगात्पदम् ३९ क्षमयारोचतेलक्ष्मीर्ब्राह्मीसौरीयथाप्रभा ॥ क्षमिणामाशुभगवांस्तु
ष्यतेहरिरीश्वरः ४० राज्ञोमूर्धाभिषिक्तस्यवधोब्रह्मवधाद्गुरुः ॥ तीर्थसंसेवयाचांहोजह्यंगाच्युतचेतनः ४१ ॥ इतिश्रीभागवतेमहापुराणेनवमस्कंधेहैहया
र्जुनवधोनामपंचदशोऽध्यायः १५ ॥ ॥ ७ ॥ ॥ श्रीशुकउवाच ॥ पित्रोपशिक्षितोरामस्तथेतिकुरुनंदन ॥ संवत्सरंतीर्थयात्रांचरित्वाश्रममाव्रजत् १
कदाचिद्रेणुकायातागंगायांपद्ममालिनम् ॥ गंधर्वराजंक्रीडंतंअप्सरोभिरपश्यत २ विलोकयंतीक्रीडंतमुदकार्थंनदींगता ॥ होमवेलांनसस्मारकिंचिच्चित्र
रथस्पृहा ३ कालात्ययंतंविलोक्यमुनेःशापविशंकिता ॥ आगत्यकलशंतस्थौपुरोधायकृतांजलिः ४ व्यभिचारंमुनिर्ज्ञात्वापत्न्याःप्रकुपितोऽब्रवीत् ॥ घ्न
तैनांपुत्रकाःपापामित्युक्तास्तेनचक्रिरे ५

पुनः अर्जुनः स्वहस्तैः मृधे अचलान् वृक्षांश्च उत्क्षिप्य वेगेन रामंअधावत ततोरामः कुठारेण तद्भुजान् शिरश्च चिच्छेद ३४ सहस्रार्जुने मृते सति अयुतं तत्पु
त्राः भयात् दुद्रुवुः ३५ रामः सवत्सां धेनुं गृहीत्वा आश्रमं एत्य पित्रे तां दत्वा ३६ कृतं कर्म कथयामास तदा जमदग्निः अभाषत ३७ भवान् पापं अकार्षीत्
सर्वदेवमयं राजानं वृथा अवधीत् ३८ वयं ब्राह्मणाः क्षमया पूज्यतां गताः ३९ क्षमिणां भगवान् आशु तुष्यति ४० मूर्धाभिषिक्तस्य राज्ञः वधः ब्रह्मवधादपि
महान् अतः त्वं अच्युते चित्तं निधाय तीर्थसंसेवया अघं जहि ४१ ॥ ॥ इति नवमे पंचदशः ॥ १५ ॥ ॥ ७ ॥ ॥ श्रीशुक उवाच ॥ ॥ रामः पित्राज्ञया
संवत्सरं तीर्थयात्रां चरित्वा आश्रमं आव्रजत् १ कदाचित् रेणुका जलार्थं गंगां गता तत्र अप्सरोभिः क्रीडंतं चित्ररथं दृष्ट्वा किंचित् गंधर्वे स्पृहावति सती होम
१४१ वेलां न सस्मार २ ३ ततः कालात्ययं ज्ञात्वा मुनेः शापशंकिता सती तं आगत्य कलशं अग्रे निधाय कृतांजलिः तस्थौ ४ तदा मुनिः तस्याः मानसं व्यभिचारं
ज्ञात्वा कुपितः सन् आह हे पुत्रकाः पापां एनां घ्नत एवमुक्तास्ते वधं न चक्रुः ५

।।०न०

॥२६॥

आज्ञातिलंघिनांभ्रातृणांमातुश्चवधेसंचोदितःसन् मुनेर्यः समाधिस्तपश्चतयोःप्रभावज्ञः यदि नहन्यां तर्हिमामपिशप्तुंसमर्थः यदि हन्यांतर्हि मयिसंतुष्टःसन् तानपिजीवयितुंसमर्थइति अ०
जानन्नित्यर्थः ६ ७ नन्वतिनिंदितंतत्कथंकृतवान् तत्राह । पितुर्विद्वानिति पूर्वोक्तएवाभिप्रायः ८ सर्वक्षत्रियवधेकारणंवक्तुमाह । येर्जुनस्यसुताइत्यादिना ९ १० ममवत्याधेशिताधी
येनतम् ११ १२ १३ १४ दुःखादीनांवेगेनविमोहितः ( तत्र रोषःक्रोधः । अमर्षोऽसहनता आर्तिःपीडा । शोकः संतापः ) १५ १६ ब्रह्मघ्नैर्विहताश्रीर्यस्यास्तां । हेराजन् सरामस्तेषांशीर्ष ॥१६॥
भिर्माहिष्मत्यांमध्येमहांतंगिरिंचक्रे १७ तेषांरक्तेनअब्रह्मण्यानांभयावहांघोरांनदींचचक्रे तथापिसर्वक्षत्रियवधेकिंकारणंतदाह । हेतुंकृत्वेतिसार्धेन अमंगलकारिणिअन्यायवर्तिनिसति १८

रामःसंचोदितःपित्राभ्रातृन्मात्रासहावधीत् ॥ प्रभावज्ञोमुनेःसम्यक्समाधेस्तपसश्चसः ६ वरेणच्छंदयामासप्रीतःसत्यवतीसुतः ॥ वव्रेहतानांरामोपिजी
वितंचास्मृतिंवधे ७ उत्तस्थुस्तेकुशलिनोनिद्रापायइवांजसा ॥ पितुर्विद्वांस्तपोवीर्यंरामश्चक्रेसुहृद्वधम् ८ येर्जुनस्यसुताराजन्स्मरंतःस्वपितुर्वधम् ॥
रामवीर्यपराभूतालेभिरेशर्मनक्वचित् ९ एकदाश्रमतोरामेसभ्रातरिवनंगते ॥ वैरंसिसाधयिषवोलब्धच्छिद्राउपागमन् १० दृष्ट्वाग्न्यगारआसीनमावेशित
धियंमुनिम् ॥ भगवत्युत्तमश्लोकेजघ्नुस्तेपापनिश्चयाः ११ याच्यमानाःकृपणयाराममात्रातिदारुणाः ॥ प्रसह्यशिरउत्कृत्यनिन्युस्तेक्षत्रबंधवः १२ रे
णुकादुःखशोकार्तानिघ्नंत्यात्मानमात्मना ॥ रामरामेतितातेतिविचुक्रोशोच्चकैःसती १३ तदुपश्रुत्यदूरस्थोहारामेत्यार्तवत्स्वनम् ॥ त्वरयाश्रममासाद्यद
दृशेपितरंहतम् १४ तद्दुःखरोषामर्षार्तिशोकवेगविमोहितः ॥ हातातसाधोधर्मिष्ठत्यक्त्वास्मान्स्वर्गतोभवान् १५ विलप्यैवंपितुर्देहंनिधायभ्रातृषुस्वय
म् ॥ प्रगृह्यपरशुंरामःक्षत्रांतायमनोदधे १६ गत्वामाहिष्मतींरामोब्रह्मघ्नविहतश्रियम् ॥ तस्यांसशीर्षभीराजन्मध्येचक्रेमहागिरिम् १७ तद्रक्तेननदीं
घोरामब्रह्मण्यभयावहाम् ॥ हेतुंकृत्वापितृवधंक्षत्रेऽमंगलकारिणि १८

तदा रामः मुनेः प्रभावज्ञः पित्रा संचोदितः सन् मात्रा सह भ्रातृन् अवधीत् ६ तदा प्रसन्नः जमदग्निः वरेण छंदयामास रामोपि निहतानां जीवितं वधे अस्मृ
तिं च वव्रे ७ तदा ते निद्रापाये इव कुशलिनः उत्तस्थुः रामः पितुः तपोवीर्यं विद्वान् सुहृद्वधं चक्रे ८ अथ ये अर्जुनस्य दशसहस्रं पुत्राः पितुर्वधं स्मरंतः शर्म न
लेभिरे ९ एकदा आश्रमतो रामे वनं गते सति वैरं साधयंतः संतः आश्रमं एत्य १० होमशालायां समाधिस्थं मुनिं दृष्ट्वा जघ्नुः ११ तदा राममात्रा याच्यमाना
अपि शिर उत्कृत्य निन्युः १२ तदा शोकार्ता रेणुका रामरामेति चुक्रोश १३ रामः तत् श्रुत्वा आश्रमं एत्य पितरं हतं ददर्श १४ तदा शोकमोहितः रामः किं
चिद्विलप्य पितुर्देहं भ्रातृषु निधाय परशुं गृहीत्वा क्षत्रांताय मनो दधे १५ १६ ततः माहिष्मतीं पुरीं गत्वा तेषां शीर्षभिः महागिरिं चक्रे १७ तद्रक्तेन घो ॥२६॥
रां नदीं चक्रे पितृवधं हेतुं कृत्वा १८

त्रिःसप्तकृत्वोरेणुकयादुःखावेशादुदरताडनंकृतंततोरामस्तावत्कृत्वःक्षत्रमुत्सादितवानितिप्रसिद्धिः ( स्यमंतपंचकाख्येक्षेत्रे ) १९ ( पितुः शिरः कायेनसंधायबर्हिषिअग्नौआधाय आ
ज्यभागादिपूर्वकेयमर्थः बर्हिःकुशछुताशयोरित्यभिधानम् ) २० २१ २२ २३ संज्ञानंस्मृतिः ( ज्योतिर्वा ) तदेवलक्षणंचिह्नंयस्यतंस्वदेहंलब्ध्वा सप्तर्षीणांमंडलेसप्तमऋषिरभूत् २४ बृहद्व
तंवेदम् । वेदप्रवर्तकेषुसप्तर्षिष्वेकतमोभविष्यतीत्यर्थः २५ २६ भुवोभारंअहरत् । भारमेवाह नृपानिति २७ तदेवंप्रसक्तानुप्रसक्तंसमाप्य प्रस्तुतमाह गाधेरिति महातेजाविश्वामित्रः २८
एकशतंएकोत्तरशतं तेसर्वेलिंगसमवायन्यायेनप्राणभृतउपदधातीतिवन्मधुच्छंदसएवोच्यंतेतथाचश्रुतिः ' तस्यहविश्वामित्रस्यैकशतंपुत्राआसुः पंचाशदेवज्यायांसोमधुच्छंदसःपंचाश
त्कनीयांसः' इत्यादि तत्रचविश्वामित्रपुत्रेषुभार्गवस्याजीगर्तस्यदेवरातस्यज्येष्ठत्वमवगम्यते । तथा आश्वलायनबौधायनादिभिःकौशिकानांदेवरातप्रवरत्वमुक्तं । प्रवरश्चतस्मिन्नेववंशे
अवांतरभेदः नतुवंशांतरं तथाचस्मृतिः 'एकएवऋषिर्यावत्प्रवरेष्वनुवर्तते । तावत्समानगोत्रत्वंविनाभृग्वंगिरोगणात्' इति २९ तत्कुतोभृगुवंशभवस्यदेवरातस्यकौशिकप्रवरत्वमित्याशं
क्यतदुपपादयन्नाह । पुत्रंकृत्वेत्यादियावत्समाधि । पूर्वमजीगर्तसुतत्वेमध्यमत्वेनापितृभ्यांममतांविहायविक्रीतत्वात् तस्यकृपयासुतानाह ज्येष्ठएषःप्रकल्प्यतामिति ३०

त्रिःसप्तकृत्वःपृथिवींकृत्वानिःक्षत्रियांप्रभुः ॥ स्यमंतपंचकेचक्रेशोणितोदान्ह्रदान्नव १९ पितुःकायेनसंधायशिरआधायबर्हिषि ॥ सर्वदेवमयंदेवमात्मानमय
जन्मखैः २० ददौप्राचींदिशंहोत्रेब्रह्मणेदक्षिणांदिशम् ॥ अध्वर्यवेप्रतीचींवैउद्गात्रेउत्तरांदिशम् २१ अन्येभ्योऽवांतरदिशःकश्यपायचमध्यतः ॥ आर्या
वर्तमुपद्रष्ट्रेसदस्येभ्यस्ततःपरम् २२ ततश्चावभृथस्नानाविधूताशेषकिल्बिषः ॥ सरस्वत्यांब्रह्मनद्यांरेजेव्यभ्रइवांशुमान् २३ स्वदेहंजमदग्निस्तुलब्ध्वा
संज्ञानलक्षणम् ॥ ऋषीणांमंडलेसोऽभूत्सप्तमोरामपूजितः २४ जामदग्न्योपिभगवान्रामःकमललोचनः ॥ आगामिन्यंतरेराजन्वर्तयिष्यतिवैबृहत् २५
आस्तेद्यापिमहेंद्राद्रौन्यस्तदंडःप्रशांतधीः ॥ उपगीयमानचरितःसिद्धगंधर्वचारणैः २६ एवंभृगुषुविश्वात्माभगवान्हरिरीश्वरः ॥ अवतीर्यपरंभारंभुवो
ऽहन्बहुशोनृपान् २७ गाधेरभून्महातेजाःसमिद्धइवपावकः ॥ तपसाक्षात्रमुत्सृज्ययोलेभेब्रह्मवर्चसम् २८ विश्वामित्रस्यचैवासन्पुत्राएकशतंनृप ॥ म
ध्यमस्तुमधुच्छंदामधुच्छंदसएवते २९ पुत्रंकृत्वाशुनःशेपंदेवरातंचभार्गवम् ॥ आजीगर्तंसुतानाहज्येष्ठएषप्रकल्प्यताम् ३०

एकविंशतिवारं निःक्षत्रां पृथ्वीं कृत्वा स्यमंतपंचके शोणितोदान् नव ह्रदान् चक्रे १९ शिरः आदाय पितुः काये निधाय सर्वदेवमयं आत्मानं मखैः अयजत् २०
तदा होत्रे प्राचीं ददौ ब्रह्मणे दक्षिणां अध्वर्यवे प्रतीचीं उद्गात्रे उत्तराम् २१ अन्येभ्यो विदिशः कश्यपाय मध्यमां उपद्रष्ट्रे आर्यावर्तं ददौ २२ ततः सरस्वत्यां अव
भृथस्नानेन गतपापः सन् अंशुमानिव रेजे २३ जमदग्नेः देहं लब्ध्वा ऋषीणां मंडले रामपूजितःसप्तमः अभवत् २४ रामोपि आगामिनि मन्वंतरे वेदप्रवर्तको भवि
ष्यति २५ अद्यापि सिद्धगंधर्वचारणैः गीयमानचरितः महेंद्रपर्वते आस्ते २६ एवं श्रीहरिः भृगुषु अवतीर्य भुवः भारं अहरत् २७ अथ गाधेः महातेजाः विश्वा
मित्रोऽभूत् यस्तपसा क्षत्रं हित्वा ब्रह्मवर्चसं लेभे २८ यस्य एकशतं पुत्राः आसन् २९ अन्यश्च यो वै हरिश्चंद्रमखे देवैः संरक्षितः तं शुनःशेपं विश्वामित्रः पुत्रत्वेन
स्वीकृत्य सुतानाह अयं ज्येष्ठत्वे प्रकल्प्यताम् ३०

एतदेवस्पष्टयितुंविशिनष्टि यइतिद्वाभ्यां मुमुचेअमुच्यत ३१ भार्गवोपिभाषितुगाधेर्वंशजेषुदेवरातइतिख्यातः ३२ ततस्वज्येष्ठत्वंकुशलंनमेनिरे । मध्यमवस्यानर्थात्वंहस्त्वंहनागीकृत वंतः । मुनिर्विश्वामित्रः ३३ पंचाशताकनिष्ठैःसाकंसमध्यमोम धुच्छंदाउवाच । सोऽस्माकंयतज्येष्ठत्वंकनिष्ठत्वंवाभवान् पितासंजानीतेतस्मिन्वयंतिष्ठामेति ३४ एवमुक्त्वा मंत्रदृशं 'कस्य नूनंकतमस्यामृतानां'इत्यादिमंत्राणांद्रष्टारंशुनःशेपंज्येष्ठंचक्रुः । कथंचक्रुस्तदाह । वयंसर्वेत्वामन्वंचःस्महि अनुगंतारः कनिष्ठाःस्मेत्यर्थः । ततःप्रसन्नोविश्वामित्रः तान्सुतानाह । वी रवंतःपुत्रवंतोभविष्यथ । येयूयंमेमानंपूज्यतांअनुगृह्णंतःअनुवर्तमानाःसंतःमांवीरवंतंपुत्रवंतंअकर्त कृतवंतइत्यर्थः ३५ हेकुशिकाःएषदेवरातः वःयुष्मदीयःकौशिकएव । यतोवीरः म त्पुत्रःतमेवअन्वितअनुगच्छत । अन्येचाष्टकादयःतस्यसुताआसन् ३६ उपसंहरति एवमिति । एकेशप्ताएकेऽनुगृहीताअन्यस्तुपुत्रत्वेनस्वीकृतइति एवंकौशिकगोत्रंपृथग्विधंनानाप्रकारंजा तम् । तच्चप्रवरांतरमापन्नंप्राप्तंहियस्मात् एवंदेवरातज्येष्ठत्वेनतत्प्रकल्पितम् ॥ ३७ ॥ ॥ इतिश्रीभागवतेमहापुराणेनवमस्कंधेटीकायांषोडशोऽध्यायः ॥ १६ ॥ ॥ ७ ॥ आयोः सप्तद शेस्वैलज्येष्ठपुत्रस्यपंचसु । सुतेषुक्षत्रवृद्धादिषत्सुर्णांवंशवर्णनम् ॥१॥इहश्रीकृष्णावतारप्रस्तावायवंशानुक्रमणमैलादिक्रमेणप्रक्रांतमिति यस्यवंशेकृष्ण।वतारस्तस्यवंशोऽतिविततत्वादंते निरूप्यते । अतःपुरूरवसःपुत्राणांपंचानांकनिष्ठानांवंशाननुक्त्वेदानींप्रथमस्यवंशमाह । यइति एवंनाहुषययातियदुप्रभृतिष्वपिद्रष्टव्यं क्षत्रवृद्धःक्षत्रवृद्धाख्यः१(वीर्यवान् पराक्रमी) २ ३

यो वै हरिश्चंद्रमखे विक्रीतः पुरुषः पशुः ॥ स्तुत्वा देवान्प्रजेशादीन्मुमुचे पाशबंधनात् ३१ यो रातो देवयजने देवैर्गाधिषु तापसः ॥ देवरात इति ख्यातः शुनःशे पस्स भार्गवः ३२ ये मधुच्छंदसो ज्येष्ठाः कुशलं मेनिरे न तत् ॥ अशपत्तान्मुनिः क्रुद्धो म्लेच्छा भवत दुर्जनाः ३३ स होवाच मधुच्छंदाः सार्धं पंचाशता ततः ॥ य न्नो भवान्संजानीते तस्मिंस्तिष्ठामहे वयम् ३४ ज्येष्ठं मंत्रदृशं चक्रुस्त्वामन्वंचो वयं स्महि ॥ विश्वामित्रः सुतानाह वीरवंतो भविष्यथ ॥ ये मानं मेऽनुगृह्णंतो वी रवंतमकर्त माम् ३५ एष वः कुशिका वीरो देवरातस्तमन्वित ॥ अन्ये चाष्टकहारीतजयक्रतुमदादयः ३६ एवं कौशिकगोत्रं तु विश्वामित्रैः पृथग्विधम् ॥ प्रव रांतरमापन्नं तद्धि चैवं विकल्पितम् ३७ ॥ इतिश्रीभागवते महापुराणे नवमस्कंधे षोडशोऽध्यायः १६ ॥ ॥ श्रीशुक उवाच ॥ यः पुरूरवसः पुत्र आयुस्त स्याभवन्सुताः ॥ नहुषः क्षत्रवृद्धश्च रजी रंभश्च वीर्यवान् १ अनेना इति राजेंद्र शृणु क्षत्रवृधोऽन्वयम् ॥ क्षत्रवृद्धसुतस्यासन्सुहोत्रस्यात्मजास्त्रयः २ काश्यः कुशो गृत्समद इति गृत्समदादभूत् ॥ शुनकः शौनको यस्य बह्वृचप्रवरो मुनिः ३

३१ ३२ ये ज्येष्ठाः पञ्चाशत् ते न मेनिरे क्रुद्धः मुनिः म्लेच्छा भवत इति तान् अशपत् ३३ ततः कनिष्ठान् पञ्चाशतः आह अयं ज्येष्ठः कल्पताम् ३४ तदा ज्येष्ठं चक्रुः तदा विश्वामित्रः पुत्रवंतो भविष्यथेति तान् आशिषं ददौ ३५ ३६ एवं कौशिकगोत्रं पृथग्विधं कृतं प्रवरांतरं च आपन्नं तथा अन्ये च विश्वामित्रस्य सुताः अष्टकादयः आसन् ३७ ॥ इति नवमे षोडशः ॥ १६ ॥ ॥ श्रीशुक उवाच ॥ यः पुरूरवसः पुत्रः आयुः तस्य पंच पुत्राः अभवन् नहुषः क्षत्रवृद्धः रजिः रंभः अनेनाः इति १ क्षत्रवृद्धस्य सुहोत्रः तस्य त्रयः पुत्राः २ काश्यः कुशः गृत्समदः इति गृत्समदात् शुनकः तस्य शौनकः अभवत् ३

दीर्घतमसः पिता ( दैर्घतमसो दीर्घतमसोऽपत्यम् ) ४ स्मृतमात्रएवाऽर्तिर्मदुःखंनाशयतीतितथा (तस्य धन्वंतरेःपुत्रः) ५ ततःप्रतर्दनादिशब्दवाच्यात् द्युमतः सकाशात् अलर्कादयः
६ ७ अलर्काद संततिसंज्ञकः ८ सत्यकेतोर्धृष्टकेतुः तस्मात्सुकुमारः तस्माद्वीतिहोत्रः तस्यभर्गः अतोभर्गाद्भार्गभूमिः ९ काशयःकाशेर्वंश्याः । काशेः प्रोक्ताःबहस्यक्षत्रवृद्धस्यान्वयमयं
वेयांवीतितथा १० ततःअनेनसः शुद्धोजज्ञे ११ कृतकृत्यः सः यतआत्मवान् ज्ञानी अतः पुत्रोत्पादनंनकृतवानित्यर्थः १२ १३ १४ तेषांमतिभ्रंशायगुरुणाबृहस्पतिनाअभिचारविधा
नेनाग्नौहूयमानेसति(बलाभिदिंद्रः) १५

काशस्यकाशिस्तत्पुत्रोराष्ट्रोदीर्घतमःपिता ॥ धन्वंतरिर्दैर्घतमआयुर्वेदप्रवर्तकः ४ यज्ञभुग्वासुदेवांशःस्मृतमात्रार्तिनाशनः ॥ तत्पुत्रःकेतुमानस्य जज्ञे
भीमरथस्ततः ५ दिवोदासोद्युमांस्तस्मात्प्रतर्दनइतिस्मृतः ॥ सएवशत्रुजिद्वत्सऋतध्वजइतीरितः ॥ तथाकुवलयाश्वेतिप्रोक्तोऽलर्कादयस्ततः ६ ष
ष्टिवर्षसहस्राणिषष्टिवर्षशतानिच ॥ नालर्कादपरोराजन्बुभुजेमेदिनींयुवा ७ अलर्कात्संततिस्तस्मात्सुनीथोथसुकेतनः ॥ धर्मकेतुःसुतस्तस्मात्सत्यके
तुरजायत ८ धृष्टकेतुःसुतस्तस्मात्सुकुमारःक्षितीश्वरः ॥ वीतिहोत्रोस्यभर्गोऽतोभार्गभूमिरभून्नृप ९ इतीमेकाशयोभूपाःक्षत्रवृद्धान्वयायिनः ॥ रंभस्य
रभसःपुत्रोगभीरश्चाक्रियस्ततः १० तस्यक्षेत्रेब्रह्मजज्ञेशृणुवंशमनेनसः ॥ शुद्धस्ततःशुचिस्तस्माच्चित्रकृद्धर्मसारथिः ११ ततःशांतरयोजज्ञेकृतकृत्यः
सआत्मवान् ॥ रजेःपंचशतान्यासन्पुत्राणाममितौजसाम् १२ देवैरभ्यर्थितोदैत्यान्हत्वेंद्रायाददाद्दिवम् ॥ इंद्रस्तस्मैपुनर्दत्त्वागृहीत्वाचरणौरजेः १३ आत्मा
नमर्पयामासप्रह्लादाद्यरिशंकितः ॥ पितर्युपरतेपुत्रायाचमानायनोददुः १४ त्रिविष्टपंमहेंद्राययज्ञभागान्समाददुः ॥ गुरुणाहूयमानेऽग्नौबलभित्तनयान्रजेः १५

काश्यात् काशिः तस्य राष्ट्रः तस्य दीर्घतमाः तस्य धन्वंतरिः यः वासुदेवांशः आयुर्वेदप्रवर्तकः ४ तस्य केतुमान् तस्य भीमरथः ५ तस्य दिवोदासः तस्य द्युमान् स
एव प्रतर्दनः शत्रुजित् ऋतध्वजः कुवलयाश्व इति नामचतुष्टयेन उक्तः तस्य अलर्कादयः ६ सः अलर्कः षष्टिवर्षसहस्राणि षष्टिवर्षशतानि च मेदिनीं बुभुजे ७ अ
लर्कस्य संततिः पुत्रः तस्य सुनीथः तस्य सुकेतनः तस्य धर्मकेतुः तस्मात् सत्यकेतुः ८ तस्य धृष्टकेतुः तस्य सुकुमारः तस्य वीतिहोत्रः तस्य भर्गः तस्य भार्गभूमिः ९
इमे काशिवंश्याः भूपाः क्षत्रवृद्धान्वयायिनः । अथ आयुपुत्रस्य रंभस्य रभसो जातः तस्य गभीरः तस्य अक्रियः १० तत्क्षेत्रे ब्रह्म जज्ञे आयुपुत्रस्य अनेनसः शुद्धो जातः
तस्य शुचिः तस्य चित्रकृत् तस्य धर्मसारथिः ११ तस्य शांतरयः तस्य वंशो न आयुपुत्रस्य रजेः पंचशतं पुत्राः बभूवुः १२ यः रजिः देवैः प्रार्थितः दैत्यान् हत्वा महेंद्राय
दिवं ददौ इंद्रः तस्मै पुनः दिवं दत्वा तं नत्वा १३ तच्चरणौ धृत्वा प्रह्लादाद्यरिशंकितः आत्मानमपि अर्पयामास पितर्युपरते सति पुत्राः याचमानाय इंद्राय स्वर्गं न ददुः
१४ तदा गुरुणाभिचारविधानेन अग्नौ हूयमाने सति इंद्रः रजेः पुत्रानवधीत् न कश्चिदवशिष्टः सुहोत्रपुत्रस्य कुशस्य प्रतिः पुत्रः तस्य संजयः तस्य जयः १५

१ धन्वन्तरिर्दैर्घतमस इति लिखितपुस्तके पाठः ।

सिंहावलोकनेनाह । क्षात्रवृद्धात् क्षत्रवृद्धपौत्रात् कुशात् प्रतिःप्रवेः संजयः १६ १७ १८ इतिश्रीभागवतेमहापुराणेनवमस्कंधेटीकायांसप्तदशोऽध्यायः ॥ १७ ॥ ॥ ७ ॥ अष्टादशेय
यातेस्तुनाहुषस्यकथोच्यते । यस्यपंचसुपुत्रेषुकनीयानग्रहीद्धरां ॥ ६ ॥ १ तस्यराज्यपरिणामंअनर्थावहत्वंवेत्तीतितथा तत्रहेतुः । यत्रेति २ ( इंद्राण्याधर्षणात् बलात्कारनिमित्तात् )
द्विजैरगस्त्यादिभिः स्थानात्स्वर्गात् ( भ्रंशिते ऽजगरत्वंमहासर्पत्वं ) ३ यवीयसोभ्रातॄनादिशत् । काव्यस्यशुक्रस्यवृषपर्वणश्चकन्याभ्यांकृतदारःसन् ४ ५ नात्रप्रतिलोमवादोषः ईश्वर
घटनादितिदर्शयन्कथामाह । एकदेत्यादिनाप्रतिजग्राहतद्वचइत्यंतेन । गुरोः शुक्रस्यपुत्र्यादेवयान्याचव्यचरदितिद्वयोरन्वयः ६ कलगीताअलयोयेषुतानिनलिनीपुलिनानियस्मिन्
तस्मिन्पुरोद्याने अबलाशर्मिष्ठा ७ सिंचतीर्मिथः अन्योन्यं सिंचंत्यः ८ ९

अवधीद्भृंशिवान्मार्गान्नकश्चिदवशेषितः ॥ कुशात्प्रतिःक्षात्रवृद्धात्संजयस्तत्सुतोजयः १६ ततःकृतःकृतस्यापिजज्ञेहर्यवनोनृपः ॥ सहदेवस्ततोहीनो
जयसेनस्तुतत्सुतः १७ संकृतिस्तस्यचजयःक्षत्रधर्मामहारथः ॥ क्षत्रवृद्धान्वयाभूपाःशृणुवंशंचनाहुषम् १८ ॥ इतिश्रीभागवतेमहापुराणेनवमस्कंधे
सप्तदशोऽध्यायः १७ ॥ ॥ ॥ ॥ श्रीशुकउवाच ॥ यतिर्ययातिःशर्यातिरायतिर्वियतिःकृतिः ॥ षडिमेनहुषस्यासन्निंद्रियाणीवदेहिनः १ राज्यंनै
च्छद्यतिःपित्रादत्तंतत्परिणामवित् ॥ यत्रप्रविष्टःपुरुषआत्मानंनावबुध्यते २ पितरिभ्रंशितेस्थानादिंद्राण्याधर्षणाद्द्विजैः ॥ प्रापितेजगरत्वंवैययातिरभ
वन्नृपः ३ चतसृष्वादिशद्दिक्षुभ्रातॄन्भ्रातायवीयसः ॥ कृतदारोजुगोपोर्वीकाव्यस्यवृषपर्वणः ४ ॥ राजोवाच ॥ ब्रह्मर्षिर्भगवान्काव्यःक्षत्रबंधुश्चनाहुषः ॥
राजन्यविप्रयोःकस्माद्विवाहःप्रतिलोमकः ५ ॥ श्रीशुकउवाच ॥ एकदादानवेंद्रस्यशर्मिष्ठानामकन्यका ॥ सखीसहस्रसंयुक्तागुरुपुत्र्याचभामिनी ६ देवया
न्यापुरोद्यानेपुष्पितद्रुमसंकुले ॥ व्यचरत्कलगीतालिनलिनीपुलिनेऽबला ७ ताजलाशयमासाद्यकन्याःकमललोचनाः ॥ तीरेन्यस्यदुकूलानिविजह्रुः
सिंचतीर्मिथः ८ वीक्ष्यव्रजंतंगिरिशंसहदेव्यावृषस्थितम् ॥ सहसोत्तीर्यवासांसिपर्यधुर्व्रीडिताःस्त्रियः ९

तस्य कृतः तस्य हर्यवनः तस्य सहदेवः तस्य अहीनः तस्य जयसेनः १७ तस्य संकृतिः तस्य जयः तस्य क्षत्रधर्माइति । अथनहुषवंशं शृणु १८ ॥ इति नवमे
सप्तदशः १७ ॥ ॥ ५ ॥ ॥ श्रीशुक उवाच ॥ यतिः ययातिः संयातिः आयतिः वियतिः कृतिःइति षट् नहुषपुत्राः बभूवुः १ यतिः पित्रा दत्तं राज्यं नैच्छत् यतः
तत्परिणामवित् २ नहुषे पितरि इंद्राण्या धर्षणात् द्विजैः स्थानाद्भ्रंशिते अजगरत्वं प्रापिते सति पश्चात् ययातिः नृपः अभवत् ३ सः चतुर्दिक्षु कनिष्ठान्भ्रातॄन् आदिशत्
ततः काव्यस्य वृषपर्वणश्च कन्याभ्यां कृतदारः सन् उर्वीं जुगोप ४ ॥ राजोवाच ॥ ब्रह्मर्षिः भगवान् काव्यः ययातिस्तु क्षत्रियः एवं सति अनयोः प्रतिलोमको
विवाहः कथंतत्कथ्यताम् ५ ॥ श्रीशुकउवाच ॥ एकदा दानवेंद्रस्य शर्मिष्ठा नाम कन्या सहस्रसखीभिः युता देवयान्यासह पुरोद्याने विजहार ६ ७ ताः तीरे दुकूला
नि विन्यस्य जलाशये विजह्रुः तदा देव्या सह वृषस्थितं व्रजंतं शिवं वीक्ष्य व्रीडिताः सत्यः सरस उत्तीर्य वासांसिपर्यधुः ८ ९

अजानतीस्वीयंमत्वा गुरुपुत्र्यावासःसमव्ययत्पर्यधात् १० असांप्रतंअन्याय्यम् ११ अन्यायमेवब्राह्मणोत्कर्षवर्णनेनव्यनक्ति यैरिति त्रिभिः (इदंविश्वं)। येब्राह्मणाः परस्यपुंसोमुखंमुखा
दुत्पन्नत्वेनगृहीतद्वारत्वेनचश्रेष्ठाइत्यर्थःज्योतिर्ब्रह्मरूपं। पंथावेदमार्गः १२ १३ तदेवंब्राह्मणमात्रमेवतावत्पूज्यंतत्रापित्वयंभृगवः अस्याश्चपिता नःशिष्यःपुत्रं सत्यपिअस्माभिर्धार्यवासइ
यमसतीधृतवती १४। ( धर्षितानिर्भर्त्सितेत्यर्थः ) १५ ( बहुकत्थसे। बलिभुजःश्वानःकाकावा ) १६ १७ १८ १९ २० निषिद्धोयंप्रतिलोमसंबंधइतिचेत्तत्राह। एषइति २१ ब्राह्म
णमेव त्वं वृणीहि किमनेनाग्रहेणेतिचेत्तत्राह नब्राह्मणइति। बृहस्पतेःसुतःकचःशुक्रान्मृतसंजीविनींविद्यामध्यगात्। तदाचदेवयानीतंपतिंचकमे। सचगुरुपुत्रीममपूज्येति नतामु
ववाह। ततश्चकुपितासतीतवेयंविद्या निष्फलाभवत्वितितं शशाप सचतंनब्राह्मणः पतिर्नभवेदितितां शशाप तदेतदाह यमहमशपंतस्यशापात् २२

शर्मिष्ठाऽजानतीवासोगुरुपुत्र्याःसमव्ययत् ॥ स्वीयंमत्वाप्रकुपितादेवयानीदमब्रवीत् १० अहोनिरीक्ष्यतामस्यादास्याःकर्मह्यसांप्रतम् ॥ अस्मद्धार्यंधृ
तवतीशुनीवहविरध्वरे ११ यैरिदंतपसासृष्टंमुखंपुंसःपरस्यये ॥ धार्यतेयैरिहज्योतिःशिवःपंथाश्चदर्शितः १२ यान्वंत्युपतिष्ठंतेलोकनाथाःसुरेश्वराः ॥
भगवानपिविश्वात्मापावनःश्रीनिकेतनः १३ वयंतत्रापिभृगवःशिष्योस्यानःपिताऽसुरः ॥ अस्मद्धार्यंधृतवतीशूद्रोवेदमिवासती १४ एवंक्षिपंतींशर्मि
ष्ठागुरुपुत्रीमभाषत ॥ रुषाश्वसंत्युरंगीवधर्षितादष्टदच्छदा १५ आत्मवृत्तमविज्ञायकत्थसेबहुभिक्षुकी ॥ किंनप्रतीक्षसेऽस्माकंगृहान्बलिभुजोयथा १६
एवंविधैःसुपरुषैःक्षिप्त्वाऽऽचार्यसुतांसतीम् ॥ शर्मिष्ठाप्राक्षिपत्कूपेवासआदायमन्युना १७ तस्यांगतायांस्वगृहंययातिर्मृगयांचरन् ॥ प्राप्तोयदृच्छया
कूपेजलार्थीतांददर्शह १८ दत्त्वास्वमुत्तरंवासस्तस्यैराजाविवाससे ॥ गृहीत्वापाणिनापाणिमुज्जहारदयापरः १९ तंवीरमाहौशनसीप्रेमनिर्भरयागिरा ॥
राजंस्त्वयागृहीतोमेपाणिःपरपुरंजय २० हस्तग्राहोऽपरोमाभूद्गृहीतायास्त्वयाहिमे ॥ एषईशकृतोवीरसंबंधोनोनपौरुषः २१ यदिदंकूपमग्नायाभवतो
दर्शनंमम ॥ नब्राह्मणोमेभवितात्वहस्तग्र होमहाभुज ॥ कचस्यबार्हस्पत्यस्यशापाद्यमशपंपुरा २२

तदा अजानती शर्मिष्ठा गुरुपुत्र्याः वासः स्वीयं मत्वा पर्यधात् तदा कुपिता देवयानी इदं अब्रवीत् १० अहो अस्याः दास्याः अयोग्यं कर्म निरीक्षताम् अस्मद्धा
र्यं धृतवती शुनीव हविरध्वरे ११ अहो वयं ब्राह्मणाः परमात्मनः मुख १२ यान् देवाः हरिरपि स्तुवंते १३ तत्रापि मत्पितुः शिष्यस्य त्वं कन्या शूद्रः वेदमिव
असती त्वं अस्मद्धार्यं कथं धृतवती १४ एवं शपंतीं गुरुपुत्रीं क्रुद्धा शर्मिष्ठा अभाषत १५ हे भिक्षुकि आत्मवृत्तं अज्ञाय किं बहु कत्थसे अस्माकं किं न प्रतीक्षसे
१४४ बलिभुजो यथा १६ एवंविधैः दुष्टवाक्यैः गुरुपुत्रीं निंद्य वासः आदाय देवयानीं कूपे प्राक्षिप्य स्वगृहे अगात् १७ तस्यां गतायां ययातिः मृगयांचरन् यदृच्छया
तत्र प्राप्य जलार्थी सन् कूपे तां नग्नां दृष्ट्वा १८ तस्यै स्वं उत्तरं वासो दत्त्वा पाणिना गृहीत्वा कूपात्तां उज्जहार १९ देवयानी तं आह हे राजन् त्वया मे पाणिः
गृहीतः २० अतः मया त्वं वृतः एषः ईशकृतः संबंधः २१ कचस्य शापात् मे ब्राह्मणः पतिर्न भविता २२

अशास्त्रीयत्वादनभिप्रेतमपि दैवेनोपहृतं प्रापितं बुद्ध्वा तद्वृत्तं तस्यां सकामं स्वमनश्च बुद्ध्वा नह्यधर्मे मदीयं मनः प्रविशेदिति युक्तं मत्वा तस्या वचः प्रतिजग्राह अंगीकृतवान् २३ शर्मिष्ठासंबंधोपि दैववशादेवाभवदिति दर्शयन्नाह गते राजनीति नवभिः । उक्तं मिथुकीत्यादि । कृतं कूपप्रक्षेपादि ( तच्च सर्वं न्यवेदयत ) २४ कापोतीं ( वृत्तिं ) उंछवृत्तिं २५ प्रत्यनीकाद्देवास्ते विवक्षिता जयं प्रापणीया इत्यभिप्रेतं यस्य तथाभूतं ज्ञात्वा प्रत्यनीकानां विवक्षितमिति वा २६ ( अस्या देवयान्याः कामोऽपेक्षा ) २७ (तथेत्यंगीकृत्य वृषपर्वण्यवस्थिते यतो यत्र ) सानुगास्त्रीसहिता शर्मिष्ठा मामनुयास्यतीति २८ ततस्मान्निर्गताच्छुक्रात्स्वानां संकटं वीक्ष्य ततस्मादवस्थिताद्‌र्थस्य प्रयोजनस्य गौरवं च वीक्ष्य ( शर्मिष्ठा देवयानीं दासीवत् पर्यचरत् ) २९ तल्पेन भार्याः नोपगच्छेरित्यर्थः ३० अपत्यार्थमृतुकालप्रार्थनात्तस्याः कामपूरणं धर्मं अवेक्ष्य शुक्रस्य वचश्च स्मरन् दिष्टं दैवप्रापितमेव तत्संगं अभ्यपद्यत न तु कामत इत्यर्थः । (तथा च श्रुतिः " न कांचन परिहरेत् तद्‌व्रतम् " इति) ३१ ३२ ( यदुं तुर्वसुं च व्यजायत सुषुवे ) ३३ आसुर्याः शर्मिष्ठायाः भर्तुः सकाशात् ३४

ययातिरनभिप्रेतं दैवोपहृतमात्मनः ॥ मनस्तु तद्गतं बुद्ध्वा प्रतिजग्राह तद्वचः २३ गते राजनि सा वीरे तत्र स्म रुदती पितुः ॥ न्यवेदयत्ततः सर्वमुक्तं शर्मिष्ठया कृतम् २४ दुर्मना भगवान्काव्यः पौरोहित्यं विगर्हयन् ॥ स्तुवन्वृत्तिं च कापोतीं दुहित्रा स ययौ पुरात् २५ वृषपर्वा तमाज्ञाय प्रत्यनीकविवक्षितम् ॥ गुरुं प्रसादयन्मूर्ध्ना पादयोः पतितः पथि २६ क्षणार्धमन्युर्भगवाञ्शिष्यं व्याचष्ट भार्गवः ॥ कामोऽस्याः क्रियतां राजन्नैनां त्यक्तुमिहोत्सहे २७ तथेत्यवस्थिते प्राह देवयानी मनोगतम् ॥ पित्रा दत्ता यतो यास्ये सानुगा यातु मामनु २८ स्वानां तत्संकटं वीक्ष्य तदर्थस्य च गौरवम् ॥ देवयानीं पर्यचरत्स्त्रीसहस्रेण दासवत् २९ नाहुषाय सुतां दत्त्वा सह शर्मिष्ठयोशना ॥ तमाह राजञ्शर्मिष्ठामाधास्तल्पे न कर्हिचित् ३० विलोक्यौशनसीं राजञ्शर्मिष्ठा सुप्रजां क्वचित् ॥ तमेव वव्रे रहसि सख्याः पतिमृतौ सती ३१ राजपुत्र्यार्थितोऽपत्ये धर्मं चावेक्ष्य धर्मवित् ॥ स्मरञ्शुक्रवचः काले दिष्टमेवाभ्यपद्यत ३२ यदुं च तुर्वसुं चैव देवयानी व्यजायत ॥ द्रुह्युं चानुं च पूरुं च शर्मिष्ठा वार्षपर्वणी ३३ गर्भसंभवमासुर्या भर्तुर्विज्ञाय मानिनी ॥ देवयानी पितुर्गेहं ययौ क्रोधविमूर्छिता ३४

ययातिः अशास्त्रीयमपि दैवप्रापितं बुद्ध्वा तस्याः वचो जग्राह २३ अथ राजनि गते सति देवयानी सर्वं शर्मिष्ठाकृतं स्वकृतं च पित्रे न्यवेदयत् २४ तदा शुक्रः पौरोहित्यं निंदन् उंछवृत्तिं स्तुवन् दुहित्रा सह पुरात् निर्ययौ २५ वृषपर्वा गुरुं मूर्ध्ना प्रसादयामास २६ क्षणार्धमन्युः शुक्रः शिष्यं आह कन्यायाः इच्छा क्रियताम् २७ तथेत्युक्ते सति देवयानी प्राह अहं पित्रा दत्ता यतः यास्ये तत्र शर्मिष्ठा सखीसहिता मां अनु यातु २८ तदा वृषपर्वा स्वानां संकटं वीक्ष्य कन्यां ददौ शर्मिष्ठा स्त्रीसहस्रेण देवयानीं पर्यचरत् २९ ततः शुक्रः कन्यां ययातये दत्त्वा आह हे राजन् शर्मिष्ठां तल्पे माधाः ३० कदाचित् शर्मिष्ठा देवयानीं सप्रजां दृष्ट्वा रहसि तमेव पतिं वव्रे ३१ शर्मिष्ठया अपत्यार्थं याचितः ययातिः धर्मं अवेक्ष्य शुक्रवचः स्मरन् दैवप्राप्तं संगं अमन्यत ३२ ततो देवयानी यदुं तुर्वसुं प्रासूत शर्मिष्ठा द्रुह्युं अनुं पूरुं च व्यजायत ३३ शर्मिष्ठायाः भर्तुः सकाशात् गर्भसंभवं विज्ञाय देवयानी पितुर्गेहं ययौ ३४

उपमंत्रयन्नप्रसादयन् ३५ विकृतंरूपंकरोतीति तथा ३६ तेदुहितरिकामैरव्याप्यतृप्तोस्मि । यामानामंतोयैरितिवा । अथ शुक्रोक्तिः । तर्हियोऽभिधास्यतिअभितोधारयिष्यति । तस्य वयसाकामंव्यत्यस्यतांयथेच्छंजराव्यत्ययंयातुव्यत्ययंनीयतामितिवा । यद्वाव्यत्यस्यस्वेतिवाछेदः तांजरांव्यत्यस्य व्यत्यासंगमयेत्यर्थः(लोण्मध्यमपुरुषः) ३७ इतिलब्धंव्यवस्थानंज रायाव्यवस्थितिर्येनसः ३८ ३९ ४० यतोअधर्मज्ञाःअनित्येषयौवनेनित्यबुद्धयः ४१ त्वंजरांकिंग्रहिष्यसीत्यपृच्छत् । प्रत्याख्यानंमाकुर्याइत्याह । नत्वमिति ४२ आत्मकृतःदेहक र्तुःप्रत्युपकारंकर्तुंकोनुक्षमः ४३ तथा पितुर्यश्चिंतितंकुर्यात्सउत्तमः । यस्तुप्रोक्तकारीसमध्यमः । यस्त्वश्रद्धयाकुर्यात्सोऽधमः । अकर्तातुपितुश्चरितंपुरीषमायः ४४ जुजुषेसेवितवान् ४५ यथोपजोषंयथाप्रीति ४६ ४७ ४८

प्रियामनुगतःकामीवचोभिरुपमंत्रयन् ॥ नप्रसादयितुंशेकेपादसंवाहनादिभिः ३५ शुक्रस्तमाहकुपितःस्त्रीकामानृतपूरुष ॥ त्वांजराविशतांमंदविरूपक रणीनृणाम् ३६ ॥ ययातिरुवाच ॥ अतृप्तोस्म्यद्यकामानांब्रह्मन्दुहितरिस्मते ॥ व्यत्यस्यतांयथाकामंवयसायोभिधास्यति ३७ इतिलब्धव्यवस्थानः पुत्रंज्येष्ठमवोचत ॥ यदोतातप्रतीच्छेमांजरांदेहिनिजंवयः ३८ मातामहकृतांवत्सनतृप्तोविषयेष्वहम् ॥ वयसाभवदीयेनरंस्येकतिपयःसमाः ३९ ॥ य दुरुवाच ॥ नोत्सहेजरसास्थातुमंतराप्राप्तयातव ॥ अविदित्वासुखंग्राम्यंवैतृष्ण्यंनैतिपूरुषः ४० तुर्वसुश्चोदितःपित्राद्रुह्युश्चानुश्चभारत ॥ प्रत्याचख्यु रधर्मज्ञाह्यनित्येनित्यबुद्धयः ४१ अपृच्छत्तनयंपूरुंवयसोनंगुणाधिकम् ॥ नत्वमग्रजवद्वत्समांप्रत्याख्यातुमर्हसि ४२ ॥ पूरुरुवाच ॥ कोनुलोकेमनुष्यें द्रपितुरात्मकृतःपुमान् ॥ प्रतिकर्तुंक्षमोयस्यप्रसादाद्विंदतेपरम् ४३ उत्तमश्चिंतितंकुर्यात्प्रोक्तकारीचमध्यमः ॥ अधमोऽश्रद्धयाकुर्यादकर्तोच्चरितंपितुः ४४ इतिप्रमुदितःपूरुःप्रत्यगृह्णाज्जरांपितुः ॥ सोपितद्वयसाकामान्यथावज्जुजुषेनृपः ४५ सप्तद्वीपपतिःसम्यक्पितृवत्पालयन्प्रजाः ॥ यथोपजोषंविष यान्जुजुषेऽव्याहतेंद्रियः ४६ देवयान्यप्यनुदिनंमनोवाग्देहवस्तुभिः ॥ प्रेयसःपरमांप्रीतिमुवाहप्रेयसीरहः ४७ अयजद्यज्ञपुरुषंक्रतुभिर्भूरिदक्षिणैः ॥ सर्ववेदमयंदेवंसर्वदेवमयंहरिम् ४८

ययातिः कामी सन् प्रियां अनुगतः प्रसादयितुं न शेके ३५ तदा शुक्रः क्रुद्धः सन् आह हे अनृतपूरुष त्वां जरा विशताम् ३६ ॥ ययातिरुवाच ॥ हे ब्रह्मन् ते दुहितरि अहं अतृप्तः तदा शुक्रः उवाच यः अभितः धारयिष्यति तस्य वयसा यथेच्छं जरा विपर्यासं यातु ३७ इति लब्धव्यवस्थानः राजा ज्येष्ठं यदुं अयाचत हे पुत्र इमां जरां प्रतीच्छ निजं वयः देहि ३८ ३९ ॥ यदुरुवाच ॥ हे तात अहं जरया स्थातुं नोत्सहे ४० एवमेव तुर्वसुः द्रुह्युः अनुश्च ऊचुः ४१ तदा राजा पूरुं उवाच हे वत्स अग्रजवत् प्रत्याख्यातुं त्वं नार्हसि ४२ ॥ पूरुरुवाच ॥ हे तात पितुराज्ञां लोके को न मन्येत यत्प्रसादात्परं विंदंति ४३ उत्तमश्चिंतितं कुर्यात् प्रोक्तकारी च मध्यमः अश्रद्धया यः कुर्यात्सः अधमः अकर्ता पुरीषतमः ४४ इत्युक्त्वा जरां जगृहे ययातिरपि तद्वयसा ४५ पितृवत्प्रजाः पालयन् विषयान् बुभुजे ४६ अनेकैः क्रतुभिः सर्वदेवमयं हरिं निष्कामतया अयजत् ४७ ४८

नानेवभातियावदिंद्रिय प्रवृत्तिः । तदुपरमे ( सति ) नाभातिच । स्वप्नमायाभ्यांसहितोमनोरथइवेत्यर्थः ४९ ५० मनःमुखंकामोपभोगं (मनःषष्ठैः) कदिंद्रियैःकुत्सितैःपराङ्मुखैरिंद्रियैः
५१ ॥ ॥ इतिश्रीभागवतमहापुराणनवमस्कंधटीकायामष्टादशोऽध्यायः १८ ॥ ॥ ऊनविंशेययातिःस्वंचेष्टितंमन्वजोपमं । देवयानींसमाश्राव्यविरक्तोमुक्तिमाप्तवान् ॥ १ ॥ मु
क्तभोगामजांहास्यन्नजवद्वृत्तमात्मनः । विडंबयन्प्रियामाहनिर्वेदयितुमात्मवान् ॥२॥ कामानाचरन्उपभुंजानःगाथामितिहासम् १ मद्विधेनमादृशेनाचरितांअनुष्ठितांमाद्विधस्याचरितं
यस्यामितिवा । यस्यग्रामनिवासिनःकामिनोमद्विधस्यचरितंवनेस्थिताधीराःशोचंतितस्यगाथांशृणु २ आत्मानमनुलक्ष्याहवस्तइति प्रियामनुलक्ष्याह अजामिति वनेसंसारेप्रियंविषयं
३ रोधसितटे । विषाणाग्रेणमृदादिकमुद्धृत्य तीर्थंनिर्गमायमार्गमकल्पयत् ४ बह्व्यइतिशर्मिष्ठाप्रमुखाः कामयामासुः कांतप्रतिकामिनीः कामयमानाः ५ पीवानंपुष्टम् । श्मश्रुलंश्मश्रु
बहुलंरतिसमर्थमित्यर्थः मीढ्वांसंरेतःसेक्तारं यामे (मैथुने) कोविदं ( कुशलंकामशास्त्राभिज्ञमित्यर्थः ) अतएवभ्रेष्ठनावबुध्यत नान्वबुध्यत ६ ७ स्वामिनमितिशुक्राभिप्रायेण ८ इडवि
डाकारंबस्तजातिशब्दं संधितुंप्रसादयितुम् ९

यस्मिन्निदंविरचितंव्योम्नीवजलदावलिः ॥ नानेवभातिनाभातिस्वप्नमायामनोरथः ४९ तमेवहृदिविन्यस्यवासुदेवंगुहाशयम् ॥ नारायणमणीयांसंनि
राशीरयजत्प्रभुम् ५० एवंवर्षसहस्राणिमनःषष्ठैर्मनःसुखम् ॥ विदधानोपिनातृप्यत्सार्वभौमःकदिंद्रियैः ५१ ॥ इतिश्रीभागवतेमहापुराणेनवमस्कंधेअ
ष्टादशोऽध्यायः १८ ॥ ॥ श्रीशुकउवाच ॥ सइत्थमाचरन्कामान्स्त्रैणोऽपह्नवमात्मनः ॥ बुद्ध्वाप्रियायैनिर्विण्णोगाथामेतामगायत १ शृणुभार्गव्यमूंगा
थांमद्विधाचरितांभुवि ॥ धीरायस्यानुशोचंतिवनेग्रामनिवासिनः २ बस्तएकोवनेकश्चिद्विचिन्वन्प्रियमात्मनः ॥ ददर्शकूपेपतितांस्वकर्मवशगामजाम् ३
तस्याउद्धरणोपायंबस्तःकामीव्यचिंतयत् ॥ व्यधत्ततीर्थमुद्धृत्यविषाणाग्रेणरोधसि ४ सोत्तीर्यकूपात्सुश्रोणीतमेवचकमेकिल ॥ तयावृतंसमुद्वीक्ष्यबह्व्योजाः
कांतकामिनीः ५ पीवानंश्मश्रुलंप्रेष्ठंमीढ्वांसंयामकोविदम् ॥ सएकोजवृषस्तासांबह्वीनांरतिवर्धनः ६ रेमेकामग्रहग्रस्तआत्मानंनावबुध्यत ॥ तमेवप्रेष्ठ
तमयारममाणमजान्यया ॥ विलोक्यकूपसंविग्नानामृष्यद्बस्तकर्मतत् ७ तंदुर्हृदंसुहृद्रूपंकामिनंक्षणसौहृदम् ॥ इंद्रियाराममुत्सृज्यस्वामिनंदुःखिताय
यौ ८ सोपिचानुगतःस्त्रैणःकृपणस्तांप्रसादितुम् ॥ कुर्वन्निडविडाकारंनाशक्नोत्पथिसंधितुम् ९

४९ ५० एवं वर्षसहस्राणि सार्वभौमः कदिंद्रियैः विषयान् भुंजानोपि नातृप्यत् ५१ ॥ इतिनवमेऽष्टादशः १८ ॥ ॥ ५ ॥ ॥ श्रीशुक उवाच ॥ सः इत्थं
स्त्रैणः सन् कामान् आचरन् आत्मनाशं बुध्वा निर्विण्णः सन् प्रियायै एतां गाथां अगायत १ हे भार्गवि मद्विधाचरितां अमूं गाथां शृणु २ कश्चिदेकः बस्तः वने वि
चरन् कूपे पतितां अजां ददर्श ३ कामी बस्तः तस्याः उद्धरणोपायं अचिंतयत् ४ ततः विषाणाग्रेण कूपतटं उद्धृत्य तामुज्जहार सा कूपादुत्तार्य तमेव पतिं चकमे तया ॥ २० ॥
वृतं वीक्ष्य अन्या अजाः वव्रुः सः अजः सर्वाभिः सह रेमे ५ ६ कूपसंलग्ना अजा अन्यया सह रमंतं दृष्ट्वा ७ तमुत्सृज्य दुःखिता सती स्वामिनं ययौ सोपि स्त्रैणः
तदनुगतः सन् इडविडाकारं शब्दं कुर्वन् तां प्रसादयितुं नाशक्नोत् ९

वृषणमच्छिनत् । अरयासंभोगासमर्थमकरोत् । अर्थाय बुध्वाः कामभोगाय योगवित् उपायज्ञः । जराव्यत्ययेनरतिशक्तिददावित्यर्थः १० कूपलब्धयासहकामैः सेव्यमानैर्नतुष्यति
११ १२ ननुतर्हिपुनरपिबहवोविषयाः सेव्यंतां ततोमनसिप्रीतेसतिकामोपशांत्यामोहोनिवर्तेतेतिचेत् तत्राह यदितिद्वाभ्याम् । नदुह्यंति नपूरयंति १३ हविषाघृतेनकृष्णवर्त्माअ
ग्निरिव १४ तर्हिकदाकेनोपायेनवा मनसः पूर्णाप्रीतिः स्यात् । यथाकामोपशमः स्यादित्यतआह यदेतिषड्भिः अमंगलंभावंरागद्वेषादिवैषम्यम् १५ दुःखानिनितरांवहतीतितथाता
म् १६ स्त्रीसंनिधानंतुसर्वथात्याज्यमित्याह मात्रेति अविविक्तंसंकीर्णमासनंयस्यसः कर्षतिआकर्षति १७ १८ १९ ननुतृष्णात्यागस्यअतिदुष्करत्वात् कथंमनसोब्रह्मण्याधानंस्या
त् तत्राह दृष्टमिति । योनानुध्यायेत् नानुस्मरेत् नसंविशेत् नचोपभुंजीत । तत्र दृष्टश्रुतयोरनुध्यानादौ (संसृत्यादिकंविद्वान्) सआत्मदृक्भवति २० २१

तस्यास्तत्राद्विजःकश्चिदजास्वाम्यच्छिनद्रुषा ॥ लंबंतंवृषणंभूयःसंदधेर्थाययोगवित् १० संबद्धवृषणःसोपिह्यजयाकूपलब्धया ॥ कालंबहुतिथंभद्रेका
मैर्नाद्यापितुष्यति ११ तथाहंकृपणःसुभ्रुभवत्याःप्रेमयंत्रितः ॥ आत्मानंनाभिजानामिमोहितस्तवमायया १२ यत्पृथिव्यांव्रीहियवंहिरण्यंपशवःस्त्रियः ॥
नदुह्यंतिमनःप्रीतिंपुंसःकामहतस्यते १३ नजातुकामःकामानामुपभोगेनशाम्यति ॥ हविषाकृष्णवर्त्मेवभूयएवाभिवर्धते १४ यदानकुरुतेभावंसर्वभूतेष्वमंग
लम् ॥ समदृष्टेस्तदापुंसःसर्वाःसुखमयादिशः १५ यादुस्त्यजादुर्मतिभिर्जीर्यतोयानजीर्यते ॥ तांतृष्णांदुःखनिवहांशर्मकामोद्रुतंत्यजेत् १६ मात्रास्वस्रादु
हित्रावानाविविक्तासनोभवेत् ॥ बलवानिंद्रियग्रामोविद्वांसमपिकर्षति १७ पूर्णंवर्षसहस्रंमेविषयान्सेवतोऽसकृत् ॥ तथापिचानुसवनंतृष्णातेषूपजायते
ते १८ तस्मादेतामहंत्यक्त्वाब्रह्मण्याधायमानसम् ॥ निर्द्वंद्वोनिरहंकारश्चरिष्यामिमृगैःसह १९ दृष्टंश्रुतमसद्बुद्ध्वानानुध्यायेन्नसंविशेत् ॥ संसृतिंचात्म
नाशंचतत्रविद्वान्सआत्मदृक् २० इत्युक्त्वानाहुषोजायांतदीयंपूरवेवयः ॥ दत्त्वास्वजरसंतस्मादाददेविगतस्पृहः २१

तत्र कश्चित् अजास्वामी द्विजः तद्वृषणं अच्छिनत् पुनः लंबंतं वृषणं तं योगवित् अर्थाय संदधे १० सोपि कूपलब्धया अजया बहुकालं रेमे अद्यापि न तुष्यति ११
हे देवयानि तथा अहं भवत्याः प्रेमयंत्रितः तव मायया मोहितः आत्मानं न जानामि १२ तर्हि पुनरपि बहवो विषयाः सेव्यंतां ततो मनसि प्रीते कामोपशांत्या
मोहोनिवर्तेत इति चेत् तर्हि शृणु यत् पृथिव्यां व्रीहियवं हिरण्यं पशवः स्त्रियः इदं सर्वं कामहतस्य पुंसः मनःप्रीतिं न पूरयंति १३ न जातु कामः कामानामुप
भोगेन शाम्यति हविषा कृष्णवर्त्मेव भूय एवाभिवर्धते १४ यदा तु पुंसः समदृष्टित्वं तदा सर्वाः दिशः सुखमयाः भवंति १५ या तृष्णा स्वयं जीर्यतः सतः न
जीर्यते तां दुःखप्रदां तृष्णां शर्मकामः द्रुतं त्यजेत् १६ स्त्रीसंनिधानं तु सर्वथा त्याज्यं मात्रा स्वस्रा दुहित्रा वा न विविक्तासनो भवेत् बलवानिंद्रियग्रामो विद्वांसम
पि कर्षति १७ एवं पूर्णं वर्षसहस्रं असकृत् विषयान् सेवतः मम तृष्णा विषयेषु पुनर्जायते १८ अतः एतां त्यक्त्वा ब्रह्मणि मन आधाय अहं निर्द्वंद्वः निरहंकार
श्च सन् मृगैः सह चरिष्यामि १९ ययातिः इति जायां उक्त्वा पूरवे तदीयं वयः दत्वा स्वां जरां आददे २० २१

( दक्षिणपूर्वस्यांऐशान्याम् आग्नेय्यां ) २२ तस्यपुरोर्वंशे ( स्थाप्य ) स्थापयित्वा २३ विषयेषुशब्दादिषुआसेवितंषड्वर्गंइंद्रियसुखं मुमुचे तत्याज । यद्वा विषयेआसेवितंसेवांका
रितंषण्णांइंद्रियाणांवर्गंमुमुचेउपेक्षतेत्यर्थः २४ विधुतंनिरस्तंत्रिगुणात्मकंलिंगंयेन । प्रतीतः प्रख्यातः २५ प्रस्तोमं ( उपहासं ) तमेवाह । परिहासमिवेति । यद्वा प्रस्तोमंनिवृत्तिमा
र्गेप्रोत्साहनंमेने २६ २७ २८ कथंसमावेश्यतदाह नमइतिनमनादिभिः समावेश्येत्यर्थः । शुकोवानममिदंचक्रे २९ ॥ ॥ इतिश्रीभागवतेमहापुराणेनवमस्कंधेटीकायांएकोनविं
शोऽध्यायः ॥ १९ ॥ विंशेपितृप्रसादाप्तराजासनमहोन्नतेः । पूरोर्वंशेवदौष्यंतेर्भरतस्येरितेयशः ॥ १ ॥ १ २ तस्तुनः तस्य अहंयातेः सुतः ३ धर्मेयुश्चसत्येयुश्चव्रतेयुश्चधर्मसत्यव्र
तेयवः ४ वनेयुश्चावमः स्मृतः । एवंदशैतेऋतेयुप्रमुखास्तस्यरौद्राश्वस्यघृताच्यामप्सरसिपुत्राजाताः । अप्सरसइतिपष्ठीसप्तम्यर्थे वशवर्तित्वेदृष्टांतः । जगदात्मनः जगतः
आत्मभूतस्यमुख्यप्राणस्येंद्रियाणीव ५

दिशिदक्षिणपूर्वस्यांद्रुह्युंदक्षिणतोयदुम् ॥ प्रतीच्यांतुर्वसुंचक्रउदीच्यामनुमीश्वरम् २२ भूमंडलस्यसर्वस्यपूरुमर्हत्तमंविशाम् ॥ अभिषिच्याग्रजांस्त
स्यवशेस्थाप्यवनंययौ २३ आसेवितंवर्षपूगान्षड्वर्गंविषयेषुसः ॥ क्षणेनमुमुचेनीडंजातपक्षइवद्विजः २४ सतत्रनिर्मुक्तसमस्तसंगआत्मानुभूत्याविधु
तत्रिलिंगः ॥ परेऽमलेब्रह्मणिवासुदेवेलेभेगतिंभागवतींप्रतीतः २५ श्रुत्वागाथांदेवयानीमेनेप्रस्तोममात्मनः ॥ स्त्रीपुंसोःस्नेहवैक्लव्यात्परिहासमिवेरितम्
२६ सासंनिवासंसुहृदांप्रपायामिवगच्छताम् ॥ विज्ञायेश्वरतंत्राणांमायाविरचितंप्रभोः २७ सर्वत्रसंगमुत्सृज्यस्वप्नौपम्येनभार्गवी ॥ कृष्णेमनःसमावे
श्यव्यधुनोल्लिंगमात्मनः २८ नमस्तुभ्यंभगवतेवासुदेवायवेधसे ॥ सर्वभूताधिवासायशांतायबृहतेनमः २९ ॥ इतिश्रीभागवतेमहापुराणेनवमस्कंधे
एकोनविंशोऽध्यायः १९ ॥ ॥ श्रीशुकउवाच ॥ पूरोर्वंशंप्रवक्ष्यामियत्रजातोसिभारत ॥ यत्रराजर्षयोवंश्याब्रह्मवंश्याश्चजज्ञिरे १ जनमेजयोह्यभू
त्पूरोःप्रचिन्वांस्तत्सुतस्ततः ॥ प्रवीरोथनमस्युर्वैतस्माच्चारुपदोभवत् २ तस्यसुद्युरभूत्पुत्रस्तस्माद्बहुगवस्ततः ॥ संयातिस्तस्याहंयातीरौद्राश्व
स्तत्सुतःस्मृतः ३ ऋतेयुस्तस्यकुक्षेयुःस्थंडिलेयुःकृतेयुकः ॥ जलेयुःसंततेयुश्चधर्मसत्यव्रतेयवः ४ दशैतेप्सरसःपुत्रावनेयुश्चावमःस्मृतः ॥ घृताच्या
मिंद्रियाणीवमुख्यस्यजगदात्मनः ५

ततः चतुर्दिक्षु द्रुह्युयदुतुर्वस्वनून् विवेश्य २२ पूरुं सार्वभौमपदे अभिषिच्य तस्य वशे अग्रजान् स्थाप्य वनं ययौ २३ सः विषयेषु मुक्तसंगः सन् वासुदेवे भक्तिं
कुर्वन् भगवद्गतिं लेभे २४ २५ ततः देवयानी तांगाथां श्रुत्वा परिहासमिव मत्वा २६ राजनि गते सति इदं सर्वं भगवन्मायारचितं ज्ञात्वा २७ सर्वत्र संगं
त्यक्त्वा नमनादिभिः कृष्णे मनः स्थाप्य आत्मनः लिंगं व्यधुनोत् २८ २९ ॥ ॥ इति नवमे एकोनविंशः १९ ॥ ॥ ॥ ॥ श्रीशुकउवाच ॥ ॥ पूरोर्वंशं
प्रवक्ष्यामि हे नृप यत्र त्वं जातोसि यत्र राजर्षयः ब्रह्मवंश्याश्च जज्ञिरे १ पुरुपुत्रः जनमेजयः तस्य प्रवीरः तस्य प्रचिन्वान् तस्य प्रवीरः तस्य नमस्युः तस्य
चारुपदः २ तस्य सुद्युः तस्य बहुगवः तस्य संयातिः तस्य अहंयातिः तस्य रौद्राश्वः ३ तस्य घृताच्यां अप्सरसि दश पुत्रा बभूवुः तेच ऋतेयुः प्रथमः कुक्षेयुः द्विती
यः स्थंडिलेयुः तृतीयः कृतेयुः चतुर्थः जलेयुः पंचमः संततेयुः षष्ठः धर्मेयुः सप्तमः सत्येयुः अष्टमः व्रतेयुः नवमः वनयुः दशमः इति ४ ५

( तस्परंतिभारस्य ) ६ ७ दुष्यंतस्यशकुंतलायांमरतः पुत्रोमवादीति कथाद्वारेणाह दुष्यंतोमृगयामितिपंचभिः । तमाश्रमंमंडयंतींस्त्रियंविलोक्य मुमुदे अमुह्यत ८ तस्यादर्शनेनप्रमुदितः अतएवसंनिवृत्तःपरिश्रमोयस्य ९ १० ११ पौरवाणां चेतोनह्यधर्मेरमते । अतोमचेतसस्त्वायिरमणादेवाहंत्वांराजन्यतनयांवेद्मि १२ विश्वामित्रस्यात्मजाहंमेनकायांजाता तयात्यक्तास्वर्गंगच्छंत्यात्यक्ता अतोराजन्यकन्यैवाहमित्यर्थः १३ १४ किंकरवामेत्यादिवाक्याद्भिप्रायंज्ञात्वाहउपपन्नमिति १५ गांधर्वविधिना मिथः समयपूर्वकेण ( विधिना ) १६ १७ ( मृगेंद्रान्सिंहान् ) १८

ऋतेयोरंतिभारोभूत्त्रयस्तस्यात्मजान्नृप ॥ सुमतिर्ध्रुवोऽप्रतिरथःकण्वोऽप्रतिरथात्मजः ६ तस्यमेधातिथिस्तस्मात्प्रस्कण्वाद्याद्विजातयः ॥ पुत्रोभूत्सुमतेरैभ्योदुष्यंतस्तत्सुतोमतः ७ दुष्यंतोमृगयांयातःकण्वाश्रमपदंगतः ॥ तत्रासीनांस्वप्रभयामंडयंतींरमामिव ८ विलोक्यसद्योमुमुहेदेवमायामिवस्त्रियम् ॥ बभाषेतांवरारोहांभटैःकतिपयैर्वृतः ९ तद्दर्शनप्रमुदितःसंनिवृत्तपरिश्रमः ॥ पप्रच्छकामसंतप्तःप्रहसञ्श्लक्ष्णयागिरा १० कात्वंकमलपत्राक्षिकस्यासिहृदयंगमे ॥ किंस्विच्चिकीर्षितंत्वत्रभवत्यानिर्जनेवने ११ व्यक्तंराजन्यतनयांवेद्म्यहंत्वांसुमध्यमे ॥ नहिचेतःपौरवाणामधर्मेरमतेक्वचित् १२ ॥ शकुंतलोवाच ॥ विश्वामित्रात्मजैवाहंत्यक्तामेनकयावने ॥ वेदैतद्भगवान्कण्वोवीरकिंकरवामते १३ आस्यतामरविंदाक्षगृह्यतामर्हणंचनः ॥ भुज्यतांसंतिनीवाराउष्यतांयदिरोचते १४ ॥ दुष्यंत उवाच ॥ उपपन्नमिदंसुभ्रुजातायाःकुशिकान्वये ॥ स्वयंहिवृणुतेराज्ञांकन्यकासदृशंवरम् १५ ॥ श्रीशुकउवाच ॥ ओमित्युक्तेयथाधर्ममुपयेमेशकुंतलाम् ॥ गांधर्वविधिनाराजादेशकालविधानवित् १६ अमोघवीर्योराजर्षिर्महिष्यांवीर्यमादधे ॥ श्वोभूतेस्वपुरंयातःकालेनासूतसासुतम् १७ कण्वःकुमारस्यवनेचक्रेसमुचिताःक्रियाः ॥ बद्ध्वामृगेंद्रंतरसाक्रीडतिस्मसबालकः १८

ऋतेयोः पुत्रः रंतिभारः तस्य पुत्राः त्रयः सुमतिः प्रथमः ध्रुवः द्वितीयः अप्रतिरथस्तृतीयःइति अप्रतिरथस्य कण्वः ऋषिः तस्य ६ मेधातिथिः तस्मात् प्रस्कण्वाद्याः द्विजातयः सुमतेः पुत्रः रैभ्यः तस्य दुष्यंतः ७ सः कदाचित् मृगयां यातः सन् कण्वाश्रमं गतः तत्र आसीनां स्वप्रभया मंडयंतीं रमामिव स्त्रियं दृष्ट्वा मुमुहे ८ तद्दर्शनप्रमुदितः कामसंतप्तः तां बभाषे ९ हे कमलपत्राक्षि त्वं का कस्यासि १० निर्जने वने तव किं चिकीर्षितमस्ति त्वां राजन्यतनयामिति निश्चयेन अहं वेद्मि कुतः पौरवाणां चेतः अधर्मे क्वचिदपि नहि रमते ११ १२ ॥ शकुंतलोवाच ॥ अहंविश्वामित्रात्मजा मेनकायां जाता स्वर्गं गच्छंत्या तया अत्र वने त्यक्ता कण्वः एतत्सर्वं वेद हे वीर ते किं करवाम १३ अत्रास्यतां नः अर्हणं च गृह्यताम् अत्र नीवाराः संति भुज्यताम् रोचते चेत् उष्यताम् १४ ॥ दुष्यंत उवाच ॥ हे सुभ्रूः कुशिकान्वये जातायाः ते इदं योग्यम् राज्ञां कन्यास्तु स्वयं सदृशं वरं वृणते १५ तया ओमित्युक्ते सति राजा गांधर्वविधिना तां उपयेमे १६ तदा अमोघवीर्यः राजर्षिः तस्यां वीर्यं आदधे श्वोभूते स्वपुरं यातः सा कालेन पुत्रं असूत १७ कण्वः वने कुमारस्य जातकादिसंस्कारान् चक्रे सः बालः मृगेंद्रान् बद्ध्वा क्रीडतिस्म १८

सुरत्ययं विक्रांतंविक्रमणंयस्य १९ २० भस्त्राचर्मप्रसेविका तद्वन्माताऽऽधारमात्रं पितुरेवतुपुत्रः तत्रहेतुः येनेति "आत्मावैपुत्रनामासि" इति श्रुतेः । भरस्व पुषाण । अनेन भरतनामनिरुक्तम् २१ किंच । रेतोधाःरेतःसेक्तात्रंशकृत्पुत्रोयमक्षयात्पितरंनयतितारयति । तथाचश्रुतिः "पुंनाम्नोनरकाद्यस्मात्पितरंत्रायतेसुतः । तस्मात्पुत्रइतिप्रोक्तः स्वयमेवस्वयंभुवा" इति । पाठांतरे मातापित्रोःपुत्रंप्रतिविभागेयमक्षयात् धर्मनिर्णेतुः यमस्यसभायाः सकाशात् रेतोधाःपितैवधर्मेणविजित्य पुत्रंनयति । नतुमातेत्यर्थः । ततश्च भार्यापुत्रौस्वीकृतवानितिज्ञेयम् २२ चक्रवर्तीबभूवेतिशेषः । तस्यमहिमागीयते । "तदप्येतेश्लोकाअभिगीताः" इत्यादिबह्वृचश्रुत्या । हरेरंशभुवः अंशाज्जातस्य २३ तत्रलिंगमाह चक्रमिति २४ (कथमीजेतदाह । पंचेति । मामतेयंदीर्घतमसंपुरोधायपुरोहितंकृत्वा) गंगायामनुलोमं पंचपंचाशतावाजिभिरीजे । पुरोधायपुरोहितंकृत्वायमुनायामनुयमुनायाश्चानुलोमंअष्टाधिकसप्ततिमेध्यानश्वान् बबंध । किंकुर्वन् वसुधनंप्रकर्षेणददत् २५

तंदुरत्ययविक्रांतमादायप्रमदोत्तमा ॥ हरेरंशांशसंभूतंभर्तुरंतिकमागमत् १९ यदानजगृहेराजाभार्यापुत्रावनिंदितौ ॥ शृण्वतांसर्वभूतानांखेवागाहशरीरिणी २० माताभस्त्रापितुःपुत्रोयेनजातःसएवसः ॥ भरस्वपुत्रंदुष्यंतमावमंस्थाःशकुंतलाम् २१ रेतोधाःपुत्रोनयतिनरदेवयमक्षयात् ॥ त्वंचास्यधातागर्भस्यसत्यमाहशकुंतला २२ पितर्युपरतेऽसौवैचक्रवर्तीमहायशाः ॥ महिमागीयतेतस्यहरेरंशभुवोभुवि २३ चक्रंदक्षिणहस्तेऽस्यपद्मकोशोस्यपादयोः ॥ ईजेमहाभिषेकेणसोभिषिक्तोऽधिराड्विभुः २४ पंचपंचाशतामेध्यैर्गंगायामनुवाजिभिः ॥ मामतेयंपुरोधाययमुनायामनुप्रभुः ॥ अष्टसप्ततिमेध्याश्वान्बबंधप्रददद्वसु २५

शकुंतला पराक्रमिणं हरेरंशांशसंभवं पुत्रं आदाय भर्तुः समीपं अगमत् १९ राजा भार्यापुत्रौ यदा न जगृहे तदा सर्वेषां शृण्वतां आकाशवाणी आह २० माता भस्त्रा पितुः पुत्रो येन जातः स एव सः हे दुष्यंत पुत्रं भरस्व शकुंतलां मावमंस्थाः २१ किंच पुत्रः नरकात् पितरं त्रायति अस्य त्वं धाता शकुंतला सत्यं आह इत्युक्ते ततः भार्यापुत्रौ स्वीकृतवान् २२ ततो दुष्यंते कालेन उपरते सति सः भरतः चक्रवर्ती बभूव २३ यस्यदक्षिणहस्ते चक्रचिह्नं पादयोः कमलचिह्नं सः भरतः एकदा मामतेयं पुरोहितं कृत्वा गंगातीरे यमुनातीरे च पंचपंचाशताश्वमेधैः ईजे २४ अष्टसप्ततिमेध्यान्अश्वान् बबंध २५

साचीगुणेप्रकृष्टगुणवति देशेऽग्निश्चितोऽभूत् । यस्मिन्नग्निचयनेदेशेवासहस्त्रंब्राह्मणाः भरतेन भूरिदानेदत्ता गाः बद्वशः प्रत्येकंबद्वंबद्वंविभेजिरे । विभज्य जगृहुः । चतुरशीत्याधिकैस्त्रयोदशसहस्त्रैरेकंबद्वंभवति । तथा च " हिरण्येनपरीवृतान् कृष्णान् शुक्लदतोमृगान् । मष्णारेभरतोऽददाच्छतंबद्वानिसप्त च " इति श्रुत्युक्तानि ( गजानां ) सप्ताधिकशतंबद्वानिश्रीशुकेनचतुर्दशलक्षत्वेनसंगृहीतानि । अदात्कर्मणिमष्णारेनियुतानिचतुर्दशेति । एवंचतुर्दशलक्षाणांसप्ताधिकशतभागोबद्वमित्युक्तंभवति । इयंचबद्वसंख्याश्लोकेनसंगृह्यते । ' चतुर्दशानांलक्षाणांसप्ताधिकशतांशकः । बद्वंचतुरशीत्यग्रसहस्त्राणित्रयोदश' इति ( तथाचगवांसंख्या १३०८४००० चतुरशीतिसहस्त्राधिकानीत्रिंशल्लक्षाणिकोटिश्चैका ) २६ देवानामपिमायाविभवं अत्यगात् अत्यशेत । यतः गुरुंपूज्यंहरिंमायायैप्राप्तः । तद्दंशभक्तत्वात् । मायवत्तरइतिपाठेह्रस्वंश्रुत्यनुसारेण । मायावतांश्रेष्ठः हरिरेवासावित्यर्थः २७ मृगान् श्रेष्ठगजान् भद्रमंद्रमृगादयोगजजातिभेदाः । मष्णारेइतिश्रुतिपदस्यव्याख्यानंकर्मणीति । कस्मिंश्चित्कर्मविशेषे । केचित्तुमष्णारेतीर्थइतिव्याचक्षते २८ २९ ३० पुरादेवान् जित्वायेऽसुरारसौकांसिरसातलादिस्थानानिभेजिरे तैः प्राणिभिर्बलिभिः देवस्त्रियोरसातलंनीताः सतीः पुनराहरत् आनिन्ये । प्राणिभिरन्यैर्मनुष्यादिभिःसहनीताइतिवा । पणिभिरितिपाठेपणयोऽसुरास्तैर्नीताः सतीः । यद्वा पणयोदूताः तैः दूतान्प्रस्थाप्याहरदित्यर्थः ३१ त्रिणवसाहस्त्रीः समाः सप्तविंशतिसहस्त्रसंवत्सरान् । चक्रंसेनाआज्ञावा ३२ तस्यवैराग्येणमोक्षप्रकारमाह । सइति । मृषेतिविचार्येतिशेषः ३३ नानुरूपाः सदृशानभवंतीतिभर्त्राईरितेसतिव्यभिचारशंकयाऽस्मांस्त्यक्ष्यतीतिभयात् पुत्रान्जघ्नुः पुनः पुनः पुत्राणांदर्शनेवैसादृश्यानुसंधानेनत्यजेन्नान्यथेत्याशयेनहतवत्यः ३४

भरतस्याहिदौष्यंतेरग्निःसाचीगुणेचितः ॥ सहस्त्रंबद्वशोयस्मिन्ब्राह्मणागाविभेजिरे २६ त्रयस्त्रिंशच्छतंह्यश्वान्बध्वाविस्मापयन्नृपान् ॥ दौष्यंतिरत्यगा
न्मायादेवानांगुरुमाययौ २७ मृगाञ्छुक्लदतःकृष्णान्हिरण्येनपरिष्कृतान् ॥ अदात्कर्मणिमष्णारेनियुतानि चतुर्दश २८ भरतस्यमहत्कर्मनपूर्वेनाप
रेनृपाः ॥ नैवापुर्नैवप्राप्स्यंतिबाहुभ्यांत्रिदिवंयथा २९ किरातहूणान्यवनानांध्रान्कंकान्खशाञ्शकान् ॥ अब्रह्मण्यान्नृपांश्चाहन्म्लेच्छान्दिग्विजयेऽ
खिलान् ३० जित्वापुराऽसुरादेवान्येरसौकांसिभेजिरे ॥ देवस्त्रियोरसांनीताःप्राणिभिःपुनराहरत् ३१ सर्वान्कामान्दुदुहतुःप्रजानांतस्यरोदसी ॥ समा
स्त्रिणवसाहस्त्रीर्दिक्षुचक्रमवर्तयत् ३२ ससम्राट्लोकपालाख्यमैश्वर्यमधिराट्स्वयम् ॥ चक्रंचास्खलितंप्राणान्मृषेत्युपरराम ह ३३ तस्यासन्नृपवैदर्भ्यः
पत्न्यास्तिस्त्रःसुसंमताः ॥ जघ्नुस्त्यागभयात्पुत्रान्नानुरूपाइतीरिते ३४

दौष्यंतेः भरतस्य प्रकृष्टगुणवति देशे चितः अग्निः अभूत् यस्मिन् अग्निचयने सहस्त्रं ब्राह्मणाः भरतेन दत्ताः गाः प्रत्येकं बद्वं बद्वं विभज्य जगृहुः २६ ततश्च भरतः नृपान् विस्मापयन् सन् त्रयस्त्रिंशच्छतं अश्वान् बद्धा देवानां वैभवं अत्यगात् २७ ततश्च मष्णाराख्ये कर्मणि तीर्थे वा चतुर्दशानियुतानि गजान् अदात् २८ २९ अथ भरतः दिग्विजये अब्रह्मण्यान् नृपान् किरातादीन् अहन् ३० पुरा असुरैः हृताः देवस्त्रियः असुरान् हत्वा देवेभ्यः ददौ ३१ सप्तविंशतिसहस्त्रं वत्सरान् राज्यं च चक्रे ३२ सः राज्यं देहंच मृषेति विचार्य उपरराम ३३ तस्य तिस्त्रः स्त्रियः आसन् ताः भर्त्रा एवे सुता नानुरूपा इत्युक्ते सति व्यभिचारशंकयास्मान्त्यक्ष्यतीति भयात् पुत्रान् जघ्नुः ३४

वितथे व्यर्थे सति तदर्थं पुत्रार्थं मरुत्स्तोमेन यागेन यजतस्तस्य प्रसन्नाः संतो मरुतो भरद्वाजं नाम पुत्रं उपाददुः समर्पयामासुः ३५ मरुतां भरद्वाजप्राप्तिप्रकारं दर्शयन्नाह अंतर्वत्न्यामिति अंतर्गर्भः अंतर्वत्न्यां गर्भिण्यां भ्रातुरुतथ्यस्य पत्न्यां ममतायां चौर्येण मैथुनाय कदाचित्प्रवृत्तो बृहस्पतिः तदा द्वितीयगर्भस्यावकाशाभावात् आक्रोशपूर्वं गर्भस्थेन वारितः ततः क्रुद्धो बृहस्पतिरंधो भवेति तं गर्भं शप्त्वा बलाद्वीर्यं न्यषिंचत्। ततो बृहस्पतेः शापात् गर्भस्थो दीर्घतमा अंधो बभूव। तेन च तद्वीर्यं पार्ष्णिप्रहारेण योनेर्बहिर्निःसारितं भूमौ पतितं सद्य एव कुमारोऽभवत् ३६ तं च परवीर्यजं भर्तुस्त्यागाद्विशंकितां सतीं त्यक्तुकामां ममतां प्रति सुराः एनं बृहस्पतेर्ममतायाश्च विवादरूपं श्लोकं जगुः । किमर्थमत आह । तस्य नाम निरुच्यते येन तत् । तन्नामनिर्वचनेनैव भर्तृत्यागशंकामपाकर्तुमित्यर्थः ३७ तत्र पुत्रं त्यक्त्वा यांतीं ममतां बृहस्पतिराह । हे मूढे इमं पुत्रं भर पुषाण । भर्तुर्बिभेमीति चेत्तत्राह । द्वाजम् । एकस्य क्षेत्रे अन्यस्य बीजादित्येवं द्वाभ्यां जातं अतस्तस्याप्ययं पुत्र इति न तस्माद्भयशंकेत्यर्थः । एवमुक्ता सती तं प्रत्याह । हे बृहस्पते त्वमिमं भर । यतो द्वाजं द्वाभ्यामावाभ्यामन्यायतो जातं अतो नाहमेकाकिनी भरामीत्यर्थः । यद्यस्मादेवमुक्त्वा पितरौ ममता बृहस्पती विवदमानौ पुत्रं परित्यज्य यातौ ततो हेतोरयं भरद्वाजसंज्ञ इति । पाठांतरे यस्य पुत्रस्य त्यागदुःखात् पितरौ यातावित्यर्थः ३८ वितथं व्यभिचारसंभवत्वाद्व्यर्थमात्मजं वितथं व्यर्थं मत्वा ममताव्यसृजत् तत्याज । पाठांतरे आदिजं प्रथमजं भर्तुर्वीर्याज्जातमेव मुख्यमात्मजं मत्वा बृहस्पतेर्जातं तत्याजेत्यर्थः। एवं तयात्यक्तं मरुतोऽबिभ्रन् अबिभरुः । तदेवं मरुद्भिः भार्योऽयं भरतस्यान्वये वितथे सति दत्तः ३९ ॥ ॥ इति श्रीभागवते महापुराणे नवमस्कंधे टीकायां विंशतितमोऽध्यायः २० ॥ ७ ॥

तस्यैवं वितथे वंशे तदर्थं यजतः सुतम् ॥ मरुत्स्तोमेन मरुतो भरद्वाजमुपाददुः ३५ अंतर्वत्न्यां भ्रातृपत्न्यां मैथुनाय बृहस्पतिः ॥ प्रवृत्तो वारितो गर्भं शप्त्वा
वीर्यमवासृजत् ३६ तं त्यक्तुकामां ममतां भर्तृत्यागविशंकिताम् ॥ नामनिर्वचनं तस्य श्लोकमेनं सुरा जगुः ३७ मूढे भर द्वाजमिमं भर द्वाजं बृहस्पते ॥ यातौ य
दुक्त्वा पितरौ भरद्वाजस्ततस्त्वयम् ३८ चोद्यमाना सुरैरेवं मत्वा वितथमात्मजम् ॥ व्यसृजन्मरुतोऽबिभ्रन्दत्तोयं वितथेऽन्वये ३९ ॥ ॥ इति श्रीभागवते महा
पुराणे नवमस्कंधे विंशोऽध्यायः २० ॥ ॥ ७ ॥

तदा वंशे वितथे सति पुत्रार्थं मरुत्स्तोमेन यागेन यजतः भरतस्य मरुतः भरद्वाजं नाम पुत्रं ददुः ३५ तदुत्पत्तिमाह गर्भिण्यां भ्रातुः उतथ्यस्य पत्न्यां ममतायां चौर्येण मैथुनाय प्रवृत्तो बृहस्पतिः तदा गर्भस्थेन निवारितः तदा क्रुद्धो बृहस्पतिः अंधो भवेति गर्भं शप्त्वा बलात् वीर्यं न्यषिंचत् ततो बृहस्पतेः शापात् गर्भस्थो दीर्घतमाः अंधो बभूव तेन च तद्वीर्यं पार्ष्णिना योनेः बहिः निःसारितम् भूमौ पतितं सः सद्य एव कुमारः अभवत् ३६ तत्र पुत्रं त्यक्त्वा यांतीं ममतां बृहस्पतिः आह ३७ हे मूढे इमं पुत्रं भर एकस्य क्षेत्रे अन्यस्य बीजादिति द्वाभ्यां जातम् अतः तस्याप्ययं पुत्रः एवं उक्ता ममता तं आह हे बृहस्पते त्वं इमं भर यतः द्वाभ्यां आवाभ्यां अन्यायतो जातः अतो नाहं एकाकिनी भरामि एवमुक्त्वा विवदमानौ तौ पुत्रं त्यक्त्वा यातौ अतो हेतोः अयं भरद्वाजः ३८ तं मरुतः अबिभ्रन् एवं मरुद्भिः प्राप्तोऽयं भरतान्वये व्यर्थे सति दत्तः अतः वितथो जातः ३९ ॥ ॥ इति नवमे विंशः ॥ २० ॥ 

इकविंशतितमेऽध्याये भरतस्यान्वयउच्यते । रंतिदेवाजमीढादेर्यत्र कीर्तिःप्रतन्यते ॥ १ ॥ भरतस्यान्वयेवितथेसतिदत्तत्वात् वितथसंज्ञोभरद्वाजः । सचब्राह्मणोपिभरतस्यदत्तपुत्रोजात इतितद्वंशोनुक्रम्यते ।·वितथस्यसुतोमन्युस्तस्माद्बृहत्क्षत्रजयद्रथमहावीर्यनरगर्गाः पंचपुत्राबभूवुः १ २ वियद्वित्तस्यवियतोगगनादिवउद्यमंविनादैवादुपस्थितमेववित्तंभोग्यंयस्य । यद्वा वियद्व्ययंप्राप्नुवद्वित्तंयस्य । तदेवाह । बुभुक्षतोपिसतः लब्धंलब्धंददतः । तत्प्रपंचयति निष्किंचनस्येत्यादिसार्धैःपंचदशभिः ( निष्किंचनस्यदत्तसर्वस्वस्य ) ३ अपिबतः अकुर्वतः ( अष्टचत्वारिंशदहानिव्यतीयुः । ततः प्रातरुपस्थितंप्राप्तम् ) घृतादित्रयाणांद्वंद्वैक्यंतोयंच ( तत्रसंयावंगोधूमान्नम् ) ४ ( एतद्भोक्तुकामस्यकृच्छ्रंक्लेशंप्राप्तंकुटुंबंयस्य । कालेभोजनसमये ) ५ ६ अथान्योवृषलोऽतिथिरागमत् । विभक्तस्यकुटुंबार्थमन्नादिकंविभक्तवतः ( विभक्तंब्राह्मणशेषरूपंअन्नंतस्मैवृषलायशूद्रायव्यभजत्विभज्यदत्तवान्) ७ सगमांस श्वपूर्वसहिताय ८ ( यदवशिष्टंतत्सर्वं) ९ (इतःपानीयमात्रं)उच्छेषंदर्वीरितंतदप्येकमेवपरितर्पयतीतितथा (तत्पास्यतःपातुकामस्येत्यर्थःपुल्कसोगोमांसभक्षकोनीचजातिविशेषः) १०

॥ श्रीशुकउवाच ॥ वितथस्यसुतान्मन्योर्बृहत्क्षेत्रोजयद्रथः ॥ महावीर्योनरोगर्गःसंकृतिस्तुनरात्मजः १ गुरुश्चरंतिदेवश्चसंकृतेःपांडुनंदन ॥ रंतिदेवस्यहियशइहामुत्रचगीयते २ वियद्वित्तस्यददतोलब्धंलब्धंबुभुक्षतः ॥ निष्किंचनस्यधीरस्यसकुटुंबस्यसीदतः ३ व्यतीयुरष्टचत्वारिंशदहान्यपिबतःकिल ॥ घृतपायससंयावंतोयंप्रातरुपस्थितम् ४ कृच्छ्रप्राप्तकुटुंबस्यक्षुत्तृड्भ्यांजातवेपथोः ॥ अतिथिर्ब्राह्मणःकालेभोक्तुकामस्यचागमत् ५ तस्मैसंव्यभजत्सोन्नमादृत्यश्रद्धयान्वितः॥ हरिंसर्वत्रसंपश्यनसभुक्त्वाप्रययौद्विजः ६ अथान्योभोक्ष्यमाणस्यविभक्तस्यमहीपतेः ॥ विभक्तंव्यभजत्तस्मैवृषलायहरिंस्मरन् ७ यातेशूद्रेतमन्योऽगादतिथिःश्वभिरावृतः ॥ राजन्मेदीयतामन्नंसगणायबुभुक्षते ८ सआदृत्यावशिष्टंयद्बहुमानपुरःसरम् ॥ तच्चदत्त्वानमश्चक्रेश्वभ्यःश्वपतयेविभुः ९ पानीयमात्रमुच्छेषंतच्चैकपरितर्पणम् ॥ पास्यतःपुल्कसोऽभ्यागादपोदेह्यशुभस्यमे १०

॥ श्रीशुक उवाच ॥ ॥ वितथस्य सुतः मन्युः तस्य पुत्राः पंच तेच बृहत्क्षत्रः प्रथमः जयद्रथः द्वितीयः महावीर्यः तृतीयः नरः चतुर्थः गर्गः पंचमः इति नरात्संकृतिः १ तस्य गुरुः तस्य रंतिदेवस्य यशः इहामुत्रच गीयते २ तस्य दैवात् लब्धं अभुक्षतः निष्किंचनस्य धीरस्य सकुटुंबस्य सीदतः लब्धं लब्धं ददतः ३ एवं वर्तमानस्य सतः अष्टचत्वारिंशत् दिनानि व्यतीयुः तदा घृतं पायसं संयावं तोयं च प्रातः प्राप्तं ४ कृच्छ्रप्राप्तकुटुंबस्य क्षुत्तृड्भ्यां जातवेपथोः भोक्तुकामस्य तस्य काले ब्राह्मणः अतिथिः आगमत् ५ सः सर्वत्र हरिं पश्यन् तस्मै श्रद्धया अन्नं ददौ स द्विजः भुक्त्वा ययौ ६ अवशिष्टमन्नं कुटुंबाय विभज्य भोक्तुकामस्य सतः अन्यः वृषलः अतिथिः आगमत् राजा तस्मै अन्नं ददौ ७ शूद्रे याते श्वभिरावृतः अतिथिः तं अगात् हे राजन् सगणाय क्षुधार्ताय मे अन्नं दीयताम् ८ तदा राजा तंबहुमानपुरःसरं श्वभ्यश्च शेषं अन्नं दत्वा नमश्चक्रे ९ ततः एकतृप्तिकरं जलं अवशिष्टं तत् पास्यतः पुल्कसः आगत्य अशुभस्यमे अपः देहीति अयाचत १०

११ परदुःखासहिष्णुतयासर्वेषांदुःखंस्वयंभोक्तुमाशास्ते नकामयइति । अणिमाद्यष्टसमृद्धियुक्तांगतिमपिमोक्षमपिवा अहंनकामये । तर्हिकिंकामयसेतदाह । अखिलदेहभाजामार्तिंदुःखंत
द्वोक्तृरूपेणांतःस्थितःसन्अहंप्रपद्येप्राप्नुयामित्येवंकामये । येनतद्दुःखभोक्तामयाहेतुभूतेनतेसर्वेअदुःखाभवंति १२ ननुदुःखंकिमितिप्रार्थयसेतत्रपरदुःखनिवृत्त्यैवममममर्त्यदुःखनिवृत्तिरित्याह ।
क्षुत्तृडिति । कृपणस्यजंतोर्जीवनहेतोःजलस्यार्पणात्मेसर्वेक्षुत्तृडादयोनिवृत्ताएवेत्येवंप्रभाष्य १३ १४ त्रिभुवनाधीशाः ब्रह्मादयः मायाः तदीयधैर्यपरीक्षार्थंप्रथमंमाययावृषलादिरूपे
णप्रतीताःसंतइत्यर्थः १५ परंकेवलंवासुदेवेनमश्चक्रेनतुतान्किमपियाचितवान् १६ अनन्यराधसःईश्वरातिरिक्तफलांतरानपेक्षस्य । प्रत्यलीयतआत्मन्येवलीनाबभूव १७ १८ मन्यु
सुतस्यनरस्यवंशमुक्त्वातत्सुतस्यैवगर्गस्यवंशमाह । गर्गादिति ( ततःक्षत्राच्छिनेःगार्ग्योब्रह्मह्यवर्तत ) महावीर्यस्यवंशमाह । महावीर्याद्दुरितक्षयः तस्यत्रय्यारुणिःकविःपुष्करारु
णिश्चेतित्रयःपुत्राः १९ कथंभूताःअत्रक्षत्रवंशेयेब्राह्मणगतिंब्राह्मणरूपतांगतास्ते मन्युपुत्राणां पंचानांज्येष्ठस्यवंशमाह बृहत्क्षत्रस्येतियत्येनहस्तिनापुरंकृतमित्यर्थः २०

तस्यतांकरुणांवाचंनिशम्याविपुलश्रमाम् ॥ कृपयाभृशसंतप्तइदमाहामृतंवचः ११ नकामयेहंगतिमीश्वरात्परामष्टर्धियुक्तामपुनर्भवंवा ॥ आर्तिंप्रपद्येऽखि
लदेहभाजामंतःस्थितोयेनभवंत्यदुःखाः १२ क्षुत्तृट्श्रमोगात्रपरिश्रमश्चदैन्यंक्लमःशोकविषादमोहाः ॥ सर्वेनिवृत्ताःकृपणस्यजंतोर्जिजीविषोर्जीवजलार्प
णान्मे १३ एवंप्रभाष्यपानीयंम्रियमाणःपिपासया ॥ पुल्कसायाददाद्धीरोनिसर्गकरुणोनृपः १४ तस्यत्रिभुवनाधीशाःफलदाःफलमिच्छताम् ॥ आ
त्मानंदर्शयामासुर्माया विष्णुविनिर्मिताः १५ सवैतेभ्योनमस्कृत्यनिःसंगोविगतस्पृहः ॥ वासुदेवेभगवतिभक्त्याचक्रेनमःपरम् १६ ईश्वरालंबनंचित्तं
कुर्वतोनान्यराधसः ॥ मायागुणमयीराजन्स्वप्नवत्प्रत्यलीयत १७ तत्प्रसंगानुभावेनरंतिदेवानुवर्तिनः ॥ अभवन्योगिनःसर्वेनारायणपरायणाः १८
गर्गाच्छिनिस्ततोगार्ग्यःक्षत्राद्ब्रह्मह्यवर्तत ॥ दुरितक्षयोमहावीर्यात्तस्यत्रय्यारुणिःकविः ॥ १९ पुष्करारुणिरित्यत्रयेब्राह्मणगतिंगताः ॥ बृहत्क्षत्रस्यपुत्रो
भूद्धस्तीयद्धस्तिनापुरम् २०

तस्य तां दीनां वाचं निशम्य करुया पीडितः इदं आह ११ अहं ईश्वरात् गतिं मोक्षं च न कामये किंतु अखिलदेहभाजां अंतः स्थितः सन् तेषां आर्तिं कामये
येन ते अदुःखाः भवंति १२ १३ इत्यादिप्रभाष्य स्वयं पिपासया म्रियमाणोपि तस्मै जलं ददौ १४ तदा ब्रह्मविष्णुमहेशाः आत्मानं दर्शयांचक्रुः १५ सः
तेभ्यः नमस्कृत्य निःसंगः सन् वासुदेवेभक्त्या नमश्चक्रे १६ एवं ईश्वरालंबनं चित्तं कुर्वतः तस्य माया स्वप्नवत् प्रत्यलीयत १७ तत्प्रसंगानुभावेन सर्वे जनाः ना
रायणपराः अभवन् १८ अथ गर्गस्य मन्युसुतस्य वंशमाह गर्गात् शिनिः तस्मात् गार्ग्यप्रभृति द्विजाः महावीर्यस्य वंशमाह महावीर्यस्य दुरितक्षयः तस्य त्र्यारुणिः
कविः १९ पुष्करारुणिः एते द्विजत्वं प्राप्ताः अथ बृहत्क्षत्रस्य पुत्रः हस्ति येन हस्तीनापुरं कृतम् २०

अजमीढादयस्त्रयोहास्तिनः पुत्राः २१ अजमीढादेवान्यःपुत्रोबृहदिषुर्नामाभवत् २२ २३ पारस्यतनयोनीपःनीपस्यपुत्रशतं २४ सएवकृत्व्यांकृत्वीसंज्ञायांशुककन्यायां ब्रह्मदत्तंजनयामास । तदुक्तंहरिवंशादिषु । "पराशरकुलोत्पन्नःशुकोनाममहायशाः । व्यासादरण्यांसंभूतोविधूमोग्निरिवज्वलन् । सतस्यांपितृकन्यायांवीरिण्यांजनयिष्यति । कृष्णंगौरंप्रभुंशंभुंतथाभूरिश्रुतंजयं । कन्यांकीर्तिमतींषष्ठींयोगिनींयोगमातरं । ब्रह्मदत्तस्यजननींमहिषीमणुहस्यच" इति । यद्यपिशुकउत्पत्त्यैवविमुक्तसंगोनिर्गतः तथापिविरहातुरंव्यासं अनुयांतंदृष्ट्वा छायाशुकंनिर्मायगतवान्तदभिप्रायेणैवायंगार्हस्थ्यादिव्यवहारइत्यविरोधः।सचब्रह्मदत्तोयोगेश्वरो गवि वाचि सरस्वत्याम् २५सएवयोगतंत्रंचकार बार्हदीषवा (अजमीढपुत्रस्य) बृहदिषोर्वंश्याइमे दीर्घत्वमार्षं (अथद्विमीढस्यवंशमाहयवीनरइति) २६ सुपार्श्वकृतसुपार्श्वस्यपिता २७प्राच्यसाम्नांषट्संहिताःजगौ विभज्याध्यापितवान् २८ २९ (पुरुमीढस्यतुवंशोनास्तीत्याह पुरुमीढइति)अजमीढस्यवंश्याःप्रियमेधादयः केचिद्ब्राह्मणाबभूवुः । बृहदिषुप्रभृतयःक्षत्रियाश्चेतिवंशद्वयमुक्तं । अथतस्यैववंशांतरमाह । नालिन्यामितियावत्समाप्ति ३०

अजमीढोद्विमीढश्चपुरुमीढश्चहास्तिनः॥अजमीढस्यवंश्याःस्युःप्रियमेधादयोद्विजाः २१अजमीढाद्बृहदिषुस्तस्यपुत्रोबृहद्धनुः॥बृहत्कायस्ततस्तस्यपुत्रश्चासीज्जयद्रथः २२ तत्सुतोविशदस्तस्यसेनजित्समजायत ॥ रुचिराश्वोदृढहनुःकाश्योवत्सश्चतत्सुताः २३ रुचिराश्वसुतःपारःपृथुसेनस्तदात्मजः ॥ पारस्यतनयोनीपस्तस्यपुत्रशतंत्वभूत् २४ सकृत्व्यांशुककन्यायांब्रह्मदत्तमजीजनत् ॥ योगीसगविभार्यायांविष्वक्सेनमधात्सुतम् २५ जैगीषव्योपदेशेनयोगतंत्रंचकारह ॥ उदक्स्वनस्ततस्तस्माद्भल्लादोबार्हदीषवाः २६ यवीनरोद्विमीढस्यकृतिमांस्तत्सुतःस्मृतः ॥ नाम्नासत्यधृतिर्यस्यदृढनेमिःसुपार्श्वकृत् २७ सुपार्श्वात्सुमतिस्तस्यपुत्रःसंनतिमांस्ततः ॥ कृतीहिरण्यनाभाद्योयोगंप्राप्यजगौस्मषट् २८ संहिताःप्राच्यसाम्नांवैनीपोह्युग्रायुधस्ततः ॥ तस्यक्षेम्यःसुवीरोस्यसुवीरस्यरिपुंजयः २९ ततोबहुरथोनामपुरुमीढोऽप्रजोऽभवत् ॥ नलिन्यामजमीढस्यनीलःशांतिस्तुतत्सुतः ३०

तस्य त्रयः अजमीढः द्विमीढः पुरुमीढ इति अजमीढस्य प्रियमीढादयो द्विजाः २१ अजमीढादेवअन्यः पुत्रः बृहदिषुः तस्य बृहद्धनुः तस्य बृहत्कायः तस्य जयद्रथः २२ तस्य विशदः तस्य सेनजित् तस्य पुत्राः चत्वारः रुचिराश्वः दृढहनुः काश्यः वत्सः इति २३ रुचिराश्वात् पारः तस्य पुत्रौ द्वौ पृथुसेनः नीपइति नीपस्य पुत्रशतं अभूत् २४ स एव नीपः शुककन्यायां कृत्व्यां ब्रह्मदत्तं सुतं प्रासूत सः ब्रह्मदत्तः सरस्वत्यां भार्यायां विष्वक्सेनं पुत्रं अधात् २५ स एव ब्रह्मदत्तः जैगीषव्योपदेशेन योगतंत्रं चकार विष्वक्सेनात् उदक्स्वनः तस्य भल्लादः एते बार्हदीषवः २६ अथ द्विमीढात् यवीनरः तस्य कृतिमान् तस्य सत्यधृतिः तस्य दृढनेमिः तस्य सुपार्श्वः २७ तस्य सुमतिः तस्य सन्नतिमान् तस्य कृती सः हिरण्यनाभात् योगंप्राप्य २८ प्राच्यसाम्नां षट्संहिताः विभज्य शिष्यान् अध्यापितवान् तस्य नीपः तस्यउग्रायुधः तस्य क्षेम्यः तस्य सुवीरः तस्य रिपुंजयः २९ तस्य बहुरथः तस्य पुरुमीढः अप्रजः अजमीढस्य वंशांतरमाह अजमीढात् नलिन्यां नीलः तस्य शांतिः तस्य सुशांतिः ३०

मुद्गलपूर्वकःयवीनरादयश्चत्वारइत्येवंपंच ३१ ३२ ( विषयाणां देशानां ) ३३ भार्म्यात्भर्म्याश्वपुत्रात्मिथुनंचाभूतदेवाह । दिवोदासःपुमान्अहल्याचकन्येति तस्यशतानंदस्य
३४ ३५ ३६ इतिश्रीभागवतेमहापुराणेनवमस्कंधेटीकायांएकविंशतितमोध्यायः ॥२१॥ ॥छ॥ ॥ द्वाविंशतुदिवोदासवंशमुख्यायवर्णिताः । क्षत्रवंशेजरासंधपार्थदुर्योधनादयः ॥ १ ॥
१ तस्यसोमकस्यपुत्राणांशतंबभूव । तेषांजंतुर्ज्येष्ठः । यवीयान्पृषतः । ( तस्यद्रुपदस्यसुताद्रौपदी । पुत्राधृष्टद्युम्नादयः ) २ अजमीढस्यैववंशांतरमाह । यइति । ततःसंवरणात्
कुरुः ३ ४ तस्यकृतिनउपरिचरोवसुः । ततोवसोः बृहद्रथोमुखंआदिर्येषां ५

शांतेःसुशांतिस्तत्पुत्रःपुरुजोर्कस्ततोऽभवत् ॥ भर्म्याश्वस्तनयस्तस्यपंचासन्मुद्गलादयः ३१ यवीनरोबृहदश्वःकांपिल्यःसृंजयःसुताः ॥ भर्म्याश्वःप्राहपुत्रामेपंचानांरक्षणायहि ३२ विषयाणामलमिमेइतिपंचालसंज्ञिताः ॥ मुद्गलाद्ब्रह्मनिर्वृत्तंगोत्रंमौद्गल्यसंज्ञितम् ३३ मिथुनंमुद्गलाद्भार्म्याद्दिवोदासःपुमानभूत् ॥ अहल्याकन्यकायस्यांशतानंदस्तुगौतमात् ३४ तस्यसत्यधृतिःपुत्रोधनुर्वेदविशारदः ॥ शरद्वांस्तत्सुतोयस्मादुर्वशीदर्शनात्किल ३५ शरस्तंबेऽपतद्रेतोमिथुनंतदभूच्छुभम् ॥ तद्दृष्ट्वाकृपयाऽगृह्णात्शंतनुर्मृगयांचरन् ॥ कृपःकुमारःकन्याचद्रोणपत्न्यभवत्कृपी ३६ ॥ ॥ इतिश्रीभागवतेमहापुराणेनवमस्कंधेएकविंशतितमोऽध्यायः २१ ॥ छ ॥ श्रीशुकउवाच ॥ ॥ मित्रेयुश्चदिवोदासाच्च्यवनस्तत्सुतोनृप ॥ सुदासःसहदेवोथसोमकोजंतुजन्मकृत् १ तस्यपुत्रशतंतेषांयवीयान्पृषतःसुतः ॥ द्रुपदोद्रौपदीतस्यधृष्टद्युम्नादयःसुताः २ धृष्टद्युम्नाद्धृष्टकेतुर्भार्म्याःपांचालकाइमे ॥ योऽजमीढसुतोह्यन्यऋक्षःसंवरणस्ततः ३ तपत्यांसूर्यकन्यायांकुरुक्षेत्रपतिःकुरुः ॥ परीक्षित्सुधनुर्जह्नुर्निषधाश्वःकुरोःसुताः ४ सुहोत्रोभूत्सुधनुषश्च्यवनोथततःकृती ॥ वसुस्तस्योपरिचरोबृहद्रथमुखास्ततः ५

तस्य पुरुजः तस्य अर्कः तस्य भर्म्याश्वः तस्य पुत्राः पंच मुद्गलः ३१ यवीनरः बृहदिषुः कांपिल्यः संजयः १२ इमे पंचालसंज्ञकाः आसन् मुद्गलात् ब्रह्म जातं तत् गोत्रं मुद्गलाख्यं जातं १३ मुद्गलात् मिथुनं तत्र दिवोदासः पुमान् अहल्या कन्या च तस्यां गौतमात् शतानंदः जातः ३४ तस्य सत्यधृतिः तस्य शरद्वान् यस्मात् उर्वशीदर्शनात् ३५ शरस्तंबे रेतः अपतत् तस्मात् रेतसः मिथुनं जातम् तन्मिथुनं दृष्ट्वा शंतनुः मृगयां चरन् कृपया जग्राह तत्र पुमान् कृपः कन्या कृपी सा द्रोणपत्नी आसीत् ३६ ॥ ॥ इति नवमे एकविंशः ॥ २१ ॥ ॥ छ ॥ ॥ श्रीशुक उवाच ॥ ॥ दिवोदासात् मित्रेयुः तस्मात् च्यवनः तस्मात् सुदासः तस्मात् सहदेवः तस्मात् सोमकः १ तस्मात् पुत्रशतं बभूव तेषु जंतुः ज्येष्ठः पृषतः कनिष्ठः पृषदात् द्रुपदः तस्य द्रौपदी कन्या धृष्टद्युम्नादयः सुताः २ धृष्टद्युम्नात् ॥२५॥
धृष्टकेतुः इमे पांचालसंज्ञकाः । अजमीढस्य वंशांतरमाह अजमीढात् ऋक्षः तस्य संवरणः ३ तस्य तपत्यां सूर्यकन्यायां कुरुक्षेत्रपतिः कुरुः तस्य पुत्राः चत्वारः परीक्षित् सुधनुः जह्नुः निषधाश्च इति ४ सुधनुषः सुहोत्रः तस्य च्यवनः तस्य कृती तस्य उपरिचरो वसुः तस्य बृहद्रथः ५

तानेवाह । कुशांबेति तस्सुतःपुष्पवानजज्ञे । तस्यापत्यंसत्यहित इतियोज्यं ६ ७ जरयाराक्षस्या (अतोनाम्नाजरासंधोऽभवत्) ८ यस्मात्सोमापेः श्रुतश्रवाः कुरोःपुत्रःपरीक्षिदनपत्यः जाह्नवोजह्नोःपुत्रः ९ अतोराधीकादयुतोभूदित्यर्थः १० ११ तस्यप्रतीपस्यदेवापिशंतनुबाह्लीकाः १२ प्राक्पूर्वजन्मनिमहाभिषइतिसंज्ञा ( जाता ) यस्यसः १३ यदादेवोनववर्ष तदा शंतनुस्तत्रकारणंब्राह्मणान्पप्रच्छ १४ ब्राह्मणैश्चैवमुक्तः " दाराग्निहोत्रसंयोगंकुरुतेयोऽग्रजेस्थिते । परिवेत्तासविज्ञेयःपरिवित्तिस्तुपूर्वजः " इतिस्मृतेःयोऽग्रजमभुक्तभुवमप्रतोभुनक्तिअय त्वाऽद्यःपरिवेत्तामवसि अतःपरिवेदनदोषपरिहारायराज्यमग्रजायदेहीति ततोवृष्टिर्भविष्यतीत्येवमुक्तःशंतनुः ( तत्र ) वनंमन्वाज्यंछंदयामास । राज्ञः प्रजापालनादिःपरमोधर्मःअ तस्त्वंराज्यंस्वीकुर्विति प्रार्थितवान् । ततःपूर्वमेवतस्यमंत्रिणा अश्मरसंज्ञेनदेवापिपाखंडीकृत्यराज्यानर्हं कर्तुमाहिताविप्राः तैःपाखंडमताश्रययामिराकेदादिभ्रंशितस्सन्वेदवादस्यातिवा दान्निंदावचनानिसोऽब्रवीत् । ततस्तस्यपातित्येनराज्यानर्हत्वेजातेशंतनोर्दोषाभावात्देवोववर्षेत्यर्थः १५

कुशांबमत्स्यप्रत्यग्रचेदिपाद्याश्चचेदिपाः ॥ बृहद्रथात्कुशाग्रोऽभूदृषभस्तत्सुतस्ततः ६ जज्ञेसत्यहितोऽपत्यंपुष्पवांस्तत्सुतोजहुः ॥ अन्यस्यांचापिभार्या
यांशकलेद्वेबृहद्रथात् ७ तेमात्राबहिरुत्सृष्टेजरयाचाभिसंधिते ॥ जीवजीवेतिक्रीडंत्याजरासंधोभवत्सुतः ८ ततश्चसहदेवोभूत्सोमापिर्यच्छ्रुतश्रवाः ॥ प
रीक्षिदनपत्योभूत्सुरथोनामजाह्नवः ९ ततोविदूरथस्तस्मात्सार्वभौमस्ततोभवत् ॥ जयत्सेनस्तत्तनयोराधीकोऽतोऽयुतोह्यभूत् १० ततश्चक्रोधनस्त
स्माद्देवातिथिरमुष्यच ॥ ऋष्यस्तस्यदिलीपोभूत्प्रतीपस्तस्यचात्मजः ११ देवापिःशंतनुस्तस्यबाह्लीकइतिचात्मजाः ॥ पितृराज्यंपरित्यज्यदेवापि
स्तुवनंगतः १२ अभवच्छंतनूराजाप्राङ्महाभिषसंज्ञितः ॥ यंयंकराभ्यांस्पृशतिजीर्णंयौवनमेतिसः १३ शांतिमाप्नोतिचैवाग्र्यांकर्मणातेनशंतनुः ॥ स
माद्वादशतद्राज्येनववर्षयदाविभुः १४ शंतनुर्ब्राह्मणैरुक्तःपरिवेत्तायमग्रभुक् ॥ राज्यंदेह्यग्रजायाशुपुरराष्ट्रविवृद्धये १५

कुशांबः मत्स्यः प्रत्यग्रः इमे चेदिपाद्याः पुत्राः चेदिपसंज्ञकाः बृहद्रथात् कुशाग्रः तस्य ऋषभः तस्य ६ पुष्पवान् तस्य सत्यहितः तस्य जहुः बृहद्रथादेवान्यभा र्यायां द्वे शकले जाते ७ ते मात्रा बहिरुत्सृष्टे जीवजीवेति क्रीडंत्या जरया चाभिसंधिते सः जरासंधः ८ तस्य सहदेवो तस्य सोमापिः तस्य श्रुतश्रवाः कुरुपुत्रो यः परीक्षित् सः अनपत्यः कुरुपुत्रस्य जह्नोः सुरथः ९ तस्य विदूरथः तस्य सार्वभौमः तस्य जयसेनः तस्य राधीकः तस्य अयुतः १० तस्य क्रोधनः तस्य देवातिथिः तस्य ऋष्यः तस्य दिलीपः तस्य प्रतीपः ११ तस्य पुत्राः त्रयः देवापिः शंतनुः बाल्हीकइति तत्र देवापिः पितृराज्यं त्यक्त्वा दिवं गतः ततः शंतनुः राजा अभवत् सः कराभ्यां यं यंजीर्णं स्पृशति सः यौवनं एति १२ १३ तद्राज्ये यदा द्वादश समाः देवो न ववर्ष १४ तदा शंतनुः तत्कारणं विप्रान् पृष्ट्वा तैः त्वं परिवेत्ता अतः तद्दोषपरिहारार्थं आ शु अग्रजाय राज्यं देहि ततो वृष्टिः स्यात् १५

१६ १७ ( कृतयुगस्यादौपुनःसोमवंशंस्थापयिष्यतिभवतीयिष्यतरित्यर्थः ) ततःसोमदत्ता द्भूरिःभूरिश्रवाःशलश्चेतित्रयः १८ १९ रामोजामदग्न्यः दाशकन्यायामिति उपरिचरस्यत्र
सोर्वीर्येणमत्स्यगर्भादुत्पन्नाकन्यादाशैःकैवर्तैःपालिता अतोदाशकन्येतिप्रसिद्धायांसत्यवत्यां २० नाम्नातस्सनामनाम्नाचित्रांगदेनगंधर्वेणयुद्धेहतः ( नाम्नाभिन्नितेनहतइतिवा ) यस्यां
सत्यवत्यांशंतनुपरिग्रहात्पूर्वमेव २१ वेदागुप्ताः ( शाखाप्रभेदादिनारक्षिताः ) येन । यतोहंजातः । इदंश्रीभागवतंचाध्यगां अधिगतवानस्मि ( समुनिःकृष्णो व्यासः ) २२ २३
स्वयंवराद्भीष्मेणबलादुपनीते २४ मात्रासत्यवत्याउक्तइतिनिषेधाभावमाह । अनपत्याऽपरयलिप्सुर्देवराद्गुरुप्रयुक्तादृतुमतीयादित्यादिवचनात् २५

एवमुक्तोद्विजैर्ज्येष्ठंछंदयामाससोब्रवीत् ॥ तन्मंत्रिप्रहितैर्विप्रैर्वेदाद्विभ्रंशितोगिरा १६ वेदवादातिवादान्वैतदादेवोववर्षह ॥ देवापिर्योगमास्थायकलाप
ग्राममाश्रितः १७ सोमवंशेकलौनष्टेकृतादौस्थापयिष्यति ॥ बाह्लीकात्सोमदत्तोऽभूद्भूरिर्भूरिश्रवास्ततः १८ शलश्चशंतनोरासीद्गंगायांभीष्मआत्म
वान् ॥ सर्वधर्मभृतांश्रेष्ठोमहाभागवतःकविः १९ वीरोयूथाग्रणीर्येनरामोपियुधितोषितः ॥ शंतनोर्दाशकन्यायांजज्ञेचित्रांगदःसुतः २० विचित्रवीर्य
श्चावरजोनाम्नाचित्रांगदोहतः ॥ यस्यांपराशरात्साक्षादवतीर्णोहरेःकला २१ वेदगुप्तोमुनिःकृष्णोयतोहमिदमध्यगाम् ॥ हित्वास्वशिष्यान्पैलादीन्भग
वान्बादरायणः २२ मह्यंपुत्रायशांतायपरंगुह्यमिदंजगौ ॥ विचित्रवीर्योथोवाहकाशिराजसुतेबलात् २३ स्वयंवरादुपानीतेअंबिकांबालिकेउभे ॥
तयोरासक्तहृदयोगृहीतोयक्ष्मणामृतः २४ क्षेत्रेऽप्रजस्यवैभ्रातुर्मात्रोक्तोबादरायणः ॥ धृतराष्ट्रंचपांडुंचविदुरंचाप्यजीजनत् २५

एवमुक्त्वा शंतनुः वनं गत्वा ज्येष्ठं छंदयामास शंतनुगमनात् पूर्वमेव अश्मरावसंज्ञेन मंत्रिणा देवापिं पाखंडीकृत्य राज्यानर्हं कर्तुं ये प्रहिताः विप्राः तैः वेदात् भ्रंशितः
सन् वेदनिंदापरः अभवत् १६ ततः तस्य पतितत्वेन राज्यानर्हत्वे जाते शंतनोः दोषाभावात् देवो ववर्ष देवापिः योगं आस्थाय कलापग्रामे आस्ते १७ सः कलौ सो
मवंशे नष्टे कृतादौ स्थापयिष्यति बाह्लीकात् सोमदत्तः तस्य पुत्राः त्रयः भूरिः भूरिश्रवाः शलश्चेति १८ शंतनोः गंगायां भीष्मः आसीत् १९ येन जामदग्न्योपि युधि
तोषितः शंतनोः दाशकन्यायां सत्यवत्यां चित्रांगदः विचित्रवीर्यश्च जज्ञे २० तत्र चित्रांगदः तन्नामकगंधर्वेण युद्धे हतः सत्यवत्यां शंतनुपरिग्रहात्पूर्वमेव पराशरात् हरेः
अंशो व्यासो जातः २१ यतः अहं जातः सः पैलादीन् हित्वा २२ मह्यं पुत्राय इदं भागवतं जगौ विचित्रवीर्यः काशिराजसुते २३ भीष्मेण स्वयंवरात् आनीते अंबिकाबालि
के उवाह तयोः आसक्तहृदयः सः यक्ष्मणा मृतः २४ अप्रजस्य तस्य भ्रातुः क्षेत्रे मात्रोक्तः व्यासः अंबिकायां धृतराष्ट्रं अंबालिकायां पांडुं दास्यां विदुरं च अजीजनत् २५

१ अपतिरितिपाठोपि ।

दुःशलानामकन्याचजज्ञे २६ अरण्येमृग-( रूपमुनि- ) शापात् मैथुनेनरुद्धस्य ( मरणलक्षणविघ्नेन ) प्रतिबद्धस्य ( धर्मात्यमात् युधिष्ठिरः । अनिलाद्भीमः । इंद्रादर्जुनः ) २७ नासत्यदस्रयोः अश्विभ्यामित्यर्थः । पंचभ्योयुधिष्ठिरादिभ्यः पंचाऽभवन् ( तेतव ) २८ २९ तथापरेचभार्यांतरेषु ( अथहिडंबायांभीमसेनाद्घटोत्कचः ) ३० कालीचान्यभीमस्य भार्यातस्यांततोभीमात् सर्वगतोनामपुत्रोऽभवदित्यर्थः ३१ तथाऽर्जुनेउलूप्यांनागकन्यायां ( इरावंतंपुत्रमसूत ) मणिपूरपतेः सुतायांचपुत्रिकाधर्मेणदत्तायांबभ्रुवाहनमसूत । अतस्त्व त्पुत्रस्तन्नपिसःपुत्रिकासुतःमातामहसुतइत्यर्थः । ( अस्यांयोजायतेपुत्रःसमेपुत्रोभविष्यतीतिभाष्यय।कन्यादानंपुत्रिकाधर्मः ) ३२ ( सर्वानतिरथान् जयतीतितथाभूतोऽभिमन्युःततो भिमन्योरुत्तरायांभवान् त्वंजातः ) ३३ अंतकात् भस्मसात्कर्तुं(रा)कात्अश्वात्थात् ) ३४ ३५ ( होष्यतिहोमंकरिष्यति ) ३६

गांधार्यांधृतराष्ट्रस्यजज्ञेपुत्रशतंनृप ॥ तत्रदुर्योधनोज्येष्ठोदुःशलाचापिकन्यका २६ शापान्मैथुनरुद्धस्यपांडोःकुंत्यांमहारथाः ॥ जाताधर्मानिलेंद्रेभ्यो युधिष्ठिरमुखास्त्रयः २७ नकुलःसहदेवश्चमाद्र्यांनासत्यदस्रयोः ॥ द्रौपद्यांपंचपंचभ्यःपुत्रास्तेपितरोऽभवन् २८ युधिष्ठिरात्प्रतिविंध्यःश्रुतसेनोवृकोदरात् ॥ अर्जुनाच्छ्रुतकीर्तिस्तुशतानीकस्तुनाकुलिः २९ सहदेवसुतोराजञ्छ्रुतकर्मातथाऽपरे ॥ युधिष्ठिरात्तुपौरव्यांदेवकोथघटोत्कचः ३० भीमसेनाद्धिडंबायांकाल्यांसर्वगतस्ततः ॥ सहदेवात्सुहोत्रंतुविजयाऽसूतपार्वती ३१ करेणुमत्यांनकुलोनिरमित्रंतथार्जुनः ॥ इरावंतमुलूप्यांवैसुतायांबभ्रुवाहनम् ॥ मणिपूरपतेःसोपितत्पुत्रःपुत्रिकासुतः ३२ तवतातःसुभद्रायामभिमन्युरजायत ॥ सर्वातिरथजिद्वीरउत्तरायांततोभवान् ३३ परिक्षीणेषुकुरुषु द्रौणेर्ब्रह्मास्त्रतेजसा ॥ त्वंचकृष्णानुभावेनसजीवोमोचितोऽतकात् ३४ तवेमेतनयास्तातजनमेजयपूर्वकाः ॥ श्रुतसेनोभीमसेनउग्रसेनश्चवीर्यवान् ३५ जनमेजयस्त्वांविदित्वातक्षकान्निधनंगतम् ॥ सर्पान्वैसर्पयागाग्नौसहोष्यतिरुषान्वितः ३६

धृतराष्ट्रस्य गांधार्यां दुर्योधनप्रमुखं पुत्रशतं दुःशला कन्या च जज्ञे २६ वने मृगशापात् मैथुने प्रतिबद्धस्य पांडोः कुंत्यां धर्मानिलेंद्रेभ्यो युधिष्ठिरप्रमुखाः त्रयः २७ माद्र्यां नासत्यदस्राभ्यां नकुलसहदेवौ द्रौपद्यां पंचभ्यः पंच पुत्राः ते पितरः अभवन् २८ तत्र युधिष्ठिरात् प्रतिविंध्यः भीमात् श्रुतसेनः अर्जुनात् श्रुतकीर्तिः नकुलात् शतानीकः २९ सहदेवात् श्रुतकर्मा तथा अन्यस्त्रीषु धर्मात् पौरव्यां देवकः भीमात् हिडिंबायां घटोत्कचः ३० तथा काल्यां सर्वगतः सहदेवात् विजयायां सुहोत्रः ३१ नकुलात् करेणुमत्यां निरामित्रः अर्जुनात् उलूप्यां नागकन्यायां इरावान् तथा मणिपूरपतेः सुतायां चित्रांगदायां पुत्रिकाधर्मेण दत्तायां बभ्रुवाहनः अतःअर्जुनपुत्रः सन्नपि मणिपूरपतेःसुतः ३२ अर्जुनात् सुभद्रायां ते तातःअभिमन्युः तस्मात्त्वं ३३ द्रौणेः ब्रह्मास्त्रतेजसा क्षीणेषु कुरुषु कृष्णानुभावेन अंतकात् मोचितः ३४ तव पुत्राः चत्वारः जनमेजयः श्रुतसेनः भीमसेनः ४ उग्रसेनः इति ३५ जनमेजयः तक्षकात् त्वां निधनं गतं श्रुत्वा सर्पसत्रं करिष्यति ३६

(तुरं) तुरसंज्ञंपुरोहितंकृत्वा ३७ भाविष्यानाह तस्यपुत्रइतियावत्समाप्ति । याज्ञवल्क्यात् क्रियाज्ञानं (प्राप्स्यति) शौनकात्परंआत्मज्ञानंएष्यति अस्त्रज्ञानंचकृपाचार्यादितिद्रष्टव्यम् । याज्ञवल्क्यात्त्रयीमधीत्यकृपादस्त्राण्यवाप्स्यतीतिवैष्णवोक्तेः। कचित्तु अस्त्रज्ञानंकृपादित्येवपाठः ३८ (तत्पुत्रःशतानीकस्यपुत्रः। तत आश्वमेधसनामातत्सुतःआसीमकृष्णः) ३९ (गजाह्वयेहास्तिनपुरे ४० कौशांब्यांपुर्यां) यद्यस्मात्सुषीनरः पुत्रः ४१ तस्मात्पारिप्लवात्सुदयस्तस्यात्मजोमेधावीत्यर्थः ४२ तस्मात्सुदासः ततःशतानीकइत्यर्थः ४३ (ब्रह्मक्षत्रस्यब्रह्मक्षत्रस्य । देवर्षिभिश्चसत्कृतः) ४४ (संस्थांअंतं । अथयेमागधराजानोभावितारस्तान्वदामि) ४५ बृहद्रथस्यजरासंधःतस्यसहदेवस्तस्यमार्जारिः यस्मान्मार्जारिः श्रुतश्रवाः ४६

काव्षेयंपुरोधायतुरंतुरगमेधयाट्॥समंतात्पृथिवींसर्वांजित्वायक्ष्यतिसोऽध्वरे३७ तस्यपुत्रःशतानीकोयाज्ञवल्क्यात्त्रयींपठन्॥अस्त्रज्ञानंक्रियाज्ञानंशौनकात्परमेष्यति ३८ सहस्रानीकस्तत्पुत्रस्ततश्चैवाश्वमेधजः ॥ असीमकृष्णस्तस्यापिनेमिचक्रस्तुतत्सुतः ३९ गजाह्वयेहृतेनद्याकौशांब्यांसाधुवत्स्यति ॥ उक्तस्ततश्चित्ररथस्तस्मात्कविरथःसुतः ४० तस्माच्चवृष्णिमांस्तस्यसुषेणोथमहीपतिः ॥ सुनीथस्तस्यभविता नृचक्षुर्यत्सुषीनरः ४१ पारिप्लवःसुतस्तस्मान्मेधावीसुनयात्मजः ॥ नृपंजयस्ततोदूर्वस्तिमिस्तस्माज्जनिष्यति ४२ तिमेर्बृहद्रथस्तस्माच्छतानीकःसुदासजः ॥ शतानीकाद्दुर्दमनस्तस्यापत्यंवहीनरः ४३ दंडपाणिर्नृपस्तस्यक्षेमकोभवितानृपः ॥ ब्रह्मक्षत्रस्यवंशोयंप्रोक्तोदेवर्षिसत्कृतः ४४ क्षेमकंप्राप्यराजानंसंस्थांप्राप्स्यतिवैकलौ ॥ अथमागधराजानोभवितारोवदामिते ४५ भवितासहदेवस्यमार्जारिर्यच्छ्रुतश्रवाः ॥ ततोऽयुतायुस्तस्यापिनिरमित्रोथतत्सुतः ४६

ततः भुवं जित्वा काव्षेयं तुरसंज्ञं पुरोहितं कृत्वा अश्वमेधैः यक्ष्यति ३७ तस्य पुत्रः शतानिकः सः याज्ञवल्क्यशौनककृपेभ्यः त्रयीं क्रियात्मनोः ज्ञानं क्रमतः एष्यति ३८ तस्य सहस्रानीकः तस्य अश्वमेधसः तस्य असीमकृष्णः तस्य निमिचक्रः ३९ एते भाव्याः निमिचक्रः नद्या गजाह्वये हृते सति कौशांब्यां वत्स्यति तस्य उक्तसंज्ञः तस्य चित्ररथः तस्य कविरथः ४० तस्य वृष्णिमान् तस्य सुषेणः तस्य सुनीथः तस्य नृचक्षुः तस्य सुखीनलः[1] ४१ तस्य परिप्लवः तस्य सुनयः तस्य मेधावी तस्य नृपंजयः तस्य दूर्वः तस्य तिमिः ४२ तस्य बृहद्रथः तस्य सुदासः तस्य शतानिकः तस्य दुर्दमनः तस्य वहीनरः ४३ तस्य दंडपाणिः तस्य निमिः तस्य क्षेमकः ४४ एवं प्राप्य पुरुवंशः संस्थां प्राप्स्यति । अथ भाव्याः मागधाः राजानः ते वदामि ४५ बृहद्रथात् पूर्वोक्तात् जरासंधः तस्य सहदेवः तस्य मार्जारिः तस्य श्रुतश्रवाः तस्य अयुतायुः तस्य निरमित्रः ४६

१ सुखीनलइतिपठांतरं ।

४७ ४८ सहस्रसंवत्सरमेतेभाव्याभूपालाः ततःपरंभाव्यान् द्वादशस्कंधेवक्ष्यति ४९ ॥ ॥ इतिश्रीभागवतेमहापुराणेनवमस्कंधेटीकायांद्वाविंशोऽध्यायः २२ ॥ ॥ छ ॥ त्रयोविंशे
स्वनोर्द्रुह्योस्तुर्वसोश्चान्वयःक्रमात् । यदोश्चवंशोऽनुक्रांतोयावज्ज्यामघसंभवः ॥ १ ॥ तदेवंययातेःपुत्राणांपंचमस्यपुरोर्वंशअनुक्रांतः । इदानींचतुर्थस्य वंशमनुक्रामति । अनोरिति
कर्णस्यजगतीपतेरित्यंतेन १ तस्यजनमेजयस्यमहाशीलःतस्यमहामनाः २ चत्वारउशीनरात्मजाःसंधिरार्षः ( वृषादर्भादयःशिबेरात्मजाः )३ ४ ( दीर्घतमसऋषेः ) ५ (त्रिषयान्
देशान् अंगात् खनपानोनाम ) ६ ( चित्ररथएवरोमपादाख्यस्तस्यसखादशरथःस्वांकन्यांतस्मैदत्तवान्तांऋष्यशृंगोववे ) ७ ( अवर्षतिसतियमृष्यशृंगम् ) ८

सुनक्षत्रःसुनक्षत्राद्बृहत्सेनोथकर्मजित् ॥ ततःसृंतंजयोविप्रःशुचिस्तस्यभविष्यति ४७ क्षेमोथसुव्रतस्तस्माद्धर्मनेत्रःशमस्ततः ॥ द्युमत्सेनोथसुमतिःसुब
लोजनितस्ततः ४८ सुनीतःसत्याजिदथविश्वजिद्रिपुंजयः ॥ बार्हद्रथाश्चभूपालाभाव्याःसाहस्रवत्सरम् ४९ ॥ ॥ इतिश्रीभागवतेमहापुराणेनव
मस्कंधेद्वाविंशोऽध्यायः २२ ॥ ॥ छ ॥ अनोःसभानरश्चक्षुःपरोक्षश्चत्रयःसुताः ॥ सभानरात्कालनरःसृंजयस्तत्सुतस्ततः १ जनमेजयस्तस्यसु
तोमहाशीलोमहामनाः ॥ उशीनरस्तितिक्षुश्चमहामनसआत्मजौ २ शिबिर्वनःशमिर्दक्षश्चत्वारोशीनरात्मजाः ॥ वृषादर्भःसुवीरश्चमद्रःकैकेयआत्मजाः
३ शिबेश्चत्वारएवासंस्तितिक्षोश्चरुशद्रथः ॥ ततोहेमोथसुतपाबलिःसुतपसोऽभवत् ४ अंगवंगकलिंगाद्याःसुह्मपुंड्रांध्रसंज्ञिताः ॥ जज्ञिरेदीर्घतमसोबलेः
क्षेत्रेमहीक्षितः ५ चक्रुःस्वनाम्नाविषयान्षडिमान्प्राच्यकानिह ॥ खनपानोंऽगतोजज्ञेतस्माद्दिविरथस्ततः ६ सुतोधर्मरथोयस्यजज्ञेचित्ररथोऽप्रजः ॥
रोमपादइतिख्यातस्तस्मैदशरथःसखा ७ शांतांस्वकन्यांप्रायच्छदृष्यशृंगउवाहताम् ॥ देवेऽवर्षतियंरामाआनिन्युर्हरिणीसुतम् ८

तस्य सुनक्षत्रः तस्य बृहत्सेनः तस्य कर्मजित् तस्य सृंजयः तस्य विप्रः तस्य शुचिः ४७ तस्य क्षेमः तस्य सुव्रतः तस्य धर्मसूत्रः तस्य शमः तस्य द्युमत्सेनः तस्य
सुमतिः तस्य सुबलः ४८ तस्य सुनीथः तस्य सत्यजित् तस्य विश्वजित् तस्य रिपुंजयः भविष्यति एते बार्हद्रथाः भूपालाः साहस्रसंवत्सरं भाव्याः ४९ ॥ ॥ इति
नवमे द्वाविंशः २२ ॥ ॥ छ ॥ ॥ ॥ श्रीशुकउवाच ॥ ययातिपुत्रस्य अनोःपुत्राः त्रयः सभानरः चक्षुः परोक्षः इति सभानरात् कालनरः तस्य सृंजयः १ तस्य
जनमेजयः तस्य महामनाः तस्य उशीनरः तितिक्षुश्च द्वौ पुत्रौ २ उशीनरस्य पुत्राः चत्वारः शिबिः वनः शमिः दक्षइति शिबेः पुत्राः वृषादर्भः सुवीरः मद्रः कैकयः
इति ३ उशीनरबंधोः तितिक्षोः रुशद्रथः तस्य हेमः तस्य सुतपाः तस्य बलिः ४ तत्क्षेत्रे दीर्घतमसः अंगवंगकलिंगाद्याः सुह्मपुंड्रांध्रसंज्ञिताः पुत्राः ५ एते स्वनाम्ना
षट् देशान् चक्रुः अंगात् खनपानः तस्य दिविरथः ६ तस्य धर्मरथः तस्य चित्ररथः सः अप्रजः स एव रोमपाद इति ख्यातः ७ तस्मै दशरथः शांतां स्वकन्यां ददौ
तांऋष्यशृंगः उवाह यं रामाः वृष्ट्यर्थं नाट्यगीतादिभिः आनिन्युः ८

 

( विभ्रमोहावविशेषःअर्हणंउपचारसमर्पणंयस्य । सतुऋष्यशृंगःमरुत्पतेरिष्टिंनिरूप्य राज्ञोरोमपादस्य प्रजामदात् । येनऋष्यशृंगेणहेतुभूतेनइष्टिविशेषेणवादशरथोपिचतुरःपुत्रानूलेभे ) ९ (तस्माद्रोमपादाच्चतुरंगः पुत्रोभूत् तस्यचतुरंगस्यसुतःपृथुलाक्षः) १० ( आयाद्बृहद्रथात् ) ११ १२ ( कानीनंकन्यायांजातं अपाविद्धंत्यक्तं मंजूषांतर्गतंपेट्यांविद्यमानं ) १३ ( द्रुह्योर्वंशमाह द्रुह्योरिति ) १४ १५ १६ १७ सदुष्यंतःस्ववंशंपौरववंशम् १८ १९ २० प्रथमस्यसहस्रजितः आत्मजः २१

नाट्यसंगीतवादित्रैर्विभ्रमालिंगनार्हणैः ॥ सतुराज्ञोऽनपत्यस्यनिरूप्येष्टिंमरुत्पतेः ९ प्रजामदादशरथोयेनलेभेऽप्रजःप्रजाः ॥ चतुरंगोरोमपादात्पृथुलाक्षस्तुतत्सुतः १० बृहद्रथोबृहत्कर्माबृहद्भानुश्चतत्सुताः ॥ आद्याद्बृहन्मनास्तस्माज्जयद्रथउदाहृतः ११ विजयस्तस्यसंभूत्यांततोधृतिरजायत ॥ ततोधृतव्रतस्तस्यसत्कर्माधिरथस्ततः १२ योसौगंगातटेक्रीडन्मंजूषांतर्गतंशिशुम् ॥ कुंत्यापविद्धंकानीनमनपत्योकरोत्सुतम् १३ वृषसेनःसुतस्तस्य कर्णस्यजगतीपतेः ॥ द्रुह्योश्चतनयोबभ्रुःसेतुस्तस्यात्मजस्ततः १४ आरब्धस्तस्यगांधारस्तस्यधर्मस्ततोधृतः ॥ धृतस्यदुर्मदस्तस्मात्प्रचेताःप्राचेतसंशतम् १५ म्लेच्छाधिपतयोभूवन्नुदीचींदिशमाश्रिताः ॥ तुर्वसोश्चसुतोवह्निर्वह्नेर्भर्गोथभानुमान् १६ त्रिभानुस्तत्सुतोस्यापिकरंधमउदारधीः ॥ मरुत्तस्तत्सुतोऽपुत्रःपुत्रंपौरवमन्वभूत् १७ दुष्यंतंसपुनर्भेजेस्ववंशंराज्यकामुकः ॥ ययातेर्ज्येष्ठपुत्रस्ययदोर्वंशंनरर्षभ १८ वर्णयामिमहापुण्यंसर्वपापहरं नृणाम् ॥ यदोर्वंशंनरःश्रुत्वासर्वपापैःप्रमुच्यते १९ यत्रावतीर्णोभगवान्परमात्मानराकृतिः ॥ यदोःसहस्रजित्क्रोष्टानलोरिपुरितिश्रुताः २० चत्वारःसूनवस्तत्रशतजित्प्रथमात्मजः ॥ महाहयोवेणुहयोहैहयश्चेतितत्सुताः २१

सः ऋष्यशृंगः मरुत्वतः इष्टिं निरूप्य चित्ररथाय प्रजां अदात् येन दशरथोपि प्रजाः लेभे ९ रोमपादात् चतुरंगः तस्य पृथुलाक्षः १० तस्य पुत्राः त्रयः बृहद्रथः बृहत्कर्मा बृहद्भानुरिति बृहद्रथात् बृहन्मनाः तस्य जयद्रथः ११ तस्य विजयः तस्य धृतिः तस्य धृतव्रतः तस्य सत्कर्मा तस्य अधिरथः १२ यः गंगातटे क्रीडन् कुंत्या त्यक्तं मंजूषागतं कानीनं सुतं अकरोत् सः कर्णः १३ तस्यवृषसेनः । द्रुह्योः वंशंशृणु द्रुह्योः बभ्रुः तस्य सेतुः १४ तस्य आरब्धः तस्य गांधारः तस्य धर्मः तस्य धृतः तस्य दुर्मनाः तस्य प्रचेताः तस्य शतंपुत्राः म्लेच्छपतयो बभूवुः १५ अथ तुर्वसोः वन्हिः तस्य भर्गः तस्य भानुमान् १६ तस्य त्रिभानुः तस्य करंधमः तस्य मरुत्तः सः अपुत्रः सन् पौरवं दुष्यंतं पुत्रत्वेन अन्वभूत् १७ सः दुष्यंतः पुनः स्वं पुरुवंशं राज्यकामुकः सन् भेजे १८ ययातेर्ज्येष्ठपुत्रस्य यदोर्वंशं नरर्षभ वर्णयामि महापुण्यं सर्वपापहरं नृणाम् यदोर्वंशं नरः श्रुत्वा सर्वपापैः प्रमुच्यते १९ यत्रावतीर्णो भगवान् परमात्मा नराकृतिः यदोः पुत्राः चत्वारः सहस्राजित् क्रोष्टा नलः रिपुः इति २० ज्येष्ठात् शतजित् तस्य पुत्राः त्रयः महाहयः वेणुहयः हैहयः इति २१ 

१ मरुत्तव:इतिपाठभेदो दृश्यतेक्वचित् ।

( नेत्रात्कुंतिरभवदित्यर्थः ) कुंतेःसोहंजिःसोहंजेर्महिष्मान् महिष्मतोभद्रसेनकः २२ तस्यदुर्मदो धनकश्चेति द्वौपुत्रौ । कृतवीर्यसूःकृतवीर्यस्यजनकः । कृतवीर्यादयश्चत्वारोधनकात्मजाइत्यर्थः २३ ( प्राप्ताःयोगस्यमहागुणाअणिमादयोयेन ) २४ २५ अनष्टमविनाशं वित्तंयेनतथाविधंस्मरणंयस्यसः । अक्षय्यंषड्वसुषडिंद्रियविषयंबुभुजे २६ २७ और्वस्यतेजसा सगरेणोपसंहृतमित्यर्थः २८ तेषांतालजंघपुत्राणांज्येष्ठःतस्यमधोःपुत्रशतंवृष्णिज्येष्ठोयस्मिन् । यतोमधोर्वृष्णेर्यदोश्चहेतोरिदंकुलम् २९ ३० ३१ चतुर्दशमहारत्नानितज्ज्ञाविश्रेष्ठानियस्यसः । तानिचमार्कंडेयपुराणेवर्णितानि । " गजवाजिरथस्त्रीषुनिधिमाल्यांबरद्रुमाः । शक्तिपाशमणिच्छत्रविमानानिचतुर्दश " इति ( तस्य ) दशानांपत्नीसहस्राणां ( दशसहस्रसंख्याकभार्याणां ) अयुतस्यप्रत्येकंलक्षंलक्षमित्येवं तासुपुत्राणांदशलक्षसहस्राणि ( आसन् । तानिसमहायशास्तासु ) जनयामासइत्यर्थः ३२

धर्मस्तुहैहयसुतोनेत्रःकुंतिपितातत: ॥ सोहंजिरभवत्कुंतेर्महिष्मान्भद्रसेनकः २२ दुर्मदोभद्रसेनस्यधनकःकृतवीर्यसूः ॥ कृताग्निःकृतवर्माचकृतौजाधनकात्मजाः २३ अर्जुनःकृतवीर्यस्यसप्तद्वीपेश्वरोऽभवत् ॥ दत्तात्रेयाद्धरेरंशात्प्राप्तयोगमहागुणः २४ ननूनंकार्तवीर्यस्यगतिंयास्यंतिपार्थिवाः ॥ यज्ञदानतपोयोगःश्रुतवीर्यजयादिभिः २५ पंचाशीतिसहस्राणिह्यव्याहतबलःसमाः ॥ 'अकरोदर्जुनोराज्यंहरिंचैवान्वहंस्मरन्' ॥ अनष्टवित्तस्मरणोबुभुजेक्षय्यषड्वसु २६ तस्यपुत्रसहस्रेषुपंचैवोर्वरितामृधे ॥ जयध्वजःशूरसेनोवृषभोमधुरूर्जितः २७ जयध्वजात्तालजंघस्तस्यपुत्रशतंत्वभूत् ॥ क्षत्रंयत्तालजंघाख्यमौर्वतेजोपसंहृतम् २८ तेषांज्येष्ठोवीतिहोत्रोवृष्णिःपुत्रोमधोःस्मृतः ॥ तस्यपुत्रशतंत्वासीद्वृष्णिज्येष्ठंयतःकुलम् २९ माधवावृष्णयोराजन्यादवाश्चेतिसंज्ञिताः ॥ यदुपुत्रस्यचक्रोष्टोःपुत्रोवृजिनवांस्ततः ३० श्वाहिस्ततोरुशेकुस्तस्यचित्ररथस्ततः ॥ शशबिंदुर्महायोगीमहाभोजोमहानभूत् ३१ चतुर्दशमहारत्नश्चक्रवर्त्यपराजितः ॥ तस्यपत्नीसहस्राणांदशानांसुमहायशाः ॥ दशलक्षसहस्राणिपुत्राणांतास्वजीजनत् ॥ ३२ ॥

हैहयात् धर्मः तस्य नेत्रः तस्य कुंतिः तस्य सोहंजिः तस्य महिष्मान् तस्य भद्रसेनकः तस्य पुत्रौ द्वौ दुर्मदः धनकश्चेति धनकस्यपुत्राः चत्वारः कृतवीर्यः कृताग्निः कृतवर्मा कृतौजाः इति २३ कृतवीर्यस्य सहस्रार्जुनः सप्तद्वीपेश्वरः अभवत् सः दत्तात्रेयात् योगसिद्धिं प्राप २४ तस्य गतिं यज्ञादिभिः अन्ये नृपाः न यास्यंति २५ सः पंचाशीतिसहस्राणि समाः राज्यं चकार २६ तस्य पुत्रसहस्रेषु युद्धे पंच उर्वरिताः ते च जयध्वजः शूरसेनः वृषभः मधुः ऊर्जितः इति २७ जयध्वजात् तालजंघः तस्य पुत्रशतं जज्ञे तत् और्वतेजसा सगरेण उपसंहृतम् २८ तत्र वीतिहोत्रो ज्येष्ठः अथ मधोः वृष्णिज्येष्ठं पुत्रशतमासीत् यतः मधोः वृष्णेः यदोश्च हेतोः इदं कुलम् तत्संज्ञं २९ यदुपुत्रस्य क्रोष्टोः वृजिनवान् ३० तस्य श्वाहिः तस्य रुशेकुः तस्य चित्ररथः तस्य शशबिंदुः तस्य महाभोजः ३१ सः स्वस्यअयुतस्त्रीषु प्रत्येकं लक्षं लक्षं एवं पुत्राणां दशलक्षसहस्राणि अजनयत् ३२

---

१ इदमर्धं मुंबामुद्रितपुस्तके न ।

पृथुश्रवाःपृथुकीर्तिः पृथुयशाइत्यादयःषट्प्रधानाःश्रेष्ठायेषांतेषांमध्ये ( पृथुश्रवसोधर्मोनामआत्मजआसीत् । तस्योशनाअश्वमेधशतस्ययष्टाऽऽसीत्)३३ पंचआत्मजा आसन्तान् शृणु तानेवाहपुरुजिदिति ३४ तत्रभार्याभय ादेवैकभार्यस्य वंध्यापतेरपुत्र स्य ज्यामघस्यतद्वयेमवपुत्रप्रदमभवदितिदर्शयन्नाह ज्यामघइति । ( ज्यामघस्तु शैब्यायाःपतिःसोऽप्रजोपिशैब्या याभयात् अन्यांभार्यांनाविंदत् । सकदाचित् शत्रुभवनात् भोज्यांनामिकन्यांजित्वाऽहार्षीत्) ३५ ३६ ( भयसंभ्रमव्याकुलेनभर्त्रातवेयंस्नुषेत्यभिहितेयद्य हत्रंध्यानस्याम् ) यदिवामेस पत्नीस्यात् तर्हिस्नुषेयंयुज्येतापिनत्वेतदस्तीत्याहअसप त्नीचेति ( अहमिति ) ३७ अतिभयव्याकुलआह जनयिष्यसीति भार्याभयेनप्रकंपमानस्य स्विन्नसर्वांगस्यराज्ञःप्राणसंकटमालो क्यसदयहृदयास्तेनपूर्वंबहुकालमाराधिताविश्वेदेवाःपितरश्चतद्वचनंतथास्त्वित्यन्वमोदंत ३८ ततश्चदेवताप्रसादेनजनयिष्यसीतिप्रतिवचनमुहूर्तयुगे निवृत्तरजस्कापिशैब्यागर्भ मधात् ( नाम्नास्नुषाम् ) ज्यामघस्यमहिमापराशरादिभिरुक्तः । " भार्यावश्यास्तुयेकेचिद्भविष्यंत्यथवामृताः । तेषांतु ज्यामघःश्रेष्ठःशैब्यापतिरभून्नृपः" इति ३९ ॥ इतिश्रीभागवते महापुराणेनवमस्कंधेटीकायांत्रयोविंशोऽध्यायः २३ ॥ ॥ ७ ॥ ॥ चतुर्विंशेविदर्भस्यपुत्रत्रयसमुद्भवाः । वंशानानामुखाःप्रोक्तारामकृष्णोद्भवावधि ॥ १ ॥ १

तेषांतुषट्प्रधानानांपृथुश्रवसआत्मजः ॥ धर्मोनामोशनास्तस्यहयमेधशतस्ययाट् ३३ तत्सुतोरुचकस्तस्यपंचासन्नात्मजा शृणु ॥ पुरुजिद्रुक्मरुक्मे षुपृथुज्यामघसंज्ञिताः ३४ ज्यामघस्त्वप्रजोप्यन्यांभार्यांशैब्यापतिर्भयात् ॥ नाविंदच्छत्रुभवनाद्भोज्यांकन्यामहार्षीत् ३५ रथस्थांतांनिरीक्ष्याहशै ब्यापतिममर्षिता ॥ केयंकुहकमत्स्थानंरथमारोपितेतिवै ३६ स्नुषातवेत्यभिहितेस्मयंतीपतिमब्रवीत् ॥ अहंवंध्याऽसपत्नीचस्नुषामेयुज्यतेकथम् ३७ जनयिष्यसियंराज्ञितस्येयमुपयुज्यते ॥ अन्वमोदंततद्विश्वेदेवाःपितरएवच ३८ शैब्यागर्भमधात्कालेकुमारंसुषुवेशुभम् ॥ सविदर्भइतिप्रोक्तउपयेमेस्नु षांसतीम् ३९ ॥ ॥ इतिश्रीभागवतेमहापुराणेनवमस्कंधेत्रयोविंशोऽध्यायः २३ ॥ ॥ ७ ॥ ॥ श्रीशुकउवाच ॥ ॥ तस्य विदर्भोऽजनयत्पु त्रौनाम्नाकुशक्रथौ ॥ तृतीयंरोमपादंचवैदर्भकुलनंदनम् १

तत्र पृथुश्रवा पृथुयशा इत्यादयः षट् मुख्याः पृथुश्रवसः धर्मः तस्य उशनाः ३३ तस्य रुचकः तस्य पुत्राः पंच पुरुजित् रुक्मः रुक्मेषुः पृथुः ज्यमघश्चेति । ज्यामघः ३४ अप्रजः तस्य शैब्या स्त्री आसीत् सः एकदा शत्रुभवनात् भोज्यां कन्यां जहार ३५ रथस्थां तां दृष्ट्वा शैब्या आह हे कुहक केयं मत्स्थानं रथं स्थापिता ३६ इति श्रु त्वा भयात् तव स्नुषा इत्याह सा स्मयंती सती पतिं आह अहं वंध्या असपत्नी च स्नुषा मे युज्यते कथं ३७ तदा सः प्राह जनयिष्यासि यं राज्ञि तस्येयमुपयुज्यते अन्वमोदंत तद्विश्वे देवाः पितर एव च ३८ शैब्या गर्भमधात्काले कुमारं सुषुवे शुभम् स विदर्भ इति प्रोक्त उपयेमे स्नुषां सतीम् ३९ ॥ इति नवमे त्रयोविंशः २३ ॥ ॥ ॥ ॥ श्रीशुक उवाच ॥ ॥ विदर्भः तस्यां कुशक्रथरोमपादान् त्रीन् पुत्रान् अजनयत् १

१ अनुकंपित।इति पाठः

ततश्चैद्यादयोदमघोषाद्याः २ ३ ततोदशरथाच्छकुनिः ( तस्यकरंभिरित्यर्थः ) पुराणांतरादेवमादिर्विशेषोद्रष्टव्यः ४ ततः कुरुवंशादनुः अनोः पुत्रः पुरुहोत्रः ५ ६ महाभोजश्चे त्येवंसप्त । मारिष हेआर्य ७ ८ ९ ततदुपदेशभेदेनयेषांषषष्ट्यादिसंख्याः पुरुषाः ते अमृतत्वंमोक्षंप्राप्ताः १० ११ तस्ययुधाजितः शिनिरनामित्रश्च १२ १३ सात्यकिः सत्यकस्यपुत्रो युयुधानः तस्यजयः तस्यकुणिः ततः कुणेर्युगंधरः । अनमित्रस्यैवापरः वृष्णिर्नामपुत्रः ( एवमनमित्रस्यनिम्नः शिनिर्वृष्णिरिति त्रयः पुत्राउक्ताः । ततोवृष्णेः ) १४

रोमपादसुतोबभ्रुर्बभ्रोःकृतिरजायत ॥ कुशिकस्तत्सुतस्तस्माच्चेदिश्चैद्यादयोनृपाः २ क्रथस्यकुंतिःपुत्रोभूद्वृष्टिस्तस्याथनिर्वृतिः ॥ ततोदशार्होनाम्नाभू तस्यव्योमसुतस्ततः ३ जीमूतोविकृतस्तस्ययस्यभीमरथःस्मृतः ॥ ततोनवरथःपुत्रोजातोदशरथस्ततः ४ करंभिःशकुनेःपुत्रोदेवरातस्तदात्मजः ॥ देवक्षत्रःसुतस्तस्यमधुःकुरुवशादनुः ५ पुरुहोत्रस्त्वनोःपुत्रस्तस्यायुःसात्वतस्ततः ॥ भजमानोभजिर्दिव्योवृष्णिर्देवावृधोऽन्धकः ६ सात्वतस्यसुताःस प्तमहाभोजश्चमारिष ॥ भजमानस्यनिम्लोचिःकिंकिणोधृष्टिरेवच ७ एकस्यामात्मजाःपत्न्यामन्यस्यांतुत्रयःसुताः ॥ शताजिच्चसहस्राजिदयुताजिदि तिप्रभो ८ बभ्रुर्देवावृधसुतस्तयोःश्लोकान्पठंत्यमू ॥ यथैवशृणुमोदूरात्संपश्यामस्तथांतिकात् ९ बभ्रुःश्रेष्ठोमनुष्याणांदेवैर्देवावृधःसमः ॥ पुरुषाःपंच षष्टिश्चषट्सहस्राणिचाष्टच १० येऽमृतत्वमनुप्राप्ताबभ्रोर्देवावृधादपि ॥ महाभोजोपिधर्मात्माभोजाआसंस्तदन्वये ११ वृष्णेःसुमित्रःपुत्रोऽभूद्युधाजिच्च परंतप ॥ शिनिस्तस्यानमित्रश्चनिम्नोऽभूदनमित्रतः १२ सत्राजितःप्रसेनश्चनिम्नस्याप्यासतुःसुतौ ॥ अनमित्रसुतोयोन्यःशिनिस्तस्यचसत्यकः १३ युयुधानःसात्यकिर्वैजयस्तस्यकुणिस्ततः ॥ युगंधरोऽनमित्रस्यवृष्णिःपुत्रोऽपरस्ततः १४

रोमपादस्य बभ्रुः तस्य कृतिः तस्य कुशिकः तस्य चेदिः तस्मात् चैद्यादयः २ अथ क्रथस्य कुंतिः तस्यवृष्टिः तस्य निर्वृतिः तस्य दाशार्हः तस्य व्योमः ३ तस्य जीमूतः तस्य विकृतिः तस्य भीमरथः तस्य नवरथः तस्य दशरथः ४ तस्य शकुनिः तस्य करंभिः तस्य देवरातः तस्य देवक्षत्रःतस्य मधुःतस्य कुरुवशः तस्य अनुः ५ तस्य पुरुहोत्रः तस्य आयुः तस्य सात्वतः तस्य पुत्राः सप्त भजमानः भजिः दिव्यः वृष्णिः देवावृधः अंधकः महाभोजःइति ६ भजमानात् एकस्यां पुत्राः त्रयः निम्लोचिः किंकिणः धृष्टिः इति ७ तथा अन्यस्यां पुत्राः त्रयः शताजित् सहस्राजित् अयुताजित् इति ८ अथ देवावृधात् बभ्रुः सः मनुष्येषु श्रेष्ठः देवावृधश्च देवैः समं ताभ्यां अष्टाधिकपंचषष्टिसहस्रं पुरुषाः मोक्षं प्राप्ताः अथ महाभोजान्वये भोजाः आसन् ९ १० ११ अथ सात्वतपुत्रस्य वृष्णेः पुत्रौ द्वौ सुमित्रः युधाजित् इति युधाजितः पुत्रौ द्वौ शिनिः अनामित्रश्च अनामित्रात् निम्नः १२ तस्य पुत्रौ द्वौ सत्राजितः प्रसेनश्च इति अनामित्रसुतोन्यः शिनिः तस्य सत्यकः १३। तस्य युयुधानः तस्य जयः तस्य कुणिः तस्य युगंधरः अनमित्रस्य अपरःपुत्रः वृष्णिः १४

---

१ कुरुवशस्तत ' इतिपाठः ।

अक्रूरप्रमुखोयेषामित्यतद्गुणसंविज्ञानोबहुव्रीहिः १५ अतोऽक्रूरातिरिक्तान् द्वादशदर्शयतिआसंगइति १६ १७ पृथुरेकः विदुरथाद्याअन्ये चबहवः विपृथुधामाद्यमहतिपाठेआद्यश ब्देनविदूरथोप्युक्तः ततश्चशूरोविदूरथादासीदितिवक्ष्यमाणानिर्देशोपपत्तिः १८ कुकुरादयश्चत्वारोंधकस्यसुताइतिज्ञेयम् । यथाह श्रीपराशरः ।। "कुकुरभजमानशुचिकंबलब र्हिषाख्यास्तथांधकस्यपुत्राइति ( कृष्णेस्तनयोविलोमा ) १९ ( यस्यकपोतरोम्णः सुतोऽनुः यस्यानोः सखा तुंबुरुरासीत् ) अनोरंधकः पुत्रः अंधकाद्दुंदुभिरित्यपि पराशरवचनादेवज्ञेयम् । ( अतोदरिद्रात्पुनर्वसुः ) २० ( तस्यपुत्रआहुकआहुकीकन्या ) २१ धृतदेवाआदिर्यासांशांतिदेवादीनांषण्णां । ताः सप्त २२ २३ औग्रसेनयःउग्रसेनस्यसु ताः २४ वसुदेवस्ययेऽनुजादेवभागादयस्तेषांस्त्रियोभार्याः २५

श्वफल्कश्चित्ररथश्चगांदिन्यांतुश्वफल्कतः ॥ अक्रूरप्रमुखाआसन्पुत्राद्वादशविश्रुताः १५ आसंगःसारमेयश्चमृदुरोमृदुविद्गिरिः ॥ धर्मवृद्धःसुकर्माचक्षे त्रोपेक्षोऽरिमर्दनः १६ शत्रुघ्नोगंधमादश्चप्रतिबाहुश्चद्वादश ॥ तेषांस्वसासुचीराख्याद्वावक्रूरसुतावपि १७ देववानुपदेवश्चतथाचित्ररथात्मजः ॥ पृथु र्विदूरथाद्याश्चबहवोवृष्णिनंदनाः १८ कुकुरोभजमानश्चशुचिःकंबलबर्हिषः ॥ कुकुरस्यसुतोवह्निर्विलोमातनयस्ततः १९ कपोतरोमानस्यानुःसखाय स्यचतुंबुरुः ॥ अंधकोदुंदुभिस्तस्यदरिद्रोतःपुनर्वसुः २० तस्याहुकश्चाहुकीचकन्याद्वावाहुकात्मजौ ॥ देवकश्चोग्रसेनश्चचत्वारोदेवकात्मजाः २१ देव वानुपदेवश्चसुदेवोदेववर्धनः ॥ तेषांस्वसारःसप्तासन्श्रुतदेवादयोनृप[१] २२ शांतिदेवोपदेवाचश्रीदेवादेवरक्षिता ॥ सहदेवादेवकीचवसुदेवउवाहताः २३ कंसःसुनामान्यग्रोधःकंकःशंकुःसुहूस्तथा ॥ राष्ट्रपालोथसृष्टिश्चतुष्टिमानौग्रसेनयः २४ कंसाकंसवतीकंकाशूरभूराष्ट्रपालिका ॥ उग्रसेनदुहितरोवसुदे वानुजस्त्रियः २५

तस्य पुत्रौ द्वौ श्वफल्कः चित्ररथश्च इति श्वफल्कात् गांदिन्यां त्रयोदश पुत्राः १५ अक्रूरः आसंगः सारमेयः मृदुरः मृदुवित् गिरिः धर्मवृद्धः सुकर्मा क्षत्रोपेक्षः अरि मर्दनः शत्रुघ्नः गंधमादः प्रतिबाहुः इति सुचीराख्या तेषां स्वसास्ति १६ १७ अक्रूरस्य पुत्रौ द्वौ देववान् उपदेवश्च इति श्वफल्कबंधोः चित्ररथस्य पृथुः एकः अन्ये विदूरथाद्याः बहवः संति १८ सात्वतपुत्रात् अंधककात् पुत्राः चत्वारः कुकुरः भजमानः शुचिः कंबलबर्हिः इति कुकुरस्य वह्निःतस्य विलोमा १९तस्य कपोतरोमा तस्य अनुः तस्य अंधकःतस्य दुंदुभिः तस्य अरिद्योतः तस्य पुनर्वसुः २० तस्य आहुकः आहुकी कन्या च आहुकस्य पुत्रौ द्वौ देवकः उग्रसेनः इति देवकात्मजाः चत्वारः २१ देववान् उपदेवः सुदेवः देववर्धनः इति तेषां भगिन्यः सप्त २२ धृतदेवा शांतिदेवा उपदेवा श्रीदेवा देवरक्षिता सहदेवा देवकीइति एताः वसुदेवः उवाह २३ उग्र सेनस्य पुत्राः नव कंसः सुनामा न्यग्रोधः कंकः शंकुः सुहूः राष्ट्रपालः सृष्टिः तुष्टिमान् इति २४ एषां भगिन्यः पंच कंसा कंसवती कंका शूरभूः राष्ट्रपालिका इ ति एताः वसुदेवानुजस्त्रियः २५

[१] धृतदेवेतिपाठांतरं ।

अंधकस्यसुतानांचतुर्णांप्रथमस्यकुकुरस्यवंशउक्तः । द्वितीयस्यभजमानस्यवंशमाह । शूरोविदूरथादिति । भजमानाद्वाविदूरथः पुत्रोऽभवत् विदूरथाच्चशूरइतिपराशरादिवचनात् यद्वा पृथ्वांविदूरथाद्याइतिपूर्वोक्ताच्चित्ररथात्मजाद्विदूरथात् २६ देवमीढस्यचः शूरोनामपुत्रस्तस्य । देवमीढस्तुहृदीकस्यसुतः । यथाह पराशरः । तस्यापिकृतवर्मशतधनुर्देवमीढ्सा द्याः पुत्राबभूवुः देवमीढुषस्य(शूरः)शूरस्यापिमारिषानामपत्न्यभूत् । तस्यांचासौदशपुत्रानजनयद्वसुदेवपूर्वानिति २७ २८ आनकाश्चनेदुः २९ हरेः प्रादुर्भावस्यस्थानम् ३० पृथायाः कन्यकात्वस्थायांकर्णोत्पत्तिप्रकारमाह कुंतेरितिपंचभिः ( पृथायाः पिताशूरः स्वस्यसख्युरपुत्रस्यकुंतेः पृथामदात् अतस्तेनपालितासानाम्नाकुंतीतिप्रसिद्धा । सातत्रस्थितासती ) ३१ कदाचिद्गृहमागतंदुर्वाससं पृथा परिचर्यादिना तोषयामास । ततश्चसा ( प्रतोषितात् ) तस्माद्देवहूतिंदेवाह्वानहेतुभूतांविद्यामवाप । तदाह सापेति ( देवानांहूतिराह्वानंयतस्तांआप ) ३२ तंदेवमुपागतंवीक्ष्य सा प्राह । प्रत्ययार्थपरीक्षार्थमयाविद्या प्रयुक्ता । ननुत्वयाकिंचित्कार्यमित्यभिसंधिनाप्रयोगोयम् । अतोयाहीत्येवमुक्तोरविरुवाच ३३ अमोघंदर्शन मिति कन्याहमितिचेत्तत्राह । योनिरिति । यथायोनिर्नदुष्येत्तथाहंकर्ताकारिष्य्यामि ३४ ३५

शूरोविदूरथादासीद्भजमानःसुतस्ततः ॥ शिनिस्तस्मात्स्वयंभोजोहृदीकस्तत्सुतोमतः २६ देवबाहुःशतधनुःकृतवर्मेतितत्सुताः ॥ देवमीढस्यशूरस्यमारिषानामपत्न्यभूत् २७ तस्यांसजनयामासदशपुत्रानकल्मषान् ॥ वसुदेवंदेवभागंदेवश्रवसमानकम् २८ सृंजयंश्यामकंकंकंशमीकंवत्सकंवृकम् ॥ देवदुंदुभयोनेदुरानकायस्यजन्मनि २९ वसुदेवंहरेःस्थानंवदंत्यानकदुंदुभिम् पृथाचश्रुतदेवाचश्रुतकीर्तिःश्रुतश्रवाः ३० राजाधिदेवीचैतेषांभगिन्यःपंचकन्यकाः ॥ कुंतेःसख्युःपिताशूरोह्यपुत्रस्यपृथामदात् ३१ सापदुर्वाससोविद्यांदेवहूतिंप्रतोषितात् ॥ तस्यावीर्यपरीक्षार्थंआजुहावरविंशुचिः ३२ तदैवोपगतंदेवंवीक्ष्यविस्मितमानसा ॥ प्रत्ययार्थंप्रयुक्तामेयाहिदेवक्षमस्वमे ३३ अमोघंदर्शनंदेविआधत्सेत्वयिचात्मजम् ॥ योनिर्यथानदुष्येतकर्ताहंतेसुमध्यमे ३४ इतितस्यांसआधायगर्भंसूर्योदिवंगतः ॥ सद्यःकुमारःसंजज्ञेद्वितीयइवभास्करः ३५

अथ अंधकपुत्रस्य भजमानस्य विदूरथः तस्य शूरः तस्य भजमानः तस्य शिनिः तस्य स्वयंभोजः तस्य हृदीकः २६ तस्य पुत्राः चत्वारः देवबाहुः शतधनुः कृतवर्मा देवमीढः इति देवमीढस्य शूरः २७ तस्य मारिषायां पुत्राः दश वसुदेवः देवभागः देवश्रवाः आनकः सृंजयः श्यामकः कंकः शमीकः वत्सकः वृकः इति वसुदेवजन्मनि आनकदुंदुभयो नेदुः २८ २९ अतः तं आनकदुंदुभिं हरेः स्थानं वदंति । शूरस्य कन्याः पंच पृथा श्रुतदेवा श्रुतकीर्तिः श्रुतश्रवाः राजाधिदेवी इति ३० शूरः अप्रजस्य कुंतेः पृथां ददौ ३१ एकदा गृहागतं दुर्वाससं पृथा परिचर्यादिना तोषयामास तस्मात् सा देवाह्वानविद्यामाप विद्यापरीक्षार्थं रविं आजुहाव ३२ तदा प्राप्तं रविं दृष्ट्वा आह मया परीक्षार्थं विद्या प्रयुक्ता हे देव याहि क्षमस्व ३३ रविराह हे देवि मे दर्शनं व्यर्थं न त्वयि पुत्रं धत्से ३४ यथा योनिः न दुष्येत तथा । एवं तस्यां गर्भं स्थाप्य गतः ततः सद्यः कुमारः जज्ञे ३५

१ शुचिमिविपाठोपिकाचित् ।

३६ ( ऋषिभिः सनत्कुमारे शप्तः ) ३७ ( कैकयःकेकयवंशोत्पन्नः ) ३८ आवंत्यौविंदानुविंदौ ३९ तदेवंवसुदेवस्यभगिनीनांपतीन् पुत्रांश्चोक्त्वा तद्भ्रातृणांनवानांपत्नीःपुत्रांश्चाह । देवभागस्यो ते नवभिःश्लोकार्धैः ४० ४१ ४२ ४३ ४४ वसुदेवस्यपत्नीः पुत्रांश्चाह पौरवीत्येकादशभिः ४५ ४६ ४७ कौशल्यामद्रा ४८ ४९ ५० ५१

तंसाऽत्यजन्नदीतोयेकृच्छ्राल्लोकस्यबिभ्यती ॥ प्रपितामहस्तामुवाहपांडुर्वैसत्यविक्रमः ३६ श्रुतदेवांतुकारूषोवृद्धशर्मासमग्रहीत् ॥ तस्यामभूद्दंतवक्त्रऋ षिशप्तोदितेःसुतः ३७ कैकेयोधृष्टकेतुश्चश्रुतकीर्तिमविंदत ॥ संतर्दनादयस्तस्याःपंचासन्कैकयाःसुताः ३८ राजाधिदेव्यामावंत्यौजयसेनोजनिष्टह ॥ दमघोषश्चेदिराजःश्रुतश्रवसमग्रहीत् ३९ शिशुपालःसुतस्तस्याःकथितस्तस्यसंभवः ॥ देवभागस्यकंसायांचित्रकेतुबृहद्बलौ ४० कंसवत्यांदेवश्रवसःसु वीरइषुमांस्तथा ॥ कंकायामानकाज्जातौसत्यजित्पुरुजित्तथा ४१ सृंजयोराष्ट्रपाल्यांचवृषदुर्मर्षणादिकान् ॥ हरिकेशहिरण्याक्षौशूरभूम्यांचश्यामकः ४२ मिश्रकेश्यामप्सरसिवृकादीन्वत्सकस्तथा ॥ तक्षपुष्कलशालादीन्दुर्वाक्ष्यांवृकआदधे ४३ सुमित्रार्जुनपालादीन्शमीकात्तुसुदामिनी ॥ कंकश्चकर्णिका यांवैऋतधामजयावपि ४४ पौरवीरोहिणीभद्रामदिरारोचनाइडा ॥ देवकीप्रमुखाआसन्पत्न्यआनकदुंदुभेः ४५ बलंगदंसारणंचदुर्मदंविपुलंध्रुवम् ॥ व सुदेवस्तुरोहिण्यांकृतादीनुदपादयत् ४७ सुभद्रोभद्रबाहुश्चदुर्मदोभद्रएवच ॥ पौरव्यास्तनयाह्येतेभूताद्याद्वादशाभवन् ४८ नंदोपनंदकृतकशूराद्याम दिरात्मजाः ॥ कौशल्याकेशिनंत्वेकमसूतकुलनंदनन् ४९ रोचनायांततोजाताहस्तहेमांगदादयः ॥ इलायामुरुवल्कादीन्यदुमुख्यानजीजनत् ५० विपृष्ठोधृतदेवायामेकआनकदुंदुभेः ॥ शांतिदेवात्मजाराजन्श्रमप्रतिश्रुतादयः ५१

सा तं नदीतोये तत्याज तां पांडुः उवाह ३६ कारूषःवृद्धशर्मा श्रुतदेवायां दंतवक्रं जनयामास ३७ कैकयः धृष्टकेतुः श्रुतकीर्त्यां संतर्दनादीन् पंच पुत्रान् प्रासू त ३८ जयसेनः राजाधिदेव्यां विंदानुविंदौ अजनिष्ट चेदिराजः दमघोषः श्रुतश्रवसि शिशुपालं जनयामास ३९ अथ वसुदेवभ्रातृवंशमाह देवभागात् कंसायां चित्रकेतुबृहद्बलौ द्वौ पुत्रौ ४० इति देवश्रवसः कंसवत्यां सुवीरः इषुमान् इति द्वौ पुत्रौ आनकात् कंकायां सत्यजित् पुरुजित् ४१ संजयात् राष्ट्रपाल्यां वृषदुर्मर्षणाद यः श्यामकात् शूरभूम्यां हरिकेशहिरण्याक्षौ द्वौ पुत्रौ ४२ वत्सकात् मिश्रकेश्यामप्सरसि वृकादयः वृकात् दुर्वाक्ष्यां अप्सरसि तक्षपुष्करशालादयः ४३ शमीकात् सुदामिन्यां सुमित्रार्जुनपालादयः कंकात् कर्णिकायां ऋतधामजयौ ४४ ४५ वसुदेवः रोहिण्यां बलं गदं सारणं दुर्मदं विमलं ध्रुवं कृतादींश्च जनयामास ४६ वसुदेवस्य पौरव्यां सुभद्रः भद्रबाहुः दुर्मदः भद्रः भूताद्याश्च द्वादश ४७ वसुदेवस्य मदिरायां नंदोपनंदकृतकशूराद्याः वसुदेवात् भद्रायां केशी ४८ वसुदेवस्य रोच नायां हस्तहेमांगदादयः तथा इलायां उरुवल्कादयः ४९ तथा धृतदेवायां विपृष्ठः शांतिदेवायां श्रमप्रतिश्रुतादयः ५० ५१

५२ ५३ ५४ अष्टमस्तुस्वयमेवासीदि । ननुकर्मादिनाहेतुनातोभ्यांजनितावा । यतोसौहरिः ५५ तदेवोपपादयति यदेतित्रिभिः ५६ ईशस्यमायानियंतुः । परस्यप्रसंगस्य । द्रष्टुः साक्षिणः । आत्मनः सर्वगतस्य । नह्येवंभूतस्यमायाविनोदंविनाजन्मनः कर्मणोवाहेतुः संभवतीत्यर्थः ५७ किंच । यस्यमायाचेष्टितंपुंसोजीवस्यानुग्रहः तस्य (सर्व-)-जीवानुग्राहकस्य कुतः कर्मादिपारतंत्र्येणजन्मादिसंभवः । अनुग्रहमेवाह । हियस्मात्तदेवस्थित्यादयेचेष्यते । प्रलयेलीनोपाधेर्जीवस्यधर्माद्यसंभवादुपाधिसृष्ट्यादिनाधर्मादिसंपादनेनानुग्रहो(ज्ञेयः) । तथा आत्मलाभायचेष्यते । तत्रहेतुः । तेनैवक्रियमाणेनतस्यस्थित्यादेर्निवृत्तेः ५८ तस्यचेष्टितंभूमेरप्यनुग्रहइत्याह ! अक्षौहिणीनामितिद्वाभ्याम् अभारायभारहरणायेत्यर्थः ५९ सुरेश्वरैर्ब्रह्मादिभिरपिमनसापिअपरिमेयानिआश्चर्यकर्माणिसंकर्षणसहितश्चक्रे ६० संकल्पमात्रेणभूभारहरणसमर्थस्यापिकर्मकरणंयशोविस्तारद्वाराभक्तानुग्रहार्थमित्याह कलाविति द्वाभ्याम् । दुःखशोकतमांसिनुदतीतितथा ( तत्रतमोऽज्ञानम् ) तद्यशः ( यो ) व्यतनोत् ६१ यस्मिन् सतांकर्णपीयूषेयशोरूपेतीर्थवरेश्रोत्रमेवांजलिःपानसाधनंयस्यसपुरुषः सकृदपि उपस्पृश्य ( स्पर्शमात्रंकृत्वायद्वाउपस्पृश्य ) आघ्न्यवत्सौंदर्याकृष्टचित्तःकर्मवासनांधुनुते ६२ तदेवाह द्वाभ्याम् । भोजादिभिःश्लाघनीयं (प्रेम्णावर्णनीयम्) ईहितं (चेष्टितं) यस्य ६३

राजानःकल्पवर्षाद्याउपदेव्याःसुतादश ॥ वसुहंससुहंसाद्याःश्रीदेवायास्तुषट्सुताः ५२ देवरक्षितयालब्धानवचात्रगदादयः ॥ वसुदेवःसुतानष्टावाद धेसहदेवया ॥ पुरुविश्रुतमुख्यांश्चसाक्षाद्धर्मोवसूनिव ५३ वसुदेवस्तुदेवक्यामष्टपुत्रानजीजनत् ॥ कीर्तिमंतंसुषेणंचभद्रसेनमुदारधीः ॥ ऋजुंसंमर्दनं भद्रंसंकर्षणमहीश्वरम् ५४ अष्टमस्तुतयोरासीत्स्वयमेवहरिःकिल ॥ सुभद्राचमहाभागतवराजन्पितामही ५५ यदायदाहिधर्मस्यक्षयोवृद्धिश्चपाप्म नः ॥ तदातुभगवानीशआत्मानंसृजतेहरिः ५६ नह्यस्यजन्मनोहेतुःकर्मणोवामहीपते ॥ आत्ममायांविनेशस्यपरस्यद्रष्टुरात्मनः ५७ यन्मायाचेष्टितं पुंसःस्थित्युत्पत्त्यप्ययायहि ॥ अनुग्रहस्तन्निवृत्तेरात्मलाभायचेष्यते ५८ अक्षौहिणीनांपतिभिरसुरैर्नृपलांछनैः ॥ भुवआक्रम्यमाणायाअभारायकृतो द्यमः ५९ कर्माण्यपरिमेयानिमनसापिसुरेश्वरैः ॥ सहसंकर्षणश्चक्रेभगवान्मधुसूदनः ६० कलौजनिष्यमाणानांदुःखशोकतमोनुदम् ॥ अनुग्रहायभक्ता नांसुपुण्यंव्यतनोद्यशः ६१ यस्मिन्सत्कर्णपीयूषेयशस्तीर्थवरेसकृत् ॥ श्रोत्रांजलिरुपस्पृश्यधुनुतेकर्मवासनाम् ६२ भोजवृष्ण्यंधकमधुशूरसेनदशार्ह कैः ॥ श्लाघनीयेहितःशश्वत्कुरुसृंजयपांडुभिः ६३

५१ उपदेवायां दश कल्पवर्षाद्याः श्रीदेवायां वसुहंससुहंसाद्याः षट् ५२ देवरक्षितायां गदादयः नव सहदेवायां पुरुविश्रुतादयः अष्ट देवक्यां पुत्राः अष्ट ५३

१४८ कीर्तिमान् सुषेणः भद्रसेनः ऋजुः संमर्दनः भद्रः संकर्षण इति ५४ अष्टमस्तु तयोरासीत्स्वयमेव हरिः किल सुभद्रा कन्या तव पितामही आसीत् ५५ यदाइह धर्मक्षयः पापवृद्धिः स्यात् तदा हरिः आत्मानं सृजते ५६ यद्यशःश्रवणेन जनः कर्मवासनां धुनुते ५७ ५८ ५९ ६० ६१ ६२ सहसंकर्षणः हरिः अपरिमेयकर्माणि चक्रे भक्तानुग्रहार्थं पुण्यं यशः व्यतनोत् हरिः स्वमूर्त्या नृलोकं रमयामास ६३

सर्वैरंगैः ( अवयवैः ) रम्ययामूर्त्या ( स्निग्धाभ्यांस्मितेक्षिताभ्यांउदारैर्महद्भिः श्राव्यैरित्यर्थः ) ६४ ( अंगानांरम्यत्वं ) तत्र प्रदर्शनार्थंमुखशोभामाह । यस्याननंदृशिभिर्नेत्रैःपिबं त्योनार्योनराश्चनततृपुः नतृप्ताः निमेषोन्मेषमात्रंव्यवधानमप्यसहमानाःतत्कर्तुर्निमेश्चकुपिताबभूवुः ( निमेषोन्मेषौहिनिमिः प्रवर्तयातियतउक्तंप्राक् " विदेहउष्यतांयाम " इत्यादि ना ) कथंभूतमाननंमकरकुंडलाभ्यांचारूकर्णौभ्राजंतौकपोलौयत्रतैःसुभगंसुंदरम् । सविलासोहासोयस्मिन् । नित्यमुत्सवोयस्मिन् ६५ श्रीकृष्णचरितंसमासतोवर्णयति द्वाभ्यां । जा तइति । तावन्निजेनजातःपश्चात्पुरुषोमनुष्याकारःसन् व्रजंगतः तत्रव्रजनिवासिनांएधिताअर्थायेन ( रिपून्पूतनाकंसादीन् । कृताबहवोदारायेन ) तेषुदारेषुसुतानांशतानिउत्पाद्य आत्मनिगमंस्वकीयंवेदमार्गंच । ( जनेषुविस्तारयंश्च आत्मानंसमीजे ) ६६ अंतःसमुत्थेनकलिनानिमित्तेनभुवोगुरुभरंक्षपयन् दृष्टयैवभूपानांचमूर्विधूय ( आयुर्हरणेनाविनाश्य ) विजये (अर्जुने) जयमुद्विघुष्यअर्जुनेनजितमितिघोषंकृत्वा परंतत्त्वमुद्धवायोपदिश्य स्वधाम (समगात्) सम्यक्तेनैवरूपेणजगामेति ६७ ॥ (नवभिर्लक्षणैर्लक्ष्यंनवमाकिंचुषोत्सितम् ॥ ब्रह्मतत्त्व रमंवंदे परमानंदविग्रहम् ॥ १ ॥ ॥ ॥ इतिश्रीभागवतेमहापुराणेनवमस्कंधेश्रीधरस्वामिविरचितायांभावार्थदीपिकायांचतुर्विंशोऽध्यायः २४ ॥ ( श्रीधरस्वामिरचितसब्दरत्नाव लीमया ॥ स्वितोमहेश्वरेणात्रशब्दःकाचमणेःसमः ॥ १ ॥ ) समाप्तोयंनवमःस्कंधः ॥ ९ ॥



स्निग्धस्मितेक्षितोदारैर्वाक्यैर्विक्रमलीलया ॥ नृलोकंरमयामासमूर्त्यासर्वांगरम्यया ६४ यस्याननंमकरकुंडलचारुकर्णभ्राजत्कपोलसुभगंसविलासहासम् ॥ नित्योत्सवंनततृपुर्दृशिभिःपिबंत्योनार्योनराश्चमुदिताःकुपितानिमेश्च ६५ जातोगतःपितृगृहाद्व्रजमेधितार्थोहत्वारिपून्सुतशतानिकृतोरुदारः ॥ उ त्पाद्यतेषुपुरुषःक्रतुभिःसमीजेआत्मानमात्मनिगमंप्रथयञ्जनेषु ६६ पृथ्व्याःसवैगुरुभरंक्षपयन्कुरूणामंतःसमुत्थकलिनायुधिभूपचम्वः ॥ दृष्ट्याविधूय विजयेजयमुद्विघुष्यप्रोच्योद्धवायसपरंसमगात्स्वधाम ६७ ॥ ॥ इतिश्रीमद्भागवतेमहापुराणेअष्टादशसाहस्र्यांसंहितायांनवमस्कंधेयदुवंशवर्णनंनाम चतुर्विंशोऽध्यायः २४ ॥ ॥ श्रीशांतादुर्गार्पयितामू ॥ ॥ ९ ॥ नवमःस्कंदः समाप्तः ॥ ९ ॥

६४ तन्मुखं दृशिभिः पिबंत्यः नार्यः नराश्च न ततृपुः ६५ कृष्णचरित्रं समासेन वर्णयति आदौ निजरूपेण जातः पश्चात् मनुष्याकारः सन् व्रजंगतः तत्र व्रजवासिना मनोरथान् परिपूर्य रिपून् हत्वा दारान्कृत्वा तासु पुत्रशतानि उत्पाद्य जनेषु वेदमार्गं प्रथयन् यज्ञैः आत्मानं ईजे ६६ तथा कुरूणां अंतःसमुत्थकलिना पृथ्व्याः भरं क्षपयन् युधि दृष्ट्या भूपचमूः विधूय अर्जुने जयं उद्घोष्य उद्धवाय परं तत्त्वं उपदिश्य स्वधाम समगात् ६७ ॥ ॥ इति नवमस्कंधे चूर्णिकायांचतुर्विंशोऽ ध्यायः ॥ २४ ॥ इतिनवमस्कंधः समाप्तिमगमत् ॥ ॥ श्रीकृष्णो जयतितराम् ॥ ॥ ९ ॥

